# शब्दस्तोममहानिधि

## संस्कृताभिधानम्


कलिकाता-संस्कृतविद्यामन्दिराध्यक्षेण

श्रीतारानाथ-तर्कवाचस्पति-भट्टाचार्य्येण

सङ्कलितम्

तेनैव परिशोधितञ्च



द्वितीय संस्करणम्

कलिकातानगरे

वीडनयन्त्रे

मुद्रितम्

इं १८७६

# साङ्केतिकशब्दसङ्केतज्ञापनम् ।



| सङ्केत | सङ्केतबोध्य | | |
|---|---|---|---|
| पु० | पुंलिङ्गः | ३त० | तृतीयातत्पुरुषः |
| स्त्री० | स्त्रीलिङ्गः | ५त० | पञ्चमीतत्पुरुषः |
| न० | नपुंसकलिङ्गः | ६त० | षष्ठीतत्पुरुषः |
| पु०स्त्री० | अनपुंसकलिङ्गः | ७त० | सप्तमीतत्पुरुषः |
| पु०न० | अस्त्रीलिङ्गः | ग० | गतिसमासः |
| न०स्त्री० | अपुंलिङ्गः | शाक० | शाकपार्थिवादितत्पुरुषः |
| त्रि० | त्रिलिङ्गः | उप० | उपपदसमासः |
| अव्य० | अव्ययम् | मयू० | मयूरव्यंसकादि |
| स० | समासः | प्रा० | प्रादिसमासः |
| त० | तत्पुरुषः | उपमि० | उपमितसमासः |

| | |
|---|---|
| २त० | द्वितीयातत्पुरुषः |

| सङ्केत | सङ्केतबोध्य | सङ्केत | सङ्केतबोध्य |
|---|---|---|---|
| न०त० | नञ्तत्पुरुषः | स्वादि० | स्वादिगणीयः |
| कर्म० | कर्मधारयः | तुदा० | तुदादिगणीयः |
| द्वि० | द्विगुसमासः | रुधा० | रुधादिगणीयः |
| अव्ययी० | अव्ययीभावः | तना० | तनादिगणीयः |
| ब० | बहुव्रीहिः | क्र्यादि० | क्र्यादिगणीयः |
| ३ब० | तृतीयान्तान्यपदार्थबहुव्रीहिः | चुरा० | चुरादिगणीयः |
| ५ब० | पञ्चम्यन्तान्यपदार्थबहुव्रीहिः | अद० | अदन्त |
| ६ब० | षष्ठ्यन्तान्यपदार्थबहुव्रीहिः | पर० | परस्मैपदी |
| ७ब० | सप्तम्यन्तान्यपदार्थबहुव्रीहिः | आत्म० | आत्मनेपदी |
| न०ब० | नञ्बहुव्रीहिः | उभ० | उभयपदी |
| प्रादि०ब० | प्रादिभ्यो धातुजबहुव्रीहिः | सक० | सकर्मकः |
| द्व० | द्वन्द्वसमासः | अक० | अकर्मकः |
| समा० | समासान्तः | द्विक० | द्विकर्मकः |
| शक० | शकन्ध्वादित्वात्पररूपम् | द्विव० | द्विवचनान्तः |
| नि० | निपातनात् | ब०व० | बहुवचनान्तः |
| + | प्रातिपदिकम् | गौरा० | गौरादित्वात् |
| — | धातुः | ब्राह्म० | ब्राह्मणादित्वात् |
| भ्वा० | भ्वादिगणीयः | पृषो० | पृषोदरादित्वात् |
| अदा० | अदादिगणीयः | चतुर्व० | चतुर्वर्णादित्वात् |
| जुहो० | जुहोत्यादिगणीयः | व्री० | व्रीह्यादित्वात् |
| दिवा० | दिवादिगणीयः | सार्व० | सार्वविभक्तिकः |

# शब्दस्तोममहानिधिः।



## चिदात्मने नमः।

### अ

अ पु० अव्-ड। विष्णौ। अव्य० संबोधने, अधिक्षेपे, निषेधे च।
अंश अदन्तचुरा० उभ० विभाजने। अंशय-ति ते आंशिश-त् त।
अंश पु० अंश-भावेऽच्। विभागे, विभाज्ये, अवयवे, एकदेशे, विभाज्याङ्के, राशित्रिंशभागे च।
अंशक पु० अंश-ण्वुल्। ज्ञातौ, दायादे, राशित्रिंशभागे, दिने च। विभाजके त्रि० स्त्रियाम् अंशिका।
अंशल त्रि० अंश+लच् बलवति। [स्त्रियाम् अंशिनी।
अंशिन् त्रि० अंश-णिनि। भागकारके, अवयविनि, ज्ञातौ च।
अंशु पु० अंश-मृगं कु। किरणे, प्रभायाम्, वेगे, सूत्रादिसूक्ष्मांशे च।
अंशुक क्ली० अंशु+क। वस्त्रे, सूक्ष्मवस्त्रे, शुभ्रवस्त्रे, उत्तरीये च।
अंशुधर पु० अंशुधारि-अच् इत०। सूर्य्ये। वेगधरे त्रि० स्त्रियामंशुधरा।
अंशुपति पु० अंशु-पति इत०। सूर्य्ये। [स्त्रियामंशुमती।
अंशुमत् पु० अंशु+मतुप्+ङीप्। सूर्य्ये। वेगवति अंशुमति च त्रि०
अंशुमत्फला स्त्री० अंशुमत् फलं यस्याः। कदलीवृक्षे।
अंशुमती स्त्री० अंशु+मतुप्। शालपर्णीवृक्षे शालपाण इति ख्याते। अंशुविशिष्टायां स्त्रियाम्।

अंशुमाला स्त्री० अंशु-माला ६त० । किरणजाले ।
अंशुमालिन् पु० अंशु-माला+इनि । सूर्य्ये । किरणजालवति त्रि० स्त्रियामंशुमालिनी ।
अंशुहस्त पु० अंशवो हस्ता इव यस्य ब० । सूर्य्ये ।
अंस अदन्तचुरादि० उभ० विभाजने । अंसय-ति ते । [ च पु० ।
अंस क्ली० पु० अम-स । स्कन्धे । अंस-अच् । विभाज्ये, अवयवे
अंसकूट पु० अंस-कूट ६त० । ककुदे, राजन्योऽप्यंसकूटकषण-पटुरिति प्रबोधचन्द्रोदयः ।
अंसल त्रि० अंस+लच् । बलवति ।
अंह चुरा० उभय० भासने । अंहय-ति ते आञ्जिह-त्-त ।
अंह भ्वादि० आत्म० गतौ । अंहते । आंहिष्ट ।
अंहति स्त्री० अंह-अति, न-हन् क्तिन् वर्णविपर्य्ययः इति वा । त्यागे, रोगे च । अंहतीच ।
अंहस् क्ली० अंह-असि । पापे ।
अंह्रि पु० अंह-क्रि । पदे, वृक्षमूले च ।
अंह्रिप पु० अंह्रिणा पिबति अंह्रि-पा-ड । वृक्षे ।
अंह्रिस्कन्ध पु० अंह्रि-स्कन्ध ६त० । गुल्फे ।
अक वक्रगतौ भ्वादि० घटादि पर० । अकति आकीत् । अकयति ।
अक इदित् भ्वादि० चिह्नकरणे आत्मने० । अङ्कते ।
अक क्ली० कं सुखं न० त० । पापे, दुःखे च ।
अकच पु० न-कच बहु० । केतुग्रहे । केशशून्ये त्रि० ।
अकरणि स्त्री० न-कृ-अनि । आक्रोशभेदे, पापे च । [ त्रि०
अकरा स्त्री० न-कृ-अच् । आमलकीवृक्षे । कररहिते, कर्तृभिन्ने च
अकर्कश त्रि० न-कर्कशः न०त० । कोमले, कार्कश्यरहिते च ।
अकर्ण त्रि० न कर्ण बहु० । बधिरे, कर्णरहिते च ।
अकर्त्तन पु० न-कर्त्तन बहु० । वामने खर्वे च ।
अकर्म्मण्य त्रि० कर्म्मन्+य-त् न०त० । कर्म्मायोग्ये ।
अकर्म्मन् त्रि० न-कर्मन् बहु० । कार्य्याक्षमे ।

अकल्कन (क) त्रि० न-कल्कन (क) बहु० । दम्भरहिते त्रि० ।
अकल्का स्त्री० न-कल्क बहु० । ज्योत्स्नायाम् । दम्भरहिते
अकल्य त्रि० कलासु साधुः कला+यत् न० त० । रोगिणि ।
अकस्मात् अव्यये न-कस्मात् न० त० । हठात्कारे, आगन्तुके च
अकाण्ड पु० न-काण्ड न० त० । असमये, अनवसरे च । न
काण्डः ( स्कन्धः सायको वा यस्य ) बहु० । तत्शून्ये त्रि० ।
अकाण्डे अव्य० न-काण्डे न० त० । असमये, अनवसरे च । [त्रि०
अकाम पु० कम-घञ् न० त० । अनिच्छायाम् । ब० कामरहिते
अकामतः अव्य० अकाम-तसिल् । अनिच्छाहेतुतः ।
अकाय पु० न-काय ब० । राहौ । देहशून्ये त्रि० ।
अकार पु० अ+कार । अ-स्वरूपवर्णे । कारः क्रियान-कारो यस्य
ब० । कर्मशून्ये त्रि० ।
अकारण न० न-कारण न० त० । कारणभिन्ने । न-कारण-
( उद्देश्य, हेतु ) ब० निष्प्रयोजने, हेतुशून्ये च त्रि० ।
अकार्य्य न० कृ-ण्यत् न० त० । द्यूतक्रियाचौर्य्यसाहसादौ दुष्ट-
कर्म्मणि । ब० कार्य्यशून्ये त्रि० ।
अकाल पु० न-काल न०त० । असमये, शुक्रास्तादिनिमित्तकृतता-
दृकरणायोग्ये काले । कृष्णवर्णभिन्ने त्रि० ।
अकालजलदोदय पु० अकाले जलदानामुदयः तत्पु० । कुज्-
झट्याम् । असमये मेघानामुदये च । [च ।
अकिञ्चन त्रि० न-किञ्चन मयूरव्यंसकादि त० दरिद्रे, निर्द्धने
अकिञ्चनता स्त्री० अकिञ्चन+ता । परिग्रहत्यागे, दारिद्र्ये च ।
अकिञ्चिज्ज्ञ त्रि० न-किञ्चित्-ज्ञा-क । अल्पज्ञाने, ज्ञानशून्ये च ।
अकिञ्चित्कर त्रि० न-किञ्चित्कृ-अच् । अकर्मण्ये, क्रियाशून्ये,
निष्प्रयोजने च ।
अकुण्ठ त्रि० न-कुण्ठा ब० । अकुण्ठिते, प्रतिभायुक्ते, कार्य्यदक्षे च ।
अकुतोभय त्रि० न-कुतः-भय-मयूरव्यंसकादि त० । भयशून्ये ।
अकुप्य न० गुप्-यत् कस्य गः न० त० । स्वर्णरूप्ययोः ।

**अकूपार** पु० न–कूप–ऋ–अण् कच्छपे। न–कुप्–अण् दीर्घः।
महापारे,,–समुद्रे,–दूरपारे–सूर्य्ये च।
**अकूवार** पु० न-कु–वृ–अण् दीर्घः। समुद्रे सूर्य्ये च।
**अकृत्य** न० कृ–क्यप् न०त०। अकार्य्ये चौर्य्यादिदुष्टकर्मणि च।
कर्मशून्ये त्रि०। [स्वयं पक्के नीवारादौ।
**अकृष्टपच्य** त्रि० न कृष्टे कर्षणे पच्यते पच्–यत्। कृष्यादिकं विना
**अकृष्णकर्मन्** त्रि० न–कृष्ण–कर्मन् ब०। अदुष्टाचारे पुण्यशीले।
**अकौशल** न० कुशलस्य भावः कुशल+अण् न० त०। अपाटवे।
ब्रु०। पाटवशून्ये त्रि०।
**अक्का** स्त्री० अक–कन्। मातरि।
**अक्त** त्रि० अन्ज–क्त। कृताञ्जने, परिमिते, व्याप्ते, संकुले च।
**अक्रम** त्रि० न–क्रम ब०। क्रमशून्ये, यौगपद्ये पादशून्ये च।
**अक्रान्ता** स्त्री० न क्रम–क्त। बृहत्याम्। क्रान्तभिन्ने त्रि०।
**अक्रूर** पु० न–क्रूर न० त०। यदुवंशीयनृपभेदे क्रूरभिन्ने त्रि०।
**अक्रोध** पु० क्रुध-घञ् न०त०। कोपनिवृत्तौ। ब०। कोपशून्ये त्रि०
**अक्ष** व्याप्तौ संहतौ च भ्वादिगणीयः स्वादिश्च पर०। अक्ष्णोति
अक्षति।
**अक्ष** न० अक्ष–अच्। इन्द्रिये; कार्थोद्भवरसाञ्जने, (तुना) सर्ज्जर-
सवारे। अक्ष–घञ् पु०। द्यूतसाधने पाशकादौ, षोड़शमा-
षकमानरूपे कर्षे, रथावयवे चक्रे, क्रयविक्रयचिन्तायाम्, विभी-
तकवृक्षे वएड़ा इति ख्याते, सर्पे, शकटे, शिवादविज्ञाततत्त्वे,
रुद्राक्षे, जपमालायाञ्च।
**अक्षक** त्रि० अक्ष-ण्वुल्। पाशकादिक्रियाकारिणि, व्यापके च।
**अक्षत** न० क्षण्–क्त–न त०। यवे, क्षतरहिते च लाजेषु पु० ब०व०।
**अक्षदर्शक** पु० अक्ष-दृश्-ण्वुल्। द्यूतकारिणि। व्यवहारादिदर्शिनि
त्रि०। स्त्रियाम् अक्षदर्शिका।
**अक्षदृश्** पु० अक्ष-(व्यवहार) दृश-क्विप्। व्यवहारनिर्णेतरि।
द्यूतदर्शके त्रि०।

अक्षदेविन् त्रि० अक्ष-दिव-णिनि । द्यूतकारिणि स्त्रियाम् अक्षदेविनी ।

अक्षद्यू त्रि० अक्ष-दिव-क्विप् ।पाशकादिक्रियाकारिणि, क्लीबे अक्षद्यु ।

अक्षधुरा स्त्री० अक्ष-(चक्र) धुर्-(अप) ६त० । चक्राग्रे ।

अक्षधूर्त्त पु० धुर्व-क्त अक्ष-धूर्त्त ७त० । द्यूतकारिणि, शाखोट-इति प्रसिद्धे वृक्षे च ।

अक्षधूर्त्तिल पु० अक्ष-(शकट) धुर्व-तिल । वृषे ।

अक्षपाटक पु० अक्ष-(व्यवहार) पट-ण्वुल् । व्यवहारनिर्णेतरि ।

अक्षपाद पु० अक्ष-(चक्षुः) पाद ब० । गौतमे (न्यायदर्शनप्रवर्त्तक-मुनौ) । अक्ष-(चक्र) पाद (अवयव) ६त० । चक्राङ्गे ।

अक्षम त्रि० क्षम-अच् न० त० । अशक्ते । ब० । क्षमारहिते ।

अक्षमा स्त्री० क्षम अङ् न०त० । ईर्ष्यायाम्, असहने च ।

अक्षमाला स्त्री० अक्ष-माला ६० । जपमालायाम् । [त्रि० ।

अक्षय पु०न० क्षि-अच् । क्षयाभावे । ब० । नाशरहिते, क्षयशून्ये च

अक्षया स्त्री० सोमवारे अमावास्यातिथौ, रविवारे सप्तम्यां, कुजवारे चतुर्थ्याञ्च । वैशाखशुक्लतृतीयायामपि ।

अक्षय्य न० अक्षयाय हितम् अक्षय+यत् । श्राद्धशेषे देये क्षतमधु-युक्ते जले, अक्षयधर्म्मे च । [ब्रह्मणि न० ।

अक्षर पु० क्षर-अच् न० त० । अकारादिवर्णे । नाशशून्ये त्रि० ।

अक्षरचण ( न ) त्रि० अक्षरेण वित्तः अक्षर+चण ( न ) । लेखके ।

अक्षरचुञ्चु, त्रि० अक्षरेण वित्तः अक्षर+चुञ्चु । लेखके ।

अक्षरजीवक त्रि० अक्षर-जीव-ण्वुल् । वर्णलेखनोपजीविनि, स्त्रि-याम् अक्षरजीविका ।

अक्षरजीविन् त्रि० अक्षर जीव-णिनि ३त० । वर्णलेखनोपजीविनि, स्त्रियाम् अक्षरजीविनी । [न्यादौ ।

अक्षरतूलिका स्त्री० अक्षर-तूलिका ६त० । वर्णलेखनद्रव्ये लेख-

अक्षरवाट पु० न क्षरतीति अक्षरः वट-वेष्टने घञ् । बाहुयुद्धभूमौ ।

अक्षरसंस्थान न० अक्षर-संस्थान ६त० । वर्णविन्यासे । बहु० ।

लिप्यादौ च। [ स्त्रियामपि

अक्षवती स्त्री अक्ष+मतुप् वत्वम्। अक्षक्रीड़ायाम्। अक्षविशिष्ट-

अक्षवित् त्रि० अक्ष-विद्-क्विप्। द्यूतज्ञे, व्यवहाराभिज्ञे च।

अक्षशौण्ड पु० अक्ष-शौण्ड ७त०। द्यूतदक्षे।

अक्षसूत्र न० अक्ष सूत्र ६त०। जपमालासूत्रे, यज्ञसूत्रे, उपवीते च।

अक्षाग्रकीलक अस्त्री० अक्ष (चक्र) अग्र-कीलक ६त०। चक्राग्र-
स्थापिते शङ्कौ।

अक्षान्ति स्त्री क्षम-क्तिन् न०त०। ईर्ष्यायाम्। ब०। क्षमारहिते त्रि०।

अक्षारलवण न० क्षारलवण न०त०, ब० वा। क्षारलवणभिन्ने सै-
न्धवे, सामुद्रे च। गोक्षीरं गोघृतञ्चैव धान्यं मुद्गास्तिला यवाः।
सामुद्रं सैन्धवञ्चैव अक्षारलवणं स्मृतमिति स्मृतिपरिभाषितेऽपि।

अक्षि न० अश-क्सि। चक्षुषि। [ केचित्।

अक्षिकूटक न० अक्षि-कूटक, ६त०। चक्षुर्गोलके तत्तारकायामिति

अक्षिगत त्रि०अक्षिविषयं गतः शाकपार्थिवादि त०। द्वेष्ये,रिपौ च।

अक्षिभेषज पु० अक्षि-भेष (रोग) जि-ड। लोध्रविशेषे।

अक्षिव न० क्षिव-क न०त०। सामुद्रलवणे।

अक्षिविकूणित न०अक्षि-वि-कूण-क्त। अपाङ्गदर्शने कटाक्षपाते च

अक्षीव पु० क्षीव-क, न० त०। सामुद्रलवणे। क्षीवो मत्तो न०त०।
मत्तभिन्ने त्रि०।

अक्षोट पु० अक्ष-ओट,अक्षस्येव विभीतकस्येव, उटानि पर्णान्यस्येति
वा। पार्व्वतीयपीलुवृक्षे आखरोट इति प्रसिद्धे।

अक्षोड पु०अक्ष-ओड। पार्व्वतीयपीलुवृक्षे। [ रहिते त्रि०।

अक्षोभ पु० क्षुभ-घञ् न०त०। हस्तिबन्धनस्तम्भे। बहु०। क्षोभ-

अक्षौहिणी स्त्री अक्ष (शकटादि) ऊहि-णिनि। संख्याविशेषयुक्तरथा-
दिसेनायाम्। तत्संख्या च २१८७ हस्तिनः। २१८७ रथाः।
६५६१० अश्वाः। १०९३५० पदातयः।

अखट्ट पु० खट्ट-अच् न०त०। पियालवृक्षे पियाशाल ख्याते।

अखट्टि स्त्री खट्ट-इ न०त०। अशिष्टव्यवहारे। अखट्टी च।

अखण्ड त्रि० खडि-घञ् न०त०। संपूर्णे, सकले। खण्डभिन्ने पु०न०।
अखण्डन पु० खडि ल्युट् न०त०। काले। खण्डनशून्ये त्रि०।
अखण्डित त्रि० खडि क्त न० त०। सम्पूर्णे खण्डितभिन्ने च।
अखात न० खन-क्त न०त०। देवखाते, मनुष्याद्यखाते च। खात-
भिन्ने त्रि०। [ खादौ, भक्ष्यभिन्ने च।
अखाद्य त्रि० खाद-अर्हार्थे ण्यत् न० त०। भोजनानर्हे गोमां-
अखिल त्रि०न खिल्यते न कणश आदीयते इति खिल-क न०त०।
समग्रे। खिलाभिन्ने कृष्टभूम्यादौ स्त्री०।
अग इदित् गतौ भ्वादि० पर०। अङ्गति। आङ्गीत्।
अग वक्रगतौ भ्वादि० पर० घटादि। अगति आगीत्। अगयति।
अग पु० न गच्छतीति गम-ड न०त०। वृक्ष, पर्व्वते, सूर्य्ये च।
गमनाकर्त्तरि शूद्रादौ त्रि०।
अगच्छ पु० गम-श न० त०। वृक्षे।
अगति स्त्री गम-क्तिन् न०त०। उपायाभावे। बहु०। गतिशून्ये
उपायशून्ये च त्रि०। [अकथने च त्रि०।
अगद पु०नास्ति गदो रोगो यस्मात् ५ब०। औषधे। ६ब०। रोगशून्ये
अगदङ्कार पु० अगदं करोति अगद-कृ-अण् मुम् च। वैद्ये।
अगम पु० न गच्छतीति गम-अच् न०त०। वृक्षे। अगन्तरि त्रि०।
अगम्य त्रि० न-गन्तुमर्हति गम-यत् न०त०। गमनानर्हे, अन्त्य-
जातिस्त्रियाञ्च स्त्री०। [देवताड़वृक्षे। विषहारिणि द्रव्यमात्रे त्रि०
अगरी स्त्री० नास्ति गरो विषो यस्याः ५ब०ङीष्। मूषिकविषहारिणि
अगरु न० न गिरति गॄ-उ न०त०। अगुरुचन्दने स्वनामप्रसिद्धे।
अगस्ति पु० अगं विन्ध्याचलम् अस्यति अग-अस्-ति शकन्ध्वादि०।
अगस्त्यनामके मुनौ।
अगस्तिद्रु पु० अगस्तिप्रियः द्रुर्वृक्षः शाक० त०। वकवृक्षे।
अगस्ती स्त्री अगस्तिनिवासत्वात् दक्षिणस्यां दिशि।
अगस्त्य पु० अगं विन्ध्याचलं स्त्यायति स्तम्नाति स्त्यै-क। अगस्त्य-
नामके मुनौ।

**अगाध** त्रि० गाध प्रतिष्ठायाम् गाध-घञ् न-ब० । अतिगभीरे ।
छिद्रे न० ।
**अगाधजल** पु० अगाध-जल-ब० ब० । अतिगभीरजले ह्रदे ।
**अगार** न० अगम् न गच्छन्तमृच्छति प्राप्नोति अग-ऋ-अण् । गृहे ।
**अगु** पु० न गौः किरणो यस्य । राहौ । किरणशून्ये, गोशून्ये च त्रि०
**अगुरु** न० न गुरुर्यस्मात् । अगुरुचन्दने स्वनामप्रसिद्धे, शिंशपा-(शिशु)
वृक्षे च । गुरुभिन्ने, उपदेशकशून्ये च त्रि० ।
**अगुरुशिंशपा** स्त्री अगुरुःसारो यस्याः तादृशी शिंशपा मध्यपदलोपि
त० । शिशु इति प्रसिद्धे शिंशपावृक्षे । [द्रव्यमात्रे त्रि० ।
**अगूढ़गन्ध** न० न-गूढ़ो गन्धो यस्य ६ब० । हिङ्गुद्रव्ये । अगुप्तसौरभे
**अग्नायी** स्त्री अग्नि+ऐङ्-ङीप् । अग्नेर्योषिति स्वाहाख्यायाम् ।
**अग्नि** पु० अङ्गति ऊर्द्धं गच्छति अगि-नि नलोप० । अग्नौ स्वनाम-
प्रसिद्धे तेजोभेदे ।
**अग्निक** पु० अग्निवत् कायति प्रकाशते कै-क । इन्द्रगोपकीटे ।
**अग्निकण** पु० अग्नि-कण ६त० । अग्निच्युतक्षुद्रांशे ।
**अग्निकारिका** स्त्री अग्नि-कारिका ६त०। अग्निकृत्ये होमाधानादौ,
अग्न्युद्दीपकौषधिभेदे च ।
**अग्निकार्य्य** न० अग्नि-कार्य (कृ ण्यत्) ६त०। अग्निकृत्ये होमाधानादौ
**अग्निकाष्ठ** न० अग्नेः (उद्दीपनाय) काष्ठम् तादर्थ्ये षष्ठ्या त० । अ-
गुरुकाष्ठे । [व्याघ्रनखपुष्पे नुड़ा इति ख्याते ।
**अग्निकुक्कुट** पु० अग्नेः कुक्कुट इव रक्तवर्णस्फुलिङ्गत्वात् । ज्वलदग्नि-
**अग्निकोण** न० अग्नेः कोणः ६त०। पूर्व्वदक्षिणयोर्मध्ये दिग्भागे तस्य
वह्निदैवत्यप्रसिद्धेः । [ प्रसिद्धे काचे च ।
**अग्निगर्भ** पु० अग्निर्गर्भे यस्य ब० । सूर्य्यकान्तमणौ आतसीति
**अग्निचयन** पु० अग्निश्चीयतेऽनेन चि-ल्युट् । मन्त्रभेदे, काष्ठे च ।
**अग्निचित्** पु० अग्निं चितवान् चि-भूतार्थे क्विप् । मन्त्रपूर्व्वकक्षत-
वह्निस्थापने अग्निहोत्रिणि । [ जातद्रव्ये त्रि० ।
**अग्निज** पु०अग्नि-जन-ड । अग्निजारवृक्षे । स्वर्णे न० । अग्नि-

**अग्निजात** पु० अग्नेर्जातः जन-क्त । अग्निजारवृक्षे स्वर्णे न० । वह्निजातमात्रे त्रि० ।

**अग्निजार** पु० अग्निं जारयति जॄ-णिच्-अण् । अग्निजारनामकवृक्षे ।

**अग्निजाल** पु० अग्निं जारयति जॄ-अण् लत्वम् । अग्निजारवृक्षे ।

**अग्निजिह्वा** स्त्री अग्नेर्जिह्वेव । लाङ्गलीवृक्षे । ६ त० । अग्निजिह्वायाम् । अग्निर्जिह्वा येषां ब० । देवे ६ त० । अग्निशिखायाम् ।

**अग्निज्वाला** स्त्री अग्नेर्ज्वालेव । गजपिप्पलीवृक्षे । [कहलभेदे ।

**अग्निदमना** स्त्री अग्निं दमयतीति दमि-ल्यु । गणिकारीनाम-

**अग्निदेवता** स्त्री अग्निर्देवो यस्याः । कृत्तिकाख्यताराया तस्या अग्नि-दैवतत्वात् । अग्निदैवतमात्रे त्रि० ।

**अग्निनिर्य्यास** पु० अग्नेर्निर्यासः (चीरवत् निष्यन्दः) । उपचारात् तज्जाते अग्निजारवृक्षे । स्वर्णे न० ।

**अग्निप्रस्तर** पु० अग्निं प्रस्तृणाति स्तॄ-अच् अग्नेर्वा प्रस्तरः । चक्-मकीति ख्यातेऽग्न्युत्पादके प्रस्तरखण्डे ।

**अग्निबाहु** पु० अग्नेर्बाहुरिव दीर्घशिखत्वात् । धूमे ।

**अग्निभ** न० अग्निरिव भाति भा-क । स्वर्णे । अग्निवत् प्रकाशवति त्रि०

**अग्निभू** पु० अग्नेर्भवति भू-क्विप् । कार्त्तिकेये । स्वर्णे न० । अग्नि-जातमात्रे त्रि० ।

**अग्निमणि** पु० अग्ने-र्मणिः । अग्निसाधने आतसीति प्रसिद्धे काचे । सूर्य्यकान्ते मणौ च ।

**अग्निमथन** पु० अग्नये मथ्यतेऽसौ मन्थ-ल्युट् नलोपः । गणियारीति ख्याते गणिकारीवृक्षे । तत्काष्ठयोर्मर्षणे हि झटिति वह्निरुद्दी-प्यते अग्निमन्थनमन्त्रे च ।

**अग्निमन्थ** पु० अग्नये मथ्यतेऽसौ मन्थ अच् । गणिकारीवृक्षे ।

**अग्निमारुति** पु० अग्निमारुत+इञ् हस्व कल्पभेदे अग्निवायुरूप-योर्देवयोः पुत्रे अगस्त्यमुनौ ।

**अग्निमुख** पु० अग्निर्मुखमिव यस्य । देवे, हुतद्रव्यं हि देवैरग्निद्वा-रेणाद्यते । अग्निर्मुखे यस्य तस्मिन् । विप्रे, शापरूपाग्नेस्तस्य

मुखे स्थितत्वात् । अग्निर्मुखः प्रधानमुपास्यो यस्य तस्मिन् वा । विप्रे । अग्नेर्मुखे तु न० ।

**अग्निमुखी** स्त्री अग्निरिव मुखमग्रं यस्याः गौरादित्वात् ङीष् । (भेला) भल्लातकवृक्षे, पाकशालायाम्, गायत्रीमन्त्रे च ।

**अग्निरक्षण** न० अग्निः रक्ष्यतेऽनेन रक्ष-ल्युट् । राक्षसादिभ्योऽग्निरक्षाकारके मन्त्रभेदे, अग्निहोत्रे च ।

**अग्निरजस्** पु० अग्निरिव रज्यते दीप्यते रनुज अस् नलोपः । रक्तवर्णे इन्द्रगोपनामककीटे । अग्निवीर्य्ये, स्वर्णे च । [प्रिये त्रि० ।

**अग्निवल्लभ** पु० अग्नेर्वल्लभः सुखेन दाह्यत्वात् । शालवृक्षे । अग्नि-

**अग्निवाह** पु० अग्निं वाहयति गमयति बोधयति वा वाहेः अण् धूमे, छागे च । वह्निवाहकमात्रे त्रि० ।

**अग्निवित्** पु० अग्निं विन्दते विन्द-क्विप् । अग्निहोत्रिणि साग्निके ।

**अग्निवीज** न० अग्नेर्वीजम् तद्रेतोजातत्वात् उपचारात् । स्वर्णे, वह्निरेतसि च ।

**अग्निवीर्य्य** न० अग्नेर्वीर्य्यं, तद्वीर्य्यजातत्वादुपचारात् स्वर्णे वह्निरेतसि, तत्पराक्रमे च । व० ।अग्नितुल्यपराक्रमवति त्रि० ।

**अग्निशिख** पु० अग्निरिव शिखा यस्य । कुङ्कुमवृक्षे, कुसुम्भवृक्षे, अग्नितुल्यशिखे लाङ्गलीवृक्षे च । अग्नितुल्यजटावति त्रि० ।

**अग्निशेखर** पु० अग्निरिव शेखरमग्रं यस्य । कुङ्कुमवृक्षे कुसुम्भवृक्षे लाङ्गलीवृक्षे च । अग्नितुल्याग्रवति त्रि० ।

**अग्निष्टोम** पु० अग्नेः स्तोमं स्तु मन् षत्वम् । यागविशेषे ।

**अग्निष्ठ** पु० अग्नौ स्थातुमर्हति स्था-क षत्वम् । वह्नौ स्थितियोग्ये लौहमये कटाहादिपात्रे । [ वह्निस्थमात्रे त्रि० ।

**अग्निसम्भव** पु० अग्निरिव सम्भवति भू-अच् । अरण्यकुसुम्भे । अग्नि-

**अग्निसहाय** पु० अग्निना सह अयते अय-अच् ३त० । वायौ, अग्निसहायधूमवद्वेगवत्त्वात् शीघ्रगतित्वाच्च वनकपोते च ।

**अग्निसार** न० अग्नौ सारो यस्य अत्यन्ताग्नितापनेऽपि सारांशादहनात् । रसाञ्जने । अग्नेर्मध्ये तु अस्त्री० ।

अग्निष्वात्त (स्वात्त) पु० ब०व० अग्नितः ( आहीयविप्रकरूपाग्नेः ) सु, आत्तं मधुरं येषां आ-दा-क्त पत्वमिति वहु० । मरीचिपुत्रे पितृगणविशेषे ।

अग्निहोत्र पु० अग्नये-हूयतेऽत्र हु-त्र ४त० । मन्त्रकरणकवह्निस्थापनपूर्वकहोमादौ । अग्निहोत्रसंबन्धित्वात् वह्नौ च ।

अग्निहोत्रिन् त्रि० अग्निहोत्र+इनि । अग्निस्थापनपूर्वके सायंप्रातरादिकाले होमकर्त्तरि साग्निके । [ समन्त्रे ।

अग्नीध् पु० अग्निरिध्यतेऽनेन अग्नि-इन्ध-क्विप् । अग्निप्रज्वाल-

अग्नीध्र पु०अग्निरिध्यते अनेन कर्त्तरि अग्नि-इन्ध-रक् । अग्निरक्षणकारके ब्रह्मापरपर्याये ऋत्विग्भेदे । अग्निं धारयत्यत्र अग्निध् इत्यादि धृ-क । अग्निकार्य्ये, होमादौ च ।

अग्नीन्धन त्रि० अग्निरिध्यतेऽनेन अग्नि-इन्ध-ल्युट् । मन्त्रभेदे । स्त्रियां टित्त्वात् ङीप् । भावे ल्युटि । अग्निकार्य्ये न० ।

अग्न्याधान न० अग्नेराधानम् आ-धाञ्-ल्युट् ६त० । वेदमन्त्रद्वारा वह्निस्थापने । बहु० । अग्निहोत्रयागे ।

अग्न्यालय पु० अग्नेरालयः अग्नि-आ-ली-अच् ६त० । वेदमन्त्रद्वारा वह्निस्थापनयोग्ये गृहे, तदाधारे-कुण्डे, स्थण्डिले च ।

अग्न्याहित पु० अग्निराहितो येन अग्नि-आ-धाञ् कर्म्मणि क्तः, वा परनिपातः अग्निहोत्रिणि साग्निके ।

अग्न्युत्पात पु० अग्निना कृत उत्पातः (अग्निसूचकोपद्रवः) उत्-पत-घञ् ३त० । आकाशस्याग्निकृतविकारसूचितोपद्रवे, उल्कापाताद्यशुभसूचके, धूमकेतुकृतविकारे च ।

अग्न्युपस्थान त्रि०अग्निरुपस्थीयतेऽनेन अग्नि-उप-स्था-ल्युट् ६त० । वह्नेरुपस्थानमन्त्रे । स्त्रियां ङीप् । ६त० । वह्नेरुपस्थाने न० ।

अग्र न० अङ्ग-रक् नलोपः । उपरिभागे, शेषभागे, आलम्बने, पूर्वभागे, पलपरिमाणे, समूहे च । प्रधाने, अधिके, प्रथमे च त्रि० । [कर्म० । देहपूर्वभागे ।

अग्रकाय अस्त्री० अग्रः कायः अवयवावयविनोरभेदात् कमग्रहस्तवत्

अग्रग त्रि० अग्रे गच्छतीति अग्र–गम–ड ७त० । प्रथमगामिनि । स्त्रियामग्रगा । [प्रधाने च ।

अग्रगण्य त्रि० अग्रे गण्यते अग्र–गण यत् ७त० । अग्रगणनीये,

अग्रगामिन् त्रि० अग्रे गच्छति अग्र–गम–णिनि ७त० । अग्रसरे । स्त्रियामग्रगामिनी ।

अग्रज पु० अग्रे जायते अग्र–जन–ड । ज्येष्ठभ्रातरि । अग्रजातमात्रे त्रि० । ज्येष्ठभगिन्यां स्त्री० । [जङ्घाग्रभागे ।

अग्रजङ्घा स्त्री० अग्रा जङ्घा अवयवावयविनोरभेदात् क० स० ।

अग्रजन्मन् पु० अग्रे जन्म यस्य अग्र जन् मनिन् व्यधि० बहु० । ज्येष्ठभ्रातरि, विप्रे च । अग्रजातमात्रे त्रि० ।

अग्रजात पु० अग्रे जातः अग्र–जन् क्त ७त० । ज्येष्ठभ्रातरि, विप्रे च । ज्येष्ठभगिन्यां स्त्री० । पूर्वजातमात्रे त्रि० ।

अग्रजाति पु० अग्रा श्रेष्ठा जातिर्यस्य, अग्र-जन-क्तिन् । विप्रे ।

अग्रजिह्वा स्त्री० अग्रा जिह्वा अग्रहस्तवत् क० । जिह्वाग्रभागे । [श्रेष्ठे च ।

अग्रणी त्रि० अग्रे नीयतेऽसौ अग्र नी क्विप् णत्वम् । प्रभौ

अग्रतस् अव्य० अग्रे अग्राद्वा अग्र-तसिल् । पूर्वभागे, पूर्वभागावधिके च । [अग्रगामिनि । स्त्रियां ङीप् ।

अग्रतःसर त्रि० अग्रतः सरति गच्छति अग्रतस् सृ–ट ७त० ।

अग्रदानिन् पु० अग्रे दानं यस्य अग्र–दान+इनि । प्रेतोद्देशेन यद्दानं दीयते तत्प्रतिग्राहिणि अग्रदानीति ख्याते विप्रे ।

अग्रनख अस्त्री० अग्रं नखं अग्रहस्तवत् क० । नखाग्रे ।

अग्रनासिका स्त्री० अग्रा नासिका अग्रहस्तवत् क० । नासिकाग्रभागे । [ग्रीति ख्याते वृक्षे ।

अग्रपर्णी स्त्री० अग्रे पर्णं यस्याः जातित्वात् ङीप् आलकु-

अग्रभाग पु० भज्यते इति भागः एकदेशः अग्रः पूर्वः भागः भज–घञ् क० । आद्यादौ प्रथमसमुद्भूते देये द्रव्ये अवयवस्य अग्रदेशे च । यथा शरस्य शल्याग्रम् ।

**अग्रभुक्** त्रि० अग्रे देवपित्रादिभ्योऽदत्त्वा भुङ्क्ते अग्र भुज क्विप् ७त०। औदरिके।

**अग्रमांस** न० अग्रं प्रधानं भक्ष्यत्वेन मन्यते मन्-स, दीर्घः कर्म०। हृदयस्थे पद्माकारे (फुल्का) इति नामके मांसे केचित् व्रुकाग्र-मांसमेकं नामेत्याहुः। अग्रमास इति प्रसिद्धे रोगभेदे च।

**अग्रमुख** न० अग्रं मुखं अग्रहस्तवत् कर्म०। मुखाग्रे।

**अग्रयान** न० अग्रे यानं यस्य या-ल्युट् संज्ञात्वेऽग्रगत्वम्। पुरोगामिनि सैन्ये। अग्रगामिमात्रे त्रि०। [प्रसिद्धे शाकभेदे।

**अग्रलोहिता** स्त्री० अग्रमुपरिभागः लोहितं यस्याः ब०। चिल्लीति

**अग्रवीज** पु० अग्रं शाखाग्रं वीजमुत्पादकं यस्य छिन्नाग्रतरुखण्ड-रूढ़े कलम इति प्रसिद्धे काण्डजाते कुरण्टकादिवृक्षे।

**अग्रसन्धानी** स्त्री० अग्रे फलोत्पत्तेः प्राक् सन्धानं कार्य्यस्य ज्ञानं यस्या ङीप्। यमपञ्जिकायाम्। यत्र हि प्राणिवर्गस्य प्राग्भ-वीयकर्म्मानुसारेण शुभाशुभसूचनं सर्वं लिख्यते सा यमपञ्जिका, याचित् यमपाञ्जिकेति सा कथ्यते। अग्रसन्धानकारिणि तु त्रि०।

**अग्रसन्ध्या** स्त्री० अग्रं सन्ध्यायाः सर्व्वोऽग्र्येकदेशः कालवाचिना सम-स्यते इत्युक्तेः एक०त०। सन्ध्या पूर्वसमये। अग्रा पूर्वा सन्ध्या इति क०। प्रातःसन्ध्यायाम्। [स्त्रियां ङीप्।

**अग्रसर** त्रि० अग्रे सरति गच्छति अग्र सृ-ट ७त०। अग्रगामिनि।

**अग्रह** पु० ग्रहः (परिग्रहः) न०त०। परिग्रहाभावे। बहु०। परिग्रहशून्ये संन्यासिप्रभृतौ त्रि०।

**अग्रहर** पु० अग्रे ह्रियते दीयतेऽसौ अग्र-हृ-अच्। अग्रदेये वस्तुनि, भागाग्रे च। अग्र-हृ-ट। अग्रहारिणि तु त्रि०।

**अग्रहस्त** पु० अग्रः हस्तः अवयवावयविनोरभेदात् क०। हस्ताग्रे।

**अग्रहायणः** अस्त्री० हय ओह्निकालयोरिति काले वा हृ-ल्युट् युक् च भावं स्वभावं जहाति हायनो वर्षः अग्रः पूर्वः हायनः क० णत्वम्। मार्गशीर्षे मासि तस्य च वर्षादित्वम्

अमरकोषादौ मार्गादिमारभ्य कार्त्तिकान्तमासकीर्त्तनात् स्पष्टमवगतम् ।

**अग्रहायणी** स्त्री० अग्रूनि जहातीति हायनो व्रीहिः अग्राः श्रेष्ठा हायनाः शालयो यस्यां संज्ञात्वात् णत्वं गौरादित्वात् ङीप् । मृगशीर्षनक्षत्रे । तस्य च नक्षत्रस्य रात्रौ प्रथममुदयकाले श्रेष्ठव्रीहीणां धान्यानामुत्पत्तिर्लोके दृश्यते । तच्च नक्षत्रं सौराग्रहायणे मासि रात्रौ प्रथममुदेति ।

**अग्रहार** पु० अग्रे ह्रियतेऽसौ हृ-घञ् । अग्रहरे (पूर्वोक्तेऽर्थे) ब्रह्मचारिणे देये क्षेत्रादौ च । अग्र-हृ-अण् । अग्रहारिणि । त्रि० । स्त्रियां ङीप् ।

**अग्राह्य** त्रि० न-ग्रह ण्यत् न०त० । ग्रहणायोग्ये शिवनिर्माल्यादौ प्रतिग्रहायोग्ये तिलाश्वस्वर्णादौ च । [च त्रि० ।

**अग्रिम** पु० अग्रे भवः अग्र+डिमच् । ज्येष्ठभ्रातरि । श्रेष्ठे उत्तमे

**अग्रिय** पु० अग्रे भवः अग्र+घ । ज्येष्ठभ्रातरि श्रेष्ठे उत्तमे च त्रि० ।

**अग्रीय** पु० अग्रे भवः अग्र+छ । ज्येष्ठभ्रातरि । श्रेष्ठे उत्तमे च त्रि० । [गामिनि ।

**अग्रेगा** त्रि० अग्रे गच्छति अग्र-गम-क्विप् अलुक् स० । अग्र-

**अग्रेगू** त्रि० अग्रे गच्छति अग्रे-गम-डू+अलुक् स० । अग्रसरे सेवके ।

**अग्रेदिधिषू** पु० दिधिं धैर्यं स्यति निरस्यति दिधिषूः द्विरूढा पुनर्भूः योषित् दिधि-षो कू-षत्वम् अग्रे प्रधाना दिधिषूर्यस्य अलुक् स० कप्भावाद्ध्रस्वत्वे । पुनर्भूविवाहकारिणि । निपातनात् अस्य ह्रस्वान्ततापीष्यते । प्रागूढकनिष्ठभगिन्या अनूढज्येष्ठभगिन्यां च । ज्येष्ठायां ह्यनूढायां कन्यायामुह्यतेऽनुजा । सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृतेति मनूक्तेः । एतत्पक्षे च अग्रे स्वविवाहात् पूर्वं दिधिषूः ज्येष्ठाविवाहकालावहनरूपधैर्यलोपकारिणी अनुजा यस्या इति विग्रहः ।

**अग्रेवण** न० अग्रे वनस्य ७त० अलुक् स० णत्वञ्च । वनाग्रदेशे ।

अग्रेसर त्रि० अग्रे सरति गच्छति अग्रे सृ-ट अलुक्स० ७त० । अग्रगामिनि स्त्रियां ङीप् । [ च त्रि० ।

अग्र्य पु० अग्रे भवः अग्र+यत् । ज्येष्ठभ्रातरि । प्रधाने श्रेष्ठे

अघ इदित् गतौ भ्वादि० आत्मने० सक० सेट् । अङ्घते । आनङ्घे ।

अघ पापकरणे अदन्तचुरादि० उभय० । अघयति-ते ।

अघ न० चुरा० अघ अच् । पापे, व्यसने, दुःखे च ।

अघमर्षण त्रि० अघं पापं मृष्यतेऽनेन अघ-मृष-ल्युट् ६त०। सर्व-पापनाशार्थं जप्ये मन्त्रादौ । स्त्रियां ङीप् ।

अघोर पु० घुर्ण-घोर । न घोरः ( शान्तः ) न०त० । महादेवे । घोरभिन्ने त्रि० । भाद्रकृष्णचतुर्दश्यान्तु स्त्री० ।

अघोष पु० घुष-घञ् न० त० । वर्णोच्चारणबाह्यप्रयत्नविशेषे । क च खयां यमः खयः+क+पौ विसर्गः शर एव च । एते श्वासानुप्रदानाः अघोषाश्च विवृण्वते इति शिक्षोक्तदिशा खयादि-वर्णानामुच्चारणप्रयत्नः ।

अघ्न्य पु० न हन्ति हन्तिकर्त्तृत्वात् न-हन-यक् निपातनात् साधु । प्रजापतौ । न हन्यते • स्त्रीहत्याया निषिद्धत्वात् । स्त्रियां गवि तु स्त्री० ।

अङ्क ( लक्ष ) संख्याकरणे चिह्नयुक्तकरणे अदन्तचुरादि० उभ० सक० सेट् । अङ्कय-ति-ते आञ्चिक-त्-त । अङ्कापयति ते इति केचित् ।

अङ्क पु० अङ्क-घञ् । दृश्यकाव्यविशेषे अङ्क इति प्रसिद्धे नाटकपरि-च्छेदे, पर्वते, चिह्ने रेखायां, युद्धभूषणे, समीपे च । क्रोडे तु अस्त्री०

अङ्कति पु० अन्च (गतौ) अति कुत्वम् । वाते । पूजनार्थत्वे कर्म्मणि अति । ब्रह्मणि अग्नौ च । अग्निहोत्रिणि त्रि० । स्त्रियाम् अङ्कतीत्र च । [ मङ्कनी । चिह्नकरणमात्रे न० ।

अङ्कन त्रि० अङ्क ल्युट् । अङ्कनसाधनद्रव्ये दागनीति प्रसिद्धे स्त्रिया-

अङ्कपालि (ली) स्त्री पा-अलि अङ्क- पालि ६त० वा ङीप् । क्रोड-प्रान्ते । अङ्केन पालयतीति अङ्क-पालि इ । उपमातरि (धाइमा) इति प्रसिद्धायाम् । अङ्कस्य पालिरिव त० । आलिङ्गने च ।

**अङ्कपालिका** स्त्री अङ्कपालि+क । धात्र्याम्, वेदिकायां, क्रोड़प्रान्त-भागे, आलिङ्गने च ।

**अङ्कस्** न० अनुज-असुन् कुत्वम् । चिह्ने, शरीरे च ।

**अङ्कित** त्रि० अङ्क-क्त । चिह्निते, चिलिते, क्रमसंख्यायाञ्च ।

**अङ्किन्** त्रि० अङ्कः (आलिङ्गनस्थानत्वेन) अस्यास्ति अङ्क+इनि । अङ्के-नालिङ्ग्ये-मृदङ्गादिवाद्यभेदे, क्रोड़विशिष्टे च स्त्रियामङ्किनी ।

**अङ्कुर** अस्त्री अङ्क-उरच् । वीजादभिनवोत्पन्ने,मृत्तिकामुद्भिद्य जाते च तृणवृक्षादौ,जले च । शोभमुत्पद्यते इति साधर्म्यात् रुधिरे,लोम्नि च

**अङ्कुरक** पु० अङ्क्यते यत्नेन सञ्चीयतेऽसौ अनुच-घुरच् ततः क । प-क्ष्यादीनां वासस्थाने वासा इति ख्याते । [भेदे] काञ्चा इति ख्याते ।

**अङ्कुश** अस्त्री अङ्क-उशच् । हस्तिचालनोपयोगिनि वक्राग्रे लौहास्त्र-

**अङ्कुशदुर्द्धर** पु० दुःखेन धार्य्यते व्यवस्थाप्यते दुर्-धारि खल् हुस्वः अङ्कुश-दुर्धर ३त० । दुर्दान्तहस्तिनि ।

अङ्कूर पु० अङ्क-खर्जूरादित्वात् ऊरच् । अभिनवोत्पन्ने तृणवृक्षादौ ।

अङ्कूष अस्त्री अङ्क ऊषच् । हस्तिचालनोपयोगिनि वक्राग्रे लौहमयेऽस्त्रभेदे

**अङ्कोट** (ठ) (ल) पु० अङ्क्यते लक्ष्यते कोलकैः । अङ्क ओट (ओठ) (ओल) । पीतवर्णसारे गन्धयुक्तपुष्पे दीर्घकण्टकयुक्ते रक्तवर्णफले आकोड़ इति ख्याते वृक्षे ।

**अङ्कोलक** पु० अङ्कोल+क । आकोड़ इति ख्याते वृक्षे ।

**अङ्कोलसार** पु० अङ्कोलस्य सारः ६त० । अङ्कोटवृक्षजाते विषभेदे ।

**अङ्कोलिका** स्त्री अङ्क-वल् अच् संप्रसारणे अङ्कोला+क । आलिङ्गन-क्रियायाम् ।

अङ्क्य पु० अङ्के क्रोड़े स्थापयित्वा वाद्यतेऽसौ अङ्के साधुः । अङ्क यत् । सार्द्धतालत्रयायामं चतुर्दशाङ्गुलाननः । हरीतक्याकृतिर्यः स्याद-ङ्क्योऽङ्के स हि वाद्यते इत्युक्तः क्रोड़े स्थापनपूर्व्वकं वादनीये मृदङ्गादौ । अङ्कनीये त्रि० ।

**अङ्ग** चिह्नयुक्तकरणे अदन्तचुरादि उभय० सकर्म्मक० सेट् अङ्गय-ति ते आञ्जिग-त् त । मतान्तरे [illegible] ते ।

अङ्ग न० अङ्ग-अच् । देहे, अवयवे, अप्रधाने, उपाये, मनसि च ।

अङ्गग्रह पु० अङ्ग ग्रह इत० । देहवेदनायाम् ।

अङ्गज न० अङ्गात् जायते अङ्ग-जन-ड । रुधिरे । पुत्रे, कामे च पु० । देहजातमात्रे त्रि० ।

अङ्गण(न) न० अगि-गतौ अङ्ग्यते स्टहादिभिःस्वत्र गम्यते अत्र अङ्ग-ल्युट पृषोदरादित्वात् वा णत्वम् । (उठान) इति प्रसिद्धे प्राङ्गणे ।

अङ्गति पु० अनक्ति याययनेन करणेन । अनुज-अति कुत्वम् । वाहने । अज्यते पूज्यते कर्म्मणि अति । ब्रह्मणि, अग्नौ च । अग्निहोत्रिणि त्रि० । स्त्रियाम् अङ्गती च ।

अङ्गद न० अङ्गं दायति शोधयति दै-क । ताड्, वाजु, इति च प्रसिद्धे बाहुभूषणे । वालिपुत्रे-वानरे पु० । अङ्गदानकर्त्तरि त्रि० । दक्षिणदिग्गजकरिण्यां स्त्री० ।

अङ्गना स्त्री प्रशस्तमङ्गमस्ति यस्याः अङ्ग+न । अङ्गसौष्ठववत्यां योषिति, योषिन्मात्रे, उत्तरदिग्गजकरिण्याञ्च ।

अङ्गनाप्रिय पु० प्री-क अङ्गना-प्रिय इत० । अशोकवृक्षे तत्पुष्पेण स्त्रियः स्वाङ्गं भूषयन्तीति । योषित्प्रियमात्रे तु त्रि० ।

अङ्गपालि स्त्री०अङ्गं पाल्यते संवध्यतेऽत्र अङ्ग-पाल-इ । आलिङ्गने ।

अङ्गपालिका स्त्री०अङ्गं देहं पालयतीति अङ्गपालि-ण्वुल् । धाइमा इति ख्यातायाम् उपमातरि । अङ्गपालनकारके त्रि० ।

अङ्गमर्द्द पु०अङ्गं मर्द्दयति अङ्ग-मर्द्द-णिच्-अच् इत०। देहसंवाहके सेवके । अङ्गमर्द्दनकारके त्रि० ।

अङ्गमर्द्दक पु० अङ्गं मर्द्दयति अङ्ग-मर्द्द-णिच्-ण्वुल् । देहसंवाहके-सेवके ।

अङ्गमर्द्दिन् पु० अङ्गं मर्द्दयति अङ्ग-मर्द्द णिच् णिनि इत० । अङ्गमर्द्दके सेवके । अङ्गमर्द्दनकारके त्रि० । स्त्रियां ङीप् ।

अङ्गरक्त पु० अङ्गे रक्तः रन्ज-क्त ७त० । कम्पिल्लदेशजाते-रक्तवर्ण-चूर्णवति-गुण्डारोचनीति वणिजेषु वैद्येषु च प्रसिद्धे वृक्षभेदे । रक्ताङ्गमात्रे त्रि० ।

अङ्गरक्षणी स्त्री अङ्गं रक्ष्यतेऽनया अङ्ग-रक्ष-ल्युट् ङीप्। आङ्-राखा इति प्रसिद्धे वस्त्रे। अङ्गरक्षणकारके त्रि०।

अङ्गराग पु० अङ्गं रज्यतेऽनेन अङ्ग-रन्ज-करणे घञ्। अङ्गलेपने कुङ्कुमादौ। भावे घञि। अङ्गस्य विलेपने। [अङ्गदेशाधिपे कर्णे।

अङ्गराज् पु० अङ्गेषु तन्नामकदेशेषु राजते राज-क्विप् ७त०।

अङ्गव न० अङ्गे स्वावयवे वाति अन्तर्भवति अतिशोषणात् सङ्कुचिताङ्गमिव भवति अङ्ग-वा-ड ७०। शुष्कफले।

अङ्गविकृति पु०वि-कृ-क्तिन् अङ्गस्य विकृतिश्चालनादिर्यस्मात् ५त०। मृगीनाड़ा इति ख्याते अपस्माररोगे। ६त०। अङ्गस्य विकारे स्त्री,

अङ्गविक्षेप पु० वि-क्षिप-घञ् अङ्गस्य विक्षेपः चालनं यत्र ब०। अङ्गुल्यादिविन्यासभेदेन त्रिंशद्विधे नृत्ये। ६त०। अङ्गस्य चालनमात्रे।

अङ्गवैकृत न० विकृतस्य भावः विकृत+अण् अङ्गेन अङ्गचेष्टया वैकृतं हृदयभावो ज्ञायते यत्र बहु०। आकार इति ख्यातायाम्-हृदयगतभावावेदकचेष्टायाम्। ६त०। अङ्गस्य विकारे न०।

अङ्गस् पु० अनुज-असुन् कुत्वञ्च। पक्षिणि इत्युज्ज्वलदत्तः।

अङ्गसंस्कार पु० अङ्गं संस्क्रियतेऽनेन अङ्ग-सम्-कृ करणे घञ्। देहसंशोधनादिसंस्कारकारके स्नाने गोधूमचूर्णादिनाङ्गमर्दने च। भावे घञ् ६त०। अङ्गस्य संस्कारे विलेपनादौ। अङ्गं संस्करोति अङ्ग-सम्-कृ-कर्त्तरि अण् ६त०। कुङ्कुमादौ त्रि०।

अङ्गहार पु० अङ्गं ह्रियते चाल्यतेऽत्र अङ्ग-हृ आधारे घञ्। अङ्गुल्यादिविन्यासभेदेन त्रिंशद्विधे नृत्ये। भावे घञ् ६त०। अङ्गस्य हरणमात्रे।

अङ्गाङ्गिभावः पु० अङ्गस्य अङ्गिनश्च भावः। गौणमुख्यभावे।

अङ्गाधिप पु० अधि पा-क अङ्ग-अधिप ६त०। अङ्गदेशपतौ कर्णे। अत्र अङ्गाधिपतिरित्यपि।

अङ्गार अस्त्री०अङ्ग-आरन्। अर्द्धदग्धे-अग्निसंक्रान्ते अग्निशून्ये वा आङार इति प्रसिद्धे-काष्ठखण्डे। मङ्गलग्रहे पु०। रक्तवर्णे त्रि०

अङ्गारक पु० अङ्गार+स्वार्थे क। रक्तवर्णत्वात् मङ्गलग्रहे, कुरण्टक-वृक्षे, भीमराज इति ख्याते-भृङ्गराजवृक्षे च। अल्पार्थे क। स्फुलिङ्ग इति विख्याते-अङ्गारखण्डे।

अङ्गारक न० तैलमङ्गारकं नाम सर्वज्वरविनाशनमिति वैद्यकपरिभाषिते तैलविशेषे।

अङ्गारकमणि अस्त्री अङ्गारकस्य मणिः ६त०। प्रवाले तस्य मङ्गलग्रहस्वामिकत्वस्य ज्योतिषे प्रसिद्धिः।

अङ्गारधानिका स्त्री० अङ्गाराणि धीयन्तेऽस्याम् अङ्गार-धा-आधारे ल्युट् टित्वात् ङीप् ततः स्वार्थे कप् टाप्। अङ्गाराधारे (आङ्टा) इति (धुनची) इति च प्रसिद्धे पात्रभेदे।

अङ्गारपरिपाचित न० अङ्गारे (ज्वलदग्निव्याप्तकाष्ठखण्डे) परिपाच्यते परि-पच स्वार्थे णिच् क्त। कावाव इति प्रसिद्धे—पक्वमांसादौ

अङ्गारपुष्प पु० अङ्गारमिव लोहितवर्णं पुष्पं यस्य ब०। जियापुति, इति ख्याते इङ्गुदीवृक्षे।

अङ्गारमञ्जरी स्त्री अङ्गारमिव रक्तवर्णा मञ्जरी यस्याः ब०बहुव्रीहौ-कपभावान्तस्त्वे संज्ञात्वात्। रक्तवर्ण-(करमचा) इति ख्याते करञ्जवृक्षे।

अङ्गारवल्ली स्त्री अङ्गारमिव रक्तफलत्वात् रक्ता वल्ली क०। रक्तवर्णफलवत्यां-कुँच इति प्रसिद्धायाम्,-गुञ्जालतायां करञ्जवृक्षे च।

अङ्गारशकटी स्त्री शक्नोति वोढुं शकटम्, अल्पं शकटं, शकटी, षष्ठ्यादिवत् अल्पार्थे ङीप् अङ्गारस्य शकटी ६त०। (आङ्टा) धुनाचीति च प्रसिद्धे अङ्गाराधारे पात्रभेदे।

अङ्गारि स्त्री अङ्गार+मत्वर्थे ठन् पृषोदरादित्वात् कलोपः। अङ्गाराधारे आङ्टा इति प्रसिद्धे पात्रविशेषे।

अङ्गारिका स्त्री अङ्गारं विद्यतेऽस्याः अङ्गार+मत्वर्थे ठन् टाप्। आङ्टा इति ख्याते अङ्गारपात्रे। [पात्रे। अङ्गारवति त्रि०।

अङ्गारिणी स्त्री अङ्गार+इनि। अङ्गारधानिकायां(आङ्टा)इति ख्याते

अङ्गारित पु० अङ्गारमिवाचरतीति अङ्गार+क्विप् ततः कर्त्तरि क्त।

पलाशकलिकोद्गमे। अङ्गारं करोतीत्यर्थे णिचि क्त। दग्धप्राये त्रि०

अङ्गिका स्त्री० अङ्गम् आच्छादयति अङ्ग+इनि-के स्त्रियां टाप्। आङ्‌राखा इति प्रसिद्धे कञ्चुकवस्त्रे।

अङ्गिन् त्रि० अङ्ग+इनि। प्रधाने, अवयवविशिष्टे, देहवति च।

अङ्गिरस् पु० अङ्ग-असि इरागमः। स्वनामख्याते ऋषिभेदे ब्रह्मणो-मुखजाते पुत्रे। [स्वीकारे अभ्युपगमे।

अङ्गीकार पु० अनङ्गम् अस्वकीयम् अङ्गं क्रियते अङ्ग च्वि-कृ-घञ्।

अङ्गीकृत त्रि० अङ्ग-च्वि-कृ कर्म्मणि क्त। अभ्युपगते स्वीकृते।

अङ्गुरि (री) स्त्री अङ्ग-उलि-रलयोरैकत्व स्मरणात् रत्वम्। आङ्गुल इति प्रसिद्धायाम् हस्तपादशाखायाम् वा ङीप् अङ्गुरीवोरगक्ष-तेति रघुः।

अङ्गुरीय न० अङ्गुरौ भवम् अङ्गुरि-छ। वालमूलादित्वात् वा लत्वा-भावः। अङ्गुलिभूषणे आङ्‌टीति प्रसिद्धे।

अङ्गुरीयक न० अङ्गुलौ भवम् अङ्गुलि-छ। वालमूलादित्वात् वा रत्वे स्वार्थे क। अङ्गुलिभूषणे आङ्‌टीति ख्याते।

अङ्गुल पु० अङ्ग-उल। हस्तपदशाखायां आंगुल इति॰ ख्यातायाम् वात्स्यायनमुनौ अङ्गुष्ठे च। यवोदरैरङ्गुलमष्टसंख्यैरिति भा-स्कराचार्य्योक्तेः अष्टयवोदरपरिमाणे तु न०।

अङ्गुलि (ली) स्त्री० अङ्ग-उलि। हस्तपदशाखायाम् आङ्गुल इति ख्यातायाम्। वा ङीपि अङ्गुली च। हातशुडा इति ख्याते गजकर्णिकारवृक्षे च। [कृते ललाटस्यार्द्धचन्द्राकृतितिलके।

अङ्गुलितोरण न० अङ्गुल्याः तोरणमिव कृतम्। चन्दनादिद्वारा

अङ्गुलित्र न० अङ्गुलिं त्रायते अङ्गुलि+त्रै-क। चामाटीति प्रसिद्धे ज्याकर्षणकृतखेदवारणार्थम् अङ्गुलिबद्धे चर्मणि बद्धगोधाङ्गुलित्र इति भट्टिः।

अङ्गुलित्राण न० अथलित्रायतेऽनेन त्रै-क ल्युट० । चामाटीति प्रसिद्धे ज्याकर्षणकृतखेदनिवारणार्थम् अङ्गुलिबद्धे चर्म्मणि।

अङ्गुलिमुद्रा स्त्री० अङ्गुल्या मुदं राति अङ्गुलि+मुद् रा-क

इत० । धारयितुर्नामाक्षरमुद्रासहिते आङ्गुटीति प्रसिद्धे अ-ङ्गुलीभूषणे ।

**अङ्गुलिमोटन** न० अङ्गुल्योर्मोटनं मर्दनं यत्र ब० । अङ्गुलि-द्वयमर्दनजाते तुड़ि इति प्रसिद्धे शब्दे ।

**अङ्गुलिषङ्गा** स्त्री० अङ्गुलौ सङ्गो यस्याः षत्वम् ७ब० । (याड) इति प्रसिद्धे अङ्गुलिसंलेपकारके यवागूद्रव्ये ।

**अङ्गुलिसन्देश** पु० अङ्गुल्या अङ्गुलिध्वनिना सन्दिश्यते सं-दिश-घञ् । अङ्गुलिध्वनिद्वारासंज्ञादाने, अङ्गुलिस्फोटनमात्रेऽपि ।

**अङ्गुलिस्फोटन** न० अङ्गुल्योः स्फोटनं ताडनं यत्र ७ब० । (तुड़ि) इति प्रसिद्धे अङ्गुलिद्वयमर्दनजाते शब्दे ।

**अङ्गुलिपञ्चक** न० अङ्गुलीनां पञ्चकम् पञ्चसंख्या । हस्तस्थानामङ्गु-लीनां समुदाये ताश्च अङ्गुष्ठ तर्ज्जनीमध्यमानामिकाकनिष्ठा-नामिकाः । [प्रसिद्धे अङ्गुलिभूषणे ।

**अङ्गुलीयक** न० अङ्गुरीयकवत् वा रस्लाभावः । आङ्गुटीति

**अङ्गुलिसम्भूत** पु० अङ्गुलौ सम्भवः सम्-भू-क्त ७त० । नखे अङ्गु-लिसम्भूतमात्रे त्रि० ।

**अङ्गुष्ठ** पु० अग्नौ पाणौ प्राधान्येन तिष्ठति अङ्ग-स्था-क अम्बाम्बेत्या-दिना षत्वम् । वृद्धाङ्गुलौ । अम्बाम्बेति सूत्रेऽङ्गुशब्दप्रयोगात् अङ्गुशब्दोऽपि हस्तवाचीति ज्ञापितम् ।

**अङ्गुष्ठमात्र** त्रि० अङ्गुष्ठ+परिमाणार्थे मात्रच् । अङ्गुष्ठमध्यपर्वपरि-मिते । अङ्गुष्ठमात्रोह्यशरोऽपि दृष्ट इति श्रुतौ ।

**अङ्गूष** पु० अङ्ग-ऊष । नकुले वाणे च ।

**अङ्गस्** न० अङ्ग-असि । पापे ।

**अङ्घ्रि** पु० अघि गतौ क्रि । चरणे वृक्षमूले च ।

**अङ्घ्रि** पु० अघि गतौ क्रिन् । चरणे वृक्षमूले च । [वृक्षमात्रे ।

**अङ्घ्रिप** पु० अङ्घ्रिणा मूलेन पिबति सिक्तजलादिकम् पा-क ३त० ।

**अङ्घ्रिपर्णिका** स्त्री अङ्घ्रौ मूले अङ्घ्रेरारभ्य वा पर्णमस्याः ब० जातित्वात् ङीष् ततः स्वार्थे के ह्रस्वे टाप् । सिंहपुच्छाकारपु-

भवति चाकुलिया, इति ख्याते वृक्षे । अङ्कुपर्णीत्यपि नाम ।

अङ्कुवल्लिका स्त्री अङ्कुरारभ्य वल्लीव पर्णवत्त्वेन ततः स्वार्थे के ह्रस्वे टाप् । सिंहपुच्छाकारपुष्पवति चाकुलिया, इति प्रसिद्धे वृक्षे । अङ्कुवल्लीत्यपि नाम । [आचिष्ट ।

अच अविस्पष्टकथने उभय० भ्वादि० सक० सेट् । अचति ते । आचीत्

अच पूजने गतौ च इदित् पर०भ्वादि० सक० सेट् । अञ्चति आञ्चीत् आनञ्च । अञ्च्यात् गतौ तु अच्यात् ।

अच अव्यक्तकथने इदित् उभय० भ्वादि० सक० सेट् । अञ्च-ति ते । आञ्चीत् आञ्चिष्ट । [ भिन्ने न० ।

अचक्षुस् त्रि० नञ्-ब०। मन्दनेत्रे नेत्रहीने च । न०त०। चक्षु-

अचण्डी स्त्री चडि कोपने अच् गौरादित्वात् ङीप् न० त० । शान्तस्वभावायां गवि । कोपनभिन्ने त्रि० ।

अचर न० न चरति चलति-चर-अच् न० त० । स्थावरे स्थितिशीले पृथिव्यादौ चराणामन्नमचरमिति मनुः । चलनशून्ये त्रि० ।

अचल पु० न चलति चल-अच् न०त०। पर्व्वते, गोंज इति ख्याते शङ्कौ, शिवे, ब्रह्मणि च । पृथिव्यां स्त्री । चलनशून्ये त्रि० ।

अचलत्विष् पु० अचला शतधा प्रक्षालनेनापि मालिन्यानपगमात् स्थिरा त्विट् कान्तिर्यस्य ब० । कोकिले । स्थिरकान्तिमति त्रि० । कर्म्म० । स्थिरायां कान्तौ स्त्री ।

अचिन्त्य न० चिति-कर्म्मणि यत् न०त० । चिन्तयितुमियत्तया परिच्छेत्तुमशक्ये परब्रह्मणि । चिन्तयितुमशक्ये वस्तुमात्रे त्रि० । अचिन्त्याः खलु ये भावा इति श्रुतौ । [मात्रे त्रि० ।

अचिर न० चिर-स्तक् न०त० । अल्पकाले । अल्पकालस्थायिनि द्रव्य-

अचिरद्युति: स्त्री० अचिरा अल्पकालस्थायिनी द्युतिर्यस्याः ब० । विद्युति । अल्पकालस्थायिद्युतिमिति त्रि० । कर्म्म० । अल्पकालस्थायिन्यां कान्तौ स्त्री ।

अचिराभा स्त्री० प्र-भा अङ् अचिरा अचिरस्थायिनी प्रभा यस्याः ब० । विद्युति । च्युता दिवः स्यात् स्फुरिवाचिरप्रभेति

भट्टिः । अल्पकालस्थायिप्रभावति त्रि० । कर्म्म० अचिरायां दीप्तौ स्त्री ।

**अचिररोचिस्** स्त्री अचिरं रोचिर्यस्याः ब० । विद्युति । अचिरप्रभावति त्रि० । कर्म्म० । अचिरप्रभायाम् न० ।

**अचिरांशु** स्त्री अचिरा अंशवोऽस्याः ब० । विद्युति । अल्पकालस्थायिकिरणवति त्रि० । कर्म्म० । अचिरकिरणे पु० ।

**अचिरात्** अव्य० अचिरं अततीति क्विप् । शीघ्रे, अविलम्बे च ।

**अचिराभा** स्त्री अचिरप्रभावत् । आ-भा-अङ् । विद्युति ।

**अचेतन** त्रि० चित-णिच्-युच् चेतना ज्ञानम् ब० । चेतनाशून्ये । चित ल्यु न० त० । ज्ञानयिभिन्ने ।

**अचेतस्** त्रि० चित असुन् न० त० । विवेकशून्ये, दुष्टचित्ते, चित्तशून्ये च । चित्ताभावे अव्य० ।

**अचैतन्य** त्रि० चेतनस्य भावः चेतन+यक् ब० । चैतन्यरहिते, ज्ञानशून्ये च । न० त० । ज्ञानभिन्ने न० ।

**अच्छ** अव्य० छो-क न० त० । आभिमुख्ये । [भल्लूके, स्फटिके च पु० ।

**अच्छ** त्रि० न छ्यति दृष्टिम्, न+छो क० । स्वच्छे निर्म्मले च । भ-

**अच्छभल्ल** पु० अच्छ-आभिमुख्येन भल्लते गच्छति अच्छ+भल्ल+अच् । भालूके अत भल्ल इत्यपि पृथक् नाम ।

**अच्छम्** अव्य० न-छो कसुन् । आभिमुख्ये । [वैदिककर्म्मणि च ।

**अच्छिद्र** त्रि० छिद्र+रक् ब० । छिद्रशून्ये, अङ्गहानिः छिद्रं तच्छून्ये

**अच्छिद्रावधारण** न० अच्छिद्रतया साङ्गतयावधारणम् अव धारि-ल्युट् । क्रतस्य वैदिककर्म्मणोऽच्छिद्रतया अवधारणे क्रतैतत्कर्म्माच्छिद्रमस्त्वित्यभिलापरूपे ।

**अच्छोद** त्रि० अच्छम् उदकं यस्य उदकस्योदभावः । निर्म्मलजलवति तडागादौ । तन्नामकप्रसिद्धे सरसि न० ।

**अच्युत** पु० च्योतते अच्युत-क न० त० । विष्णौ । च्युतिशून्ये त्रि०

**अच्युताग्रज** पु० अच्युतस्य कृष्णस्य अग्रे जायते अग्र+जन+ड ६त० । बलभद्रे । [कामदेवे । तदङ्गजातमात्रे त्रि० ।

**अच्युताङ्गज** पु० अच्युतस्याङ्गात् जायते अङ्ग+जन-ड । ५त० ।
**अच्युतात्मज** पु० आत्मनोऽङ्गात् जायते जनड ६त० । कामदेवे ।
**अच्युतावास** पु० आ-उष्यते सेव्यतेऽत्र आ-वस-घञ् ६त० । अश्वत्थ-वृक्षे । अश्वत्थः सर्व्ववृक्षाणामित्युक्तेस्तस्य तत्रोपास्यत्वात्तदावासत्वम्
**अच्युति** स्त्री च्यु-क्तिन् न० त० । क्षरणाभावे । बहु० । नाश-शून्ये त्रि०। [चीत् आजीत् । अजिता वेता ।
**अज** गतौ क्षेपणे च भ्वादि० पर० सक० सेट् । अजति । अवै-
**अज** दीप्तौ इदित्। चुरादि० उभय० सेट् अक० । अञ्जयति ते । आञ्जिजत् त ।
**अज** पु० न जायते जन-ड न०त० । ब्रह्मणि, विष्णौ, हरे, जीवात्मनि ईश्वरे, छागे, मेषराशौ, सूर्य्यवंशीयराजभेदे दशरथपितरि, आत् विष्णोर्जाते कामदेवे च । जन्मरहिते त्रि० । जगत्कारणे सत्त्वरजस्तमोगुणात्मके प्रधाने अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानामिति श्रुतेः । छाग्याञ्च स्त्री ।
**अजकर्ण** पु० अजस्य कर्ण इव कर्णौ यस्य ब० । छागतुल्यलम्बायमान पत्रयुक्ते पियासाल, इति ख्याते छागकर्णो वृक्षे मरिचपत्रे च ।
**अजकर्णक** पु० अजकर्णइव कायति पत्रद्वारा प्रकाशते कैक । पियासाल इति ख्याते वृक्षे ।
**अजकव** अस्त्री०अजो विष्णुः को ब्रह्मा च वाति शरत्वेनात्र वा+अधिकरणे क ६त०। शिवधनुषि । वावुइ इति ख्याते वर्वरीवृक्षे पु० ।
**अजकाव** अस्त्री स अजकौ विष्णुब्रह्माणौ अवतीति अण् उप० स०। शिवधनुषि ।
**अजक्षीर** न० अजायाः क्षीरं पुंवद्भावः । छागदुग्धे ।
**अजग** पु० अजं छागं यज्ञाङ्गत्वेन गच्छति गम-ड ६त० । विष्णौ । अजेन गन्तरि वह्नौ च । [ वनयमान्याम् ।
**अजगन्धा** स्त्री अजस्य गन्धइव गन्धोऽस्याः । जोयानोति ख्यातायां
**अजगन्धिका** स्त्री अजस्य गन्ध इव गन्धो यस्याः ब० ततः स्वार्थे के टाप् । वावुइ इति प्रसिद्धे वर्वरीशाके ।

अजगन्धिनी स्त्री० अजस्य मेषस्य गन्धो लेशः एकदेशः शृङ्गमिति यावत् तद्वत्याः फलाकारोऽस्त्यस्यामिति अजगन्ध+इनि ङीप् । (गाडरसिङ्ग) इति प्रसिद्धे अजशृङ्गीवृक्षे ।

अजगर पु० अजं छागं गिरति गिलति गृ अच् । वृहत्सर्पे ।

अजगव पु० अजगो विष्णुः शरत्वेन त्रिपुरासुरवधकालेऽस्यास्ति अजग+व । शिवधनुषि । [ धनुषि ।

अजगाव पु० अजगं विष्णुमवति अव-अण् उप०स० । शिवध-

अजघन्य त्रि० न जघन्य ( अधम ) न०त० । अधमभिन्ने श्रेष्ठे च ।

अजजीविक त्रि० जीवयति जीव-णिच् कर्त्तरि ण्वुल् जीविका अजस्य क्रयविक्रयादिभ्यां पालनादिना वा जीविका जीवनोपायोऽस्य ब० । छागक्रयविक्रयादिना जीविकावति ।

अजटा स्त्री० नास्ति जटा शिफा यस्याः ब०।(भुंइआमला)इति प्रसिद्धे शिफारहिते वृक्षभेदे । [ततः अच् ।आलकुशीति प्रसिद्धे वृक्षभेदे ।

अजडा स्त्री० अजडयति स्पर्शमात्रादङ्गमर्दनार्थं चालयति न+जड-णिच्

अजथ्या स्त्री० अजानां समूहः । अज+थ्यन् स्त्रीत्वात् टाप् । अजसमूहे । तद्वर्णाकारत्वात् स्वर्णयूथिकायाञ्च ।

अजदण्डी स्त्री० अजस्य ब्रह्मणो दण्डोऽस्याः ब०गौरा०ङीप् । ब्रह्मदण्डीवृक्षे ब्रह्मणो यज्ञार्थदण्डस्य तदीयकाष्ठेन करणात्तथात्वम् ।

अजननि स्त्री० न+जन-आक्रोशे अनि । आक्रुश्यमाने जन्माभावे । अर्थाभावे अव्ययी० । जनन्या अभावे अव्य० ।

अजन्य स्त्री० लौकिकहेतुभिर्न जन्यते न+जन-णिच्-यत् । शुभाशुभसूचके दैवकृते भूकम्पादावुत्पाते । जन्यभिन्ने त्रि० ।

अजप पु० असदृशं जपति निन्दार्थे नञ्, जप-अच् । कुपाठके । अजं पाति रक्षति अज+पा-क । छागपालके त्रि० ।

अजपा स्त्री० प्रयत्नेन जपितुमशक्या अयत्नोच्चारिता जप-अच् । श्वासप्रश्वासयोः बहिर्गमनागमनाभ्याम् अनवरतनिष्पादनरूपे जपे, हंसः, सोऽहमिति वा मन्त्रभेदे च । जपशून्ये त्रि० ।

अजपात् (द्) पु० अजस्य पाद इव पादोऽस्य वा अन्त्याकारलोपः ।
 रुद्रभेदे तद्देवताकत्वात् पूर्वभाद्रपदनक्षत्रे च ।
अजभक्ष पु० अजैर्भक्ष्यतेऽसौ भक्ष घञ् ईत० । (बाबुइ) इति प्रसिद्धे
 वर्वरीवृक्षे तत्पत्रमजैरतिप्रीतितो हि भक्ष्यते ।
अजमीढ पु० अजो मीढः यज्ञे सिक्तः यत्र ब० । (आजमीर) इति
 प्रसिद्धे देशे । तद्देशाधिपे राजर्षि भेदे । आजमीढ़ युधिष्ठिरे ।
अजमोदा स्त्री० अजस्य मोद इव मोदो गन्धो यस्याः अजं मोदयति
 वा । मुद-घञ् ईत० मोदि-अण् वा । उग्रगन्धवत्यां वनयमा-
 न्याम् यवानीमात्रे च । [ दन्तशून्ये त्रि० ।
अजम्भ पु०नास्ति जम्भो दन्तोऽस्य ब०। भेके तस्य दन्ताभावात् तथात्वम् ।
अजय पु० जि-अच् न०त० । वीरभूमिनगरसन्निधाने अजय इति
 नामके नदविशेषे च । अजेन छागेन याति-या-क ३त० । छाग-
 वाहने अग्नौ पु० । अजये जयशून्ये त्रि० । अव्ययी०। जयाभावे
 अव्य० । नास्ति जयो मादकत्वे यस्याम् (सिद्धि.) (भाङ्ग,) इति
 च प्रसिद्धनामिकायाम् विजयायाम् स्त्री ।
अजय्य स्त्री० जि-शक्यार्थे यत् । जेतुमशक्ये दुर्जये शत्रौ ।
अजरा स्त्री० जॄ-अङ् न०त०। (घृतकुमारी) इति प्रसिद्धे वृक्षे
 तस्य जराभावात् । जराशून्ये त्रि०। जराभावे अजरसम् अव्य० ।
अजर्य्य न० न जीर्य्यति जॄ-यत् न०त० । सौहार्द्दे ।
अजलोमन् पु० अजस्य लोमेव लोम (मञ्जरी) यस्य उपमान ब० ।
 (शूकशिम्बी) इति ख्याते अजलोमवन्मञ्जरीविशिष्टे वृक्षभेदे ।
अजवीथी स्त्री० अजेन ब्रह्मणा निर्मिता वीथी मध्य० ३त० । गगन-
 सेतुरूपे (यमनाला) इतिख्याते, छायापथे । यामारभ्य अगस्त्य-
 स्थानपर्य्यन्तं पितृयानपथः ।
अजशृङ्गी स्त्री० अजस्य मेषस्य शृङ्गमिव फलमस्याः ब०। (गाड़लसिङ्गा)
 इति प्रसिद्धे मेषशृङ्गतुल्यफलवति वृक्षे । [विनि वस्तुमात्रे त्रि० ।
अजस्र न० । न+जस-र। सन्तते विच्छेदरहिते । तथाभूतकालस्था-
अजहल्लिङ्गा स्त्री० न जहत् स्वार्थो याम् न+हा-शतृ ३ब०। स्वा-

र्थापरित्यागेन परार्थबोधिकायां लक्षणायाम् । यथा श्वेतो धावतीत्यादौ श्वेतगुणापरित्यागेन तद्वति लक्षणा ।

**अजहल्लिङ्ग** पु० न जहत् लिङ्गं-यम् हा-शतृ २ब० । नियतलिङ्गके विशेष्यस्यान्यलिङ्गकत्वेऽपि स्वलिङ्गात्यागेन विशेषणे शब्दे । तथा चान्यत्र विशेषणानां विशेष्यानुसारिलिङ्गत्वनियमेऽपि अस्य न तथा नियमः यथा वेदः श्रुतिर्वा प्रमाणम् । ० [ख्याते इच्छे ।

**अजहा** स्त्री० न जहाति भुजाम् न+हा-श । आकृषीति

**अजागर** पु० जागृ-णिच् अच् न जागरो यस्मात् ५ब० । सेवनेन निद्राराहित्यकारके यदपेक्षयाऽन्यस्मिन् जागरणकर्तृत्वं नास्ति तादृशे (भीमराज) इति ख्याते भृङ्गराजे । भृङ्गराजः सुजागर इति रभसवाक्यात् तस्यात्यन्तनिद्राराहित्यकारित्वम् ।

**अजाजी** स्त्री० अजे न छागेन आजीविक्षेपो गन्धोत्कटत्वात् त्यागो यस्याः अज-घञ् वीभावाभावः ब०। मर्दनेनापि छागेन गन्धोत्कटतया त्यज्यमाने, (जीरा)इति प्रसिद्धे जीरके द्रव्ये ।

**अजाजीव** पु० अजैः छागैस्तत्पोषणादिना तत्क्रयविक्रयादिना वा आजीवति आ+जीव-अच् ३त० । •छागपालके तत्क्रयविक्रयाभ्यामाजीविनि च ।

**अजातककुद्** पु० न जातं ककदसंवकूटं यस्य जन-क्त ब० ककुदस्य न्त्याकारलोपः। अपूर्णककुदवति अल्पवयस्के गवादिवत्से ।

**अजातशत्रु** पु० जातस्य उत्पन्नमात्रस्य न शत्रुः अस्माद्भीजीत्यादिवत् नञोऽव्यवहितेन शत्रुशब्देनान्वयात् असमर्थसमासः । युधिष्ठिरे राजनि । एवमजातारिप्रभृतयोऽपि तत्रैव ।

**अजाति** स्त्री० जन-क्तिन् न०त० । अनुत्पत्तौ । ब० । जातिशून्ये जात्यादौ जन्मशून्ये च नित्ये त्रि०। अव्य० । जात्यभावे अव्य० ।

**अजादनी** स्त्री०अजैस्तृणाद्यतेऽसौ अन्यैस्तु दुःस्पर्शत्वेनाजैरेवाद्यते इति वा अद-कर्मणि ल्युट् ३त० । दुरालभायाम् (विचटि) प्रसिद्धे स्पर्शेन दुःखदायके द्रव्यभेदे ।

**अजानि** पु०नास्ति जाया यस्य न जायाया निङादेशः। जायारहिते ।

**अजानेय** पु० अजेऽपि विक्षेपेऽपि आनेयो यथास्थानं प्रापणीयो आरोही येन अज-विक्षेपे अप् वीभावाभावः आ+नी-कर्मणि यत् ततः ब०। वक्षुपस्प्रहारेऽपि निर्भयेन यथास्थानमारोहिणः प्रापके अश्वे, उत्तमाश्वे, च।

**अजप्रिया** स्त्री० अजानां प्रिया। (कुल) इति ख्याते बदरीवृक्षे।

**अजि** पु० अज-इन्। तेजसि। गतिमति त्रि०। तेन पदाजिः।

**अजिन** न० अजति क्षिपति रज आदि अज-इनच् वीभावाभावः। चर्मणि।

**अजिनपत्रा** (त्री) (त्रिका) स्त्री० अजिनं चर्मेव सुश्लिष्टं पत्रं पक्षो यस्याः ब०। (चामचिका) इति प्रसिद्धे पक्षिभेदे (त्री) इत्यत्र गौरादित्वात् ङीष्। ततः स्वार्थे के ह्रस्वेऽत्र टापि-पत्रिका

**अजिनफला** स्त्री० अजिनं (चर्मविकारत्वात् भस्त्रा) इव फलं यस्याः। अजिनपूर्वकत्वेन जातिलक्षणं ङीषं बाधित्वा टाप्। (टेपारी) इति प्रसिद्धे भस्त्राकारफलके वृक्षभेदे।

**अजिनयोनि** स्त्री० अजिनस्य चर्मणः योनिः कारणं ६त०। हरिणमात्रे। [त्सरे।

**अजिर** न० अज-किरन् वीभावाभावः। (उठान) इति ख्याते

**अजिह्म** त्रि० हा-मन् द्वित्वालोपौ ततः न०त०। सरले

**अजिह्मग** पु० अजिह्मं सरलं गच्छति गम-ड। वाणे। सरलगामिनि त्रि०। [भेदे। जिह्वाशून्ये त्रि०।

**अजिह्व** पु० जि वन् कुक् च जिह्वा रसना वा नास्ति यस्य ब०।

**अजीर्ण** न० जॄ-भावे क्त न०त०। जठरानलमान्द्येन भुक्ताहारेरपाके, रोगभेदे च। कर्त्तरि क्तः न० त० जीर्णतोभिन्ने त्रि०।

**अजीव** त्रि० जीव-भावे घञ् ब०। जीवनरहिते मृते शवे च।

**अजीवनि** स्त्री० न जीव्यात् न+जीव-आक्रोशे अनि। अभिशापविषये जीवनाभावे।

**अजेय** त्रि० न+जि-कर्म्मणि यत्। जयायोग्ये।

**अजैकपाद्(द्)** पु० अजस्य छागस्य एकः पाद इव पादो यस्य उपमा०

न० वा पादस्थान्त्याकारलोपः । रुद्रविशेषे, तद्देवताके पूर्वभाद्र-
पदनक्षत्रे च । [ नाट्यएवास्य प्रयोगः । वेश्यायाम् ।

**अज्जुका** स्त्री० अर्जयति या सा अर्जि-उक रकारस्य जत्वम् ।

**अज्झटा** स्त्री० अजति दोषं नाशयति अज-क्विप् भटति संहन्यते
झट्-अच् ततः कर्म्म० । (भुंइ आमला) इति प्रसिद्धे द्रव्ये ।

**अज्ञ** त्रि० न जानाति न+ज्ञा-क । ज्ञानशून्ये, मूर्खे, अल्पज्ञे च

**अज्ञान** न० ज्ञा-भावे ल्युट् न०त० । ज्ञानविरोधिनि ज्ञाननाश्ये
(अविद्या)इति वेदान्तप्रसिद्धे जगत्कारणे ज्ञानविरोधिनि पदार्थे ।
ब० । ज्ञानशून्ये त्रि० । अव्य० । अज्ञानाभावे अव्य० ।

**अञ्चति** पु० अनृच-अति । वायौ ।

**अञ्चल** पु०अञ्चति प्रान्तम् अनृच–अलच् । प्रान्तभागे वस्त्रप्रान्ते च ।

**अञ्चित** त्रि० अनृच-क्त । पूजिते, आकुञ्चिते च ।“अञ्चितसव्यपाद”-
मिति भट्टिः ।

**अञ्चितभ्रु** स्त्री०अञ्चिता पूजिता वक्रीकृता वा भ्रूर्यया । सुन्दरयोषिति
वक्रीकृतभ्रुवि च स्त्रियाम् । कर्म०(भ्रू)तयाभूतभ्रूलतायाम् स्त्री० ।

**अञ्ज** (नृज) मिश्रणे गतौ व्यक्तीकरणे च रुधादि०पर० सक० वेट् ।
अनक्ति । आञ्जीत् । अञ्जिता अङ्क्ता । वि-व्यक्तीकरणे “व्यनक्ति
कालत्रितयेऽपि योग्यतामिति” माघः ।

**अञ्जन** न० अज्यतेऽनेन करणे ल्युट् । कज्जले । भावे ल्युट् ।
मिश्रीकरणे, गमने, मालिन्ये, व्यक्तीकरणे च । कर्त्तरि ल्यु ।
उत्तरदिग्गोहस्तिन्यां हनुमतो-मातरि च स्त्री० । णिचि युच् ।
शक्तिलक्षणाभिन्ने शक्यलक्ष्यान्यार्थबोधके शब्दव्यापारे, स्त्री ।
“अन्यार्थधीकृत्व्यापृतिरञ्जनेति” काव्यप्रकाशः ।

**अञ्जनकेशी** स्त्री० अञ्जनमिव केशो यस्याः ङीप० । केशसंस्कारके हट्ट-
विलासिनीनामके गन्धद्रव्ये । यत्संयोगात् केशस्य कृष्णता स्यात् ।

**अञ्जनाधिका** स्त्री० अञ्जनादधिका कृष्णत्वात् ५ त० । (आजनाइ)
इति ख्याते कीटभेदे ।

**अञ्जनावती** स्त्री० अञ्जनं विद्यतेऽस्याः अधिककृष्णवर्णत्वात् अञ्ज-

न+मतुप् वत्वं दीर्घश्च। ईशानकोणस्य हस्तिन्याम्।

**अञ्जनिका** स्त्री० अञ्जना स्वार्थे के टाप् कापि पूर्व्वाकारस्य ह्रस्वम्। (आजनाइ) इति प्रसिद्धे अञ्जनाख्ये कीटभेदे।

**अञ्जनी** स्त्री० अज्यते चन्दनकुङ्कुमादिभिरसौ अनज-कर्मणि ल्युट् ङीप्। कुङ्कुमाद्यनुलिप्तायाम् स्त्रियाम्। करणे ल्युटि कटुकावृक्षे, काकाञ्जनवृक्षे च।

**अञ्जलि** पु० अनज-अलि। संयुतकरपुटे, कुडवपरिमाणे च।

**अञ्जलिका** स्त्री० अञ्जलिरिव कायति प्रकाशते अञ्जलि+कै-टाप्। बालमूषिकायाम्।

**अञ्जलिकारिका** स्त्री० अञ्जलेः कारिका करणं कृ-धात्वर्थनिर्देशे ण्वुल्। अञ्जलिकरणे अञ्जलेरिव कारिका स्पर्शमात्रेण पत्रपुटस्य संपुटीकरणात् कृ-ण्वुल् हेत०। (लज्जालु) इति ख्यातायाम् लज्जाशीललतायाम् सा हि स्पर्शमात्रात् सङ्कोचेन पत्रपुटं संपुटं कुर्वती अञ्जलिमिव करोति। अञ्जलेः कारः करणं नित्ययोगेन अस्त्यस्याः। कृ-भावे घञ् हेत०। ततः नित्ययोगे मत्वर्थीयः ठन् ठस्येकः टाप्। प्रतिमायां तस्या हि यत् निर्म्माणसमये अञ्जलिकरणं तत् नित्ययोगेन तिष्ठति। अञ्जलि+कृ-कर्त्तरि ण्वुल्। विनयनाञ्जलिकारके त्रि०।

**अञ्जस** त्रि० अनज असच्। सरले।

**अञ्जसा** अव्य० अनज-भावे असुन् अञ्जः गतिं विलम्बं वा स्यति सो-क्विप्। विलम्बाक्षमे शैघ्र्ये याथार्थ्ये च।

**अट** गतौ भ्वादि० सक०पर० सेट्। अटति आटीत्। [ रोमणस्थाने।

**अटनि** (नी) स्त्री० अटति मौर्वीम् अट-अनि वा ङीप्। धनुरग्रे गुणा-

**अटरूष** पु० अटति भ्रमति अट-अच् तं रोषति हिनस्ति रुष-क अटद्भिर्वा रुष्यते न युज्यते न रुष-क। (वासक) इति ख्याते वृक्षे।

**अटवि** (वी) स्त्री० अटन्ति चरमे वयसि यत्र अट-अवि वा ङीपि दीर्घता। वने। [ गमने च।

**अटाट्या** स्त्री० अट यङ्-भावे अ स्त्रीत्वात् टाप्। परिभ्रमणे कुत्सा-

अट्ट अतिक्रमे बधे च भ्वादि० आत्म० सक० सेट् । अट्टते । आट्टिष्ट ।
अट्ट अनादरे चुरादि० उभय० सक० सेट् । अट्टयति ते । आट्टिटत् त ।
अट्ट पु० अट्टयति अनाद्रियतेऽन्य यत्र चु० अट्ट- घञ् । प्रासादस्यो-
परिस्थगृहे, प्राचीरोपरिस्थहर्म्यसैन्यगृहे, तत्र स्थिता हि भटा अ-
न्यान् हीनतया नाद्रियन्ते, अतिशये च । तस्मिन् सति च अ-
न्योत्कर्षेऽनादरः । [ द्वि० परश्रुपम् । अयुतकटे हाटे ।
अट्टट्ट अव्य० अट्टप्रकारः अट्टस्य गुणवाचितया प्रकारे द्वित्वम् सकन्धु०।
अट्टहास पु० अट्टेनातिशयेन हासः हस-घञ् ३त० । उच्चहासे ।
अट्टहासक पु० अट्टहास इव कायते कै-क । अट्टहासेन दन्तानां
बहिर्निगमादतिशुभ्रत्वं तद्वत् शुभ्रे कुन्दवृक्षे ।
अट्टालक पु० अट्ट इव प्रासादोपरिस्थहर्म्यमिव अलति पर्याप्तौ भवति
अल-ण्वुल् । प्रासादोपरिस्थे इष्टकादिगृहे ।
अट्टालिका स्त्री० अट्टाल+स्वार्थे क । इष्टकादिनिर्म्मिते राजगृहे ।
अठ गतौ भ्वादि० पर० सक० सेट् । अठति । आठीत् ।
अठ गतौ इदित् आत्म० भ्वादि० सक० सेट् । अण्ठते ।
अड उद्यमे भ्वादि० पर० अक० सेट् । अडति । आडीत् ।
अड व्याप्तौ स्वादि० पर०सक० सेट् वेदएवास्य प्रयोगः । अड्णोति ।
आडीत् । [ आड्डीत् ।
अड्ड अभियोगे समाधाने च भ्वादि० पर० सक० सेट् । अड्डति ।
अण शब्दे भ्वादि० पर० अक० सेट् । अणति । आणीत् ।
अण जीवने दिवा० आत्मने० अक०सेट् । अण्यते आणिष्ट ।
अण(न)क त्रि० अणति यथेच्छम् नदति अण-अच् ततः कुत्सायाम् क ।
अधमे, निन्दिते च । दन्त्यमध्यश्चायम् ।
अणव्य त्रि०अण-उन् अणुकस्य क्षुद्रधान्यस्य भवनं क्षेत्रम् अणु+यत् ।
सर्षपादिकोत्पत्तियोग्ये (कुनाभूमि) ख्याते क्षेत्रे ।
अणि पुंस्त्री० अणति शब्दायते अण-इन् । (आरा)इति ख्याते रथच-
क्राग्रस्थिते कीलके सूच्याद्यग्रभागे च । स्त्रीत्वे वा ङीष् । अत्रा-
देर्दीर्घतापीष्यते । तेन आणिः आणी ।

**अणिमन्** पु० अणोर्भावः अणु+इमनिच् । सूक्ष्मत्वे सूक्ष्मपरिमाणे, ऐश्वर्य्यभेदे च यद्वशात् सूक्ष्मीभूय सर्वत्र गन्तुं शक्नोति । ऐश्वर्य्याणि च "अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा । ईशित्वं च वशित्वञ्च तथा कामावसायिता" इत्युक्तानि । एतेषां स्वरूपाणि ऐश्वर्यपदार्थनिरूपणे वक्ष्यन्ते ।

**अणीयस्** त्रि० अणु+ईयसु । अतिसूक्ष्मे "अणोरणीयान् महतो महीयानिति" श्रुतिः । स्त्रियाम् ङीप् ।

**अणु** त्रि० अण-उन् । क्षुद्रे, सूक्ष्मपरिमाणवति, द्रव्ये, लेशे च । स्त्रियाम् अण्वी च । (चिना, काङ्गनी, श्यामा) प्रभृति सूक्ष्मधान्ये पु०

**अणुक** त्रि० अणु+निपुणे । स्वार्थे क । सूक्ष्मे अल्पे क । क्षुद्रे ।

**अणुभा** स्त्री० अण्वी सूक्ष्मा भा दीप्तिर्यस्याः ब०। विद्युति ।

**अण्ड** न० अणन्ति संप्रयोगं यान्ति अनेन अण-ड टवर्गादित्वे ऽपि डस्य नेत्वम् । पुंसोऽङ्गावयवभेदे मुष्के, पक्षिडिम्बे, वीर्य्ये च ।

**अण्डज** पु० अण्डात् डिम्बात् जायते जन-ड । अण्डजाते पक्षिणि, सर्पे, मत्स्ये, (कांकलास) इति ख्याते कृकलासे च । अण्डजातमात्रे त्रि० । मृगनाभिकस्तूर्यान्तु स्त्री ।

**अण्डालु** पु० अण्ड+आलु । डिम्बविशिष्टे मत्स्ये । [समर्थे च ।

**अण्डीर** पु० अण्डः पुमवयवभेदः अस्यास्तीति अण्ड-ईरन् । पुरुषे,

**अत** बन्धने इदित् भ्वादि० पर० सक० सेट् । अन्तति । आन्तीत् ।

**अत** बन्धने भ्वादि० पर० सक० सेट् । अतति । आतीत् ।

**अत** प्रापणे, सातत्ये गतौ च भ्वादि० पर० सक० सेट् । अतति । आतीत् । क्त अतितः ।

**अतट** पु० तट्यते आहन्यतेऽम्भसा इति तटं जलाघातस्थानं तन्नास्ति यस्य ब० । (आड़रीति) प्रसिद्धे आलम्बनस्थानशून्ये, पर्वताद्युच्चस्थाने, भूमेरधोभागे च ।

**अतल** न० अस्य भूखण्डस्य तलं पृषोदरा० इदमोऽस्त्वम् । सप्तपातालमध्ये प्रथमखण्डे, भूमेरधोभागे । तलशून्ये त्रि० ।

**अतलस्पर्श** त्रि० न तलस्याधोभागस्य स्पर्शो यत्र ब० । अतिगभीरे ।

अतस पु० अत गतौ असच् । वाते । सातत्यार्थात् अत-असच् । आत्मनि । गौरादित्वात् ङीषि । तिसि, मसिना इति ख्याते अतसीवृक्षे । तत्सूत्रजाते क्षौमवस्त्रे न० ।

अति अव्य० अत-इन् । पूजायाम्, उत्कर्षे, अतिक्रमणे, अतिशये च ।

अतिकथ त्रि० अतिक्रान्तः कथाम् । कथनायोग्ये, अश्रद्धेये, नष्टे च ।

अतिकन्दक पु० अतिरिक्तः कन्दः यस्य ब० । हस्तिकन्दनामके वृक्षे ।

अतिकेशर पु० अतिरिक्तानि केशराणि यस्य ब० । कुब्जकवृक्षे ।

अतिक्रम पु० अति-क्रम-घञ् ह्रस्वः । उल्लङ्घने । अतिक्रान्तः क्रममिति प्रादि स० । क्रमोल्लङ्घने त्रि० ।

अतिगण्ड पु० परिभाषया विष्कुम्भावधि षष्ठे योगे ।

अतिगन्ध पु० अतिशयितो गन्धो यस्य ब० । चम्पकवृक्षे । अतिशयितगन्धवति त्रि० ।

अतिचरा स्त्री० अतिक्रम्य चरति दुर्गभूमिजातत्वात् दुष्प्रापत्वाच्च अति+चर अच् । पद्मचारिणीवृक्षे उत्तरदेशभवे, तत्पर्य्याये पद्माभेति-शब्ददर्शनात् स्थलपद्मिन्यामिति केचित् ।

अतिचार पु० अतिशयेन चारः अतिक्रम्य वा चारः अति+चर-घञ् । अतिशयितगमने, ज्योतिःशास्त्रप्रसिद्धे मङ्गलादिग्रहपञ्चकस्य सूर्य्यसम्पर्कविशेषात्तत्तेजोऽसहिष्णुतया वक्रशीघ्रादिगत्या स्वस्वभोग्यकालमलङ्घ्य राश्यन्तरगमने, अस्य विशेषस्तु वाचस्पत्याभिधाने दर्शयिष्यते । [क्रम्य अतिशयेन वा गन्तृमात्रे त्रि० स्त्रियां ङीप् ।

अतिचारिन् पु० अति+चर-णिनि । पूर्वोक्तातिचारवति ग्रहे । अति-

अतिच्छत्र पु० अतिक्रान्तश्छत्रम् प्रादि० स० । (छातिया) इति प्रसिद्धे स्थलतृणविशेषे, (तालमाखना) इति प्रसिद्धे जलतृणभेदे च । स्वार्थे क । अतिच्छत्रकोऽप्यत्र तत्रार्थे । छत्राकारपत्रपुष्पवति (छल्फा) इति प्रसिद्धे शाकभेदे स्त्री । क्षीरस्वामिमते छत्रा इत्येव नाम । छत्रातिक्रमकारिणि त्रि० । अतिक्रमेऽव्ययी० । छत्रातिक्रमे अव्य० ।

अतिजगती (ति) स्त्री० अतिक्रान्ता जगतीं द्वादशाक्षरपादां इति प्रा० स० । त्रयोदशाक्षरपादके छन्दोभेदे । जगतीं भुवनमतिक्रान्त-

वति त्रि० । तत्र पुंसि क्लीबे च (अतिजगति) । [ त्रिनि च ।

**अतिजव** त्रि० अतिशयितो जवो यस्य ब० । अतिवेगवति । द्रुतगा-

**अतिजागर** पु० अतिशयितो जागरो निद्राराहित्यं यस्य ब०। नील-
वर्के पक्षिणि तस्य सर्वदा जागरूकत्वात् । निद्राराहित्यवति त्रि०।

**अतिडीन** न० अतिक्रान्तं डीनं पक्षिगतिभेदं प्रा० स० । पक्षिणाम्
अतिदीर्घगमने ।

**अतितराम्** अव्य० अति+तर-ततः आम् । अत्यन्तातिशये ।

**अतितीक्ष्ण** त्रि० अतिशयेन तीक्ष्णः कटुरसो यस्य ब० । मरीचादौ ।
(सजना) इति प्रसिद्धे शोभाञ्जने पु० ।

**अतितीव्रा** स्त्री० अतिशयेन तीव्रा पाकादौ दुर्जरत्वात् प्रा०स०। ग्रन्थि-
मत्यां(गाँटदूर्वा)इति ख्यातायां दूर्वायाम् । अतितीव्रगुणके त्रि०

**अतिथि** पु० अतति गच्छति न तिष्ठति अत इथिन् । अभ्ययोगेन
आगन्तुके गृहागते, विषये च तस्य इन्द्रियेषु संसर्गमात्रकाले एव
चेतसि स्थितिर्नोत्तरकालमिति गतिरनुमीयते ।

**अतिथिसपर्य्या** स्त्री०अतिथीनां सपर्य्या पूजनम् सपरधातुः कण्ड्वादिः
यक् ततो अङ् । प्रत्यहं गृहस्थस्य कर्त्तव्यपञ्चयज्ञमध्ये मनुष्यय-
ज्ञे ऽतिथिपूजनादौ । अतिथिपूजादयोऽप्यत्र स्त्री ।

**अतिदिष्ट** त्रि० अति-दिश-क्त । अतिदेशस्य कर्मणि । यथा प्रकृतिवत्
विकृतिः कर्त्तव्येति वाक्येन प्रकृतिभूतदर्शयागादेरङ्गकार्य्याणि प्रया-
जादीनि विकृतौ पश्वादियागेऽतिदिश्यन्ते । अतिदेशो नाम इतर-
धर्म्मस्य इतरस्मिन् प्रयोगाय प्राप्तिः इति मीमांसायां स्थितम् ।
करणव्युत्पत्त्या तदुपदेशवाक्यमपि तथा ।

**अतिदीप्य** पु० अतिशयेन दीप्यते अति-दीप-कर्त्तरि यत् । रक्तचित्रके
लालचिता इति ख्याते वृक्षे ।

**अतिदेश** पु० अति-दिश-घञ् । अतिदिष्टशब्दार्थे—व्याख्यातरूपे-
ऽर्थे । अतिदिश्यते ऽनेनेति करणे घञ् तत्प्रतिपादकवाक्येऽपि ।

**अतिधन्वन्** पु० अतिरिक्तं धनुर्यस्य ब० धनुषोऽनङ् । उत्कृष्टधनुर्युक्ते
योधे । महत्स्वलातिक्रमकारिणि त्रि० ।

अतिधृति स्त्री अतिक्रान्ता धृतिम् अष्टादशाक्षरपादिकां धृत्तिं प्रा०स० । जनविंशत्यक्षरपादके छन्दोभेदे । धृतिर्धैर्य्यं सन्तोषो वा । अतिक्रमकारिणि त्रि० ।

अतिनु (नौ) त्रि० अतिक्रान्तोनावम् प्रा०स० क्लीबे ह्रस्वः । नौकातिक्रमकारिणि । पुंसि स्त्रियां च अतिनौः ।

अतिपतन न० अति–पत–ल्युट् । अतिक्रमे, अत्यये च । अत्या०स० पातातिक्रान्तरि त्रि० । [ स० । पत्तिं सेनामतिक्रान्ते त्रि० ।

अतिपत्ति स्त्री०अति-पद क्तिन् । अनिष्पत्तौ, अतिक्रमे च । अत्या०

अतिपन्न त्रि०अति+पद क्त व अतिक्रान्ते । अत्या०स०। पत्नातिक्रान्ते त्रि०

अतिपथिन् पु० अतिशयितः सुन्दरः पन्थाः प्रा०स० अतेः पूजार्थत्वात् न समासान्तः । सत्पथे ।

अतिपातक न० अतिक्रान्तोऽत्यन्तदुष्टत्वेनान्यत् पातकं प्रा०स० । पुंसां मातृस्नुषादुहितृगमनजन्ये स्त्रीणाञ्च पुत्रपितृश्वशुरगमनजन्ये पातकविशेषे । पातकमतिक्रान्तवति पुण्यशीले त्रि० । [ काले ।

अतिप्रगे अव्य० अति प्रगीयतेऽस्मिन् काले गै के । अत्यन्तप्रातः

अतिप्रश्न पु० अति+प्रच्छ नङ् । निरुत्तरप्रश्ने ।

अतिप्रसक्ति स्त्री० अति-प्र-सन्ज-क्तिन् । अत्यन्तासक्तौ, प्रसङ्गमतिक्रम्यान्यत्र संबन्धे अतिप्रसङ्गे च । लक्ष्ये लक्षणसंबन्धः प्रसङ्गः अलक्ष्ये तत्सम्बन्धोऽतिप्रसङ्गः । अत्या०स० । प्रसङ्गमतिक्रान्तवति त्रि०

अतिप्रसङ्ग पु०अति-प्रसन्ज घञ् । अतिप्रसक्तिपदार्थे ।

अतिबल त्रि० अतिशयितं बलं यस्य ब० । अतिशयितबलवति । अतिशयितं बलं यस्याः ५ ब०। अत्यन्तबलाधायिकायां पीतपुष्पायां (बेडियाला) इति ख्यातायां लतायां, विश्वामित्रेण कृपावशुनितः शिक्षिते रामाय दत्ते अस्त्रां ख्यभेदे च स्त्री । अतिशयितं बलम् प्रा०स० । अत्यन्ते बले, सामर्थ्ये, सैन्ये च न० ।

अतिभूमि स्त्री० अतिशयिता भूमिर्मर्य्यादा प्रा०स० । अतिमर्य्यादायां, आधिक्ये च । अतिक्रमेऽव्ययी० । मर्य्यादातिक्रमेऽव्य० । अत्या० स० । भूमिं भुवं मर्य्यादां वातिक्रान्तवति त्रि० ।

अतिमङ्गल्य पु० अतिमङ्गलाय हितम् अतिमङ्गल+यत् । विल्वदृक्षे । अतिमङ्गल्याद्ये अतिमङ्गलयुक्ते च त्रि० ।

अतिमर्य्याद अव्य० । अतिक्रमे अव्ययी० मर्य्यादातिक्रमे । प्रा० स० । मर्य्यादामतिक्रान्तवति त्रि० । [तिक्रमकर्त्तरि च ।

अतिमात्र त्रि० अतिक्रान्तो मात्रामत्यं अत्या० स० । अतिशयिते, मात्रा-

अतिमुक्त त्रि० अतिशयेन मुक्तः विदेहकैवल्यं गतः अति मुच-कर्त्तरि क्त । निर्व्वाणमुक्तिमति । अतिक्रान्ता मुक्तां शौभ्रयात् अत्या० स० । माधवीलतायां पु० ।

अतिमुक्तक त्रि० अतिशयेन मुक्त-स्वार्थे क । निर्व्वाणमुक्तिमति । अतिशयितमुक्ते च । अतिशयेन मुक्तं विस्तारोऽस्य मुच-भावे क्त वा कप् । अतिविस्तृते तिन्दुकदृक्षे पु० ।

अतिमोदा स्त्री० अतिशयितो मोदो यस्याः ब० । नवमल्लिकायाम् । अत्यन्तमोदवति त्रि० ।

अतिरथ पु० अतिक्रान्तो रथं रथिनम् अत्या० स० । योधविशेषे "अमितान् योधयेद्यस्तु सप्रोक्तोऽतिरथस्तु स" इत्युक्तलक्षणे रथातिक्रमकारके त्रि० ।

अतिरसा स्त्री० अतिशयितो रसो यस्याः ब० । (रास्ना) इति ख्यातायां मूर्व्वालतायाम् । अत्या० स० । रसातिक्रान्ते त्रि० ।

अतिरात्र पु० अतिक्रान्तो रात्रिम् अत्या० स० अच्-समासान्तः । यज्ञविशेषे । रात्र्यतिक्रान्ते त्रि० ।

अतिरिक्त त्रि० अति-रिच्-क्त । अतिशयिते, श्रेष्ठे, भिन्ने, शून्ये च । भावे क्त । अतिशये आधिक्ये न० ।

अतिरुक्ष त्रि० अतिशयितः रुक्षः अत्या० स० । अत्यन्तरुक्षे स्नेहशून्ये । तथाभूते कङ्गुकोद्रवादिधान्ये पु० । अतिक्रान्तो रुक्षम् । अतिशयस्निग्धे त्रि० । [धिक्ये च ।

अतिरेक पु० अति-रिच्-घञ् । अतिशये, भेदे, प्राधान्ये, आ-

अतिरोग पु० अतिशयितो रोगः रुज-घञ् । क्षयरोगे । अत्या० स० । रोगातिक्रान्ते त्रि० ।

अतिरोमश पु० अतिशयितं रोम अतिरोमन्+श। वनजाते छागे। अत्यन्तरोमाढ्ये त्रि०।
अतिवक्तृ त्रि० अति-वच तृच्। वावदूके, वाचोयुक्तिदक्षे च।
अतिवर्णाश्रमिन् पु० अतिक्रान्तोवर्णानाश्रमिणश्च अत्या०स०। ब्राह्मणादिवर्णभिन्ने ब्रह्मचर्य्याद्याश्रमिभिन्ने च"यो वेदान्तमहावाक्यश्रवणेनैव केशव!। आत्मानमीश्वरं वेद सोऽतिवर्णाश्रमी भवेत्" इत्युक्तलक्षणे पञ्चमाश्रमिणि।
अतिवर्त्तिन् त्रि० अति-वृत-णिनि। अतिक्रमकारके।
अतिवर्त्तुल पु० अतिशयितः वर्त्तुलः प्रा० स०। (वाटुलाकलाइ) इति ख्याते वर्त्तुलाकारके कलाये। अत्यन्तवर्त्तुले त्रि०। [च।
अतिवाद पु० अति+वद-घञ्। अत्युक्तौ, कठोरवाक्ये, अप्रियवाक्ये
अतिवादिन् त्रि० सर्व्वानतीत्य वदतीति अति+वद-णिनि। सर्व्वानतिक्रम्य वदनशीले, सर्वमतखण्डनेन स्वमतव्यवस्थापके च।
अतिवाहित त्रि० अति+वह-णिच्-क्त। यापिते, अतिक्रान्ते च।
अतिविकट पु० अतिशयेन विकटः प्रा० स०। दुष्टहस्तिनि। अतिकराले त्रि०। [ख्यातायां लतायाम्। विषातिक्रमकारके त्रि०।
अतिविषा स्त्री०अतिक्रान्ता विषम् अत्या०स०। (आतइच्) इति
अतिवृत्ति स्त्री०अति+वृत-क्तिन्। अतिक्रमे। वृत्तिजीविका तामतिक्रान्ते त्रि०। [रीतिभेदे।
अतिवृष्टि स्त्री० अति+वृष-क्तिन्। अत्यन्तवृष्टौ शस्योपघातकोपद्रवभेदे
अतिवेल त्रि०अतिक्रान्तो वेलां मर्य्यादाम् कूलं वा अत्या०स०। अतिशयिते, निर्मर्य्यादे, समुद्रकूलातिक्रमकारके च। अतिक्रमे अव्ययी०। वेलातिक्रमे अव्य०।
अतिव्याप्ति स्त्री० अतिशयेन लक्ष्यमलक्ष्यञ्चाभिव्याप्य व्याप्तिर्व्यापनम् अति+वि+आप्-क्तिन्। अतिशयव्यापने 'लक्ष्यस्येवालक्ष्यस्यापि व्याप्ते'। तथा च यत्र यस्य स्थितिरुचिता ततोऽन्यत्रापि तस्य सम्बन्धे अतिव्याप्तिः। यथा पृथिव्याः गन्धो लक्षणं तन्मैव तस्य

स्थितिरुचिता तस्य वाय्वादौ सत्त्वप्रसङ्गे अतिव्याप्तिः । यथा वा धूमे वह्नेर्व्यापकता न तु जले, तस्या जले प्रसक्तौ अतिव्याप्तिः ।

**अतिशक्ति** स्त्री० अतिशयिता शक्तिः कर्मसाधनसामर्थ्यम् देहजं बलम् वा प्रा० स० । अतिशयिते सामर्थ्ये, अधिकवीर्य्ये च । अतिक्रान्तः शक्तिम् अत्या०स०। सामर्थ्यातिक्रमकारके त्रि०। अतिशयिता शक्तिर्यस्य प्रा० ब० । अतिशयबलवति त्रि० अतिक्रमेऽव्ययी० । शक्त्यतिक्रमे अव्य० ।

**अतिशक्वरी** स्त्री० अतिक्रान्ता शक्वरीम् चतुर्दशाक्षरपादिकां वृत्तिम् अत्या०स० । पञ्चदशाक्षरपादके छन्दोभेदे ।

**अतिशय** पु० अति–शीङ्-अच् । आधिक्ये, अतिरेके, च अतिक्रान्तः शयं हस्तं अत्या०स० । हस्तातिक्रमकारके त्रि० ।

**अतिशयित** पु० अति+शीङ्-क्त । अधिके, अतिक्रान्ते च ।

**अतिशयोक्ति** स्त्री० अतिशयेन उक्तिर्निर्द्देशः वच-क्तिन् । अलङ्कारशास्त्रप्रसिद्धे अर्थालङ्कारभेदे । सा०१०परि० ।

**अतिशायन** न० अति+शीङ्–ल्युट् । अयिशायने "इष्ठन्" पा० सूत्रनिर्द्देशात् नि०दीर्घः । आधिक्ये,प्रकर्षे च । तद्विशिष्टे त्रि०।

**अतिशीत** न० अतिशयितं शीतम् प्रा० स० । अत्यन्तशीतलस्पर्शे ।

**अतिशोभन** त्रि० अति+शुभ-ल्यु । अत्यन्तशोभान्विते, श्रेष्ठे च ।

**अतिसन्ध्या** स्त्री० अत्यासन्ना सन्ध्या प्रा०स०। पूर्वदिवसीय रात्रिशेषदण्डादिसूर्य्योदयपर्य्यन्तः, सूर्य्यास्तात् पूर्वोत्तरदण्डात्मकश्च कालः सन्ध्या तस्याः आसन्ने काले ।

**अतिसर्ग** पु० अति+सृज-घञ् । दाने, कामचारानुज्ञायां यथेच्छं क्रियतामित्याद्यभिलापरूपायाञ्च । सर्गं सृष्टिमतिक्रान्तरि त्रि०।

**अतिसर्ज्जन** न० अति+सृज-ल्युट् । दाने, बधे, विप्रलम्भे च ।

**अतिसायम्** अव्य० अत्यासन्नं सायम् प्रा०स० । सूर्य्यास्तकालः सायम् तस्यासन्ने काले ।

**अति(ती)सार** पु० अतिशयेन सारयति रेचयति अति+सृ-णिच्-अच् । बहुद्रवीभूतमलनिःसारके उदरामये रोगे । अतेर्दीर्घतापि वा ।

**अति(ती)सारकिन्** त्रि० अतिसारोरोगोऽस्यास्ति अतिसार+इनि कुक् च । अतिसाररोगवति । अतेर्दीर्घतापि वा ।

**अतिसृष्ट** त्रि० अति+सृज-क्त । दत्ते, प्रेरिते ।

**अतिसौरभ** पु० सुरभेर्भावः अणि सौरभम्, अतिशयितं तदस्य ब० । अत्यन्तामोदवति आम्रे । सौरभान्विते वस्तुमात्रे त्रि० ।

**अतीत** त्रि० अति+इण्-क्त । अतिक्रम्य गते, नाशप्रतियोगिनि भूते काले तत्कालवृत्तिपदार्थमात्रे च ।

**अतीन्द्रिय** त्रि० अतिक्रान्तमिन्द्रियं तदविषयत्वात् अत्या०स० । इन्द्रियायोग्ये अप्रत्यक्षे, नेत्रश्रोत्रनासिकारसनात्वक्चेतांसीन्द्रियाणि तैर्ज्ञातुमशक्ये विषये । [न्तातिशये च ।

**अतीव** अव्य० अति+इव-इवः अवधारणे प्रा०स० । अवधृतातिशयेऽत्य-

**अतुल** त्रि० तुल-णिच्-अ तुला सा नास्ति यस्य ब० । उपमाशून्ये, अत्यन्तशोभाढ्ये च । तिलवृक्षे पु० ।

**अतुल्य** त्रि० तुलां साऽऽदृश्यमर्हति तुला+यत् न०त० । अनुपमे, सौन्दर्यातिशयशालिनि च ।

**अतृप्ति** स्त्री० तृप-क्तिन् अत्यन्ताभावार्थे-न०त० । तृप्तिराहित्ये । ब० । तृप्तिरहिते, असन्तोषिणि, लोलुपे, च त्रि० ।

**अट्ट** बधे भ्वा० आत्म० सक०सेट् । अट्टते आट्टिष्ट । णिचि अट्टयति ते आतिट्टत् त ।

**अत्ता** स्त्री० अतति संबध्नाति अत-तक् इडभावः । मातरि, श्वश्र्वाञ्च । नाट्येऽस्य व्यवहारः स्वार्थे वा कापि अत इत्त्वे । अत्तिकाप्यत्र ।

**अत्यन्त** न० अतिक्रान्तोऽन्तं सीमाम् अत्या०स० । अतिशये । तद्युक्ते सर्वपरिच्छेदातिक्रान्ते त्रि० । अतिक्रमेऽव्ययी० । परिच्छेदातिक्रमे नाशातिक्रमे च अव्य० । [अत्यन्तकोपशालिनि ।

**अत्यन्तकोपन** त्रि० अत्यन्तं कुप्यति अत्यन्त+कुप-ल्यु, २त०स० ।

**अत्यन्तगामिन्** त्रि० अत्यन्तम् अन्तात्ययं गच्छति अति+अन्त अत्यये अव्ययीभावः ततः-गम-णिनि । आत्यन्तिके, अतिशयगमनशीले च स्त्रियां ङीप् अत्यन्तगामिनी ।

अत्यन्तसंयोग पु० अत्यन्तेन साकल्येन संयोगः संबन्धः व्याप्तिरिति यावत् । अन्तमवसानमतिक्रान्तः संयोगो वा अत्यन्त+सम्+युज-घञ् सन्ततसंबन्धे व्याप्त्यादौ ।

अत्यन्ताभाव पु० अत्यन्तः नित्यः अभावः कर्म्म० । नास्तीति वाक्याभिलप्यमाने नाशप्रागभावभिन्ने संसर्गाभावे । यथा भूतले घटो-नास्ति इति वाक्येन न्यायमते भूतले घटाभावः प्रतीयते स च न नाशः नापि प्रागभावः । नाशप्रागभावयोस्तु न अत्यन्तता प्रतियोगिकाले तयोरसत्त्वात् ।

अत्यन्तिक त्रि० अत्यन्तं गच्छति अत्यन्त+ठन ठस्येक । अतिशयितगति- [कारिणि ।

अत्यन्तीन त्रि० अन्तस्यात्ययः अत्यन्तम् अत्यये अव्ययी० अत्यन्तं गामी अत्यन्त+ख । अतिशयितगतिशीले ।

अत्यम्ल पु० अतिशयितोऽम्लोरसः फलपत्रादौ यस्य ब०। (तेतुल) इति प्रसिद्धे तिन्तिड़ीवृक्षे । अत्यन्ताम्लरसवति वस्तुमात्रे त्रि० । वन-बीजपुरे (टावालेवु) इति प्रसिद्धे वृक्षे स्त्री० ।

अत्यम्लपर्णी स्त्री अत्यम्लं पर्णं यस्याः जातित्वात् ङीष् । अत्यम्ल-पत्रयुक्ते वनबीजपुरे (टावालेवु) इतिख्याते वृक्ष ।

अत्यय पु० अति+इण—अच् । अतिक्रमे, अभावे, विनाशे, दोषे, कृच्छ्रे, अतिक्रम्य गमने, कार्य्यस्यावश्यम्भावाभावे च ।

अत्यर्थ न० अतिक्रान्तमर्थमनुरूपस्वरूपं अत्या० स० । अतिशये । तद्विशिष्टे त्रि०अत्यये अव्य०। अर्थाभावे अव्य० ।

अत्यल्प त्रि० अतिशयितोऽल्पः प्रा० स० । अत्यन्ताल्पे अणुतरे ।

अत्यष्टि स्त्री अतिक्रान्ता अष्टिं षोड़शाक्षरपादिकां वृत्तिं अत्या०स०। सप्तदशाक्षरपादके छन्दोभेदे ।

अत्याकार पु० अतिशयेन आकारः तिरस्कारः प्रा० स० अति+आ+कृ-घञ् । तिरस्कारे । अतिशयित आकारो मूर्त्तिः प्रा०स० । महादेहे । अतिशयित आकारो यस्य ब० । तद्विशिष्टे त्रि० ।

अत्यागिन् त्रि० त्यज-घिणुन् सन्दाय नञ् त० । कर्म्मफलानुसन्धानेन कर्म्मानुष्ठायिनि, त्यागिभिन्ने च ।

**अत्याचार** पु० अत्युत्कट आचारः आ+चर–घञ् प्रा०स०। अनुचिताचरणे। अतिक्रमे अव्ययी०। आचारातिक्रमे अव्य०।

**अत्याधान** न० अति-आ-धा ल्युट्। अतिक्रमणे, सम्बन्धमात्रे, उपरिस्थापने च। अव्ययी०। अग्न्याधानातिक्रमे अव्य०।

**अत्याल** पु० अतिशयेन समन्तात् अलति पर्याप्नोति अति+आ+अल–अच्। (लालचिता) इति ख्याते रक्तचित्रकवृक्षे, तस्य अत्यल्पकालेन समन्तात् व्यापनात् तथात्वम्।

**अत्याश्रम** त्रि० अतिक्रान्त आश्रमान् तद्विहितधर्म्मान् अत्या०स०। सर्वाश्रमत्यागिनि पञ्चमाश्रमिणि संन्यासिनि अत्याश्रमिन् इत्यपि। अतिशयित आश्रमः प्रा०स०। उत्तमाश्रमे संन्यासे पु०।

**अत्याहित** न० अत्यन्तमाधीयते तन्निवारणार्थं मनोदीयतेऽस्मिन् आ+धा–क्त। अत्यन्तभीतौ, प्राणहानिशङ्काकरे अनर्थे च।

**अत्युक्ति** स्त्री० अतिशयेन अनौचित्येन वा उक्तिः अति+वच–क्तिन्। अतिशयोक्तौ, अन्यथोक्तौ, निर्गुणजनस्य आरोपितगुणेन स्तवने।

**अत्युक्था** स्त्री० उक्था एकाक्षरपादिका वृत्तिः अतिक्रान्ता ताम् अत्या०स०। द्व्यक्षरपादके छन्दोभेदे। उक्थनामकसामभेदातिक्रान्तरि त्रि०।

**अत्यूह** पु० अतिशयेन ऊहते शब्दायते अति+ऊह–अच्। कालकण्ठे (डेओ) इति प्रसिद्धे दात्यूहे पक्षिणि। अतिशयेन ऊहस्तर्कः प्रा०स०। अतिशयवितर्के। (नील) इति ख्यातौषधौ नीलिकायां स्त्री०। अतिक्रमेऽव्ययी०। वितर्कातिक्रमे अव्य०।

**अत्र** अव्य० वा इदम्+एतद्+त्र सप्तम्यास्त्रल् प्रकृतेरन्–भावश्च। अस्मिन् एतस्मिन् वेत्यर्थे। [ च। स्त्रियां ङीप् अत्रभवती।

**अत्रभवत्** त्रि० इदम्+एतद्+त्र प्रथमायास्त्रल्। पूज्यार्थे, श्लाघ्ये

**अत्रि (त्रि)** पु० अद+त्रिप्। सप्तर्षिमध्ये मुनिविशेषे। अत्र पक्षे वा तलोपे अत्रिरित्यपि। त्रिभिन्ने त्रि० बहुवचनान्तः।

**अत्रिजात** पु० अत्रेर्नेत्रात् जातः जन–क्त ५त०। चन्द्रे, अपत्यार्थं तपस्यां कुर्व्वतोऽत्रेर्नेत्रात् जातो हि चन्द्रः।

अत्त्रि (त्रि)न् पु० अद–त्रिप् । सप्तर्षिमध्ये मुनिभेदे । पक्षे तलोपः ।
अथ अव्य० चु०अर्थ–ड पृषो० रलोपः । संशये,आरम्भे, आनन्तर्ये, प्रश्ने,विकल्पे, प्रकरणे समुच्चये, पक्षान्तरे च । मङ्गलं तु नास्यार्थः किन्तु अर्थान्तरप्रयुक्तोऽप्ययं श्रुत्या मङ्गलसाधनं भवति ।
अथकिम् अव्य० अथ+कायते कवते वा डिम् । स्वीकारे ।
अथर्व्वन् पु० अथ+ ऋ–वनिप् । अथर्व्वनामकमुनिविशेषे, तन्मुनिदृष्टतया तुरीये वेदे च ।
अथर्व्वविद् पु० अथर्व्ववेदं तदुक्तं कर्म वा वेत्ति विद्– क्विप् । अथर्व्ववेदस्य शन्नोदेवीरभीष्टयइत्यादिकस्य, तद्विहिताभिचारादिकर्मणश्च वेत्तरि वशिष्ठादौ ।
अथवा अव्य० अथ+वा–क्विप् । पक्षान्तरे ।
अथो अव्य० अर्थ–डो पृषो० रलोपः । अथशब्दार्थे आरम्भादौ ।
अद् बन्धने भ्वा० पर० इदित् सक० सेट् । अन्दति । आन्दीत् ।
अद् भक्षणे अदने च अदा० पर० सक० अनिट् अत्ति अघसत् जघास अत्ता अत्स्यति सनि जिघत्सति ।
अद् अव्य० अद–क्विप् । आश्चर्य्ये ।
अदत्ता स्त्री० न० दा–क्त । अपरिणीतायाम् स्त्रियाम् । अदत्तमात्ते त्रि०। अप्राप्तस्य न०त०। अदत्तन्तु'भयक्रोधशोकवेगरुजान्वितै'रित्याद्यभिहितलक्षणे, दानाभासेनार्पिते दत्त्वापि प्रत्याहर्त्तुं योग्ये त्रि०
अदत्तादायिन् त्रि० अदत्तमादत्ते आ+दा–णिनि ६ त० । चौरे ।
अदभ्र त्रि० दन्भ रक् दभ्रमल्पं न०त० । अनल्पे 'अदभ्रदर्भामधिशय्य स स्थली'मिति भारविः ।
अदर्शन त्रि० दृश–भावे ल्युट् न०ब० । दर्शनायोग्ये, अतीन्द्रिये,नाशे; व्याकरणशास्त्रपरिभाषिते लोपे च । अव्ययी० दर्शनाभावे अव्य० ।
अदल पु० दल्यते भिद्यते इति दलं पत्रं दल–कर्मणि घञ् न०ब० । दलशून्ये (हिजल)इति ख्याते वृक्षे । पत्रशून्यं वृक्षमात्रे त्रि०। एतत्कुमार्यां स्त्री० ।
अदस् त्रि०न दस्यते उत्क्षिप्यतेऽङ्गुलिर्यत्र इदन्तया निर्द्धारणाय पुरो-

वर्त्तिन्येवाङ्गुलिनिर्द्दृशः सम्भवति नापुरोवर्त्तिनि। न+दृस् क्विप्।
अपुरोवर्त्तिनि परोक्षे ज्ञाते वस्तुनि।

अदाह्य पु० दग्धुमशक्ये दह–ण्यत् न०त०। निराकारतया दाहा-
योग्ये परमात्मनि। दाहानर्हे महारोगिप्रभृतौ त्रि०।

अदिति (ती) स्त्री० न+दा–डिति वा ङीप्। दातुं च्छेत्तुमयो-
ग्यायाम् भुवि, दितिरसुरमाता विरोधे न०त०तद्विरोधिन्यामदितौ
सुरमातरि दक्षप्रजापतेः कन्यायाम् कश्यपपत्न्याम्,अदितिदेवताके
पुनर्वसुनक्षत्रे च दो–क्तिन् दितिः खण्डनतद्रहिते त्रि०।

अदितिज पु० अदितेर्जायते जन–ड ५त०। देवे।

अदीन त्रि० दी–क्त न०त०। कातर्य्यरहिते उदारे।

अदृष्ट न०दृश–क्त न०त०। पुण्यापुण्यरूपे भाग्ये, इन्द्रियायोग्यत्वात्
तस्यादृष्टत्वम्। अदृष्टहेतुके भयादौ च। दृष्टभिन्ने त्रि०।

अदृष्टपूर्व्व त्रि० न पूर्वं दृष्टः सह सुपेति स० परनि०। पूर्वमदृष्टे।

अदृष्टि स्त्री० विरुद्धा दृष्टिः विरोधार्थे न०त०। क्रूरदृष्टौ, परोपघ्न-
दृष्टौ, दर्शनाभावे च ब०। दृष्टिशून्ये त्रि०।

अद्धा अव्य० अद्यते अत् तां सन्तत गमनं ज्ञानं वा दधाति क्विप्।
याथार्थ्ये,साक्षात्कारे,स्फुटे, अवधारणे, अतिशये आकस्मिके च।

अद्भुत न० अततीत्यत् अव्ययमाकस्मिकार्थे तथा भाति भा–डुतच्।
आकस्मिके उल्कापातादौ, आलङ्कारिकप्रसिद्धे नवरसान्तर्गतविस्म-
यस्थायिभावके रसे च। तद्वति त्रि०।

अद्भुतस्वन पु० अद्भुतः स्वनो यस्य स्वन–अच् ब०। महादेवे। कर्म०।
आश्चर्य्यशब्दे। ब० तथाशब्दवति त्रि०।

अद्य अव्य० अस्मिन्नहनि इदमशब्दस्य निपातः सप्तम्यर्थे। अस्मिन्
दिवसे। आधारार्थत्वेऽपि अस्य समासान्तरघटकता तेनाद्यदिवसा-
दारभ्य इति, "अद्यप्रभृत्यवनताङ्गीति" कुमारः।

अद्यतन त्रि०अद्य भवः अद्य+ट्यु तुडागमश्च। अद्यभवे वस्तु मात्रे।
स्त्रियां ङीप् अद्यतनी।

अद्यत्वे अव्य० इदमशब्दस्येदानीमित्यर्थे निपा०। अधुनार्थे।

**अद्यश्वीना** स्त्री० अद्य श्वः परदिने वा प्रसोष्यते। अद्य+श्वस्+ख टिलोपः। आसन्नप्रसवायां गर्भिण्याम्।

**अद्रि** पु० अद्-क्रिन्। पर्वते, वृक्षे सूर्ये, परिमाणभेदे च।

**अद्रिकर्णी** स्त्री० अद्रिः अद्रिनामिका गिरिबालमूषिका तस्याः कर्णः कर्णतुल्यं पत्रं यस्याः गौरादित्वात् ङीप्। बालमूषिकातुल्यपत्रायाम् अपराजितालतायाम्। [भूमौ।

**अद्रिकीला** स्त्री० अद्रयः कुलाचलाः कीलाः शङ्कव इव यस्याः ब०।

**अद्रिज** न० अद्रौ जायते जन-ड उत०। (शिलाजतु) इति ख्यातनामप्रसिद्धे गन्धद्रव्ये। (गेरि) इति प्रसिद्धे द्रव्ये इति केचित्। पार्वत्यां स्त्री०। पर्वतभवमात्रे त्रि०।

**अद्रितनया** स्त्री० अद्रेर्हिमाचलस्य तनया। पार्वत्याम्।

**अद्रिभिद्** पु० अद्रिं भिनत्ति भिद्-क्विप् उत०। इन्द्रे।

**अद्रिभू** स्त्री० अद्रावपि भवति भू- क्विप् उत०। अपराजितालतायाम् तस्याः पर्वतेऽप्यतिकठोरभूमिके जायमानत्वात्तथात्वम्।

**अद्रिराज** पु० अद्रीणां राजा टच् समा०। हिमाचले।

**अद्रिसार** पु० अद्रेः सार इव। लौहे।

**अद्रीश** पु० अद्रीणां अद्रेर्वा ईशः ६त०। हिमाचले, शिवे च।

**अद्वय** न० द्वयवयं नञा ब०। सजातीयविजातीयस्वगतभेदशून्ये परब्रह्मणि। सजातीयद्वितीयरहिते, द्वयशून्ये च वस्तुमात्रे त्रि०। नास्ति द्वयं यस्य मते ब०। बुद्धभेदे पु०।

**अद्वयवादिन्** पु० अद्वयं वदति सर्वमेव वस्तु चित्स्वरूपं नान्यदतो द्वितीयमस्तीति वदति वद्-णिनि। अद्वैतवादिनि वैदान्तिके बाह्यार्थाभावेन ज्ञानात्मकं सर्वं वस्तु स्वीकर्त्तरि बौद्धे च। स्त्रियां ङीप् वादिनी। [हिते। केवले एकस्मिन् परमात्मनि न०।

**अद्वितीय** त्रि०न द्वितीयः सदृशो यस्य न०ब०। सजातीयद्वितीयर-

**अद्वैत** त्रि० द्विधा इतं भेदं गतम् द्वीतम् तस्य भावः द्वैतं तन्नास्ति यस्य ब०। सजातीयादिभेदशून्ये केवले परमात्मनि।

**अद्वैतवादिन्** त्रि० अद्वैतं सर्वमेव चिदात्मकं वदतीति वद् णिनि।

सर्व्वमिदं चिदात्मनि रज्ज्वां इव रजतादिवत् आरोपितं सत् प्रतिभाति तद्याथार्थ्यज्ञाने च यथा रजतबुद्धिर्निवर्त्तते एवं चिदात्मनि याथार्थ्ये नावगते सर्व्वं बाह्यं वस्तु निवर्त्तते इति वादिनि वैदान्तिके बुद्धविशेषे च ।

अधःक्षिप्त त्रि० अधो मुखेन क्षिप्तम् क्षिप्-क्त शाक०त०। अधोमुखेन स्थापिते न्यञ्चिते न्यग्भीकृतेऽधस्तान्निहिते च ।

अधःपुष्पी स्त्री० अधोमुखानि पुष्पाण्यस्याः जातित्वात् ङीप् । (छुनफा) इति ख्याते अवाक्पुष्पीवृक्षे ।

अधन त्रि० नास्ति धनं स्वाधीनतया यथेष्टमुपयोक्तुं यस्य ब० । भार्य्यापुत्रदासादिषु तेषां धनस्वामित्वेऽपि कार्य्ये यथेष्टविनियोगस्य पत्यादिसापेक्षत्वात् अधनत्वम् "भार्य्यापुत्रश्च दासश्च त्रयएवाधनाः स्मृताः । यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनमिति" स्मृत्युक्तेस्तथात्वम् । निर्धने अल्पधने च । [कुत्सित,हीने च ।

अधम त्रि० अव-अम धादेशः अधोभवः अधस्+मः अन्त्यलोपो वा ।

अधमर्ण त्रि० अवश्यदेयम् ऋणं तत् अधमं शोध्यं यस्य ब०। अवश्यदेयर्णशोधके (खातक)इति प्रसिद्धे ऋणग्रहीतरि ।

अधमाङ्ग न० अधमम् अङ्गम् कर्म्म० । चरणे ।

अधर पु० न ध्रियते धृङ्-अच् न० त० । ( ठोट ) इति ख्याते ऊर्द्ध्वे, नीचे वा ओष्ठे । धरणं धरा तत्संबन्धरहिते हीने, तले, नीचे च त्रि० ।

अधरात् अव्य० अधस्+प्रथमायाः पञ्चम्याः सप्तम्या वा आति अन्त्यलोपः अधोभागे । विवक्षावशात् अधरात्-रमणीयम् आगतो वसति वेत्यर्थानुसन्धानेन प्रथमान्ताद्यर्थो बोध्याः ।

अधरेण अव्य० अधरस्मिन् देशे, काले दिशि वा अधर+ एनप् । आसन्ने नीच देशादौ अवरस्यां दिशि च ।

अधरेद्युस् अव्य० अधरस्मिन्नह्नि अधर+एद्युस् । अधरदिवसे ।

अधर्म्म पु० ध्रियतेऽनेन धृ—मनिन् विरोधे न०त०। धर्म्मविरोधिनि वेदनिषिद्धकर्म्मजन्ये पापे, तद्धेतुभूतप्राणिहिंसादौ च । पुरुषरूप-

धर्मशून्ये त्रि०। गुणाद्यपरपर्य्यायः धर्मस्तद्रहिते ब्रह्मणि न०।

**अधश्चरः** पु० अधःकर्म्मणि स्तेयादौ चरतीति चर-ट। चौरे। अधःस्थानगामिनि त्रि०। स्त्रियाम् ङीप्।

**अधःशय्या** स्त्री० शीङ्-क्यप् शय्या ७त०। भूमिशयने।

**अधस्** अव्य० अधर+असि अधरशब्दस्थाने अधादेशश्च। पाताले, अधः-स्थानमात्रे च। तत्रापि अर्थवशात् प्रथमापञ्चमीसप्तम्यर्था ज्ञेयाः

**अधस्तात्** अव्य० अधर+अस्ताति। अधःशब्दवत् नीचार्थे।

**अधि** अव्य० न+धा-कि। अधिकारे, ऐश्वर्य्ये, स्वत्वे, अधिष्ठात्रीत्वये, उपरि, आधिक्ये, अतिशये च। आधीयते दुःखमनेनेति आ+धा-कि वा ह्रस्वः। मनःपीड़ायाम् पु०। [१०परि० द्रष्टव्यम्)।

**अधिक** त्रि०अधि+क। अतिरिक्ते, अनेकस्मिन्, अर्थालङ्कारभेदे(सा०

**अधिकरण** न० अधि+कृ-ल्युट्। आधारे, व्याकरणशास्त्रे परिभाषिते अधिकरणसंज्ञके कर्त्तृकर्मद्वारा क्रियाश्रये कारके, यथा गेहे स्थाल्यामन्नं पचतीत्यादौ गेहस्य कर्त्तृद्वारा, स्थाल्याश्च कर्मद्वारा, परम्परया पाकक्रियाश्रयत्वम्, पूर्वोत्तरमीमांसाशास्त्रप्रसिद्धे एकार्थप्रतिपादके,न्यायसमुदाये अधिक्रियते निर्णयार्थं विचारोऽस्मिन् विषयसंशयपूर्वपक्षसिद्धान्तनिर्णयात्मकपञ्चाङ्गबोधकवाक्यसमुदाये च। तत्र विचारार्हं वाक्यं विषयः तस्यार्थविषये सन्देहः इदमित्थं न वेति विकल्पः। तत्र सन्दिह्यमानयोः पक्षयोः असत्पक्षे युक्तिप्रदर्शनवाक्यं पूर्वपक्षवाक्यं सिद्धान्तः पूर्वपक्षोक्तां युक्तिं खण्डयित्वा सत्पक्षे युक्तिप्रदर्शनवाक्यम्। ततश्च त्याद्यभिलापेन सिद्धान्तसिद्धार्थोपसंहारकं वाक्यं निर्णयवाक्यमिति विस्तरस्तु वाचस्पत्याभिधाने।

**अधिकरणविचाल** पु० अधिकरणस्य विचालः अन्यथाकरणं वि-चल घञ् ६त०। द्रव्यस्य अवस्थान्तरकरणेन संख्यान्तरकरणे, विचालो नाम यदेकमनेकं क्रियते अनेकं वैकं क्रियते इति भाष्यम्। एकस्य राशेः पञ्चधा विभागे, पञ्चात्मकस्य वा एकधा करणेऽधिकरणस्य संख्याया विचालः।

अधिकर्म्मिक पु०(न०)अधिकृत्य हट्टं कर्म्मणेऽलम् अधि—कर्म्मन्+ठ। हट्टाध्यक्षे, हट्टस्थवणिग्भ्यः शुल्कादानकर्म्मणि नियुक्ते च।

अधिकाङ्ग पु० अधिकोऽङ्गात्। वर्म्मधरैर्यैर्हृदयमध्ये वर्म्मदार्ढ्यार्थं बद्धपट्टिकादौ। ब०। अधिकाङ्गवति त्रि०।

अधिकार पु० अधि+कृ—घञ्। आरम्भे, यथेष्टं क्रयविक्रयादिकर्तृत्वसम्पादके स्वामित्वे, विनियोज्यपुरुषेण संबन्धे, यथा विहितकर्म्मणि ब्राह्मणादेरधिकारः। राज्ञां छत्रचिह्नादिधारणादौ, यथाऽयं छत्रधारणेऽधिकारी, प्रकरणे, व्याकरणशास्त्रे पूर्वसूत्रोपात्तपदादेरुत्तरत्र सूत्रेषु अनुवृत्तौ च।

अधिकारविधि पु० अधिकारे फलस्वाम्ये विधिर्विधानम् वि+धा—कि ७त०। कर्म्मजन्यफलभोक्तृज्ञापके विधौ यथा यजेत इत्यनेन यागजन्यफलभोक्ता स्वर्गकामीति ज्ञाप्यते।

अधिकार्थवचन न०अधिकार्थस्य स्तुतिनिन्दाभ्यामारोपितस्य वस्तुधर्म्मातिरिक्तस्य वचनम् वच—ल्युट् ६त०। स्तुत्यर्थवादे,निन्दार्थवादे च।

अधिकृत पु० अधि+कृ—क्त। आयव्ययाद्यवेक्षके, अध्यक्षे कर्म्मजन्यफलसंबन्धिनि च। स्वामित्ववति त्रि०।

अधिक्षिप्त त्रि०अधि+क्षिप्—क्त। स्थापिते, निन्दिते, कृताधिक्षेपे च

अधिक्षेप पु० अधि+क्षिप—घञ्। तिरस्कारे।

अधिगत पु० अधि+गम—क्त। ज्ञाते प्राप्ते, स्वीकृते च।

अधिगम पु० अधि—गम—घञ्। ज्ञाने, प्राप्तौ, स्वीकारे च।

अधित्यका स्त्री० अधि+त्यकन्। पर्व्वतस्योपरिभूमौ।

अधिदेवता स्त्री०देवएव देवता अधिका देवता देवताया अपीश्वरत्वात्। देवानामपि सूर्य्यादिग्रहादीनामीश्वरे रुद्रादौ। ते च स्तुत्युक्ता बोध्या यदधिष्ठानाद्धि सूर्य्यादयः स्वस्वकार्य्यं कुर्व्वन्ति।

अधिदैवत न० देवतैव स्वार्थे अण्। अधिदेवतावत् समासार्थौ। हिरण्यगर्भे, अन्तर्य्यामिनि पुरुषे च पु०। स च दैवतानि चक्षुरधिष्ठातॄणि सूर्य्यादीनि तत्तत्कर्मणि नियुज्य चक्षुरादीनीन्द्रियाण्यनुग्रह्णातीति तस्य सर्वदेवतेश्वरत्वम्।

**अधिनाय** पु० अधिनीयते वायुना गन्धाधारद्रव्यानयनद्वारा तत्स्थान ह्रियतेऽसौ अधि+नी-घञ् । गन्धे ।

**अधिप** त्रि० अधि+पा-क । राजनि, प्रभौ च ।

**अधिपति** पु० अधि+पा-डति । प्रभौ ।

**अधिभू** पु० अधिभवति स्वामीभवति स्वाम्यर्थेऽत्राधिः भू-क्विप् । प्रभौ ।

**अधिमांसक** पु० अधिको मांसो यत्र ब० कप् । दन्तरोगविशेषे "हनुस्थे पश्चिमे दन्ते महाशोथो महारुजः । लालास्रावी कफकृतो विज्ञेयः सोऽधिमांसक" इति वैद्यकम् ।

**अधिमास** पु० अधिको रविमासादतिरिक्तः शुक्लप्रतिपदादिदर्शान्तश्चान्द्रोमासः प्रा० स० । मलमासे असंक्रान्तमासोऽधिमासो निरुक्त इतिस्मृतेः रविसंक्रान्तिवर्जितो मासोऽधिमासः । तथाहि "मीनादिस्थो रविर्येषामारम्भः प्रथमे क्षणे । ते चैत्राद्या" इत्युक्तदिशा मीनस्थे रवौ यस्य चान्द्रमासस्यारम्भः स चैत्र इत्येवं चैत्रादिलक्षणे स्थिते यस्मिन् चान्द्रमासे रवेः राश्यन्तरसंक्रमो न, तस्य तदुत्तरस्य च चान्द्रमासस्य उभयोर्मीनस्थे रवौ आरम्भात् उभयोरपि चैत्रता, तत्राद्योऽधिमासः संक्रान्तिहीनत्वात् द्वितीयः शुद्धः इति स्मृतौ प्रसिद्धम् ।

**अधिराज** पु० अधिको राजा प्रा० स० टच् । सार्व्वभौमे ।

**अधिरोहिणी** स्त्री० अधिरुह्यतेऽनया अधि+रुह-करणे ल्युट् । (मइ) इति (सिड़ि) इति च प्रसिद्धे काष्ठवंशादिनिर्मिते उच्चस्थानारोहणसाधने सोपानद्वन्द्वे ।

**अधियज्ञ** पु० अधिकृतः स्वामितया यज्ञो यस्य ब० । विष्णौ ।

**अधियोग**: युज-घञ् योगः अधिको योगः प्रा० स० । ज्योतिषप्रसिद्धे यात्रिकशुभयोगे । स च गमनसमयलग्ने, तस्माद्वा चतुर्थे, पञ्चमे, सप्तमे, नवमे, दशमे वा स्थाने बुधजीवभार्गवाणां मध्ये द्वयोरेकत्र, उक्तस्थानमध्ये अन्यतमस्थाने वा स्थितौ सत्यां योगः तत्र यातुः क्षेमं शत्रुहानिश्च फलम् । मुहूर्त्त० या० प्र० ।

**अधिवास** पु० अधि+वस-घञ् । निवासे । वासेर्णिच । गन्धमाल्याद्यैः

संस्कारे । अधिवासयति देवता अनेन अधि+वस–णिच् करणे घञ् । यज्ञारम्भात् पूर्वदिवसे देवतास्थापनादिकर्मणि ।

**अधिवासन** न० अधि+वस-णिच् अधिकरणे ल्युट् । यज्ञारम्भात् पूर्वदिवसे देवतास्थापनादौ । भावे ल्युट् । गन्धमाल्याद्यैः पूज्यादेः संस्कारकरणे । [स्कारे, कृतप्रागुक्ताधिवासे देवादौ च ।

**अधिवासित** त्रि० अधि-वस-णिच्-क्त । गन्धमाल्यादिभिः कृतसं-

**अधिविन्ना** स्त्री० विद्-भावे क्त । अधि उपरि विन्नं विवाहोऽस्याः । कृतसपत्निकायास् अध्यूढायाम् स्त्रियाम् । कृतपूर्वविवाहायाः उपरि पत्या पुनर्विवाहकरणे प्रागूढाया भार्य्याया अधिविन्नत्वम् । "अधिविन्नस्त्रियै देयम्" इति स्मृतिः ।

**अधिश्रयण** न० अधि उपरि श्रयणं पाकार्थं स्थापनं श्रीञ् भावे ल्युट् । चूल्ल्या उपरि स्थापने, तत्पूर्वकपाके च । अधिश्रीयते पच्यतेऽत्र, करणे ल्युट् टित्त्वात् ङीप् । चूल्लाम् (आका) इति, (चूला,) इति च ख्यातायाम् स्त्री० ।

**अधिष्ठातृ** त्रि० अधि+स्था–तृच् षत्वम् । अध्यक्षे, नियमितकार्य-विशेषाकरणेन कृताकृतानेक्षके च ।

**अधिष्ठान** न० अधि-स्था ल्युट् । नियमितकार्य्यविशेषाकरणेन सान्निध्यमात्रेण, स्थितौ, वेदान्तशास्त्रप्रसिद्धे आरोपाधिकरणे च । अधिकरणे ल्युटि । पुरे । करणे ल्युटि । चक्रे, प्रभावे च चक्रेण प्रभावेण च प्रवृत्त्यादिसम्भवात् ।

**अधीत** त्रि० अधि+इङ्–क्त । पठिते । भावे क्त । अध्ययने न० ।

**अधीतिन्** त्रि० अधीतमनेन अधीत+इनि । कृताध्ययने ।

**अधीन** त्रि० अधिगतमिनं प्रभुं गतिस० । आयत्ते धनाधीनइत्यादौ तु धने अधि-इतिवाक्ये समासे अध्युत्तरपदात् ख ।

**अधीर** त्रि० धीरः धैर्य्यान्वितः न०त० । चञ्चले ।

**अधीश** त्रि० अधिक ईशः प्रा०स० । अधिकप्रभौ सार्व्वभौमे ।

**अधीश्वर** त्रि० अधिक ईश्वरः प्रा०स० । सार्व्वभौमे स्त्रियां ङीष् ।

अधीष्ट न० अधि+इष०इष--भावे क्त। सत्कारपूर्व्वकनियोगे ।
कर्म्मणि क्त। सत्कारपूर्व्वकं नियोजिते त्रि०।
अधुना अव्य० अस्मिन् काले इदम्शब्दस्य नि०। सम्प्रतीत्यर्थे।
अधुनातन त्रि० भवार्थे अधुना+ट्युल्। इदानीम्भवे स्त्रियां ङीप्।
अधृष्ट त्रि० धृष–निर्लज्जत्वे क्त न०त०। लज्जाशीले।
अधृष्य त्रि० धृष–अर्हार्थे यत् न०त०। धर्षणायोग्ये अनभिभवनीये।
अधोंऽशुक न० अधर+प्रथमार्थे असि अधरस्य अधादेशश्च। परि-
धानवस्त्रे।
अधोऽक्षज पु० अक्षात् इन्द्रियात् जायते अक्षजं प्रत्यक्षज्ञानम्
जन-ड ५त० अधरमप्राकृकत्वाद्धीनं तद्यस्य ब०। अधर-प्रथमार्थे
असि अधादेशश्च। इन्द्रियायोग्ये, "अधो न क्षीयते जातु यस्मा-
त्तस्मादधोऽक्षज इत्युक्तं"लक्षणे, वा विष्णौ।
अधोजिह्विका स्त्री० अल्पा जिह्वा जिह्विका अल्पार्थे क अधोऽधरा
जिह्विका कर्म०। (आलजिभ) इति ख्यातायाम् तालुस्थजि-
ह्विकायाम्। [ललोके।
अधोभुवन न० अधोऽधरं भुवनं लोकः कर्म०। भूमेरधरे भागे पाता-
अधोमुख त्रि० अधो मुखं यस्य ब०। अवाङ्मुखे, ज्योतिषशास्त्रे
प्रसिद्धेषु नक्षत्रभेदेषु च। यथा "मूलाश्लेषा कृत्तिका च विशाखा
भरणी तथा। मघा पूर्व्वात्रयं चैव अधोमुखगणः स्मृत" इति।
गोजिह्वाख्यवृक्षे स्त्री० टाप्।
अधोलोक पु० अधोऽधरो लोकः कर्म०। भूमेरधस्थपाताले।
अध्यक्ष त्रि० अधिगतोऽक्षं व्यवहारं अत्या०स०। नृपस्य कृतधारणा-
दिव्यवहारेऽधिकृते। अध्यक्ष्णोति व्याप्नोति अधि+अक्ष-अच्।
व्यापके अधिगतं मूलतया अक्षमिन्द्रियम् गति स०। प्रत्यक्ष-
ज्ञाने। अर्श आदित्वात् अच्, तद्विषये त्रि०।
अध्यग्नि अव्य० अग्नौ अग्निसमीपे वा विभक्त्यर्थे सामीप्येऽर्थे वा
अव्ययी०। अग्नौ अग्निसमीपे वा। तत्र स्थाने विवाहादौ
स्त्रीभ्यो दत्ते धनादौ न०। स्मृतिशास्त्रे चास्मिन्नर्थे परिभाषास्य

कृता यथा "विवाहकाले यत् स्त्रीभ्यो दीयते ह्यग्निसन्निधौ। तद-ध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्त्तित"मिति।

**अध्यण्डा** स्त्री० अधिकमण्डं वीजं यस्याः ६ब०। अधिकबीज-वत्यां (भुंइ आमला) इति ख्यातायाम् भूम्यामलक्याम्।

**अध्यधीन** त्रि० अधिकोऽधीनः प्रा०त०। अत्यधीने गर्भदासे च।

**अध्ययन** न० अधि+इङ्-ल्युट्। पठने, गुरुमुखोच्चारणानुसारि-णि उच्चारणे च। अध्ययनञ्चाक्षरमात्रपाठ इति वैदिकाः सार्था-वधारणपर्य्यन्तमिति मीमांसकाः।

**अध्यर्द्ध** त्रि० अधिकमर्द्धं यस्य ब०। स्वार्द्धेन सहिते वस्तुमात्रे।

**अध्यवसाय** पु० अधि+अव+षो घञ्। इदमेवमेवेति विषयपरिच्छेदे निश्चये। स चात्मधर्म्म इति नैयायिकाः। बुद्धिधर्म्म इति सांख्या-दयः। उपात्तविषयाणामिन्द्रियाणां वृत्तौ सत्यां बुद्धेः रजस्तमोऽ-भिभवे सति यः सत्त्वसमुद्रेकः सोऽयमध्यवसाय इतिवृत्तिरिति चाख्यायते इति सांख्यतत्त्वकौमुदीपरिभाषितलक्षणः, कर्त्तव्यमिति योऽयं निश्चयः चित्सान्निध्यात् प्राप्तचैतन्याया बुद्धेः परिणामः सोऽयमध्यवसाय इत्युक्तलक्षणो वा निश्चयः। उत्साहे च।

**अध्यात्म** अव्य० आत्मनि देहे मनसि वा विभक्त्यर्थे अव्ययी०। आत्मा-धिकरणे देहाधिकरणे चित्ताधिकरणे च। तदधिकृत्य विद्या विषये आत्मतत्त्वे, स्वभावोऽध्यात्ममुच्यते इति गीतावचनात् स्वभावे, भावस्य स्वरूपं प्रत्यक्चैतन्यमिति तस्मिन्, परब्रह्मणि च। अतएव अध्यात्मविद्याशब्दादीनामेतद्विषयकविद्यार्थत्वं वेदान्तादौ प्रसिद्धम्।

**अध्यापक** त्रि० अधि+इङ्-णिच्-ण्वुल्। प्रागुक्ताध्ययनकारयितरि, उपाध्याये च। [illegible]ति स्त्रीत्वात् टापि, अध्यापना तस्मिन्नेवार्थे।

**अध्यापन** न० अधि+इङ्-णिच्-भावे ल्युट्। पाठनायाम्। [illegible]

**अध्याय** पु० अधि+इङ्-घञ्। अध्ययने वेदादिशास्त्रस्य एकार्थक-विषयसमाप्तिद्योतके अंशविशेषे, "सर्गोवर्गः परिच्छेदोद्घाताध्या-याङ्कसंग्रहाः। उच्छ्वासः परिवर्त्तश्च पटलः काण्डमेव च। स्थानं प्रकरणञ्चैव पर्व्वोल्लासाह्निकानि च। पुराणादौ परिच्छेदा अनेके

परिकीर्त्तिता" इत्युक्तान्यतमप्रकारे च। [ अधिके च।

अध्यारूढ़ त्रि० अधि+आ-रुह-कर्त्तरि क्त। आरोहणकर्त्तरि

अध्यारोप पु० अधि+आ-रुह-णिच्-पुक् च घञ्। अतस्मिन् तद्बुद्धिरारोपोमिथ्याज्ञानम् किञ्चिदधिष्ठानमधिकृत्य तादृशारोपः अध्यारोपः यथा असर्पभूतां रज्जुमधिकृत्य सर्पारोपः तथैव अजगद्रूपे ब्रह्मणि जगद्रूपारोपः। तादृशे मिथ्याज्ञाने।

अध्यावाहनिक न० अध्यावाहनं पितृगृहात् भर्त्तृगृहागमनतत्काले लब्धं अधि+आ+वह-ल्युट् ततः लब्धार्थे ठन् ठस्येक। "यत् पुनर्लभते नारी नीयमाना हि पैतृकात्। अध्यावाहनिकं नाम स्त्रीधनं परिकीर्त्तितमिति स्मृत्युक्तलक्षणे पितृकुलात् भर्तृकुलगमनकाले तेभ्यः प्राप्ते स्त्रीधने।

अध्याशन न० अधि+आ-अश-ल्युट्। भोजनोपरिभोजने।

अध्यास पु० अधि+अस-घञ्। अतस्मिन् तद्बुद्धौ अध्यारोपे। अधि-आस घञ्। आसने। [ च।

अध्यासित त्रि० अधि+आस-क्त। अधिष्ठिते। णिचि। निवेशिते

अध्याहार पु० अधि+आ+हृ-घञ्। आकाङ्क्षाविषयपदानुसन्धाने, ऊहे, तर्के, अपूर्व्वोत्प्रेक्षणे च।

अध्यूढ़ पु० अधि+वह-क्त। प्रभौ समृद्धे च। आरोहणकर्त्तरि त्रि०। "अध्यध्यूढ़ंसाम गीयते इति" श्रुतिः। अधिउपरि ऊढ़उद्वाहो यस्याः ब०। कृतसपत्निकायां स्त्रियां कृतद्वितीयविवाहस्य प्रागूढ़योषिति स्त्री०।

अध्येषण न० अधि-इष-प्रेरणे ल्युट्। सत्कारपूर्वकमाचार्य्यादेः प्रेरणे, प्रवर्त्तनमात्रे च। युचि टाप् तस्मिन्नेवार्थे स्त्री०।

अध्रुव त्रि० ध्रु-क्त न०त०। चले, विकारवति, अनित्ये, अस्थिरे च।

अध्वग पु० अध्वन्+गम-ड। पथिके, सूर्य्ये, उष्ट्रे च। पथिगामुकमात्रे त्रि०। गङ्गायां स्त्री०।

अध्वगभोग्य पु० अध्वगेन अतिसौलभ्यात् अयत्नलब्धफलत्वाच्च भोग्यं ईत०। (आमड़ा) इति प्रसिद्धे आम्रातकवृक्षे।

**अध्वजा** स्त्री० अध्वनि जायते जन—ड ७त० । (सोना) इति ख्याते स्वर्णपुष्पीवृक्षे ।

**अध्वन्** पु० अधि वतम् अद्—क्वनिप् आदेशः । पथि, अधिकद्वारारोहणे च । ( सर्वभक्षकत्वात् ) काले, हिंसे च । अद्यते खण्डशो भक्ष्यतेऽनेनेति करणे घञ् । अवयवे ।

**अध्वनीन** त्रि० अध्वानमलं गच्छति अध्वन्+ख । पथिके ।

**अध्वन्य** त्रि० अध्वानमलं गच्छति अध्वन्+यत् । पथिके ।

**अध्वर** पु० अध्वानं सत्पथं राति रा+क । यज्ञे । न ध्वरति कुटिला न भवति ध्वृ-अच् न०त० । सावधाने,अष्टवसुमध्ये द्वितीयवसौ च ।

**अध्वरथ** पु० अध्वैव रथो यस्य ब० । पथिप्रवृत्ते दूते । अध्वने हितो पर्य्याप्तो रथो यस्य ब० । पथिगमनोपयुक्ते रथे ।

**अध्वर्यु** पु० अध्वरमिच्छति अध्वर+क्यच्—युच् ततोऽन्त्याकारलोपः । यजुर्वेदज्ञे होमकारिणि ऋत्विजि ।

**अध्वशल्य** पु० अध्वनि शल्यमिवाचरतीति क्विप्+अच् । पथिकानां पादस्फोटादौ शल्यच्छेदकारके (आपाङ्)इति ख्याते अपामार्गवृक्षे ।

**अन** जीवने अदादि०पर० अक०सेट् । अनिति आनीत् ।

**अन** जीवने दिवा० आत्म० अक० सेट् । अन्यते आनिट ।

**अनक्ष** त्रि० नास्ति अक्षं चक्षुः नेत्रादिकमिन्द्रियं वा यस्य ब० । चक्षुःशून्ये चक्षुरादीन्द्रियशून्ये च ।

**अनक्षर** न० अप्रशस्तान्यक्षराणि यत्र ब० । वक्तृवाक्याक्षेपके दोषोद्घोषकवाक्ये, अवाच्ये, निन्दावचने,(गालि)इतिप्रसिद्धे दुष्टवचने च ।

**अनक्षि** पु० अप्रशस्तं मन्दमक्षि न०त० । मन्दनेत्रे । ब० । तद्वति तत्र अनक्ष इत्येव टच् समासान्तः ।

**अनग्नि** पु० नास्ति अग्निः श्रौतः स्मार्त्तो वाऽस्य । श्रौतेन स्मार्त्तेन आहि विधिना अनाहिताग्नौ गृहस्थादौ, सर्वथा अग्निशून्ये प्रव्रजिते च ।

**अनघ** त्रि० नास्ति अघं पापं दुःखं व्यसनं कालुष्यं वा यस्य । पापशून्ये, दुःखहीने, व्यसनशून्ये स्वच्छे च । [अङ्गशून्यमात्रे त्रि० ।

**अनङ्ग** न० नास्ति अङ्गमाकारो यस्य । आकाशे चित्ते । कन्दर्पे पु० ।

**अनङ्गशेखर** पु० क्रमेण लघुगुरुनिवेशवति दण्डकभेदे छन्दोविशेषे।
**अनच्छ** त्रि० न अच्छः निर्मलः न०त०। कलुषे, अप्रसन्ने च।
**अनञ्जन** न० न अज्यते लिप्यते अनृज-कर्मणि ल्युट् न०त०। निः-
सम्बन्धे आकाशे, परब्रह्मणि च। अञ्जनं दोषस्तद्रहिते नारायणे
पु०। तथाभूतवस्तुमात्रे त्रि०।
**अनडुह्** पु०अनः शकटं वहतीति नि०(एड़ा)इति प्रसिद्धे गवि। स्त्रि-
यां गौरे ङीपि अनुडुही अनड्वाहीति च।
**अनध्याय** पु० अध्यायोऽध्ययनमभावार्थे न०त०। अध्ययनाभावे। न
अधीयतेऽस्मिन् काले इति अधिकरणे घञ्, अध्ययनाय निषिद्धे
"चातुर्मास्यद्वितीयायाम्। मन्वादिषु युगादिषु। अष्टकासु च
संक्रान्तौ शयने बोधने हरेः। अनध्यायं प्रकुर्वीत"त्याद्युक्ते काले,
निर्घाते भूमिचलने इत्याद्याकालिकानध्यायकाले च।
**अनन्त** पु० नास्ति अन्तः गुणानां यस्य ब०।"गन्धर्व्वाप्सरसः सिद्धाः
किन्नरोरगचारणाः। नान्तं गुणानां जानन्ति तेनानन्तोऽयमुच्यते"
इत्युक्तलक्षणे विष्णौ, मेघे च। बहुशीर्षकत्वादपरिच्छिन्ने शेषनागे,
तदवतारे बलभद्रे च। अन्तः परिच्छेदः देशतः कालतः वस्तुतश्च
यस्य नास्ति तस्मिन् परब्रह्मणि आकाशे च न०। बहुविस्तारवति
सिन्दुवारवृक्षे पु०। अवधिशून्ये, इयत्ताशून्ये, च वस्तु-
मात्रे त्रि०। [कर्त्तव्ये स्वनाम्ना ख्याते व्रते।
**अनन्तव्रत** न० अनन्तस्य व्रतमुपासनार्थत्वात् ६त०। भाद्रशुक्लचतुर्दश्यां
**अनन्ता** स्त्री० नास्ति अन्तोऽस्या ब०। विशल्यायामोषधौ (अनन्तमूल)
इति ख्याते मूलभेदे, पार्वत्याम्, पृथिव्याम्, दुःस्पर्शायां दुराल-
भायां, दूर्वायां, हरितक्यां, आमलक्यां, गुडूच्याम्, अग्निमन्थ-
वृक्षे, अग्निशिखावृक्षे, श्यामलतायाम्, पिप्पल्यां च।
**अनन्यज** पु० नास्ति अन्यद्यस्मात् सर्ववस्तुभेदानां तदात्मकत्वात्,
विष्णुः तस्मात् जायते जन-ड ५त०। कामदेवे।
**अनन्यवृत्ति** त्रि० न अन्यस्मिन् ध्येयभिन्ने वृत्तिर्यस्य ब०। एकान्त-
चित्ते।

**अनन्वय** त्रि० नास्ति अन्वयो यत्र ब० । अन्वयशून्ये । अर्था-लङ्कारभेदे पु० ।

**अनय** पु० अयः शुभावहो विधिस्तदन्यः न० त० । अशुभदैवे द्यूत-कारिणामपसव्यगमने च । नयो नीतिः नी—अच् न०त० । नया-भावे अनीतौ । ब० । तच्छून्ये त्रि० । [ प्रतिबन्धकशून्ये च ।

**अनर्गल** त्रि० अर्गलं द्वाररोधकस्तम्भः ब० । द्वाररोधकस्तम्भशून्ये,

**अनर्घ** त्रि० अर्घो मूल्यं न० ब० । अमूल्ये ।

**अनर्थ** पु० अर्थः प्रयोजनं विरोधे न० त० । अनिष्टे । ब० । अ-भीष्टरहिते विष्णौ पु० आप्तकामत्वात् । अर्थोऽभिधेयः प्रयोजनं वा नास्ति यस्य ब० । अर्थरहितमात्रे त्रि० ।

**अनर्थक** न० अर्थोऽभिधेयोऽप्राप्तस्ये नञा ब० । उरःप्रभृति० कप्-समासान्तः । समुदायार्थशून्ये प्रलापे, असम्बद्धे वाक्ये च । व्यर्थे त्रि० । [ अभेदे, एकार्थे ।

**अनर्थान्तरम्** न० अन्योऽर्थः अर्थान्तरं मयूर०त० ततः न०त० ।

**अनल** पु० नास्ति अलः पर्य्याप्तिर्यस्य बहुदाह्यदहनेऽपि तृप्तेरभावात् ब० । वह्नौ, अष्टवसुमध्ये पञ्चमे वसौ, अनलदैवतत्वात् कृत्तिका-नक्षत्रे च । (चिता) इति ख्याते चित्रके वृक्षे, पु० तस्य सर्वतः पर्य्याप्तत्वेऽपि पर्य्याप्तेः सीमाभावात्, (भेला) इति ख्याते भल्लातके वृक्षे पित्तनाम्के देहस्थे आयुर्द्धारके धातौ च । अव्ययी० । नला-भावे अव्य० । न० त० । नलभिन्ने । अन-कलच् । षष्टिवर्षमध्य पञ्चाशत्तमं ख्याते वर्षे । [ लतायाम् ।

**अनलप्रभा** स्त्री० अनलस्य प्रभेव प्रभा यस्य ब० । ज्योतिष्मतीनामिकायां

**अनलि** पु० अनितीत्यन् अन+क्विप् अन् अलिर्यत्र ब० । बकवृक्षे तस्य मधुभिर्भ्रमराणां जीवनधारणात् ।

**अनवधानता** स्त्री० अवधीयते मनः संयुज्यते कर्त्तव्यकर्मणि यथास्थितं प्रवर्त्त्यतेऽनेन अव+धा—करणे ल्युट् अवधानं चित्तवृत्तिभेदः त-न्नास्ति यस्य तस्य भावः । प्रमादे । कर्त्तव्येऽकर्त्तव्यताबोधेन ततो-निवृत्तिः, अकर्त्तव्ये कर्त्तव्यताबोधेन तत्र प्रवृत्तिः प्रमादः ।

**अनवरत** त्रि० अव+रम्-भावे क्त अवरतम् तन्नास्ति यस्य ब० । निरन्तरे उत्कृष्टे च । [संस्कारविशेषे स्वनाम्ना प्रसिद्धे ।

**अनवलोभन** न० सीमन्तोन्नयनानन्तरं चतुर्थे मासि कर्त्तव्ये गर्भस्य

**अनवसर** त्रि० अवसरत्यत्र अव+सृ-अच् अवसरः उचितः कालः स नास्ति यस्य ब० । उचितकालविहीने । न०त० । अवसराभावे ।

**अनवस्कर** त्रि० अवस्क्रियते क्षोध्यते अव+कृ-अच् सुडागमः अवस्करो मलः स नास्ति यस्य ब० । निर्मले ।

**अनवस्था** स्त्री० अव+स्था-अङ् अवस्थितिः न०त० । अवस्थाभावे, तर्कदोषविशेषे, उपपाद्यस्य समर्थनाय उपपादकस्यानुसरणं तर्कः यत्र तर्के उपपाद्योपपादकयोर्विश्रान्तिर्नास्ति तादृशतर्कस्यानवस्थादोषः तेन स तर्को न स्यात्तुः ।

**अनवस्थान** न० अव+स्था-ल्युट् न० त० । अवस्थानाभावे । ब० । वायौ पु० । चञ्चलमात्रे त्रि० । [अनन्यत्वे त्रि० ।

**अनशन** अश+ल्युट् न०त० । भक्षणाभावे, उपवासे च । ब० । भो-

**अनस्** न० अनिति शब्दायते अन-असुन् । शकटे । करणे ल्युट् । ओदने । मातरि । स्त्री० ।

**अनसूया** स्त्री० असू-कण्ड्वादित्वात् यक्-अङ् न०त० । असूया गुणेषु दोषारोपस्तदभावे, अत्रिमुनिपत्न्याञ्च । [कोपवाक्ये च ।

**अनाकुल** त्रि० न आकुलः न० त० । अव्यग्रे, एकाग्रे, स्थिरे, अस-

**अनाक्रान्ता** स्त्री० आक्रमितुमयोग्या सर्वतः कण्टकाद्दतत्वात् आ+क्रम-क्त न०त० । कण्टकारिकायां । आक्रान्तभिन्ने त्रि० ।

**अनागत** त्रि० आ+गम-क्त आगतः न०त० । भाविनि, अज्ञाते, अनुपस्थिते, आगमनकर्तृभिन्ने च ।

**अनागतार्त्तवा** स्त्री० ऋतोः स्त्रीपुष्पस्येदं विकाशनम् आर्त्तवम्+ऋतु+अण् न आगतमार्त्तवं यस्याः ब० । स्त्रीधर्मशून्यायां लग्निकायां कन्यायाम् ।

**अनाचार** पु० आ+चर-घञ् अप्राशस्त्येऽभावे वा नञा त० । कदाचारे, आचाराभावे च । ब० । आचारहीने त्रि० ।

**अनातप** पु० आ+तप–अच् न०त०। आतपस्य रौद्रस्याभावे छायायाँ च। ब०। आतपशून्ये लि०।

**अनात्मन्** पु० अतति सातत्येन तिष्ठति अत–मनिम् अप्राप्तस्य भेदार्थे च न०त०। आत्मभिन्ने, अपकृष्टात्मनि देहादौ "अप्राप्तः प्राप्यते योऽयमत्यन्तं त्यज्यतेऽथ वा। जानीयात्तमनात्मानं कुशान्तं वपुरादिकम्" इति प्रतिपादिते च।

**अनादर** पु० आ+दृ–अच् आदरः गौरवहेतुका सम्मानना विरोधे नञ् त०। परिभवे, तिरस्कारे च तस्य आदरविरोधित्वात्। ब०। आदरशून्ये लि०।

**अनादि** पु० आदिः कारणम् पूर्वकालो वा स नास्ति यस्य परमेश्वरे। नास्ति आदिः प्राथमिको यस्मात् ५ ब०। हिरण्यगर्भे पु० तस्यैव सृष्टेः प्रथमोत्पत्तेः। आदिशून्ये लि०।

**अनामन्** न० अननमनः अन–अच् अनं जीवनम् अमयति रुजति अम–कनि। अर्शोरोगे। नामशून्ये मलमासे पु० तस्य वैदिककर्मानर्हतयाऽनामत्वात्। नामशून्ये लि०।

**अनामय** पु० अम–घञ् आमं तापं यात्यनेन या–क आमयो रोगः न० त०। रोगाभावे आरोग्ये। न० ब०। रोगशून्ये लि०।

**अनामा** स्त्री० ब्रह्मणः शिरश्छेदनसाधनतया ग्रहणायोग्यत्वात् नास्ति नाम ग्रहणयोग्यं यस्याः ब० मनन्तत्वात् डाप्। स्वनामप्रसिद्धायाँ मध्यमकनिष्ठयोः मध्यगायामङ्गुल्याम्। स्वार्थे क अनामिकाप्यत्र। तया हि शिवेन ब्रह्मशिरश्छिन्नमिति पुराणे प्रसिद्धम् अतएव तस्यां पवित्रीकरणार्थं पवित्रनामककुशधारणं क्रियते।

**अनायास** पु० आ+यस–घञ् अल्पार्थे न०त०। प्रयत्नाभावे, अल्पप्रयासे, अक्लेशे च। ब०। प्रयत्नशून्ये लि०।

**अनायासकृत** न० अनायासेन अल्पप्रयत्नेन कृतं न० त०। अल्पायासेन साध्ये कार्यादौ।

**अनारत** न० आ+रम–क्त आरतं विरतिः अत्यन्ताभावे न० त०। सन्तते, अविरते अविच्छेदे च। ब०। तद्वति लि०।

अनार्जव पु० ऋजोर्भाव आर्ज्जवं सरलता स्वास्थ्यं नञा ७त० । रोगे । अव्ययी० । ऋजुत्वाभावे अव्य० । ६ब० । कुटिले त्रि० ।

अनार्य्यक(ज) न० । अनार्य्यदेशे आर्य्यावर्त्तादिभिन्ने द्वीपान्तरादौ भव अनार्य्य+क । ध्युगुरुकाष्ठे । जइति पक्षे तस्मिन् जायते जन-ड । अनार्य्यदेशजाते त्रि०। [ख्याते भूनिम्बे इक्षौ ।

अनार्य्यतिक्त पु० अनार्य्यप्रियस्तिक्तः शाक० त० । (चिराता) इति

अनावृत्ति स्त्री० आ+वृत–क्तिन् अभ्यासः आगतिश्च न०त०। अभ्यासाभावे, आगमनाभावे च । ब० । तद्रहिते त्रि० ।

अनावृष्टि स्त्री० आ+ईषत्–वृष क्तिन् न० त० । ईषद्वृष्टेरप्यभावे शस्योपघातकोपद्रवे ईतिभेदे ।

अनाशक पु०। आ सम्यक् यथेच्छम् आशः अशनम् आ+अश–घञ् न०त०। यथेच्छभोगाभावे, “तमेतं ब्राह्मणा विविदिषन्ति वेदानुवचनेन तपसाऽनाशकेनेति” श्रुतिः ।

अनाशिन् पु० न नश्यति नश–णिनि न०त०, न अश्नाति कर्म्मफलं अश णिनि न०त० वा । नाशशून्ये,कर्म्मफलाभोक्तरि च परमेश्वरे

अनाश्वस् त्रि० न+अश–क्वसु नि० । अशनमकृतवति ।

अनास्था स्त्री०आ+स्था–अङ् आस्था आदरः न०त०। अनादरे । ब० । आदररहिते त्रि० ।

अनाहत न० आ+हन–भावे क्त आहतं छेदो भोगो वा न०त० । छेदभोगादिरहिते नवीने वस्त्रे । तन्त्रशास्त्रे प्रसिद्धे हृदयस्थिते द्वादशदलपद्मे “शब्दो ब्रह्ममयः शब्दोऽनाहतो यत्र दृश्यते । अनाहताख्यं तत् पद्मं मुनिभिः परिकीर्त्तितम्”मित्युक्तलक्षणे च अस्मिन् पक्षे च आहतमाघातः करतालाद्यभिघातः तन्नास्ति यस्य तादृशः शब्दे अस्त्यस्मिन् अर्श आदित्वात् अच् । अनाहतशब्देन च परापश्यन्ती मध्यमावैखरीति प्रसिद्धानां वाग्वृत्तीनां मध्ये मध्यमा वाक् कथ्यते तस्याः हृदयपद्मे उत्पन्नत्वात् । ब०। आघातरहिते वस्तुमात्रे त्रि०। [सम्प्रन्थे । परिव्राजके ।

अनिकेत त्रि० नास्ति निकेतः नियमेन वासो यस्य ब० । नियतनिवा-

**अनिमिमेष** पु० नास्ति निमिषः चक्षुःस्पन्दनं यस्य मिष–घञ् कुटादि० न गुणः मिष भ्वादि० घञ्–वा ईब० । चक्षुःस्पन्दनशून्ये देवे मत्स्ये च । निमेषो दृष्टिप्रतिबन्धकस्तच्छून्ये विष्णौ च । न निमिषति चलतीति नि+मिष–क न० त० । काले । क्रियाशून्ये वस्तुमात्रे त्रि० ।

**अनियन्त्रित** त्रि० नि+यन्त्र चु० क्त न० त० । अनियमिते, उच्छृङ्खले च ।

**अनिरुद्ध** पु० न केनापि युद्धेन निरुद्धः नि+रुध–क्त न० त० । कामदेवपुत्रे, उषापतौ, वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्यचतुर्व्यूहस्य परमेश्वरस्य अनिषेध्यस्य अत्यन्तचलस्य चेतसोऽधिष्ठातरि अनिरुद्धाख्ये अंशे च अप्रतिरुद्धे त्रि० ।

**अनिरुद्धपथ** न० निरुद्धः पन्था यत्र ब० । आकाशे तत्र कस्यापि गतिरोधनाभावात् । रुद्धवर्त्मभिन्ने त्रि० ।

**अनिर्देश्य** त्रि० निर्देश्यं जातिगुणक्रियासंज्ञाभिर्निर्देष्टुमशक्यम् निर्+दिश्–शक्यार्थे ण्यत् न० त० । निर्विशेषे निर्धर्मके परमात्मनि तस्य जातिगुणाद्यभावेन इदं तदिति निर्देशायोग्यत्वात् ।

**अनिर्वचनीय** पु० निर्वचनं निरुक्तिः लक्षणादिना ज्ञापनं तदगोचरतया निर्वक्तुमशक्ये वियदादौ, परात्मनि च ।

**अनिल** पु० अनित्यनेन अन+इलच् । वायौ, तेनैव सर्व्वेषां प्राणधारणात् तद्देवताके स्वातिनक्षत्रे, "वातः पञ्चाशदूनका" इत्युक्तगणदेवताभेदे, अष्टवसुमध्ये पञ्चमे वसौ च ।

**अनिलघ्नक** पु० अनिलं वातरोगं हन्ति हन्–क ततः प्राशस्त्ये क । (बयड़ा) इतिख्याते वृक्षे तत्फलस्य वातनाशकत्वात् ।

**अनिलसख** पु० अनिलस्य वायोः सखा टच् । वह्नौ ।

**अनिलान्तक** पु० अनिलो वातरोगस्तस्यान्तकः अन्तं करोतीति अन्त+णिच् ण्वुल् । (जीयापुति) इतिख्याते वृक्षे ।

**अनिलामय** पु० अनिलकृत आमयः शाक० त० । वातरोगे ।

**अनिवार** त्रि० नास्ति निवारो निवारणं यस्य अविच्छेदे, सतते, अनिवार्य्ये च ।

**अनिश** त्रि० निशा चेष्टाव्याघातः सा नास्ति यस्य ब० । अविरते, निरन्तरे, सदाभवे वस्तुनि, रात्रिवर्ज्जिते च ।

**अनिष्ट** त्रि० इष+क्त विरोधे नञा त० इष्टस्य सुखादेर्विरोधिनि प्रतिकूलवेदनीये दुःखे, तत्साधने, पापे, विपादौ, अपकारे च । नागबलायां स्त्री० ।

**अनीक** न० अनित्यनेन अन-ईकन् । सैन्ये, तस्य हि जीवनरक्षकत्वात् । न नीयते अपसार्य्यतेऽस्मात् । नी-क्विप् ब० कप् ह्रस्वाभावः । युद्धे, ततोहि प्रायोमरणाद्यापसारणम् ।

**अनीकस्थ** पु० अनीके युद्धे तिष्ठति स्था-क । युद्धगते सैन्ये ।

**अनीकिनी** स्त्री० अनीकं युद्धं प्रयोजनतया अस्त्यस्याः अनीक+इनि । सेनायाम्, हस्त्यादिसंख्याविशेषवत्यां सेनायाञ्च तत्संख्या च हस्तिनः २१८७ । रथा २१८७ । अश्वाः ६५६१ । पदातयः १०९३५ समुदिताः २१८७० ।

**अनीश** पु० नास्ति ईशो नियन्ता यस्य ब० । सर्वनियन्तरि विष्णौ । न०त० । ईश्वरभिन्ने स्वामिभिन्ने च त्रि० ।

**अनीह** त्रि० ईह-अङ् न०ब० । स्पृहाशून्ये निश्चेष्टे च ।

**अनु** अव्य० अन-उ । सहार्थे, पश्चादर्थे, सादृश्ये, लक्षणे, हीने, व्याप्तौ, कश्चित्प्रकारप्राप्तज्ञापने, भागे, अनुक्रमे, आयामे, समीपे च ।

**अनुक** त्रि० अनुकामयते अनु+कम-ड । कामनावति ।

**अनुकम्** अव्य० अनुकामयते अनु-कम् क्विप् । वितर्के ।

**अनुकम्पा** स्त्री० अनु+कम्प-अ । दयायाम्, किञ्चिच्चलने च ।

**अनुकरण** न० सादृश्ये-अनु+कृ-ल्युट् । अनुकरणे । तच्च देशभाषावयवादिभिः सदृशीकरणम् । अनुक्रियतेऽनेनेति करणे ल्युट् । सदृशीकरणसाधने । यथा पटत्प्रभृति शब्दाः अव्यक्तशब्दस्यानुकरणानि ।

**अनुकर्ष** ( ण ) पु० अनुकृष्यते स्वसंबद्धेन चक्रेण अनु+कृष-घञ् । रथाधःस्थिते चक्रोपरिबद्धे काष्ठे, पूर्वसूत्रोपात्तपदादेरुत्तरत्रान्वयार्थमाकर्षणे च । कर्त्तरि ल्यौ नान्तोऽप्यत्रार्थे ।

अनुकल्प पु० कल्प्यते विधीयते इति क्लप–णिच्–अच् कल्पोविहितः अनु हीनः कल्पो मुख्यकल्पादधमः प्रा०स०। गौणकल्पे, प्रतिनिधौ च। यथा मध्वभावे गुडः।

अनुकामीन त्रि० कामस्य अभिलाषस्य सदृशमनुकामं सादृश्येऽव्ययी० ततः–गच्छतीत्यर्थे ख। यथेष्टगमनशीले।

अनुकार पु० अनु+कृ–घञ्। देशभाषादिभिः सदृशीकरणे।

अनुकूल त्रि० कूलमावरणं तस्य हेतेनानुबन्धमिति यावत् अनुगतस्तं अत्या०स०। सहचरे, सहाये, स्वपक्षपातिनि, अलङ्कारशास्त्रप्रसिद्धे नायकभेदे च। सा० ३य प०।

अनुक्रम पु० अनु+क्रम–घञ् न वृद्धिः। परिपाट्याम्। आनुपूर्व्ये अव्ययी०। यथाक्रमे अव्य०।

अनुक्रमणिका स्त्री० अनुक्रम्यते यथोत्तरं परिपाट्या आरभ्यतेऽनया अनु+क्रम–करणे ल्युट् स्त्रीत्वात् ङीप् स्वार्थे के ह्रस्वः। अनुक्रमज्ञापके, ग्रन्थाद्यंशे वक्तव्यस्य, ग्रन्थशेषे च उक्तार्थसमुदायस्य संग्राहके पुराणादेरंशविशेषे। स्वार्थे काभावेऽनुक्रमणीत्यपि, तत्रैव।

अनुक्रोश पु० अनुक्रोशत्यनेन क्रुश आह्वाने रोदने च घञ्। दयायाम्। अनुगतः क्रोशं गतिस०। प्राप्तक्रोशके त्रि०। [च।

अनुग त्रि० अनु+गम–ड। पश्चाद्गामिनि, सहचरे, आनुलोम्येन गते

अनुगत त्रि० अनु+गम–क्त। पश्चाद्गते, सहगते, आनुलोम्येन गते, सामान्यधर्मप्रकारेण संगृहीतेऽखिले विशेषे च।

अनुगम पु० अनु+गम–घञ् वृद्ध्यभावः। पश्चाद्गमने, सहायीभवने, आनुलोम्यकरणे, सामान्यधर्मेण सर्वेषां विशेषरूपाणां संग्रहे च।

अनुगुण त्रि० अनुकूलो गुणो यस्य। अनुकूले अनुगते च।

अनुग्रह पु० अनु+ग्रह–अप्। अभीष्टसम्पादनेच्छारूपे प्रसादे, आनुकूल्ये, अनिष्टनिवारणपूर्वकेष्टसाधनेच्छारूपायामभ्युपपत्तौ, "विद्धपोन्मत्तनिः स्वानामनुग्रहपूर्वकं हि यत्। पूरणं दानमानाभ्यामनुग्रह उदाहृत" इत्युक्तलक्षणे दरिद्रादिपोषणे च। ग्रहो ग्रहणं

सूर्यादिपश्चो वा अनुगतस्तम् गतिस० । पश्चादनुगते सूर्यादिपश्चादनुगते च त्रि० ।

अनुचर त्रि० अनु+चर–ट । सहचरे, पश्चाद्गामिनि, दासादौ, स्त्रियां ङीप् । अनुगतश्चरं द्रुतं गतिस० । द्रुतानुगे त्रि० ।

अनुज त्रि० अनु पश्चात् जायते जन–ड । पश्चाज्जाते सहोदरे भ्रातरि । तादृश्यां भगिन्यां स्त्री० ।

अनुजीविन् पु० अनुजीवितुमाश्रयितुं शीलमस्य अनु+जीव–णिनि । सेवके, आश्रिते च ।

अनुज्ञा स्त्री० अनु+ज्ञा–अङ् । स्वयं प्रवृत्तस्यान्यस्य प्रवृत्तिविघाताकरणेन प्रवर्त्तनारूपायामनुमतौ ।

अनुतर्ष न० अनुतृष्यतेऽनेन करणे घञ् । सुरापानपात्रे, मद्ये, मद्यपाने च । भावे घञ् । अभिलाषे पानेच्छायाम् ।

अनुताप पु० अनु+तप–घञ् । इदमनुचितं कृतमिति स्वकृतवस्तुनो दुःखजनकतया ज्ञानेन पश्चात्तापे ।

अनुत्तर त्रि० उत्तर उत्तमः नञ् ५ब० । अत्यन्तश्रेष्ठे । ६ब० । उत्तरवाक्यरहिते । न०त० । उत्तरदिग्भिन्ने स्त्री० ।

अनुदात्त पु० उच्चै रात्तः उच्चारित उदात्तः न०त० । वर्णोच्चारणस्थानेषु कण्ठादिषु नीचोच्चारणप्रयत्नविशेषे स्वरभेदे ।

अनुदित पु० उत्+इण्–क्त ईषदर्थे न०त० । किरणमात्रेण ईषदुदितसूर्ये प्रविरलतारके काले । उदितेऽनुदिते चैवेति मनुः ।

अनुद्रुत त्रि० अनु+द्रु–क्त । पश्चाद्गते, "अर्द्धमात्रं द्रुतं ज्ञेयं द्रुतार्द्धञ्चाप्यनुद्रुतमित्युक्तलक्षणे वादनविषये कालविशेषे च ।

अनुधावन न० अनु+धाव–ल्युट् । पश्चाद्गमने, तत्त्वनिश्चयायानुसरणे, अनुसन्धाने च ।

अनुध्या स्त्री० अनु+ध्यै–अङ् । अनुचिन्तने, अनुग्रहे, आसक्तौ च ।

अनुनय पु० अनु+नी–अच् । विनये, प्रणिपाते, प्रार्थने, सान्त्वने च ।

अनुनासिक पु० अनुगता नासां अत्या०स० ततोचार्य्यमाणार्थे ठ । नासानुगतेन मुखेनोच्चार्य्यमाणेषु वर्ण्यान्त्येषु ङञादिषु ।

**अनुपद्** अव्य० पदस्य पश्चात् अव्ययी० । पश्चाद्गमने, अव्यवधाने च । अनुगतं पदम् अत्या स०। पश्चाद्गामिनि त्रि० ।

**अनुपदिन्** त्रि०अनुपदम् अन्वेष्टा अनुपद+अन्वेष्टरीत्यर्थे इनि । अन्वेषणकर्त्तरि । गवामेवान्वेष्टरीत्यन्ये । स्त्रियां ङीप् ।

**अनुपदीना** स्त्री० अनु पदस्य आयामतुल्यायामः आयामेऽव्ययी० अनुपदं बद्धे त्यर्थे ख । पादतुल्यायामवत्यां पादरक्षायां पादुकायाम् (मोजा) इत्यादि- ख्यातायाम् । [ भावे, असङ्गतौ च ।

**अनुपपत्तिः** स्त्री० उप+पद–क्तिन् । उपपत्तिर्युक्तिः न०त० । युक्त्य-

**अनुपम** त्रि० उप+मा–अङ् न०त० । उपमाशून्ये, सादृश्यरहिते उत्तमे च । कुमुदाख्यस्य दिग्गजस्य योषिति स्त्री० ।

**अनुपरत** त्रि० उप+रम–क्त न० त० । अविरते अनिवृत्ते च ।

**अनुपलब्धि** स्त्री० उप+लभ–क्तिन् न०त०। लाभाभावे, प्रत्यक्षाभावे च । तत्र च कारणानि "अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् । सौक्ष्म्याद्व्यवधानादभिभवात् समानाभिहारादिति सांख्यकारिकोक्तानि ।

**अनुपसंहारिन्** पु० न्यायमते परिभाषिते दुष्टहेतुविशेषे । स च दृष्टान्तरहितोऽन्वयी व्यतिरेकी वा दुष्टहेतुः । यथासर्वमनित्यं प्रमेयत्वादित्यनुमाने सर्वस्यापि पक्षत्वेन अन्वये दृष्टान्तो नास्ति नापि व्यतिरेके दृष्टान्तः सर्व्वस्यापि प्रमेयतया तदभावस्य कुत्राप्यसिद्धेः ।

**अनुपाकृत** त्रि० उप+आ+कृ–क्त न०त० । मन्त्रैर्यज्ञे पशोरर्चनादिसंस्कार उपाकरणं तद्रहिते ।

**अनुपात** पु०अनु+पत–करणे घञ् । अङ्कशास्त्रे प्रसिद्धे त्रैराशिके, पूर्वाङ्कपातानुसारेणापराङ्कपातने च । भावे घञि, पश्चात्पतने ।

**अनुपातक** न०अनुपातयति स्वानुरूपं नरकं गमयति अनु+पत–णिच्–ण्वुल् । ब्रह्महत्यादिमहापातकसदृशे वेदनिन्दादिजन्ये पापविशेषे । तानि च पञ्चत्रिंशत्प्रकारस्तेतद्भवत्वेन तावत्संख्यातानि प्राय० वि० अनुपा० प्र० ।

**अनुपान** न०अनु भेषजेन सह पश्चाद्वा पीयते कर्मणि ल्युट् । औषध-

भाऽङ्गे तेन सह, तत्प्रवाहा येशे मधुगुड़ादौ पानस्य जलस्य समीपे अव्ययी० । जलसामीप्ये अव्य० ।

**अनुपूर्व्व** पु० अनुगतं पूर्वं परिपाटीं गतिस० । यथाक्रमे ।

**अनुप्रासः** पु० अनुगतः रसाद्यनुगुणं प्रकृष्ट मासं वर्णन्यासं समरणेर-चनां समवर्णैश्चारणं वा अनु+प्र-अस् घञ् । अलङ्कारे प्रसिद्धे स्वरवैषम्येऽपि समवर्णानां रचनायाम् ।

**अनुप्लव** पु० अनु+प्लु—अच् सहाये, अनुचरे, दासे च ।

**अनुबन्ध** पु० अनु+बन्ध—यथायथं भावादौ घञ् । बन्धने, इच्छापूर्व-कदोषकरणे, वातपित्तादिदोषाणामप्राधान्ये, प्रकृतिप्रत्ययागमा-देशानां गुणवृद्ध्यादिकार्य्यविशेषार्थमनुबन्धनीये परिनिष्पन्नपदकालेषु अश्रूयमाणतया नश्वरे इत्संज्ञया कृतलोपे वर्णादौ, मुख्यानुयायिनि अप्रधाने,प्रकृतस्यानुवर्त्तने,संबन्धे, पाशाङ्काव्यशुभपरिणामे, शास्त्र-स्यादौ वक्तव्येषु, अधिकारिविषयप्रयोजनसम्बन्धेषु लेशे,फलसाधने च

**अनुबन्धिन्** त्रि० अनुबध्नाति अनु+बन्ध—णिनि । सहचरे, अनुचरे-अनुरोधिनि, व्यापके च । स्त्रियां ङीप् ।

**अनुबन्धी** स्त्री० अनुबध्यतेऽतिश्वासेन व्याप्रियतेऽनया अनु+बन्ध—घञ् गौरा० ङीष् । हिक्कारोगे, तृष्णायाञ्च ।

**अनुबन्ध्य** त्रि० बधार्थे बन्धोऽनुबन्धः यत् । बधार्थं बद्धे गवादौ ।

**अनुबोध** पु० अनु+बुध—णिच् घञ् । पूर्वलिप्तचन्दनादेर्गन्धोद्दीपनार्थं पुनर्मर्द्दनादौ पश्चाद्बोधे च ।

**अनुभव** पु० अनु+भू—अप् । स्मृतिभिन्ने ज्ञाने ।

**अनुभाव** पु० अनुभावयति उद्बोधयत्यनेन अनु+भू—णिच्—करणे-घञ् । कोषदण्डादिजाते राज्ञां तेजोविशेषे । सामर्थ्ये च । क-र्त्तरि अचि । अलङ्कारशास्त्रप्रसिद्धे रसव्यञ्जके । "भावं मनोगतं साक्षात् स्वगतं व्यञ्जयन्ति ये । तेऽनुभावा इति ख्याताः" इत्युक्त-लक्षणे भ्रूभङ्गादौ । [ इच्छार्थमनुज्ञाते ।

**अनुमत** त्रि० अनु+मन—क्त । स्वयंप्रवृत्ते इदं क्रियतामिति प्रोत्सा-

**अनुमति** स्त्री० अनु+मन—क्तिन् । अनुमतौ अनुज्ञायाम् । अनुमन्यते

कलाहीनत्वेऽपि पूर्णिमाविहितयागादिकरणायानुमन्यतेऽस्याम् अधिकरणे क्तिन् । कलाहीनचन्द्रवत्यां शुक्लचतुर्दशीयुतपूर्णिमातिथौ ।

**अनुमन्तृ** त्रि० अनु+मन–तृच् । स्वयमुदासीने कार्य्यादौ प्रवृत्तस्यान्यस्योत्साहवर्द्धनमनुज्ञाकर्त्तरि ।

**अनुमरण** न० अनु+मृङ–ल्युट् । भर्त्तरि मृते तद्देहाप्राप्तौ तत्पादुकादिग्रहणेन पृथक्चितारोहणेन स्त्रीणां देहत्यागे ।

**अनुमान** न०अनु+मि–मा–वा भावादौ ल्युट् । व्याप्तस्य दर्शनेन व्यापकस्य निश्चये, यथा वह्निर्धूमस्य व्यापक इति धूमस्तस्य व्याप्य इत्येवं तयोः भूयः सहचारं पाकस्थानादौ दृष्ट्वा पश्चात् पर्वतादौ उद्धूयमानशिखस्य धूमस्य दर्शने तत्र वह्निरस्तीति निश्चीयते । करणे ल्युटि । तद्धेतुभूते धूमादौ । श्रुतेरेव स्वतः प्रामाण्यं, यत्र श्रुतिः साक्षात् न श्रूयते तत्र स्मृतिवाक्यात् श्रुतिवाक्यमनुमीयते इति श्रुत्यनुमापकं स्मृतिवाक्यमप्यनुमानपदेनाभिधीयते इति मीमांसकाः ।

**अनुमिति** स्त्री०अनु+मि–मा–वा क्तिन् । प्राग्दर्शिते भावसाधनानुमानशब्दस्यार्थे ।

**अनुमोद** पु० अनु+मुद–घञ् । प्रकृतकर्म्मणि प्रवृत्तिविधाताकरणेनान्यप्रोत्साहानुकूलव्यापारे,त्वया यत् कृतं तन्मेऽनुमतमित्याद्यभिलापसाधने ।

[ज्यादिषु पञ्चसु यागेषु ।

**अनुयाज** पु० अनु+यज–घञ् कुत्वाभावः । दर्शपौर्णमासाङ्गे प्रया-

**अनुयायिन्** त्रि० अनु+या–णिनि । सदृशे,अनुचरे, दासादौ, पश्चाद्गामिनि च । स्त्रियां ङीप् ।

**अनुयोग** पु०अनुयुज्यते कथनाय नियुज्यते अनु+युज–घञ् । प्रश्ने । सति हि प्रश्ने, पृष्टः कथनाय प्रवर्त्तते ।

**अनुराग** पु० अनु+रन्ज+घञ् । अत्यन्तप्रीतौ, स्नेहे च । अनुरूपो रागः प्रा० स० । अतिरागगुणे त्रि० ।

[ दशनक्षत्रे ।

**अनुराधा** पु० अनुगता राधां विशाखां अत्या०स०। स्वनामप्रसिद्धे सप्त-

**अनुरूप** अव्य० रूपस्य सादृश्ये योग्यत्वे वा अव्ययी० । सादृश्ये योग्यतायाञ्च । अर्शआद्यचि । सदृशे, योग्ये च त्रि० ।

**अनुरोध** पु० अनु+रुध–घञ् । अनुसरणे, आराध्यादेरिष्टसम्पादने-च्छायाञ्च ।

**अनुलाप** पु० अनु वारंवारं लप्यते लप–घञ् । मुहुर्भाषणे ।

**अनुलेप** पु० अनु+लिप–भावे घञ् । चन्दनादिमर्द्दने कर्मणि घञि । अनुलिप्यमाने चन्दनादौ ।

**अनुलोम** पु० अनु+लोमन्+यथाक्रमे अव्ययी० अच् । यथाक्रमे ।

**अनुलोमज** पु० अनुलोमेन यथाक्रमेण जातः जन–ड । परिणी-तक्षत्रियादिस्त्रीषु विप्रादिभ्य उत्कृष्टेभ्यो वर्णेभ्यो जाते मूर्द्धाभिषि-क्तादौ संकीर्णवर्णे ।

**अनुवर्त्तन** प्र०अनुगतो वर्त्तनमाराध्यादेरिष्टसम्पादनं अत्या०स० अनु+वृत–ल्युट् । अनुरोधे, आराध्यादेरिष्टसम्पादने च ।

**अनुवाक** पु० अनु+उच्यते–वच–घञ् कुत्वम् । गानशून्ये ऋग्विशेषे, ऋग्यजुःसमूहे, वेदांशे ग्रन्थनाम्ना ख्याते च ।

**अनुवाक्या** स्त्री०अनु+वच–ण्यत् कुत्वम् । ऋत्विग्भेदः प्रशास्ता तत्पा-ठ्यायां देवताह्वानसाधने ऋचि ।

**अनुवाद** पु० अनु+वद–घञ् । ज्ञातार्थस्य प्रतिपादने, सिद्धस्योपन्यासे, प्रमाणान्तरावगतार्थस्य शब्देनोक्तौ,कथितस्य भाषान्तरेण कथने च ।

**अनुवासन** न० अनु+चु०–वस–ल्युट् । धूपादिना सौरभान्वितकरणे, स्नेहयुतकरणे च ।

**अनुवृत्त** त्रि० अनु+वृत–क्त । व्याप्ते, पालिते, अनुगते, प्रीतिविशिष्टे, अनुवृत्तिमति च ।

**अनुवृत्ति** स्त्री० अनु+वृत– क्तिन् । प्रवाहरूपेणानुगतौ, अनुरोधे, सेवायाम्, आनुकूल्ये, व्याकरणशास्त्रे प्रसिद्धे पूर्वसूत्रोपात्तपदा-दीनामुत्तरत्र सूत्रेष्वनुवर्त्तनरूपेऽध्याहारे च ।

**अनुव्रज्या** स्त्री० अनु+व्रज–क्यप् । अनुसरणादिरूपे सेवने ।

**अनुशय** पु० अनु+शीङ्–अच् । अत्यन्तद्वेषे, पश्चात्तापे, पूर्ववैरे च । अनुगतः शयं हस्तं गतिस० । हस्तानुगते त्रि० ।

**अनुशयिन्** पु० अनु+शीङ्–इनि । यागकर्म्मचयं चन्द्रलोके स्थित्वा

शावशेषे एव कर्म्मणि पश्चात्तापान्विते भूमिलोके जन्मग्रहणायागन्तु' प्रवृत्ते जीवे। पश्चात्तापयुते त्रि०।

**अनुशासन** न० अनु+शास–ल्युट्। शासने, आज्ञायाम्, उपदेशे, नियोगकरणे च। शिष्यते आख्यायते लक्षणादिनेति करणे ल्युटि। व्युत्पादनस्य अतथाभूतेभ्यो विशेष्य अनुशिष्याणां बोधनम् यथा व्याकरणे साधुशब्दानामसाधुभ्यो विविच्य प्रबोधनम्।

**अनुशीलन** न० अनु+चु०–शील–ल्युट्। मुहुरालोचने, पुनःपुनरभ्यासे च। [शोचना तत्रैवार्थे स्त्री।

**अनुशोचन** न० अनु+शुच–ल्युट्। शोके। स्वार्थे णिचि युचि। अनु-

**अनुश्रव** पु० अनुश्रूयते गुरुपरम्परयोच्चारणादनु कथ्यते, श्रूयते एव न तु केनापि क्रियते वा अनु+श्रु–अप्। वेदे, तस्य श्रवणमात्रतया एव सर्वसम्मतत्वात्।

**अनुषङ्ग** पु० अनु+सन्ज–घञ् षत्वम्। दयायाम्, आसक्तौ, एकत्र श्रुतपदस्य अन्यत्रान्वयार्थमनुवृत्तौ, अन्योद्देशेन प्रवृत्तौ तत्क्रियानान्तरीयकतयान्यस्य सिद्धिरूपे अतिप्रसक्तप्रसिद्धे प्रसङ्गे च।

**अनुष्टुभ्** स्त्री० अनु+स्तुभ–क्विप् षत्वम्। सरस्वत्याम्, अष्टाक्षरपादके छन्दोभेदे च।

**अनुष्ठान** न० अनु+स्था–भावे ल्युट् षत्वम्। विहितकर्म्मादिकरणे।

**अनुष्ण** त्रि० उष्णः दक्षः न० त०। अलसे, उष्णभिन्ने शीते च। उत्पले न०। अलसोहि शीतबाधाभावेऽपि शीतबाधामभिनयन् कर्त्तव्यकर्म्मणि जड इव भवति दक्षस्तु शीतेऽपि तदगणयित्वा कर्त्तव्यकरणाय अजड इव सन् व्याप्रियते इति तयोरुष्णानुष्णता। अल्पार्थे कनि अनुष्णकोऽपि। [इत्त्वम्। नीलदूर्वायाम्।

**अनुष्णवल्लिका** स्त्री० अनुष्णा शीतला वल्लीव इवार्थे क। टापि अत

**अनुसन्धान** न० अनु+सम्–धाञ्–ल्युट्। अन्वेषणे, चिन्तने च।

**अनुसरण** न० अनु+सृ–ल्युट्। अनुगमने, सदृशीकरणे। भावे घञि अनुसारोऽप्यत्र।

**अनुस्यूत** त्रि० अनु+षिव–क्त ऊट्। ग्रथिते, सततसंबन्धे च।

**अनुस्वार** पु० अनु+स्वृ—घञ् उदात्तादिस्वरवत्त्वात् स्वरवर्णा एव स्वाराः अनुगतः स्वारान् अत्या०स०। स्वरानन्तरेण उच्चार्य्यमाणे बिन्दुरेखया व्यज्यमानेऽनुनासिके वर्णभेदे अनुस्वारो विसर्गश्चेत्यच्कस्य आश्रयस्थानभागिन इत्युक्तेः तस्य तथात्वम्।

**अनुहरण** पु० अनु+हृ—ल्युट्। वेशभाषाचेष्टादिना सदृशीकरणे, सादृश्यधर्म्माविष्करणे च। [ च न०।

**अनूक** पु० अनु+उच— समवाये क कुत्वं मि०। गतजन्मनि कुले शीले

**अनूचान** पु० अनु+वच—कान मि०। शिक्षादिषड्ङ्गसहितवेदाध्ययनकारिणि, वेदार्थानुवचनसमर्थे च।

**अनून** त्रि० ऊन—क न० त०। परिपूर्णे, समग्रे, अहीने च। नूनं निश्चितं न० त०। अनिश्चिते।

**अनूप** त्रि० अनुगता आपो यत्र ७ब० अच् स० आत ऊत्त्वम्। जलप्राये देशे, तत्स्थले सर्वदाशालिनि महिषे, "बह्वम्बुर्बहुवृक्षश्च वातश्लेष्मामयान्वितः। देशोऽनूप इति ख्यात" इत्युक्ते देशविशेषे च पु०। अनूपसर इति प्रसिद्धे देशे वा।

**अनूपज** न० अनूपे जलप्राये देशे जायते जन—ड ७त०। (आदा) इति ख्याते आर्द्रके तस्य जलप्रायोद्भवत्वात्। तत्स्थानजातमात्रे त्रि०।

**अनूरु** पु० न ऊरू यस्य ब०। सूर्य्यसारथौ अरुणे विनताज्येष्ठपुत्रे। तस्य अपूर्ण एव गर्भे मात्रा अण्डस्य स्फोटनादूरुप्रभृत्यङ्गविकलत्वं पुराणे प्रसिद्धम्।

**अनूरुसारथि** पु० अनूरुः सारथिः रथनियन्ता यस्य। सूर्य्ये।

**अनृच** पु० नास्ति अभ्यस्ततया ऋक् यस्य अच् समासान्तः। ऋक्शून्ये अनुपनीते बालके।

**अनृत** न० ऋतं सत्यं न० त०। सत्यभिन्ने अयथार्थे। अन्ततत्त्वव्यवहारस्तु प्रायेण कथने एव लोके दृश्यते क्वचित् वस्तुन्यपि यथा रङ्गे रजतादिकं, तत्र रजतमिदमिति ज्ञानस्य। तद्वति त्रि०। ७ब०। वाणिज्ये न० तत्रान्ततबाहुल्यात्।

अनेक त्रि० एक+न०त० । एकभिन्नेषु बहुषु । नञ् तत्पुरुषे उत्तरपदानुसारेणैव लिङ्गवचनतानियमेऽपि अत्र बहुवचनान्ततैव तेन "पतन्त्यनेके जलधेरिवोर्मयः" इति माघः। [ हस्तिनि ।

अनेकप पु० अनेकाभ्यां मुखशुण्डाभ्यां द्वाभ्यां पिबति पा—क । हस्ति

अनेकरूप त्रि० अनेकानि बहूनि रूपाण्यस्य ब० । चित्ररूपे ।

अनेकान्त त्रि० न एकएवान्तः परिच्छेदो यस्य ब० । अनियतरूपे, अनतिशये च ।। [ २त० । बौद्धभेदे ।

अनेकान्तवादिन् पु० अस्ति नास्ति वेत्येकान्तं न वदति वद—णिनि

अनेडमूक त्रि० एडो बधिरो मूको वाक्शक्तिरहितश्च नास्ति यस्मात् ५ब० ।(काला, बोवा)इति ख्याते श्रवणवचनशक्तिरहिते, शठे च ।

अनेहस् पु० न हन्यते हन—असि प्रकृतेरेहादेशः । काले ।

अनैकान्तिक पु० एकान्तं नियतं व्याप्नोति एकान्त+ठक् न० त० । व्यभिचारिणि दुष्टे हेतौ । यथा धूमसाधने वह्निर्हेतुः न एकान्तो नियमो व्याप्तिर्यत्र ७ब० । अनेकान्तोऽप्यत्रार्थे ।

अनोऽकह पु० अनसः शकटस्याकं गतिं हन्ति हन—ड । वृषे ।

अन्त न० अम—तन् । स्वरूपे, स्वभावे च । शेषे पु०न० । नाशे, प्रान्ते, सीमायां, निश्चये, अवयवे च पु० । निकटे, मनोहरे च त्रि० ।

अन्तःकरण न० कृ—करणे ल्युट् अन्तरभ्यन्तरं तद्वृत्तिपदार्थानां ज्ञानादीनां वा करणं कर्म० ६त० वा ज्ञानसुखादिसाधने आभ्यन्तरे इन्द्रिये मनोबुद्धिचित्तादिपदाभिलप्यमाने । अवान्तरभेदस्तु वाचस्पत्ये । [ वक्रान्तःकरणे त्रि० ।

अन्तःकुटिल पु० अन्तर्मध्ये कुटिलः । वक्राकारमध्यावयववति शङ्खे ।

अन्तःपुर न० अन्तराभ्यन्तरं पुरं गृहं कर्म० । (अन्दर) इति प्रसिद्धे राज्ञां स्त्रीणां स्थानयोग्ये गृहे । तत्र स्थितत्वात् राजमहिलायामपि । पुरशब्दसमासे अचि स्त्रीत्वात् ङीप् अन्तःपुरीत्यपि ।

अन्तःसत्वा स्त्री०अन्तरभ्यन्तरे गर्भे सत्त्वं प्राणी यस्या ब० । गर्भिण्यां स्त्रियाम् । [ हस्तिनि ।

अन्तःस्वेद पु० अन्तः स्वेदो मदस्यन्दनं घर्मजलं यस्य ब० । मदस्राविणि

**अन्तक** पु० अन्तं करोति अन्त+तत्करोतीत्यर्थे णि-ण्वुल् । यमे । नाशकारके त्रि० ।

**अन्तकर** त्रि० अन्तं नाशं करोति कृ-ट उप०स० । नाशकारके ।

**अन्तग** त्रि० अन्तमवसानं गच्छति गम-ड । पारगामिनि अवसानं गते च । क्त अन्तगत इत्यपि तत्रार्थे ।

**अन्तर्** अव्य० अम्-तुडागमश्च । मध्ये, प्राप्ते, स्वीकारे चित्ते च ।

**अन्तर** न० अन्तं राति ददाति रा-क । अवकाशे, अवधौ, परिधानांशुके अन्तर्द्धाने, भेदे, परस्परवैलक्षण्ये विशेषे, तदर्थे, छिद्रे, आत्मीये, विनार्थे, बहिरर्थे व्यवधाने, मध्ये सदृशे च । उदाहरणानि तु वाचस्पत्ये ।

**अन्तरङ्ग** त्रि०अन्तर्मध्ये ऽङ्गानि यस्य । आत्मीये, व्याकरणशास्त्रे प्रकृतिप्रत्ययकार्य्यमध्ये प्रकृत्याश्रिते कार्य्ये च ।

**अन्तरा** अव्य० अन्तरेति इण्-डा । निकटे, मध्ये, विनार्थे च ।

**अन्तरात्मा** पु० अन्तर्वर्त्ती आत्मा अन्तः करणे, सर्व्वान्तर्यामिनि परमेश्वरे, अन्तःकरणाभिमानिनि जीवे च । [ धानकारके त्रि० ।

**अन्तराय** पु० अन्तरं व्यवधानमयते अय-अच् । विघ्ने । व्यव-

**अन्तराल** न० अन्तरं मध्यसीमामाराति गृह्णाति आ+रा-क रस्य लत्वम् । मध्ये, अभ्यन्तरे च । स्वार्थे अणि आन्तरालञ्च ।

**अन्तरिक्ष** न० अन्तः स्वर्गपृथिव्योर्मध्ये ईक्ष्यते ईक्ष-कर्मणि घञ्,अन्तः ऋक्षाणि यस्य वा पृषो० पक्षे ह्रस्वः ऋकारस्य रित्वं वा । पक्षिमेघसञ्चारयोग्ये भूलोकसूर्य्यमध्यवर्त्तिनि आकाशप्रदेशे । अत्र अन्तरीक्षमपि ।

**अन्तरित** त्रि० अन्तर्+इण-कर्त्तरि क्त २स० । अन्तरं व्यवधानं करोतीति णिचि कर्मणि क्त वा । व्यवधानं गते, तिरस्कृते च ।

**अन्तरीप** पु०अन्तर्मध्ये गता आपोऽस्य ब०अच् स०आतईत्तम् । द्वीपे ।

**अन्तरीय** न० अन्तरे भवं गहादित्वात् छ । परिधाने वस्त्रे"नाभौ धृतञ्च यद्वस्त्रमाच्छादयति जानुनी । अन्तरीयं प्रशस्तं तदच्छिन्नमुभयान्ततः"इत्येवंलक्षणे ।

अन्तरे अव्य० अन्तरेति इण् विच् । मध्ये । [विनार्थे, मध्यार्थे च ।
अन्तरेण अव्य० अन्तरेति इण्—ण टवर्गादित्वेऽपि णस्य नेत्वम् ।
अन्तर्गडु त्रि० अन्तर्मध्ये गडुरिव निरर्थकः । ग्रीवाप्रदेशे जातस्य गल-
मांसपिण्डस्य गडोर्यथा निरर्थकत्वम् तद्वन्निरर्थके ।"काव्यान्तर्गडु-
भूता या नालङ्कारः प्रहेलिकेति" साहि० १० परि० ।
अन्तर्गृह न० अन्तर्गृहस्य । गृहमध्ये, वाराणसीस्थे सप्तावरणवति
स्थानविशेषे च ।
अन्तर्जठर न० अन्तर्जठरस्य । जठरमध्ये, कुक्षिमध्यस्थकोष्ठे च ।
अन्तर्जल न० अन्तर्जलस्य अव्ययी० । जलमध्ये, जलमध्ये कर्त्तव्ये
अघमर्षणमन्त्रजपे च । "होममन्तर्जलादिनीति" स्मृतिः ।
अन्तर्ज्योतिः न० अन्तः ज्योतिरिव प्रकाशकम् । अन्तरात्मनि ।
अन्तर्दधन न० अन्तर्दध्यते मादकता आधीयतेऽनेन । दध—करणे
ल्युट् । किण्वप्रभृतौ मद्यवीजे । [कोष्ठसन्तापे च ।
अन्तर्दाह पु० अन्तर्मध्ये दाहः दह—घञ् । देहाभ्यन्तरसन्तापे,
अन्तर्द्वार पु० अन्तर्मध्ये द्वारम् । गृहमध्यस्थे गुप्तद्वारे ।
अन्तर्द्धान न० अन्तर्+धा—ल्युट् । तिरोधाने दृश्यपदार्थस्य दर्शना-
योग्यस्थाने स्थितौ, मुन्यादीनां शरीरत्यागे च । अङि ।
अन्तर्द्धाप्यत्रैवार्थे स्त्री० ।
अन्तर्द्धि पु० अन्तर्+धा—कि । आच्छादने, व्यवधाने, अन्तर्धाने च ।
अन्तर्भूत त्रि० अन्तर्मध्ये भूतः भू+क्त । मध्यस्थिते अन्तर्गते च ।
अन्तर्मनस् त्रि० अन्तर्गतं वाह्यव्यापाराक्षमतया अन्तरेव स्थितं मनो
यस्य । व्याकुलचित्ते, समाहितमनस्के च ।
अन्तर्यामिन् पु० अन्तर्मध्येऽनुप्रविश्य यमयति स्वस्वकर्मणि इन्द्रिया-
दीनि जीवं वा व्यापारयति यम+णिच्—णिनि । वायौ, "अन्त-
राविश्य भूतानि यो विभर्त्त्यात्मकेतुभिः । अन्तर्यामीश्वरः साक्षात्
भवे" दित्युक्तेः आत्मकेतुभिः निजव्यापारैः प्राणादिवृत्तिभि-
रित्यर्थः । ईश्वरे,अन्तरेण यमयतीत्यादिवृहदारण्यकान्तर्यामिब्राह्म-
णोक्तेः । अन्तर्गतवस्तुज्ञातरि त्रि० ।

**अन्तर्वंशिक** त्रि० अन्तर्वंशे राज्ञामाभ्यन्तरगृहे नियुक्तः नियुक्तार्थे ठ। अन्तःपुरे रक्षणार्थं नियुक्ते कुब्जवामनादौ।

**अन्तर्वत्नी** स्त्री० अन्तरस्य अस्ति गर्भः। अन्तर+मतुप् नि०। गर्भवत्यां स्त्रियाम्।

**अन्तर्वमि** पु० अन्तः स्थित एव वामयति उद्गारशब्दं कारयति यथा शब्दे इव यस्य मतम्। (ढेकुर) इत्यादि ख्यातस्योद्गारशब्दस्य कारके अजीर्णनामके रोगभेदे।

**अन्तर्वाणि** त्रि०अन्तर्गता अन्तः करणे स्थिता शास्त्रव्याख्यात्मिका वाणी यस्य ब० न कप् ह्रस्वश्च वक्तृशास्त्रव्याख्याभिज्ञे पण्डिते।

**अन्तर्वेदी** स्त्री० पृथिव्या मध्यस्थितत्वादन्तर्वेदीव। हरिद्वाराबधिप्रयागपर्यन्ते गङ्गयमुनयोर्मध्यस्थलीति ब्रह्मावर्त्त इति च ख्याते देशे।

**अन्तर्हित** त्रि० अन्तर्+धा—क्त। गुप्ते, तिरोभूते च।

**अन्त (न्ते) वासिन्** पु० अन्ते समीपे वस्तुं शीलमस्य वस—णिनि सप्तम्या वा लुक्। शिष्ये। स्त्रियां ङीप्। समीपवर्त्तिनि त्रि०।

**अन्तशय्या** स्त्री० शयनं शय्या शीङ्—क्यप् अन्तस्य नाशार्थं शय्या चतुर्थ्यर्थे ष० त०। मरणार्थं भूमिशय्यायाम्, तद्धेतुत्वात् श्मशाने च। अन्तएव शय्यानिर्व्यापारार्थकत्वात् कर्म्म०। मरणे।

**अन्तःस्था** त्रि० अन्तःस्पर्शोष्मणोर्मध्ये तिष्ठतीति स्था—क्विप्। यरलवाख्येषु वर्णेषु। वा विसर्गलोपतोऽन्तस्था अपि।

**अन्तावसायिन्** पु०नखकेशानामन्तमवसातुं छेत्तुं शीलमस्य अव+सो—णिनि युक् च। नापिते। अन्ते इद्धे वयसि अवस्यति निश्चिनोति तत्त्वम्। मुनिभेदे। अन्ताय स्वतोपकृते जन्तुनाशाय अवस्यति। प्राणिहिंसके चाण्डालादौ।

**अन्ति (का)** स्त्री० अन्त्यते संबध्यते अन्त—इ। नटाभिनयनकाले तदुक्तौ ज्येष्ठभगिन्याम्। स्वार्थे के टापि अन्तिकेत्यपि।

**अन्तिक** त्रि० अन्त्यते संबध्यते सामीप्येन, अन्त—घञ् सोऽस्यास्तीति मत्वर्थीयः ठन्। सामीप्यवति। स्वार्थे ठनि। सामीप्ये पु०। चुल्ल्याम् न०। ओषधिभेदे स्त्री०।

**अन्तिकाश्रय** पु० अन्तिके समीपे आश्रीयते आ+श्री—अच् । निकटस्थे, अवलम्बनस्थाने च ।

**अन्तिम** त्रि० अन्ते भवः अन्त+डिमच् । अन्तभवे, चरमे च ।

**अन्त्य** पु० अन्ते पर्य्यन्ते वसतीति अन्त+यत् । चाण्डाले । मुस्तायाम् स्त्री० । अन्तिमे वस्तुनि त्रि० । यथा नचत्राणां मध्ये रेवती, राशीनां मध्ये मीनः वर्णानां मध्ये हकार इत्यादि । संख्याभेदे न० "जलधिश्चान्त्यं परार्द्धमिति दशगुणोत्तरा संख्या" इति भास्कराचार्य्योक्तेः परार्द्धदशभागे ।

**अन्त्यज** पु० अन्तोऽधमः सन् जायते जन—ड । शूद्रे, स हि वर्णानां विप्रादीनां चतुर्णां मध्ये अधमो जातः । "रजकश्चर्मकारश्च नटोवरुड़ एव च । कैवर्त्तमेदभिल्लाश्च सप्तैते ह्यन्त्यजाः स्मृताः" इति स्मृत्युक्तेषु रजकादिषु च । अधमजातमात्रे त्रि० ।

**अन्त्यजन्मन्** पु० अन्त्यं जन्म यस्य । शूद्रे । स हि विप्रक्षत्रियवैश्यजन्मानन्तरं ब्रह्मणः पादात् शेषे जातः ।

**अन्त्यावसायिन्** पु० "निषादस्त्री तु चण्डालात् पुत्रमन्त्यावसायिनम् । श्मशानगोचरं सूते" इति मनूक्तेः निषादस्त्रियां चण्डालजाते ( मुरदाफरास ) इति ख्याते सङ्कीर्णवर्णे "चण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा । मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः" इत्यङ्गिरसोक्तचाण्डालादिषु च ।

**अन्त्येष्टि** स्त्री० इष्टियागः यज+क्तिन् अन्त्या इष्टिः । मृतस्य दाहादिरूपे चरमसंस्कारे "नान्त्येष्टिर्नास्थिसञ्चयः" इति स्मृतिः ।

**अन्त्र** न० अन्त्यते देहो बध्यतेऽनेन अति—बन्धने ष्ट्रन् । देहबन्धने "उक्ताः सार्द्धास्त्रयो व्यामाः पुंसामन्त्राणि सूरिभिः । अर्द्धव्यामेन हीनानि स्त्रीणामन्त्राणि निर्द्दिशेत्" इति वैद्यकोक्तपरिमाणवति नाड़ीभेदे ।

**अन्दुक** पु० अन्द्यते बध्यतेऽनेन अदि+बन्धने—कु स्वार्थे के ह्रस्वः अभिधानात् पुंस्त्वम् । हस्तिपादबन्धने निगड़े, पादकीले च ।

अन्दू स्त्री० अन्द्यते बध्यतेऽनेन अदि+कू । निगड़े स्त्रीपादभूषणे च ।
अन्ध दृष्टिनाशे अद० चु० उभ० अक० सेट् । अन्धयति ते आन्दिधत् त ।
अन्ध त्रि० अन्धयति चक्षुषा न पश्यति अच् चक्षुर्द्वयहीने । अन्ध्य-
तेऽनेनेति करणे घञ् । अन्धकारे जले च न० ।
अन्धक पु० अन्धयति अन्ध–ण्वुल् । देशभेदे, मुनिभेदे, यदुवंश्यनृप-
भेदे, हिरण्याक्षसुते दैत्यभेदे च । तमसि न० ।
अन्धकरिपु पु० अन्धकासुरस्य रिपुः । शिवे, अन्धकस्य तमसो रिपौ
सूर्य्ये, चन्द्रे, वह्नौ च ।
अन्धकार पु०न० अन्धं करोति कृ–अण् उप०स०। तेजोऽभावे तमसि ।
अन्धकूप पु० अन्धयतीत्यन्धः स चासौ कूपः । सान्धकारे कूपे । अन्धः
कूपो यत्र ७ब०। नरकभेदे । अन्धस्य दृष्ट्यभावस्य कूपइव । मोहे ।
स हि सर्व्वदृष्ट्यभावस्याकरः ।
अन्धतमस न० अन्धयति अन्ध+अच् ताम्यति अनेनेति तम्–करणे असि
कर्म० अच् समासान्तः । निविड़ान्धकारे ।
अन्धतामिस्र न०तमिस्रा तमस्ततिः तमिस्रैव तामिस्रं अन्धयतीत्यन्धम्
कर्म० । निविड़ान्धकारे । अन्धम् अन्धकारकं तामिस्रं यत्र ७ब०।
नरकविशेषे । सांख्यशास्त्रे प्रसिद्धे भयविशेषविषयकेऽभिनिवेशे पु०।
अन्धमूषिका स्त्री० अन्धं दृष्ट्यभावं मुष्णाति मुष+ण्वुल् दीर्घः । देव-
ताडवृक्षे तत्सेवने हि चक्षुष्मत्ता भवतीति वैद्यकप्रसिद्धम् ।
अन्धस् न० अद्यते अद–असुन् नुम् धश्च । ओदने ।
अन्धिका स्त्री० अन्धयति अन्ध–ण्वुल् । रात्रौ, द्यूतभेदे सर्षपे,
सिद्धाख्यौषधौ (आन्धुलीति) ख्याते नेत्ररोगभेदे च ।
अन्धु पु० अन्ध–कु । कूपे ।
अन्धुल पु० अन्ध–उलच् । शिरीषवृक्षे ।
अन्ध्र पु० अन्ध–र । देशभेदे, तत्रस्थलोके, व०व० जातिभेदे च ।
अन्न न० अनित्यनेन अन–नन् अद्यते इति वा अद–क्त अन्नादेशतया
न जग्धिः । ओदने, सिद्धान्ने, "शस्यं क्षेत्रगतं प्रोक्तं सतुषं
धान्यमुच्यते । आमं तु वितुषं ज्ञेयं स्विन्नमन्नमुदाहृतम्" इति

स्मृतेः व्रीहियवादावासामे, पृथिव्याम्, अन्नहेतुत्वात् तस्या अन्न-
त्वम् अतएव वेदान्ते तेजोऽबन्नात्मिका प्रकृतिरित्युक्तम् ।
उपचारात् उपकरणे च । [इति ख्याते धान्यादेः स्थापनस्थाने ।

**अन्नकोष्ठक** पु० अन्नस्य व्रीह्यादेः स्वल्पं कोष्ठमिव अल्पार्थे कन् ।(कुटी)

**अन्नगन्धि** पु० अन्नस्य गन्धइव गन्धो यस्य ब० इत्समासान्तः । अति-
सारे, उदरामये च रोगे । अन्नस्य गन्धो लेशो यत्र ब० इत्सम-
सान्तः । अल्पान्ने भोजनादौ त्रि० ।

**अन्नप्राशन** न० प्रकृष्टं विधानेन प्रथममाशनं प्राशनं ६त० । षष्ठाष्टम-
मासादौ बालकादेर्विधानेन प्रथमान्नभोजने ।

**अन्नमय** पु० अन्नस्य विकारः अन्न+विकारार्थे मयट् । स्थूलशरीरे ।
अन्नविकृतिमात्रे त्रि० । "अन्नमयं हि सौम्य मन"इति श्रुतिः ।

**अन्नविकार** पु० वि+कृ–घञ् ६त० । अन्नस्य विकारे शोणितमां-
सादिपरिणामजे चरमधातौ शुक्रे ।

**अन्नाशन** न० अन्नस्य विधानेन आशनम् । अन्नप्राशनार्थे ।

**अन्य** त्रि० अन -अघ्न्या० यः । भिन्ने,सदृशे च । सर्वनामता चास्य ।

**अन्यतम** त्रि०अन्यु० प्रा०। बहूनां मध्ये निर्द्धारिते एकस्मिन् ।

**अन्यतर** त्रि०अन्यु०प्रा०। द्वयोर्मध्ये निर्द्धारिते एकस्मिन् सर्व्वनामता ।

**अन्यत्र** अव्य० अन्य+त्रल् । व्यतिरेके, विनार्थे च "अन्यत्र धर्म्मादन्-
न्यत्राधर्म्मादिति" श्रुतौ प्रथमार्थे एव त्रल् । [वितथे, दुष्टे च ।

**अन्यथा** अव्य० अन्य+प्रकारार्थे थाल् । विनार्थे, इतरप्रकाराय,

**अन्यथासिद्धि** स्त्री०अन्यथा सिद्धिः यस्य कारणतां विनापि सिद्धिः ।
कार्यजन्म तस्य अन्यथासिद्धिरिति न्याये परिभाषितरूपे वस्तुनि यथा
घटजन्मकाले तत्र गर्द्दभस्य स्थितावपि तस्य कारणतां विनापि घटा-
दिसिद्धिरिति घटादौ गर्द्दभादेरन्यथासिद्धिः ।

**अन्यदा** अव्य० अन्यस्मिन् काले दा । अन्यस्मिन् काले इत्यर्थ ।

**अन्यपूर्व्वा** स्त्री० अन्यः पूर्व्वो यस्याः । पूर्व्वपतिमरणादौ पश्चात् कृत-
तद्भिन्नपतिकायां पुनर्भुवि । अर्शआदित्वादचि अन्या पूर्वा यस्य
सः । तत्परिणेतरि पुनर्भूपतौ पु० ।

अन्यभृत् पु० अन्येन भ्रियते भृ–कर्मणि क्विप् । कोकिले । कर्मणि क्ते अन्यभृतोऽप्यत्र । कर्त्तरि क्विपि परपोषके त्रि० ।

अन्यादृश् त्रि०अन्यस्येव दर्शनमस्य अन्य+दृश–क्विन् आत्वम् । अन्य-सदृशे,अन्यप्रकारे च । कञि–अन्यादृशः क्से अन्यादृक्षोऽप्यत्रार्थे

अन्याय पु० न्यायोविचारः, सङ्गतिः,औचित्यं, प्रतिज्ञादिपञ्चकप्रति-पादकवाक्यञ्च अभावार्थे न०त० । विचाराभावे, सङ्गत्यभावे, अनौचित्ये, भेदार्थे न०त० पञ्चाङ्गन्यायभिन्ने च न्यायशब्दार्थे त्वधिकं वक्ष्यते । ब० । विचारशून्ये, औचित्यशून्ये, असङ्गते, प्रतिज्ञादिपञ्चकवाक्यशून्ये च त्रि०।

अन्योदर्य्य पु० अन्यस्मिन् स्वमातृभिन्ने उदरे गर्भे भवः उदर+यत् । एकपितृके भिन्नमातृके वैमात्रेये भ्रातरि । "अन्योदर्य्यस्तु संसृ-ष्टीति"स्मृतिः । तथाभगिन्यां स्त्री० । अन्योदरजातमात्रे त्रि० अतएव दायभागटीकायां तद्वचनव्याख्याने भ्रातृपुत्रादीनामपि अन्योदर्य्यपदार्थतया ग्रहणमित्युक्तम् ।

अन्योन्य त्रि० अन्य+कर्मव्यतिहारे (एकजातीयक्रियाकरणे) द्वित्वम् पूर्वपदे सुश्च । परस्परार्थे । कृतद्वित्वस्यापि सर्वनामता तेनान्यो-ऽन्यस्मै इत्यादि । अलङ्कारशास्त्रप्रसिद्धे अलङ्कारभेदे न० तच्च साहि० द०१० परि० दृश्यम् ।

अन्योऽन्याभाव पु० अन्योऽन्यस्मिन् अन्योऽन्यस्य अभावः । भेदे भेदो हि यथा घटे पटस्य तथा पटे घटस्य सदाऽस्ति संसर्गाभावस्तु-नैवं घटे भूतलस्याभावेऽपि भूतले घटस्य कदाचित् सत्त्वसंभवेन सदा भावाभावात् ।

अन्योन्याश्रय त्रि० अन्योन्यमाश्रयतीति आ+श्रि–अच् । परस्प-रसापेक्षे । न्यायमते तर्कविशेषे पु०। स च एकस्य ज्ञानादिजननाय यथाऽन्यज्ञानाद्यपेक्षा तथा अन्यस्य ज्ञानादिजननायेतरस्य ज्ञानाद्यपे-क्षेति स्वापेक्षापेक्षित्वनिमित्तकोऽनिष्टः प्रसङ्गः विस्तरस्तु वाचस्पत्ये ।

अन्वक्ष त्रि० अनुगतमक्षमिन्द्रियं यस्या०स० । प्रत्यक्षे, अनुपदे अनुगे च । अक्ष्णः समीपेऽव्ययी० टचि । चक्षुर्निकटे अव्य० ।

अन्वच् त्रि० अनु+अनुच-क्विन् । अनुगामिनि अनुपदे च ।
अन्वय पु० अनु+इण्-अच् । सन्ततौ, अनुगतौ, अनुवृत्तौ, आनुकूल्ये, कार्य्य-कारणस्यानुसरणे, कार्य्यसत्तापादकस्वसत्ताकस्य कारणस्य कार्य्योपस्थितौ, स्वसत्तानियतसत्तावति, कार्य्ये संबन्धे च पदानां, पदोपस्थाप्यपदार्थानाञ्च परस्परेण सबन्धे च ।
अन्वयबोध पु० अन्वयस्य पदोपस्थाप्यपदार्थानां संबन्धस्य बोधः ६त० । न्यायमते शब्दजन्ये शाब्दइति नामके प्रत्यक्षानुमानादिभिन्ने बोधे । वैशेषिकमते शब्दजन्ये अनुमित्यात्मके एव बोधे ।
अन्वयव्यतिरेकिन् त्रि० अन्वयव्यतिरेकौ स्तोऽस्य । साध्यसाधके हेतुविशेषे, यथा वह्निसाधने धूमः । स हि वह्निमति महानसादौ वह्न्यभाववति जलादौ च भावाभावाभ्यां वह्नेरन्वयव्याप्तः व्यतिरेकव्याप्तश्चेति न्यायमते प्रसिद्धम् ।
अन्वयव्याप्ति स्त्री० अन्वयेन व्याप्तिर्व्यापनं नियततया स्थितिः ३त० । यत्र धूमस्तत्र वह्निरित्येवं रूपायां व्याप्तौ ।
अन्ववसर्ग पु० अनु+अव+सृज-घञ् । यथेष्टं क्रियतामित्येवं रूपायामनुज्ञायाम् ।][ इण्-कर्त्तरि अच् वा । वंशे,सन्ताने च ।
अन्ववाय पु० अन्ववायते उत्पत्त्यानुसंबध्यते अनु+अव+अय-घञ्.
अन्वष्टका स्त्री० अनुगतामष्टकाम् अत्या०स० । अष्टकानन्तरतिथिषु गौणचान्द्रपौषमाघफाल्गुनमासानां कृष्णनवमीषु । तत्र साग्निकस्य मातृश्राद्धमष्टकाश्राद्धवत् कर्तव्यम् ।
अन्वह अव्य० अह्नि अह्नि वीप्सार्थेऽव्ययी० अच् । प्रतिदिने ।
अन्वाचय पु० एकस्य प्राधान्यादन्य अचीयते बोध्यते यत्र अनु+आ+चि-आधारे अच् । उद्देश्यसिद्ध्याऽनुद्देश्यसिद्धौ । यथा भिक्षां गच्छ यदि गां पश्येस्ताञ्चानय, अत्र भिक्षायामेव उद्देशः न गमने,तत्सिद्ध्युत्तरं गवानयनमनुद्दिष्टमपि साध्यतया निर्द्दिष्टम् ।
अन्वाजे अव्य० अन्वाजयत्यनेन अनु+आ+जि-डे । दुर्बलस्य बलाधाने । सप्तम्यन्तप्रतिरूपकोऽयम् ।
अन्वादेश पु० अनु+आ+दिश घञ् । पूर्वोपात्तस्य किञ्चित्कार्य्या-

न्तरं विधातुं पुनरुपदेशे। यथा अनेन व्याकरणमधीतं न्यायमेनं प्रपाठयेति न्यायपाठार्थं पुनरुपदेशः। कथितकथने, अनुवादार्थे च।

**अन्वाधेय** न० अनु+आ+धाञ् यत्। "विवाहात् परतो यत्तु लब्धं भर्त्तृकुलात् स्त्रिया। अन्वाधेयं तु तत्प्रोक्तं लब्धं बन्धुकुलात्तथा" इत्युक्तलक्षणे स्त्रीधने। पश्चादाधेये वस्तुनि त्रि०।

**अन्वासन** न० अनु+आस–ल्युट्। पश्चादुपवेशनरूपे सेवने, अनुशोचने च। आधारे ल्युटि। शिल्पगृहे।

**अन्वाहार्य्य** न० अनु व्याप्तौ, मासि मासि आह्रियते अनु+आ+हृ–कर्मणि ण्यत्। प्रतिमासकर्त्तव्येऽमावास्याविहिते श्राद्धे "पितॄणां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधाः" इति स्मृतिः, यागदक्षिणायाञ्च।

**अन्वाहार्य्यपचन** पु० अन्वाहार्य्यं श्राद्धान्नं पच्यतेऽनेन पच+करणे ल्युट्। दक्षिणाग्नौ ऋग्वेदविधिना स्थापितेऽग्नौ।

**अन्विच्छा** स्त्री० अनु+इष–अ नि०। अन्वेषणे।

**अन्विष्ट** त्रि० अनु+इष्–क्त। अन्वेषिते।

**अन्वीक्षा** स्त्री० अनु श्रवणादनु ईक्षा श्रुतार्थस्य युक्तायुक्तत्वपर्य्यालोचना अनु+ईक्ष–भावे अ। वेदवाक्यश्रवणानन्तरं तदर्थपर्य्यालोचनायाम्। अतएवैतदुपयोगिनी विद्या आन्वीक्षिकीत्युच्यते।

**अन्वेषण** न० अनु+इष–भावे ल्युट्। अनुसन्धाने। व्यवधानादिना अदर्शनं गतस्य ज्ञानार्थं प्रयत्नोऽत्रानुसन्धानम्। वाञ्छायाञ्च। युचि। अन्वेषणा। तस्मिन्नेवार्थे स्त्री०।

**अप्** स्त्री० बहु० आप–क्विप् ह्रस्वः। जले।

**अप** अव्य० न पाति पा–ड। वियोगे, विकृतौ, विपरीते, निदर्शने, आनन्दे, वर्ज्जने, चौर्य्ये च। [रणवति त्रि०।

**अपकर्म्मन्** न० अपकृष्टं कर्म प्रा०। दुष्टाचरणे। ब०। दुष्टाच-

**अपकर्ष** पु० अप+कृष–भावे घञ्। उचितधर्म्मापेक्षया हीनतायां, स्वकर्त्तव्यकालात् पूर्वकालकरणे च।

**अपकार** पु० अप+कृ–घञ्। अनिष्टोत्पादने, तद्धेतौ द्वेषे च।

**अपकारगिर्** स्त्री॰ अपकारेण द्वेषेण गीर्य्यते गॄ-क्विप् । भर्त्सनवाक्ये ।
**अपकृष्ट** त्रि॰अप+कृष-क्त । अधमे, हीने, स्वकालात् पूर्वकाले कृते च ।
**अपक्रम** पु॰ अपसृत्य क्रमो गतिः क्रम-घञ् अवृद्धिः । पलायने ।
**अपक्रिया** स्त्री॰ अप+कृ-भावे श । द्रोहे, अपकारे च ।
**अपक्रोश** पु॰ अप+क्रुश-घञ् । निन्दने । उपक्रोशोऽप्यत्र ।
**अपक्षेपण** न॰ अप+क्षिप-ल्युट् । अधःस्थानसंयोगहेतौ क्रिया-विशेषे, अधःपातने च । अवक्षेपणमप्यत्रार्थे ।
**अपगत** त्रि॰ अप+गम-क्त । मृते, पलायिते, गते, दूरीभूते च ।
**अपघन** पु॰ अप+हन अप् घनादेशः । देहे, घनो निबिडस्तद्-भिन्ने त्रि॰ ।
**अपघात** पु॰अप+हन-घञ् । अपकृष्टहनने दुष्टहेतुकमरणे च ।
**अपचय** पु॰ अप+चि अच् । हानौ, अपहरणे, व्यये च ।
**अपचायित** त्रि॰ अप+चाय-चि-स्वार्थे णिच्-वा क्त । पूजिते ।
**अपचार** पु॰ अप+चर-घञ् । अहिताचरणे । प्रा॰ब॰ अपग-ताचारे, दूतहीने च त्रि॰ । [हीने ।
**अपचित** त्रि॰ अप+चाय-क्त चायः चिभावः । पूजिते । चि-क्त ।
**अपचिति** स्त्री॰ अप+चाय-क्तिन् प्रकृतेश्चिभावः । पूजायां चि+क्तिन् । हानौ अपचये च ।
**अपटान्तर** त्रि॰ पटेन तिरस्करिण्या अन्तरमत्र । अव्यवहिते, आसक्ते, संसक्ते च । अपदान्तरमित्यप्यत्रार्थे ।
**अपटी** स्त्री॰ अल्पः पटः पटी न॰त॰ । (कानात्) इति ख्याते वस्त्र-प्रावरणे । [च ।
**अपटु** त्रि॰ पटुर्दक्षः न॰त॰ । रोगिणि, दक्षतारहिते कार्याक्षमे
**अपतर्पण** न॰ अप+तृप-ल्युट् । रोगादौ उपवासे, तृप्त्यभावे च ।
**अपत्य** न॰ न पतन्ति पितरोऽनेन पत-करणे यत् न॰त॰ । पुत्रदु-हितृरूपे सन्ताने । [धिविशेषे गर्भदायिविद्यादौ च ।
**अपत्यदा** स्त्री॰ अपत्यं तद्धेतुं गर्भं ददाति । सेवनेन गर्भग्राहके ओष-
**अपत्यशत्रु** पु॰ अपत्यस्य शत्रुः ६त॰ । कर्कटे ।

**अपत्र** पु० न विद्यते पत्रमस्य । अङ्कुरे तस्य पत्राभावात् तथात्वम् ।
**अपत्रप** त्रि० अपगता त्रपा लज्जा यस्मात् ५ ब० । लज्जाहीने ।
**अपत्रपा** स्त्री० अप+त्रप—भावे अ । अन्यहेतुकलज्जायाम् ।
**अपत्रपिष्णु** त्रि० अप+त्रप—इष्णुच् । स्वभावतो लज्जाशीले ।
**अपथ** न० न पन्थाः न० त० वा अच् । कुपथे, । अत्र वा अचोऽभावे अपथिन् इत्यपि । ब०। पथिशून्ये त्रि०। पथोऽभावः मार्गाभावे अव्य०।
**अपथ्य** त्रि० पथि (रोगिभोजने) हितं पथिन्+यत् न० त० । रोगिभोजनायोग्ये । [अवदानमप्यत्राथ ।
**अपदान** न० अप+दैप—ल्युट् । शोधने,करणे ल्युट् । प्रशस्ते कर्मणि
**अपदिश** न० दिशयोर्मध्ये अप+दिशा—अव्ययी०। दिशोर्मध्ये विदिशि (कोण) इति ख्याते । [ निमित्ते, स्थाने च ।
**अपदेश** पु० अप+दिश—घञ् । लक्ष्ये, स्वरूपाच्छादनरूपे, छले,
**अपध्वंसज** पु० अपध्वस्यतेऽनेन अपध्वंसः वर्णानां भिन्नरूपतासंपादकः सङ्करस्तस्माज्जायते जन—ड ५त० । भिन्नवर्णसङ्गमजाते करणादौ संकीर्णवर्णे ।
**अपध्वस्त** त्रि० अप+ध्वन्स—क्त । निन्दिते, परित्यक्ते,अवचूर्णिते च ।
**अपनयन** न० अप+नी—भावे ल्युट् । दूरीकरणे, खण्डने च ।
**अपनोदन** न० अप+नुद—भावे ल्युट् । दूरीकरणे,खण्डने च ।
**अपभ्रंश** न० अप+भ्रन्श—पतने घञ् । पतने । अपभ्रश्यते अधर्महेतुतया पत्यतेऽनेन करणे घञ् । साधुशब्दभिन्ने अपशब्दे यज्ञादौ तत्कथनस्य पापहेतुत्वात् ।
**अपमान** न० अप+मि—मा—वा भावे ल्युट् । अवज्ञायाम् ।
**अपमित्यक** न०अपमितिरपमानः तेनाकं दुःखं यत्र । अपमानहेतुकदुःखदायके ऋणे, तद्ग्रहणे हि उत्तमर्णसमीपेऽनादरात् दुःखं भवति । [शस्त्रादिना स्वयमन्यतो वा मरणे ।
**अपमृत्यु** पु० अपकृष्टो मृत्युः प्रा० स० । मरणहेतुरोगादिकं विना
**अपयान** न० अप+या—भावे ल्युट् । अपसरणे, पलायने च ।
**अपर** न० न पूर्यते यतः पृ—अपादाने, अप् न० त० । गजस्य पश्चाद्भागे ।

न पृणाति सन्तोषयति पृ–अच् न०त० । शत्रौ । अर्वाचीने, भिन्ने च त्रि० । पश्चिमायां दिशि, वन्ध्यादार्दिकायां च स्त्री० ।

अपरक्त त्रि० अप+रन्ज–कर्त्तरि क्त । विरक्ते, अननुकूले ।

अपरति स्त्री० अप+रम–भावे क्तिन् । विरागे, निवृत्तौ च ।

अपरत्र अव्य० अपर+त्रल् । पश्चादर्थे, परकाले च ।

अपरत्व न० अपरस्य भावः त्व । (अपर)इति व्यवहारके न्यायमते गुणभेदे, तच्च द्विविधं कालिकं दैशिकञ्च तत्र माघादपरः पौष इति कालिकं, पाटलिपुत्रादपरा काशीति दैशिकम् ।

अपरपक्ष पु० अपरः शेषः पक्षः कर्म० । कृष्णपक्षे ।

अपररात्र पु० अपरं रात्रेः एक० त० टच् । रात्रिशेषे ।

अपरस्पर न० अपरञ्च परञ्च द्व० पूर्वपदे सुट् च । क्रियासातत्ये सन्ततैकरूपक्रियाकरणे ।

अपराजित पु० परा+जि–क्त न०त० । शिवे, विष्णौ, ऋषिभेदे च । पराजितभिन्ने त्रि० । दूर्वायां,स्वनामख्यातायां लतायां, दुर्गायां, शेफालिकायां, जयन्तीवृक्षे, असनवृक्षे, शङ्खिनीवृक्षे च स्त्री० ।

अपराद्धपृषत्क पु० अपराद्धो लक्ष्यात् च्युतः पृषत्को बाणो यस्य अप+राध–क्त ब० । लक्ष्याघातिसायके धानुष्के ।

अपराध पु० अप+राध–भावे घञ् । अकार्य्यादिकरणरूपे दोषे ।

अपरान्त पु० अपरस्या अन्तः । पाश्चात्त्यदेशभेदे । तद्देशवासिनि त्रि० ।

अपराह्ण पु० अपरमह्नः एक०त० टच् अह्नादेशो णत्वञ्च । त्रिधा विभक्तदिनस्य तृतीये भागे ।

अपरिग्रह पु० परि+ग्रह–अप् अभावार्थे न०त० । असंग्रहे, स्त्रीकाराभावे च । नास्ति कन्थाकौपीनाद्यतिरिक्तः परिग्रहो यस्य ब० । परिव्राजके । परिग्रहमात्रशून्ये त्रि० ।

अपरिच्छिन्न त्रि० परि+छिद–क्त न०त० । इयत्तारहिते ।

अपरिहार्य्य त्रि० परि+हृ–ण्यत् न०त० । परिहर्त्तुमयोग्ये ।

अपरेद्युस् अव्य० अपरस्मिन्नहनि अपर+एद्युस् । अपरदिने इत्यर्थे ।

अपरोक्ष न० परतोऽतीतः अक्षाणामिन्द्रियाणां न भवति पर+अति–अ-

समर्थस० टत् नि० पुट्। विषयेन्द्रियसन्निकर्षजन्ये प्रत्यक्षरूपे ज्ञाने। अर्थं आद्यचि तद्विषये त्रि०।

अपर्णा स्त्री० न पर्णान्यपि भोजनं यस्याः। हिमाद्रिजायाम् तपसि स्थितया तया पर्णस्याप्यभोजनात्तथात्वम्। पर्णशून्ये त्रि०।

अपर्य्याप्त त्रि० परि+आप्–क्त न० त०। असमर्थे, असम्पूर्णे च। [च।

अपलाप पु० अप+लप-घञ्। सतोऽप्यसत्त्वेन कथनरूपे अपह्नवे, प्रेमणि

अपवरक न० अप+ वृ–क्रञा० संज्ञायां वुन्। वासगृहे।

अपवर्ग पु० अप+वृज–भावे घञ्। दाने, निर्वाणमोक्षे, फलसाधने, समाप्तौ च

अपवर्ज्जन न० अप+वृज–भावे ल्युट्। दानादावपवर्गार्थे।

अपवर्त्तन न० अप+वृत–णिच्–भावे ल्युट्। परिवर्त्तने, वक्रीकरणे, अङ्कशास्त्रे प्रसिद्धे भाज्यभाजकयोरुभयोरपि तुल्यरूपेण केनचिदङ्केन विभाजने च।

अपवाद पु० अप+वद–भावे, घञ्। निन्दायाम्, आज्ञायाम्, प्रणये, विश्वासे, विशेषविधिरूपे बाधके, वेदान्तप्रसिद्धे रज्जौ प्रतिभातस्य रजतस्य रज्जुमात्ररूपतालाभे च।

अपवारण न० अप+वृ–णिच्–नन्द्या० ल्युट्। अन्तर्द्धाने।

अपविद्ध त्रि० अप+व्यध–क्त। त्यक्ते, प्रत्याख्याते, प्रतिक्षिप्ते, "मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा। यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते" इत्युक्तरूपे पुत्रभेदे च।

अपविषा स्त्री० अपगतं विषं यस्याः ५ब०। विषहारिण्याम्।

अपवृत्त पु० अप+वृत–क्त। पराङ्मुखीभूते।

अपशब्द पु० अपकृष्टः शब्दः प्रा० स०। संस्कृतभिन्ने शब्दे "तएव शक्तिवैकल्यप्रमादालसतादिभिः। अन्यथोच्चारिताः शब्दा अपशब्दा इतीरिताः" इति हर्युक्तदिशा संस्कृतशब्दे एव अन्यथोच्चारणादसाधुत्वं गते भाषाशब्दे। [त्रि०।

अपशोक पु० अपगतः शोको यस्मात् ब०। अशोकवृक्षे। शोकरहिते

अपष्ठु अव्य० अप+स्था–कु षत्वम्। निर्दोषे, शोभने, विपरीते च। प्रतिकूले, विरुद्धार्थे च त्रि०। काले पु०।

**अपष्ठुल** त्रि० अप+स्था-कुरच् रस्य लः षत्वम् । निमित्ते, विपरीते च ।
**अपसद** त्रि० अपकृष्टएव सीदति सद-अच् । अधमे, नीचे च ।
**अपसर्ज्जन** न० अप+सृज-भावे ल्युट् । दाने, परिवर्ज्जने ।
**अपसर्प** पु० अप+सृप-अच् । गुप्तचरे । भावे घञि अपसरणे ।
**अपसव्य** पु० अपगतं सव्यं यत्र । दक्षिणभागे । पितृतीर्थे न० ।
**अपस्कर** पु० अपकीर्य्यते स्वस्वस्थाने क्षिप्यते अप+कृ-अप् सुडागमः । चक्रभिन्ने रथाङ्गे रथारम्भके काष्ठे ।
**अपस्नात** त्रि० अपकृष्टं स्नातः । मृतसुहृदुद्देश्य स्नाते ।
**अपस्मार** पु० अपगतः स्मारः स्मरणं यस्मात् ५ब० । (मिरगी) इति ख्याते रोगभेदे । तस्मिन् सति तद्रोगिणस्तदानीं सर्वविषय-स्मृतिर्नश्यति ।
**अपहस्त** त्रि० अपसारणार्थो हस्तो यस्मिन् । गलहस्तादिना अप-सारिते ।
**अपहार** पु० अप+हृ-घञ् । अपचये चौर्य्ये, सङ्गोपने, धनस्वा-म्यनुपयोगिव्यये च । [ऽपलापे, प्रेमणि च ।
**अपह्नव** पु० अप+ह्नु-भावे अप् । सतोऽपि वस्तुनोऽसत्त्वेन कथनरूपे-
**अपह्नुति** स्त्री० अप+ह्नु-भावे क्तिन् । अपलापे, अलङ्कारशास्त्रे प्रसिद्धे अर्थालङ्कारभेदे च सा च सा० १० परि० दृश्या ।
**अपांनाथ** पु० ६ त० अलुक् स० । समुद्रे ।
**अपांनिधि** पु० नि+धा-कि ६ त० अलुक् स० । समुद्रे ।
**अपांपति** पु० पा+डति ६ त० अलुक् स० । समुद्रे, वरुणे च ।
**अपांपित्त** न० । ६ त० अलुक् स० वा । अग्नौ, तस्य जलहेतुत्वात् तत्-पित्तत्वम् "आकाशाद्वायुर्वायोरग्निरग्नेरापः" इति श्रुतिः अत्र वा लुकि अप्पित्तमित्यप्यत्रार्थे ।
**अपाक** पु० पच-घञ् अभावार्थे न० त० । पाकाभावे, भुक्तान्नादेरग्निमा-न्द्यादिना पाकाभावे च । ७ब० । तत्साधने अजीर्णतारोगे । ६ब० । पाकरहिते आमे त्रि० । अव्ययी० । पाकाभावे अव्य० ।
**अपाकरण** न० अप+आ+कृ-ल्युट् । निराकरणे ।

**अपाकशाक** पु० न पच्यते शाको यस्य । आर्द्रके तस्य मूलमेव भोजनार्थं पच्यते न शाकः ।

**अपाङ्क्तेय** त्रि० सद्भिः सह भोजने पङ्क्तिमर्हति अर्हार्थे ढक् न०त० । सद्भिः सह एकपङ्क्तौ भोजनानर्हे स्तेनपतितादौ । अत्र ण्यन्ति अपाङ्क्त्य इत्यपि ।

**अपाङ्ग** पु० अपाङ्गति तिर्यक् चलति नेत्रं यत्र अप+अङ्ग-अधारे घञ् । नेत्रप्रान्ते, तिलके च । अपगतोऽङ्गात् निरा० स० । अङ्गहीने त्रि० ।

**अपाङ्गक** पु० अपकृष्टमङ्गं यस्य ब० कप् । (आपाङ्) इति ख्याते अपामार्गे । स्वार्थे क । नेत्रान्ते पु० । अपगताङ्गे त्रि० ।

**अपाङ्गदर्शन** न० अपाङ्गेन नेत्रान्तेन दर्शनं ३त० । कटाक्षे ।

**अपाटव** न० नास्ति पाटवं पटुता यत्र पटु+भावेऽण् ६ब० । रोगे । न०त० । पटुताभिन्ने । ६ब० । पटुताशून्ये त्रि० ।

**अपात्र** न० पात्रं श्राद्धभोजनदानादियोग्यं न०त० । विद्यादिहीनेऽनाचारे, दानादियोग्यताहीने कुपात्रे, नटादौ च ।

**अपात्रीकरण** न० अपात्रं श्राद्धभोजनाद्ययोग्यं क्रियतेऽनेन कृ—करणे ल्युट् । निन्दितप्रतिग्रहादिजनिते पापभेदे "निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् । अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम्" इति मनूक्ते तद्धेतुभूते निन्दितधनादानादौ च ।

**अपादान** न० व्याकरणप्रसिद्धे वियोगक्रियावधिभूते विभागजनकतत्क्रियानाधारे तत्क्रियाजन्यविभागाश्रये ।

**अपान** पु० अपानयति अधोनयति मूत्रादि अप+आ+नी—बा० ड अपानिति अधोगच्छति अप+अन—गतौ अच् वा । सततमधोगमनशीले, गुह्यदेशस्थे, "अधोनयत्यपानस्तु आहारञ्च क्रमात् पुनः" इत्युक्तलक्षणे "मूत्रशुक्रवहो वायुरपान इति कीर्त्यते" इत्युक्तलक्षणे च वायौ । गुह्ये न० ।

**अपामार्ग** पु० अपमृज्यते व्याधिरनेन मृज्—करणे घञ् कुत्वदीर्घौ । (आपाङ्) इति ख्याते वृक्षे ।

**अपाय** पु० अप+इ—भावे अच् । वियोगे, नाशे, अपसरणे च ।

अपार त्रि० उत्तरोऽवधिः पारः न०ब०। उत्तरावधिशून्ये। नद्यादे-
र्वाचीने अवारे तीरे न०।

अपार्थ त्रि०अपगतोऽर्थोऽभिधेयः प्रयोजनं वा यस्मात् ५ब०। अर्थ-
शून्ये,प्रयोजनशून्ये च। ब० वा कपि। अपार्थकमप्यत्रार्थे,निष्-
प्रयोजने, असंबद्धार्थके वाक्ये च। [ उद्घाटिते च।

अपावृत त्रि०अप+आ+वृ—क्त। अनाच्छादिते, अप्रतिबद्धे स्वतन्त्रे,

अपावृत्त त्रि० अप+आ+वृत—क्त। लुण्ठिते, परावृत्ते च।

अपाश्रय पु० अप+आ+श्री—अच्। आश्रयशून्ये। अपाश्रयतीति
कर्त्तरि अचि। अधीने। करणेऽचि। चन्द्रातपे।

अपासन न० अप+अस—णिच्—ल्युट्। मारणे।

अपास्त त्रि० अप+अस—क्षेपे क्त। निरस्ते—अवधीरिते च।

अपि अव्य० न पियति गच्छति पि—गतौ क्विप् न तुक्। अशक्यकर-
णायोद्यमकल्पायां, शक्त्युत्कर्षमाविष्कर्त्तुमत्युक्तिकल्पायां, वा स-
म्भावनायां, सन्देहे, निन्दायां, प्रश्ने, समुच्चये, अल्पपदार्थे, काम-
चारानुज्ञायाम्, अवधारणे, पुनरर्थे च।

अपिगीर्ण त्रि० अपि+गॄ—क्त। स्तुतौ, वर्णिते, उद्भ्रान्ते च।

अपितु अव्य०अपि+तन्—डु। किन्त्वर्थे, यद्यर्थे, यद्यपीत्यर्थे च।

अपिधान न० अपि+धाञ्—ल्युट्। आच्छादने, अत्र अपेरल्लोपे।
पिधानमप्यत्र। [ मप्यत्र।

अपिनद्ध त्रि०अपि+नह—क्त। परिहिते वसनादौ। अपेरल्लोपे पिनद्ध-

अपीच्य त्रि०अपि—च्यवते सौन्दर्यादीयते च्यु—ड अल्लोपः उपसर्गदीर्घः
न०त०। अतिसुन्दरे। [ पुच्छहीने त्रि०।

अपुच्छा स्त्री० नास्ति पुच्छमस्यं यस्याः। शिखरहीने शिंशपावृक्षे।

अपुनरावृत्ति स्त्री० न पुनरावृत्तिरागमनं यत्र ७ब०। निर्वाणमु-
क्तौ। ६त०। पुनर्गमनशून्ये त्रि०। न०त०। पुनरागत्यभावे स्त्री०।

अपुनर्भव पु० न पुनर्भवो जन्म यत्र ७ब०। निर्वाणमोक्षे। ६ब०।
अत्यन्तमुक्ते। न० त०। पुनर्जन्माभावे।

**अपुष्पफलद** पु० पुष्पं विनापि फलं ददाति दा-क उप० स० । पुष्पशून्ये फलवति पनसोडुम्बरादिवृक्षे ।

**अपूप** पु० न पूयते विशीर्य्यते पू-य-प । गोधूमादिचूर्णपिष्टके ।

**अपूरणी** स्त्री० न पूर्य्यते सर्वतः कण्टकाद्यततया दुरारोहत्वात् कर्मणि ल्युट् ङीप् । शाल्मलिवृक्षे । संख्यापूरणसाधनभिन्ने च ।

**अपूर्व्व** त्रि० न पूर्वं दृष्टम् । अविदिते आश्चर्य्ये । ६ब०। कारणशून्ये परमात्मनि पु० । विधिनिषेधक्रियाजन्ये कालान्तरभाविनोः सुख-दुःखयोर्हेतुभूतयोः पुण्यपापयोः न० । पूर्वकालादिभिन्ने त्रि० ।

**अपूर्व्वविधि** पु०अपूर्वे प्रमाणान्तरेणाप्राप्ते विधिर्विधानम् वि+धा-कि । अप्राप्तप्रापके लिङादिपदवेदनीये शब्दविशेषे । यथा स्वर्गकामो यजेतेति लिङ्युक्तं वाक्यं प्रमाणान्तरेणाप्राप्तस्य स्वर्गसाधनत्वस्य यागे बोधयत् अपूर्वविधिः ।

**अपेक्षा** स्त्री० अप+ईक्ष-भावे अ । आकाङ्क्षायां कार्य्यकारणयोरवश्य-सम्बन्धे च । "अपेक्षते प्रत्ययमुत्तमं त्वाम्" इति कुमारः ।

**अपेक्षाबुद्धि** स्त्री०अयमेकः अयमेकइत्याकारिकायां अनेकत्वादिविषयिण्यां बुद्धौ ।

**अपेक्षाबुद्धिज** त्रि० न्यायमतप्रसिद्धे द्वित्वाद्यारभ्य परार्द्धसंख्याभेदे, द्वित्वादिकं हि प्रागुक्तापेक्षाबुद्धितो जायते ।

**अपोगण्ड** त्रि० पुनाति पवते वा पू-ञिच् न पोगण्ड एकदेशोऽस्य । शिशौ, वलिभे, विकलाङ्गे, अतिभीरौ च ।

**अपोढ** त्रि० अप-वह-क्त । निरस्ते, बाधिते च ।

**अपोदका** स्त्री०अपगतमुदकं यस्याः ५ब०। (पूतिका)इति ख्याते शाके

**अपोह** पु०अपगत ऊहो वादिसमुद्भावितस्तर्को यस्मात् ५ब० । वादि-समुद्भाविततर्कनिरासार्थके प्रतिवादिसमुद्भाविततद्विरुद्धे तर्कभेदे । अप+ऊह-घञ् गुणे पररूपम् । त्यागे, अतद्व्यावृत्तौ च ।

**अप्पति** पु० अपां पतिः ६त० । वरुणे समुद्रे च ।

**अप्रकाण्ड** पु० न प्रकाण्डः स्कन्धो यस्य । स्कन्धशून्ये झिण्टिकादौ ।

**अप्रकाश** त्रि० प्र+काश-घञ् न०त० । नाट्ये रङ्गभूमिस्थसामाजिक-

सन्निधाने एव प्रकाश्ये जनान्तिकपदबोधनीये रङ्गस्थपात्रादिबोधा-
योग्ये । परब्रह्मणि न० । न०त० । प्रकाशाभावे, गोपने च पु० ।

**अप्रकृष्टगुण** त्रि० न० न प्रकृष्टः गुणो यस्य न० ब० । व्याकुले ।

**अप्रतिकर** त्रि० न प्रति वैपरीत्ये कृ—अच् न०त० । अप्रतिकूलकरे ।
प्रति+कृ—भावे अप् न०त० । विक्षेपाभावे पु० ।

**अप्रतिरथ** न० न प्रतिकूलो रथो यत्र । युद्धार्थयाने, युद्धसमये यात्रा-
कृतमङ्गले, सामावयवभेदे च । न प्रतिपक्षो रथो रथान्तरमस्य ६ब० ।
अतुल्ये योधे, विष्णौ च पु० ।

**अप्रतिरूपकथा** स्त्री० नास्ति प्रतिरूपा प्रत्युत्तरीभूता कथा यस्याः ।
उत्तरवाक्यरहितायां वाचि ।

**अप्रत्यक्ष** त्रि० ज्ञानभेदः प्रत्यक्षं न० ७ब० । प्रत्यक्षागोचरे अतीन्द्रिये
न० त० । प्रत्यक्षाभावे । न०६ब० । प्रत्यक्षज्ञानशून्ये त्रि० ।

**अप्रधान** न० । न०त० । प्रधानभिन्ने गौणे ।

**अप्रस्तुतप्रशंसा** अप्रस्तुतस्याप्राकरणिकार्थस्याक्षेपादिना प्रशंसा स्तुतिः ।
अलङ्कारप्रसिद्धे अर्थालङ्कारविशेषे । सा च सा० १०परि०द्रष्ट्या ।

**अप्रहत** त्रि० न प्रहन्यते स्म प्र+हन—क्त न०त० । अनाहते अकृष्ट-
भूम्यादौ (खिल)इति ख्याते ।

**अप्राग्र्य** त्रि०प्राग्र्यं प्रधानं न०त० । अप्रधाने ।

**अप्सरस्** स्त्री० बहु० । अद्भ्यः सरन्ति सृ—असुन् समुद्रादुत्पन्न-
त्वात् । उर्वश्यादिस्वर्गवेश्यायाम् । पचाद्यचि । अप्सराप्यत्र स्त्री ।

**अफल** पु० नास्ति फलं यस्य । फलशून्ये (रांझा) इति ख्याते वृक्षे ।
निष्फले वृक्षमात्रे, निष्प्रयोजने वस्तुमात्रे च त्रि० । फलशून्यायां
घृतकुमार्य्यां, भूम्यामलक्याञ्च स्त्री० । [ ख्याते अहिफेने ।

**अफेन** न० अप्रशस्तं फेनं यस्य । वृक्षविशेषनिर्य्यासे ( आफिङ् ) इति

**अब** शब्दे इदित् भ्वादि० आत्म० सक० सेट् । अम्बते आम्बिष्ट ।

**अबद्ध** न० न संबध्यते स्म बन्ध-क्त । समुदायार्थशून्ये निरर्थके वाक्ये ।
स्वार्थे के । अबद्धकमप्यत्र । संबन्धहीने त्रि० ।

**अबद्धमुख** त्रि०न बद्धं नियन्त्रितं मुखमस्य । दुष्टवाक्यवादिनि दुर्मुखे ।

**अबध्य** त्रि० बध—अर्हार्थे यत् न०त० । बधार्हे । यन्द कथम् । अनर्थकवाक्ये न० ।

**अबन्ध्य** त्रि० बन्धे फलप्रतिबन्धे साधु बन्ध—यत् न०त० । सफले ।

**अबल** पु०नास्ति बलं यस्मात् ।५ब०। वरुणवृक्षे तस्य वने हि बलक्षयः। ६ब० । बलरहिते दुर्बले च त्रि० । योषिति स्त्री० ।

**अबाध** त्रि० नास्ति बाधा यस्य । अप्रतिबद्धे, पीड़ाशून्ये च ।

**अबिन्धन** पु० आप इन्धनं दाह्या अस्य । वाड़वाग्नौ वज्राग्नौ च ।

**अब्ज** न० अब्भ्यो जायते जन—ड ५त० । पद्मे "अर्बुदमब्जं खर्वनिखर्व"त्यादिभास्कराचार्य्योक्तेः शतकोटिसंख्यायाञ्च । शङ्खे पु०न० । चन्द्रे धन्वन्तरौ च पु० ।

**अब्जज** पु० अब्जात् विष्णुनाभिपद्मात् जायते जन—ड । वेधसि । "खराशौ,स्वांशगे,सौम्ये लग्नस्थे वा भृगोः सुते । जीवे वाब्जजयोगोऽयं यातुः शत्रुविनाशकृदि"त्युक्तलक्षणे ज्योतिषप्रसिद्धे यात्रिकयोगभेदे च ।

**अब्जभोग** पु०अब्जस्य शङ्खस्य भोग आकार इवाकारो यस्य । वराटके । अब्जस्य पद्मस्य भोगः देहाकारः । पद्मकन्दे ।

**अब्जयोनि** पु० अब्जं योनिरुत्पत्तिस्थानं यस्य। विधातरि ।

**अब्जवाहन** पु०अब्जमिव शुभ्रत्वात् वृषभो वाहनमस्य। वृषवाहने शिवे ।

**अब्जहस्त** पु० अब्जश्चन्द्रो हस्तात् किरणात् यस्य । सूर्य्ये, सूर्य्यकिरणसम्पर्कादेव चन्द्रपादवृद्धिरिति ज्योतिषसिद्धान्तः ।

**अब्जिनी** स्त्री० अब्जानि सन्त्यस्मिन् देशे,अब्जानां समूह इति वा इनि स्त्रीत्वम् । पद्मयुक्तलतायां पद्मसमूहे च । [सूर्य्ये ।

**अब्जिनीपति** पु०अब्जिन्याः पद्मसमूहस्य पतिः। प्रकाशकतयाऽनुकूलः।

**अब्द** पु० अपो ददाति दा—क । मेघे जलदे, (मुथा) इति ख्याते मुस्तके, शैलभेदे च । अब्दा०नि० । सन्त्यस्यमध्यः । वत्सरे ।

**अब्दसार** पु० अब्दस्य मुस्तस्य सारो रसपरिपाकः । कर्पूरभेदे ।

**अब्धि** पु० आपो धीयन्तेऽत्र धा—आधारे कि । जलधौ ।

**अब्धिकफ** पु० अब्धेः समुद्रस्य कफ इव । समुद्रफेने ।

अब्धिद्वीपा स्त्री० अब्धिभिर्वेष्टिताः लवणोदकादिभिः सप्तभिर्वेष्टिता सप्तद्वीपा अस्याम्। क्षाराब्ध्यादिवेष्टितजम्बुप्रभृतिसप्तद्वीपवत्याम् पृथिव्याम्

अब्धिनवनीतक पु० अब्धेः समुद्रस्य नवनीतमिव स्वार्थे क। चन्द्रे।

अब्धिमण्डूका स्त्री० अब्धिं मण्डयति मण्ड–उक गौरा० ङीष्। मुक्तासाधनशुक्तौ।

अब्धिशयन पु० अब्धौ शयनमस्य। विष्णौ, स हि प्रलये अब्धौ शेते।

अब्भक्ष पु० अपोभक्षयति। सर्पभेदे। नित्यं जलपायिनि त्रि०।

अब्भ्र न० अपो बिभर्त्ति भृ–क। मेघे। न बिभर्त्ति किञ्चित् भृ–क द्वित्वम्। अद्वित्वे बकारहीनो वा। गगने।

अब्भ्रंलिह पु० अभ्रं मेघं लेढि अत्युच्चतया स्पृशति। लिह–खश् मुम् च। वायौ। मेघस्पर्शिनि उच्चतमे त्रि०।

अब्भ्रक न० अभ्रमिव कायति राजते कै–क। (आब्र) धातुभेदे।

अब्भ्रङ्कष न० अभ्रं कषति व्याप्नोति शोषयति वा कष–खच् मुम् च। वायौ। अत्युच्चे त्रि०।

अब्भ्रपुष्प न० अभ्रस्य पुष्पमिव शुभ्रत्वात् कार्य्यत्वाच्च। जले। अभ्रमिव पुष्पमस्य ब०। वेतसवृक्षे पु०।

अब्भ्रमातङ्ग पु० अभ्रात्मको मातङ्गः शा०त०। ऐरावते गजे।

अब्भ्रमु स्त्री० अभ्रे अभ्रात्मके ऐरावते माति मा–डु। ऐरावतस्य योषिति।

अब्भ्रमुवल्लभ पु० अभ्रमो वल्लभः ६त०। ऐरावते गजे।

अब्भ्ररोहस् पु० अभ्रात् तच्छब्दात् रोहति रुह–असुन्। वैदूर्य्यमणौ तस्य हि मेघशब्दादुद्भेदः इति प्रसिद्धम्।

अब्भ्रोत्थ न० अभ्रात् तद्विघर्षणादुत्तिष्ठति स्था–क। वज्रे।

अब्र(ब्र)ह्मण्य न० ब्र (ब्र) ह्मणि वेदे साधु ब्रह्मन्+यत्। न०त०। हिंसाया वेदनिन्दितत्वात्। नाट्योक्तौ अयं न बध्य इत्याकारके वाक्ये ब्रह्मण्याभावे च। ब०। ब्रह्मण्यशून्ये त्रि०।

अब्रा(ब्रा)ह्मण पु० अप्राशस्त्ये नञा त०। अपकृष्टविप्रे।

अभ ध्वनौ भ्वा०आत्म० इदित् अक० सेट्। अम्भते अम्भिष्ट।

**अभय** न० भी–अच् न०त० । भयाभावे । द्व० । भयशून्ये त्रि०न भयमस्मात् ५ब० । परमात्मनि, तज्ज्ञाने च । "अभयं वै जनक ! प्राप्तोऽसि" इति श्रुतिः । हरितक्यां स्त्री० ।

**अभयडिण्डिम** पु० अभयार्थं डिण्डिमः । जयढक्कायाम् ।

**अभाव** पु० भू–घञ् न०त० । मरणे अविद्यमानतायाम् । न्यायमते द्रव्यादिषट्कं भावः पदार्थस्तद्भिन्ने ।

**अभाषण** न०भाष-भावे ल्युट् न०त०। मौने ।न०त०। कथनाभावे च ।

**अभि** अव्य० न भाति भा–कि । कश्चित् प्रकारं प्राप्तस्य द्योतने, आभिमुख्ये, अभिलाषे, वीप्सायां, लक्षणे, समन्तादर्थे च ।

**अभिक** त्रि० अभिकामयते अभि+कन्–नि० । कामुके ।

**अभिक्रम** पु० अभि+क्रम–भावे घञ् अवृद्धिः। आरम्भे, आरोहणे, युद्धे, शत्रुसम्मुखयाने । कर्मणि घञि । आरब्धे ।

**अभिख्या** स्त्री० अभि+ख्या–अङ् । अभिधाने, शोभायां, कीर्त्तौ च।

**अभिग्रस्त** त्रि० अभि+ग्रस–क्त । शत्रुभिराक्रान्ते ।

**अभिग्रह** पु० अभि+ग्रह–अप् । (लुट) इतिख्याते, प्रकाशहरणे, अभियोगे, आभिमुख्येनोद्यमे, गौरवे च । ल्युटि अभिग्रहणमप्यत्र न० ।

**अभिघात** पु० अभि+हन–घञ् । प्रहारे, क्रियाभेदेन द्रव्यस्य द्रव्यान्तरेण संयोगविशेषे, यथावर्णोच्चारणकाले कण्ठतालुप्रभृतिषु स्थानेषु वायोः संयोगः । संबध्यमाने च ।

**अभिघातिन्** पु०अभि+हन–णिनि । शत्रौ । प्रागुक्ताभिघातवति त्रि०।

**अभिघार** पु० अभि+घृ–क्षरणे णिच्–भावे अच् । होमे आभिमुख्येन घृतादेः सेचने । कर्म्मणि घञ् । सिच्यमाने घृते ।

**अभिचार** पु० अभि+चर–घञ् । हिंसाफलकेषु मारणोच्चाटनस्तम्भनप्रभृतिषु अथर्ववेदतन्त्रादिप्रसिद्धेषु कर्म्मसु ।

**अभिजन** पु० अभिजन्यतेऽस्मिन्नुजन–घञ् अवृद्धिः । कुले, ख्यातौ, जन्मभूमौ, कुलश्रेष्ठे च । [श्रेष्ठे च । अभि जन्मन्यत्र ।

**अभिजात** त्रि०अभि+प्रशस्तं–जातं जन्म यस्य सतं । कुलीने,पण्डिते

अभिजित् न० ज्योतिषपरिभाषिते उत्तराषाढ़ानक्षत्रस्य शेषचतुर्थांशसहितश्रवणानक्षत्राद्यदण्डचतुष्करूपे राशिचक्रस्यैकविंशात्मककलांशे। अभिमुखीभूय जयति शत्रूननेन अभि+जि-करणे क्विप्। शत्रुजयिनि, यात्रानुकूललग्नभेदे, पञ्चदशधाविभक्तदिनस्याष्टमे भागे स्मृतिप्रसिद्धे कुतपकाले च।

अभिज्ञ त्रि० अभिजानाति अभि+ज्ञा-क। निपुणे, पण्डिते च।

अभिज्ञा स्त्री० अभि+ज्ञा-अङ्। प्रथमसमुत्पन्ने ज्ञाने।

अभिज्ञान न० अभिज्ञायतेऽनेन अभि+ज्ञा-करणे ल्युट्। सोऽयमितिज्ञानसाधने चिह्ने। [ शोभनतायाञ्च।

अभितस् अव्य० अभि+तसिल्। सामीप्ये, आभिमुख्ये, उभयतोऽर्थे,

अभिद्रवण न० अभि+द्रु-ल्युट्। वेगेन गमने। [कारे च।

अभिद्रोह पु० अभि+द्रुह-घञ्। आक्रोशे, अनिष्टचिन्तने, अप-

अभिधा स्त्री० अभि+धाञ्-भावे अङ्। अभिधाने, शब्दनिष्ठे अर्थबोधजनकताशक्तिभेदे च। अभिधीयतेऽनेनेति करणे अङि। वाचकशब्दे। भट्टमते फलजनकव्यापाररूपायां शब्दार्थनिष्ठायां भावनायाञ्च।

अभिधान स्त्री० अभि+धा-भावे ल्युट्। कथने। करणे ल्युट्। संज्ञायां, शब्दार्थप्रतिपादके निघण्टुकोषादिनामके ग्रन्थे च।

अभिधेय त्रि० अभि+धा-कर्मणि यत्। वाक्यार्थे, संज्ञिनि च।

अभिध्या स्त्री० अभि+ध्यै-अङ्। परधनस्याजिहीर्षायां, जिघृक्षायां चिन्तने, विषयप्रार्थनायां च।

अभिनन्द पु० अभि+नन्द-घञ्। सन्तोषे, प्रतिपाद्यगुणकथनादिप्रवर्त्तके ज्ञाने, प्रशंसायाञ्च। ल्युटि। अभिनन्दनमप्यत्र न०।

अभिनय पु० अभि+नी-करणे अच्। हृद्गतभावव्यञ्जके शरीरचेष्टादौ। भावे अचि। अभिनेयपदार्थस्य शरीरचेष्टाभाषणादिभिरनुकरणे। अभिनयति बोधयत्यर्थमत्र आधारे अच्। शरीरचेष्टादिभिर्दृश्यपदार्थज्ञापके रूपकादौ दृश्यकाव्ये।

अभिनव पु० अभि+नु-अप्। स्तवने। प्रा०स०। नूतने त्रि०।

अभिनवोद्भिद् (द्) पु० अभिनवमुद्भिद्य जायते उद्+भिद्-क्विप् क वा। अङ्कुरे।

अभिनहन न० अभि+नह्-ल्युट्। अभितोबन्धने, दृढबन्धने च।

अभिनिर्मुक्त पु० अभितः+सर्व्वतः सायन्तनकर्म्मणा निर्मुक्तः। सूर्य्यास्तकाले निद्रावशात् त्यक्ततत्कालकर्त्तव्यकर्म्मणि।

अभिनिर्याण न० अभि+निर्+या-ल्युट्। जिगीषया गमने।

अभिनिवेश पु० अभितोनिवेशः घञ्। अवश्यमिदं कर्त्तव्यमित्याग्रहसमन्विते मनःसंयोगभेदे, योगशास्त्रप्रसिद्धे मरणभीतिजनके अज्ञानविशेषे, अनित्यैरपि देहादिभिर्वियोगो मा भूदिति मरणनिवारणार्थमाग्रहे च।

अभिनीत त्रि० अभि+नी-क्त। युक्ते, विनीते, अक्रोधने, क्षमावति, भूषिते च। [भिमुख्येन गते च।

अभिपन्न त्रि० अभि+पद्-क्त। अपराधवति, आपद्गते, स्वीकृते, आ-

अभिप्राय पु० अभि+प्र-इण-अच्। आशये, सम्मतौ च।

अभिभव पु० अभि+भू-अप्। पराजये, तिरस्कारे, अनादरे, च।

अभिभूत त्रि० अभि+भू-क्त। किं कर्त्तव्यमिति ज्ञानशून्ये पराभूते, व्याकुले च।

अभिमत त्रि० अभि+मन-क्त। सम्मते, आदृते, अभीष्टे च।

अभिमन्त्रण न० अभि+मन्त्रि-ल्युट्। मन्त्रपाठेन संस्कारकरणे, निमन्त्रणे, आह्वाने च। [चक्षूरोगभेदे।

अभिमन्थ (न्थ) पु० अभि+मन्थ-अच् मन्थ इति पक्षे मन-थ।

अभिमर पु० अभिम्रियतेऽत्र मृ-आधारे अप् बा०। युद्धे, मरणनिरपेक्षतया कृते युद्धोत्साहे च। [पीड़ने च।

अभिमर्द्द पु० अभि+मृद-आधारे घञ्। युद्धे, मद्ये, भावे घञ्।

अभिमान पु० अभि+मन-भावे घञ्। आत्मन्युत्कर्षारोपे, मिथ्यागर्व्वे, अर्थादिदर्पे, ज्ञाने, प्रणये, हिंसायाञ्च।

अभिमुख त्रि० अभिगतो मुखं अस्या० ब०। सम्मुखे। स्त्रियां ङीप्।

अभिमृष्ट त्रि० अभि+मृष-क्त। संमृष्टे, मिलिते, सम्बद्धे च।

अभियुक्त त्रि० अभि+युज–क्त। परैः रुद्धे, आसक्ते व्यवहारविषये, प्रतिवादिनि च। आप्ते दक्षतमे पराक्रान्ते च।

अभियोक्तृ त्रि० अभि+युज–तृच्। व्यवहारे अपराधयोजनकर्त्तरि वादिनि, अभियोगकर्त्तरि च।

अभियोग पु० अभि+युज-भावे घञ्। अन्यकृतस्य निजधर्षणस्य न्टपाय विज्ञापने, युद्धार्थमाह्वाने, अपचिकीर्षयाक्रमणे, आग्रहे, शपथे, उद्योगे च। [प्रिये, मनोहरे च।

अभिराम त्रि० अभिरम्यतेऽस्मिन् रम–आधारे घञ्। सुन्दरे,

अभिरूप पु० अभिरूपयति सर्वं स्वात्मकं करोति णि० रूप–अच्। शिवे विष्णौ च। अभिरूपयते निरूपयति। पण्डिते। उत्कृष्टं रूपं यस्य। कन्दर्पे, चन्द्रे च। मनोहरे त्रि०।

अभिलाप पु० अभिलप्यते संकल्प्यतेऽनेन लप–करणे घञ्। देशकालादिकीर्त्तनपूर्व्वकं विहितकर्म्मैतदहं करिष्ये इत्येवं रूपे वाक्ये। कर्मणि घञ्। शब्दे।

अभिलाव पु० अभि+लू–घञ्। छेदने।

अभिलाष (स) पु० अभि+लष(स)–घञ्। इच्छायां, लोभे च। अभिलासोऽप्यत्रार्थे। [अच्। प्रणामे।

अभिवाद पु० अभि+वद–घञ्। अप्रियवाक्ये। अभि+णि० वद–

अभिवादन न० अभि+णि० वद० ल्युट्। अभिमुखीकरणार्थं वाचिके प्रणामे। आभिमुख्याय आनुकूल्याय वाद्यते आशीः कार्य्यतेऽनेन वद–णिच्–ल्युट्। स्वनामोच्चारणपूर्व्वकं नमने। तत्प्रकारस्तु वाचस्पत्ये।

अभिविधि: पु० अभि+वि+धा–कि। व्याप्तौ, मर्य्यादायाञ्च।

अभिव्यक्त पु० अभि+वि+अन्ज–क्त। उत्पत्त्यादिना प्रत्यक्षयोग्यतामापन्ने

अभिव्यक्ति स्त्री० अभि+वि+अन्ज–क्तिन्। प्रत्यक्षयोग्यतायाम्।

अभिव्याप्ति स्त्री० अभितो–व्याप्तिः वि+आप–क्तिन्। साकल्येन योगे, सर्व्वावयवसम्बन्धे, सर्व्वतोवृत्तौ च।

अभिशप्त त्रि० अभि+शप–क्त। इदं तेऽनिष्टं भूयादित्येवं रूपस्य

गुरुविप्राद्यभिशापस्य उद्देश्ये ।

**अभिशस्त** त्रि० अभि+शन्स—क्त । अयं परस्त्रियं गच्छतीत्यादिना मि-
थ्याशाक्येन मैथुनविषयको दोषारोपो यस्मिन् जने क्रियते तस्मिन् ।

**अभिशस्ति** स्त्री० अभि+शन्स—क्तिन् । स्वर्णस्तेयादिकमनेन कृतमिति
मिथ्यापवादे ।

**अभिशाप** पु० अभि+शप—घञ् । स्वर्णमनेन हृतमित्यादि मिथ्यापवाद-
वाक्यकथने । द्विजगुरुप्रभृतिकर्त्तृके अनिष्टं ते भूयादित्येवमनि-
ष्टाशंसने च । [ 'अभिषङ्गजडं विजज्ञिवान्' इति रघुः ।

**अभिषङ्ग** पु० अभि+सञ्ज—घञ् । पराभवे, आक्रोशे, शपथे, व्यसने च

**अभिषव** पु० अभि+सु—अप् । यज्ञान्तस्नाने, यज्ञे, स्नाने, पीड़ने, सु-
रोत्पादनादिव्यापारे, सोमलतापाने, तत्कण्डने च ।

**अभिषवण** न० अभि+सु—ल्युट् । स्नाने, यज्ञान्ते स्नाने, सोमादि-
कण्डने च ।

**अभिषेक** पु० अभि+सिच्—घञ् । विधिना शान्त्यर्थं, सेचने, अधि-
कारप्राप्त्यर्थं स्नाने, यथा राज्याधिकारार्थं, राज्येऽभिषेकः वाम-
मार्गे शक्तिदीक्षायामधिकारार्थं शाक्ताभिषेकश्च । मन्त्रादिना शिरसि
जलप्रक्षेपमात्रेण मार्जने च ।

**अभिषेणन** न० सेनया शत्रोरभिमुखं यानम् अभि+सेना+णि—ल्युट्
षत्वणत्वे । सेनया शत्रुं योधयितुं तदभिमुखगमने ।

**अभिष्टुत** त्रि० अभि+स्तु—क्त । वर्णिते, स्तुते च ।

**अभिष्यन्द** पु० अभि+स्यन्द—भावे घञ् । अतिवृद्धौ स्रवणे, जला-
दिक्षरणे च । कर्मणि घञ् । अधिके । "स्वर्गाभिष्यन्दवमनमिति"
कुमारः । करणे घञ् । नेत्ररोगभेदे ।

**अभिष्यन्दनगर** पु० अभिष्यन्देन प्रधाननगरातिवृद्ध्या तदतिशयेन
कृतं नगरम् । शाखानगरे । [घञ् । अभिशापे, सन्तापे च ।

**अभिसन्ताप** पु० अभि+सम्+तप—आधारे घञ् । युद्धे । भावे

**अभिसन्धान** न० अभि+सम्+धा—ल्युट् । वञ्चने, प्रतारणे च ।

**अभिसन्धि** पु० अभि+सम्—धा—कि । अभिसन्धाने, उद्देशे च ।

अभिसम्पात पु० अभि+सम्+पत—आधारे घञ् । युद्धे । भावे घञि । पतने ।

अभिसर त्रि० अभितः सरति सृ+ट । सहाये, अनुचरे स्त्रियां ङीप् ।

अभिसर्ज्जन न० अभि+सृज—भावे ल्युट् । दाने, बधे च ।

अभिसार पु० अभि+सृ—घञ् । बले, युद्धे, साहाय्ये, साधने, स्त्रियाः पुंसो वा संभोगार्थं निर्ज्जनसङ्केतस्थानगमने च ।

अभिसारिका स्त्री० अभि+सृ—सारेर्वा ण्वुल् । कान्तप्रार्थनया स्वयं सङ्केतस्थानं गामिन्याम्, स्त्रियाम् ।

अभिसारिणी स्त्री० अभि+सृ—णिनि । अभिसारिकायाम् ।

अभिसृष्ट पु० अभि+सृज—क्त । दत्ते, उत्सृष्टे, त्यक्ते च ।

अभिहार पु० अभि+हृ—घञ् । अपचिकीर्षया अभिगम्याक्रमणे, साक्षात्चौर्य्ये, अभियोगे, कवचादिधारणे च ।

अभीक त्रि० अभिकामयते अभि+कम्—नि० दीर्घः । कामुके, स्वामिनि, क्रूरे, निर्भये च । कवौ पु० ।

अभीक्ष्णम् अव्य० अभिक्ष्णौति अभि+क्ष्णु—अम् दीर्घः। नित्ये, भृशार्थे, भये च । अग० अच् टिलोपः । तद्वति द्रव्ये प्रकृष्टे भये सतते च त्रि० ।

अभीरु स्त्री० भी—क्रुक् न० त० । शतमूल्याम् असङ्कुचितपत्रत्वादभीरुत्वमस्याः । भयशून्ये त्रि० । [शतमूल्याम् ।

अभीरुपत्री स्त्री० न भीरूणि असंकुचितत्वात् पत्राण्यस्याः ।

अभीषङ्ग पु० अभि+सन्ज—घञ् वा दीर्घः । आक्रोशे, शापे च ।

अभीषु पु० अभि+इष—कु । किरणे, (लागाम) इति ख्याते प्रग्रहे, कामे, अनुरागे च ।

अभीष्ट त्रि० अभि+इष—क्त । वाञ्छिते, दयिते, हृद्ये च ।

अभेद पु० भिद+घञ् न०त० । भेदाभावे, तादात्म्ये, अविशेषे च । ब० । विशेषशून्ये, भेदशून्ये च त्रि० ।

अभेद्य न० भिद—कर्म्मणि ण्यत् न०त० । हीरके । भेदनानर्हे त्रि० ।

अभ्यग्र त्रि० अभिमुखमग्रं यस्य । निकटे, आसन्ने च ।

अभ्यङ्ग पु० अभि+अन्ज—भावे घञ् कुत्वम् । तैलादिमर्द्दने ।
अभ्यञ्जन न० अभ्यज्यतेऽनेन अन्ज—करणे ल्युट् । तैलादौ । भावे ल्युटि । अभ्यङ्गे ।
अभ्यधिक त्रि० अभितोऽधिकः । सर्वथोत्तमे ।
अभ्यन्तर न० अभिगतमन्तरम् अत्या० स० । अन्तराले, मध्यस्थाने ।
अभ्यमित त्रि० अभि+अम—रोगे क्त । रोगयुक्ते ।
अभ्यमित्रीण त्रि० अभ्यमित्रमलं गामी ख । शत्रुमभि, सामर्थ्येन गन्तरि ।
अभ्यमित्रीय त्रि० अभ्यमित्रमलं गामी छ । शत्रुमभि, सामर्थ्येन गामिनि ।
अभ्यमित्र्य त्रि० अभ्यमित्रमलं गामी यत् । शत्रुमभि, सामर्थ्येन गन्तरि ।
[दृश्य मतम् । समीपे ।
अभ्यर्ण त्रि० अभि+अर्द—कर्मणि क्त अविदूर्य्ये इडभावः
अभ्यर्हित त्रि० अभि+अर्ह—क्त । उचिते, श्रेष्ठे, पूजिते च ।
अभ्यवकर्षण न० अभि+अव+कृष—ल्युट् । शल्यादेरुद्धारणे ।
अभ्यवस्कन्द पु० अभि+अव+स्कन्द—घञ् । शत्रोराक्रमे, शत्रुभिः क्रियमाणे प्रहारे, आसादने, प्रपाते च । ल्युटि । अभ्यवस्कन्दनमप्यत्रार्थे न० ।
अभ्यवहार पु० अभि+अव+हृ—भावे घञ् । भोजने ।
अभ्यसन पु० अभि+अस—ल्युट् । अभ्यासे पौनःपुन्येनैकक्रियाकरणे ।
अभ्यसूया स्त्री० अभि+असू—उपतापे कण्ड्वादि० यक् प्रत्ययान्तत्वात् अ, स्त्रीत्वात् टाप् । गुणेषु दोषारोपणे ।
अभ्याकाङ्क्षित न० अभि+आ+काङ्क्ष—क्त । मिथ्याभियोगे ।
अभ्याख्यान न० अभि+आ+ख्या-भावे ल्युट् । मिथ्याभियोगे, मिथ्योद्भावने च ।
[थौ । सम्मुखागतमात्रे त्रि० ।
अभ्यागत पु० अभि+आ+गम—क्त । अदृष्टपूर्वे गृहं गतेऽतिअभ्यागम पु० अभि+आ+गम—भावे घञ् अवृद्धिः । विरोधे, अन्तिके ...गमने, भोगे, स्वीकारे, फलसम्बन्धे च । आधारे घञ् । समरे ।

**अभ्यागारिक** पु० अभ्यगारे तद्गतकर्मणि तद्गते व्याप्टतः ठञ्। गृहवृत्तिपुत्रादिपोषणेषु व्याकुले। [आरम्भे च।
**अभ्यादान** न० अभि+आ+दा—भावे ल्युट्। आभिमुख्येनादाने,
**अभ्यान्त** त्रि० अभि+अम—क्त नि०। रोगयुक्ते। [निम्नीभूते।
**अभ्यामर्द** पु० अभि+आ+मृद—आधारे घञ्। रणे। भावे घञ्।
**अभ्याश** पु० अभि+अश्—व्याप्तौ करणे घञ्। अवश्यमेवैत्यर्थे अन्तिके च
**अभ्यास** पु० अभि+अस्—क्षेपे कर्मणि घञ्। आवृत्तौ। गुरोराकर्षणं, तदर्थे युक्तायुक्तत्वविचारः, पौनःपुन्येन तदावृत्तिः, शिष्येभ्योदानमित्येवंरूपविद्याभ्यासे, पौनःपुन्येन कीर्त्तने, अन्तिके, विजातीयज्ञानानन्तरिते सजातीयैकरूपज्ञानप्रवाहरूपे ध्यानादेरभ्यासे च।
**अभ्यासादन** न० अभि+आ+सद—णिच्—ल्युट्। शस्त्राद्यैः शत्रोर्निर्वीर्य्यताकरणे, शत्रोः सम्मुखगमने च।
**अभ्याहार** पु० अभि+आ+हृ—घञ्। अभिहारार्थे। समवहरणे।
**अभ्युच्चय** पु० अभि+उद+चि—अच्। वृद्धौ, उत्कर्षाम्। समुच्चये च।
**अभ्युत्थान** न० अभि+उद्+स्था—ल्युट्। आदरेणासनादित उत्थाने गौरवेणोत्थानादिना प्रत्युद्गमने, उत्थितिमात्रे, उद्यमे उद्भवे च।
**अभ्युदय** पु० अभि+उद्—इण्—अच्। अभीष्टकार्य्याणां प्रादुर्भावे, वृद्धौ, आधारमानचूड़ादिसंस्कारे च। अतएव तदर्थकश्राद्धम् आभ्युदयिकमित्युच्यते। अभ्युदयसाधने इष्टलाभे, वृद्धिनिमित्तके श्राद्धे च।
**अभ्युदित** पु० अभितः सर्वतः उदितं उत्क्रान्तं प्रातर्विहितं कर्म यस्मात्। सूर्य्योदयकाले निद्रयाऽकृततत्कालकर्त्तव्ये ब्रह्मचारिणि। अभित उदिते, प्रकाशिते च त्रि०। [उद्युक्ते।
**अभ्युद्यत** त्रि० अभि+उद्+यम—क्त। अयाचितोपस्थिते फलादौ
**अभ्युपगम** पु० अभि+उप+गम—घञ् अवृद्धिः। स्वीकारे समीपगतौ च। [ भीष्टसम्पादनरूपे अनुग्रहे, सान्त्वने च।
**अभ्युपपत्ति** स्त्री० अभि+उप+पद—क्तिन्। अनिष्टनिवारणपूर्बकाभि-
**अभ्युपाय** पु० अभि+उप+इन्—अच्। स्वीकारे अधिकोपाये

अभ्र गतौ भ्वादि०पर०सक०सेट् । अभ्रति । आभ्रीत् । आनभ्र ।

अभ्रि स्त्री०अभ्रति मलं यस्मात् । अभ्र—गतौ अपादाने इन् । नौकाम-लघर्षणार्थं काष्ठरचिते कुद्दाले । वा ङीप् अभ्रीत्यप्यत्र । [त्रि०।

अभ्रेष पु०भ्रेष—चलने घञ् न०त० । न्याय्ये,उचिते च । चलनशून्ये

अम रोगे चुरा०उभय०अक०सेट् पीड़ने सक० । आमयति ते आमिमत् त ।

अम गतौ,भोजने,अक०सक०शब्दे च भ्वादि०प०सेट् । अमति आमीत्

अम पु०अम—घञ् अवृद्धिः । रोगे । अपक्वफलादौ त्रि० ।

अमङ्गल पु० नास्ति मङ्गलं प्रयोजनं यतः । एरण्डवृक्षे । ६ब० । कुशलशून्ये त्रि० । न०त० । मङ्गलभिन्ने ।

अमत्र न०अमत्यन्नमत्र अम—भोजने आधारे अत्रन् । भोजनपात्रे ।

अमर पु० मृ—पचाद्यच् न०त० । देवे, अष्टशाब्दिकमध्ये अमरसिंहनामके शाब्दिके, स्नुहीवृक्षे, स हि छिन्नोऽपि पुनःपुनः प्ररोहति, सहसा न म्रियते । पारदे, तस्यापि वङ्गादौ बहुतापनेऽपि न ध्वंसः । अस्थिसंहारे च स हि बहुकालं भूमौ स्थितोऽपि न जीर्य्यति । ६ब० मरणशून्ये त्रि० ।

अमरद्विज पु० अमरपूजकः द्विजः शाक० त० । देवले (पूजारीति) ख्याते विप्रे । [इन्द्रगन्धायां स्त्री० काशतृणे पु० ।

अमरपुष्पक पु० अमरमविशीर्णं पुष्पं यस्य कप् । कल्पवृक्षे,

अमरा स्त्री० मृ—पचाद्यच् न०त० । दूर्व्वायां, गुडूच्यां, स्थूणायां, जरायौ, वटवृक्षे घृतकुमार्य्यां च । अर्श आदित्वादच् । देवनगर्य्याममरावत्याम् स्त्री० ।

अमराद्रि पु० अमराणामद्रिः ६त० । सुमेरुपर्वते ।

अमरालय पु० ६त० । अमराणामालयः । स्वर्गे । [नगर्य्याम् ।

अमरावती स्त्री० अमरा विद्यन्तेऽस्यां मतुप् म वः दीर्घः । इन्द्र-

अमर्त्य पु० म्रियते इति मर्त्यः न०त० । मरणशून्ये देवे ।

अमर्त्यभुवन न० अमर्त्यानां देवानां भुवनम् । स्वर्गे ।

अमर्ष पु० मृष—क्षान्तौ घञ् विरोधे न०त० । क्षमाविरुद्धे कोपे ।

अमर्षण त्रि० मृष—ल्यु न०त० । क्रोधने, असहने च ।

**अमल** न० अम+कलच्। अभ्रके। निर्मले, दोषरहिते च त्रि० लक्ष्म्यां, भूम्यालक्यां, नाभिनालायां च स्त्री०।

**अमा** अव्य० न मा–बा० का। सहार्थे, निकटे च। अमावास्यायां तिथौ, चन्द्रस्य सर्वकलाव्यापकतया स्थितायां सूर्य्यकिरणसंपर्कादप्रदीप्तायां कलायाञ्च स्त्री०।

**अमांस** त्रि० नास्ति मांसं यस्य। दुर्बले। मांसहीनो हि दुर्बलः।

**अमात्य** पु० अमा सह वसति त्यक्। मन्त्रिणि। तस्य सहचरत्वात्। [ मनःकष्टदायके दुःखे।

**अमानस्य** न० मानसे साधु न भवति मानस्+यत् न०त०।

**अमाव(वा)स्या** स्त्री० अमा सह वसतश्चन्द्राकौं यत्र वस–यत् यस्य इा कृष्णपक्षशेषतिथौ तद्दिने चन्द्रार्काबेकराशिस्थौ हि भवतः।

**अमित्र** पु० अम–रोगे इत्र। रिपौ।

**अमुक्त** न० मुच–क्त न०त०। सदा धार्य्ये छुरिकाभेदे। मुक्तभिन्ने त्रि०।

**अमुत्र** अव्य० अदस्+त्रल्। परलोके, जन्मान्तरे च।

**अमूर्त्त** त्रि० मूर्त्ति+अर्श आदित्वादच् न०त०। मूर्त्तिशून्ये वाय्वादौ।

**अमूला** स्त्री० नास्ति मूलं यस्याः टाप्। अग्निशिखावृक्षे। मूलशून्ये त्रि०

**अमृत** न० मृ–क्त न०त०। मोक्षे, होमावशिष्टद्रव्ये, सुधायां, जले, घृते, "अमृतं स्यादयाचितमिति" मनूक्ते अयाचितलब्धे च। परब्रह्मणि न०। मरणशून्ये त्रि०। विभीतके स्त्री०।

**अमृतजटा** पु० अमृता जटा यस्याः। जटामांसीवृक्षे।

**अमृतदीधिति** पु० अमृतमिवाप्यायनकरी दीधितिः किरणो यस्य। चन्द्रे। [पटोले पु०।

**अमृतफला** स्त्री० अमृतमिव स्वादु फलं यस्याः। द्राक्षायाम्

**अमृतयोग** पु० ज्योतिषप्रसिद्धायां नक्षत्रविशेषयुक्तायां वारविशेषयुक्तायाञ्च तिथौ। वाचस्पत्ये अमृतशब्दे विवृतिः।

**अमृतवल्ली** स्त्री० अमृताय जीवनसाधनाय वल्ली। गुडूच्याम्।

**अमृतसू** पु० अमृतं दीधितिरूपमाप्यायनं सूते सू+क्विप्। चन्द्रे। अमृतान् देवान् सूते। देवमातरि स्त्री०।

**अमृतसोदर** पु० अमृतस्य सोदर एकत उत्पन्नत्वात् । उच्चैःश्रवसि, । उच्चैःश्रवसो हि समुद्रादुत्पत्तिः। तज्जातीयत्वात् घोटकमात्रे च ।

**अमृतस्रव** स्त्री० अमृतमिव स्रवति स्रु–पचाद्यच् । रुदन्तीलतायाम् ।

**अमृतान्धस्** पु० अमृतमन्धो भक्ष्यं यस्य । देवमात्रे ।

**अमृताशन** पु० अमृतमश्नाति अश–ल्यु । देवमात्रे ।

**अमृताहरण** पु० अमृतमाहरति मातृदास्यनिवारणार्थं स्वर्गात् भूलोकं नयति आ+हृ–ल्यु । गरुडे तस्यामृतहरणवृत्तान्तो महाभारते आदिप० २२अ० । वाचस्पत्ये विवृतिः ।

**अमेधस्** त्रि० नास्ति मेधा यस्य ब० असिच् । मूर्खे, अल्पबुद्धौ च

**अमेध्य** न० मेध्यं पवित्रं न०त० । पुरीषे । पवित्रभिन्ने त्रि० ।

**अमोघ** त्रि० मोघो निष्फलः न०त० । सफले, अव्यर्थे च । नदभेदे पु० । पटोललतायां, हरितक्यां विडङ्गे च स्त्री० ।

**अम्ब** गतौ भ्वादि० पर०सक० सेट् । अम्बति आम्बीत् आनम्ब ।

**अम्बक** न० अम्बति शीघ्रं नक्षत्रस्थानपर्य्यन्तं गच्छति अम्ब–ण्वुल् । नेत्रे । अम्ब्यते स्नेहेनोपगम्यते घञ् स्वार्थे क । पितरि ।

**अम्बर** न०अबि–शब्दे घञ् अम्बः शब्दस्तं राति धत्ते अम्ब+रा-क । शब्दाश्रये आकाशे, मर्मरशब्दयुक्ते वस्त्रे, स्वनामख्याते गन्धद्रव्ये, आकाशनामके अभ्रकधातौ च ।

**अम्बरि(री)ष** न०अम्ब्यते पच्यतेऽत्र अम्ब–ऋरिष । नि० वा दीर्घः । (भाजनाखोला)इति ख्याते भर्ज्जनपात्रे । अम्बरीषमपि । दीर्घयुक्तस्तु विष्णौ, शिवे, भास्करे, बालके, आम्रातकवृक्षे, नरकभेदे, अनुतापे, सूर्य्यवंश्यनृपभेदे च पु० । वाचस्पत्ये विवृतिः ।

**अम्बष्ठ** पु० अम्बाय चिकित्सकशब्दाय तत्प्रख्यापनार्थं तिष्ठतेऽभिप्रैति स्था+क–षत्वम् । चिकित्सके, विप्रात् वैश्यकन्यायां जाते सङ्कीर्णवर्णे, देशभेदे, हस्तिपके च । यूथिकायां स्त्री० स्वार्थे के ह्रस्वे अत इत्वे । अम्बष्ठिकाप्यत्रैव सा च (वामनहाटीति) प्रसिद्धायां आम्लीलतायाञ्च ।

**अम्बष्ठकी** स्त्री० अम्बष्ठं कायति आदानार्थमाह्वयति कै–क गौरा०

ङीप् । (पलाण्डु) इति ख्यातायां लतायां पाठायाञ्च ।

**अम्बा** स्त्री० अम्ब्यते स्नेहेनोपगम्यते अम्ब-कर्म्मणि घञ् । मातरि, नाट्योक्तावपि तत्रैव, अम्बष्ठालतायां, काशीराजकन्यायाञ्च ।

**अम्बाला** स्त्री० अम्बेति शब्दं लाति धत्ते ला-क । मातरि ।

**अम्बालिका** स्त्री० अम्बालैव स्वार्थे के ह्रस्वे अत इत्त्वम् । मातरि, काशीराजकन्यायां विचित्रवीर्य्यपत्न्यां पाण्डुराजमातरि च ।

**अम्बिका** स्त्री० अम्बैव स्वार्थे के ह्रस्वे अत इत्त्वम् । मातरि,काशी-राजसुतायां विचित्रवीर्य्यपत्न्यां धृतराष्ट्रराजमातरि,जगदुत्पादकत्वात् दुर्गायाम्, अम्बष्ठालतायाम् (कट्कीति) ख्यातायाम् लतायाञ्च ।

**अम्बु** न०अबि शब्दे-उण् । जले ।(रास्ना)इति ख्यातायां लतायां स्त्री० ।

**अम्बुकण्टक** पु० अम्बुनः कण्टकमिव । कुम्भीरे, शृङ्गाटके च ।

**अम्बुकिरात** पु० अम्बुनि किरात इव हिंस्रः । कुम्भीरे ।

**अम्बुकीश** पु० अम्बुनि कीशः वानर इव ।(शुशुक) इति ख्याते शिशु-मारे जलजन्तुभेदे ।

**अम्बुचामर** न० अम्बुनि चामरमिव ७त०। शैवले ।

**अम्बुज** न०अम्बुनि जायते जन–ड । पद्मे, चन्द्रे (हिजल्) इति ख्याते वृक्षे च पु० । शङ्खे पु०न० ।

**अम्बुद** पु० अम्बु ददाति दा–क । मेघे, मुस्तके च ।

**अम्बुधि** पु० अम्बूनि धीयन्तेऽत्र धा+आधारे कि ६त० । समुद्रे ।

**अम्बुवाची** स्त्री० "यस्मिन् वारे सहस्रांशुर्य्यत्काले मिथुनं व्रजेत् । अम्बुवाची भवेन्नित्यं पुनस्तत्कालवारयोरिति" ज्योतिषोक्तेः "रजोयुक् स्यादम्बुवाची स्यात्" इति स्मृतेश्च सूर्य्याक्रान्तार्द्रानक्षत्र-प्रथमचरणे जातरजस्कायां भूमौ । [कायां हतकुमार्य्याम् ।

**अम्बुधिस्रवा** स्त्री० अम्बुधिरिव स्रवति स्रु–अच् । पत्रान्तर्बृहद-

**अम्बुपत्रा** स्त्री०अम्बूनि पत्रे यस्याः। उच्चटावृक्षे । वा ङीप् । तत्रैव ।

**अम्बुप्रसाद** पु० अम्बूनि प्रसादयति प्र+सद–णिच् अण् उप०स० । (निर्मलीति) प्रसिद्धे कतकवृक्षे ।

**अम्बुभृत्** पु० अम्बूनि बिभर्त्ति भृञ्–क्विप् । समुद्रे, मेघे, मुस्तके च ।

अम्बुमात्रज पु० अम्बुमात्रे जलमात्रे जायते जन–ड । (शामुक) इति ख्याते शम्बूके । [स्त्रियां स्त्री० ।

अम्बुरुह न० अम्बुनि रोहति जायते रुह–क । पद्मे । स्थलप-

अम्बुवासिनी स्त्री० अम्बुनि जलप्रधाने वसति वस–णिनि । पाटलावृक्षे । [मुस्तके च ।

अम्बुवाह पु०अम्बूनि वहति वह–अण् उप०स० । मेघे, तन्नामनामके

अम्बुवाहिनी स्त्री० अम्बूनि वाहयति नौकातः वहिःप्रसारयति वह+णिच्–णिनि । काष्ठादिरचिते नौकाजलसेचनीपात्रे ।

अम्बुवेतस पु० अम्बुजातोवेतसः शाक०त० । जलवेतसे ।

अम्बुशिरीषिका स्त्री० अल्पः शिरीषः अल्पार्थे के स्त्रीत्वम् । ७त० । जलशिरीषे । [ख्यातायां जलौकायाम् ।

अम्बुसर्पिणी स्त्री०अम्बुनि सर्पति सृप–णिनि ७त० । (जोंक)इति

अम्बूकृत त्रि० अनम्बु अम्बु कृतं अम्बु श्लेष्मात्मकाम्बु उपचारात्त-द्युक्तं ततः च्वि–कृ–क्त । निष्ठीवनयुक्ते वचसि ।

अम्भस् न० अभि–शब्दे असुन् । जले, बालानामौषधौ च ।

अम्भःसार न० अम्भसः सारः वा शरीति वा विसर्गः । मुक्तायाम् । सत्वे अम्भस्सारमपि तत्रैव ।

अम्भोज न० अम्भसि जायते जन–ड ७त० । पद्मे सारसविहगे । चन्द्रे पु० । शङ्खे पु० न० । जलजातमात्रे त्रि० । [पद्मसमूहे ।

अम्भोजख(ष)ण्ड न० अम्भोजानां समूहः अम्भोज+ख(ष)ण्डच् ।

अम्भोजयोनि पु० अम्भोजः हरिनाभिपद्मं योनिः उत्पत्तिस्थानं यस्य । विधातरि ।

अंम्भोजिनी स्त्री० अम्भोज+समूहार्थे, तद्वति देशे वा इनि । पद्मस-मूहे, पद्मयुक्तदेशे लताह्मे च । [कर्त्तरि त्रि० ।

अम्भोद पु० अम्भो ददाति दा–क । मेघे मुस्तके च । जलदान-

अम्भोधर पु० अम्भोधरति धृञ–धारणे अच् । मेघे । समुद्रे, मुस्तके च ।

अम्भोधि पु० अम्भांसि धीयन्ते यत्र धा–आधारे कि । समुद्रे ।

**अम्भोनिधि:** पु० अम्भांसि निधीयन्तेऽत्र नि+धा–कि । समुद्रे ।
**अम्भोराशि** पु० अम्भसां राशिरिव एकत्रोपचितत्वात् । समुद्रे ।
**अम्भोरुह** न० अम्भसि रोहति रुह–क । पद्मे । सारसखगे च ।
**अम्मय** त्रि० अपां विकारः अप्+मयट् । जलविकारे फेनादौ ।
**अम्र** पु० अमति सौरभेण दूरं गच्छति अम–रन् । आम्रवृक्षे । फलपत्रादौ न०। एवं प्रायः सर्वत्र वृक्षवाचकेषु ।
**अम्रात** पु० अम्लं रसं सर्व्वत्र पत्रपुष्पादौ अतति व्याप्नोति अत–अण् रस्य वा लत्वम् । (आमड़ा) अम्रातकवृक्षे स्वार्थे क अम्रातकोऽपि तत्रार्थे । वा रत्वाभावे अम्लाभः अम्लातकस्य तत्रार्थे ।
**अम्ल** न० अम–क्त । (घोल) तक्रे । (टक) रसे पु० । तद्वति त्रि० ।
**अम्लक** पु०अल्पोऽम्लः अल्पार्थे कन् । (मान्दार) लकुचवृक्षे ।
**अम्लकेशर** पु० अम्लः केशरोऽस्य । वीजपूरे (गोँड़ानेवु) ।
**अम्लचूड़** पु० अम्ला चूड़ा शिखाऽस्य । अम्लशाके ।
**अम्लजम्वीर** पु० अम्लो जम्बीरः । (गोँड़ानेवु) जम्बीरवृक्षे ।
**अम्लनायक** पु० अम्लं रसं नयति नी–ण्वुल् । अम्लवेतसे ।
**अम्लनिशा** स्त्री०अम्लरसे निःशेषेण शेते शीङ्–ड । शठीवृक्षे ।
**अम्लपत्र** पु०अम्लं पत्रं यस्य । अश्मन्तकवृक्षे ।
**अम्लपत्री** स्त्री० अम्लं पत्रं यस्याः । पलाशीलतायाम् ।
**अम्लपनस** पु०अम्लः पनसः कर्म० । (मान्दार) लकुचवृक्षे ।
**अम्लफल** पु० अम्लं फलं यस्य । (तेँतुल) इतिख्याते वृक्षाम्ले ।
**अम्लवन्धरा** स्त्री०अम्ब–कर्मणि यत् ७त०। अम्लासंवद्धे, कन्दभेदे ।
**अम्लभेदन** पु० अम्लार्थं भिद्यतेऽसौ कर्मणि ल्युट् । अम्लवेतसे ।
**अम्लरुहा** स्त्री० अम्लाय रोहति रुह–क । मालवजनागवल्ल्याम् ।
**अम्ललोनि(णि)का** स्त्री० अम्लं रसं लाति गृह्णाति अम्ललः तम् नयति अत्युग्राम्लत्वात् क्षीनयति जन–ण्वुल् वा पु० णत्वम् । (आमरुल)इति ख्याते लताभेदे ।
**अम्लवती** स्त्री०अम्लो रसो विद्यतेऽस्याः अम्ल+मतुप् वः (आमरुल) इति ख्याते लताभेदे ।

**अम्लवाटिका** स्त्री० अम्लस्य रसस्य वाटिका स्थानमिव । नागवल्लीभेदे ।
**अम्लवास्तूक** पु० अम्लरसान्वितोवास्तूकः शाकभेदः । (चुकपालङ्ग) इति ख्याते चुक्रे ।
**अम्लवीज** न० अम्लस्य वीजं कारणम् । (तेँतुल) वृक्षाम्ले ।
**अम्लवृक्ष** न० अम्लो रसो वृक्षेऽपि यस्य । (तेँतुल) वृक्षाम्ले ।
**अम्लवेतस** पु० अम्लोवेतसइव नम्रश्च ।(चुका) इति ख्याते चुक्रे ।
**अम्लशाक** पु० अम्लः शाको यस्य । चुका इतिख्याते चुक्रे ।
**अम्लसार** पु० अम्लो रसएव सारः प्रधानं यस्य । चुक्रे निम्बुके, हिन्ताले च । काञ्जिके न० । [ वृक्षे ।
**अम्लहरिद्रा** स्त्री० अम्लरसान्विता हरिद्रा । (आमहरिद्रा)इति ख्याते
**अम्ला** स्त्री०अम्लो रसो भूम्ना विद्यतेऽस्या अर्शआद्यच् । तिन्तिड्याम् ।
**अम्लाङ्कुश** पु० अम्लम् अङ्कुशाकारमग्रं यस्य । चुक्रे ।
**अम्लादन** पु० अद्यते अद्–कर्मणि ल्युट् कर्म० । कुरण्टकवृक्षे ।
**अम्लान** पु० म्लै+क्त–न०त० । (आमला) इति ख्याते महासहावृक्षे । म्लानभिन्ने त्रि० ।
**अम्लिका** स्त्री०अम्लैव स्वार्थे क । तिन्तिड्याम् । अत्राम्लीकेत्यपि पृषो० ।
**अय** गतौ भ्वा० आत्म० सक० सेट् । अयते आयिष्ट । अयाञ्चक्रे ।
**अय** पु० एति सुखमनेन इण्–करणे अच् । प्राक्तने शुभकर्मणि, शुभदायके–दैवे विधाने च । [ भेदे । अयःस्थानमप्यत्र ।
**अयःपान** न० अयः, द्रवीभूतं तप्तलौहं पीयतेऽत्र ल्युट् । नरक-
**अयःशूल** न० अय इव शूलम् उपतापकम् । तीव्रे उपतापे, लौहकृतास्त्रभेदे च, अयश्शूलमप्यत्र । [माघे पु० ।
**अयज्ञिय** त्रि० यज्ञाय साधुर्न भवति यज्ञ+यत् न०त० । यज्ञानर्हे ।
**अयन** न० अय–भावे ल्युट् । गतौ, दक्षिणत उत्तरस्याम्, उत्तरतश्च दक्षिणस्यां सूर्य्यस्य गतौ, तथाहि द्वादशराश्यात्मकस्य राशिचक्रस्यार्द्धं मकराद्यधिमिथुनपर्य्यन्तं राशिषट्कं क्रमेण उत्तरावनतं तत्र स्थितोऽर्कः स्वगत्या प्राचीं गच्छन्नपि किञ्चित् किञ्चित्तिर्य्यग्गत्या उत्तरामभिक्रामति ततः कर्कटाद्यधिधनुःपर्य्यन्तं राशिषट्कं

क्रमेण दक्षिणायनं तत्र स्थितोऽर्कः प्रागवत् दक्षिणामेवाभिक्रामति सेयं गतिरयनशब्देन ज्योतिषे व्यवह्रियते एवञ्च सौरैः षड्भिर्मासैरेकमयनमित्यपि तत्र प्रसिद्धम्। "अयनविषुपदीषडशीतय" इत्युक्तेरयनाख्यसंक्रान्तौ, सा हि पारिभाषिकायनशब्द-वाच्या। नभोमण्डले प्रवहानिलेन पश्चात्कृत्या बंभ्रम्यमाणस्य राशिचक्रस्य निराधारतया दोलायमानत्वेन सप्तविंशांशपर्य्यन्तं प्राक्,पश्चाच्च या गतिर्भवति तत्रापि तद्धि अष्टमासाधिक ६६, ८। षट्षष्टिवर्षैरेकैकमंशमतीत्य प्राक्, पश्चाद्वा चलतीति १८०० अष्टा-दशशतवर्षैः सप्तविंशांशपर्य्यन्तं प्राक् गत्वा पुनः पश्चात्, पश्चाद्गत्वा च प्रागवलम्बते। यदा चैवं राशिचक्रं प्राक् गच्छति तदा राशि-चक्रनिर्दिष्टमेषादिस्थानात् उक्तकालभेदेनैकैकांशातिक्रमेण क्रमशः प्राचि, प्राक्तरे, प्राक्तमे, वा स्थाने रव्यादिग्रहाणां प्रभापुञ्जस-ञ्चारः यदा तु पश्चादवलम्बते तदा निर्दिष्टमेषादिस्थानात् तथैव परे, परतरे, परतमे, च स्थाने ग्रहाणां प्रभासञ्चार इति भेदः। इदानीञ्च पश्चिमायनं ततः पश्चादेव ग्रहप्रभासञ्चारः। तथाच ज्योतिषोक्तगणितरीत्या मेषादितः पश्चादेकविंशांशे मीनादि-नवमांशे एवेदानीं विषुवादिसंक्रान्तिर्भवति एवं विष्णुपद्यादीना-मपि तत्तदंश एव ग्रहप्रभासञ्चारः। अयञ्चायनानुसारेण ग्रह-प्रभासञ्चारस्वीकारः दिनमानविशेषस्य लग्नपरिमाणस्य, छायापद-विशेषस्य, च बोधार्थमिति सिद्धान्ते प्रसिद्धम्। करणे ल्युट्। उक्तायनज्ञानसाधने शास्त्रे, "ज्योतिषामयनञ्चैवेति" सैन्यनिवेशवि-शेषव्यूहप्रवेशमार्गे च "अयनेषु च सर्वेषु यथाभागमवस्थिताः" इति गीता। आधारे ल्युट्। पथि, गृहे, आश्रये, स्थाने, "ता यदस्यायनं पूर्वमिति" मनुः। प्रागुक्तराशिचक्रस्य अंशरूपे गतिस्थानविशेषे च "तत्काले सायनार्कस्येति" नीलकण्ठः।

**अयनसंक्रान्ति** स्त्री० अयनेन राशिचक्रस्य पश्चात्, प्राग्वा गत्या कृता संक्रान्तिर्ग्रहाणां प्रभापुञ्जस्य सञ्चारः सम्+क्रम—क्तिन् ६त०। चल-संक्रान्तौ, मेषादिभिर्द्वादशसु स्थानेषु विभक्तस्य राशिचक्रस्य प्राक्-

पश्चाद्वा दोलायमानतया मिहिष्टमेषादिस्थानात् पश्चात् पूर्वं वा ग्रहप्रभापुञ्जसञ्चारः आक्रान्तराशिं विहाय राश्यन्तरे गमनं चल-संक्रान्तिः अनियतस्थानतया चलत्वात्। मिहिष्टराशिस्थानेषु ग्रहाणां मण्डलसञ्चारः अचलसंक्रान्तिः राशिसंक्रान्तिरिति चोच्यते नियतमेकस्थाने एव जायमानत्वादचलत्वम्। अनयैव संक्रान्त्या यथा मासादिव्यवहारे न दोषः चलसंक्रान्त्या तु बहवो दोषास्तथा वाचस्पत्ये वच्यते। [चलति।

**अयस्** न० इण–असुन्। लौहे, तद्धि स्थावरमध्ययस्कान्तसान्निध्यात्

**अयस्कान्तः** पु० अयसां मध्ये कान्तः रमणीयः कस्कादित्वात् सत्वम् (कान्तिलौह) इति ख्याते लौहभेदे। ६त०। सन्निधिमात्रेण लौहाकर्षके(चुम्बक)इतिख्याते प्रस्तरभेदे च अयसांप्रियत्वात्तथात्वम्।

**अयस्कार** पु० अयस्+कृ–अण् उप०स०। लौहकारे।

**अयाचित** न० याच–क्त न०त०। अमृताख्यवृत्तौ "अमृतं स्यादयाचितम्" इति मनुः। अप्रार्थिते त्रि०।

**अयि** अव्य० इण्–इन्। प्रश्ने, अनुनये, संबोधने, अनुरागे च।

**अयुकछद** पु०अयुजः सप्त सप्त छदा अस्य वृत्तौ संख्याया वीप्सार्थत्वम्। (छातिम) इतिख्याते सप्तपर्णवृक्षे। [छिते, आपन्नते च।

**अयुक्त** त्रि० न+युज–क्त। विषयासक्ततया कर्त्तव्ये अनवहिते, अनु-

**अयुग्म** न० न युग्मात्मकम्। (बिजोड़) इति ख्याते विषमे।

**अयुग्मच्छद** पु०अयुग्माः सप्त सप्त छदा अस्य। सप्तपर्णवृक्षे तस्य हि प्रत्येकपल्लवे सप्त सप्त पर्णानि विद्यन्ते। [दशसहस्रसंख्यायां न०।

**अयुत** त्रि०यु–मिश्रणे अमिश्रणे वा क्त न०त०। असंयुक्ते। संयुक्ते च

**अये** अव्य० ईण्–एच्। कोपे, विषादे, संभ्रमे स्मृतौ, संबुद्धौ च।

**अयोग** पु० युज–घञ् न० त०। योगाभावे, कुयोगे वियोगे च। न० ब०। विधुरे, कूटे, कठिनोद्यमे च।

**अयोगवः** पु० अय इव कठिना गौर्वाणी यस्य नि० अच्। शूद्रात् वैश्यायां जाते प्रतिलोमजे सङ्कीर्णवर्णे।

**अयोगवाह** पु०अइउण् इत्यादिषु चतुर्दशसु अक्षरसमाम्नायसूत्रेषु

नास्ति योगः पाठादिरूपःसंबन्धो येषां ते तथापि वाहयन्ति प्रत्यया-त्वादिकार्य्यादिकं निष्पादयन्ति वाहेः अच् कर्म० । "अनुस्वारो विसर्गश्च+क+पौ चैव पराश्रितौ । अयोगवाहाविज्ञेया आश्रय-स्थानभागिनः" इति शिक्षोक्तदुपदिष्टेषु अनुस्वारविसर्गादिषु ।

अयोगुल पु० गुलः गोलाकारः अयसा निर्मितोगुलः । (गोलीति) ख्याते लौहगुटिकायाम् ।

अयोऽग्र न० अयोऽग्रे मुखे यस्य । मुषले तस्य मुखे लौहबद्धत्वात् ।

अयोघन पु० अयांसि हन्यन्तेऽनेन हन—अप् घनादेशश्च नि० । (हा-तुड़ीति) ख्याते लौहमुद्गरे । [ र्य्याम् । योधनामर्हे त्रि० ।

अयोध्या स्त्री० युध ण्यत् न०त० । सरयूतीरे स्वनामख्यातायां नग-

अयोनिज पु० योनौ उपचारात् मातरि न जायते । परमेश्वरे । रामपत्न्यां सीतायां स्त्री० । योनितोऽनुत्पन्ने त्रि० ।

अयोमल न० अयसो मलइव । (लौहगूय) इति ख्याते लौहमले ।

अर न० ऋ—अच् । चक्रस्य नाभिनेम्योर्मध्यस्थे काष्ठे, शीघ्रे च शीघ्र-तादिगुणवति त्रि० । स्वार्थे के । शैवाले । पर्पटे (पापडीति) ख्याते पु० ।

अरघट्ट(क) पु०अरं शीघ्रं घट्टते चाल्यतेऽसौ घट्ट—कर्मणि अच् । महाकूपे, तदुपरि निबद्धजलोत्तोलनकाष्ठे च । स्वार्थे क । तत्रैव ।

अरजस् त्रि० रन्ज असुन् नलोपः न०त० । रजोगुणकार्य्यकामक्रो-धादिशून्ये । अनार्त्तवायां नग्निकायां स्त्री० धूलिशून्ये त्रि० ।

अरणि पु० ऋ—अणि । सूर्य्ये, (गणियारीति) ख्याते वृक्षे । ऋच्छति प्रापयत्यग्निम् । अग्निमन्थनकाष्ठे द्वि० । स्त्रियां ङीप् ।

अरणिक पु० अरणये अग्निमन्थनकाष्ठाय साधु ठन् । अग्निमन्थनका-ष्ठसाधने अग्निमन्थवृक्षे । [पु० ।

अरण्य पु० अर्य्यते शेषे वयसत्र ऋ—आधारे अन्य । वने, कट्फलवृक्षे

अरण्यकदली स्त्री० अरण्ये कदली । गिरिकदल्यां तस्याः ग्रा-मादावनुत्पत्तेः । [ ख्यातायां वनकार्पास्याम् ।

अरण्यकार्पासी स्त्री० अरण्ये कार्पासी । (बनकापास) इति

**अरण्यकुलत्थिका** स्त्री० अरण्यस्य कुलत्थिका स्वल्पकुलत्था। (वनकुल-थीति) ख्यातायां कुलत्थिकायाम्।

**अरण्यकुसुम्भ** पु० ६त०। वनकुसुम्भे।

**अरण्यचटक** पु० ६त०। वनचटके। [ इति ख्याते वनार्द्रके।

**अरण्यजार्द्रक** न० अरण्ये जायते जन+ड कर्म०। (वनआदा)

**अरण्यजीर** पु० ६त०। वनजीरके।

**अरण्यधान्य** न० ६त०। नीवारादौ वनधान्ये।

**अरण्यमक्षिका** स्त्री० ६त०। (डाँस) इति ख्याते दंशे।

**अरण्यमुद्ग** पु० ६त०। वनमुद्गे।

**अरण्यवायस** पु० ६त०। (दांड़काक) इति ख्याते द्रोणकाके।

**अरण्यवास्तूक** पु० ६त०। (वनवेतो) इति ख्याते वनवास्तूकशाके।

**अरण्यशूरण** पु० शा०त०। वनभवे (ओल) इति ख्याते वनशूरणे।

**अरण्यश्वा** पु० अरण्ये श्वेव हिंस्रः। वृके।

**अरण्यषष्ठी** पु० अरण्याय गन्तुं षष्ठी। ज्यैष्ठशुक्लषष्ठ्याम्। "ज्यैष्ठे मासि सिते पक्षे षष्ठी यारण्यसंज्ञिता। व्यजनैककरास्त-स्मामटन्ति विपिने स्त्रियः" इति स्मृतिः।

**अरण्यानी** स्त्री० महदरण्यं नि०ङीष् आनुक् च। महारण्ये।

**अरति** पु० ऋ—अति। क्रोधे रम—क्तिन् न०त०। अनवस्थितचित्त-तायाम्, रागाभावे, रतिविरहे, उद्वेगे, "स्वाभीष्टवस्त्वलाभेन चे-तसो यानवस्थितिः अरतिः स" इत्येवं रूपे इष्टवियोगान्मनसोव्या-कुलीभावे च स्त्री०। न०ब०। रागहीने त्रि०

**अरत्नि** पु० ऋ—कत्नि रत्निः बद्धमुष्टिकरः स नास्ति यत्र। विस्तृतक-निष्ठे बद्धमुष्टिहस्ते, तत्परिमाणे, कफोणौ च।

**अरम्** अव्य० अल—अम् वा लस्य रत्वम्। वक्ष्यमाणेऽलमर्थे शीघ्रतायाञ्च।

**अरर** त्रि० ऋ—अरन्। कवाटे अपिधाने च।

**अरे** अव्य० अरं शीघ्रं राति रा—डे। शीघ्रं प्रत्युत्तरलाभेच्छया कृते क्षतिव्ययतया संबोधने।

**अरणु (लु)** पु० ऋ—अनु या वात्वम्। (शोना) श्योनाकवृक्षे।

**अरविन्द** न० अरान् चक्राङ्गानीव पत्राणि विन्दते विद+श । पद्मे, सारसपक्षिणि, नीलोत्पले, रक्तकमले, ताम्रे च ।

**अराति** पु० न राति ददाति सुखं रा+क्तिच् न०त० । शत्रौ ।

**अराल** पु० ऋ-णिच् अर् अरमालाति आ+ला-क । सर्ज्जरसे मत्तहस्तिनि । कुटिले त्रि० । वेश्यायां स्त्री० ।

**अरि** पु० ऋ-इन् । शत्रौ रथाङ्गे, चक्रे, विट्खदिरे, षट्सु, कामक्रोधादिषु तत्संख्यासाम्यात् षट्संख्यायां, ज्योतिषप्रसिद्धे लग्नावधिके षष्ठस्थाने ईश्वरे, तन्त्रोक्तमन्त्रभेदे, राज्ञो विषयानन्तरस्थे नृपतौ । प्रेरके त्रि० ।

**अरित्र** न० ऋच्छत्यनेन ऋ-इत्र ।(हालि) इति ख्याते नौकाचालनकाष्ठे ।

**अरिमर्द** पु० अरिं रोगरूपं शत्रुं मृद्नाति मृद-अण् उ०स० । कासमर्द्दवृक्षे । शत्रुतापके त्रि० ।

**अरिमेद** पु० अरेर्विट्खदिरस्येव मेदः सारः गन्धोऽस्य । (गुयेबाबला) वृक्षभेदे । अरिरिव मेदयति वृक्षत्वात् अलं स्निह्यति मिद-अच् । विट्खदिरे । कृमिभेदे ।

**अरिषडष्टक** न० षट् च अष्टौ च द्व०ततः परिमाणार्थे कन् षडष्टकम् अरिस्वामिकं षडष्टकं शाक०त० । विवाहे वर्ज्जनीये योगविशेषे, तथाहि दम्पत्योः परस्परराश्यपेक्षया परस्परस्वराशेः षष्ठत्वे अष्टमत्वे वा अशुभं, तयोः राश्योर्मित्रस्वामिकत्वे पुनर्न दोषः शत्रुस्वामिकत्वे अतीव दोषः ।

**अरिषड्वर्ग** पु० षण्णां वर्गः समुदायः षड्वर्गः अरीणां कामक्रोधलोभमोहमदमात्सर्य्यरूपाणामन्तःशत्रूणां षड्वर्गः देवीभागवतवत् विष्णुभागवतवच्च गमकतया समासः । कामादिषु षट्स्वान्तरेषु शत्रुषु ।

**अरिष्ट** पु० रिष हिंसायां कर्त्तरि-क्त न०त० । लशुने, निम्बे, वृष-भासुरे, असुरभेदे, काके, कङ्कपक्षिणि, (रीठा) इति ख्याते फेनिलवृक्षे च । अशुभे, मरणचिह्ने तक्रे, मद्यभेदे, सूतिकागारे,

मद्ये च न० । ५ ब० । शुभे । स्वार्थे के । निम्बे, फेनिले वृक्षे च पु० ।

**अरिष्टताति** पु० अरिष्ट+तातिल् । शुभार्थंसने । शुभङ्करे त्रि०

**अरिष्टसूदन** पु० अरिष्टमसुरं सूदयति सूद+ल्यु । विष्णौ । अशुभनाशके त्रि० ।

**अरुचि** पु० न रुचिर्यत्र । सत्यप्यभिलाषे भोजनायोग्यतासम्पादके रोगभेदे । न रुचिः सन्तोषः न०त० । सन्तोषाभावे ।

**अरुज** पु० न रुजति रुज–क । (सोँदाल) इति ख्याते वृक्षे । रोगशून्ये नीरोगे च त्रि० ।

**अरुण** पु० ऋ–उनन् । सूर्ये, सूर्यसारथौ, गुडे, सन्ध्यारागे, निःशब्दे, दानवभेदे कुष्ठभेदे, पुन्नागवृक्षे अव्यक्तरागे च । कृष्णमिश्रितरक्ते वर्णे पु० तद्वति त्रि० । कुङ्कुमे, सिन्दूरे च न० । मञ्जिष्ठायां श्यामाकायाम्, अतिविषायां नदीभेदे कदम्बपुष्पायाञ्च स्त्री० ।

**अरुणलोचन** पु० अरुणे रक्ते लोचने यस्य । पारावतपक्षिणि

**अरुणसारथि** पु० अरुणः सारथिर्यस्य । सूर्ये ।

**अरुणानुज** पु० ६त० । गरुडे । अरुणावरजादयोऽप्यत्र ।

**अरुणोदक** न० अरुणमुदकं यस्य । सरोवरभेदे, नदीभेदे स्त्री० ।

**अरुणोदय** पु० अरुणस्यार्कस्य तत्किरणस्योदयो यत्र । "चतस्रो घटिकाः प्रातररुणोदय उच्यते" इत्युक्ते सूर्योदयात् प्राक्चतुर्दण्डकाले । [रात् भूमौ पतन्त्यां नद्याम् ।

**अरुणोदा** स्त्री० अरुणमुदकं यस्या उदकस्योदः । मन्दराद्रिशिख-

**अरुणोपल** पु० अरुण उपलः । (चुनीति) ख्याते पद्मरागे ।

**अरुन्तुद** त्रि० अरुंषि मर्म्माणि तुदति तुद–खश् मुम् च । मर्म्मपीडके, हृदयग्रन्थिरूपमर्म्मस्थानस्पर्शकारके च ।

**अरुधती** स्त्री० अव्युत्पन्नः । वशिष्ठपत्न्याम् ।

**अरुष्क** पु० अरुर्म्मर्म्मस्थानं कायति पीडयति कै–क । स्पर्शमात्रेण व्रणकारके भल्लातकवृक्षे ।

**अरुष्कर** पु० अरुर्व्रणं करोति अरुस्+कृ+अच् । भल्लातकवृक्षे । व्रणकारिणि त्रि० । [ घृते च पु० न० ।

**अरुस्** पु० ऋ-उसि । अर्के, रक्तखदिरे च । मर्मणि न० । व्रणे,

**अरुहा** स्त्री० न किञ्चिन्मूलमाश्रित्य रोहति आकाशे एव रोहति रुह्+क । भूम्यामलक्याम् ।

**अरे** अव्य० ऋ-ए । रोषाह्वाने, नीचसम्बोधने, अपरतौ, असूयायाञ्च

**अरे,रे** अव्य० अरे+वीप्सायां द्विरुक्तिः । नीचसम्बोधनादौ ।

**अरोक** त्रि० रुच-दीप्तौ घञ् रोकश्छिद्रं दीप्तिश्च न० ब० । छिद्रशून्ये, दीप्तिशून्ये च ॥ [कृत् त ।

**अर्क** तापे, स्तुतौ च चुरा०उभ०सक०सेट् । अर्कयति ते आर्च-

**अर्क** पु० अर्च्-कर्मणि घञ् कुत्वम् । सूर्ये, इन्द्रे, ताम्रे, स्फटिके, विष्णौ, पण्डिते, (आकन्द)इति ख्याते वृक्षे, (आरक)इति ख्याते क्वाथविशेषे च ।

**अर्ककान्ता** पु० अर्कोऽर्ककिरणः कान्तोऽनुकूलो यस्याः कम-क्त (हुड्हुडिया) इति ख्याते वृक्षे । ६त० । सूर्यप्रियायाम्

**अर्कचन्दन** पु० अर्कस्य प्रियश्चन्दनः शाक०त० । रक्तचन्दने ।

**अर्कतनय** पु० ६त० । सुग्रीवे, कर्णे, यमे, शनौ, वैवस्वतमनौ च । यमुनायां स्त्री० । द्विवचनान्तः । अश्विनीकुमारयोः पु० ।

**अर्कपत्र** पु० अर्कः सूर्य इव तीक्ष्णं पत्रं यस्य । अर्कवृक्षे । अर्कपर्णोऽप्यत्र । ६त० । अर्कवृक्षस्य पत्रे न० ।

**अर्कपादप** पु० अर्कः अर्क इव तीक्ष्णः पादपः । निम्बे । [नीपवृक्षे ।

**अर्कपुष्पी** स्त्री० अर्कस्यार्कवृक्षस्य पुष्पमिव पुष्पमस्याः । कुटुम्बि-

**अर्कप्रिया** स्त्री० अर्कं प्रीणाति प्री-क० । जवायाम् । ६त० । सूर्यप्रियायां, छायायाञ्च ।

**अर्कबन्धु** पु० अर्कस्य बन्धुरिव । गौतमे सूर्यवंश्ये बौद्धे ।

**अर्कभक्ता** स्त्री० अर्कस्य भक्ता । (हुडहुडिया) इति ख्यातायां लतायाम् । तत्किरणसम्पर्कं एव तस्या हि सौन्दर्यम् ।

**अर्कमूला** पु० अर्क इव सर्पाणां दुःसहं मूलं यस्याः । (ईश्वरमूल)

इति ख्यातायां लतायाम् ।   [ प्रियपुष्पे बन्धूकवृक्षे ।

अर्कवल्लभ पु० अर्कस्य वल्लभः समानवर्णपुष्पत्वात् । रक्तपुष्पत्वेन अर्क-

अर्कव्रत पु० अर्कस्याराधनार्थं व्रतम् । माघशुक्लसप्तम्यादौ कर्त्तव्ये अर्काराधनार्थे व्रते । अर्कस्येव व्रतं नियमः “सहस्रगुणमुत्स्रष्टु-माद्त्ते हि रसान् रविः” इत्युक्ते यथा रविणा लोकहितार्थं रसस्य ग्रहणमेवं प्रजापालनार्थमेव राज्ञा प्रजाभ्यो यत् करस्य ग्रहणं तादृशे “अष्टौ मासान् यथादित्यस्तोयं गृह्णाति रश्मिभिः । तथा हरेत् करं राष्ट्रान् नित्यमर्कव्रतं हि तदिति” मनूक्ते व्रते च ।

अर्काश्मन् पु० अर्कस्य अनुगतः, अश्मा । सूर्य्यकान्तमणौ, स हि सूर्य्यरश्मिसम्पर्कादुज्ज्वलति ततस्तस्यार्कसम्बन्धित्वम् ।

अर्कोपल पु० अर्कस्यानुगत उपलः । सूर्य्यकान्तमणौ ।

अर्गल स्त्री० न० अर्ज्ज—कलच् न्यङ्क्वा कुत्वम् । कपाटमध्यस्थे रोधके काष्ठादिदण्डे, सप्तशतीस्तोत्रस्यादौ पाठ्ये स्तोत्रविशेषे च “अर्गलं कीलकं चादौ पठित्वा कवचं पठेत् । जपेत् सप्तशतीं पश्चादि-त्युक्तेः” । कल्लोले, कपाटे च न० । क्षुद्रार्गले स्त्री० गौरा० ङीष् अर्गली, स्वार्थे के, अर्गलिकाप्यत्रार्थे ।

अर्घ मूल्ये भ्वादि० पर० सक० सेट् । अर्घति आर्घीत् । आनर्घ ।

अर्घ पु० अर्घ—घञ् । क्रेयवस्तुनो ग्रहणार्थं तुल्यरूपे देये रजतादि-द्रव्यरूपे मूल्ये । अर्ह—करणे घञ् न्यङ्क्वादित्वात् कुत्वम् । पूजोप-चारे दूर्वाक्षतादौ सामगैरयं सयकारः क्लीवलिङ्गश्च प्रयोक्तव्यः ।

अर्घ्य अर्घ+देयार्थे यत् । अर्घार्थं दीयमाने जलादौ । अर्घदानयोग्ये पूज्ये त्रि० ।   [आर्च्चिष्ट आनर्च्च ।

अर्च पूजायाम् उभ० भ्वादि० सक० सेट् । अर्चति ते आर्चीत्

अर्च पूजायां चुरा० उभ० सक० सेट् । अर्चयति ते आर्चिचत् त

अर्चा स्त्री० अर्च—आधारे अ । प्रतिमायाम् । भावे अ । पूजायाम् ।

अर्चि स्त्री० अर्च-इन् । वह्न्यादिशिखायाम् ।

अर्चित त्रि० अर्च्च—क्त । पूजिते, विष्णौ पु० ।

अर्चिष्मत् पु० अर्च्चिर्विद्यतेऽस्य मतुप् । सूर्य्ये, अग्नौ च । दीप्ते त्रि० ।

अर्चिस् न० पु० अर्च्च–इसि। वह्न्यादेः शिखायां, मयूखे च।
अर्ज अर्ज्जने भ्वादि०पर०सक०सेट्। अर्ज्जति, आर्जीत्। आनर्ज्ज।
अर्ज्ज संस्कारे चुरा०उभ०सक०सेट्। अर्ज्जयति ते आर्जिजत् त।
अर्ज्जक पु० अर्ज्जयति रज्जुम् अर्ज्ज–ण्वुल्। (बाबुइ) इति ख्याते वृक्षे, तत्कृतन्तुना हि रज्जुर्निर्म्मीयते। अर्ज्जनकर्त्तरि त्रि०
अर्ज्जन न० अर्ज्ज–ल्युट्। स्वामित्वसम्पादके व्यापारभेदे सम्पादने च।
अर्ज्जुन पु० अर्ज्ज–उनन्। स्वनामख्याते वृक्षे, मध्यमपाण्डवे, हैहयाधिपे कार्त्तवीर्य्ये, करवीरे, मयूरे, धवले च। शुभ्रतागुणवति त्रि०। (आजन) इति ख्याते नेत्ररोगे न०। [गवि, तृणेच्चाद्य।
अर्ज्जुनी स्त्री० गौरा० ङीष्। उषायां, बाहुदायां नद्यां, स्त्रियां
अर्ज्जुनोपम पु० अर्ज्जुनः स्वनामख्यातः वृक्ष उपमा यस्य। (सेगुन) इति ख्याते शाकद्रुमे, महापत्राख्यवृक्षे च।
अर्ण पु० ऋ–न। अकारादौ वर्णे।
अर्णव पु० अर्णांसि सन्त्यस्मिन् अर्णस्+व सलोपः। समुद्रे।
अर्णवोद्भव पु० उद्भवत्यस्मात् उद्+भू–अपादाने अप् ६त०। अग्निजारवृक्षे चन्द्रे च। अमृते न०। लक्ष्म्यां स्त्री।
अर्णस् न० ऋच्छति ऋ–असुन् "उदके नुट् चेति" उणा० नुट्। जले।
अर्त्तगल पु० आर्त्त इव गलति गल–अच् पृषो० वा ह्रस्वः। नीलझिण्टिकायाम्। ह्रस्वाभावे आर्त्तगलशब्दात्।
अर्त्तन न० ऋत–ल्युट् पक्षे इयङभावः। निन्दायाम्।
अर्त्ति स्त्री० अर्द्द–क्तिन्। पीडायाम्। करणे क्तिन्। धनुष्कोट्याम्
अर्थ याचने अद० चु० आत्म० द्विक० सेट्। अर्थयते आर्त्थित मतान्तरे अर्थापयते आर्त्थापत।
अर्थ पु० अर्थ–भावकर्मादौ यथायथम् अच्। विषये, अभिधेये, धने, वस्तुनि, प्रयोजने, निवृत्तौ, हेतौ, प्रकारे, अभिलाषे, उद्देश्ये च।
अर्थदूषण न० अर्थस्य अपहरणादिना दूषणम् ६त०। धनापहरणे, व्यसनस्थाने क्रीडादौ धनव्यये च।
अर्थना स्त्री० अर्थ–युच्। भिक्षायाम्।

**अर्थपति** पु० अर्थानां पतिः ६त० । नृपे, कुवेरे च ।

**अर्थप्रयोग** पु० अर्थानां प्रयोगः ६त० । वृद्ध्याद्यर्थमधमर्णायार्थदानादौ, वृद्धिलाभार्थं धनप्रयोगे ।

**अर्थवत्** त्रि० अर्थः सन्निहितोऽस्य मतुप् वत्वम् । सन्निहितधने धनिनि । असन्निहितधने तु न मतुप् किन्तु इनिस्तेन तत्र अर्थीत्येव । प्रयोजनवति, अभिधेयवति च ।

**अर्थवाद** पु० अर्थस्य लक्षणया स्तुत्यर्थस्य, निन्दार्थस्य वा वादः वद—करणे घञ् । प्रशंसनीयगुणवाचके, निन्दनीयदोषवाचके च शब्दविशेषे । भावे घञ् । तत्कथने ।

**अर्थव्ययज्ञ** त्रि० अर्थस्य धनस्य व्ययं तत्प्रकारं जानाति ज्ञा—क । किं धनं, कथं, कुत्र, कियत्, कस्मै,वा व्ययितव्यमिति विशेषाभिज्ञे ।

**अर्थशास्त्र** न० अर्थस्य भूमिधनादेः प्रापकं शास्त्रं शाक० त० । नीतिशास्त्रे, अभिचारादिकर्मप्रतिपादके शास्त्रे च ।

**अर्थागम** पु० अर्थस्य आगमः आ+गम—घञ् अवृद्धिः । आये ।

**अर्थान्तर** न० अन्योऽर्थः अर्थान्तरं मयूर० त० । अन्यार्थे, न्यायमते उद्देश्यसिद्ध्यर्थं प्रयुक्ते शब्दसामर्थ्यादनुद्दिष्टसिद्ध्यनुकूले वाक्ये । तस्य प्रतिवादिनोद्भावने वादिनिग्रहः ।

**अर्थान्तरन्यास** पु० प्रकृतार्थसिद्धये अन्यार्थस्य न्यासः । अलङ्कारप्रसिद्धे अर्थालङ्कारभेदे सा० १० प० ।

**अर्थापत्ति** स्त्री० अर्थस्य अनुक्तार्थस्य आपत्तिः सिद्धिः आ+पद-क्तिन् । जीवतश्चैत्रस्य गृहासत्त्वज्ञानेन वहिःसत्त्वकल्पनादौ, मीमांसकादिमते अनुमानातिरिक्तायां आपादकस्यानुपपत्तिज्ञानेनापाद्यस्य कल्पनायाम्, न्यायमते व्यतिरेकव्याप्तिज्ञानजन्यायामनुमितौ, अर्थालङ्कारभेदे च सा०१०प० ।

**अर्थिक** पु० अर्थयते इत्यर्थी याचकः कुत्सितार्थे कन् । निद्रागतनृपादेर्जागरणार्थं नियुक्ते स्तुतिपाठकादौ ।

**अर्थिन्** त्रि० अर्थ+अस्त्यर्थे इनि । याचके, सेवके, व्यवहारे—वादिनि, असन्निहितधने धनस्वामिनि च ।

अर्थ्य त्रि० अर्थात् प्रयोजनादनपेतः अर्थ+यत् । न्याय्ये । अर्थ–
कर्म्मणि यत् । प्रार्थनीये । शिलाजतुनि न० । [आनर्द ।
अर्द्द बधे भ्वादि० उभ० सक० सेट् । अर्द्दति ते आर्दीत् आर्द्दिष्ट
अर्द्द याचने, गतौ,सक०पीड़ायां अक०च, भ्वादि०पर०सेट् । अर्द्दति
अर्द्दीत् । तत्र याचने "शरद्घनं नार्द्दति चातकोऽपीति" रघुः ।
अर्द्द बधे चुरा० उभय० सक० सेट् । अर्द्दयति ते आर्द्दिदत् त ।
अर्द्दन न० अर्द–ल्युट् । गतौ, पीड़ायां बधे याचने च ।
अर्द्दना स्त्री० अर्द्द- भावे युच् । भिक्षायां गतौ पीड़ायाञ्च ।
अर्द्दित त्रि० अर्द्द -क्त । पीड़िते, गते, याचिते च । वातरोगे न०
अर्द्ध पु० ऋध–ण्वौ भावादौ घञ् । खण्डे । तुल्यांशे न० ।
खण्डिते ठद्धे च त्रि० । [ रद्धफलदायिन्यां कावेरीनद्याम् ।
अर्द्धगङ्गा स्त्री० अर्द्धं गङ्गायाः एकदे० त० । स्नानादौ गङ्गास्नानादे-
अर्द्धचन्द्र पु० अर्द्धं चन्द्रस्य एक० त० । चन्द्रस्यार्द्धे, तदाकारे नख-
क्षते, गलहस्ते, बाणभेदे, स्त्रीणां तिलकभेदे च । ( तेओडीति)
ख्यातायां त्रिवृति स्त्री० । स्वार्थे के ह्रस्वे अनद्धच्चे । अर्द्धच-
न्द्रिका कर्णस्फोटलतायां चित्रपर्ण्याञ्च । [ख्याते कार्पासकवस्त्रे ।
अर्द्धचोलक न० अर्द्धं चोलस्य न०त० संज्ञायां कन् । (काञ्चुलीति)
अर्द्धतिक्त पु० असम्पूर्णस्तिक्तः । नेपालनिम्बे ।
अर्द्धनारीश्वर पु०अर्द्धाङ्गे या नारी तस्या ईश्वरः । हरगौरीरूपे शिवे ।
अर्द्धपारावत पु० अर्द्धेन अङ्गेन पारावत इव । चित्रकण्ठकपोते
तित्तिरा त ख्याते पक्षिणि ।
अर्द्धपुलायित न० "धताद्धार्द्धक्रमादूनै र्मण्डलायितवल्गितैः । उन्मु-
खस्याश्वमुख्यस्य गतिरर्द्धपुलायितमिति" परिभाषिते अश्वगति-
भेदे । [यत्र । काव्यबन्धभेदे शब्दालङ्कारे
अर्द्धभ्रमक पु० अर्द्धे श्लोकार्द्धे गतागताभ्यामेकरूपतया भ्रमो
अर्द्धमात्र। स्त्री०अर्द्धं मात्रायाः एक० त० विन्दुर्चन्द्राकारव्यञ्जनायां
अभ्यास्य... नामि पाचि । अर्द्धा मात्रा उच्चारणकालो येषाम् । हल्-
वर्णेषु ... व्यर्द्धमात्रकमित्युक्तेस्तेषां तथात्वम् ।

**अर्द्धयाम** पु० अर्द्धं यामस्य एक०त०। अष्टधा विभक्तस्य दिनस्य रात्रेर्वा अष्टमे भागे यत्र वारवेला।कालवेलाव्यवहारः।

**अर्द्धरथ** पु० रथोऽस्त्यस्य अच् रथः रथी अर्द्धः असम्पूर्णो रथः। असम्पूर्णे रथिनि। निकृष्टयोधे। [निशीथे।

**अर्द्धरात्र** पु० अर्द्धं रात्रेः एक० त० अच्। द्वितीयप्रहरशेषमहूर्त्ते

**अर्द्धवीक्षण** न० अर्द्धमसम्पूर्णं वीक्षणम् वि+ईक्ष—ल्युट्। कटाक्षदर्शने।

**अर्द्धशफर** पु० अर्द्धः प्रकृतशफराद्धीनः शफरः। (दाड़का) इति ख्याते मत्स्यभेदे।

**अर्द्धासन** न० अर्द्धमासनस्य एक०त०। आसनस्यार्द्धभागे अर्द्धमासनं तत्त्यागः विच्छेदश्च। स्नेहव्यञ्जके सम्मानभेदे। अनिन्दायाञ्च।

**अर्द्धोदय** पु० अर्द्धस्य समृद्धस्य पुण्यस्य उदयो यत्र। माघमासीयामातिथिनक्षत्रवारविशेषयुक्ते "माघे मासि सिते पक्षे अमा स्यादर्कसंयुता। नक्षत्रे श्रवणे देवि! व्यतीपातो यदा भवेत्। अर्द्धोदयः स विज्ञेय" इत्युक्ते योगे।

**अर्द्धोरुक** न० अर्द्धमूरोः अर्द्धोरु तत्र काशते काश—ड। ऊर्व्वोरधरपर्य्यन्ताङ्गाच्छादने वस्त्रे, उत्तमस्त्रीणामर्द्धोरुपर्य्यन्ते चोलकाकारे परिधेयवस्त्रे च।

**अर्पण** न०ऋ+णिच्—पुक्—ल्युट्। निक्षेपे, स्वत्वत्यागे च। करणे ल्युटि। मन्त्रादौ। जुहूप्रभृतौ स्त्री०। संप्रदाने ल्युटि। देवादिषु। अधिकरणे ल्युटि। त्यागाधिकरणे वह्न्यादौ। कर्मणि ल्युटि। हविरादौ त्याज्यद्रव्ये।

**अर्पित** त्रि० ऋ—णिच् पुक् च क्त। दत्ते निक्षिप्ते निवेशिते च।

**अर्पिस** पु० ऋ—णिच् पुक् च इसन्। हृदये, अग्रमांसे च।

**अर्ब(र्व)** हिंसने, भ्वादि० पर०सक० सेट्। अर्बति अर्बीत् आनर्ब।

**अर्बु(र्वु)द** न० अर्ब्ब (र्व) विच् तस्मै उदेति अर्ब्(र्व्)+उद्+इण्—ड। (आब्) इति ख्याते मांसपिण्डाकारे रोगभेदे, दशकोटिसंख्यायां तत्संख्यातेषु च। पर्वतभेदे पु०।

**अर्भ** पु० ऋ—भ। बालके।

अर्भक पु० अर्भएव स्वार्थे क । बालके, मूर्खे, कृशे, अल्पे, सदृशे च ।

अर्य्य त्रि० ऋ-यत् । स्वामिनि । वैश्ये पु० । स्त्रियां टाप् । अर्य्या वैश्यजातिस्त्रियां स्वामिन्याञ्च । वैश्यपत्न्यान्तु ङीष् । अर्य्यी । वैश्यजातीयायां स्त्रियाम् आनुक् ङीष् च । अर्य्याणीत्यपि ।

अर्य्यमन् पु० अर्य्यं श्रेष्ठं मिमीते मा-कनिन् । सूर्य्ये, तद्देवताके उत्तरफल्गुनीनक्षत्रे, अर्कवृक्षे, पितृणां राजनि च ।

अर्व्वन् पु० ऋ-वनिप् । घोटके, इन्द्रे, गोकर्णपरिमाणे च । स्त्रियामर्व्वती सा च बडवायां कुट्टिन्यामपि ।

अर्व्वाच् अव्य० अवरे काले देशे वा अञ्चति अन्च-क्विन् पृषो० अर्व्वादेशः । पश्चात्काले मध्यगते तत्रस्थे विपर्य्यस्ते च त्रि० । अर्व्वाच्+असि तस्य लुक् । अवरकालादौ मध्ये च अव्य० ततो भवार्थे ष्युल् तुट् च् । अर्व्वाक्तन तद्भवे त्रि० स्त्रियां ङीप् ।

अर्व्वाचीन त्रि० अर्व्वाक्काले पश्चात् काले भवः ख । पश्चाद्भवे ।

अर्शस् न० ऋ-असुन् शुक् च । वलिकाकारे गुह्यस्थरोगभेदे । वा पृषो० सलोपे । अर्श अप्यत्र ।

अर्शस त्रि० अर्शस्+अस्त्यर्थे अच् । वलिकाकारकगुह्यव्याधियुक्ते ।

अर्शोघ्न पु० अर्शांसि हन्ति हन-टक् । (ओल)सूरणे, भल्लातके च ।

अर्शोघ्नी स्त्री० अर्शस् हन टक् टित्त्वात् ङीप् उप० स०। तालमूल्याम् भल्लातक्याञ्च । [ भल्लातके ।

अर्शोहित पु० अर्शसोऽहितः सेवनेन तन्नाशकत्वात् । ६त० ।

अर्ह पूजने, सक० योग्यत्वे अक० भ्वादि० पर० सेट् । अर्हति, आर्हीत् आनर्ह । प्राप्तियोग्यतार्थे गतौ च सक० ।

अर्ह पूजने चु० उभ० सक० सेट् । अर्हयति ते आर्जिहत् त ।

अर्ह पु० अर्च्यते चु० अर्ह कर्मणि अच् । पूजाप्रशंसादिभिराराध्ये ईश्वरे, अर्के स० योग्ये त्रि० ।

अर्हण पु० अर्ह-कर्मणि ल्यु । बुद्धभेदे । भावे ल्युट् पूजने न० करणे ल्युट् । पूजोपकरणे पुत्राद्ये उपायने च न० ।

अर्हणा स्त्री० अर्ह-युच् । पूजायाम् चु० ।

**अर्हत्** पु० अर्ह—प्रशंसायां कर्मणि शतृ । बुद्धभेदे । पूज्ये त्रि० ।

**अर्हन्त** पु० अर्ह वा० झच् । बुद्धभेदे ।

**अर्हा** स्त्री० अर्ह—भावे अ । पूजायाम् ।

**अल** भूषणे, वारणे, च सक० भ्वा० उभ० पर्याप्तौ अक० सेट् । अलति ते आलीत् आलिष्ट । [ हरिताले च ।

**अल** न० अल—अच् । वृश्चिकपुच्छस्थे कण्टकाकारे पदार्थे (हुल)

**अलक** पु० अलति भूषयति मुखम् अल—क्वुन् । ललाटस्थे छिन्नाग्रे कुटिलकेशे, अङ्कलिप्तकुङ्कुमे च । कुबेरपुर्य्याम् । अष्टमवर्षावधि-दशमवर्षपर्यन्तवयस्कायां कन्यायाञ्च स्त्री० । क्षिपकादित्वात् कापि नेत्वम् ।

**अलकनन्दा** स्त्री० अलति पर्य्याप्नोति क्वुन् अलका । नन्दयतीति अच् नन्दा कर्म० । गङ्गायाम् । अलके नन्दति अच् । कन्यायाम् । सा हि अलकैस्तुष्यति । [ पीतशालवृक्षे ।

**अलकप्रिय** पु० अलकान् प्रीणाति विकशीकरोति प्री—क । (पियाशाल)

**अलकाधिप** पु० अलकाया अधिपः ६तत्० । कुबेरे ।

**अलक्त** पु० न रक्तो यस्मात् ५त० रस्य लत्वम् । लाक्षारसे, स्वार्थे के । अलक्तकोऽप्यत्र तत्रैव लाक्षायाञ्च ।

**अलक्षण** त्रि० नास्ति लक्षणं अनुमापकं वा चिह्नं यस्य ब०। अननुमेये, शुचिह्नशून्ये च । न०त० दुर्लक्षणे न० ।

**अलक्षित** त्रि० लक्ष—क्त न०त० । अदृष्टे, लक्षणेनाननुमिते च ।

**अलक्ष्मी** स्त्री० विरोधार्थे नञ् त० । लक्ष्मीविरुद्धायां निर्ऋतौ (आलक्ष्मीति) ख्यातायाम् ।

**अलगर्द्द** पु० लगति सज्जति क्विप् लग् अर्दयति अर्द—अच् अलग् सज्जन् सन् अर्दो न भवति । विषशून्ये जलव्याले । पृषो० । लत्वम् राजोति ऋध-अच् वा । अलगर्द्दोऽप्यत्र ।

**अलङ्करण** न० अलम्+कृ-भावे ल्युट् । भूषायाम् । करणे ल्युट् । वलयादौ भूषणे ।

**अलङ्करिष्णु** त्रि० अलम् कृ—इष्णुच् । भूषके मण्डनकरणशीले ।

**अलङ्कर्म्मीण** त्रि० अलं समर्थः कर्म्मणे ख । कर्म्मक्षमे ।

**अलङ्कार** पु० अलम्+कृ+घञ् । भूषायाम् । करणे घञि । हारादौ भूषणे, साहित्यविषयदोषगुणप्रतिपादके ग्रन्थे, शब्दभूषणे—अनुप्रासादौ,शब्दार्थभूषणे—उपमादौ च । वाचस्पत्ये विवृतिः ।

**अलङ्क्रिया** स्त्री अलम्+कृ—भावे श । भूषायाम् ।

**अलम्** अव्य० अल+अमु । भूषणे, सामर्थ्ये पर्य्याप्तौ, निवारणे, निषेधे, निरर्थकत्वे, अत्यर्थे, अत्यर्थे अवधारणे च ।

**अलम्पुरुषीण** त्रि०अलं समर्थः प्रतिपुरुषाय । प्रतिमल्लादियोधनसमर्थे

**अलम्बुष** पु० अलं पुष्णाति पुष—क पृषो० षत्व बत्वम् । प्रहस्ते, वमने, राक्षसभेदे च । लज्जालुवृक्षे स्वर्गवेश्यायाञ्च स्त्री० ।

**अलवाल** न०लवमालाति ला—क न०त० । जलसेकार्थं वृक्षमूले कृदादिकृते जलाधारे वेष्टने स्वार्थेऽण् । आलवालमप्यत्र ।

**अलस** त्रि० न लसति व्याप्रियते लस—अच् । अवश्यकर्त्तव्येषु शरीरापाटवमभिनीय कृतप्रयासे, क्रियामन्दे च । पादरोगभेदे, वृक्षभेदे च पु० । हंसपदीलतायां स्त्री० ।

**अलसक** पु० न लसति अनेन लस करणे०बा० वुन् । उदरामयरोगभेदे । स्वार्थे क । तत्रार्थे ।

**अलात** पु० न० । ला—क्त न०त० । (कयाला) इति ख्याते (आङ्गार) इति ख्याते च अर्द्धदग्धकाष्ठे ।

**अलाबु** स्त्री० न लम्बते न+लवि—उ णित् नलोपश्च वृद्धिः । (लाउ), तुम्बाम् । वा ऊङ् । अलाबूरत्र ।

**अलि** पु० अलति दंशे, कूजिते, शङ्किते, वा समर्थो भवति अल—इन् । भ्रमरे, वृश्चिके, काके,कोकिले, वृश्चिकराशौ सुरायाञ्च ।

**अलिक** न० अल्यते भूष्यते अल—कर्म्मणि इकन् । ललाटे ।

**अलिङ्ग** त्रि० नास्ति लिङ्गमनुमापकचिह्नादि यस्य । कार्य्यादिरूपलिङ्गरहिते अननुमेये ।

**अलिञ्जर** पु०अलनमलिः अल—इन् तं जरयति जॄ—अच् पृषो०मुम् । (जाला) इति ख्याते मृण्मये जलाधारे पात्रभेदे मणिके ।

**अलिन्** पु० अलं वृश्चिकपुच्छस्थकण्टकं विद्यतेऽस्य वा अल+इनि। वृश्चिके, भ्रमरे च।

**अलिन्द** पु० अल्यते भूष्यते अल–कर्मणि किन्दच्। द्वारप्रकोष्ठाद्बहिर्द्वारवर्त्ति चत्वरे, द्वारवहिर्भागे च।

**अलिपत्रिका** स्त्री० अलिर्वृश्चिक इव पत्रमस्याः वा कपि अत इत्त्वम्। वृश्चिकपत्राख्यलतायाम्(विछाति)। अलिपर्ण्यपत्र।

**अलिप्रिय** न० अलीनां प्रियमधिकमादकत्वात्। रक्तोत्पले पाटलावृक्षे स्त्री०। अलिवल्लभाप्यत्र। [गणिकारीवृक्षे।

**अलिमोदा** स्त्री० अलीन् मोदयति मुद+णिच्–अच्। (गणिआरी),

**अलीक** न० अल–ईकन्। अप्रिये, ललाटे, स्वर्गे च। अलति गच्छत्यधोऽनेन। असत्ये। मिथ्याकथने हि नरकपातः।

**अलौकिक** त्रि० लोके विदितः ठक् न० त०। लौकिकप्रत्यक्षागम्ये, लोकातीते, चमत्कारिणि च।

**अल्प** त्रि०अल–प। क्षुद्रे ईषदर्थे, सूक्ष्मे, मरणार्हे च। स्वार्थे के। अल्पकमप्यत्र। यवासे पु०।

**अल्पगन्ध** न० अल्पो गन्धोऽस्य। रक्तकैरवे। स्वल्पगन्धयुक्ते त्रि०।

**अल्पतनु** त्रि० अल्पा क्षुद्रपरिमाणा तनुः शरीरं यस्य। खर्वे, दुर्बले, स्वल्पास्थियुक्ते च।

**अल्पप्रमाणक** पु० अल्पं प्रमाणमस्य वा कप्। (तरमुज) (खरमुज) वा इति ख्याते वृक्षे। अल्पप्रमाणयुक्ते त्रि०।

**अल्पमारिष** पु० अल्पः मारिषः शाकः कर्म०। (नटिया) इति ख्याते शाके। [प्रमाणे सरसि।

**अल्पसरस्** पु० अल्पं सरः कर्म०। (डोबा) इति ख्याते अल्प-

**अल्पायुस्** पु० अल्पमायुः जीवनकालो यस्य। छागे पशुषु तस्यैवाल्पायुष्कत्वात्तथात्वम्। अल्पायुष्कमात्रे त्रि०।

**अल्पिका** स्त्री० अल्पैव स्वार्थे के अत इत्त्वम्। मुद्गपर्ण्याम्।

**अल्पिष्ठ** त्रि० अतिशयेनाल्पः अल्प+इष्ठ। क्षुद्रतरे।

**अल्पीयस्** त्रि० अल्प+ईयसुन्। अत्यन्ताल्पे। स्त्रियां ङीप्।

अवा स्त्री० अव्यते इत्यव् क्विप् अवे भूषायै लाति गृह्णाति वा क ४त०। मातरि। अवतीति अव् पृषो० भः सन् लाति सर्वानसि गृह्णाति जानाति वा ला—क। सर्वज्ञायां सर्वभक्षिकायां परमात्मदेवतायाम् सा च अथर्ववेदे अवाज्ञेत्यादिसूक्ते प्रसिद्धा।

अव रक्षणे, गतौ, स्पृहायां, तृप्तौ, शोभायां, श्रवणे, व्याप्तौ, आलिङ्गने, प्रार्थने, प्रवेशे, सत्तायां वृद्धौ, ग्रहणे, वधे, सामर्थ्ये, अवगमे, करणे, इच्छोत्पादने च यथायथं सक० अक० च भ्वादि० सेट् पर०। अवति आवीत्। आव।

अव अव्य० अव—अच्। निश्चये, व्याप्तौ अनादरे, अल्पार्थे, आलम्बने, शुद्धौ, परिभवे, नियोगे, निम्नतायां च।

अवकर पु० अवकीर्य्यते संमार्ज्जन्यादिभिः अव—कॄ—कर्म्मणि अप्। सम्मार्ज्जन्यादिभिः क्षिप्ते धूल्यादौ।

अवकाश पु० अव+काश—घञ्। अवस्थितियोग्यतासम्पादके काले, देशे च। तत्र कालिकोऽवकाशः क्रियान्तरस्थितियोग्यतासम्पादकः स चावसर इत्यप्युच्यते, "कृत्वावकाश रुचि संप्रकृप्तम्" इति भट्टिः। द्रव्यान्तरस्थितियोग्यतासम्पादको दैशिकः स चावकाश इत्येवं "अवकाशं किलोदन्वानिति" रघुः।

अवकीर्ण त्रि० अव—कॄ कर्मणि क्त। चूर्णिते, ध्वस्ते च।

अवकीर्णिन् त्रि० अवकीर्णं ध्वस्तं व्रतमस्यस्य इनि। क्षतव्रते।

अवकृष्ट त्रि० अव+कृष—क्त। दूरीकृते, अपसारिते, बहिष्कारिते च

अवकेशिन् त्रि० अवच्युतं कं सुखं यस्मात् ५ब० अवकं शून्यतां फलशून्यतामीषितुं शीलमस्य अवक+ईश—णिनि। अफले वृक्षे। अवनताः केशा विद्यन्ते अस्य इनि। अल्पकेशयुक्ते त्रि०।

अवक्रय पु० अवक्रीयते प्रतिरूपदानेन स्वाधीनं क्रियतेऽनेन अव+क्री—अच्। ग्राह्यस्य प्रतिरूपत्वेन देये मूल्ये, भाटके च

अवक्षुत त्रि० अव—क्षु—क्त। उपरि कृतक्षुते। [भर्त्सने च न०।

अवक्षेप पु० अव+क्षिप—घञ्। निन्दायाम्। ल्युटि अवक्षेपणमप्यत्र

**अवगणित** त्रि० अव+गण—कर्म्मणि क्त । तिरस्कृते, अवज्ञाते च ।
**अवगण्ड** पु० अव+गम—ड डकारस्य नेत्वम् । गण्डस्थव्रणे ।
**अवगत** त्रि० अव+गम—क्त । निम्नगते, ज्ञाते च ।
**अवगाढ़** त्रि० अव+गाह—क्त । निविड़े, अन्तःप्रविष्टे, निमग्ने च
**अवगाह** पु० अव+गाह—घञ् । स्नाने, अन्तःप्रवेशे च । आधारे घञ् । स्नानस्थाने । वा अल्लोपे वगाहोऽप्यत्र । ल्युटि अवगाहनमप्यत्र । [भावे क्त । जनापवादे निन्दायाञ्च न० ।
**अवगीत** त्रि०अव+गै-क्त । निर्व्वादयुक्ते जनापवादयुक्ते,दुष्टे,गर्हिते च ।
**अवगुण** पु० अव+गुण—क । दोषे ।
**अवगुण्ठन** न० अव+गुण्ठ—ल्युट् । योषितां शिरःप्रावरणक्रियायाम् । करणे ल्युटि । मुखाच्छादने वस्त्रे ।
**अवगुण्ठिका** स्त्री० अव+गुण्ठ—ण्वुल् स्त्रीत्वाट्टापि अतइत्वम् । स्त्रीणां मुखावरणशाट्याम्, जवनिकायाञ्च ।
**अवगुण्ठित** त्रि० अव+गुण्ठ—क्त । कृतावगुण्ठने, चूर्णिते च ।
**अवगृह्य** न० अव+ग्रह—क्यप् । व्याकरणप्रसिद्धे प्रगृह्यसंज्ञके पदे ।
**अवगोरण** न० अव+गुर—उद्यमे ल्युट् । वधायास्त्राद्युद्यमे ।
**अवग्र(ग्रा)ह** पु० अव+ग्रह—अप्, घञ् वा । वृष्टिजलप्रतिबन्धे ।
**अवग्रहण** न० अव+ग्रह—ल्युट् । प्रतिरोधे ।
**अवघट्ट** पु० अव+घट्ट—अच् । गर्त्ते, घरट्टे (जाँता) च ।
**अवघात** पु० अव+हन—घञ् । अवहनने, तण्डुलादेर्वितुषीकरणे च ।
**अवचय** पु० अव+चि—अच् । पुष्पफलाद्यादाने । [वस्त्रे ।
**अवचूड़(ल)** पु० अवनता चूड़ाग्रं यस्य वा डो लः । ध्वजाधोबद्ध
**अवचूर्णित** त्रि० अव+चूर्ण—कर्म्मणि क्त । पिष्टे, क्षिप्ते, चूर्णीकृते च
**अवचूलक** न०अवनता चूड़ा यस्य डस्य लत्वम् संज्ञायां कन् । चामरे
**अवच्छिन्न** त्रि० अव+छिद—क्त । संकुचिते, विशिष्टे, न्यायमते अवच्छेदकतानिरूपके च । [त्रि०
**अवच्छुरित** न० अव+छुर—भावे क्त । अट्टहासे । कर्म्मणि क्त । मिश्रित
**अवच्छेद** पु०अव+छिद—भावे घञ् । विरामे, परिच्छेदे एकदेशे च

**अवच्छेदक** त्रि॰ अव+छिद्–ण्वुल् । एकदेशे, व्यावर्त्तकविशेषणे च

**अवज्ञा** स्त्री॰ अव+ज्ञा–अङ् । अनादरे ।

**अवट** पु॰ अव–अटन् । गर्त्ते, कूपे, ऐन्द्रजालिकजीविकावति च ।

**अवटि** स्त्री॰ अव–अटि । गर्त्ते, कूपे च । वा ङीप् अवटीत्यपि ।

**अवटीट** त्रि॰ अवनता नासिका प्रा॰स॰ नतार्थे नासायाः टीटादेशः
अर्शआदित्वादच् । (खाँदा) नतनासिके जने ।

**अवटु** पु॰ अव+टीक–डु । गर्त्ते, वृक्षभेदे, कूपे च । ग्रीवापश्चाद्भागे,
ग्रीवाया उन्नतभागे च स्त्री॰ ।

**अवडीन** न॰ अव+डी–भावे क्त । अवरोहणरूपे पक्षिणां गतिभेदे ।

**अवतंस** पु॰ न॰ अव+तनृस–घञ् । कर्णपूरे, शिरोभूषाभेदे च ।

**अवतमस** न॰अवततं व्याप्तं तमः प्रा॰स॰अच् समा॰। व्याप्तान्धकारे ।

**अवतार** पु॰ अव+तॄ–करणे घञ् । तीर्थे, (पुष्करिण्यादेः सोपा-
नपद्धतौ) । भावे घञ् । अवरोहणे, देवानामंशावेशवशेन
प्रादुर्भावे च ।

**अवतारण** न॰ अव+तॄ–णिच्–ल्युट् । भूतादीनामावेशनेन प्रादुर्भावने,
अवरोपणे, ग्रन्थप्रस्तावने च । अवतारणशब्दस्य स्त्री॰ ङीप् ।

**अवतोका** स्त्री॰अवपतितं तोकमस्याः प्रा॰ब॰। स्रवद्गर्भायां स्त्रियाम्

**अवदंश** पु॰ अव+दनृश–घञ् । भर्ज्जिते चर्वणद्रव्ये, मद्यपानोत्सा-
हादिकारके चर्वणद्रव्ये । [मनोज्ञे च त्रि॰ ।

**अवदात** पु॰ अव+दै–क्त । शुभ्रे, पीते च वर्णे । तद्वति, विशुद्धे

**अवदान** न॰ अव+दो–ल्युट् । खण्डने, पराक्रमे, अतिक्रमे, शुद्धि-
करणे, वीरणमूले च । [ण्वुल् । भेदनकर्त्तरि त्रि॰ ।

**अवदारक** पु॰ अवदारयति दृ–णिच्–ण्वुल् । (खोन्ता) खनित्रे

**अवदारण** न॰ अव+दृ–णिच्–करणे ल्युट् । खनित्रे ।

**अवदाह** न॰ अवधारिता दाहो येन प्रा॰ब॰। वीरणमूले ।

**अवद्य** त्रि॰ वद–यत् न॰त॰ । अधमे, पापिनि, निन्द्ये, कथना-
योग्ये च । [मनोनिवर्त्तते ।

**अवधान** न॰ अव+धा–ल्युट् । मनोयोगविशेषे, यद्वशात् विषयान्तरतो

**अवधारण** न० अव+धृ—णिच्—ल्युट्। इयत्तापरिच्छेदे, अयमेवेति विषयपरिच्छेदके निश्चये च।

**अवधि** पु० अव+धा—कि। सीमायां, काले च। आधारे कि। बिले।

**अवधीर** अवज्ञायाम् अद० चुरा० उभय० सक० सेट्। अवधीरयति ते आवधीरत् त। मतान्तरे अवादिधीरत् त।

**अवधूत** त्रि० अव+धू—क्त। अभिभूते निवर्त्तिते, चालिते, अनादृते च। "यो विलङ्घ्याश्रमान् वर्णान् आत्मन्येव स्थितः पुमान्। अतिवर्णाश्रमी योगी अवधूतः स उच्यते" इत्युक्तलक्षणे वर्णाश्रमधर्मत्यागिनि सन्न्यासिनि पु०। [याज्ञ।

**अवध्वंस** पु० अव+ध्वन्स—भावे घञ्। परित्यागे, चूर्णिते, निन्द—

**अवन** न० अव—ल्युट्। प्रीणने, रक्षणे, प्रीतौ च।

**अवनत** त्रि० अव+नम—क्त। अधोभूते, आनते च।

**अवनति** स्त्री० अव+नम—क्तिन्। औन्नत्याभावे, विनये, अधोनमने च।

**अवनद्ध** त्रि० अव+नह-कर्मणि क्त। खचिते, रोपिते च। त्वदङ्गादिवाद्ये न०

**अवनय** पु० अव+नी—अच्। अधोनयने।

**अवनाट** त्रि० अवनता नासिका प्रा० स० नतार्थे नासिकाया नाटादेशः अर्श आद्यच् (खाँदा) अवनतनासिके जने।

**अवनि** (नी) स्त्री० अव—अनि। भूमौ। वा ङीप् अवनीत्यप्यत्र।

**अवनेजन** न० अव+निज—भावे—ल्युट्। प्रक्षालने, श्राद्धे—पिण्डप्रदानार्थमास्तृतकुशस्यामसेचने च।

**अवन्ति** (न्ती) पु० स्त्री० अव—झि। मालवदेशे। [न्यामुज्जयिन्याम्।

**अवन्तिका** स्त्री० अवन्तिषु कायति प्रकाशते। मालवदेशीयराजधा-

**अवन्तिसोम** न० अवन्तिषु अभिषुतं सोममिव शाक०त०। काञ्जिके।

**अवपात** पु० अव+पत—आधारे घञ्। बिले, भावे घञ्। अधःपतने, निपाते च।

**अवप्लुत** त्रि० अव+प्लु—क्त। समन्तात् सिक्ते अवतीर्णे। आर्द्रभूते च।

**अवभास** पु० अव+भास—भावे घञ्। साक्षात्कारे, इत्थमर्मस्य मिथ्या-आरोपेण भाने च।

अवभृथ पु० अव+भृ—क्थन् । मुख्ययज्ञसमाप्तौ क्रियमाणे यज्ञशेषे कर्मणि, यज्ञाङ्गभूते यज्ञान्ते स्नाने च ।

अवभ्रट त्रि० अवनता नासिका प्रा०स० नतार्थे नासिकाया भ्रटादेशः अर्शआद्यच् । अवनतनासिके (खाँदा) जने ।

अवम त्रि० अवत्यस्मादात्मानम् अव—मप् । कदाचारादौ, कुत्सिते, नीचे च । ज्योतिषप्रसिद्धे एकतिथिद्वयान्तवति एकस्मिन् दिनवारे न० । अवमदिनमप्यत्र ।

अवमत त्रि० अव+मन—क्त । अनादृते ।

अवमर्द पु० अव+मृद—घञ् । पीड़ने । [ग्रभेदे च ।

अवमर्श पु० अव+मृश—घञ् । आलोचनायाम्, नाटकस्य सन्ध्य'-

अवमानना त्रि० अव+चुरा०—मन-भावे युच् । अपमानकरणे ।

अवमानित त्रि० अव+चुरा० मन—कर्मणि क्त । कृतापमाने ।

अवमोटन न० अव+मुट्—णिच्—ल्युट् । (मोचड़ान) परिवर्त्तनेनान्यथापादनरूपे परिमोटने ।

अवयव पु० अव+यु—अच् । देहादावङ्गे, उपकरणे, न्यायमते प्रतिज्ञाहेतूदाहरणादिषु पञ्चसु वाक्येषु च ।

अवर त्रि० अव+रा—क । चरमे, अधमे, कार्य्ये च । पश्चाद्वर्त्तिनि देशे काले पु० तद्वर्त्तिनि त्रि० । हस्तिजङ्घायाः पश्चाद्देशे न० ।

अवरज पु० अवरस्मिन् काले जातः । कनिष्ठसोदरे भ्रातरि, शूद्रे च । कनिष्ठसोदरभगिन्यां, शूद्रायाञ्च स्त्री० टाप् ।

अवरति स्त्री० अव+रम—भावे क्तिन् । विरामे, निवृत्तौ च ।

अवरवर्ण पु० कर्म० । शूद्रे,

अवरीण त्रि० अव+रीङ—कर्मणि क्त । तिरस्कृते ।

अवरुद्ध त्रि०अव+रुध—कर्मणि क्त । आच्छादिते,बन्धादिना प्रतिरुद्धे च अन्तःपुरवासिन्यां भोग्यायां दास्यां, राजयोषिति च स्त्री० ।

अवरूढ़ त्रि० अव+रुह—कर्त्तरि क्त । अवतीर्णे, स्वस्थानादुत्थिते ।

अवरोध पु० अव+रुध—भावे घञ् । निरोधे । कर्मणि घञ् । राजान्तःपुरस्थायां योषिति, राजदारेषु च । आधारे घञ् ।

राजान्तःपुरे । ल्युट् । अवरोधनमप्यत्र न० ।

**अवरोधिक** पु०अवरोधे तद्रक्षणादौ नियुक्तः ठन् । राजान्तःपुररक्षणार्थं नियुक्ते धामनादौ ।

**अवरोपित** त्रि० अव+रुह–णिच्–पुक् च कर्मणि क्त । उत्पाटिते ।

**अवरोह** पु०अव+रुह–भावे घञ् । अवतरणे, ऊर्द्धदेशान्निम्नदेशगमने, आरोहे च । पचाद्यच् । तरोर्मूलादग्रपर्य्यन्तमारूढ़ायां गुडूच्यादिलतायाम् । अपादाने घञ् । स्वर्गे, ततो हि भोगावसाने सर्वेऽवतरन्ति ।

**अवरोहशाखिन्** पु० अवरोहति छिन्नोऽपि पुनः प्ररोहति अव+रुह-अच् कर्म०, अवरोहति अधोगच्छति मूलमस्याः तादृशी शाखा कर्म० ततः बाहुल्ये मत्वर्थीय इनिः । वटवृक्षे, तस्य छेदनेऽपि पुनः प्ररोहः शाखातोऽपि बहूनि मूलान्यवतरन्ति च ।

**अवरोहिका** स्त्री० अवरोहति अत्यन्तमधोगच्छति अव+रुह–ण्वुल् टाप् कापि अतइत्त्वम् । अश्वगन्धालतायाम् ।

**अवरोहिन्** पु० अव+रुह–णिनि (वटवृक्षे) । अवरोहिशाखोऽप्यत्र ।

**अवर्ण** पु० वर्ण–घञ् विरोधे नञ्तत० । प्रशंसाविरोधिनि अपवादे ।

**अवलक्ष** अव+लक्ष घञ् + श्वेतवर्णे । तद्वति, मूर्खे च त्रि० । अवादेरतो लोपे, वलक्षोऽप्यत्रैवार्थे । [संवद्धमात्रे त्रि० ।

**अवलग्न** पु० अव+लग–क्त नि० इडभावः । (माजा) देहमध्यभागे ।

**अवलम्ब** पु० अव+लबि–आधारे घञ् । आश्रये । करणे घञ् । अवलम्बसाधने दण्डादौ । ल्युट् अवलम्बनमप्यत्र न० ।

**अवलम्बित** त्रि०अव+लबि–कर्त्तरि क्त । आश्रिते,वस्त्रादिना बद्धे च ।

**अवलिप्त** त्रि०अव+लिप–कर्त्तरि कर्मणि वा क्त । गर्विते, कृतलेपने च ।

**अवलीढ़** त्रि० अव+लिह–कर्मणि क्त । भक्षिते, कृतावलेहे च ।

**अवलीला** स्त्री० अवरा लीला । अनायासे, अनादरे च ।

**अवलेप** पु०अव+लिप–भावे घञ् । गर्वे, लेपने, दूषणे, सम्बन्धे च ।

**अवलेपन** न० अव+लिप–भावे ल्युट् । विलेपे, अर्घणे, सङ्कल्पे च । करणे ल्युटि । चन्दनादौ ।

अवलेह पु० अव+लिह्–भावे घञ् । जिह्वाग्रेण स्वादने । कर्मणि घञि । तथास्वाद्ये औषधादौ च ।

अवलोकन न० अव+लुक–भावे ल्युट् । दर्शने, अनुसन्धाने च । करणे ल्युट् । आलोके, नेत्रे च ।

अवल्गुज पु० अवल्गोरधोभागाज्जायते जन–ड । सोमराजी-लतायाम् ।

अववाद पु० अव+वद–भावे घञ् । निन्दायाम्, विश्वासे आज्ञायाम्, अवालम्बने च । [पराधीने च ।

अवश त्रि० नास्ति वशमायत्तत्वं यस्य । अस्वाधीने, कामादिपरवशे,

अवशिष्ट त्रि० अव+शिष–क्त । अतिरिक्ते, परिशिष्टे, अधिके च

अवश्यम् अव्य० अव+श्यै–बा० डमु । निश्चये, अशक्यनिवारणे च ।

अवश्याय पु० अव+श्यै–ण । कुज्झटिकायाम्, अभिमाने च ।

अवश्रयण न० अव+श्रो–अच् । चुल्लीतोऽवतार्य स्थापने ।

अवष्टब्ध त्रि० अव+स्तन्भ–कर्मणि क्त षत्वम् । आसन्ने, आक्रान्ते, अवलम्बिते, प्रतिरुद्धे च ।

अवष्टम्भ पु० अव+स्तन्भ–भावादौ घञ् षत्वम् । स्पर्शे, सन्धा प्रारम्भे, रोधने, गर्वे च "रघोरवष्टम्भमयेन पत्रिणा" इति रघुः ।

अवस् अव्य० अवर+प्रथमायाः पञ्चम्याः सप्तम्या वाऽर्थे असि अवा-देशः । बाह्ये पश्चादर्थे च ।

अवसथ पु० वस–अथन् न०, व० । निलये, ग्रामे च ।

अवसथ्य पु० अवसथ+स्वार्थे यत् । आवासे, ग्रामे च ।

अवसर पु० अव+सृ–अच् । प्रस्तावे, जिज्ञासाभिष्टसमयेऽवश्यवक्तव्ये, वत्सरे, मन्त्रभेदे वर्षणे, क्रियास्थितियोग्यतासम्पादककृपे कालिके-ऽवकाशे च । [कामचारानुज्ञायाँ च ।

अवसर्ग पु० अव+सृज–भावे घञ् । अप्रतिबन्धे, यथेष्टं क्रियतामिति

अवसर्प पु० अव+सृप–अच् । चरे । [कृपावसन्नतायाञ्च ।

अवसाद पु० अव+सद–भावे घञ् । नाशे, विषादे, स्वकार्याक्षमत्व–

अवसादन न० अव+सद णिच् भावे ल्युट् । कार्याक्षमत्वापादने, नाशने च

अवसान न० अव+सो–भावे ल्युट् । विरामे, समाप्तौ, सीमायां मृत्यौ च ।

अवसाय पु० अव+ओ—भावे घञ् । समाप्तौ, शेषे, निश्चये च ।
अवसित त्रि० अव+ओ—कर्त्तरि कर्मणि वा क्त । समाप्ते, ऋद्धे ज्ञाते, परिपक्वे,निश्चिते, गृहीतधान्ये च । अव+सि—क्त । संबद्धे च ।
अवस्कन्द पु० अव+स्कन्द—आधारे घञ् । जिगीषूणां सैन्यनिवेशस्थाने शिविरे, भावे घञ् । आक्रमणे च । [ तरणे, आक्रमणे च ।
अवस्कन्दन न० अव+स्कन्द—भावे ल्युट् । सर्व्वाङ्गेणावगाहने, अव-
अवस्कर पु० अव+कृ—कर्मणि अप् सुट् । विष्ठादिमले । अपादने अपि । गुह्यदेशे उपस्थादौ । [अवादेशः । अवरकालादावित्यर्थे ।
अवस्तात् अव्य० अवरस्मिन् अवरस्मात् अवरमित्यर्थे अस्ताति
अवस्तार पु० अव+स्तृ—करणे घञ् (परदा) इति ख्यातायां जवनिकायाम्, भावे घञ् । आस्तरणे । [ अवस्थाने च ।
अवस्था स्त्री० अव+स्था—अङ् । कालकृतायां देहादेर्दशायाम्,
अवस्थान न० अव+स्था—भावे ल्युट् । स्थितौ । आधारे घञि । आवासे, प्रतिष्ठायाञ्च ।
अवस्यन्दन न० अव+स्यन्द—भावे ल्युट् । क्षरणे ।
अवस्रंसन न० अव—स्रन्स—भावे ल्युट् । अधःपतने, च्युतौ च ।
अवहार पु० अव+हृ—कर्त्तरि ण । चौरे, ग्राहनामके, जलजन्तुभेदे च । भावे घञि । युद्धादिविश्रामे । कर्मणि घञि । निमन्त्रितविप्रादिभ्यो देये द्रव्ये ।
अव(ब)हित्था स्त्री०न० न वहिस्तिष्ठति स्था-क पृषो० । कृतभावे ।
अवहेल न० स्त्री० । अव+हेल—अ घञर्थे क वा । अनादरे ।
अवाक्पुष्पी स्त्री० अवाक् अधोमुखं पुष्पमस्याः । (सुलफा) इति ख्यातायाम् शतपुष्पिकायाम् ।
अवाक्शिरस् त्रि० अवाक् शिरोऽस्य ब० । अधोमुखे ।
अवाग्र त्रि० अवनतमग्रमस्य प्रा०ब० । नम्रमुखे ।
अवाङ्मुख त्रि० अवाक् मुखमस्य । अधोमुखे ।
अवाच् त्रि० अवाञ्चति अव+अन्च्—क्विन् । अधोमुखगते, अवरे—देशे, काले च । दक्षिणस्यां दिशि स्त्री० ङीप् । नास्ति वाक् यस्य

इव० । वाक्यरहिते त्रि० । पूर्वार्थे औ अवाञ्चौ, अत्र अवाचौ इत्यादिभेदः । अवाच्+कालाद्यर्थे प्रथमादीनां स्थानेऽस्ताति तस्य लुक् । अवरकालादाविव्यर्थे अव्य० ।

**अवाच्य** न० वच—ण्यत् न कुत्सम् न०त० । दुष्टवचने, वचनानर्हे, निन्दनीये च अवाचिभवः अवाच्+यत् । अवरकालादौ भवे त्रि० ।

**अवान्तर** त्रि० अवगतमन्तरं मध्यम् अत्या०स० प्रधानान्तःपातिनि अङ्गादौ, सामान्यस्य विशेषे च ।

**अवार** न० न वारमत्र । नद्यादेर्जलानतिक्रमेण प्राप्ये तीरे ।

**अवारपार** पु० अवारं पारञ्च स्तो यस्य अर्शआद्यच् । उभयकूलवति समुद्रे ।

**अवारपारीण** त्रि० अवारपारे गच्छति ख । परपारगामिनि ।

**अवारिका** स्त्री० नास्ति वारि यत्र । धन्याके, तस्य अतिशुष्कफलत्वेन जलशून्यत्वात्तथात्वम् ।

**अवासस्** त्रि० न वासोऽस्य । वस्त्ररहिते नग्ने ।

**अवि** पु० अव—इन् । सूर्य्ये, मेषे, छागे, पर्वते, मूषिककम्बले, प्रभौ च । ऋतुमत्यां स्त्रियां लज्जायाञ्च स्त्री० वा ङीप् ।

**अविकट** पु० अवि+समूहे कटच् । मेषसंघाते । विकट उग्रः न०त० । उग्रभिन्ने सौम्ये त्रि० । [ अजगन्धाद्दचे ।

**अविगन्धा** स्त्री० अवेश्छागस्य गन्ध इव गन्धः पुष्पादावस्याः ।

**अविग्न** पु० विज—क्त न०त० । (करमचा) करमर्द्दकवृक्षे ।

**अवितथ** न० न वितथं मिथ्या न०त०। सत्ये ।

**अविद्या** स्त्री० विद्—क्यप् न०त० । विद्याभावे, अहङ्कारहेतौ अज्ञाने, विद्याविरोधिन्याम् अयथार्थबुद्धौ च । वेदान्तमते भावाभावाभ्यामनिर्वाच्यायामचेतनायां मायायाम् ।

**अविद्धकर्णी** स्त्री० न विद्धः अच्छिद्रः पर्णरूपः कर्णोऽस्याः । पाठालतायाम् ।

**अविनाभाव** पु० विना व्यापकमृते न भावः स्थितिः । व्यापकस्थित्यनुरोधिसत्ताकृपायां व्याप्तौ ।

**अविनीत** त्रि० अ+वि+नी—कर्त्तरि क्त। उद्धते। कुलटायां स्त्री०।

**अविप्रिय** न० अवीन् मेषान् प्रीणाति प्री-क। श्यामालते। विप्रियमपकारः न० त०। प्रतिकूलभिन्ने। न० ब०। अपकारशून्ये त्रि०। श्वेतालतायां स्त्री।

**अविभक्त** पु० वि+भज—क्त न० त०। संसृष्टे, विभागरहिते द्रव्ये—स्वामिनि च। "अविभक्ता विभक्ता वा सपिण्डाः स्थावरे समाः इति" "अविभक्तं स्थावरं यत्सर्वेषामेव तद्भवेदिति" च स्मृतिः।

**अविमुक्त** न० "न विमुक्तं शिवाभ्यां यदविमुक्तं ततो विदुः" इत्युक्तलक्षणे काशीक्षेत्रे। वि+मुच—क्त न० त०। मुक्तभिन्ने त्रि०।

**अविरत** त्रि० वि+रम भावे—क्त न० ब०। विरामशून्ये, अनवरते द्रव्यादौ च क्रियाविशेषणत्वे न०।

**अविरति** स्त्री० विरामो विरतिः भावे क्तिन् न० त०। विषयादौ स्थिरचित्ततायाम्, विरामाभावे च।

**अविरल** त्रि० न विरलः न० त०। घने निविडे।

**अविलम्बित** त्रि० वि+लवि—क्त न० त०। विलम्बशून्ये, त्वरायुक्ते द्रव्यादौ। क्रियाविशेषणत्वे न०।

**अविवेक** पु० वि+विच—घञ् न० त०। सदसद्विवेकाभावे, सम्भूयैककार्य्यकरणे, भ्रमे च। न० ब०। विवेकशून्ये त्रि०।

**अविवेकिन्** त्रि० वि+विच—घिनुण् न० त०। विवेचकभिन्ने, मूर्खे, शास्त्राद्युपदेशशून्ये। विवेको भेदस्तद्रहिते च। साङ्ख्यमते प्रधाने, महदादौ च। प्रधानं महदादिभ्यः, महदादयश्च प्रधानात् न विविच्यन्ते (भिद्यन्ते) इत्युक्तम् तत्रैव।

**अविशेष** पु० वि+शिष—घञ् न० त०। विशेषाभावे, अभेदे च। न० ब०। विशेषशून्ये तुल्ये त्रि०। साङ्ख्यादिमतसिद्धेषु तन्मात्राख्येषु सूक्ष्मभूतेषु तानि च इदमेतदेवंगुणकमिति व्यावृत्ततया नानुभूयन्ते इत्यविशेषाः।

**अविश्रान्त** त्रि० वि+श्रम—क्त न० त०। विरामरहिते द्रव्ये।

**अविष** पु० अव+टिषच्। समुद्रे, नृपे च। ङीप् नद्यां स्त्री०।

न०त० विग्रशून्ये त्रि० । (आतष्टच्) पिश्वायां स्त्री० टाप् ।

अविसोढ़ न० अवेर्दुग्धम् अवि+सोढ न पत्वम् । मेषी दुग्धे ।

अविस्पष्ट न० विस्पष्टं श्रुतमात्रेणार्थावबोधकं तद्भिन्नेन अवधार्योग्यम्

वि+स्पश–क्त न० त० । अस्फुटवाक्ये ।

अवीचि पु० नास्ति वीचिः सुखमत्र । नरकभेदे अवीचिमत्योऽप्यत्र ।

अवीजा स्त्री० ईषदर्थे नञा ब० । अल्पवीजायाम् द्राक्षायाम् । वी-

जशून्ये त्रि० । [प्रवर्त्तमाने निषेधके अनुमाने

अवीत न० वि+इण्–क्त न० त० । न्यायप्रसिद्धे व्यतिरेकमुखेन

अवीर त्रि०वीरः पुत्रादि नास्ति यस्य । पुत्रादिशून्ये । न०त० । वी-

र्य्यवर्ज्जिते । पतिपुत्ररहितायां स्त्री०। "अजातपुत्रा विधवा साऽ-

वीरा परिकीर्त्तितेति" स्मृतेः। [धाने च युच् । अवेक्षाप्यत्र स्त्री ।

अवेक्षण न० अव+ईक्ष–भावे ल्युट् । दर्शने, प्रतिजागरणे, अव-

अव्यक्त पु० वि+अन्ज–क्त न०त० । विष्णौ, कामे शिवे, सांख्यमते

सर्वकारणे, प्रधाने, रूपाद्यहीनतया चक्षुराद्यगोचरत्वात्तस्य,

तथात्वम् वेदान्तमते सूक्ष्मशरीरे सुप्तावस्थायां, शब्दप्रवृत्तिनिमि-

त्तजातिगुणादिभिर्वर्ज्जिते निराकारे ब्रह्मणि च न० । अस्पष्ट-

वस्तुमात्रे त्रि० । [ अव्यक्तवर्णे ।

अव्यक्तराग पु० न व्यक्तोऽस्पष्टोरागोऽरुणिमा यस्य । ईषद्रक्ते

अव्यङ्गा स्त्री०अनेकं व्यङ्गमिवाङ्गमस्याः। शूकशिम्बयाम् । न विकलम-

ङ्गमस्य ६ब० । विकलाङ्गभिन्ने पूर्णाङ्गे त्रि० ।

अव्यञ्जन पु० नास्ति व्यञ्जनं शुभलक्षणं शृङ्गं यस्य । शृङ्गहीनपशौ

सुलक्षणशून्ये, चिह्नशून्ये च त्रि० ।

अव्यण्डा स्त्री०न विगतमण्डं वीजमस्याः । शूकशिम्बयाम् ।

अव्यथ पु० न व्यथते पङ्कां न स्खलति व्यथभयचलनयोः अच् । सर्पे ।

व्यथाशून्ये त्रि० । नास्ति व्यथा यस्याम् ७त० । हरितक्याम्

गुण्ठ्याञ्च स्त्री० । [ व्यथाशून्ये त्रि० ।

अव्यथिन् पु० नक्रचलनेऽपि न व्यथते व्यथ–इनि । अश्वे, ।

अव्यभिचारिन् त्रि० वि–अभि+चर–णिनि न० त० । केनापि

प्रतिकूलहेतुना निराकरियितुमशक्ये । न्यायमते व्यभिचारो व्याप्ति-
रभावशून्ये हेतौ पु० ।

**अव्यय** पु० न० वि+इन्–अच् न०त० । सर्व्वासु विभक्तिषु सर्व्ववचनेषु
च एकरूपे शब्दवृत्तिधर्मविशेषे यथा स्वरादयोऽव्ययाः सर्वत्रैक-
रूपाः। शिवे, विष्णौ च पु० । व्ययरहिते विकारशून्ये त्रि० ।
परब्रह्मणि न० । "सदृशं त्रिषु लिङ्गेषु सर्व्वासु च विभक्तिषु ।
वचनेषु च सर्व्वेषु यन्न व्येति तदव्ययमिति" उभयपरा श्रुतिः ।

**अव्ययीभावः** पु० अनव्ययमव्ययं भवत्यनेन अव्यय+च्वि–भू–करणे
घञ् । व्याकरणसिद्धे समासविशेषे । तत्र हि उपकुम्भमित्यादौ
अनव्ययस्यापि कुम्भादिपदस्याव्ययत्वम् ।

**अव्यवस्था** स्त्री० वि+अव+स्था–अङ् न० त० । इदं कर्त्तव्यमिदं
नेति नियमाभावे, शास्त्रादिविरुद्धायां व्यवस्थायाम्, अविधौ च ।

**अव्यवहार्य्य** त्रि० वि+अव+हृ+ण्यत् न०त० । शयनाशनभोजनादौ
एकत्रावस्थानायोग्ये पतितादौ । [ व्यासंबद्ध ।

**अव्यवहित** त्रि० वि+अव+धा–कर्मणि क्त न०त०। व्यवधानरहिते सा-

**अव्याकृत** त्रि०वि+आ+कृ–कर्मणि क्त न०त०। वेदान्तमते अप्रकटी-
कृते बीजरूपे जगत्कारणेऽज्ञाने । सांख्यादिमते तथाभूते प्रधाने च ।

**अव्याप्यवृत्ति** त्रि० व्याप्य स्वाधिकरणं देशादिकं साकल्येन संबध्य
न वृत्तिः स्थितिर्यस्य । स्वाधिकरणे देशादौ प्रदेशविशेषस्थिते
वस्तुनि । यथा घटोभूतलादौ एकदेश एव तिष्ठति इत्यतोऽव्याप्य-
वृत्तिः । व्याप्यवृत्तिस्तु जात्यादिः घटादौ साकल्येन सम्बध्य स्थित
इति न्यायमते प्रसिद्धम् ।

**अव्युत्पन्न** त्रि० वि+उत्+पद–क्त न०त० । समुदायशब्दस्यावयवयोगोऽर्थ-
बोधकताशक्तिः व्युत्पत्तिस्तच्छून्ये अवयवार्थशून्ये शब्दे, शब्दार्थान-
भिज्ञे मूर्खादौ च । [व्याप्ट व्यानशे ।

**अश** संहतौ–व्याप्तौ च स्वादि० आत्म० सक० वेट् । अश्नुते व्याशिष्ट

**अश** भोजने क्र्यादि० पर० सक० सेट् । अश्नाति आशीत् । आश ।

**अशकुम्भी** स्त्री० अश्नुते व्याप्नोति अश–अच् अशा कुम्भाति जलमा-

श्नोति कुसुम-ड पृषो० सलोपः स्त्रियाम् ङीप् अशो० । वर्षा-
कालेन जलप्लावके जलोपरिजाते (याना) इति ख्याते वृक्षभेदे ।

अशन पु० अश्नुते व्याप्नोति अश-ल्यु । पीतशालवृक्षे स्वनामख्यातेऽ-
प्यसनवृक्षे । भावे ल्युट् । व्याप्तौ, भोजने च न० । कर्मणि
ल्युट् । भक्ष्ये न० ।

अशनपर्णी स्त्री० अशनस्य पीतशालस्य पर्णमिव पर्णमस्याः । (आ-
राटी) इति ख्याते वृक्षभेदे तस्य पीतशालतुल्यपर्णत्वात् ।

अशनाया स्त्री० अशितुमिच्छति अशन+क्यच् स्त्रियाम्
भावे अ । बुभुक्षायाम् । [ बुभुक्षायाम् न० ।

अशनायित त्रि० अशन+क्यच्-कर्त्तरि-क्त । क्षुधिते । भावे क्त ।

अशनि पु० स्त्री० अश्नुते संहति अश-अनि । मेघोत्पन्ने ज्योतिषि
वज्रे, प्रस्तरवर्षिणि उल्काविशेषे, विद्युति च ।

अशब्द त्रि० नास्ति शब्दो, वेदादौ वाचकशब्दो वा यस्य । शब्दहीने,
वेद्ये वाचकशब्दवर्जिते च "प्रधाने अशब्दमस्पर्शमरूपमव्ययमिति"—
श्रुतिः "ईक्षतेर्नाशब्दमिति" शारीरकसूत्रञ्च ।

अशरीर त्रि० नास्ति शरीरं तदभिमानो वा यस्य । "प्राणपानवि-
विधस्य मिथ्याज्ञाने सहेतुके । नेतिनेतिस्वरूपत्वादशरीरो भव-
त्ययम्" इत्युक्तलक्षणे सकलनिषेधरूपे ईश्वरूपे परमात्मनि, शरी-
राभिमानशून्ये जीवन्मुक्ते च "अशरीरं वाव सन्तं प्रियाप्रिये न
स्पृशतः इति" श्रुतिः । [वेदादिविरुद्धे नास्तिकागमादौ ।

अशास्त्र न० शास-करणे ष्ट्रन् शास्त्रं वेदादिविरोधे न० त० ।

अशित त्रि० अश-कर्मणि क्त । भक्षिते । कर्त्तरि क्त । तृप्ते ।

अशितङ्गवीन त्रि० अशितागावोऽत्र । पूर्वगोचारणक्षेत्रे ।

अशितम्भव त्रि० अशितस्तृप्तो भवत्यनेन भू खच् मुम् च । तृप्तिसाधने
अन्नादौ । [ चरौ ।

अशिच पु० अश-संहतौ इच । चौरे । भोजनार्थात् कर्मणि इच ।

अशिर पु० अश-भोजने इरच् । वह्नौ, राक्षसे, सूर्ये, वायौ च । वज्रे न० ।

अश्वतारात्मकत्वेऽप्यश्वाः योगकारकताराभावात् न परस्परके-
वलम् अश्विन्यश्विन्यश्वतारायाम् । श्लेषः अलङ्कारविशेषः सम्बन्धो
वा म०व० । तद्युक्ते त्रि० ।

**अश्व** पु० अश्-क्वन् । घोटके । [स्वरूपे ।

**अश्वकन्दिका** स्त्री० अश्वस्य मेढ्रमिव कन्दो मूलमस्याः । अश्वगन्धा-

**अश्वकर्ण** पु० अश्वस्य कर्ण इव पत्रमस्य । स्वनामख्याते शालवृक्षे । स्वार्थे कः अश्वकर्णकोऽप्यत्र । [अपरे घोटकभेदे । खराश्वजोऽप्यत्र ।

**अश्वखरज** पु० अश्वश्च खरी च, अश्वी च खरश्च वा ताभ्यां जायते पुंवद्भावः ।

**अश्वखुर** पु० अश्वस्य खुरमिव खुरं मूलमस्य । (नखीति) ख्याते गन्ध-द्रव्ये । अपराजितायाम् स्त्री० ।

**अश्वगन्धा** स्त्री० अश्वस्य गन्ध एकदेशो मेढ्रमिव मूलमस्याः । वराह-कर्णितुल्यपत्रे स्वनामख्याते क्षुद्रवृक्षभेदे । [नाशकत्वात् ।

**अश्वघ्न** पु० अश्वं हन्ति हन-टक् उप०स० । करवीरवृक्षे तस्याश्व-

**अश्वतर** पु० तनुरश्वः अश्व+तनुत्वे ष्टरच् अश्वायामश्वेनोत्पन्नत्वेऽश्वत्व-तस्य तनुत्वस्याभिव्यक्तत्वात् । गर्दभेनाश्वायामुत्पन्ने, अपरे मुनि-भेदे, सर्पभेदे च । जातित्वेन स्त्रियां ङीप् ।

**अश्वत्थ** पु० न श्वः स्थिरं शाल्मलिवृक्षादिवत् तिष्ठति स्था क पृ०नि० । स्वनामख्याते वृक्षे, गर्दभाण्डवृक्षे, चिरस्थायित्वात् संसाररूपे वृक्षे च "ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्" इति गीता ।

**अश्वपाल** पु० अश्वान् पालयति पा+णिच्-अनु अण् । घोटकरक्षके । ण्वुल् । अश्वपालकोऽप्यत्र अर्थे न० ।

**अश्वपुच्छी** स्त्री० अश्वस्य पुच्छमिव केशरोऽस्य । माषपर्णीवृक्षे ।

**अश्ववाल** पु० अश्वस्य वालः केशर इव तदाकारपुष्पत्वात् । (कशाया) इति ख्याते काशे । ६त० । अश्वस्य केशे ।

**अश्वमार** पु० अश्वं मारयति मृ-णिच् अण् । करवीरे । ण्वुल् । अश्वमारकोऽप्यत्र । [षाकाराश्वाकृ किन्नरे । स्त्रियां ङीप् ।

**अश्वमुख** पु० अश्वस्य मुखमिव मुखमस्य । अश्वाकारमुखे पुरु-

**अश्वमेध** पु० अश्वो मेध्यते हिंस्यतेऽत्र मेध-घञ् । यज्ञभेदे ।

अश्वमेधीय पु० अश्वमेधाय हितः अश्वमेधस्य वा पा० छ । अश्वमेधार्हेऽश्वे ।

अश्वयुज् स्त्री० अश्वेन हयमुखाकारेण युज्यते । अश्विनीनक्षत्रे तस्या अश्वमुखरूपत्वात् । युज–क्विप् अश्वयुगपि अश्वेन अश्वा-कारेण युज्यते यत्र चान्द्राश्विनमासि पौर्णमास्याम् । तस्मिन् चान्द्रमासि च “अश्वयुक् कृष्णपक्षे तु श्राद्धं कुर्वीत्” इति स्मृतिः । मत्वर्थीयेऽचि । अश्वयुजोऽप्यत्र ।

अश्वरोधक पु० अश्वं रुणद्धि रुध–ण्वुल् । करवीरे वृक्षे ।

अश्ववक्त्र पु० अश्वस्य वक्त्रमिव वक्त्रमस्य । अश्वमुखाकारमुखवति पुरु-षाकाराङ्गके किन्नरे ।

अश्ववार(ह) पु० अश्वं वारयति चुरा० वृ–अण् उप०स० । अश्वा-रोहिणि । वह–णिच्–अण् । अश्ववाहोऽप्यत्र ।

अश्वस्तन लि० न श्वोभवः श्वस्+ट्यु तुट् च । परदिनस्थायिनि एकदिननिर्वाहोचितेऽन्नादौ “अश्वस्तनविधानेन कर्त्तव्यम्” इति मनुः ।

अश्वास्य पु० अश्वस्यास्यमिव अस्य बहु० । देवयोनिभेदे ।

अश्वाभिधानी स्त्री० अश्वोऽभिधीयतेऽभिधाप्यतेऽनया अभिधा–ल्युट् । अश्वबन्धनरज्ज्वामभिधानीशब्दस्य “इमामगृभ्णन् रशनामृतस्येत्यश्वा-भिधानीमादत्ते” इति श्रुतिः ।

अश्वारि पु० अश्वस्यारिः ६त० । महिषे ।

अश्वारोह पु० अश्वमारोहति रुह–अण् । अश्वारोहके, अश्वारोह-णेन युद्धकर्त्तरि च । अश्वगन्धायां स्त्री० ।

अश्वावरोहक पु० अश्वस्कन्धमिवावरोहति ण्वुल् । अश्वगन्धायाम् ।

अश्विन् पु० द्विव० अश्वाः सन्ति ययोः इनि । स्वर्गवैद्ययोः ।

अश्विनी स्त्री० अश्वस्तद्मुखाकाराकारोऽस्त्यस्य इनि ङीप् । सप्तविंशति-नक्षत्रमध्ये प्रथमे नक्षत्रे ।

अश्विनीकुमार पु० द्विव० अश्वीभूता संज्ञानाम्नी सूर्यपत्नी तस्या-मश्वरूपेण सूर्य्येण जातौ कुमारौ । स्वर्गवैद्ययोः ।[द्वित्वे लि० ।

अश्वीय न० अश्वानां समूहोऽश्वेभ्यो हितं वा छ । अश्वसमूहे अश्व-

अश्वोरस न० अश्वानामुर इव उरस्यम् अच् समा० । उत्तमे अश्वे ।

**अष** दीप्तौ अक० गतौ, ग्रहणे च सक० भ्वादि० उभ० सेट्। अषति ते आषीत् आषिष्ट।

**अषडक्षीण** त्रि० न सन्ति षडक्षीणि श्रोत्रेन्द्रियाणि यत्र षच्। द्वितीयजनकर्णाश्रुते द्वाभ्यामेव कृते मन्त्रादौ।

**अषाढ़(ड़)** पु० अषाढ़(षाड़)या युक्ता पौर्णमासी आषाढ़ी (षाढी) सा यत्र मासे अण् वा ह्रस्वः। वैशाखादितस्तृतीये चान्द्राषाढ़मासे। आषाढी पूर्णिमा प्रयोजनमस्य प्रयोजनार्थे अण्। ब्रह्मचारिधार्य्ये दण्डे, तस्य हि आषाढ़पौर्णमास्यां विहितकर्म्मोपयोगित्वात् आषाढः आषा(ढो)ढोऽप्युभयत्र।

**अषाढ़ा(ड़ा)** स्त्री० षाढिः साहनं सह–णिच्+क्तिन् ढत्वम् अर्श आद्यच् न० त० पृषो० वा डत्वम्। अश्विन्यवधिके पूर्वादिके विंशे, उत्तरादिके एकविंशे च नक्षत्रे। आषाडाप्यत्र।

**अष्टक** न० अष्टौ अध्यायाः परिमाणमस्य अष्टन्+कन्। पाणिनेरष्टाध्याय्यां ग्रन्थे, प्रत्येकमष्टाध्यायात्मके ऋग्वेदांशे च।

**अष्टका** स्त्री० अश्नन्ति पितरोऽस्यां तिथौ अश–तकन्। "अष्टका तु समाख्याता सप्तम्यादिदिनत्रयम्" इत्युक्तलक्षणे सप्तम्यादिदिनत्रये, पौषमाघफाल्गुनानां कृष्णाष्टम्यां, "अष्टका पितृदैवत्ये" इत्यजादिपाठात् न ह्रस्वम्। तद्विहितश्राद्धे च।

**अष्टन्** त्रि० बहु० अश–व्याप्तौ कनिन् तुट् च। संख्याभेदे।

**अष्टपदिका** स्त्री० अष्टसु दिक्षु पादा अस्याः अन्त्यलोपः ङीपि पद्भावे संज्ञायां कन् ह्रस्वः। (छापरमालि) लतायाम्।

**अष्टपाद्** पु० अष्टौ पादा अस्य ब०व्री० अन्त्यलोपः। मृगविशेषे, शरभे, लूतायाञ्च। अष्टपादोऽप्यत्र।

**अष्टमङ्गल** पु० अष्टसु स्थानेषु उरःखुरचतुष्टयपुच्छमुखपृष्ठस्कन्धेषु श्वेतरूपात्मकं मङ्गलमस्य। तादृशलक्षणयुक्ते अश्वे। अष्टानां मङ्गलद्रव्याणां समाहारः। "लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः। हिरण्यं सर्पिरादित्य आपो राजा तथाष्टम" इत्युक्तेषु अष्टसु द्रव्येषु।

**अष्टमान** न० अष्टौ मुष्टयः मानं परिमाणमस्य । कुडवरूपे अष्टमुष्टिमिते परिमाणभेदे ।

**अष्टमी** स्त्री० अष्टानां पूरणी । षोडशकलात्मकचन्द्रस्य अष्टमकला-क्रियारूपायां स्वनामख्यातायां तिथौ अष्टसंख्या पूरण्याञ्च । अश+क्त अष्ट संघातं व्याप्तिं वा माति मा—बाहु क गौरा० ङीष् । कीटालतायाम् ।

**अष्टमूर्त्ति** पु० अष्टौ भूम्यादयो मूर्त्तयोऽस्य । "क्षितिर्जलं तथा तेजो वायुराकाशमेव च । यष्टार्कश्च तथा चन्द्रः मूर्त्तयोऽष्टौ पिनाकिनः" इत्युक्ताष्टमूर्त्तिधारिणि शिवे ।

**अष्टलौहक** न० अष्टानां लौहानां धातूनां समाहारः । "सुवर्णं रजतं ताम्रं सीसकं कान्तिकं तथा । वङ्गं लौहं तीक्ष्णलौहमित्यष्टौ धातवः स्मृताः" इत्युक्तेषु अष्टसु धातुषु ।

**अष्टाकपाल** पु० अष्टसु कपालेषु मृत्पात्रेषु संस्कृतः पुरोडाशः । संस्कारार्थकस्य तद्धितस्य लुक् आत्वम् । अष्टसु कपालेषु संस्कार्य्ये पुरोडाशे, तत्साध्ये यज्ञे च ।

**अष्टाङ्ग** पु० अष्टावङ्गानि यस्य । योगविशेषे, यमनियमासनप्राणाया-मप्रत्याहारध्यानधारणासमाधिरूपे योगशास्त्रोक्ते एतेषां स्वरूपादि तत्तच्छब्दार्थे वक्ष्यते । "जानुभ्याञ्च तथा पद्भ्यां पाणिभ्यामुरसा धिया । शिरसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग ईरितः" इत्युक्तलक्षणे प्रणामे "आपः क्षीरं कुशाग्रं च दधि सर्पिः सतण्डुलम् । यवः सिद्धार्थकश्चैव अष्टाङ्गोऽर्घः प्रकीर्त्तितः" इत्युक्तद्रव्यघटिते पूजोपकरणेऽर्घे, शारीफलके च तस्य प्रत्येकपङ्क्तौ अष्टपदरूपा-ङ्गकत्वात् ।

**अष्टादशन्** त्रि० बहु० । अष्टाधिका दश, अष्टौ च दश चेति वा । संख्याविशेषयुक्ते । पूरणे डट् । तत्पूरणे त्रि० ।

**अष्टादशाङ्ग** पु० न० अष्टादश अङ्गानि यत्र । वैद्यकप्रसिद्धे पाचने ।

**अष्टापद** पु० न० अष्टौ अष्टौ पदानि पङ्क्तावस्य इत्तौ संज्ञा म-न्तस्य दीर्घत्वाङ्गीकारः आत्वम् स्वर्णादि । शारीफलके ।

अष्टसु पादेषु पदं प्रतिष्ठा यस्य । स्वर्णे । शरभे, लूतायाञ्च पु०, तयोरष्टपदत्वात् । अष्टाभिः सिद्धिभिरापद्यते आ+पद-अच् । अणिमाद्यष्टसिद्धियुक्ते कैलासे । अष्टसंख्यातेन आपद्यते अच् काले ।

**अष्ठि** स्त्री० अस्यते भूमौ क्षिप्यते अस-क्थिन् पृषो० सत्वम् । (आँटि) इति ख्याते बीजे, षोडशाक्षरपादके छन्दोभेदे च ।

**अष्ठीला** स्त्री० अष्ठिवत्तुल्यकठिनाश्मानं रा-क रस्य लः दीर्घः । "आध्मापयन् बस्तिगुदं कृत्वा वातचलोन्नताम् । कुर्यात्तीव्रार्त्तिमष्ठीलां मूत्रविण्मार्गरोधिनीमिति" वैद्यकोक्तलक्षणयुक्ते वातजन्ये व्याधिभेदे ।

**अष्ठीवत्** पु० नास्ति अतिशयितमस्थि यस्मिन् मतुप् पृषो० नि० । (आँटु) इति ख्याते जान्वोः सन्धिस्थाने ।

**अस** दीप्तौ अक० ग्रहणे गतौ च सक० भ्वादि० उभ० सेट् । असति ते आसीत् आसिष्ट । "लावण्य उत्पाद्य इवास" इति कुमारः ।

**अस** विद्यमानतायाम् अदा० अक० पर० सेट् । अस्ति अभूत् ।

**अस** क्षेपे दिवा० पर० सक० सेट् । अस्यति आस्थत् ।

**असंस्कृत** त्रि० सम्+कृ-क्त सुट् न० त० । गर्भाधानादिसंस्काररहिते, व्याकरणसंस्कारशून्ये अपशब्दे च ।

**असकृत्** अव्य० न सकृत् न० त० । पौनःपुन्ये ।

**असक्त** त्रि० सन्ज-क्त न० त० । आसक्तिशून्ये फलाभिलाषशून्ये च "असक्तः सुखमन्वभूत्" इति रघुः । "कुर्य्याद् विद्वांस्तथाऽसक्तः" इति गीता ।

**असङ्कुल** त्रि० न सङ्कुलः । परस्पराविरुद्धे । ग्रामादिपथे विस्तीर्णे पथि च पु० ।

**असङ्क्रान्तमास** पु० न सङ्क्रान्तः राश्यन्तरं प्राप्नोरविर्यत्र चान्द्रमासे । शुक्लप्रतिपदादिदर्शान्ते संक्रमणशून्ये मलमासे ।

**असङ्ख्य** त्रि० नास्ति संख्या इयत्ता यस्य । परार्द्धातीते, बहुसंख्यके च ।

**असङ्ग** पु० सन्ज-घञ् न० त० । सङ्गरहिते परमात्मनि, पुरुषे च ।

न० त० । सङ्गविरोधिनि, पुत्रवित्तलोकैषणात्यागरूपे वैराग्ये ।
न० ब० । विषयरागाभाववति त्रि० ।

**असङ्गत** त्रि० सम्+गम–क्त न० त० । सङ्गतिरोधिनि तत्त्वे, अनन्तराभिधानोत्थापकाकाङ्क्षाविषयभिन्ने च । “नासङ्गतं प्रयुञ्जीत” इत्यभियुक्तोक्तिः ।

**असङ्गति** स्त्री० सम्+गम–क्तिन् न०त० । सङ्गतिविरहे । अर्थालङ्कारभेदे सा० १० परि० ।

**असत्** त्रि० अस+शतृ न० त० । सद्भिन्ने, निरुपाख्ये निःस्वरूपे निषेधरूपेण प्रतीयमाने, अधार्म्मिकाश्रये, “अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ” इति गीतोक्ते अश्रद्धया कृते होमादौ च । इन्द्रे पु० । दुराचारिणि असाधौ त्रि० । स्त्रियां ङीप् । कुलटायाम् ।

**असद्ग्रह** पु० असति अविद्यमाने वस्तुनि ग्रहः आग्रहः । बालादीनाम् (आबदार) इति ख्याते आग्रहभेदे ।

**असनपर्णी** स्त्री० असनस्य पर्णमिव पर्णमस्याः गौ० ङीष् । सातकट्टे

**असभ्य** त्रि० सभायामर्हति यत् न० त० । सभायामनुपयुक्ते । श्रोत्र-दूषणादौ, खले च । [ज्येष्ठपुत्रे पु० ।

**असमञ्जस** न० समञ्जसं युक्तियुतं न० त० । असङ्गते । सगरराजस्य

**असमय** पु० अपकृष्टार्थे न० त० । दुष्टकाले अयोग्यकाले च ।

**असमर्थ** त्रि० समर्थः शक्तः न० त० । अशक्ते, दुर्बले च । समर्थः सङ्गतार्थः न०त० । असङ्गतार्थे, व्याकरणशास्त्रे प्रसिद्धायां यत्र यत्रान्वययोग्यता तत्र तद्रूपत्वाभावेनापेक्षायाम् अतएव अश्राद्धभोजीत्यादौ असमर्थसमासः नञ्पदस्य श्राद्धेन सहान्वयायोग्यत्वात् भोजनेन च सहचाराभावेन अपेक्षणीयत्वात् ।

**असमवायिकारणम्** न० समवैति सम+अव+इण–णिनि न० त० कर्म० । न्यायमते समवायिकारणं द्रव्यं तद्भिन्नं द्रव्यवृत्ति यत् गुणादिकं कारणं तस्मिन्नर्थे । यथा कपालद्वयसंयोगरूपो गुणो घटस्य, द्रव्याश्रिता क्रिया संयोगविभागादेः ।

**असमीक्ष्यकारिन्** त्रि० समीक्ष्य विविच्य न करोतीति कृ+णिनि। विवेचनामकृत्वैव कर्मकारके, मूर्खे च।

**असम्बद्ध** न० सम्बद्धं परस्परमन्वितं न भवति सम्+बन्ध—क्त न०त०। अर्थानवबोधकेऽनन्वितार्थके वाक्ये।

**असम्बद्धप्रलाप** पु० कर्म०। असम्बद्धस्य असङ्गतस्य कथने, असङ्गतस्य अप्रस्तुतस्य निष्प्रयोजने कथने च।

**असम्बाध** त्रि० नास्ति सम्बाधा अन्योन्यं पीड़ा यत्र। परस्परसंघसंकुचपीड़ारहिते विरले, बाधारहिते च। "असंबाधा देवमर्दी" इति भारतम्।

**असम्मत** त्रि० सम्+मन—क्त नास्ति सम्मतो यस्मात् पु ब०। प्रणयिजने। न० त०। अनभिमते "असम्मतः कस्तव मुक्तिमार्गम्" इति कुमारः। [मानरहिते च।

**असम्मुग्ध** त्रि० सम्+मुह—क्त न० त०। असंसन्देहे पण्डिताभि-

**असरु** पु० सरति सृ—उन् न० त०। (कुकुरशोङ्गा) वृक्षे।

**असहन** पु० न सहति सह—ल्यु न० त०। शत्रौ। असामर्थ्ये त्रि०।

**असाधारण** त्रि० न० त०। साधारणं सामान्यधर्मयुक्तं तद्भिन्ने, तस्मात्तदितरधर्मयुक्ते, विशेषे, अधिके च। न्यायमते "यस्तूभयस्माद्व्यावृत्तः स त्वसाधारणो मत" इत्युक्ते सपक्षविपक्षव्यावृत्तौ दुष्टहेतौ पु०। यथा वह्निसाधने गगनादिर्हेतुः स च पक्षे पर्वतादौ, पक्षभिन्ने जलादौ च न विद्यते गगनादेः कुत्रापि विद्यमानत्वाभावात्। [ अपभ्रंशादौ च।

**असाधु** त्रि० न० त०। साधुभिन्ने, असच्चरिते, संस्कृतशब्दभिन्ने,

**असाध्य** त्रि० सिध—णिच्—साधादेशः यत् न० त०। "जहुं साध्यमधीयाप्यमसाध्यं युगपद्धतम्" इत्युक्ते प्रतिकाराशक्ये रोगभेदे, असाधनीये, दुष्टमे, शत्रौ च।

**असाम्प्रतम्** अव्य० न साम्प्रतम् युक्तं न० त०। अयुक्ते।

**असार** पु० नास्ति सारो यस्य। सारहीने एरण्डवृक्षे। न०त०। सारभिन्ने। न०ब०। निःसारे त्रि०। "असारः खलु संसार"

मलग्राहः । [प्रतिरूपकम् अव्य० ।

असि पु० अस–दीप्तौ क्षेपणे वा इन् । खड्गे । त्वमित्यर्थे विभक्ति-

असिक्नी स्त्री० सो–क्त सिता शुक्ला असिता तद्भिन्ना अस्त्वा आदेशः ङीप् च । अन्तःपुरचारिण्यामवृद्धायां प्रेष्यायाम्, नदीभेदे च । [यत्र । गण्डोपधाने ।

असिगण्ड पु० अस्यते क्षिप्यते अस–इन् असिः क्षिप्तो गण्डो

असित पु० सितः शुभ्रः विरोधे न० त० । शुभ्रवर्णभिन्ने तद्विरुद्धे कृष्णवर्णे । तद्वति त्रि० । कृष्णपक्षे पु० । नीलोषधौ, अन्तःपुरचारिण्यामवृद्धायां प्रेष्यायाञ्च स्त्री० टाप् ।

असितकार्चिस् पु० असितयति सिच्–ण्वुल् सा अर्चिः शिखा यस्य । वह्नौ तच्छिखासम्बन्धेन हि सर्वेषामसितत्वम् ।

असितफल पु० असितं कृष्णं फलं यस्य । मधुनारिकेले । [कन्

असिदंष्ट्र पु० असिरिव तीक्ष्णा दंष्ट्रा यस्य । मकराख्ये यादसि । स्वार्थ

असिद्ध त्रि० सिद्धो निष्पन्नः पक्वश्च न० त० । अपक्वे, अनिष्पन्ने च न्यायमते आश्रयासिद्धत्वादिभिस्त्रिभिर्दोषैर्दुष्टे हेतौ पु० ।

असिद्धि स्त्री० सिध–क्तिन् न०त० । अनिष्पत्तौ, अपाके, न्यायमते आश्रयासिद्धिप्रभृतित्रिविधहेतुदोषे च ।

असिधाव पु० असिं खड्गं धावयति मार्जयति धाव–अण् । अस्त्राणां मार्जनकरे । ण्वुल् । असिधावकोऽप्यत्र ।

असिधेनुका स्त्री० असिर्धेनुरिव यस्याः वा कप् । असेर्धेनुतुल्यत्वेन तद्वत्सतुल्यायाम् छुरिकायाम् ।

असिपत्र (क) पु० असिरिव तीक्ष्णं पत्रमस्य वा कप् । इक्षुदण्डे, गुण्डनामकतृणे च । असिरेव पत्राकारो यत्र । नरकभेदे । असेः पत्रमिवाच्छादकम् । खड्गकोषे न० ।

असिपत्रवन न० असिरिव पत्रमस्य तादृशं वनम् । नरकभेदे "यस्त्विह वै निजवेदपथादनापदि अपगतः पाषण्डञ्चोपगतस्तमसिपत्रवनं प्रवेश्येति" भागवतम् । [जन्तुभेदे ।

असिपुच्छ पु० असिरिव धारायुक्तः पुच्छोऽस्य । शिशुमारे जल-

**असिपुत्रिका** स्त्री० असेः पुत्रीव स्वार्थे कन् ह्रस्वे अत इत्वम्। छुरिकायाम्। कन्भावे। असिपुत्रीत्यप्यत्र।

**असिमेद** पु० असिरिव तीक्ष्णः मेदो निर्यासो यस्य। विट्खदिरे।

**असिहेति** पु० असिर्हेतिः साधनमस्य। खड्गेन युद्धकर्त्तरि।

**असु** पु० अस्यते क्षिप्यते अस—उन्। चित्ते। कर्त्तरि उन्। तापे। करणे उन्। पञ्चस्वपि वायुभेदेषु पु० बहु०। [लि०।

**असुख** न० विरोधे न० त०। सुखविरोधिनि दुःखे। न०ब०। तद्वति

**असुधारण** न० असूनां प्राणादिपञ्चवायुवृत्तीनां धारणम्। जीवने।

**असुर** पु० अस—दीप्तौ उर। सूर्य्ये। अस्यति क्षिपति देवान् उर। सुरविरोधिनि दैत्ये। रात्रौ स्त्री०।

**असुररिपु** पु० असुराणां रिपुः। दानवशत्रौ विष्णौ।

**असुरसा** स्त्री० न सुष्ठु रसो यस्याः ५ब०। (वायुद्दतुलसी) वर्वरी-क्षुपे तस्या अतिसुरसत्वात्।

**असूयक** त्रि०(असु)असूञ् कण्ड्वादि० यकि-ण्वुल्। गुणेषु दोषा-रोपणशीले। • [रोपणे।

**असूया** स्त्री०(असु)असूञ्—कण्ड्वादि० यकि ण्वुल्। गुणेषु दोषा-

**असूर्त्त** (र्य)ण न० सुर्त्त—ल्युट् रे परे दीर्घः नास्ति सूर्त्तणमनादरो यस्मात् न० ५ब०। पाठान्तरे असूनासुतणं तापोयस्मात् अना-दरे। [अत्यन्तगुप्ते सूर्य्यादर्शिनि राजदारादौ।

**असूर्य्यम्पश्य** त्रि०सूर्य्यमपि न पश्यति दृश—खश् मुम् च। अस०समा०।

**असृक्कर** पु० असृजं शोणितं करोति कृ—ट। शरीरस्थे रसधातौ, अन्नादेर्यतस्य प्रथमं रसरूपता, रसस्य रक्तरूपतेति वैद्यके प्रसिद्धम्।

**असृग्धरा** स्त्री० असृजं धरति धृ—अच्। शोणितधारिण्यां त्वचि।

**असृज्** न० न सृज्यते इतररागवत् संसृज्यते सहजत्वात् न+सृज् क्विन्, अस्यते क्षिप्यते इतस्ततो नाड़ीभिः अस् ऋजि वा। रक्ते, कुङ्कुमे, विष्कुम्भावधिके षोड़शे योगे।

**असेचनक** त्रि० न सिच्यते तृप्यते मनोऽत्र सिच—ल्युट् संज्ञायां कन्। अत्यन्तप्रियदर्शने दर्शनान्तरमो न तृप्यति।

अस्त पु० अस्यन्ते सूर्य्यकिरणा यत्र आधारे क्त। पश्चिमाचले, कर्म-णि क्त। क्षिप्ते अवधीरिते च त्रि०। मृत्यौ ज्योतिषोक्ते लग्नात् सप्तमे स्थाने च न०। भावे क्त। अवसाने क्षेपे च न०।

अस्तक पु० अस्तं अपुनरावृत्तिम् अवसानं वा करोति अस्त+णिच् ण्वुल्। निर्व्वाणमोक्षे।

अस्तम् अव्य० अस-तमि। नाशे, अदर्शने च।

अस्तमन न० अन–वा–भावेऽप् अस्तम् अव्ययस्य अनः गति। सूर्य्या-देरदर्शनसाधने भूगोलकच्छायया तिरोधाने, "तिरोधानञ्च यत्रैति तद्देशास्तमनं रवेः। नैवास्तमनमर्कस्य नोदयः सर्वदासतः इति ज्योतिषोक्तेः तत्काले च।

अस्तमय पु० अस्तोमीयते प्राप्यते यत्र मिन्–अच् वा न आत्। प्रलयादौ, सूर्य्यस्यातिप्रत्यासत्त्या प्रकाशाभावेनाप्यच्छायामसत्य वियोगे चोदयः "रविणास्तमयोयोगो वियोगस्तूदयो भवेदित्युक्तेः" अन्यच्छायां रवियोगे च। [चले अस्तगिरौ।

अस्ताचल पु० अस्यन्ते किरणा यत्र आधारे क्त कर्म०। पश्चिमा-

अस्ति अव्य० अस्–श्तिप्। स्थितौ, विद्यमानतायाञ्च "अस्ति नास्ति जानामीत्या"दि।

अस्तु अव्य० अस् दीप्तौ तुन्। अनुज्ञायां, पीडायाम् प्रतिक्षेपे असूयायाम्, प्रकर्षे, अङ्गीकारे, प्रशंसायाम्, लक्षणे, असूयापूर्वकाङ्गीकारे च। [संहतस्निग्धे त्रि०।

अस्त्यान न० स्त्यै क्त न० त०। निन्दायाम्, भर्त्सने च। स्त्यानः

अस्त्र न० अस्यते क्षिप्यते अस–ष्ट्रन्। क्षेप्यास्त्रे शरादौ। करणे ष्ट्रन्। चापे, रिपुक्षेपणसाधने प्रहरणमात्रे खड्गादावपि।

अस्त्रकण्टक पु० अस्त्रं कण्टकइव। बाणे तस्याग्रस्य कण्टकाकार-त्वात्। [कित्–ण्वुल् ६त०। अस्त्रव्रणरोगचिकित्सके।

अस्त्रचिकित्सक पु० अस्त्रस्य अस्त्रजन्यव्रणस्य चिकित्सकः

अस्त्रिन् त्रि० अस्त्रं धनुरस्यास्ति इनि। धनुर्द्धरे, अस्त्रधारिमात्रे च।

अस्थान न० अप्राशस्त्ये न० त० अप्रशस्तस्थाने अयोग्यस्थाने।
अस्थि न० अस्यते अस+क्थिन्। मांसाभ्यन्तरस्थे (हाड़) इति ख्याते धातुभेदे।
अस्थिकृत् पु० अस्थि—कृ—क्विप् ६त०। अस्थिकारके मेदसि धातौ।
अस्थिज पु० अस्थ्नो जायते जन—ड। अस्थिपरिपाकाज्जाते तदन्तःस्थे मज्जधातौ। [शिवे।
अस्थिधन्वन् पु० अस्थि अस्थिमयं धनुरस्य ब० अनङ् समा०।
अस्थिपञ्जर पु० अस्थि पञ्जर इव। शरीरस्यास्थिसङ्घये पिञ्जराकारे कङ्काले। [ङ्कुरे च।
अस्थिभक्ष पु० अस्थि भक्षयति भक्ष—अण्। (हाड़गिला) पक्षिणि,
अस्थिमालिन् पु० अस्थिमयी मालाऽस्त्यस्य इनि। शिवे।
अस्थिर त्रि० न० त०। स्थिरभिन्ने चञ्चले।
अस्थिविग्रह पु० अत्यन्तकृशत्वात् अस्थिसारो विग्रहो देहोऽस्य। शिवानुचरे भृङ्गरीटे। [ग्रन्थिमति वृक्षे।
अस्थिशृङ्खला स्त्री० अस्थ्नां शृङ्खलेव योजनहेतुः। (हाड़जोड़ा)
अस्थिसंहार पु० अस्थीनि संहरति योजयति सम्+हृ—अण्। (हाड़जोड़ा) ग्रन्थिमति वृक्षे।
अस्थिसार पु० अस्थ्नः सारः रसपरिणामः। अस्थिजाते मज्जधातौ। अस्थ्येव सारो यस्य। रक्तमांसशून्ये त्रि०।
अस्नाविर त्रि० नास्ति स्नावा शिरा यस्य इरच्। शिरावर्जिते, स्थूलशरीरशून्ये च।
अस्निग्धदारु न० अस्निग्धं रूक्षं दारु कर्म्म०। देवदारुभेदे।
अस्मद् त्रि० अस—मदिक्। अहंप्रत्ययावलम्बनत्वेन वेद्ये प्रत्यगात्मनि, देहाभिमानिनि जीवे च।
अस्मि अव्य० अस—मिन्। अहमर्थे, "त्वामस्मि वच्मि विदुषां" इति साहित्यदर्पणे। [पुरुषयोरभेदाभिमाने मोहे।
अस्मिता स्त्री० अस्मि इत्यस्य भावः तल्। सांख्यमते प्रधान—
अस्रखदिर पु० अस्रवर्णः रक्तवर्णः खदिरः। विट्खदिरे।

अस्रज न० अस्रात् रुधिरात् रसपाकेन जायते । मांसे ।
अस्रपत्रक पु० अस्रमिव रक्तं पत्रमस्य संज्ञायाम् कन् । रक्तमार्के
भिण्डाहक्षे । [पा—क । राक्षसे पु० ।
अस्रपा पु० अस्रं पिबति पा—क्किप् क वा । (जोँक) जलौकसि ।
अस्रफला(ली) स्त्री० अस्रमिव लोहितं फलमस्याः । शल्लकीवृक्षे ।
अस्रबिन्दुच्छदा स्त्री० अस्रबिन्दुः रुधिरबिन्दुरिव छदो दलं
यस्याः । लक्ष्मणानामके वृक्षे ।
अस्रमातृका स्त्री० अस्रस्य रुधिरस्य मातेव पोषिका संज्ञायां कन् ।
अशितान्नादेः रसरूपे देहस्थे प्रथमे धातौ ।
अस्ररोधिनी स्त्री० अस्रं क्षतजमाशु रुणद्धि रुध—णिनि । लज्जा-
लुलतायाम् । [लुलसीवृक्षे ।
अस्रार्जक पु० अस्रं रुधिरं सेवनेनार्जयति अर्ज—ण्वुल् । श्वेत-
अस्वच्छन्द त्रि० नास्ति स्वस्य छन्द आयत्तता यस्य । पराधीने ।
अस्वतन्त्र त्रि० न स्वस्य तन्त्रः अधीनः । पराधीने ।
अस्वन्त न० असूनाम् अन्तो यस्मात् ५ब० । चुल्ल्यां तदग्नितापाद्धि
प्राणक्षयः । अशुभे च । ६त० । मरणे पु० ।
अस्वप्न पु० नास्ति स्वप्नो निद्रा यस्य । देवे । निद्रारहिते त्रि० ।
अस्वर्ग्य त्रि० स्वर्गाय हितं स्वर्ग+यत् न०त० । स्वर्गहेतुधर्मविरोधिनि
निषिद्धाचरणादौ । [इक्षे अतिकायाय ।
अस्वादुकण्टक पु० अस्वादुः अमधुरः कण्टको यस्य । (गोखुरी) गोक्षुर-
अस्वाध्याय त्रि० न स्वाध्यायो वेदाध्ययनमस्य । वेदाध्ययनहीने
"अस्वाध्यायं वषट्कारं" इति स्मृतिः । न स्वाध्यायो यस्मिन् ।
अध्ययननिषिद्धकाले अष्टम्यादौ । अधीयते अधि+इङ्—घञ् अ-
ध्यायः स्वस्य स्ववर्णानुसारेण अध्यायः स्वाध्यायः "स्वाध्यायोऽध्ये-
तव्य" इति श्रुतिः न० त० । स्वाध्यायभिन्ने ।
अस्वामिक त्रि० न स्वामी यस्य । स्वामिरहिते "अटव्यः पर्वताः
पुण्या नद्यस्तीर्थानि यानि च । सर्वाण्यस्वामिकान्याहुर्न हि तेषु
परिग्रहः" इति स्मृतिः।

अस्वैरिन् पु० स्वैरी स्वाधीनः न० त० । परतन्त्रे ।
अह मतौ आत्म० भ्वा० सक० इदित् सेट् । अंहते आंहिष्ट । [म ।
अह दीप्तौ चुरा० इदित् उभ० अक० सेट् । अंहयति ते आञ्जिहत्
अह अव्य० अहि—कञ् । प्रशंसायां, क्षेपे, वियोगे, निग्रहे, आचारातिशये, अर्ज्जने च ।
अहंयु त्रि० अहमहङ्कारोऽस्त्यस्य अहम्+यु अनादेशः । गर्वयुक्ते ।
अहङ्कार पु० अहमिति क्रियते अनेन कृ—अपादाने घञ् । गर्वे "अहङ्कारश्च सर्वेषां पापबीजमनङ्गलम् अब्राह्मणेषु च सर्वेषां गर्वपर्य्यन्तमुन्नति" इति पुराणात् गर्वपर्य्यायत्वम् ।
अहङ्कृत त्रि० अहमिति कृतं येन । सगर्वे ।
अहत न० हन—क्त न० त० । ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् । अहतं तद्विजानीयात् पावनं सर्वकर्मसु" इत्युक्तलक्षणे वस्त्रे । हतभिन्ने त्रि० । [न+हा कनिन् । दिवसे ।
अहन् न० न जहाति न त्यजति सर्वथा परिवर्त्तमानत्वात् न त्यजति ।
अहम् अव्य० अह—अम् । अहङ्कारार्थे, स्वात्मसम्बन्धितयाऽभिमाने च ।
अहमहमिका स्त्री० अहमहंशब्दोऽस्त्यत्र वीप्सायां द्वित्वम् ठन् न टिलोपः । परस्पराहङ्कारे अहमेवाग्रगण्य इतीत्थं रूपायामन्योन्योक्तौ च ।
अहंपूर्विका स्त्री० अहं पूर्व्वोऽहं पूर्व्व इत्यभिधानं यत्र । योधानां युयुत्साधिक्येन अहमेव पूर्वं यास्यामीत्यध्यवसाये ।
अहम्मति स्त्री० अहमित्याकारा मतिः ज्ञानं मन+क्तिन् । अविद्यायाम् अन्यस्मिन्नन्यधर्मावभासके अज्ञाने ।
अहर्गण पु० अह्नां गणः समूहः । त्रिंशद्दिनात्मके मासे । ज्योतिःशास्त्रसिद्धे ग्रहाणां स्पष्टतासाधनार्थमाद्यष्टेः वर्त्तमानदिनपर्य्यन्ते दिनसमूहे च । [ प्रतिदिने ।
अहर्दिव न० अहश्च दिवा च समा० द्व०तुल्यार्थकतया वीप्सा गम्यते ।
अहर्पति पु० अह्नां पतिः । सूर्य्ये, अहर्नाथादयोऽप्यत्र ।
अहर्मुख पु० अह्नोमुखमादिभागः । प्रत्यूषे ।

अहल्य त्रि० न हलेन कृष्यम् । हलाकृष्टे क्षेत्रे । गौतमर्षिपत्न्यां स्त्री० ।

अहस्कर पु० अहः करोति कृ—ट कस्कादित्वात् सत्वम् । दिवाकरे सूर्य्ये, अर्कवृक्षे च । [अर्कवृक्षे च ।

अहस्पति पु० अह्नः पतिः ६त० कस्कादित्वात् सत्वम् । सूर्य्ये,

अहह अव्य० अहं जहाति अहम्+हा—क पृषो० । सम्बोधने आश्चर्य्ये, खेदे, क्लेशे, प्रकर्षे च । [च लि० ।

अहार्य्य पु० हृ—ण्यत् न० त० । पर्वते । हर्त्तुमशक्ये, अभेद्ये

अहि पु० आहन्ति आ+हन+डिन् टिलोपः आङो ह्रस्वश्च । सर्पे, वृत्रासुरे, सूर्य्ये, धातुभेदे सीसके, राहौ, पथिके, खले, वप्रे, सर्पस्वामिके अश्लेषानक्षत्रे च ।

अहिंसा स्त्री० न हिनस्ति हिंस् भावार्थे ल्यप् न०त० । वाङ्मनः-कायैः परपीड़ाभावे, प्राणिपीड़ानिवृत्तौ,अशास्त्रीयप्राणिपीड़ना-भावे च "अहिंसा परमो धर्म" इति स्मृतिः ।

अहिका स्त्री० अहिरिव कायति प्रकाशते दुराक्रमत्वात् । शाल्मलि-वृक्षे । [भेदे स्त्री० ।

अहिच्छत्र पु० अहेः फणाकारःछत्रमाच्छादकः । मेषशृङ्गीवृक्षे, नगरी-

अहिजित् पु० अहिं सर्पं वृत्रासुरं वा जितवान् जि—क्विप् तुक् च । विष्णौ, इन्द्रे च । [लतायाम् ।

अहिजिह्वा स्त्री० अहेर्जिह्वेव तदाकारशिखत्वात् । नागजिह्वाख्य-

अहित पु० । न० त० । शत्रौ । पथ्यभिन्ने त्रि० ।

अ(आ)हितुण्डिक पु०अहेस्तुण्डं मुखं तेन दीव्यति ठञ् । व्यालग्रा-हिणि, सर्पखेलके च ।

अहिद्विष् पु०अहिं सर्पं वृत्रासुरं वा द्विष्टवान् द्विष—भूते क्विप् । गरुड़े, इन्द्रे, मयूरे, नकुले, विष्णौ च ।

अहिनिर्लयणी स्त्री० अहिर्निर्लीयतेऽस्याम् निर्+ली—ल्युट् । (खोलस)इति ख्याते सर्पनिर्मोके ।

अहिपुत्रक पु० अहेः पुत्रः क्षुद्रसर्प इव कायति प्रकाशते कै—क । क्षुद्रसर्पाकारे नौकाविशेषे (डिंगा) ।

अहिफेन पु० अहेः फेनः गरलमिव तीक्ष्णगुणत्वात् । ( आफिङ् ) इति ख्याते द्रव्यभेदे ।

अहिबुध्न पु० अहेरिव बुध्नो ग्रीवा यस्य । रुद्रभेदे, तद्देवताके उत्तरभाद्रपदनक्षत्रे च ।

अहिभय न० अहेः, क्रूरस्वत्वात् आहताकारत्वाद्वा अहितुल्यात् स्वपक्षाद्वा भयं भी—अच् । सर्पभये राज्ञां स्वपक्षजनिते भये च ।

अहिभयदा स्त्री० अहिभयं द्यति खण्डयति दो—क । सर्पभयनाशिकायाम् भूम्यामलक्याम् ।

अहिभुज् पु० अहिं भुङ्क्ते क्विप् । गरुड़े, मयूरे, नकुले च ।

अहिमर्द्दनी स्त्री० अहिर्मर्द्द्यतेऽनया मृद—ल्युट् । गन्धनाकुलीनामलतायाम् ।

अहिमार पु० अहिं मारयति मृ-णिच्—अण् । अरिमेदकवृक्षे ।

अहिमेदक पु० अहिराहन्ताऽरिरिव मेदोऽस्य वा कप् । अरिमेदकवृक्षे ।

अहिलता स्त्री० अहिलोकस्य पातालस्य लता शाक०त०। ताम्बूल्याम् ।

अहीरणि पु० अहीन् ईरयति दूरीकरोति ईर—अनि । द्विमुखसर्पे तद्दर्शनाद्धीतरे सर्पाः पलायन्ते ।

अहुत पु० नास्ति हुतं हवनं यत्र । धर्मसाधनत्वेऽपि अहोमे वेदपाठे ।

अहे अव्य—अह्—ए । क्षेपे, नियोगे च ।

अहेरु पु० न हिनोति हि—रु न० त० । शतमूल्याम् ।

अहैतुक त्रि० हेतुत आगतम् ठञ् न० त० । फलाभिसन्धानरहिते, कापट्यरहिते च ।

अहो अव्य० न+हा—डो । शोके, धिगर्थे, विषादे, दयायां, सम्बोधने, विस्मये, प्रशंसायाम्, वितर्के, असूयायाञ्च ।

अहोरात्र पु० अहश्च रात्रिश्च टच् समा० । सूर्य्योदयद्वयमध्यवर्त्तिकाले षष्टिदण्डात्मके मानुषे दिने पैत्रादिमानन्तु वाचस्पत्ये ।

अहोवत अव्य० अहो च वत च द्व० । खेदे, सम्बोधने, अनुकम्पायाञ्च ।

अह्राय अव्य० ह्रु—घञ् ह्रासः पृषो० नास्ति यत्र न० त० । शीघ्रे ।

# आ

**आ** अव्य० आप् क्विप् पृषो० पलोपः। वाक्ये (वाक्यस्यान्यथात्वद्योतने) पूर्वं मैवं मंस्था इदानीमेवमिति प्रतिपादनपरे स्मृतौ (आ एवं मन्यसे इति स्मृतस्यान्यथापादने) अनुकम्पायाम्। समुच्चये, अङ्गीकारे, ईषदर्थे क्रियायोगे, सीमायां व्याप्तौ च। वाक्यस्मृति-भिन्नेऽस्य ङित्त्वमिच्छन्ति। [म्पिते च।

**आकम्पित** त्रि० आ+कपि–चलने कर्त्तरि क्त। कम्पयुक्ते, ईषत्क-

**आकर** पु० आकुर्वन्ति संघीभूय कुर्वन्ति व्यवहारमत्र आ कृ-घः। समूहे, श्रेष्ठे च। आकीर्य्यन्ते धातवोऽत्र कॄ–अप्। रत्नाद्युत्पत्तिस्थाने।

**आकरिक** त्रि० आकरे रत्नाद्युत्पत्तिस्थाने नियुक्तः ठक्। आकरे करग्रहणार्थं नियुक्ते।

**आकर्ष** पु० आकृष्यते विषयान्तरतोऽनेन आ+कृष–घञ्। पाशके, शारिफलके, द्यूते, इन्द्रिये धन्विनो धनुरभ्यासे च। भावे घञ्। आकर्षणे। आधारे घञ्। निकषे उपले। जलादिगतं द्रव्य-माकृष्यतेऽनेन करणे घञ्। अङ्कुशाकारे (आकुँड़ा) इति ख्याते काष्ठभेदे।

**आकर्षक** पु० आकर्षति सन्निकृष्टस्थं लौहं आ+कृष–ण्वुल्। (चु-म्बक) इति ख्याते अयस्कान्ते। आकर्षणकर्त्तरि त्रि०।

**आकर्षणी** स्त्री० आकृष्यतेऽनया आ+कृष–ल्युट् टित्वात् ङीप्। उच्चस्थपुष्पाद्याहरणार्थे (आकुशी) यष्टिकाभेदे।

**आकलन** न० आ–कल–ल्युट्। आकाङ्क्षायाम् गणनेऽनुसन्धाने च।

**आकल्प** पु० आ+कृप णिच्–घञ्। वेशरचनायाम्, भूषणे च कल्प-पर्य्यन्ते अव्य०। आकल्पं नरकं भुङ्क्ते इति स्मृतिः।

**आकल्पक** पु० आकल्पयति अन्यथान्यथात्वं कल्पयति आ+कृप-णिच्–ण्वुल्। अज्ञाने औत्सुक्ये, हर्षे च।

**आकष** पु० आकष्यते यत्र कष–अच्। स्वर्णादिकषणसाधने (कोष्टि) प्रस्तरभेदे।

**आकस्मिक** त्रि० अकस्मात् इति अव्ययं कारणाभावे कारणं विना भवः विनया० इक् टिलोपः । अकस्माद्भवे ।

**आकाङ्क्षा** स्त्री० आ+काङ्क्ष–अङ् । अभिलाषे, न्यायमते वाक्यार्थ-ज्ञानहेतौ यत्पदं विना यत्पदस्यानन्वयस्तत्पदे तत्पदवत्त्वरूपे, सम्बन्धे च । [निवासे ।

**आकाय** पु० आचीयते यस्मिन् आ+चि कर्मणि घञ् चितौ कुत्वम् ।

**आकार** पु० आ+कृ–घञ् । मूर्त्तौ, अवयवसंस्थानविशेषे च । आ-कार्य्यते आविष्कार्य्यते हृद्गतोभावोऽनेन आ–कृ–णिच् करणे घञ् । हृद्गतभावावेदके सुखप्रसादवैवर्ण्यरूपे प्रीत्यप्रीतिसूचके देहचेष्टने । भावे घञ् । हृद्गते भावे, इङ्गिते च ।

**आकारगुप्ति** स्त्री० गुप–क्तिन् आकारस्य हृद्गतभावस्य गुप्तिर्गोपनम् । रत्यादिजनितसुखप्रसादस्य भयजनितविषादादेश्च गोपने ।

**आकारण** न० स्त्री० आ+कृ–णिच् ल्युट्, युच् वा । आह्वाने । युचि स्त्रीत्वात् टाप् ।

**आकालिक** त्रि० अकाले भवं ठञ् । असमये त्पन्ने वस्तुनि । स्त्रियां ङीप् "आकालिकीं वीक्ष्य मधुप्रवृत्तिम्" इति कुमारः । समान-कालौ आद्यन्तौ यस्य समानकालस्य आकालादेशः इकञ्च नि० । आशुविनाशिनि, आद्यन्तयोरभावात्, पूर्वदिवसे यत्समये उत्पत्तिः परेद्युस्तत्समये एव नश्वरे, "आकालिकमनध्यायमेतेष्विति" मनुः आशुविनाशित्वात् विद्युति स्त्री० ।

**आकाश** पु० न० आकाशन्ते सूर्य्यादयोऽत्र । गगने ।

**आकाशदीप** पु० आकाशे दीयमानो दीपः शा० त० । "तुलायां तिलतैलेन सायं सन्ध्यासमागमे । आकाशदीपं यो दद्यादित्युक्त-लक्षणे दीपभेदे ।

**आकाशमूली** स्त्री० आकाशे भूमिसून्यदेशे मूलमस्याः ङीप् । (पाना) कुम्भिकायाम् ।

**आकाशरक्षिन्** पु० आकाशे अत्युच्चप्राचीरोपरिस्थितः सन् रक्षति रक्ष–णिनि । दुर्गवहिःप्राचीरोपरिस्थिते रक्षके ।

आकाशवल्ली स्त्री० आकाशस्य वल्ली शाखेव अन्यूधाश्रितत्वात् । अम-रवेल इति ख्यातायां लतायाम् ।

आकाशवाणी स्त्री० आकाशे भवा वाणी । अदृश्योत्पादकपुरुष-स्ये नाकाशादिशोत्पन्नायां देवादि वाचि ।

आकीर्ण त्रि० आ+कॄ–क्त । व्याप्ते, निचिते च [सम्पादने च ।

आकुञ्चन न० आ+कुचि–ल्युट् । सङ्कोचे, प्रसारितस्य संचितत्व

आकुञ्चित त्रि० आ+कुचि–क्त । आभुग्ने सङ्कोचिते च ।

आकुल त्रि० आ+कुल–क । व्याकुले । [नाकुले च ।

आकुलाकुल त्रि० आकुल+प्रकारे द्वित्वम् । आकुलप्रकारे, अत्य-

आकूत न० आ+कू भावे क्त । आशये अभिप्राये ।

आकृति स्त्री० आक्रियते व्यज्यते जातिरनया करणे क्तिन् । आकारे, अवयवसंस्था, जातौ रूपे च ।

आकृतिच्छत्रा स्त्री० छादयति छद्–णिच् कर्त्तरि ष्ट्रन् ह्रस्वः ३त० । (घोषा) घोषातकीलतायाम् ।

आकेकरा स्त्री० आके अन्तिके कीर्य्यते क कर्म्मणि अप् "दृष्टि-राकेकरा किञ्चित्स्फुटापाङ्गे प्रसारितां । मीलितार्द्धा पुरालोके ताराव्यावर्त्तनोत्तरे" इत्युक्तलक्षणे दृष्टिभेदे । [पारिभाषिकम् ।

आक्रन्द पु० आ+क्रन्द–घञ् । आरावे रोदने, आह्वाने, शब्दे च । कर्म्मणि घञ् । मित्रे, भ्रातरि च । आधारे घञ् । दारुणे युद्धे, दुःखिनां रोदनस्थाने च । आक्रन्दयति अच् । स्वदेशा-क्रमणमाचरतः पार्ष्णिग्राहस्य प्रयोजके तद्वहिर्वर्त्तिनि नृपे ।

आक्रम पु० आ+क्रम–घञ् अवृद्धिः । बलेनातिक्रमणे । ल्युट् । आक्रमणमप्यत्र न० ।

आक्रान्त त्रि० आ–क्रम–क्त । कृताक्रमणे अभिभूते व्याप्ते च ।

आक्रीड़ पु० आक्रीड़प्यत्र आ+क्रीड़–घञ् । क्रीड़ास्थाने उद्यानादौ ।

आक्रोश पु० आ+क्रुश–घञ् । विरुद्धचिन्तने, शापे, निन्दायाञ्च ल्युट् आक्रोशनमप्यत्र न० । [क्रीड़या जाते वैरे ।

आक्षद्यूतिक न० अक्षद्यूतेन पाशक्रीड़या निर्वृत्तम् ठञ् । पाश-

**आक्षपाटिक** पु० अक्षपटे क्रीड़ास्थाने व्यवहारस्थाने वा नियुक्तः ठक्। अक्षदर्शके, व्यवहाराध्यक्षे प्राड्विवेके च।

**आचार** पु० आ+चर–णिच्–घञ्। अगम्यागमनं कृतं त्वयेति पुरुषं प्रति, अगम्यगमनं त्वया कृतमिति स्त्रियं च प्रतिदूषणे। ल्युट् आचारणमप्यत्र न०। अच् टाप्। अत्रार्थे।

**आचारित** त्रि० आ+चर–णिच्–क्त। आचारोमैथुनविषयापवाद॰ स्तेन दूषिते।

**आक्षिक** पु० अक्षमिन्द्रियं व्याप्नोति तर्पकत्वात्। रञ्जकद्रुमे।

**आक्षीव** पु० आ+क्षीव–णिच्–अच्। शोभाञ्जनद्रुमे। आ+क्षीव–क्त त्रि०। मत्ते।

**आक्षेप** पु० आ+क्षिप–घञ्। भर्त्सने, अपवादे, आकर्षणे, धनादिन्यासरूपे निक्षेपे" अर्थालङ्कारभेदे च सा०१०द०।

**आक्षेपक** त्रि० आ+क्षिप–ण्वुल्। निन्दाकारके। "यदा तु धमनीः सर्व्वाः कुपितोऽभ्येति मारुतः। तदा क्षिपत्याशु मुहुर्मुहुर्देहं मुहुश्चरः। मुहुर्मुहुस्तदाक्षेपादाक्षेपक इति स्मृत, इत्युक्तलक्षणे वातरोगभेदे च। [ख्याते। कोट। आक्षोटोऽप्यत्र।

**आक्षोड़** पु०आ+अक्ष–ओड़ स्वार्थे अण्। शैलपीलुद्रुमे आखरोट इति

**आख** पु० आखनत्यनेन आ+खन–ड। खनित्रे। घ। आखनोऽप्यत्र।

**आखण्डल** पु० आखण्डयति भेदयति पर्व्वतान् आ+खडि डलच् डस्य नेत्वम्। इन्द्रे। [खननकर्त्तरि त्रि०।

**आखनिक** पु० आ+खन–कर्त्तरि इकन्। चौरे, शूकरे, मूषिके च।

**आखनिकक** पु० आ+खन–करणे इकयक। खनित्रे। डर। आखरोऽप्यत्र।

**आखु** पु० आ+खन–डु। मूषिके, चौरे, शूकरे च। कर्म्मणि डु। देवताड़भेदे। "विभवे सति नैवात्ति न ददाति जुहोति न। तमाहुराखुम्" इत्युक्तलक्षणे कृपणे च।

**आखुकर्णी** स्त्री० आखोः मूषिकस्य कर्ण इव पर्णमस्याः। (उन्दुरकाणी) मूषिककर्णतुल्यपर्णवत्यां लतायाम्।

आखुग पु० आखुना मूषिकेण गच्छति । गम–ड । मूषिकवाहने गणेशे ।

आखुपर्णिका स्त्री० आखोः कर्ण इव पर्णमस्याः वा कप् स्वार्थे कन् अत इत्वम् । (उन्दुरकाणी) इति ख्यातायां लतायाम् ।

आखुभुज् पु० आखुं भुङ्क्ते भुज–क्विप् । मूषिकभक्षके विडाले ।

आखुविषहा स्त्री आखुविषं मूषिकविषं हन्ति हन–ड । मूषिकविषहरे देवताडवृक्षे, देवतालीलतायाञ्च ।

आखेट पु० आखिद्यन्ते त्रास्यन्ते प्राणिनोऽत्र आ+खिट–घञ् । प्राणित्रासदायां मृगयायाम् । स्वार्थे कन् आखेटकोऽप्यत्र ।

आखेटिक पु० आखेटे कुशलः ठक् । मृगयाकुशले कक्कुरे ।

आखोट पु० आखः खनित्रमिव उटानि पर्णान्यस्य । (आखरोट) इति ख्याते शैलपीलौ । [भावे अङ् । कथने ।

आख्या स्त्री० आख्यायतेऽनया आ+ख्या–अङ् । संज्ञायां, नाम्नि च ।

आख्यात त्रि० आ+ख्या–कर्मणि क्त । कथिते, व्याख्याते, व्याकरण-प्रसिद्धे तिङन्ते पदे च "क्रियाप्रधानमाख्यात" इति यास्कः ।

आख्यातृ त्रि० आ+ख्या–तृच् । कथनकर्त्तरि । पाठयितरि "आख्यातोपयोगे" इति पाणिनिः । [मन्थनाद्युपाख्यानम् ।

आख्यान न० आ+ख्या–भावे ल्युट् । प्रसिद्धेतिवृत्तकथने यथा अमृत-

आख्यायिका स्त्री० आ+ख्या–ण्वुल् कापि अत इत्वम् । विदितवृ-त्तान्तार्थायां कथायाम्, गद्यपद्यप्रबन्धे च । कथके त्रि० ।

आगत त्रि० आ+गम–क्त । आयाते, उपस्थिते, प्राप्ते च । भावे क्त । आगमने न० ।

आगन्तु त्रि० आ+गम–तुन् । अनियतस्थायिनि अतिथौ, आगमन-शीले च । स्वार्थे कन् । आगन्तुकोऽप्यत्र ।

आगम न०पु० आ+गमो–घञ् । "आगतं शिववक्त्रेभ्यो गतञ्च गिरिजाश्रुतौ । मतञ्च वासुदेवस्य तस्मादागममुच्यते" इत्युक्तलक्षणे सृ-ष्टिश्च प्रलयश्चैव देवानां च तथार्च्चनम् । साधनञ्चैव सर्वेषां पुरश्च-रणमेव च । षट्कर्मसाधनञ्चैव ध्यानयोगश्चतुर्विधः सप्तभिर्लक्षणैर्युक्तं त्वागमं तद्विदो विदुरित्युक्तलक्षणे च तन्त्रशास्त्रे । "सिद्धं सिद्धैः

प्रमाणैस्तु हितं यात मरतेश्च । आगमं शास्त्रमाम्नायमित्यु क्तलचणे शास्त्रमात्रे च । भावे घञ् अवृद्धिः उपदेशे आगतौ च पु० । आ-गम्यते ज्ञायतेऽनेन करणे घञ् । व्यवहारे सन्दिग्धार्थसाधके पत्र-लेख्यादौ । आगच्छति प्रकृतिप्रत्ययानुपघातेन प्राप्नोति अच् । व्याकरणप्रसिद्धे प्रकृतिप्रत्ययानुपघातेन तन्मध्ये आगन्तरि इ-डादौ । [ अपराधे, पापे च ।

**आगस्** न० इण आग अपराधे उणा० इण् असुन् आगादेशः ।

**आगामिन्** त्रि० आ+गम-णिनि । आगन्तुके, प्रणयिनि । भविष्यति काले, तद्वृत्तौ च । [ष० । गटे ।

**आगार** न० अग—कुटिलायां गतौ घञ् आगच्छति ऋ—अण् उप०

**आगू** स्त्री० आ+गम—क्विप् मलोपे ऊकारादेशः । इदं कर्त्तव्य मेवे-त्यङ्गीकारे प्रतिज्ञायाम् च ।

**आग्नीध्र** न० अग्निमिन्धे अग्नीत् तस्य शरणं "अग्नीधः शरणे रण् भञ्" वार्त्ति०रण् भत्वान्न जश् । होतुर्गृहे मनुवंश्ये नृपभेदे च ।

**आग्नेय** न० अग्निर्देवताऽस्य अण् । स्वर्णे, हते च । इदमर्थेऽपि । रक्तवर्णे । "अग्निनोक्तं पुराणं यदाग्नेयं तेदसंज्ञितं" इत्युक्तल-चणे महापुराणभेदे वह्निपुराणे च । अग्निदेवताके द्रव्यमात्रे त्रि० । दक्षिणपूर्वदिशि, अग्नियोषिति स्वाहायाम् अग्निदेवता-कायामृचि च स्त्री० ङीप् ।

**आग्रयण** न० अग्रे अयनं भोजनं शस्यादेर्येन कर्मणा पृ० ह्रस्वदीर्घः व्यत्ययः । नवशस्यनिमित्त के इष्टिरूपे यज्ञे ।

**आग्रहायणिक** पु० आग्रहायणी पौर्णमासी यस्मिन् मासि ठक् । चान्द्रे मार्गशीर्षमासि । अण् । आग्रहायणोऽप्यत्र ।

**आग्रहायणी** स्त्री० अग्रहायण्या मृगशिरसा नक्षत्रेण युक्ता पौर्ण-मासी अण् ङीप् । चान्द्रमार्गशीर्षमासपूर्णिमायां तस्या एव पूर्णिमाया मृगशिरसा योगसम्भवात् । [अग्रदानीये विप्रे ।

**आग्रहारिक** पु० अग्रहारोऽग्रभागो नियतं दीयतेऽस्मै ठक् ।

**आघट्ट** पु० आघट्टयति रोगान् ण्वुल् । रक्तवर्णेऽपामार्गे ।

**आघाट** पु० आघटयति रोगान् नियोजयति आ+घट–णिच् । घञ् वृद्धिः णि०। रक्तापमार्गे, सीमायाञ्च ।

**आघात** पु० आ+हन–घञ् । आहनने । आधारे घञ् । वधस्थाने ।

**आघार** पु० आ+घृ–कर्म्मणि घञ् । घृते । भावे घञ् होमादौ, मन्त्रविशेषेण देवताविशेषाय घृतदाने ।

**आघूर्णित** त्रि० आ+घूर्ण–क्त । चालिते, भ्रामिते च ।

**आघ्राण** न० आ+घ्रा–क्त । गन्धग्रहणे, तृप्तौ च । [आक्रान्ते च ।

**आघ्रात(ण)** त्रि० आ+घ्रा–क्त वा तस्य नत्वम् । गृहीतगन्धे,

**आङ्गिक** त्रि० अङ्गेन अङ्गचालनेन निर्वृत्तं ठक् । भावव्यञ्जकेऽङ्ग-निष्पन्ने भ्रूक्षेपादौ, अङ्गजातमात्रे च । मृदङ्गे वाद्ये न० ।

**आङ्गिरस** पु० अङ्गिरसो मुनेरपत्यम् अण् । वृहस्पतौ ।

**आचमन** न० आ+चम–भावे ल्युट् । विधिना जलप्राशने,मुखादिप्रक्षालने, वैधकर्म्मादौ जलप्राशनपूर्वकमष्टाङ्गस्पर्शरूपक्रियायाञ्च, विस्तरो वाचस्पत्ये । [ निष्ठीवनपात्रे ।

**आचमनक** न० आचमनस्य मुखप्रक्षालनस्य कं जलं अत्र । पतद्ग्रहे

**आचमनीय** न० आचमनाय मुखप्रक्षालनाय दीयते छ्रात् क,आ+चम–करणे अनीयर् वा । मुखप्रक्षालनार्थे जले । [घञ् । भक्ष्यमात्रे ।

**आचाम** पु० आ+चम–भावे घञ् वा वृद्धिः । आचमने । कर्म्मणि

**आचार** पु० आ+चर–भावे घञ् । चरिते, मन्वाद्युक्ते स्नानाचमनादिव्यवहारे च । [ हिलमोचिकालतायाम् ।

**आचारी** स्त्री० सम्यक् चारः प्रसरणं यस्याः गौ० ङीष् ।(हेलञ्चा)

**आचार्य्य** पु० "उपनीय तु यः शिष्यं वेदमध्यापयेत् द्विजः । सकल्पं सरहस्यं च तमाचार्य्यं प्रचक्षते" इति मनूक्तलक्षणे वेदाध्यापयितरि, "आम्नायतत्त्वविज्ञानाच्चराचरसमागतः । यमादियोगसिद्धत्वादाचार्य्य इति कथ्यते इत्युक्तलक्षणे मतप्रस्थापके शङ्कराचार्य्यादौ च । स्त्रियां टाप् आचार्य्या । आचार्य्यपत्न्यान्तु आचार्य्याणी । ङीप् न णत्वम् ।

आचार्य्यक पु० आचार्य्यस्य कर्म्म भावो वा योपधागुरूपोत्तमत्वात् वुञ्। आचार्य्यकर्त्तव्यकर्म्मणि। [मितपरिमाणे, शकटपरिमाणे च पु०।
आचित त्रि० आ+चि—क्त। संगृहीते, व्याप्ते, ग्रथिते च। दशभार-
आच्छन्न त्रि० आ+छद—क्त। आवृते। छद—णिच्—क्त त्रि०। आच्छादिते।
आच्छाद पु० आच्छाद्यतेऽनेन छद—णिच्—करणे घञ्। वस्त्रे।
आच्छादन न० आ+छद—णिच्—ल्युट्। पिधानवस्त्रे।
आच्छिन्न त्रि० आ+छिद—बलाद्ग्रहणे क्त। बलाद्गृहीते।
आच्छुरित न० आ+छुर क्त। सशब्दहासे, नखाघातेन वाद्ये च। स्वार्थे क। आच्छुरितकमप्यत्र। [च्छुरयायाम्।
आच्छोदन न० आच्छिद्यन्तेऽत्र छिद—ल्युट् पृषो० इतओत्।
आञ्छ आयामे (दीर्घविस्तारे)। इदित् भ्वादि० पर० सक० सेट्। आञ्छति आञ्छीत्। [अण्। छागमांसादौ त्रि०।
आज न० आज्यतेऽनेन आ+अनुज—घञर्थे क। घृते। अजस्येदम्
आजक न० अजानां समूहः वुञ्। छागसमूहे।
आजन्मसुरभिपत्र पु० आ जन्मनः सुरभि पत्रमस्य। मरुवकवृक्षे।
आजानेय पु० "शक्तिभिर्भिन्नहृदयाः स्खलन्तश्च पदेपदे। आजानन्ति यतः संज्ञामाजानेयास्ततः स्मृता" इत्युक्तलक्षणे उत्तमाश्वे। अव-यवार्थस्तु अजानेयशब्दे दृश्यः।
आजि स्त्री० अजन्त्यस्याम् अज—इण् न वीभावः। समरभूमौ, संग्रामे, आक्षेपे, क्षणे, मर्य्यादायाम् च।
आजीव पु० आजीव्यतेऽनेन आ+जीव—करणे घञ्। आजीविकायाम् कर्त्तरि ण्वुल्। आजीविकाप्यत्र स्त्री०।
आजू स्त्री० आजवति आ+जु—क्विप् दीर्घः। भृतिं विना कर्मकारके।
आज्ञा स्त्री० आ+ज्ञा—अङ्। निदेशे इदं क्रियतामिति शासने, ज्योतिषप्रसिद्धे लग्नात् दशमे स्थाने च।
आज्य न० आ अज्यते अनुज—क्यप् नलोपः। घृते।
आज्यभाग पु० आज्यस्य भागः। होमे आहुतिविशेषे, घृते च।
आञ्जनेय पु० अञ्जनाया अपत्यं ढक्। हनुमति।

आञ्जिनेय पु० अञ्जिन्यां भवः ढक् । (आजनाइ) कीटभेदे ।
आटविक न० अटव्यां चरति भवो वा ठक् । आरण्यके धन्ये ।
आटि(डि) पु० आ+अट्–इण् । शरारिपक्षिणि । आ+अड–इण् ।
आडिरम्यत्र, मत्स्यभेदे च । जातित्वेन स्त्रियां वा ङीप् ।
आटोप पु० आ+तुप घञ् पृषो० टत्वम् । दर्पे, संरम्भे, वातजन्ये
उदरव्याधिभेदे च ।
आडम्बर पु० आ+डबि–क्षेपे, अरन् । हर्षे, दर्पे, तूर्यस्वने, आ-
रम्भे, संरम्भे, अक्षिलोम्नि, घनगर्ज्जिते, आयोजने च ।
आढक पु०न० आढौकते आ+ढौक–घञ् पृषो०। सर्वतोदशाङ्गुलमाने,
प्रस्थचतुष्टयमिते, पुष्कलचतुष्टयमिते च धान्यमानपात्रे, षट् पञ्चा-
शदधिकद्विशतमुष्टिपरिमाणे, द्रोणस्य चतुर्थभागे च ।
आढकिक त्रि० आढक+शमाद्यर्थे ठञ् । आढकमितस्य धान्यस्य व-
पनयोग्ये क्षेत्रे, तत्पाचके तत्खादके च । ख । आढकीनोऽप्यत्र ।
आढकी स्त्री० आढौकते अच् पृषो० । (अड्हर) इति ख्याते शमी-
धान्यभेदे ।
आढ्य त्रि०आ+ध्यै–क पृषो० । युक्ते, विशिष्टे, सम्पन्ने, धनिनि च ।
आणवीन त्रि० अणुधान्यानां शर्षपादीनां भवनं क्षेत्रम् वा खञ् ।
(सुनाडाङ्गा) शर्षपादिभवनयोग्ये क्षेत्रे । अञ् आणवमप्यत्र ।
आणि पु०अण–इण् स्त्रियां वा ङीप् । रथचक्रापस्ये कीलके,
कोटौ,सीम्नि च । [भवे च ।
आतङ्क पु० आ+तकि–घञ् । रोगे, सन्तापे, सन्देहे, मुरजशब्दे,
आतञ्चन न० आ+तञ्च–ल्युट् । वेगे, प्रापणे, आप्यायने, दुग्धादौ
दध्यादिभावापादनाय अम्लद्रव्यप्रक्षेपे, निक्षेपे उपद्रवे, द्रवद्रव्ये प्र-
क्षेपणोचिते कठिनद्रव्यस्य चूर्णने, गलितस्वर्णादेर्द्रव्यान्तरयोगेन
जारणे च ।
आततायिन् त्रि०आततेन विस्तीर्णेन शस्त्रादिना अयितुं शीलमस्य
अय–णिनि । यथोक्तं "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारापहारी च षडेते आततायिनः" इत्युक्तप्रकारे ।

**आतप** पु० आ+तप–घ। प्रकाशे, उद्द्योते, सूर्य्याद्यालोके च।

**आतपत्र** न० आतपात् त्रायते। त्रै–क। छत्रे। स्वार्थे कन्। आतपत्रकमप्यत्र।

**आतपाभाव** पु० ६त० आतपस्याभावरूपायाम् छायायाम्।

**आतर** पु० आतरत्यनेन तॄ–अप्। नद्यादेः तरणार्थं देये भाटकादौ।

**आतर्पण** न० आ–तृप–ल्युट्। प्रीतौ। णिच:-प्रीणने मङ्गलालेपने

**आतायिन्** पु० आ+ताय–णिनि। (चिल्) इति ख्याते पक्षिभेदे।

**आतिथेय** न० अतिथये इदं ढक्। अतिथिनिमित्तके भोजनादौ। तत्र साधुः ढक्। अतिथिसपर्य्यायां कुशले त्रि०।

**आतिथ्य** न० अतिथेरिदं ञ्य। अतिथौ, अतिथिसेवादौ।

**आतिवाहिक** त्रि० अतिवाहे इहलोकात् परलोकप्रापणे नियुक्तः ठक्। मृतस्य सूक्ष्मदेहादेर्लोकान्तरप्रापणार्थमीश्वरनियुक्ते अर्च्चिरादिस्थानस्थिते देवभेदे। "आतिवाहिकास्तल्लिङ्गात्" इति वेदान्तसूत्रम्।

**आतुर** त्रि० ईषदर्थे आ+अत–उरच्। रोगयुक्ते।

**आतृप्य** पु०आतृप्यतेऽनेन आ+तृप–करणे क्यप्।(आता)वृक्षविशेषे।

**आतोद्य** न० आसमन्तात् तुद्यते आ+तुद–ण्यत्। वीणादौ चतुर्विधे वाद्ये।

**आत्तगन्ध** त्रि० आत्तोगृहीतोऽरिणा गन्धो गर्व्वो यस्य। शत्रुणाभिभूते, कार्य्ये च। आत्तगर्व्वोऽप्यत्र।

**आत्मगुप्ता** त्रि०आत्मना गुप्तः स्वयत्नेन रक्षिते।(आल्कुशी)लताभेदे।

**आत्मघातिन्** त्रि०आत्मानं देहं हन्ति हन्–णिनि ६त०। "व्यापादयेत् वृथात्मानं स्वयं योऽग्न्युदकादिभिः अवैधेनैव मार्गेण आत्मघाती स उच्यते" इत्युक्तलक्षणे आत्मनः स्वशरीरस्य प्राणेन सह वियोजयितरि जने।

**आत्मघोष** पु० आत्मानं घोषयति स्वशब्दैः। काके,कुक्कुटे च, ताभ्यां (का का) (कु कु) ध्वनिभिरात्मनामैकदेशस्य घोषणात्।

**आत्मज** पु० आत्मनो जायते, आत्मा वा जायते जन–ड। पुत्रे,

"आत्मा वै जायते पुत्र इति" श्रुतिः आत्मजन्माप्यत्र। कन्यायां, मनोजन्यायां बुद्धौ च स्त्री०।

आत्मदर्श पु० आत्मा देहः दृश्यतेऽत्र दृश—आधारे घञ्। दर्पणे।

आत्मन् पु० अत—मनिण्। स्वरूपे, यत्ने, देहे, मनसि, धृतौ, बुद्धौ, अर्के, वह्नौ, वायौ, जीवे, ब्रह्मणि च।

आत्मबान्धव पु० "आत्ममातुः स्वसुःपुत्रा आत्मपितुः स्वसुःसुताः। आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः" इत्युक्तेषु।

आत्मभू पु० आत्मनो मनसो देहात् वा भवति भू—क्विप्। चतुर्मुखे विधातरि, कामे च।

आत्ममूली स्त्री० आत्मैव रक्षणे मूलमस्याः दुस्पर्शतयेतरमर्दनतः स्वस्य स्वयं रक्षणात् गौरा० ङीष्। दुरालभालतायाम्।

आत्मम्भरि त्रि० आत्मानं बिभर्त्ति खच् मुम् च। स्वोदरमात्रपूरके।

आत्मयोनि पु० आत्मा योनिरस्य। हरौ, हरे, विधातरि मनसिजे मदने च। [रक्षणे।

आत्मरक्षा स्त्री०आत्मन एव रक्षा यस्याः। वृक्षभेदे। ६त०। आत्मनो

आत्महन् पु० आत्मानं हतवान् हन—क्विप्। "येऽन्यथासन्तमात्मानमकर्त्तारं स्वयं प्रभुम्। कर्त्ता भोक्तेति मन्यन्ते तएवात्महनो जनाः, इत्युक्तलक्षणे आत्मनो याथार्थ्यज्ञानरहिते, जने, आत्मघातिनि च जने।

आत्माधीन पु० आत्मनोऽधीनः। पुत्रे, श्यालके। प्राणाधारे च।

आत्माश्रय पु० आत्मानमाश्रयति आ+श्रि—अच् ६त०। स्वस्य स्वापेक्षारूप तर्कदोषभेदे।

आत्मीय त्रि० आत्मनोऽयं छ। आत्मसम्बन्धिनि।

आत्मोद्भवा स्त्री० आत्मनैवोद्भवति भू—अच्। माषपर्ण्याम्। आत्मा उद्भवो यस्याः। कन्यायाम्। पुत्रे पु०।

आत्यन्तिक त्रि० अत्यन्त+भवार्थे ठक्। अतिशयेन जाते।

आत्ययिक त्रि० अत्ययः नाशः प्रयोजनमस्य ठक्। नाशके।

आत्रेय पु० अत्रेरपत्यं ढक्। अत्रिमुनिपुत्रे, देहस्थे रसधातौ च।

आग्नेयी स्त्री० न सन्ति कर्मयोग्यानि तीर्थानि दिनानि यस्याः इच् समा० वा अत्रा स्वार्थे ठञ्। ऋतुमत्याम्, नदीभेदे च। पुनः स्वार्थे कनि ह्रस्वे आत्रेयिकाप्यत्र।

आथर्व्वण न०अथर्वणा मुनिना दृष्टो वेदः अण् तमधीते वेत्ति वा पुनः अण्। तमधीतेन तत्र विहितं वा पुनरण्। अथर्ववेदज्ञे ब्राह्मणे, तद्वेदविहितेऽभिचारादिकर्मणि च।

आथर्व्वणिक त्रि० अथर्वाणं वेदमधीते ठक्। अथर्ववेदपाठके विप्रे।

आदर पु० आ+दृ—अप्। समादरे, सम्माने, आरम्भे च।

आदर्श पु० आदृश्यतेऽत्र दृश—आधारे घञ्। दर्पणे, टीकायां प्रतिरूपपुस्तके च। [ल्युट्। कृत्तिकोपलक्षणे स्त्री०।

आदान न०आ+दा—भावे ल्युट्। ग्रहणे, अश्वाभरणे च। कर्मणि

आदि पु० आ प्रथमं दीयते गृह्यते आ+दा—कि। प्रथमे, प्राक्सत्तायाम्, कारणे, सामीप्ये, प्रकारे, अवयवे च।

आदिकारण न०आद्यं कारणं निमित्तम्। पूर्व्वनिमित्ते।

आदितेय पु० अदित्या अपत्यं ढक्। देवे।

आदित्य पु० अदितेरपत्यं ण्य। सूर्य्ये, देवे च। आदित्यमण्डलस्थे हिरण्मये विष्णौ, अर्कवृक्षे अदितिदेवताके पुनर्वसुनक्षत्रे च।

आदित्यपत्र पु० आदित्यस्य अर्कवृक्षस्य पत्रमिव पत्रमस्य। क्षुपभेदे। ६त० अर्कदलपत्रे न०। [वृक्षे।

आदित्यपुष्पिका स्त्री० आदित्यवर्णं पुष्पमस्याः। रक्तपुष्पे अर्क-

आदिदेव पु०आदौ दीव्यति स्वयं राजते दिव—अच् ७त०। नारायणे, शिवे,आदिकारणे वेधसि च।

आदिपु(पू)रुष पु०आदौ पुरि॰देहे वसति वस—उषन् स्वेनात्मना पूरयति जगत् पूर—उषन् वा पु० वा स्वस्वः। प्रथमजीवे हिरण्यगर्भे नारायणे च।

आदिम त्रि०आदौ भवः आदि+डिमच्। आद्ये।

आदिमत् त्रि० आदिः कारणं विद्यतेऽस्य मतुप्। सकारणे कार्य्ये।

आदिवराह पु० आद्यो वराहः। विष्णौ तस्यादिवराहरूपत्वात्।

आदिष्ट न० आ+दिश–भावे क्त। आज्ञायाम्, उपदेशे च। कर्मणि क्त। उपदिष्टे, व्याकरणप्रसिद्धे स्थानिजाते, यथा इकः स्थाने यण् आदिश्यते इति यणादिष्ट इत्युच्यते। [क्लेशे, दुर्दमे च।
आदीनव पु०आ+दी–भावे क्त आदीनस्य वानम् प्राप्तिः वा०क। दोषे,
आदृत त्रि०आ+दृ–कर्त्तरि क्त। पूजिते,सादरे, कृतादरे च।
आदेश पु० आ+दिश–भावे घञ्। आज्ञायाम्, शासने, उपदेशे च। च। कर्मणि घञ्। ज्योतिषशास्त्रोक्ते, फले, व्याकरणसिद्धे प्रकृतिप्रत्ययोपघातके कार्यभेदे ( वर्णस्थाने वर्णान्तरोत्पत्तौ ) च।
आदेष्टृ त्रि० पु० आ+दिश–तृच्। ऋत्विजं प्रति यज्ञेष्टसम्पादनार्थं कर्म क्रियतामित्यादेशकर्त्तरि यजमाने, आदेशकर्तृमात्रे त्रि०।
आद्य त्रि०आदौ भवः दिगा०यत्। प्रथमे। अद–ण्यत्। अदनीयद्रव्यमात्रे धान्ये न०।
आद्यमाषक पु० आदौ भवः आद्यं मुख्यं माष्यतेऽनेन करणे घञ् कर्म०। पञ्चगुञ्जापरिमाणे, (माषा) इति ख्याते माषकं सप्तलक्षणता इत्युक्तेराद्यत्वविशेषणम् तस्य कार्यविशेषोपयोगितया गौणत्वान्न मुख्यत्वम् अतएव "दशार्द्धगुञ्जं प्रवदन्ति माषमिति भास्कराचार्येण माषस्य पञ्चगुञ्जत्वमेवोक्तम्।
आद्यून त्रि० आदिना ऊनः। आदिशून्ये। आ+दिव–क्त। अलिगोपायां निष्ठा तस्य नत्वम् ऊठ् च। (पेटुको) कर्मान्तरकाङ्क्षाविरहेण केवलमुदरपूरके।
आधमन न० आधीयते आ+धा–कमनवृ। (बन्धकदाने) आधौ, योगाधमनविक्रीतम्" इति स्मृतिः।
आधर्षित त्रि० आ+धृष–क्त। अन्यायेनाक्रान्ते, "मार्गेष्वाधर्षितः परैरिति स्मृतिः।
आधान न० आ+धा–ल्युट् आधौ, मन्त्रादिना वह्निस्थापने, "आधाने सोमपाने" चेति स्मृतिः। गर्भाधाने च।
आधार पु० आ+धृ–घञ्। अधिकरणे, आश्रये, व्याकरणप्रसिद्धे औपश्लेषिकवैषयिकाभिव्यापकाख्येऽधिकरणप्रकारके, यज्ञसम्पादनार्थं

अवरोधनार्थे बन्धने दण्डिकायां अवधारणार्थे आलवाले च।
आधारबन्धप्रमुखैरिति रघुः।

आधि पु० आधीयते अभिनिवेश्यते प्रतीकाराय मनोऽनेन। आ+धा—कि। मानसदुःखे अवस्थायाम्, अधिष्ठाने, बन्धके, "आधौ प्रतिग्रहे क्रीते" इति स्मृतिः। व्यसने च। [ग्रथिततायाम्।

आधिक्य न० अधिकस्य भावः ष्यञ्। अधिकतायाम् अति-

आधिदैविक त्रि० देवान् अग्निवाय्वादीन् अधिकृत्य निर्वृत्तम् अधि+देव—ठञ् द्विपदवृद्धिः। अतिवातादिहेतुजाते दुःखे।

आधिपत्य न० अधिपतेर्भावः ष्यञ्। प्रभुत्वे।

आधिभौतिक त्रि० भूतानि व्याघ्रसर्पादीन्यधिकृत्य जातम्। अधि-भूत+ठञ् द्विपदवृद्धिः। व्याघ्रसर्पादिजनिते दुःखे।

आधिवेदनिक न० अधिवेदनाय विवाहोपरिविवाहाय हितं ठक् तत्र काले दत्तं ठञ् वा। अधिकं वेदनमधिवेदनं तत्र प्रथमविवाहा-न्तरं द्वितीयविवाहकाले स्त्रियै देये धने। "अधिविन्नस्त्रियै दे-यमाधिवेदनिकं समम्" इति स्मृतिः।

आधुनिक त्रि० अधुना भवः ठञ्। इदानीन्तने, नव्ये च।

आधेय त्रि० आ+धा—यत्। आश्रिते च उत्पाद्ये "आधेयश्चाक्रिज-श्चेति" भाष्यकारिका। [हस्तिपके।

आधोरण पु० आ+धोर—गतिचातुर्ये ल्यु। हस्तिगतिचातुर्यवति

आध्मात त्रि० आ+ध्मा—क्त। शब्दिते, दग्धे, वातरोगजातायाम् उदरस्फीततायाम्।

आध्मान पु० "आध्मानमिति जानीयाद्घोरं वातनिरोधजम्" इत्युक्ते वातव्याधौ। आ+ध्मा—आधारे ल्युट्। स्फीततायाम्। नलिका-नामगन्धद्रव्ये स्त्री० ङीप्। [शोकमोहज्वरादिरूपे दुःखे।

आध्यात्मिक त्रि० आत्मानं मनःशरीरादिकमधिकृत्य भवः। ठञ्।

आध्यान न० आ+ध्यै—ल्युट्। चिन्तायाम्, उत्कण्ठापूर्वकस्मरणे च।

आध्वर्यव न० अध्वर्योः यजुर्वेदविद इदं अञ्। यजुर्वेदविहिते अध्वर्युसम्बन्धिनि कर्मणि, तद्भावे च।

**आन** पु० आनित्यनेन आ+अन–करणे क्विप् । अनःस्थितस्य प्राणस्य योनीासिकयोच्छ्वासे ।

**आनक** पु० आनयति प्रोत्साहम् करोति अन–णिच् ण्वुल् । पटहे, मृदङ्गे, वज्रध्वन्मेघे च । उत्साहके त्रि० ।

**आनकदुन्दुभि** पु० आनकः प्रोत्साहकः दुन्दुभिर्देववाद्यविशेषो यस्य कृष्णजन्मोत्सवे तथा वाद्यं तद्गृहे जातम् । कृष्णपितरि वसुदेवे । हृहत्ढक्कायां स्त्री० ङीप् ।

**आनत** त्रि० आ+नम–क्त । कृतप्रणामे, अधोमुखे, विनयानते च ।

**आनति** स्त्री० आनमति प्रणीभवत्यनया आ+नम–करणे क्तिन् । सन्तोषे । भावे क्तिन् । नम्रीभावे, अधोभवने, नम्रतायाञ्च ।

**आनद्ध** न० आ+नह–क्त । चर्मणा बद्धमुखे पटहमुरजादौ वाद्ये, वेशभूषादिके च । ग्रथिते, व्याप्ते, बद्धे च त्रि० ।

**आनन** न० आ अनित्यनेन आ+अन–करणे ल्युट् । मुखे ।

**आनन्तर्य्य** न० अनन्तरमेव चतुर्वर्णादित्वात् स्वार्थे ष्यञ् । अनन्तरे अव्यवहिते । अनन्तरस्य भावः ष्यञ् । अव्यवधाने ।

**आनन्त्य** न० अनन्त+भावे स्वार्थे वा ष्यञ् । बाहुल्ये "आनन्त्यात् कुलधर्म्माणाम्" इति स्मृतिः देशकालाद्यपरिच्छिन्ने "तदानन्त्यं समश्नुते इति श्रुतिः । अनन्तं सुखमित्यर्थः ।

**आनन्द** पु० आ+नन्द–घञ् । हर्षे, सुखे, दुःखाभावे, ब्रह्मणि च । आनन्दवति त्रि०"सत्यं ज्ञानमानन्दं ब्रह्म" इति श्रुतिः ।

**आनन्दथु** पु० आ+नदि–भावे–अथुच् । आनन्दे ।

**आनन्दन** न०आनन्दयत्यनेन आ+नदि–णिच्–करणे ल्युट् । गमनागमनसमये कुशलप्रश्नेनानन्दोत्पादने ।

**आनन्दमय** पु० आनन्दः प्रचुरोऽस्य प्राचुर्य्ये मयट् । जीवे, वेदान्तोक्ते सुषुप्तिसाक्षिणि प्राज्ञे च ।

**आनन्दार्णव** पु०आनन्दः अर्णव इव असीमत्वात् । परमेश्वरे "स्तोत्रा-मूलत्रिकोणस्थाः सौम्याः पापविवर्ज्जिताः । आनन्दाख्याश्चयोगोऽयम्", नित्युक्ते यात्रालग्नभेदे च । द्वत० । अत्यन्तानन्दे ।

आनन्दि पु० आ+नदि—इन् । हर्षे, कौतुके च । कौशल्यानन्दि-वर्द्धनो राम इति रामायणम् ।

आनर्त्त पु० आ+नृत्यत्यत्र आ+नृत—आधारे घञ् । नृत्यशालायाम् रणे, जले,द्वारकाधिष्ठितदेशे,तद्देशवासिनि च । [सार्थे ।

आनाम्य त्रि० आ+नम—कर्मणि ण्यत्अनिट्कत्वात् न ह्रस्वः । नम-

आनाय पु०आनीयते मत्स्योऽनेन आ+नी—करणे घञ् । जाले । भावे अच् आनयः । आनयने ।

आनाय्य पु० आनाय्यते गार्हपत्यादानीय संस्क्रियतेऽसौ नी—ण्यत् आयादेशः । वैदिकप्रसिद्धे दक्षिणाग्नौ ।

आनाह पु०आ+नह—घञ् । दैर्घ्ये विण्मूत्ररोधके वैद्यकोक्ते रोगभेदे च।

आनुपूर्व्वी स्त्री० पूर्वमनुक्रम्य अनुपूर्वं तस्य भावः ष्यञ् ततो वा ङीपि यलोपः । परिपाट्याम् मूलावधिके क्रमे ङीषभावपक्षे । आ-नुपूर्व्यमप्यत्र न० ।

आनुमानिक त्रि० अनुमानादागतः ठक् स्त्रियां ङीप् । अनुमा-नमात्रसिद्धे सांख्योक्ते प्रधाने "आनुमानिक इति वेदान्तसूत्रम् ।

आनुश्रविक त्रि० गुरुपाठादनुश्रूयते अनुश्रवोवेदस्तत्र विहितः ठक् । स्वर्गादिसाधनतया वेदविहिते कर्मसमूहे "दृष्टवदानुश्रविक" इति सांख्यकारिका ।

आनृत त्रि० अनृतं शीलमस्य अण् । असत्यस्वभावे । [कर्क्कश्ये च ।

आनृशंस्य न० नृशंसो घातुकः न० त० भावे ष्यञ् । दयायां,

आन्तर त्रि० अन्तर्मध्ये भवः अण् । आभ्यन्तरे । [सौहार्द्दे ।

आन्तरतम्य न० अन्तरतमस्य अत्यन्तसदृशस्य भावः ष्यञ् ।

आन्त्र न०अमत्यनेन अम—गतौ क्त उपधादीर्घः । नाडीभेदे । अन्त्रस्ये-दम् अण् । अन्त्रसम्बन्धिनि त्रि० । स्त्रियां ङीप् ।

आन्दोल दोलने अद० चुरा० उभय० सक० सेट् । आन्दोलयति ते आन्दुदोलत् त ।

आन्दोलन न०आन्दोल—भावे ल्युट् । पुनः पुनर्दोलने,सञ्चालने,अनु-सन्धाने च ।

आन्धसिक त्रि० अन्धो भक्तं शिल्पमस्य ठक् । पाचके ।

आन्वयिक त्रि० अन्वये प्रशस्तकुले भवः ठञ् । प्रशस्तकुलजाते ।

आन्वाह्निक त्रि० अहनि अहनि अन्वहम् तत्र भवः ठञ् । प्रतिदिनसाध्ये पाकादौ ।

आन्वीक्षिकी स्त्री० अनु वेदश्रवणानन्तरमीक्षा परीक्षणमन्वीक्षा सा प्रयोजनमस्याः तत्र साधु वा ठञ् ङीप् । तर्कविद्यायाम् अध्यात्मविद्यायाञ्च । [ भेदे पु० ।

आप पु० आप्यते आप-कर्मणि । अपां समूहे । आप अप् वसु-

आपगा स्त्री० आपेन जलसमूहेन गच्छति वहति ड । नद्याम् ।

आपण पु० न० आपण्यायन्ते विक्रीयन्त्यत्र आ+पण-नि० आधारे घ । हट्टे, क्रयविक्रेयद्रव्यशालायाञ्च । भावे घ । क्रयविक्रयव्यवहारे पु० ।

आपणिक त्रि० आपणा दायस्थानादागतः ठक् । क्रयादिकर्त्तरि वाणिजे । [प्र०कुरूपे तर्कदोषे च ।

आपत्ति स्त्री० आपतति आ+पत-क्तिन् । आपदि, प्रापणे, अनिष्ट-

आपद् स्त्री० आ+पद-क्विप् । विपत्तौ ।

आपन न० आप-भावे ल्युट् । प्राप्तौ, मरीचे च । कर्मणि ल्युट् । क्रये ।

आपन्न त्रि० आ+पद-क्त । विपद्ग्रस्ते, प्राप्ते च ।

आपन्नसत्त्वा स्त्री० आपन्नं सत्त्वं यया । गर्भवत्याम् ।

आपमित्यक न० अपमित्य परीवर्त्त्य निर्वृत्तम् अप+मे-क्त्वा ल्यप् ततोनिर्वृत्तेऽर्थे कक् कित्त्वात् वृद्धिः । तुल्यरूपद्रव्यविनिमयेन ग्रहणे ।

आपराह्णिक त्रि० अपराह्णे भवः ठञ् । त्रिधा विभक्तस्य दिनस्य तृतीयभागभवे पितृश्राद्धादौ ।

आपस् न० आप-असुन् । जले, "आपोभिर्मार्जनम्" इति श्रुतिः । "सर्वमापोमयं जगत्" इति देवीमाहात्म्यम् ।

आपस्तम्भिनी स्त्री० आपः स्तभ्नाति स्तम्भ-णिनि । विजिन्यां लतायाम् ।

**आपाक** पु० समन्तात् परिवेष्ट्य पच्यतेऽत्र आ+पच—आधारे घञ् । (पोयान्) कुम्भकारस्य मृत्पात्रपाकस्थाने । [ तत्काले, मार्गे च ।

**आपात** पु० आ+पत-भावे घञ् । सहसा पतने, । आधारे घञ्

**आपाततस्** अव्य० आपात+तसिल् । अनिश्चये विवेच्येर्थे "आपाततो-यदर्थस्य" इति साहित्यदर्पणः ।

**आपान** न० आपीयते सम्भूय सुरा पीयतेऽत्र आधारे ल्युट् । सुरापानार्थं सम्भूयोपवेशने, (चक्र) मद्यपानसभायाञ्च ।

**आपानभूमि** स्त्री० आपानस्य भूमिः । सुरापानस्थाने ।

**आपिञ्जर** न० ईषत् पिञ्जरवर्णम् । स्वर्णे ।

**आपीड़** पु० आ+पीड़—अच् । शिखामाल्ये, शिरोभूषणे, गन्धव-ह्निनिःसृतकाष्ठे च ।

**आपीत** न० ईषत् पीतम् प्रा०त० । माक्षिकधातौ । ईषत्पीते त्रि० ।

**आपीन** न० आ+प्याय—क्त पीभावः तस्य नत्वम् । (मेड़) ऊधसि । कूपे पु० । ईषत्स्फीते त्रि० ।

**आपूपिक** न० अपूपः शिल्पमस्य ठक् । पिष्टकसमूहे पिष्टकसम्पादनेन जीव्यतीत्याद्यर्थे ठक् । पिष्टकाजीवे, तद्भक्षणकारके, तद्रचयितरि, तद्भक्षणशीले च त्रि० ।

**आपूप्य** पु० अपूपाय साधुः वा ञ्य । सक्तुषु, गोधूमचूर्णादौ च ।

**आपृच्छा** स्त्री० आ+प्रच्छ—अङ् । आलापे जिज्ञासायामाभाषणे च ।

**आप्त** त्रि० आप—क्त । विश्वस्ते, प्राप्ते, लब्धे, सत्ये, रागद्वेषादिवर्जिते, यथार्थोपदेष्टरि भ्रमादिशून्ये यथार्थज्ञातरि च ।

**आप्तकाम** त्रि० आप्तः प्राप्तः कामः कामनाविषयो येन । सम्पूर्णकामे नित्यतृप्ते । परमेश्वरे पु० ।

**आप्ति** स्त्री० आप—क्तिन् । सम्बन्धे, योगे, लाभे प्राप्तौ च ।

**आप्तोक्ति** स्त्री० आप्तस्य उक्तिः वच—क्तिन् । सन्दिग्धविषयनिर्णयार्थं विद्वान्निवाक्ये, यथार्थवाक्ये च ।

**आप्य** त्रि० अपामिदं अण् बाहु० स्वार्थे ष्यञ् । जलसम्बन्धिनि । अपां विकारे तु अम्मयमित्येव सि० कौ० आप—यत् । प्राप्ये,

धातुषमव्यन्तरोगे देवमेदे, (कुड़) इत्यो । जलविकारे फेनादौ ।

**आप्यायन** न० आ+प्याय—लुग्रट् । तृप्तौ, प्रीतौ च । णिच्—लुग्रट् । तर्पणे प्रोषणे च । ल्यु । तत्कर्त्तरि त्रि० ।

**आप्रच्छन** न० आ+प्रच्छ—लुग्रट् । आमन्त्रने, गमनागमनसमये बन्धूनामन्योन्यकुशलजिज्ञासयानन्दसम्पादने ।

**आप्रपद** अव्य०प्रपदं पादाग्रं तत्पर्य्यन्तम् अव्ययी० । पादाग्रपर्य्यन्ते ।

**आप्रपदीन** त्रि० आप्रपदं पादाग्रान्तं प्राप्नोति ख । पादाग्रान्तलम्बमाने वस्त्रादौ । [सर्वतः समुच्छूने च ।

**आप्ल(प्ला)व** पु० आ+प्लु—घञ्—अप् वा । स्नाने । (जयस्नाप) । जलार्द्रे

**आप्लुत** त्रि० आ+प्लु—क्त । स्नाते । भावे क्त । स्नाने न० ।

**आप्लुतव्रत** पु० आप्लुतं वेदाध्ययनानन्तरं स्नानं व्रतमस्य । अधीतवेदे, अकृतगृहस्थाश्रमे ब्रह्मचारिभेदे स्नातके ।

**आबद्ध** न० आ सम्यक् बद्धम् बन्ध—भावे क्त । दृढ़बन्धने । आधारे क्त । प्रेमणि । कर्म्मणि क्त । भूषणे । करणे क्त । योक्त्रे पु० । बद्धे आप्ते प्रतिरुद्धे च त्रि० ।

**आबन्ध** पु० आ+बन्ध—घञ् । दृढ़बन्धे, योक्त्रे च ।

**आबाधा** स्त्री० आ+बाध—अ । पीड़ायां क्लेशे च । क्षेत्रावयवादौ प्रसिद्धे त्रिकोणक्षेत्रे लम्बोभयपार्श्वस्थे क्षेत्रमध्ये रज्जुनिक्षेपाज्जायमाने भूखण्डे ।

**आबिल** त्रि० आ+बिल भेदने, क । कलुषे, अस्वच्छे च ।

**आवुक** पु० आमनमाप् क्विप् आपमुत्तनोति उद्+तन—ड । नाट्योक्तौ भगिनीपतौ ।

**आभरण** न० आ+भृ—कर्मणि लुग्रट् । भूषणे ।

**आभा** स्त्री० आ+भा—अङ् । दीप्तौ, शोभायाम्, कान्तौ, उपमाने, वातरोगभेदे च ।

**आभाषण** न० आ+भाष—लुग्रट् । आलापे, परस्परकथने च ।

**आभाषित** त्रि० आ+भाष क्त । अभिमुखीकृत्य कथिते ।

**आभास** पु० आ+भास—अच् । प्रतिबिम्बे, दीप्तौ, मन्थादेरादौ सङ्ग-तिदर्शनोत्थापने अवतारणे च ।

**आभास्वर** पु० आ+भास-वरच् । चतुःषष्टिमिते, द्वादशमिते वा गण-देवताभेदे । दीप्ते त्रि० ।

**आभिजात्य** न० अभिजातस्य भावः ष्यञ् । कौलीन्ये, पाण्डित्ये च ।

**आभीक्ष्ण्य** न० स्वार्थे ष्यञ् । अत्यर्थे । तद्वति त्रि० । क्रियाविशेषणत्वे न० ।

**आभीक्ष्ण्य** न० अभीक्ष्णस्य भावः ष्यञ् । पौनःपुन्ये ।

**आभीर** पु० आ समन्तात् भियं राति रा—क । आहिर इति ख्याते आम्बष्ठादम्बष्ठायामुत्पन्ने वर्णसङ्करभेदे गोपे देशभेदे च ।

**आभीरपल्लि(ल्ली)** स्त्री० आभीराणां पल्लिः । गोपग्रामे, पक्षे ङीप् ।

**आभील** न० आ समन्तात् भयं लाति आभी+ला—क । कष्टे तद्वति, भयानके च त्रि० ।

**आभोग** पु० आ+भुज—भावे आधारे वा घञ् । वरुणस्य छत्रे परि-पूर्णतायां, यत्ने, गानसमाप्तौ (भणिता) कविनामख्यापने च ।

**आभ्युदयिक** त्रि० अभ्युदयः प्रयोजनमस्य ठक् । चूडादि कर्मणि तदृद्ध्यर्थं कर्त्तव्ये श्राद्धे ।

**आम** त्रि०आ ईषत् अम्यते पच्यते आ+अम—कर्मणि घञ् । अपक्वे वैद्यकोक्ते अजीर्णताख्ये रोगभेदे पु० । [कमांसादितुल्यगन्धाढ्ये ।

**आमगन्धि** न० आमस्यापक्वस्य गन्धइव गन्धो यत्र इत् समा० । अप-

**आमनस्य** न० अप्रशस्तं मनो यस्य तस्य भावः ष्यञ् । दुःखे ।

**आमन्त्रण** न० आ+मन्त्र—ल्युट् । अभिनन्दने, सम्बोधने, कामचारा-नुज्ञारूपे स्वनामख्याते च । अवश्यकर्त्तव्ये नियोगो निमन्त्रणं यथा श्राद्धादौ भोजने, अकरणे प्रत्यवायासाधने नियोग आम-न्त्रणं यथा स्वल्पविशेषे शयने । [संबोधने या प्रथमा तस्यां न० ।

**आमन्त्रित** त्रि० आ+मन्त्र—क्त । आमन्त्रिते, संबोधिते च । व्याकरणे

**आमय** पु० आमं रोगं यात्यनेन या—करणे घञर्थे क आ+मीञ् हिंसायां करणे अच् वा । रोगे ।

**आमयाविन्** त्रि० आमयोऽस्यास्ति विनि दीर्घश्च । रोगयुक्ते ।

आमर्शन न० आ+मृश-ल्युट् । स्पर्शे । [ मित्युक्तः ।
आमर्ष पु०न+मृष—घञ् दीर्घः । क्रोधे, "निरुद्योगं निरामर्षं निर्वीर्य्य०
आमलक पु० आ+मल—वुन् । धात्रीवृक्षे । ङीप् । धात्र्याम् नि-
त्यफलायां च स्त्री० । तस्याः फलं फले लुगिति तद्धितस्य लुक् ।
धात्रीफले न० । [ख्याते वातरोगभेदे ।
आमवात पु० आमयति पीडयति अम-णिच्—अच् कर्म० । स्वनाम-
आमातीसार पु० कर्म० । स्वनामख्याते रोगभेदे ।
आमाशय पु० आमस्याशयः । नाभिस्तनयोर्मध्यभागे अपाकस्थाने ।
आमिक्षा स्त्री० आमिष्यते सिच्यते मिष—सक् । तप्ते पक्वे दुग्धे
दधियोगजातायां (छाना) विकृतौ । [आमिक्षीयमप्यत्र ।
आमिक्षीय न० आमिक्षायै हितं छ । आमिक्षीपकरणे दध्नि च
आमिष न० पु०आ+मिष—सेचने क । मांसे, भोग्यवस्तुनि, उत्कोचे,
रुचिररूपादौ, लोभवस्तुनि, लाभे, कामगुणे, भोजने, विषये च ।
आमिषप्रिय पु० इत० । कङ्कपक्षिणि । मांसाभिलाषिणि त्रि० ।
आमिषाशिन् त्रि० आमिषमश्नाति । अश—णिनि । मांसभक्षके ।
आमिषी स्त्री० आमिषनामैकदेशनामिकायां जटामांस्याम् ।
आमुक्त त्रि० आ+मुच परिधाने क्त । परिहिते । कर्त्तरि क्त । परि-
हितकवचे जने ।
आमुख न० आ+खिच् करणे अच् "आमुखं तद्विजानीयात् बुधैः प्र-
स्तावना मता" इत्युक्तायां नाटकाङ्गे प्रस्तावनायाम् ।
आमुष्मिक त्रि० अमुष्मिन् परलोके भवः ठक् सप्तम्या अलुक् टिलो-
पश्च । परलोके जन्मान्तरे भवे वस्तुनि । स्त्रियां ङीप् ।
आमुष्यायण त्रि० अमुष्यामुष्यैकतस्यापि सद्वंश्यत्वेन सच्चरितत्वेन
च प्रख्यातस्यापत्यं फक् षष्ठ्या अलुक् । सद्वंशोद्भवे ।
आमोद पु० आ समन्तात् मोदयति आ+मुद+णिच्—अच् । अतिदूर-
व्यापके गन्धे, गन्धमात्रे च । आ+मुद भावे घञ् हर्षे ।
आमोदिन् त्रि०आमोदयति सुरभी करोति आमोद+अत्यर्थे णिच्—
णिनि । सुखसुगन्धितापादके कर्पूरादौ, हर्षवति च ।

आम्नाय पु० आम्नायते अभ्यस्यते आ+म्ना–घञ् । वेदे, आगमे निगमे, गुरुपरम्परागते, सदुपदेशे, वंशे, कुलक्रमेण कथने च । भावे घञ् । अभ्यासे । [तत्‌फलादौ न० ।

आम्र पु० अम–गत्यादिषु रक् दीर्घश्च । स्वनामख्याते वृक्षे ।

आम्रातक पु० आम्रं तद्रसम् आ ईषत् अतति याति आ+अत-ण्वुल् । (आमड़ा) इति ख्याते वृक्षे ।

आम्रावर्त्त पु० आम्र इव आ ईषत् तुल्यरसतया वर्त्तते आ+वृत–अच् । आम्रातकवृक्षे ।

आम्रेडित न० आ+म्रेड–उन्मादे अच् आम्रेडेन उन्मत्तेनेवाचर्य्यते । आम्रेड+आचारे क्विप् ततः क्त । उन्मत्तेन यथा कथितस्य पुनःपुनः कथनं क्रियते एवं कथितस्य द्विस्त्रिकथने ।

आम्ला स्त्री० आ सम्यक् अम्लो रसो यस्याः । तिन्तिड्याम् स्वार्थे कनि आम्लिकाऽप्यत्र ।

आय पु० आ+इण्–अच् अय घञ् । लाभे । प्राप्तौ, धनागमे, ज्योतिषोक्ते एकादशस्थाने धनादौ स्वामिग्राह्यभागे, वनितागारपालके च ।

आयःशूलिक त्रि० अयःशूलेनार्थानन्विच्छति । तीक्ष्णोपायेनाभीष्टसाधके जने । [अतियत्नशालिनि ।

आयत त्रि० आ+यम–क्त । दीर्घे, आकृष्टे च । आ+यत–अच् ।

आयतच्छदा स्त्री० आयतः दीर्घः छदोऽस्याः । कदल्याम् ।

आयतन न० आयतन्तेऽत्र यत–आधारे ल्युट् । देवादिवन्दनस्थाने, आश्रये, विश्रामस्थाने, यज्ञस्थाने च ।

आयति(ती) स्त्री० आ+या–डति वा ङीप् । उत्तरकाले, प्रभावे, फलदानकाले च । आ+यम–क्तिन् । सङ्गमे, दैर्घ्ये, प्रापणे च ।

आयत्त त्रि० आ+यत–कर्त्तरि क्त । अधीने, वशीभूते ।

आयत्ति स्त्री० आ+यत–क्तिन् । स्नेहे, वशित्वे, सामर्थ्ये, सीम्नि, शयने, प्रभावे च । [लौहकवचे स्त्री० ङीप् ।

आयस न० अयसा निर्मितं तद्विकारो वा अण् लौहपात्रादौ

**आयत्त** त्रि० आ+यत-क्त । विघ्ने, क्रथिते, हते तीक्ष्णीकृते ।
**आयाम** पु० आ+यम-घञ् । दैर्घ्ये ।
**आयास** पु० आ+यस-घञ् । परिश्रमे, अतियत्ने च ।
**आयु** पु० इण-उण । जीवनकाले, "मा वधिष्ठा जटायुं माम्" इति भट्टिः । [कर्माध्यक्षे, कुशले च ।
**आयुक्त** त्रि० आ+युज-क्त । व्यापारिते, ईषद्युक्ते, नियुक्ते,
**आयुध** न० आ+युध-करणे घञर्थे क । प्रहरणमात्रे ।
**आयुधिक** पु० आयुधं शिल्पमस्य ठक् । शस्त्राजीवे । तदर्थे छ आयुधीयश्चात्र ।
**आयुर्वेद** पु० आयुर्विद्यते लभ्यतेऽनेन विद लाभे करणे घञ् आयुर्वेत्यनेन विज्ञापनेन विद-ज्ञाने करणे घञ् वा । चिकित्साशास्त्रे वेदस्योपाङ्गे ।
**आयुर्वेदिन्** त्रि० आयुर्वेदोवेद्यतया विद्यतेऽस्य इनि । आयुर्वेदज्ञे चिकित्सके । [वधिके तृतीये योगे पु० ।
**आयुष्मत्** त्रि० आयुर्विद्यतेऽस्य मतुप् । चिरजीविनि । विष्कुम्भा-
**आयुष्य** त्रि० आयुःप्रयोजनमस्य स्वर्गादिभ्यो यत् । आयुषोहितकारके पथ्ये । स्वार्थे यत् आयुषि न० ।
**आयुस्** न० इण-उसि-णिच्च । जीवनकाले "आयुषः क्षये" इति रघुः ।
**आयोग** पु० आ+युज-घञ् । गन्धमाल्योपहारे, व्यापारे, रोधे च ।
**आयोगव** पु० अयोगव एव स्वार्थे अण् शूद्राद्वैश्यायामुत्पन्ने प्रतिलोमवर्णसङ्करजे जातिभेदे ।
**आयोजन** न० आ+युज-ल्युट् । उद्योगे, आहरणे च ।
**आयोधन** न० आ+युध-आधारे ल्युट् । युद्धस्थाने । भावे ल्युट् । योधने, तत्फले वधे च ।
**आर** पु० ऋ-कर्त्तरि घञ् । मङ्गलग्रहे, शनिग्रहे, मधुराम्लफले वृक्षभेदे च । पित्तले, कोणे, प्रान्तभागे, मुवर्णलोहे च न० ।
**आरकूट** पु० न० । आरं पित्तलं कूटयति स्वरूपीकरोति अच् । पित्तलाभरणे । "किमारकूटाभरणेन न श्रियं" इति नैषधम् ।

**आरच** पु० आ+रच–अच् । हस्तिकुम्भाधःस्थले, हस्तिमस्तकचर्मणि, सैन्ये च । रचके त्रि० । भावे घञ् । रचनायाम् ।

**आरग्वध** पु० आ+रगे–शङ्कायां क्विप् आरगं रोगशङ्कामपि हन्ति अच् वधादेशश्च । (शोंदाल) इति ख्याते द्रुमे ।

**आरट्ट** पु० आरट्यते विख्याप्यते आ+रट टच् टस्य नेत्वम् । अश्वोत्पत्तिस्थाने (आरव) देशभेदे ।

**आरट्टज** पु० आरट्टे देशे जायते जन–ड । (आरव) स्थानजाते घोटके ।

**आरणि** पु० आ+ऋ–अणि । आवर्त्ते पयसां स्रोतोभ्रमे ।

**आरण्य** त्रि० अरण्ये भवः ण । वनजाते मृगसिंहादौ ।

**आरण्यक** पु०अरण्ये भवः मनुष्यादिः वुञ् । पथि,अध्याये, न्याये, विहारस्थाने मनुष्ये, हस्तिनि च । वेदस्यांशविशेषे न० । "आरण्यकमधीत्य चेति" मनुः ।

**आरति** स्त्री० आ–रम क्तिन् । उपरमे, निवृत्तौ च ।

**आरनाल** न० आर्च्छति आ+ऋ–अच् आर नल-गन्धे घञ् । आरो नालोगन्धो यस्य । काञ्जिके । वा कप् । आरनालकमप्यत्र ।

**आरभटी** आरभ्यतेऽनया आ+रभ–अटि ङीप् नाट्ये रचनाभेदे ।

**आरम्भ** पु० आ+रभ–घञ् मुम् च । त्वरायाम् वेगे–उद्यमे, दर्पे, उपक्रमे, प्रस्तावनायाञ्च । कर्मणि–घञ् । आरभ्यमाणे ।

**आरम्भवाद** पु०आरम्भस्य वादः परीक्षापूर्वकः कथाभेदः । न्यायमते वैशेषिकमते च "पृथिव्यम्बुवह्निवायूनां क्रियासंयोजिताणवः द्व्यणुकादिक्रमेणैवमारभन्ते इदं महदिति" तयोः स्वीकारात् ।

**आर(रा)व** पु० आ+रु–घञ् अप् वा । शब्दमात्रे ।

**आरा** स्त्री० आ+ऋ–अच् । चर्मभेदकास्त्रभेदे । (टेको) इति ख्याते लौहास्त्रे च । "आराग्रमात्रो ह्यवरोऽपीति" श्रुतिः ।

**आरात्** अव्य० आ+रा–आति । दूरे, समीपे च ।

**आरात्रिक** न० अरात्रावपि निर्वृत्तं ठञ् दीपो हि रात्रावेव प्रदर्श्यते इदं दिनेऽपि दर्श्यते । (आरति) नीराजनकर्मणि ।

आराधन न० आ+राध–ल्युट् । पाके, साधने, पूजने, तोषणे, प्राप्तौ च ।

आराधना स्त्री०आ+राध–णिच् युच् स्त्रीत्वात् टाप् । सेवायाम् ।

आराम पु० आ+रम–आधारे घञ् । उपवने, क्रत्रिमवने, क्रीड़ार्थवने च । [ गामिनि त्रि० ।

आरालिक पु० अरालं कुटिलं चरति ठक् । पाचके । वक्र-

आरु पु० ऋ–उण् । वृक्षभेदे, कर्कटे, शूकरे च ।

आरेवत पु० आरेवयति रेचयति मलं आ+रेव–णिच्–अतच् । अम्लमसारके (सोंन्दाल) आरग्वधवृक्षे ।

आरोग्य न० अरोगस्य भावः ष्यञ् । रोगराहित्ये अनामये ।

आरोग्यशाला स्त्री० आरोग्यार्थां शाला । चिकित्सागृहे ।

आरोप पु० आ+रुह–णिच्–करणे ल्युट् । आरर्थास्मिन् अन्यधर्म्माभासे यथा रज्ज्वां सर्पज्ञानम् । रूपकालङ्कारादौ तु सत्यपि बाधज्ञानेऽभेदावबोधः शाब्दः न प्रतिरुध्यते ।

आरोह पु० आ+रुह–घञ् । दैर्घ्ये । उत्तमस्त्रीणां नितम्बे, आरोहणे, उच्छ्राये, परिमाणभेदे च ।

आरोहण न०आ+रुह–करणे ल्युट् पाषाणादिरचिते उच्चप्रासादरोहणसाधने (सिंडि) सोपाने । भावे घञ् । निम्नस्थानादूर्द्ध्व–गमने ।

आर्चिक:पु०ऋचि भवः ऋचो व्याख्यानो ग्रन्थो वा ठञ् । ऋचां व्याख्याने । ऋक्षु भवः ठक् । ऋग्वेदभवे त्रि०। ईकक्ि आर्चीकदप्यत्र त्रि०।

आर्जव पु०ऋजोर्भावः अण् । सरलतायां परप्रतारणाराहित्ये ।

आर्त्त त्रि० आ+ऋ–क्त । पीड़िते, दुःखिते, अस्वस्थे च ।

आर्त्तव न० ऋतुरस्य प्राप्तः अण् । स्त्रीपुष्पे, पुष्पे च । ऋतुरस्य प्राप्तः अण् । ऋतुजे फलपुष्पादौ त्रि० । योषधाम् स्त्री०ङीप् ।

आर्त्ति स्त्री० आ+ऋ–क्तिन् ऋति धातौ वृद्धिः । पीड़ायाम् धनुष्कोट्याम् ।

आर्त्विज्य न०ऋत्विजो भावः कर्म वा ष्यञ् । ऋत्विग्योग्ये कर्मणि ।

**आर्थिक** त्रि० अर्थं गृह्णाति अर्थात् आगच्छति वा ठक् । अर्थग्राहके अर्थागते च । [षष्ठे नक्षत्रे च स्त्री० न० ।

**आर्द्र** न० अर्द्द–रक् दीर्घश्च । क्लिन्ने, सजलवस्तुनि । अश्विनीत आरभ्य

**आर्द्रक** न० आर्द्रायां भूमौ जातं वुन् । (आदा) स्वनामख्याते मूल-भेदे ।

**आर्य्य** पु० ऋ–ण्यत् । स्वामिनि, गुरौ, सुहृदि च । श्रेष्ठकुलोत्पन्ने पूज्ये, श्रेष्ठे, सङ्गते, नाट्योक्तौ मान्ये, उदारचरिते, शान्तचित्ते, "कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन् । तिष्ठति प्रकृताचारे स वा आर्य्य इति स्मृतः" इत्युक्तलक्षणे जने च त्रि० ।

**आर्य्यक** पु० अतिशयेनार्य्यः पितोरपि पूज्यत्वात् प्राशस्त्ये कन् । पितामहे, मातामहे च । स्वार्थे कन् । श्रेष्ठे त्रि० ।

**आर्य्यपुत्र** पु० आर्य्यस्य श्वशुरस्य पुत्रः । पत्यौ, गुरुपुत्रे च ।

**आर्य्यावर्त्त** पु० आर्य्या आवर्त्तन्ते अत्र आ+वृत–आधारे घञ् । "आ समुद्रात्तु वै पूर्व्वादा समुद्रात्तु पश्चिमात् । हिमवद्विन्ध्ययोर्मध्यमार्य्यावर्त्तं प्रचक्षते" इति मनूक्ते देशभेदे ।

**आर्ष** त्रि० ऋषेरिदम् अण् । ऋषिप्रणीते धर्म्मशास्त्रे, तत्स्मृते वेदे च । "आर्षं धर्म्मोपदेशञ्चेति" मनुः । आर्ष आदाय गोयुगमित्युक्ते विवाहभेदे पु० ।

**आर्हत** पु० अर्हत इदम् अण् । बुद्धविशेषे । तत्सम्बन्धिनि त्रि० ।

**आर्हन्ती** स्त्री० न० अर्हतोभावः ष्यञ् नुम् च षित्वात् ङीष् यलोपः । योग्यतायाम् । [अनल्पे, बहुषु च त्रि० ।

**आल** न० आलयन्ति भूषयन्ति आ+अल–भूषादौ अच् । हरिताले ।

**आलभन** न० आ+लभ–ल्युट् । स्पर्शे ।

**आलम्ब** पु० आ+लबि–कर्मणि घञ् । अवलम्बे, आश्रये च ।

**आलम्बन** न० आ+लबि–ल्युट् । आश्रये, अलङ्कारमते रसाश्रये विभावे च । [स्मृतिः" स्पर्शे च ।

**आलम्भ** पु० आ+लभ घञ् नुम् च । वधे, "अश्वालम्भं गवालम्भमिति

**आलय** पु० आलीयतेऽस्मिन् आ+ली–आधारे अच् । गृहे । अव्ययी०

क्षयपर्य्यन्ते । अव्य०। "पिबत भागवत रसमालयमिति" भागव०।

**आलयविज्ञान** न० आलयं क्षयपर्य्यन्तं स्थायि विज्ञानम् । बौद्धमते क्षयपर्य्यन्त स्थायिनि अहङ्कारास्पदे विज्ञाने तन्मते हि सर्व्वज्ञानानां क्षणिकतयाऽनुभवजन्यसंस्कारस्य तस्मिन् ज्ञाने एव प्रकल्पनात् पूर्वानुभूतस्य स्मृतिसम्भवः।

**आलवाल** न० आ समन्तात् जललवमालाति आ+ला–क। वृक्षमूले सेकार्थं मृदादिघटिते जलाधारे सेतौ ।

**आलस्य** न० अलसस्य भावः ष्यञ् । सत्यपि सामर्थ्येऽवश्यकर्त्तव्ये ऽनुत्साहरूपेऽलसत्वे । अलसएव ब्राह्मणादित्वात् स्वार्थे ष्यञ् । अलसत्वयुक्ते । [ बन्धनस्तम्भे च ।

**आलान** न० आलीयतेऽत्र आ+ली–ल्युट्। गजबन्धनस्तम्भे रज्ज्वां,

**आलाप** पु० आ+लप–करणे घञ् । कथोपकथने, सम्भाषणे च ।

**आलाबु** स्त्री० आ+लबि– ऊङ् नलोपश्च । तुम्ब्याम् ।

**आलावार्त्त** न० आ समन्तात् अलमत्यर्थं वर्त्तयते चाल्यते आ+अल–वृत–णिच् घञ् । वस्त्रनिर्म्मिते व्यजने ।

**आलि(ली)** स्त्री० आ+अल इन् । आगन्तुकजलावारणार्थं प्रसेकजलधारणार्थं च रचितरूपे सेतौ, सख्यां वयस्यायां, पङ्क्तौ आरामादिरचनाविशेषाम्, सन्ततौ च । वा ङीप् आलीत्यपत्र । शुद्धान्तःकरणे अनर्थे च त्रि० । भ्रमरे, वृश्चिके च पु० ।

**आलिङ्गन** न० आ+लिगि–ल्युट् । प्रीतिपूर्व्वकमन्योन्यदेहसंश्लेषणे, परिरम्भे च ।

**आलिङ्ग्य** त्रि० आ+लिगि–ण्यत् । आलिङ्गनीये, यवाकृतिमृदङ्गे च ।

**आलिञ्जर** पु०अलिञ्जर एव स्वार्थे अण् ।(जाला) इति ख्याते बृहत्ये जलपात्रे मणिके ।

**आलिम्पन** न० आ+लिप–ल्युट् नुम् च । मङ्गलार्थं लेपने ।

**आलीढ** न० "नमिता पूर्व्वजङ्घा तु पश्चिमा प्रगुणा भवेत् । अवकोशध्यकायः स्यादालीढस्य च लक्षणम्" इत्युक्तलक्षणे "आलीढं दक्षिणं पादम्" इत्युक्तलक्षणे च धन्विनां पादविन्यासविशेषे स्थान-

ख्याते। आ+लिह—क्त। भुक्ते, धृते च त्रि०। "सैनान्यमालीढमिवासुराश्रै:" इति रघुः। भावे क्त लेहने न०।

आलीनक न०आ ईषत् प्रकाशेन अग्निसंबन्धमात्रेण लीयते द्रवीभवति आ+ली—क्त संज्ञायां कन्। (रां) इति ख्याते रङ्गे।

आलु पु०आ+लु—डु। स्वनामख्याते कन्दभेदे, भेलके, पेचके पक्षिणि च। (झारी) इति ख्यातायां जुद्रघटिकायां स्त्री०।

आलुक न० आलुरेव स्वार्थे कन्। मूलभेदे, काष्ठालुशङ्खालुप्रभृतिषु न्दमाले क। शेषे नागे पु०। आ+लू—क्विप् संज्ञायां कन् ङीप्। आलूकी रक्तालुप्रभेदे स्त्री।

आलेख्य न० आ+लिख—आधारे ण्यत्। चित्रपटादौ।

आलेख्यशेष त्रि० आलेख्यं चित्रमेव शेषो यस्य ब०। मृते, तस्य चित्रे एव प्रतिकृतिरूपेण अवस्थानात्।

आलोक पु० आ+लुक—घञ्। दर्शने, उद्द्योते, वन्दिनामालोकयेत्यादि स्तुतिवाक्ये। "आलोकशब्दं वयसां विरावैः" इति रघुः।

आलोचन न०आ+लुच णिच् भावे ल्युट्। कर्त्तव्यतयाऽवधारणे,विवेचने च। "अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम्। बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्। ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया। बुद्ध्याऽवसीयते सापि प्रत्यक्षत्वेन सम्मता" इति सांख्योक्ते निर्विकल्पके शुद्धवस्तुविषयके प्राथमिके ज्ञाने च।

आवपन न० आ उप्यते स्थाप्यतेऽत्र ल्युट्। धान्यस्थापनपात्रे (धल्या) इति ख्याते। आ+वप—णिच्—आधारे ल्युट्। सर्व्वमुण्डने।

आवरक न० आ+वृ—करणे अप् संज्ञायां वुन्। व्यवधारके, आच्छादके वस्त्रादौ।

आवरण न० आ+वृ—करणे ल्युट्। (ढाल) चर्म्ममयफलके। भावे ल्युट्। आच्छादने, वेदान्तमतेऽविद्यादिना ज्ञानप्रकाशाच्छादने च।

आवर्जित त्रि०आ+वृज—णिच् क्त। आहूते,क्षिप्ते, दत्ते, आनमिते च।

आवर्त्त पु०आ+वृत—भावादौ घञ्। चक्राकारेण जलस्य स्वयं भ्रमणे,

म, वाक्ये, रोमसंस्थानभेदे घोटकचिह्ने आमावर्त्तनामके भव। आव- र्त्तने, चिन्तने च। अच्। मेनाधिपभेदे मादिकधातौ च न०।

**आवर्त्तन** न० आ+वृत-णिच् ल्युट्। (आगटान) दुग्धादेरालोडने। आवर्त्तते परिवर्त्तते यस्मिन् काले। मध्याह्नोत्तरं यदा पश्चिमतः पूर्व्वस्यां दिशि सूर्य्यच्छाया प्रथमं गच्छति, तस्मिन् काले "आव- र्त्तनसमीपे वा" इति श्रुतिः धातुद्रव्यस्य द्रवीकरणे च।

**आवर्त्तनी** स्त्री० आवर्त्त्यते द्रवीक्रियते आलोड्यतेऽत्र आ+वृत-णिच्- आधारे ल्युट्। ताम्रादिधातुद्रव्यस्य द्रवीकरणाधारे मृण्मये (मुषी) पात्रभेदे, मूषायाम्।

**आवर्त्तित** त्रि० आ+वृत-णिच् क्त। अभ्यस्ते, घूर्णिते च।

**आवर्ह** पु० आ+वृह-घञ्। उत्पाटने। [ङीप्।

**आवश्यक** त्रि० अवश्यं भव्यः मनोज्ञा० वुञ्। नियतकृत्ये स्त्रियां

**आवसथ** पु० आवसत्यत्र वस-अथच्। वसतिस्थाने, विश्रामस्थाने, व्रतभेदे च। [शीतलक्षणे राशीकृते धान्ये च।

**आवसित** त्रि० आ+अव+षो-क्त। पक्वधान्ये, मर्द्दनानन्तरमप-

**आवहमान** त्रि० आ+वह-शानच्। क्रमागते।

**आवाप** पु० आ+वप-आधारे वा घञ्। आलवाले, (थल्ला) पात्रभेदे, प्रक्षेपे, भाण्डे, वलये, शत्रुचिन्तने पराष्ट्रचिन्तने, निम्नोन्नत भूमौ, प्रधानहोमे च। [वलयादौ।

**आवापक** पु० आ+वप-कर्म्मणि घञ् संज्ञायां कन्। प्रकोष्ठाभरणे

**आवापन** न० आ+वप-णिच्-करणे ल्युट्। (तात) सूत्रयन्त्रे।

**आवास** पु० आ+वस-आधारे घञ्। वासस्थाने गृहादौ।

**आवाहन** न० आ+वह-णिच् ल्युट्। सान्निध्याय देवानामाह्वाने।

**आविक** न० अविना तल्लोम्ना निर्म्मितं ठक्। कम्बले। अवेर्मेषस्य सम्बन्धिनि त्रि०। [ख्याते करमर्द्दके च।

**आविग्न** पु० आ+विज-कर्त्तरि क्त। उद्विग्ने (पानिआमला) इति

**आविद्ध** त्रि० आ+व्यध-क्त। विद्धे, वक्रे, पराहते, क्षिप्ते, अभि- भूते, मूर्खे च।

आविध पु० आविध्यतेऽनेन व्यध-घञर्थे क । काष्ठादिवेधनसाधने (भमर) (तुरपिन) सूच्याकाराग्रे अस्त्रे । [व्याप्ते च ।

आविष्ट त्रि० आ+विश-क्त । भूतादिग्रस्ते, आवेशयुक्ते, निविष्टे

आविस् अव्य० आ+अव-इसुन् । प्रकाशे । एतच्छब्देन सह भूधातुः- प्रकाशार्थे यथा आविर्भावः । कृञ्धातुः प्रकाशकरणेऽर्थे यथा आविष्कारः ।

आवीरचूर्ण पु० आ समन्तात् विशेषेण ईर्य्यते क्षिप्यते आ+वि+ईर-घञ् कर्म० । आवीर इति ख्याते फल्गुनि "आवीरचूर्णं रुचिरं स्फुरतां परमेश्वर" इति पुराणम् ।

आवुक पु० आवति पालयति उण् संज्ञायां कन् । नाट्योक्तौ जनके ।

आवृत् स्त्री० आ+वृत-सम्पदादित्वात् क्विप् । परिपाट्यामनुक्रमे ।

आवृत त्रि० आ+वृ-क्त । वेष्टिते कृताच्छादने ।

आवृत्त त्रि० आ+वृत-क्त । निवृत्ते, "आवृत्तानां गुरुकुलादिति" स्मृतिः अभ्यस्ते, गुणिते च ।

आवृत्ति स्त्री० आ+वृत-क्तिन् । अभ्यासे, पुनःपुनर्गुणने "चक्षुरा: शतावृत्तिपाठाद्" इति पुराणम् । [वृद्धदारकवृक्षे ।

आवेगी स्त्री० आवेगोऽस्त्यस्याः अर्श आद्यच् गौरा० ङीष् ।

आवेश पु० आ+विश-घञ् । अहङ्कारभेदे, संरम्भे, अभिनिवेशे, आसङ्गे, अनुप्रवेशे, यथा भूतावेशः । पञ्चभये, भूतादिना रोगे च ।

आवेशन न० आ+विश-आधारे ल्युट् । शिल्पशालायाम् भूतावेशे रोगे, सूर्य्येन्दुपरिधौ च ।

आवेशिक त्रि० आवेशे स्वे भवः आगतो वा ठञ् । अतिथौ असाधारणे स्वकीये बान्धवादौ च । [ (वेड़ा) ।

आवेष्टक पु० आवेष्टयति ण्वुल् । आवरणकारके प्राचीरादौ

आशंसा स्त्री० आ+शंस+अ । अप्राप्तस्य प्राप्तीच्छायाम्, इष्टार्थाशंसने च ।

आशंसित त्रि० आ-शन्स-क्त । वाञ्छिते, कथिते च । भावे क्त । कथने न० ।

आशंसु त्रि० आ+शन्स–उ। इच्छावति, इष्टार्थकाभेच्छौ, कथयितरि च।

आशङ्का स्त्री० आ+शकि–अ। त्रासे, सङ्कोचे, ईषद्वितर्के च।

आशय पु० आ+शी–अच्। अभिप्राये, आधारे, विभवे, पनसवृक्षे वैद्यकोक्ते अशोर्स्य स्थाने च। आ फलविपाकात् चित्तभूमौ शेते इति कर्त्तरि अच् कर्मजन्ये वासनारूपे संस्कारे, धर्म्माधर्मरूपे अदृष्टे च। आधारे अच्। आशयवति चित्ते। भावे अच्। शयने स्थाने च।

आशर पु० आशृणाति आ+शॄ–अच्। अग्नौ, राक्षसे च।

आशा स्त्री० आ समन्तात् अश्नुते अश–अच्। दिशि, अप्राप्ययोग्यार्थविषयायाम्, दीर्घाकाङ्क्षायाम् अनधिगतविषयायां तृष्णायां च। [हेम० तृष्णासम्बन्धे दिशां बन्धे च।

आशाबन्ध पु० आशां दिशं बध्नाति बन्ध्। मर्कटजाले, बन्ध-घञ्

आशास्य त्रि० आ+शास–ण्यत्। आशीःसाध्ये, आशंसनीये च "आशास्यमन्यत् पुनरुक्तम्" इति रघुः।

आशित त्रि० आ+क्र्यादि० अश–क्त। भुक्ते अशनेन तृप्ते च।

आशितङ्गवीन अशितङ्गवीनवत् सर्वम्। दीर्घादिरिति बहवः।

आशितम्भव पु० अशितम्भववत् सर्वम्। दीर्घादिरिति बहवः।

आशिस् स्त्री० आ+शास–क्विप् इत्त्वम्। हितप्रार्थने अभीष्टवृद्धिप्रार्थने, सर्पतालुस्थदन्ते, सर्पदंष्ट्रायामाशीरत्यपि पुंसो०।

आशीर्व्वाद पु० आशिषोवादः वचनम् वद्–घञ्। मङ्गलप्रार्थने आशीर्व्वचने च।

आशीविष पु० आशिषि आस्ये वा विषोऽस्य पृषो०। सर्पे।

आशु अव्य० अश–उण्। चिप्रत्वे। वर्षाभवे षष्टिकादौ धान्ये, पाटले व्रीहौ च पु०न०। चिप्रे त्रि०। क्रियाविशेषणत्वे न०।

आशुग पु० आशु+गम–ड। वायौ, बाणे, सूर्ये च। शीघ्रगामिनि त्रि०।

आशुपत्री स्त्री० आशु पत्रं यस्याः । शल्लकीलतायाम् ।
आशुशुक्षणि पु० आ+शुष–सन्+अनि । अग्नौ, वायौ च ।
आशौच न० अशौचमेव स्वार्थेऽण् । अशौचसमानार्थे वैदिककर्मानर्हा-
वस्थायाम् ।
आश्चर्य्य न० आ इति चर्य्यतेऽभिनीयते आ+चर ण्यत् सुट् च ।
अपूर्वे अद्भुते चित्रे, विस्मये च । अद्भुतवति त्रि० ।
आश्मन पु० आ+अश–मनन् । सूर्य्यसारथौ अरुणे । [दग्धः ।
आश्यान त्रि०आ+श्यै–क्त । ईषद्घनीभूते "पथश्चाश्यानकर्द्दमान्" इति
आश्रम पु० न० आ+श्रम आधारे घञ् अवृद्धिः । ब्रह्मचर्य्यादिके
शास्त्रोक्ते धर्म्मभेदे, मुनीनां वासस्थाने, मठे, वने च कलौ तु ब्रह्म-
चर्य्यवानप्रस्थौ न स्तः गृहस्थभिक्षुकाश्रमावेव "गृहस्थो भिक्षु-
कश्चैव आश्रमौ द्वौ कलौ युगे" इति स्मरणात् सर्वक्लेशहानेन
विश्रामस्थाने परमेश्वरे च ।
आश्रमधर्म्म पु० आश्रमेषु विहितो धर्म्मः । ब्रह्मचार्य्यादीनां
शास्त्रविहिते धर्म्मे ।
आश्रय पु० आश्रीयतेऽसौ आ+श्रि–कर्म्मणि अच् । सामीप्ये, आधारे,
गृहे, राज्ञां सन्धिप्रभृतिषु षट्सु गुणेषु मध्ये प्रबलशत्रोराश्रयण-
रूपे गुणे च ।
आश्रयाश पु० आश्रयमाधारं काष्ठमश्नाति अश–अण् । वह्नौ ।
आश्रव पु० आशृणोति वाक्यं आ+श्रु–अच् । अङ्गीकारे, क्लेशे च ।
आशृणोति वाक्यम् पचाद्यच् । प्रवर्त्तयितुं निवर्त्तयितुं वा शक्ये
वचनस्थिते ।
आश्रित त्रि० आ+श्रि–क्त । आश्रयप्राप्ते, शरणागते, आधेये च ।
आश्रुत त्रि० आ + श्रु–क्त । अङ्गीकृते, आकर्णिते च ।
आश्लेष पु० आ ईषदेकदेशेन श्लेषः सम्बन्धः आ+श्लिष–घञ् ।
एकदेशसम्बन्धे । [रथादौ त्रि० ।
आश्व न० अश्वानां समूहः अण् । अश्वसमूहे । अश्वैरुह्यतेऽण् ।
आश्वत्थ न० अश्वत्थस्य फलमित्यणि तस्य न लुक् । अश्वत्थफले ।

**आश्वयुज** पु० आश्वयुजी अश्विनीनक्षत्रयुक्ता पौर्णमासी यस्मिन् मासेऽण् । शुक्लप्रतिपदादिके दर्शान्ते चान्द्रे आश्विने मासे ।

**आश्वयुजी** स्त्री० अश्वयुजा अश्विनीनक्षत्रेण युक्ता पौर्णमासी "नक्षत्रेण युक्तः काल" इत्यण् । आश्विनमासीयपौर्णमास्याम् ।

**आश्वास** पु० आ+श्वस्–घञ् । निवृतौ आश्रयदाने भीतस्य भयनिवारणार्थे सान्त्वने च । [चान्द्रे मासि ।

**आश्विन** पु० आश्विनी पूर्णिमा यस्मिन् मासे अण् । स्वनामख्याते

**आश्विनी** स्त्री० अश्विना अश्वाकारवता नक्षत्रेण युक्ता पूर्णिमा नक्षत्राण् । आश्विनमासिकपौर्णमास्याम् ।

**आश्विनेय** पु० द्विव० अश्विन्याः अश्वाकारवत्याः सूर्य्यपत्न्याः संज्ञाया अपत्ये ढक् । स्वर्वैद्ययोः । [गव्ये स्थाने ।

**आश्वीन** त्रि० अश्वेनैकाहेनातिक्रम्यते खञ् । अश्वस्य एकाह

**आषाढ़** पु० आषाढ़ी पूर्णिमाऽस्मिन् मासेऽण् । स्वनामख्याते मासि ।

**आषाढ़ी** स्त्री० आषाढ़या नक्षत्रेण युक्ता पूर्णिमा "नक्षत्रेण युक्तः काल" इत्यण् । आषाढ़मासीयपौर्णमास्याम् ।

**आस** उपवेशने अदादि० आत्म० अक० सेट् । आस्ते आसिष्ट ।

**आस्** अव्य० आस्–क्विप् । स्मरणे, अपाकरणे, कोपे, सन्तापे, पीड़ायां, सगर्वतर्जने च ।

**आसक्त** त्रि० आ+सन्ज–क्त । आसङ्गे युक्ते विषयान्तरनिवृत्त्या तत्परे च । नित्ये सतते च न० । तद्वति त्रि० ।

**आसङ्ग** न० आ+सन्ज–घञ् । अभिनिवेशे, प्राप्तस्योपस्थितस्यापि नाशतो रक्षणाभिलाषे, भोगाभिलाषे, कर्तृत्वाभिमाने च । तद्युक्ते त्रि० । गौरादित्वात् ङीष् स्त्री० ।

**आसत्ति** स्त्री० आ+सद्–क्तिन् । संसर्गे, लाभे, सन्निधौ । न्यायादिमते यत्पदार्थेन यत्पदार्थस्यान्वयापेक्षा तयोरव्यवधानेन पदेनोपस्थापने च ।

**आसन** न० आस–ल्युट् । उपवेशने । आधारे ल्युट् पीठादौ, हस्तिस्कन्धदेशे, सन्ध्यादिषु षट्सु नृपगुणेषु यत्र दुर्गादौन्यवरुध्य

स्थितौ, यात्रानिवृत्तौ, अष्टाङ्गयोगमध्ये तृतीयेऽङ्गे पद्मासनादौ।
अस्यति ल्यु, स्वार्थेऽण्। जीरकवृक्षे पु०। युच् टाप्। स्थितौ।

**आसन्न** त्रि० आ+सद–क्त। निकटस्थे, उपस्थिते च।

**आसव** पु० आसूयते आ+सु–कर्मणि अप्। मद्यमात्रे "मधुरेक्षुरसैः पक्वैरपक्वैरासवो भवेत्" इत्युक्तप्रकारे मद्ये च।

**आसवद्रु** पु० आसवस्य (ताड़ी) मद्यस्य कारणं द्रुः शाक० त०। तालवृक्षे।

**आसादन** न० आ+सद–णिच्–ल्युट्। सन्निधापने, स्थापने च।

**आसादित** त्रि० आ+सद-णिच्–क्त। लब्धे, सन्निधापिते, आयोजिते च।

**आसार** पु० आ+सृ–घञ्। धारासम्पाते वेगवृष्टौ, प्रसरणे, सैन्यानां सर्वतो व्याप्तौ च। करणे घञ्। सुहृद्बले।

**आसीनप्रचलायित** न० आसीनेन उपविष्टेनैव प्रचलवत् आचरितम् प्रचल–क्यच् भावे क्त। उपविश्य निद्रावशेन प्रचलनरूपे(ढोला)दोलने

**आसुति** स्त्री० आ+सु–क्तिन्। सोमादिनिष्पीड़ने अभिषवे, मद्यनिष्पादने (चोयान) इति ख्याते पाके।

**आसुतीवल** पु० आसुतिरस्यास्ति वलच् दीर्घः। शौण्डिके। सोमाभिषवशालिनि याज्ञिके त्रि०।

**आसुर** पु० "आसुरो द्रविणादानात्" इत्युक्तलक्षणे धनदानेन कन्याविवाहे। असुरस्येदम् अण्। असुरसम्बन्धिनि त्रि०। स्त्रियां ङीप् "आसुरी रात्रिरन्यत" इति श्रुतिः।

**आसुरस्व** न० ६त०। "अयज्वनान्तु यद्द्रव्यमासुरस्वं तदुच्यते" इति मनूक्ते अयाज्ञिकधने।

**आसेचन** त्रि०न सिच्यते तृप्यते मनोऽत्र आधारे ल्युट् असेचन+स्वार्थेऽण्। असेचनार्थं अतृप्तिकारकं यस्य दर्शनं तत्र। स्वार्थे कन् आसेचनकमप्यत्र। [पेऽवरोधे।

**आसेध** पु० आ+सिध–घञ्। राजाज्ञयाऽन्यत्र गमनादेः प्रतिषेधरू-

**आसेवा** स्त्री० आ+सेव–अ। अभिलाषपूर्वकं पौनःपुन्येन प्रवृत्तौ।

**आस्कन्दन** न० आस्कन्द्यतेऽत्र आ+स्कन्द्–आधारे ल्युट् । शोषणे, आक्रमणे च । आधारे घञ् । रणे ।

**आस्कन्दित** न० आ+स्कन्द–स्वार्थे णिच् क्त । अश्वगतिभेदे त्वरितगमने च । स्वार्थे कन् । आस्कन्दितकमप्यत्र ।

**आस्तर** पु० आ+स्तॄ–करणे अप् । हस्तिपृष्ठस्थकम्बले झुल इति ख्याते । ल्युट् । आस्तरणमप्यत्र न० ।

**आस्तिक** त्रि० अस्ति परलोक इति मतिर्यस्य ठक् । परलोकास्तित्ववादिनि "अस्तीत्युक्ता मतो यस्मादास्तिकस्तेन कथ्यते" इति निरुक्तसंज्ञाके जरत्कारुमुनिसुते । आस्तीकोऽप्यत्र ।

**आस्तिक्य** न० आस्तिकस्य भावः कर्म वा । वैदिकधर्मे श्रद्धायाम् ।

**आस्तीकजननी** स्त्री० ६त० । जरत्कारुमुनिपत्न्यां जरत्कारुनाम्न्यां वासुकिभगिन्यां मनसादेव्याम् ।

**आस्था** स्त्री० आ+स्था–अङ् । आलम्बने, अपेक्षायां, श्रद्धायां, स्थितौ, यत्ने च । आधारे अङ् । प्रतिष्ठायां, स्थाने च ।

**आस्थान** न० आस्थीयतेऽत्र आ+स्था–आधारे ल्युट् । सभायां विश्रामस्थाने च । स्त्रीत्वमपि तत्र ङीप् । आस्थानीत्यप्यत्रैवार्थे ।

**आस्थित** त्रि० आ+स्था–क्त । आरूढे प्राप्ते, अङ्गीकृतवति च ।

**आस्पद** न० आ+पद–घ सुट् च । प्रतिष्ठायाम्, पदे, स्थाने, कृत्ये, प्रभुत्वे च । [ स्फालनकर्कशेने"ति कुमारः ।

**आस्फालन** न० आ+स्फल चाले–णिच् ल्युट् । चालने "ऐरावता-

**आस्फोट** पु० आ+स्फुट–अच् । स्वयं फलस्य स्फोटनात् अर्कवृक्षे (तालठोका) मल्लादेर्बाह्वादेर्हस्ततालेन शब्दकरणे च । (हापरमालो) नवमल्लिकायां स्त्री० । ल्युट् आस्फोटनमप्यत्र न० ।

**आस्फोटक** पु० आस्फोटोऽर्कवृक्ष इव । (आखरोट) शैलपीलौ ।

**आस्फोटनी** स्त्री० आस्फोट्यते विदार्यतेऽनया आस्फुट–णिच्-करणे ल्युट् स्त्रीत्वात् ङीप् । (तुरमन) वेधनास्त्रे ।

**आस्फोत** पु० आ+स्फुट–अच् पृषो० टस्य तत्वम् । अर्कवृक्षे कोविदारवृक्षे, भूपलाशवृक्षे च । स्वार्थे कन् । आस्फोत–

कोऽर्कवृक्षे ।　　　　　[मल्लिकाम् (छापरमाली) लताभेदे च ।

**आस्फोता** स्त्री० आ+स्फुट—अच् पृषो० । अपराजितायां, वन..

**आस्य** न० अस्यते पासोऽत्र+अस—आधारे ण्यत् । मुखे । तन्मध्ये

च । आस्ये भवः यति यलोपः । मुखभवे त्रि० ।

**आस्यपत्र** न० आस्यमेव पत्त्रमस्य । पद्मे ।

**आस्यलाङ्गल** पु० आस्यं लाङ्गलमिव भूविदारकं यस्य । शूकरे ।

**आस्यलोमन्** न० ६त० । पुरुषमुखजाते लोम्नि (दाड़ि) ।

**आस्था** स्त्री० आस—भावे क्यप् । स्थितौ, आसने च ।

**आस्यासव** पु० आस्यस्यासवः प्रसवः ६त० । लालायाम् (थुथु) (लाल)

इति ख्यातायाम् ।　　　　　[निरन्तराखवणे ।

**आस्रव** पु० आस्रवति मनोऽनेन करणे अप् । क्लेशे । भावे अप् ।

**आस्वाद** पु०आ+स्वद—कर्मणि घञ् । रसे । भावे घञ् । रसानुभवे ।

**आह** अव्य० आ+हन—ड । आक्षेपे, नियोगे, दृढसम्भावने, उवाचेत्यर्थे

"अथाह वर्णी विदितो महेश्वर" इति कुमारः ।

**आहत** त्रि० आ+हन—क्त । गुणिते, ताड़िते, वन्ध्यासुतोऽसीत्यादौ

मृषार्थके वाक्ये च । ढक्कायाम् पु० । पुरातने नूतने च वस्त्रे न० ।

**आहतलक्षण** पु० आहतमभ्यस्तं लक्षणं यस्य । गुणैः प्रसिद्धे ।

**आहर** पु० आ+हृ—अच् । उच्छ्वासे, अन्तःस्थितस्य वायोर्मुखेन

वहिर्गतौ ।

**आहव** न० आह्वयन्तेऽरयोऽत्र आ+ह्वे—अप् सम्प्रसारणे गुणः ।

युद्धे । आहूयतेऽत्र आ+हु अप् । यज्ञे ।

**आहवनीय** पु० आहवनमर्हति छ । गार्हपत्याग्नेरुद्धृत्य होमार्थं

कृतसंस्कारे वह्नौ । आ+हु—अनीयर् । हवनीये ।

**आहार** पु० आ+हृ—घञ् । आहरणे, द्रव्यमात्रस्य गलाधः कर-

णरूपे भोजने च । "निराहाराश्च ये जीवा" इति स्मृतौ जल-

पानेऽप्याहारशब्दः । कर्मणि घञ् । अन्नादौ भक्ष्ये ।

**आहार्य्य** त्रि० आ+हृ—ण्यत् । आहरणीये, आगन्तुके, कृत्रिमे,

आरोपे नाट्ये रचिते रसादिव्यञ्जकभूषादौ च ।

**आहाव** पु० आ+ह्वे—घञ् संप्रसारणे वृद्धिः । कूपसमीपे गवादीनां जलपानाय प्रस्तरादिना रचिते (खात) जलाशये, युद्धे, आह्वाने च । [ हताधानसंस्कारे च ।

**आहित** त्रि० आ—धाञ् —क्त । न्यस्ते, स्थापिते, अर्पिते, कृते,

**आहितुण्डिक** त्रि० अहितुण्डेन दीव्यति ठक् । व्यालग्राहिणि ।

**आहुत** त्रि० उद्देश्यस्य आभिमुख्येन साक्षादेव हुतं हु—क्त । भूतस्य-कर्त्तव्येषु पञ्चसु यज्ञेषु । मनुष्ययज्ञे भूतयज्ञे चेत्यन्ये ।

**आहुति** स्त्री० आ+हु—क्तिन् । देवोद्देशेन मन्त्रेणाग्नौ हविःक्षेपे ।

**आहेय** न० अहेरिदम् ढक् । सर्पसम्बन्धिनि चर्म्मविषादौ ।

**आहो** अव्य० आ+हन—डो । प्रश्ने, विकल्पे, विचारे च ।

**आहोपुरुषिका** स्त्री० अहमेव पुरुषः शूरः मयू० अहो पुरुषः तस्य भावः वुञ् स्त्रीत्वात् टाप् । दर्पजन्ये आत्मनि उत्कर्षसम्भावने ।

**आहोस्वित्** अव्य० आहो च स्वित् च द्व० । विकल्पे, प्रश्ने च ।

**आह्निक** त्रि० अह्ना साध्यं ठञ् । दिनसाध्ये, स्नानसन्ध्यातर्पणादौ च । इदमर्थे ठञ् । दिनसम्बन्धिनि । अध्यायान्तर्गते ग्रन्थस्य प्रकरणसमूहे न० ।

**आह्लाद** पु० आ+ह्लद—घञ् । आनन्दे ।

**आह्वय** पु० आ+ह्वे श । नामनि संज्ञायाम् प्राणिसाधने द्यूते च ।

**आह्वान** आ+ह्वेञ् ल्युट् । आकारणे आहूतौ च ।

## इ

**इ** पु० अस्य विष्णोरपत्यम् अ+इञ् । कामे । अव्ययम् अ+इञ् । भेदे, रोषोक्तौ, निराकरणे, अनुकम्पायाम्, खेदे, विस्मये, निन्दायाम्, सम्बोधने च । [ भङ्गन इत्युद्भटः ।

**इ** गतौ भ्वादि० पर० सक० अनिट् । अयति ऐषीत् । अयमुदयति सुद्रा-

**इक्** स्मरणेऽधिपूर्व्वक एव किन्तु अदादि० पर० सम० अनिट् । अध्येति अध्यैषीत् इणा इव तिङि न कृति । अधीयन् ।

**इक्षु** पु० इष–क्सु । मधुररसयुते कविपर्वे स्वनामख्याते तृणे ।

**इक्षुकाण्ड** पु० इक्षोः काण्ड इव काण्डोऽस्य । काशतृणे ।

**इक्षुकुट्टक** पु० इक्षुं कुट्टयति कुट्ट–ण्वुल् । गुड़कारके कर्षीवलादौ

**इक्षुगन्ध** पु० इक्षोरिव गन्ध एकदेशावयवो यस्य । काशतृणे, क्षुद्रगोक्षुरे च ।

**इक्षुगन्धा** स्त्री० इक्षोर्गन्ध इव गन्धोऽस्याः । शुक्लविदार्य्याम्, कृष्णभूमिकुष्माण्डे, काशे, गोक्षुरे च । स्वार्थे के अत इत्वम् । इक्षुगन्धिका भूमिकुष्माण्डे ।

**इक्षुतुल्या** स्त्री० इक्षुणा तुल्या पत्रादिना । (जनार) । धान्यविशेषे ।

**इक्षुनेत्र** न० इक्षुर्नीयते पुनरुत्पादनायारोप्यतेऽनेन नी–ष्ट्रन् । इक्षोर्नेत्रमिव वा इक्षूत्पादके इक्षुनेत्राकारे तद्ग्रन्थौ ।

**इक्षुपत्र** पु० इक्षोः पत्रमिव पत्रमस्य । (जनार) धान्यभेदे ।

**इक्षुप्र** पु० इक्षुरिव पूर्य्यते पॄ–कर्म्मणि घञर्थे क शरतृणे ।

**इक्षुमती** स्त्री० इक्षुस्तद्रसोऽस्त्यस्यां मतुप् । नदीभेदे ।

**इक्षुमूल** पु० इक्षोर्मूलं ग्रन्थिरिव मूलं ग्रन्थिर्यस्य । वंशतृणे । ६त० । इक्षुमूले तद्ग्रन्थौ न० ।

**इक्षुयन्त्र** न० इक्षोस्तन्निष्पीड़नस्य यन्त्रम् । ( महाशाल ) इक्षुनिष्पीड़ने यन्त्रे ।

**इक्षुर** पु० इक्षुमिव गन्धं राति–क । (तालमाखना) कोकिलाक्ष्ये वृक्षे, काशे च । ततः स्वार्थे क । तत्रार्थे, स्थूलशरीरे च ।

**इक्षुरस** पु० इक्षो रस इव रसो यस्य । (नड़ा) इति ख्याते तृणभेदे । ६त० । इक्षोः रसे ।

**इक्षुरसक्वाथ** पु० इक्षुरसस्य क्वाथः पाकभेदः । गुड़े ।

**इक्षुवल्ली(ल्लरी)** स्त्री० इक्षुरिव सुस्वादा वल्ली वल्लरी वा लता । क्षीरविदार्य्याम् । [ चोले ।

**इक्षुव(टि)टीका** स्त्री० इक्षोर्वाटीव इवाऽर्थे के वा ह्रस्वः । इक्षु-

**इक्षुवालिका** स्त्री० इक्षुरिव वलति ण्वुल् । तालमाखना इति ख्याते वृक्षे, काशे च ।

इक्षुगन्ध पु० इक्षुरिव गन्धाति गन्ध–अच् । काशभेदे तद्गन्धे गन्धगौल्-यतेइक्षत्वात् तस्य इक्षुवत् विंशकत्वम् ।

इक्षुशाकट पु० इक्षूणां भवनं क्षेत्रम् इक्षु+शाकटच् (दो) (कल) इति ख्याते इक्षुभवनयोग्ये क्षेत्रे । तदर्थे शाकिन् । इक्षुशा-किनप्यत्रोऽप्यत्रार्थे ।

इक्षुसार पु० ६त० । गुड़े । [ सूर्यवंश्ये आदिराजे च ।

इक्ष्वाकु पु० इक्षुमिच्छामाकरोति इक्षु+आ+क–डु । कटुतुम्बाम्

इक्ष्वारि पु० इक्षुरिवासमन्तादृच्छति आ+ऋ–इन् । काशतृणे ।

इक्ष्वालिका पु० इक्षुरिव अलति व्याप्नोति ण्वुल् । काशे ।

इख गतौ भ्वादि० पर० सक० सेट् । एखति ऐखीत् ।

इखि गतौ इदित् भ्वादि० पर० सक० सेट् । इङ्खति ऐङ्खीत् ।

इगि गतौ इदित् भ्वादि० पर० सक० सेट् । इङ्गति ऐङ्गीत् ।

इङ् अध्ययने अधिपूर्व एव ङित् अदा० आत्म० सक० अनिट् । अ-धीते अध्यैष्ट अध्यगीष्ट । अधिजगे, अध्यैष्यत अध्यगीष्यत ।

इङ्गित न० इगि–क्त । अभिप्रायव्यञ्जकदैहिकचेष्टायाम् ।

इङ्गुद पु० इङ्गिः उ इङ्गुः रोगस्तम् द्यति दो–क । तापसतरौ गौरा० ङीष् इङ्गुदीत्यप्यत्रैव ।

इच्छक पु० इष–ण्वक । (टावालेबु) इति ख्याते वृक्षे । इच्छायुक्ते त्रि० ।

इच्छा स्त्री० इष–श । इदं मे भूयादिति मनोधर्मभेदे सुखे तत्सा-धने च चित्तवृत्तौ न्यायमते, "निर्दुःखत्वे सुखे चेच्छा तज्ज्ञाना-देव जायते । इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि" इत्युक्त-दिशा सुखादिज्ञानेन तत्साधनत्वज्ञानेन च जायमाने इदं मे भूयादित्येवं रूपे आत्मधर्मे अभिलाषे च ।

इच्छावती स्त्री० इच्छाऽस्त्यस्याः मतुप् मस्य वत्वम् । मैथुनेच्छावत्यां कामुकायाम् इच्छामात्रयुक्तायाञ्च ।

इच्छु त्रि० इष–उ नि० । इच्छायुक्ते, इच्छाशीले च ।

इज्जल पु० इष्–क्विप् तुक् इत् जलं यस्य । (हिज्जल) निचुलवृक्षे ।

इज्य पु० इज्यतेऽसौ यज–क्यप् । सुरगुरौ, नारायणे च पूज्ये त्रि० ।

**इज्या** स्त्री० यज–भावे–क्यप् स्त्रीत्वात् टाप् । यज्ञे, यजेर्दानार्थत्वात् दाने, सङ्गमे च । कर्मणि क्यप् । प्रतिमायां, गवि, कुट्टिन्याञ्च ।

**इज्याशील** पु० इज्याशीलमस्य । पुनःपुनर्यज्ञकारके ।

**इट** गतौ भ्वादि० पर० सक० सेट् । एटति ऐटीत् ।

**इड़ा** स्त्री० इल–अच् वा लस्य डत्वम् । गवि, वाचि, भूमौ, स्वर्गे, वामपार्श्वस्थायाम् वक्रायां नाड्याञ्च ।

**इण्** गतौ णित् अदादि० पर० सक० अनिट् । एति ऐगीत् ।

**इतर** त्रि० इना कामेन तरः तॄ–अ । नीचे भिन्ने पामरे च ।

**इतरेतर** त्रि० इतर+द्वित्वम् । अन्योन्यार्थे परस्पराथ ।

**इतरेतरयोग** पु० इतरेतरस्य परस्परस्य योगः एकपदार्थान्वयित्वेन सम्बन्धः । चार्थविशेषे, व्याकरणे यत्र द्वन्द्वसमासे समस्यमानानां पदानां प्राधान्यं तदर्थे ।

**इतरेद्युस्** अव्य० इतर–एद्युस् । अन्यस्मिन्नहनीत्यर्थे ।

**इतस्** अव्य० इदम्+तसिल् । अस्मिन्नित्यर्थे ।

**इतस्ततः** अव्य० इतश्च ततश्च । अस्मिन् तस्मिन्नित्यर्थे ।

**इति** अव्य० इण–क्तिच् । हेतौ, प्रकाशने, निदर्शने, प्रकारे, अनुकर्षे, समाप्तौ, प्रकरणे, स्वरूपे, सान्निध्ये विवक्षानियमे, मते, प्रत्यक्षे, अवधारणे, व्यवस्थायाम्, परामर्शे, माने, इत्यर्थे, प्रकर्षे, उपक्रमे च । [इदं कुर्य्यादित्येवं परिपाटीरूपे कर्मानुष्ठानक्रमे ।

**इतिकर्त्तव्यता** स्त्री० इति इदं कर्त्तव्यं तस्य भावः । इदं कृत्वा

**इतिह** अव्य० इति एवं ह किल ह० । उपदेशपरम्परायाम् यथाऽत्र वटे यक्ष इत्युपदेशपरम्परैव न तु केनापि दृष्ट्वा तथा कथितम् ।

**इतिहास** पु० इतिह पारम्पार्य्योपदेश आस्तेऽस्मिन् इतिह+आस घञ् । "धर्म्मार्थकाममोक्षाणामुपदेशसमन्वितम् । पूर्ववृत्तकथायुक्तमितिहासं प्रचक्षते" इत्युक्तलक्षणे पुरावृत्तप्रकाशके भारतादिग्रन्थे ।

**इत्थम्** अव्य० इदम्+थमु । इदंप्रकारे अनेन प्रकारेणेत्यर्थे ।

**इत्थम्भूत** त्रि० इदंप्रकारं भूतः प्राप्तः भू–क्त । एवं प्रकारप्राप्ते ।

इत्वर त्रि० इण् करप् । पथिके, नीचे, क्रूरकर्म्मणि च । षण्ढे पु० । अभिसारिकायां स्त्री० ।

इद् ऐश्वर्ये इदित् भ्वादि० पर० अक० सेट् । इन्दति ऐन्दीत् ।

इदम् त्रि० इन्दि कमि नलोपश्च । पुरोवर्त्तिनि दृश्ये चराचरे ।

इदानीम् अव्य० इदम्+दानीम् इश् च सम्प्रत्यर्थे ।

इद्ध न० इन्ध—भावे क्त । आतपे, दीप्तौ, आश्चर्य्ये च । कर्त्तरि—क्त । दृद्धे, निर्म्मले च त्रि० ।

इध्म न० इन्ध—मक् । समिधि, अग्निसन्दीपने काष्ठे च ।

इन पु० इण—नक् । सूर्य्ये, प्रभौ, नृपविशेषे च ।

इन्दिरा स्त्री० इदि—इर । लक्ष्म्याम् ।

इन्दि(न्दी)वर न० इन्दिरिन्दी वा लक्ष्मीस्तस्या वरमभीष्टम् । नीलोत्पले ।

इन्दीवरिणी स्त्री० इन्दीवर+समूहे देशे वार्थे इनि । उत्पलसमुदाये, तद्युक्तलतायाञ्च । [मूल्याम् ।

इन्दीवरी स्त्री० इन्दीं लक्ष्मीं दृणाति दृ—अच् गौरा० ङीष् शत-

इन्दु पु० उनत्ति चन्द्रिकया भुवं क्लिन्नां करोति उन्द उ आदेरिच्च । चन्द्रे, तद्देवताके मृगशिरोनक्षत्रे तत्सङ्ख्ये एकसंख्यायुक्ते, कर्पूरे च ।

इन्दुकलिका स्त्री० इन्दुरिव शुभ्रा कलिका यस्याः । केतक्याम् ।

इन्दुकान्तः पु० इन्दुः कान्तोऽभीष्टोऽस्य । चन्द्रकान्ते मणौ ।

इन्दुजनक पु० ६त० । समुद्रे ।

इन्दुजा स्त्री० इन्दोर्जायते जन—ड । सोमोद्भवायां नर्मदायां नद्याम् ।

इन्दुपुत्र पु० ६त० । बुधग्रहे ।

इन्दुपुष्पिका स्त्री० इन्दुरिव शुभ्रं पुष्पमस्याः । (विषलाङ्गला) लाङ्गलीवृक्षे ।

इन्दुभृत् पु० इन्दुं बिभर्त्ति भृ—क्विप् । शिवे । [पत्न्याम् ।

इन्दुमती स्त्री० इन्दु+प्राशस्त्ये मतुप् । पूर्णिमायाम्, अजराज-

इन्दुरत्न न० ६त० । मुक्तायां तस्याश्चन्द्रदेवताकत्वात् ।

इन्दुलेखा स्त्री० इन्दोर्लेखेव । चन्द्रकलायाम् । तदंशनाम्न्यां सोम-

क्षमायाम्, तद्वदाप्यायनकारित्वात्सोमलतायां, तद्वद्धवलगुणत्वात् यमानिकायाञ्च ।

इन्दुलोहक न० ६त० । इन्दुदेवनामके, लोहके, रौप्ये धातौ ।

इन्दुवल्ली स्त्री० ६त० । चन्द्रनामिकायां सोमलतायाम् ।

इन्द्र पु० इदि+र । देवाधिपे, परमेश्वरे, इन्द्रदैवते ज्येष्ठानक्षत्रे, द्वादशार्कमध्ये अर्कभेदे, इन्द्रतुल्यसंख्याके चतुर्दशसंख्यान्विते, विष्कुम्भादितः षड्विंशे योगे, कुटजवृक्षे च ।

इन्द्रक न० इन्द्रस्य कं सुखमिव कं यत्र । सभागृहे ।

इन्द्रकील पु० इन्द्रस्य कीलइव अत्युच्चत्वात् । मन्दरपर्वते ।

इन्द्रकोष पु० इन्द्रस्य कोषइव सुखदायकत्वात् । मञ्चे, खट्वायाञ्च ।

इन्द्रगोप पु० इन्द्रो गोपो रक्षकोऽस्य वर्षाभवत्वात् । इन्द्ररक्षिते रक्तवर्णे कीटभेदे ।

इन्द्रजाल न० इन्द्रेण कौशलाद्यैश्वर्य्येण जालं दृष्टेर्नेत्रावरणम् यथा-स्थितवस्तुदर्शनाक्षमत्वसाधनात् । मन्त्रौषधादिना अन्यथास्थितस्य वस्तुनोऽन्यथात्वेन दर्शनसाधने कुहके (वाजी) ।

इन्द्रजालिक त्रि० इन्द्रजालं शिल्पमस्य ठन् । कुहककारिणि ।

इन्द्रजित् पु० इन्द्रं जितवान् जि—भूते क्विप् । रावणसुते मेघनादे ।

इन्द्रतूल न० इन्द्रस्येव तूलमाकाशे उड्डीयमानत्वादिन्द्रस्वामिकत्वम् । आकाशे मरुता चाल्यमाने कार्पासे सूत्रे ।

इन्द्रदारु पु० इन्द्रस्य तद्भुवनस्य दारु अत्युच्चतयाकाशगामित्वा-दिन्द्रभुवनदारुत्वम् । देवदारुवृक्षे ।

इन्द्रद्रु पु० इन्द्रस्य द्रुर्वृक्षः । अर्ज्जुनवृक्षे, कुटजवृक्षे च ।

इन्द्रधनुस् न० इन्द्रस्य धनुरिव । "रविकिरणा जलकणा वातेन विलोडिता नभसि । शक्रायुधसंस्थाना दृश्यन्ते तत्तु इन्द्रधनुः" इत्युक्ते नभसि वायुचालिते शक्रधनुराकारेण परिणते रविकिरणे ।

इन्द्रध्वज पु० न० इन्द्रस्य ध्वजः । भाद्रशुक्लद्वादश्यां नृपेण प्रजावृ-द्ध्यर्थं पूज्यमाने अलङ्कृते शक्रदेवताके ध्वजे ।

इन्द्रनील पु० इन्द्र इव नीलः । "क्षीरमध्ये क्षिपेन्नीलं क्षीरं चेत्-

नीलतां नयेत्। इन्द्रनीलम्" इति ख्यातमित्युक्तलक्षणे (बाङ्गा) मरकतमणौ।

इन्द्रपुष्पा स्त्री० इन्द्र इव नील" पुष्पमस्याः (विषलाङ्गला) लाङ्गली-वृक्षे। ब० वा कपि। इन्द्रपुष्पिकाप्यत्र।

इन्द्रप्रस्थ न० इन्द्रस्य तत्स्थानमेरोः प्रस्थइव (दिल्लीति) ख्याते पुरे।

इन्द्रभेषज न० इन्द्र इव भेषजं श्रेष्ठत्वात्। (शुंट) शुण्ठ्याम्०।

इन्द्रमहकामुक पु० इन्द्रमहं कामयते कम–उक। कुक्कुरे।

इन्द्रयव न० पु० इन्द्रस्य कुटजवृक्षस्य यवाकृतिबीजत्वात् यवो बीजम्। कुटजवृक्षस्य यवाकारे तिक्तरसे बीजे स्वनामख्याते।

इन्द्रलुप्त न० शत०। (टाक) इति ख्याते मस्तकोपरि केशनाशके रोगे। इन्द्रेण लुप्ते। त्रि०। [(टेको) इति ख्याते जने।

इन्द्रलुप्तिक त्रि० इन्द्रलुप्तमस्यास्ति ठन्। (टाक) रोगयुक्तशीर्षके

इन्द्रवंशा स्त्री० वर्णवृत्तेषु द्वादशाक्षरपादके छन्दोभेदे।

इन्द्रवज्रा स्त्री० वर्णवृत्तेषु एकादशाक्षरपादके छन्दोभेदे।

इन्द्रवारुणी स्त्री० इन्द्रं वारयति वृ० वृ–उनन्। (राखालशसा) तिक्तरसायां श्वेतमूलायां पीतपुष्पायां लतायाम्।

इन्द्रवृक्ष पु० इत०। देवदारुवृक्षे।

इन्द्रवृद्धा स्त्री० शत०। व्रणरोगभेदे।

इन्द्रव्रत न० इन्द्रस्येव नर्मण्यं व्रतम्। वार्षिकांश्चतुरो मासान् यथे-न्द्रोऽभ्यभिवर्षति। तथाभिवर्षेत् स्वं राष्ट्रं कामैरिन्द्रव्रतं चरन्" इति उक्तलक्षणे प्रजापालने राज्ञोव्रतभेदे।

इन्द्रशत्रु पु० इन्द्रः शत्रुः शातयिता यस्य। वृत्रासुरे।

इन्द्रसावर्णि पु० चतुर्दशे मनौ। [नामके वानरे च।

इन्द्रसुत पु० इत०। जयन्ते, मध्यमपाण्डवे पार्थे, अर्जुनवृक्षे, वालि-

इन्द्रसुरस पु० इन्द्रः कुटजवृक्ष इव सुरसः पथ्यरसः। (निसिन्दा) सिन्धुवारे।

इन्द्राणिका स्त्री० इन्द्रः कुटजइव अानकृति सेवनेन जीवयति

अन–णिच्–ण्वुल् संज्ञात्वेन ग्रहणम्। निर्गुण्डयाम् (निसिन्दा)।

**इन्द्राणी** स्त्री॰ इन्द्रस्य पत्नी ङीप् आनुक् च। शचीनामकदेवाम् इन्द्रपत्न्याम्। इन्द्रः कुटज इव आनयति अन–णिच्–अण् (निसिन्दा) सिन्धुवारे ङ्ग्ले स्थूलैलायां, सूक्ष्मैलायां, गौर्यादिषु षोडशमातृकासु मध्ये आद्यायां मातृकायाञ्च।

**इन्द्रानुज** पु॰ ६त॰। विष्णौ, स हि कश्यपाददितौ वामनरूपेण इन्द्रस्य पश्चात् जातः। इन्द्रावरजोऽप्यत्र।

**इन्द्रायुध** न॰ इन्द्रस्यायुधं धनुरिव। इन्द्रधनुः शब्दार्थे।

**इन्द्राशन** पु॰ इन्द्रेण अश्यते भुज्यते कर्मणि ल्युट्। (सिद्धि) भङ्गायाम्।

**इन्द्रिय** न॰ इन्द्रस्य प्रत्यगात्मनः लिङ्गमनुमापकम्, तेन दृष्टं मम चक्षुः मम श्रोत्रमित्येवमभिमतम्, इन्द्रेण ईश्वरेण सृष्टं, प्रीणितं वेत्याद्यर्थे इन्द्र+घ। आत्मनो विषयोपलब्धिकरणतयेश्वरसृष्टेषु ज्ञानकर्म्मसाधनेषु चक्षुरादिषु [प्रतिबन्धे।

**इन्द्रियनिग्रह** पु॰ ६त॰। स्वस्वविषयेभ्यश्चक्षुरादीनां प्रवृत्ति

**इन्द्रियबध** पु॰ ६त॰। इन्द्रियाणां स्वस्वकार्य्याक्षमत्वरूपे "बाधिर्य्यं कुष्ठतान्धत्वं जडताऽजिघ्रता तथा। मूकता कौण्यपङ्गुत्वक्लैब्योदावर्त्तमन्दता" इत्युक्तप्रकारे एकादशेन्द्रियाणां क्रमेणैकादशविधे घाते।

**इन्द्रियवृत्ति** स्त्री॰ ६त॰। "शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः। वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्" इति सांख्योक्ते श्रोत्रादीनां शब्दादिषु प्रकाशनार्थे व्यापारे।

**इन्द्रियसंप्रयोग** पु॰ इन्द्रियाणां संप्रयोगः स्वस्वविषयेषु प्रयोगः व्यापारणम्। इन्द्रियसम्बन्धे। इन्द्रियसन्निकर्षोऽप्यत्र।

**इन्द्रियार्थ** पु॰ इन्द्रियाणामर्थो विषयः। शब्दस्पर्शरूपरसगन्धात्मके इन्द्रियवेद्ये विषये।

**इन्द्रियायतन** न॰ ६त॰। शरीरे।

**इन्द्रियार्थसन्निकर्ष** पु॰ इन्द्रियाणामर्थैः स्वस्वविषयैः सह सन्निकर्षः

सम्बन्धः । प्रत्यक्षज्ञानहेतौ इन्द्रियार्थविषयसंयोगे ।

इन्ध दीप्तौ रुधादि० आत्म० सक० सेट् । इन्धे, ऐन्धिष्ट ।

इन्धन न० इध्यतेऽग्निरनेन इन्ध—करणे ल्युट् । काष्ठे ।

इभ पु० इण्—भ किच्च । हस्तिनि, तत्तुल्यसंख्यके अष्टसंख्यान्विते च ।

इभकणा स्त्री० इभोपपदा कणा शाक० त० । गजपिप्पल्याम् ।

इभदन्ता स्त्री० इभस्य दन्त इव शुभ्रं पुष्पमस्याः । शुभ्रपुष्पवत्यां नागदन्त्याम्, विषौषधौ च । [निद्रापयति । भङ्गायाम् ।

इभनिमीलिका स्त्री० इभं हस्तिनमपि निमीलयति सेवनात्

इभपालक पु० इभं पालयति । (माहुत) हस्तिपके ।

इभया स्त्री० इभैर्यायते भक्ष्यतया प्राप्यते या कर्मणि क । स्वर्णक्षीराख्ये ।

इभ्य त्रि० इभं हस्तिनमर्हति यत् । प्रचुरधनवति आढ्ये, नृपे च ।

इभ्या स्त्री० इभावस्थिता इभ+यत् । शल्लकीवृक्षे ।

इयत् त्रि० इदं परिमाणमस्य इदम्—वतुप् । एतावदर्थे स्त्रियां ङीप् ।

इयत्ता स्त्री० इयतो भावः तल् । सीमायां, परिमाणे, संख्यायाञ्च ।

इरम्मद पु० इरया जलेन माद्यति वर्द्धते इरा+मद—खश् ह्रस्वः मुम् च । वज्राग्नौ वाडवानले च ।

इरा स्त्री० इण् रक् इं कामं राति रा—क वा । भूमौ, वाचि, सुरायाम्, जले, अन्ने च । [जलचरे, भूचरे च त्रि० ।

इराचर न० इरायां चरति चर—ट । (शिल) करकायाम् ।

इराज पु० इरया सुरया जीयतेऽसौ अज—घञ् । कन्दर्पे ।

इरावती स्त्री० इरां भूमिम् अवति अव—शतृ ङीप् । वटपत्रवृक्षे, सा हि पाषाणभेदनेनापि भूमिमागच्छति ।

इरिण न० ऋ—इन किच्च । ऊषरभूमौ, निराश्रये, शून्ये च ।

इरेश पु० ६त० । वरुणे, वागीशे, भूमिपतौ, विष्णौ च ।

इर्वारु स्त्री० उर्व—आरु पृषो० । (काकुड़) कर्कट्याम् । आरु । इर्वालुरप्यत्र । [(फुटी) (स्वयं भिन्नपक्वकर्कट्याम् ]

इर्वारु(लु)शुक्तिका स्त्री० इर्वारुः शुक्तिकेव स्वयं स्फोटनात्

**इल** शयने अक० गतौ क्षेपे च सक० तुदा० पर० सेट् । इलति ।

**इल** क्षेपणे चुरा० उभ० सक० सेट् । एलयति ते ऐलिलत् त ।

**इलविला** स्त्री० पुलस्त्यमुनिपत्न्याम् कुबेरजनन्याम् । एतत्सम्बन्धेनैव कुबेरस्य ऐलविल इति नाम ।

**इला** स्त्री० इल–क । भूमौ, गवि, वाचि, जम्बुद्वीपस्य नववर्षमध्ये वर्षभेदे तत्सीमा चेलावृतशब्दार्थे वक्ष्यते । वैवस्वतमनुकन्यायां बुधपत्न्याम् । सा हि विष्णुवरात् पुंस्त्वमासाद्य पुनः शङ्करशापात् स्त्रीत्वं गता बुधस्तु तामुपयम्य पुरूरवसमुत्पादयामासेति पुराणे प्रसिद्धम् ।

**इलावृत** न० इला पृथिवी वृता येन । नववर्षात्मकजम्बुद्वीपस्य वर्षभेदे तच्च वर्षं “पश्चान्माल्यवतः प्राच्यां गन्धमादनशैलतः । इलावृतं नीलगिरेर्याम्यतो निषधादुदक्” इत्युक्तचतुःसीमावच्छिन्ने देशेऽस्ति ।

**इली** स्त्री० इल–इन् ङीप् । (छातकुरी) करवालिकायाम् ।

**इलीश** पु० इलीव करवालिकेव शोभते शुभ–ड । करवालिका सदृशावयवे स्वनामख्याते मत्स्यभेदे ।

**इल्वल** पु० इल–वलच् नि० गुणाभावः अत्यन्तचञ्चले मत्स्यभेदे, वशिष्ठनाशिते दैत्यभेदे च मृगशिरोदेशस्थपञ्चताराशिरस्थासु तारासु स्त्री० ब० व० ।

**इव** व्याप्तौ इदित् भ्वा० पर० सेट् सक० । इन्वति ऐन्वीत् ।

**इव** अव्य० इवि–क । सादृश्ये, उत्प्रेक्षायाम्, ईषदर्थे, वाक्यालङ्कारे च ।

**इष** गतौ सर्पणे च दिवा० पर० सक० सेट् । इष्यति, ऐषीत् ।

**इष** वाञ्छायाम् तुदा० पर० सक० सेट् । इच्छति, ऐषीत् एषिता एष्टा एषित्वा इष्ट्वा । इष्टः । [एषितः एषित्वा ।

**इष** पौनःपुन्ये क्र्यादि० पर० अक० सेट् । इष्णाति ऐषीत् ।

**इष** पु० इष–गतौ क्विप् यात्रा जिगीषूणां यस्मिन् अर्थे आश्वच् । आश्विने मासि ।

**इषि(षी)का** स्त्री० ईष गत्यादिषु (इ) ईकन् कित् ह्रस्वश्च । गजनेत्रगोलके । दीर्घमध्यस्तु काशे, मुञ्जामध्यवर्त्तितृणे च ।

इषु पु० स्त्री० इष्यते हिंस्यतेऽनेन इष– उ किन् च । बाणे तत्संख्यसंख्ये पञ्चसंख्यान्विते च ।
इषुधि पु० स्त्री० इषवो धीयन्तेऽत्र धा–कि । बाणाधारे तूणे ।
इषुपुङ्खा स्त्री० इषोः पुङ्खमिव पुष्पमस्याः । शरपुङ्खाहक्षे ।
इष्ट त्रि० इष–क्त । पूजिते, अभिलषिते, प्रिये च । यज–क्त । यज्ञादौ कर्मणि, एरण्डहक्षे च पु० । संस्कारे न० । "एकाग्निकर्म्म हवनं त्रेतायां यच्च हूयते । अन्तर्वेद्याञ्च यद्दानमिष्टं तदभिधीयते । अग्निहोत्रं तपः सत्यं वेदानाञ्चार्थपालनम् । आतिथ्यं वैश्वदेवञ्च प्राङ्गुरिष्टमित्यन्नलक्षणं धर्म्मकार्य्यं च ।"
इष्टका स्त्री० इष–तकन् । (इट्) मृदादिनिर्म्मिते मृत्खण्डभेदे ।
इष्टकापथ न० इष्टकाभिनिर्म्मितः पन्थाः । इष्टकानिर्मिते पथि । इष्टं कापथमपानं यस्य । अधोवायुहेतौ उशीरे ।
इष्टगन्ध त्रि० इष्टो गन्धो यस्य । सुगन्धिद्रव्ये । वालुकायां न० ।
इष्टा स्त्री० इज्यतेऽनया यज–करणे क्त । शमीहक्षे ।
इष्टापूर्त्त न० इष्टं च पूर्त्तञ्च द्वयोः समाहारः पूर्वपददीर्घः । प्रागुक्ते अग्निहोत्रादौ इष्टे, "वापीकूपतड़ागादि देवतायतनानि च । अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते" इति मनूक्ते पूर्त्ते च ।
इष्टि स्त्री० यज–क्तिन् । यागे, दर्शपौर्णमासाङ्गयागभेदे च । इष–क्तिन् । अभिलाषे ।
इष्वसन पु० अस्यते क्षिप्यतेऽनेन अस–ल्युट् इ॰त० । धनुषि ।
इष्वास पु० इषवः अस्यन्तेऽनेन अस–घञ् इ॰त० । चापे । इषून् अस्यति अण् । बाणक्षेपके धन्विनि त्रि० ।
इह अव्य० इदम्+ह इशादेशः । अस्मिन् काले देशे दिशि वा ।
इहत्य त्रि० इह भवः इह+त्यप् । इहकालादिजाते ।

---

# ई

ई स्त्री० अस्य विष्णोः पत्नी ङीप् । लक्ष्म्याम् ।

ई कान्तौ अक०, गतौ व्याप्तौ च सक० अदा० पर० अनिट् । एति ऐषीत् ।

ई गतौ दिवा० आत्म० सक० अनिट् । ईयते ऐष्ट ।

ईक्ष दर्शने भ्वादि० आत्म० सक० सेट् । ईक्षते । ऐक्षिष्ट ।

ईक्षण, न० ईक्ष—भावे ल्युट् । दर्शने । करणे ल्युट् । नेत्रे ।

ईक्षणिक त्रि० ईक्षणं हस्तरेखादीक्षणे शुभाशुभदर्शनं शिल्पमस्य ठन् ।
शुभाशुभफलकथनेनोपजीविनि दैवज्ञे । स्त्रियां टाप् ।

ईक्षा स्त्री० ईक्ष—अ । दर्शने ।

ईख गतौ इदित् भ्वादि० पर०सक० सेट् । ईङ्खति ऐङ्खीत् ।

ईज गतौ निन्दायाञ्च भ्वा० आत्म० सक० सेट् । ईजते ऐजिष्ट ।

ईज गतौ निन्दने च इदित् भ्वा० आत्म०सक०सेट् । ईञ्जते ऐञ्जिष्ट ।

ईड स्तुतौ चुरा० उभ० सक० सेट् । ईडयति ते ऐडिडत् त ।

ईड स्तुतौ अदा० आत्म० सक० सेट् । ईट्टे ईडिषे ईडिध्वे ऐडिष्ट ।

ईडा स्त्री० ईड—अ । स्तुतौ ।

ईडित त्रि० ईड+क्त । स्तुते कृतस्तवे ।

ईति स्त्री० ईयतेऽनया ई—क्तिन् । डिम्बे, उत्पादिते, प्रवादे, "अति-
वृष्टिरनावृष्टिः शलभाः मूषिकाः खगाः । अत्यासन्नाश्च राजानः
षडेता ईतयः स्मृता" इत्युक्ते क्षेत्रोपद्रवे च । [ईदृशे ।

ईदृक्ष त्रि० अस्येव दर्शनमस्य । इदम्+दृश्—क्स इशादेशे दीर्घः ।

ईदृश्(श) त्रि० अस्येव दर्शनमस्य । इदम्+दृश क्विन्—इशादेशः दीर्घः ।
एतादृशे । ट—ईदृशोऽप्यत्र । स्त्रियां ङीप् ।

ईप्सा स्त्री० आप्तुमिच्छा आप्—सन्—अ । प्राप्तुमिच्छायामिच्छायाञ्च ।

ईप्सित त्रि० आप—सन्—क्त । आप्तुमिष्टे, इष्टे, अपेक्षिते च ।

ईर गतौ वा चुरा० उभ० पक्षे भ्वादि० पर० सक० सेट् । ईरयति
ते ईरति ऐरिरत् त ऐरीत् ।

ईर कम्पे अक०, गतौ सक० अदा० आत्म० सेट् । ईर्त्ते ऐरिष्ट ।

ईर्च्य ईर्ष्यायां भ्वादि० पर० अक० सेट्। ईर्च्यति ऐर्च्यीत्।
ईर्म न० ईर–मक्। व्रणे। सुखादित्वमिति मञ्जु: पुंसि० सुक्त:।
ईर्ष्य ईर्ष्यायां भ्वादि० पर० अक० सेट्। ईर्ष्यति ऐर्ष्यीत्।
ईर्ष्या स्त्री० ईर्ष्य–अ। परोत्कर्षासहिष्णुतायामक्षान्तौ।
ईर्ष्यालु त्रि० ईर्ष्यां वाति ला–डु। ईर्ष्यायुक्ते।
ईला स्त्री० ईड–क डस्य लत्वम्। पृथिव्यां, वाचि, गवि च।
ईलित त्रि० ईड–क्त डस्य लत्वम्। स्तुते।
ईश ऐश्वर्य्ये अदा० आत्म० सक० सेट्। ईष्टे ईशिषे ईशिध्वे ऐशिष्ट
ईश् पु० ईश–क्विप्। परमेश्वरे। स्वामिमात्रे त्रि०।
ईश पु० ईश–क। महादेवे, परमेश्वरे, हिरण्यगर्भे च। स्वामिनि त्रि०
ईशान पु० ईश–शानच्। महादेवे, परमेश्वरे, शिवस्य अष्टमूर्त्तिमध्ये सूर्य्यमूर्त्तौ च। शमीवृक्षे स्त्री० ङीप्। स्वामिनि त्रि० "ईशानो भूतभव्यस्य" इति श्रुति:। शिवपत्न्याम् स्त्री० ङीप्।
ईशिता स्त्री० ईशिनो भाव: तल्। अणिमाद्यष्टैश्वर्य्यमध्ये सर्व्वेषां स्वामित्वरूपे ऐश्वर्य्ये ईशित्वमप्यत्र न०।
ईश्वर पु० ईश–वरच्। महादेवे, कन्दर्पे, पातञ्जलोक्ते क्लेशकर्म्म-विपाकाशयैरपरामृष्टे पुरुषविशेषे चैतन्यात्मनि, "ईश एवाहम-त्यर्थं न च मामीशते परे। ददामि च सदैश्वर्य्यमीश्वरस्तेन की-र्त्त्यते" इत्युक्तलक्षणे परमेश्वरे, प्रभवादिमध्ये वत्सरभेदे च। आढ्ये, स्वामिनि च त्रि० स्त्रीत्वे गौरा० ङीष्। "ईश्वरीं सर्व्वभूतानाम्" इति श्रुति:।
ईश्वरी स्त्री० ईश्वरस्य शिवस्य स्त्री ङीष्। दुर्गायाम्। ईश–वनिप् ङीप् रान्तादेशश्च। लिङ्गिनीलतायां बन्ध्याकर्कट्याम्, जटाल-तायाम्, नाकुलीवृक्षे च।
ईष उञ्छे (उञ्छ, तयस्यस्तेनात् कणश आदाने) तुदा० पर० सक० सेट्। ईषति ऐषिष्ट। [ऐषिष्ट।
ईष दाने ईक्षणे, सर्पणे हिंसने च भ्वादि० आत्म० सक० सेट्। ईषते
ईषत् अव्य० ईष–अति। अल्पे, किञ्चिदर्थे च।

ईषत्कर पु० ईषत्+कृ-खल् । लेशे, अल्पे च । अल्पप्रयाससाध्ये त्रि०

ईषत्पाण्डु पु० ईषदक्ततेति त० । श्वेतरक्ते धूसरे । तद्वति त्रि० ।

ईषदुष्ण पु० ईषदक्ततेति त० । अल्पताप्ते मन्दोष्णे । तद्वति त्रि० ।

ईषद्रक्त पु० ईषदक्ततेति त० । अव्यक्तरागेऽरुणवर्णे । तद्वति त्रि० ।

ईषा स्त्री० ईष-क । हलयुगयोर्मध्यस्थिते काष्ठे ।

ईषादन्त पु० ईषेव दन्तौ यस्य । ईषादीर्घदन्ते हस्तिनि ।

ईषिका स्त्री० ईषेव इवे प्रतिकृतायिति कन् । गजाक्षिगोलके, तूलिकायाम्, अस्त्रविशेषे च । "सोऽभिमन्त्र्य शरेषीकामीषिकास्त्रम्" इति रामा० । षर्करीकादि० नि० ईषीकाप्यत्र ।

ईह चेष्टने भ्वादि० आत्म० अक० सेट् । ईहते ऐहिष्ट ।

ईहा स्त्री० ईह-अ । चेष्टायाम्, उद्यमे, वाञ्छायाञ्च ।

ईहामृग पु० ईहां मृगयते अण् । वृके (नेकड़े बाघ) अलङ्कारशास्त्रलक्षिते नाटकभेदे च साहि० द्द्पि० ।

उ

उ शब्दे भ्वा० आत्म० अक० अनिट् । अवते औष्ट ।

उ अव्य० उ-क्विप् न तुक् । सम्बोधने कोपवचने, अनुकम्पायां, नियोगे, विस्मये च । अत-उ । शिवे पु० । [क्त । कथने न०।

उक्त त्रि० वच-क्त । कथिते । एकाक्षरपादके छन्दोभेदे स्त्री० । भावे

उक्ति स्त्री० वच-क्तिन् । कथने ।

उक्थ न० वच-थक् । नवविधात्मकसाम्नोऽवयवभेदे, महाव्रताख्ये यज्ञे प्रधानभूते शस्त्ररूपे सामवेदस्थाङ्गे, प्राणे च । यज्ञभेदे पु० एकाक्षरपादे छन्दोभेदे स्त्री० । उक्तोत्यन्ये ।

उक्थशस् पु० उक्थानि सामावयवशस्त्राणि शंसति-शंस् क्विप् नि०। यजमाने । [भूव आस चकार ।

उक्ष सेचने भ्वादि० पर० सक० सेट् । उक्षति औक्षीत् । उक्षाञ्च-

उक्षतर पु० तनुत्वा उक्षन्+तनुत्वे-ष्टै ष्टरच् । तृतीयवयःप्राप्ते वृषे । जातौ स्त्रीत्वे ङीष् ।

उक्षन् पु० उक्ष—कनिन् । वृषे, ऋषभौषधौ च । सेचनकर्त्तरि त्रि० ।
उख गतौ भ्वादि० पर० सक० सेट् । ओखति औखीत् उवोख ।
उख गतौ इदित् भ्वादि० पर०सक० सेट् उङ्खति औङ्खीत् ।
उखा स्त्री० उख—क । पाकपात्रे पिठरादौ ( हांड़ि ) ।
उख्य त्रि० उखायां स्थाल्यां संस्कृतं यत् । स्थालीपक्वे मांसादौ ।
उग्र पु० उच—रक् गश्चान्तादेशः । महादेवे, वायुमूर्त्तिधारिणि शिवे क्षत्रियात् ऊढायां शूद्रायामुत्पन्ने सङ्कीर्णवर्णे, (आगुरी) उग्रगुणत्वात् शोभाञ्जनवृक्षे, केरलदेशे क्रूरसंज्ञके "उग्रः पूर्व्वमघात्मका" इति ज्योतिषोक्ते नक्षत्रसमुदाये च वत्सनाभाख्ये विषे न०। उत्कटे त्रि० । वचायां, यवान्यां, धन्याके, उपजाते: स्त्रियां च स्त्री० टाप् ।
उग्रकाण्ड पु० उग्रः काण्डोऽस्य । (करेला) कारविल्ले वृक्षभेदे ।
उग्रगन्ध पु० उग्रः गन्धः पुष्पेऽस्य । चम्पके, कट्फले, अर्ज्जकवृक्षे लशुने च । हिङ्गुनि न० । उत्कटगन्धादौ त्रि० । यवान्याम् वचायाम्, अजमोदायाञ्च स्त्री० टाप् ।
उग्रचण्डा स्त्री० उग्रा चण्डा कोपना कर्म्म० । देवीभेदे ।
उग्रतारा स्त्री० उग्रादपि भयात् तारयति भक्तान् । ताराख्यायां देव्याम् । [ रसन्नधनुष्के त्रि० ।
उग्रधन्वन् पु० उग्रं धनुर्यस्य ब०अनङ् समा०। शिवे शक्रे च । शत्रुभि-
उग्रनासिक त्रि० उग्रा दीर्घा नासिका यस्य । दीर्घनासिके ।
उग्रश्रवस् पु० उग्रम् उत्कटं श्रुतिधरं श्रवः कर्णौ यस्य । रोमहर्षणसुते पौराणिके सूते । [ ख्याते नृपे ।
उग्रसेन पु० उग्रा सेनाऽस्य । यदुवंश्ये आहुकनामके कंसस्य जनकत्वेन
उच समवाये दि० पर०सक० सेट् । उच्यति औचत्—औचीत् ।
उचित त्रि० उच—क्त वच—कितच् वा । न्यस्ते, परिचिते युक्ते ।
उच्च त्रि० उत्क्षिप्य बाहू चीयते उद्+चि—ड । उन्नते ।
उच्चटा स्त्री० उद्+चट—अच् । लशुनभेदे, गुञ्जायां, चूडालायाम्, भूम्यामलक्यां, नागरमुस्तायां, दम्भे (दिमाग) चञ्चायाञ्च ।

उच्चण्ड त्रि० उद्+चडि–अच् । अत्यन्तकोपे त्वरायुक्ते अविलम्बिते ।
उच्चतरु पु० कर्म्म० । नारिकेले । [उच्चैर्हस्ततालदानात् ।
उच्चताल न० उच्चः तालः हस्ततालः यत्र । पानगोष्ठ्यां मत्ततया तत्र
उच्चन्द्र पु० उत्क्रान्तः लुप्तोऽवशिष्टचन्द्रो यत्र प्रादि० धातु० ब० शिष्ट-
शब्दलोपः । रात्रिशेषे । [वचिते नीवारे ।
उच्चय पु० उत्थाय चयः चि–अच् । पुष्पादेरुत्तोलने । हस्ताभ्यामुद्धृत्या-
उच्चाटन न० उद्+चट्–णिच्–ल्युट् । उत्पाटने स्वस्थानात् विश्ले-
षणे "उच्चाटनं स्वदेशादेर्भ्रंशनं परिकीर्त्तितम्" इति तन्त्रोक्ते
षट्कर्म्मान्तर्गतेऽभिचारभेदे च ।
उच्चार पु० उद्+चर–णिच् घञ् । उच्चारणे । कर्मणि घञ् । विष्ठायाम्
उच्चावच त्रि० उदक् उत्कृष्टञ्च अवाक् अपकृष्टञ्च मयू० नि० । उत्कृष्टा-
पकृष्टात्मके नानाभेदे ।
उच्चूल पु० उच्चा चूडा यस्य डस्य लत्वम् । ध्वजोर्द्ध्वस्थिते वस्त्रखण्डे ।
उच्चैःश्रवस् पु० उच्चैः उन्नतं श्रवोऽस्य । उन्नतकर्णे समुद्रजाते श्वेतवर्णे
इन्द्रस्य वाहनभूते अश्वभेदे । उच्चैरुच्चशब्दं शृणोति श्रु–असुन् ।
बधिरे ।
उच्चैर्घुष्ट न० उच्चैस्+घुष क्त । (ढेडरा) उच्चघोषणायाम् ।
उच्चैस् अव्य० उद्+चि डैसि । अत्यर्थे, महति, उन्नते च । अकचि
उच्चकैरप्यत्र । [अधर्मकार्ये च ।
उच्छास्त्र त्रि० उद्गतं शास्त्रात् ग०स०। अतिक्रान्तशास्त्रे शास्त्रविरुद्धे-
उच्छिख त्रि० उद्गता शिखा यस्य प्रा०ब० । उन्नताग्रे ।
उच्छित्ति स्त्री० उद्+छिद्–क्तिन् । उच्छेदे, नाशने च ।
उच्छिलीन्ध्र उच्छिन्नं शिलीन्ध्रम् । कवाके । विकसितशिलीन्ध्रयुक्ते
त्रि० । "उच्छिलीन्ध्रामवन्ध्यामिति" मेघदूतम् ।
उच्छिष्ट त्रि० उद्+शिष–क्त । भुक्तावशिष्टे, त्यक्ते च ।
उच्छिष्टभोजन पु० पञ्चयज्ञावशिष्टं देवनैवेद्यं वा भोजनमस्य । प-
ञ्चयज्ञावशिष्टस्य देवनैवेद्यस्य च भोक्तरि ।
उच्छिष्टमोदन न० उच्छिष्टं भ्रमरोच्छिष्टं मधु तेन मोदते वर्द्धते

शुष–ल्यु । (शोष) शिक्षधके ।
उच्छीर्षक न० उत्थापितं शय्यात उत्तोल्य स्थापितं शीर्षं यस्मिन् ब०
कप् । शीर्षोपधाने (बालिश) । उन्नतशीर्षके धान्यादौ त्रि० ।
उच्छून त्रि० उद् श्वि–क्त । स्फीते "इर्षोच्छूनैः किमेभि" इति नाट-
कम् उन्नते च । [नियन्तृरहिते, अप्रतिबन्धे च ।
उच्छृङ्खल त्रि० उद्गतं शृङ्खलातः गति स० । ० बन्धनरहिते,
उच्छेद पु० उद् छिद–घञ् । छेदने, विनाशने च ।
उच्छोषण त्रि० उद्+शुष–णिच्–ल्यु । सन्तापके, ऊर्द्ध्वशोषके च ।
उच्छ्र(च्छ्रा)य पु० उद्–श्रि–अच् घञ् वा । उन्नतायाम् उन्नतौ ।
उच्छ्रित त्रि० उद्+श्रि–क्त । उद्धे, प्रवृद्धे, सञ्जाते, समुन्नद्धे च ।
उच्छ्वसित त्रि० उद्+श्वस–क्त । विकाशिते, जीविते, स्फुरिते च ।
उच्छ्वास पु० उद्+श्वस–घञ् । अन्तर्मुखश्वासे, आख्यायिकायाः
परिच्छेदे, प्राणे, आश्वासे च । [औञ्छीत् ।
उछ उञ्छे (कणशआदाने) तुदा० इदित् पर०सक० सेट् । उञ्छति
उछ बन्धे समापने च तुदा० पर० सक० सेट् । उच्छति औच्छीत् ।
उज्जय(यि)नी स्त्री० विक्रमादित्यराजधान्याम् अवन्त्यां पुर्य्याम् ।
उज्जासन न० उद्+जस–हिंसायां स्वार्थे णिच्–ल्युट् । मारणे ।
उज्जृम्भ पु० उद्+जृभि–घञ् । विकाशे, स्फुटने च ।
उज्जृम्भित त्रि०उद्+जृभि–क्त । विकाशिते । भावे क्त । चेष्टायाम् न०।
उज्ज्वल त्रि० उद्+ज्वल–अच् । दीप्ते, विशदे, विकाशिनि च ।
स्वर्णे न० । शृङ्गाररसे पु० । [शुक्लाम्बुकार" इति रघुः ।
उज्झ त्यागे तुदा० पर० सक० सेट् । उज्झति, "औज्झीत तल्प-
उञ्छ पु० उछि–घञ् । "अबाधितस्थानेषु पथि, क्षेत्रेषु च अप्रतिह-
तावकाशेषु यत्र यत्रौषधयो विद्यन्ते तत्र तत्राङ्गुलीभ्यामेकैकं
कणं समुच्चिनोतीति स्मृत्युक्ते कणश आदाने ।
उञ्छन पु० न० उछि–ल्युट् । आपणादिपतितस्य विक्रीतावशिष्टस्य
धान्यादेः कणश आदाने ।
उञ्छशिल न०उञ्छ+शिल–अपहारे क । क्षेत्रस्वामिना स्वीकृतशस्यात्

चोत्पत्कयाग्नः समुच्चयरूपे उष्काचारे ।

उट नं० उ०—ट नेयम् । तृणे पर्णे च । [कुम्भादित्वे ।

उटज पु० न० उटेभ्यो जायते जन—ड । पर्णनिर्म्मितशालायां

उठ उपघाते भ्वा० पर० सक० सेट् । ओठति औठीत् ।

उड संहतौ (सौत्रः) पर० अक० सेट् । ओडति औडीत् ।

उडु स्त्री० न० उड—उ । नक्षत्रे, जले च । स्त्रीत्वे वा ऊङ् ।

उडु(डू)प पु० उडुनि जले पाति पा—क । प्लवे भेलायाम् । उडूनि नक्षत्राणि पाति । चन्द्रे स हि ताराणां पतिरतोरक्षकः ।

उडु(डू)पति पु० उडूनां पतिः । चन्द्रे, जलेशे वरुणे च ।

उडुपथ पु० उडूनां पन्थाः । आकाशे ।

उडुम्बर पु० उं शम्भुं वृणोति खच् उम्बरः उत्कृष्टः उम्बरः पृषो० दस्य वा डत्वम् । (यज्ञडुम्बुर) यज्ञाङ्गे द्रुमे, ताम्रे च, गृहाव-यहण्याम् देहल्याम्, कुष्ठभेदे च न० ।

उड्डामर त्रि० उत्कटं डामरम् । अत्यन्तप्रचण्डे ।

उड्डीन न० उद्+डी—क्त । पक्षिणामूर्द्ध्वगमने ।

उत अव्य० उ—क्त । विकल्पे, समुच्चये, वितर्के, प्रश्ने, अत्यर्थे च ।

उत त्रि० वेञ् क्त संप्रसारणम् (वुना) स्यूते ।

उतथ्य पु० अङ्गिरसः श्रद्धायां पत्न्यामुत्पन्ने गुरोर्ज्येष्ठभ्रातरि ।

उतथ्यतनय पु० ६त० । गौतमे मुनौ ।

उतथ्यानुज पु० ६त० । बृहस्पतौ "उतथ्यावरजो"ऽप्यत्र ।

उताहो अव्य० उत च आहो च द्व० । विकल्पे, प्रश्ने, विचारे च ।

उत्क त्रि० उद्गतं मनोऽस्य उद्+क नि० । उन्मनस्के अन्यमनस्के ।

उत्कट पु० अतीव उद्+कटच् । इक्षौ, शरे च । त्वक्पत्रे । गुड-त्वचि (दारचिनि) च न० । उद्गतः कटः आवरणं यस्य प्रादि० ब० । मत्ते विषमे, तीव्रे च त्रि० । भिन्नकटे गजे पु० ।

उत्कण्ठा स्त्री० उद्+कठि—अ । इष्टलाभे कालासहनरूपे औत्सुक्ये ।

उत्कण्ठित त्रि० उत्कण्ठा जाताऽस्य तारकादि० इतच् । उत्कण्ठा-युक्ते । नायिकाभेदे स्त्री० । साहि० ३परि० ।

उत्कर पु० उद्+कॄ—अप् । धान्यादीनां राशीकरणे, प्रसारणे, ईषत्प्रसारणे च कृतपदादिविस्तेपे च ॥
उत्कर्ष पु० उद्+कृष—घञ् ।– अतिशये ।
उत्कल पु० "जगन्नाथप्रान्तदेश उत्कलः परिकीर्त्तित" इत्युक्ते ओड्रदेशे । उत्कः सन् याति अ+क । व्याधे, भारवाहके च ।
उत्कलिका स्त्री० उद्–कल–वुन् । उत्कण्ठायाम्, कामादिजातायां स्मृतौ च ।
उत्कलित त्रि० उद्+कल–क्त । उन्मनस्के ह्रष्टमति च ।
उत्कार पु० उद्+कॄ—घञ् । धान्यानां, राशीकरणे, ऊर्द्धक्षेपणे च ।
उत्कास पु० उच्चारकः कासः । कासभेदे, वमनव्याधौ च ।
उत्कीर्ण त्रि० उद्+कॄ—क्त । उल्लिखिते, क्षतवेधे च "मणौ वज्रसमुत्कीर्णे" इति रघुः ।
उत्कुण पु० उद्+कुण—क । कीटकीटे (उकुण) इति ख्याते ।
उत्कृति स्त्री० षड्विंशत्यक्षरपादके छन्दोभेदे ।
उत्क्रोच पु० उद्+कुच—घञ् । अन्याय्यकर्मकरणार्थं वादिप्रतिवादिभ्योऽर्थग्रहणे (घुष) इति ख्याते ।
उत्क्रम पु० उद्+क्रम—घञ् अवृद्धिः । व्युत्क्रमे, विपरीतक्रमे ।
उत्क्रोश पु० उद्+क्रुश–अच् । कुररीपक्षिणि ।
उत्क्षेपण न० उद्+क्षिप–ल्युट् । ऊर्द्धक्षेपणे । करणे ल्युट् । व्यजने । करणे ल्युट् धान्यमर्द्दने काष्ठभेदे । [इति रघुः ।
उत्खात त्रि० उद्+खन–क्त । उत्पाटिते "उत्खातप्रतिरोपिता"
उत्खातकेलि पु० "उत्खातकेलिः शृङ्गाद्यैर्वप्रक्रीडा निगद्यते" इत्युक्तलक्षणे वृषगजादेः शृङ्गादिना मृत्तिकाखनने ।
उत्त त्रि० उन्द्–क्त । क्लिन्ने आर्द्रवस्तुनि ।
उत्तंस पु० उद्+तसि–अच् । कर्णाभरणे, शिरोभूषणे च ।
उत्तप्त त्रि० उद्+तप्–क्त । सन्तप्ते, ज्वाते च । शुष्कमांसे न० ।
उत्तम त्रि० उद्+तमप् । उत्कृष्टे । प्रियव्रतस्यपत्नस्य सुते पु० ।

उत्तमर्ण पु० उत्तममृणमस्य । ऋणप्रयोजके (महाजने) ।

उत्तमसाहस न० "साशीतिपणसाहस्रो दण्ड उत्तमसाहसम्" इत्युक्ते दण्डभेदे ।

उत्तमाङ्ग न० कर्म० । मस्तके । [निवृत्तौ ।

उत्तम्भ पु० उद्+स्तम्भ–घञ् । प्रवृत्तिबाधिकायामनिष्टसाधनतो

उत्तर न० उत्तीर्य्यते प्रकृताभियोगोऽनेन उद्+तॄ–अप् । राजसमीपे वादिकृताभियोगशोधने उत्तराख्ये व्यवहाराङ्गे "प्रश्नदोषाधिया दृष्ट्वा तस्य भञ्जनमुत्तरम्" इत्युक्ते दोषभञ्जनवाक्ये च । विराट-राजपुत्रे पु० । उदीच्यां दिशि विराटराजसुतायाञ्च स्त्री० । अनन्तरे देशे, काले च पु० । अनन्तरदिग्देशकालवृत्तौ त्रि० ।

उत्तरकाल पु० कर्म० । भविष्यत्काले आयतौ ।

उत्तरकुरु पु० नववर्षात्मकस्य जम्बुद्वीपस्य वर्षभेदे ।

उत्तरकोशला स्त्री० अयोध्यानाम्न्यां नगर्य्याम् । [उत्ततरङ्गे त्रि० ।

उत्तरङ्ग न० उत्तरमङ्गम् कर्म० शकन्ध्वा० । द्वारोर्द्ध्वस्थदारुणि । उ-

उत्तरच्छद पु० कर्म० । शय्याया उपर्य्यास्तरणवस्त्रे ।

उत्तरपक्ष पु० वादे पूर्वपक्षस्य सद्दूषणे सिद्धान्तपक्षे ।

उत्तरफाल्गुनी स्त्री० फल्गु मनोहरं नयति । नी–ड्वो कर्म० । अश्विन्यादिनक्षत्रेषु द्वादशे नक्षत्रे दक्षिणोत्तरस्थिततारकाद्वयात्मके ।

उत्तरभाद्रपद स्त्री० भद्राय हितः भाद्रः पद् पादश्चतुर्थांशो यस्याः ब० ततः कर्म० । अश्विन्यादिनक्षत्रेषु षड्विंशे नक्षत्रे पदशब्देन समासः टाप् । उत्तरभाद्रपदाप्यत्र ।

उत्तरमीमांसा स्त्री० कर्म० । ब्रह्ममीमांसायाम् वेदान्तदर्शने ।

उत्तरा अव्य० उत्तर+आच् । उत्तरस्यां दिशि काले देशे चेत्यर्थे ।

उत्तरा "प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते उत्तरा हि ता इत्युक्तासु सपिण्डीकरणोत्तरासु श्राद्धक्रियासु । [स्यादुत्तरस्मिन्नित्यर्थे ।

उत्तरात् अव्य० उत्तर+आति । दिग्देशकालविषये उत्तरस्मात्-

उत्तराधिकारिन् त्रि० उत्तरमधिकरोति अधि+कृ–णिनि । पूर्व-

स्वामिस्वत्वोपरमे तत्सम्बन्धाधीनस्वत्ववति जाताधिकारे पुत्रपौत्रादौ दायादे। (वंशो) इति ख्याते।

**उत्तराभास** पु० उत्तरमिवाभासते आ+भास-अच्। दुष्टोत्तरे।

**उत्तरायण** न० "माघादि मासयुग्मेस्तु ऋतवः षट् क्रमादितः। उत्तरायणमाद्यैस्तैरित्युक्तलक्षणे ऋतुत्रयात्मके माघादिके मासषट्के काले। उत्तरा दिशि सूर्यस्य अयनं यस्मिन् काले इति व्युत्पत्तेः। तदारम्भकाले मकरसंक्रमणदिनेऽपि।

**उत्तराषाढ़ा** स्त्री० अश्विन्यादिनक्षत्रेषु एकविंशतितमे नक्षत्रे।

**उत्तरासङ्ग** पु० उत्तरे ऊर्द्ध्वभागे आसज्यते आ+सञ्ज-घञ्। उत्तरीयवस्त्रे। [उत्तरस्मात् उत्तरस्मिन्नर्थे।

**उत्तराहि** अव्य० उत्तर+आहि। दिग्देशकालविषये उत्तरस्मिन्

**उत्तरीय** न० उत्तरस्मिन् देहभागे भवः छ। ऊर्द्ध्वदेहधार्ये वस्त्रे।

**उत्तरेण** अव्य० आसन्नदिग्देशकालानां प्रथमान्तसप्तम्यन्तानामर्थेषु "तत्रागारं धनपतिगृहानुत्तरेणास्मदीयम्" इति मेघदूतम्।

**उत्तरेद्युस्** अव्य० उत्तरस्मिन् दिने उत्तर+एद्युस्। आगामिदिवसे इत्यर्थे। [भूमिलग्नपृष्ठतया ऊर्द्ध्वभावेन स्थिते, ऊर्द्ध्वमुखे च।

**उत्तान** त्रि० उद्गतस्तानो विस्तारो यस्मात्। विस्ताररशून्ये, (चित)

**उत्तानक** पु० उद्-तन-ण्वुल्। उच्चटाख्ये।

**उत्तानपत्रक** पु० उत्तानमूर्द्ध्वमुखं पत्रमस्य। रक्ते एरण्डवृक्षे।

**उत्तानपाद** पु० स्वयम्भुवो मनोः पुत्रे ध्रुवपितरि नृपभेदे।

**उत्तानशय** त्रि० उत्तानः ऊर्द्ध्वमुखः सन् शेते शी-अच्। अतिशिशौ तस्य च तदानीमनुत्ताने सामर्थ्याभावात्।

**उत्ताप** पु० उद्+तप-घञ्। उष्णतायाम्, सन्तापे च।

**उत्तार** त्रि० उद्गता तारा तस्य। उद्गततारकनेत्रयुक्ते। उत्कृष्टतारः। अत्युन्नीवे। [रक्षे, त्वरिते, उद्गते, च। प्रबलके पु०।

**उत्ताल** त्रि० तुरा०तल-प्रतिष्ठायाम् अच्। प्रतिष्ठिते महति। विक-

**उत्तीर्ण** त्रि० उद्+तॄ-क्त। मुक्ते, पारङ्गते च।

**उत्तुङ्ग** त्रि० उत्कटं तुङ्गम्। अत्युन्नते।

उत्तुष पु० उद्गतः तुषो यस्मात् । लाजाख्ये (खइ) भष्टधान्ये । [त्सि, उद्दीपने, तीक्ष्णीकरणे च ।
उत्तेजना स्त्री० उत्+तिज-णिच्-युच् । प्रेरणायाम्, व्यग्रताक-
उत्तेजित त्रि० उद्+तिज-णिच्-क्त । प्रेरिते, उद्दीपिते, च । भावे क्त । उत्तेजनायाम् "उत्तेजितं मध्यवेगं योजनं स्वयवरयवैर्युक्तं" अश्वगतिभेदे न० ।
उत्तेरित न० उद्-तॄ भावे इतच् गुणे एत्वम् नि० । अश्वगतिभेदे । अर्थं चाह्यचि । "उत्तेरितोऽतिवेगाश्वो न शृणोति न पश्यति" इत्युक्तगतियुक्तेऽश्वे पु० ।
उत्तोलन न० उद्+तुल-उन्माने ल्युट् ऊर्द्ध्वं नीत्वा तोलने ।
उत्तोलित त्रि० उद्+चु० तुल-क्त । उत्क्षिप्ते, कृततोलने च ।
उत्त्यक्त त्रि० उद्+त्यज-क्त । ऊर्द्ध्वक्षिप्ते, परित्यक्ते च ।
उत्थान न०उद्+स्था-ल्युट् । ऊर्द्ध्वपतने, उद्यमे, ऊर्द्ध्वभवनचेष्टायाम्, उद्भवे च । करणे ल्युट् । उत्साहे, पौरुषे, हर्षे च । अधिकरणे ल्युट् । रणे, राज्यचिन्तनरूपे तन्त्रे, प्राङ्गणे, चैत्ये च ।
उत्थानैकादशी स्त्री० उत्थानस्य हरेः निद्रातः प्रबोधनस्य काल ए-कादशी । चान्द्रकार्त्तिकशुक्लैकादश्याम् ।
उत्थित त्रि० उद्+स्था-क्त । वृद्धियुक्ते, उद्यते, उत्पन्ने च ।
उत्थिताङ्गुलि पु० उत्थिता उद्युक्ता अङ्गुलयो यत्र । (चापड़) वि-स्तृताङ्गुलिके करतले चपेटे ।
उत्पत पु० उत्पतति ऊर्द्ध्वं गच्छति उद्+पत-अच् । पक्षिणि ।
उत्पतन न० उद्+पत-ल्युट् । ऊर्द्ध्वगमने, उत्पत्तौ च ।
उत्पत्ति स्त्री० उद्+पद-क्तिन् । जन्मनि, जीवस्य देहसम्बन्धे, सां-ख्यादिमते आविर्भावे च । उद्+पत-क्तिन् । ऊर्द्ध्वगमने ।
उत्पत्तिविधि पु० मीमांसकमते कर्मस्वरूपावेदके विधौ यथा अग्नि-होत्रं जुहोतीत्यादि ।
उत्पल न० उद्+पल-अच् । नीलपद्मे, कुमुदादौ, कुष्ठौषधौ च ।
उत्पलगन्धिक न० उत्पलस्य गन्ध इव गन्धोऽस्य इत् समा० संज्ञायां

कन् । गौरीर्णास्ये चन्दने । [यते च । हेत०] इन्दीवरस्य दले ।

उत्पलपत्र न० उत्पलस्य पत्रमिव । तिलकभेदे, स्त्रीणां स्तनादौ नख-

उत्पलिनी स्त्री० उत्पलानि सन्त्यस्मिन् देशे तेषां समूहो वा इनि ।

उत्पलयुक्तलतायां, कुवलयसमुदाये च । [देवतृणपर्णे ।

उत्पवन न० उद्+पू-करणे ल्युट् । कुशकण्डिकायां पवित्रे च जला-

उत्पश्य त्रि० उद्+दृश-श । ऊर्द्धदृष्टिकारके, उन्मुखे च ।

उत्पाटन न० उद्+पट-णिच्+ल्युट् । उन्मूलने ।

उत्पात पु० उद्+पत-घञ् । उपद्रवे । उद्+पत-ण । अकस्मादा-

गते प्राणिनां शुभाशुभसूचके दैवनिमित्ते भूकम्पादौ ।

उत्पादक पु० ऊर्द्धस्थिताः पादा अस्य कप् । अष्टपदे शरभाख्ये ग-

जाराती पशुभेदे तस्य पृष्ठस्थचतुश्चरणत्वादूर्द्धपादत्वम् । उत्-पद-

णिच्-ण्वुल् । पितरि पु० । उत्पादनकर्त्तरि त्रि० ।

उत्पादशय पु० उत्पाद ऊर्द्धक्षिप्तपादः सन् शेते शी-अच् । (टिटिर)

टिट्टिभपक्षिणि ।

उत्पिञ्जल त्रि० उद+पिजि-कलन् । अत्यर्थाकुले ।

उत्प्रास पु० उद्+प्र+अस-दीप्त्यादिषु घञ् । उपहासे ।

उत्प्रेक्षा स्त्री० उद्+प्र+ईक्ष-अ । उद्भावने अर्थालङ्कारभेदे च सा०

१०परि० । [ज्ञाने (भाषा) ।

उत्प्लवन न०उद्+प्लु-ल्युट् । उल्लम्फने, जलादेरुपरिस्थितिरूपे उन्म-

उत्प्लवा स्त्री० उत् जलादेरुपरि प्लवते प्लु-अच् । नौकायाम् ।

उत्फुल्ल त्रि० उत्+फल-क्त । दलानामन्योन्यविश्लेषेण विकाशिते कुसु-

मादौ ।

उत्स पु० उन्द्-स । पर्वतादितः स्रवज्जलस्य पातस्थाने, स्रवज्जले च ।

उत्सङ्ग पु० उद्+सन्ज-घञ् । क्रोडे । सङ्गादुत्क्रान्ते त्रि० ।

उत्सर्ग पु० उद्+सृज-घञ् । व्याकरणोक्ते सामान्यविधाने, न्याये,

त्यागे, दाने, यागभेदे, अपानवायोर्व्यापारे च ।

उत्सर्जन न० उद्+सृज-ल्युट् । दाने त्यागे च ।

उत्सर्पण न० उद्+सृप-ल्युट् । उल्लङ्घ्य पुरतोगतौ, उल्लङ्घने च ।

उत्सव पु० उद्+सू-अप् । आनन्दजनकव्यापारे विवाहादौ ।
उत्सवसङ्केत पु० उत्सव आनन्दजनकः सङ्केतः स्त्रीपुंसयोः स्वयं-मनुरागादाह्वानम् यस्य । असंयं स्त्रीत्वेन दाम्पत्यनियमशून्ये स्त्रीपुंसयोरनुरागमात्रहेतुकसंरविहारशालिनि पार्व्वतीये जातिभेदे । "शरैरुत्सवसङ्केतानिति" रघुः ।
उत्सादन न० उद्+सद-णिच्-ल्युट् । उत्पाटने, उद्वर्त्तने च ।
उत्सारक पु० उद्+सृ-णिच्-ण्वुल् । द्वारपाले तेन हि प्रभुद्वारतो जना दूरीक्रियन्ते । [नारकरणे च ।
उत्सारण न० उद्+सृ-णिच्-ल्युट् । दूरीकरणे, चालने, स्थाना-
उत्साह पु० उद्+सह-घञ् । उद्यमे, अध्यवसाये, कर्त्तव्यकार्य्येषु स्थिरतरे प्रयत्ने "उत्साहो मन्त्रमूलं स्या"दिति नीतिविदां मतम् । "प्रभुशक्तिर्मन्त्रमूला तस्मादुत्साहवान् भवेत्" इत्युक्ते राज्ञां गुणविशेषे, सत्रागे, सूत्रे, वीररसस्य भावादे च साहि० ३ परि० ।
उत्साहवर्द्धन पु० उत्साहं वर्द्धयति वृध-णिच्-ल्यु । वीररसे । वृध-ल्युट् ६ त० । उत्साहस्य वृद्धौ न० ।
उत्साहशक्ति स्त्री० उत्साहएव शक्ति र्बलम् । राज्ञां विक्रमहेतौ बले ।
उत्सिक्त त्रि० उद्+सिच-क्त । गर्विते उद्धते, वर्द्धिते, उपरिसेकयुक्ते, उपप्लुते, त्यक्तमर्य्यादे च ।
उत्सुक त्रि० उद्+सू-क्विप् कनि ह्रस्वः । इष्टार्थसम्पादनाय उद्युक्ते, अभीष्टोगमिष्यतीत्युत्कण्ठान्विते च ।
उत्सृष्ट त्रि० उद्+सृज-क्त । त्यक्ते, ददतोत्सर्गे, दत्ते च ।
उत्सेक पु० उद्+सिच-घञ् । गर्व्वे, उद्रेके उद्धत्य बहिःसेचने च ।
उत्सेध पु० उद्+सिध-घञ् । देहे, उन्नतौ "पयोधरोत्सेधनिपातेति" कुमारः ।
उद् अव्य० उ-क्विप् तुक् पृषो० दत्वम् । प्रकाशे, विभागे, प्राकट्ये, ऊर्द्ध्वे उत्कर्षे, प्राबल्ये, आलस्ये, शक्तौ, प्राधान्ये, बन्धने, भावे, मोक्षे, "तस्य उदिति नाम" इति श्रुतेर्ब्रह्मणि च ।
उदक न० उन्द-ण्वुल् नलोपश्च नि० । जले पृषो० कलोमे उदकमलम् ।

**उदकीर्य्य** पु० उदकेन जलेन कीर्य्यते कॄ—क्यप् । (डहरकरञ्जा) करञ्जभेदे ।

**उदककुम्भ** पु० उदकेन पूर्णः कुम्भः शाक० त० । जलपूर्णकुम्भे शान्त्युदकुम्भहस्ता इति भट्टिः ।

**उदक्या** स्त्री० उदकं शुद्ध्यर्थं स्नानजलं चतुर्थदिने अर्हति यत् । रजस्वलायाम् ।

**उदगद्रि** उदगुत्तरस्यामद्रिः । हिमालये ।

**उदगयन** न० उदक् उदीच्यामयनम् । उत्तरायणे माघादिके मास-षट्के "उदगयने आपूर्य्यमाणे" पक्षे इति श्रुतिः ।

**उदग्र** त्रि० उद्गतमग्रं यस्य । उच्चे । [पात्रे (कुप्पो) ।

**उदङ्क** पु० उदच्यते उद्ध्रियतेऽत्र उद्+अञ्च्—घञ् । चर्म्ममये घृतादि-

**उदच्** अव्य० उदच् दिग्देशकाले वाच्ये प्रथमापञ्चमीसप्तम्यर्थे अस्ताति तस्य लुक् । प्रथमान्ताद्यर्थवृत्तौ उदगादिगादौ । उद्+अन्च—क्विन् । उत्तरे देशे काले च पु० । स्वादौ उदङ्-उदञ्चौ । *दिशि स्त्री० ङीप् उदीची ।

**उदज** पु० उद्+अज—अच् । पशुप्रेरणे ।

**उदञ्चन** न० उद्+अञ्च्—करणे ल्युट् । पिधानार्थे पात्रे (ढाकना) । भावे ल्युट् । ऊर्द्ध्वक्षेपणे ।

**उदञ्चित** त्रि० उद्+अञ्च्—क्त । ऊर्द्ध्वक्षिप्ते, पूजिते च ।

**उदधि** पु० उदकानि धीयन्तेऽस्मिन् धाञ्—आधारे कि उदादेशः । समुद्रे, घटे च ।

**उदधिमल** पु० उदधेर्मल इव । समुद्रफेने ।

**उदन्त** पु० उद्गतोऽन्तोमिर्य्यो यस्मात् । वार्त्तायाम् वृत्तान्ते कुश-लादिकथने, साधौ च ।

**उदन्या** स्त्री० अतिगार्द्ध्येन उदकमिच्छति क्यच् उदन्भावः च । पिपासायाम् ।

**उदन्वत्** पु० उदकानि सन्त्यस्य मतुप् उदन् भावः मस्य वः । समुद्रे ।

**उदप्** आघाते (सौत्रः) पर० सक० सेट् । उदपति । औदापीत् ।

**उदपान** पु० न० उदकं पीयतेऽस्मिन् पा—ल्युट् उदादेशः। कूप-समीपस्थे खाते क्षुद्रजलाधारे।

**उदमान** पु० "कुडवा स्यादष्टभिर्द्रोणैः द्रोणमाढ़ेन चाढकः। अस्यार्द्ध-र्मतकोभाग उदमान उदाहृत इत्युक्ते मानभेदे।

**उदय** पु० उद्+इ—अच्। ज्योतिषोक्ते राशेरुदयरूपे लग्ने। आ-धारे अच्। उदयाचले पूर्वपर्वते "यैर्यत्र दृश्यते भास्वान् स तेषामुदयः स्मृत" इत्युक्तलक्षणे दृष्टियोग्यस्थाने च भावे अच्। प्रथमदर्शनयोग्यभवने, वृद्धौ, समुन्नतौ उत्पत्तौ च।

**उदयन** पु० उद्+इ—ल्युट्। वत्सराजे, अगस्त्ये मुनौ, कुसुमाञ्जलि-प्रभृतिग्रन्थकारके उदयनाचार्य्ये च। भावे ल्युट्। उदये।

**उदर** न० उद्+दृ—अप्। जठरे नाभिस्तनयो र्मध्यभागे। आधारे अप्। युद्धे। उद्+इ—अप् उदो दलोपश्च। उदररोगे।

**उदरग्रन्थि** पु० उदरे ग्रन्थिरिव। गुल्मनामकरोगे।

**उदरत्राण** न० उदरं त्रायतेऽनेन ल्युट्। (कमरबन्ध) उदरबन्धवस्त्रे।

**उदरपिशाच** त्रि० उदरे तत्पूर्त्तौ पिशाच इव। सर्वान्नभक्षके।

**उदरम्भरि** त्रि० उदरं बिभर्त्ति भृ—खि मुम् च। मञ्चयज्ञाद्यकर-णेनात्मोदरमात्रपोषके।

**उदररोग** पु० ६त०। उदरी इति ख्याते रोगे। [ख्याते रोगे।

**उदरामय** पु० उदरस्यामं रोगं याति नयति या—क। स्वनाम

**उदरावर्त्त** पु० उदरे आवर्त्त इव गभीरत्वात्। नाभौ।

**उदरिणी** स्त्री० उदरे गर्भोऽस्त्यस्याः इनि। गर्भवत्याम्।

**उदरिन्** त्रि० उदरं बृहत् अस्यास्ति महत्त्वे मत्वर्थीय इनि। तुन्दिले (भुडियुक्ते)। इल। उदरिलोऽप्यत्र।

**उदर्क** पु० उद्+अर्क—अर्च्+रा घञ्। उत्तरकाले भाविफलके शुभा-शुभकर्मणि च।

**उदर्चिस्** पु० उद् ऊर्द्ध्वमर्चिः रश्मिरस्य। वह्निके वह्नौ। उत्कृष्ट-कान्तित्वात् कन्दर्पे ऊर्द्ध्वरेतस्त्वात् शिवे च। प्रा०स०। उद्गतायां शिखायां न०।

उद्वसित न० उद्+वस+षि—क्त । स्थले । [भवेदि वर्त्मे ।
उद्श्वित् न० उदेन जलेन श्वयति वर्द्धते श्वि—क्विप् । अर्द्धजलेन
उदात्त पु० उद्+आ+दा—क्त । वर्णोत्पत्तिस्थानेषु उर्द्धःस्वरेण उच्चा-
रिते । श्रेष्ठे, महति, दातरि च त्रि० । अलङ्कारभेदे न० ।
उदान पु० उद्+अन—घञ् । ऊर्द्धगमनोत्क्रमणादिहेतुके कण्ठस्थे
वायौ, उदरावर्त्ते नाभौ, सर्पभेदे च ।
उदार त्रि० उद्+आ+रा—क । दातरि, महति, सरले, दक्षिणे,
गम्भीरे, असाधारणे च ।
उदावर्त्त पु० उद्+आ+वृत—घञ् । "यतोर्द्धं जायते वायोरावेगः
स चिकित्सकैः । उदावर्त्त इति प्रोक्तो व्याधि" इत्युक्तलक्षणे
वातव्याधौ ।
उदासीन त्रि० उद्+आस—शानच् । मध्यस्थे, विवदमानयोरेकतरप-
क्षानवलम्बके, जिगीषोर्नृपतेः शत्रुमित्रभूमितो व्यवहिते परनृपे,
उपेक्षके च ।
उदास्थित त्रि० उद्+आ+स्था—क्त । चरे, द्वारपाले, अध्यक्षे,
प्रव्रज्यारूपस्थानच्युते नष्टसंन्यासे परिव्राजके च ।
उदाहरण न० उद्+आ+हृ—भावे ल्युट् । एकदेशप्रतिज्ञा सकलप्रति-
ज्ञार्थे कथने । कर्मणि ल्युट् । इष्टसिद्ध्यर्थमुच्यमाने दृष्टान्ते,
प्रकृतसिद्ध्यर्थं निदर्शनरूपे उपोद्घाते च ।
उदाहृत त्रि० उद्+आ+हृ—क्त । दृष्टान्ततयोपन्यस्ते, कथिते च ।
उदित त्रि० वद—क्त । कथिते । उद्+इण्—क्त । उत्थिते, उद्गते, वृद्धे च
उदीच्य त्रि० उदीचि उत्तरकाष्ठादौ भवः यत् । उत्तरकाष्ठादिभवे
वस्तुनि, शरावत्या नद्याः पश्चिमोत्तरदेशे, (बाला) गन्धद्रव्ये च ।
उदीरण न० उद्+ईर—ल्युट् । कथने, उच्चारणे च ।
उदीर्ण त्रि० उद्+ॠ—क्त । उदारे, महति, उद्रिक्ते च उदीर्णराम-
प्रतिरोधकमिति" माघः ।
उदुम्बर पु० उडुम्बरवत् सर्वम् । तत्राभावः ।
उदुम्बरपर्णी स्त्री० उडुम्बरपर्णीवत् सर्वम् । न तत्रम् ।

उदुम्बरफला स्त्री० उदुम्बरफलावत् सर्व्वम्। न ङलम्।
उदूखल न० ऊर्द्ध्वं खं लाति ला—क पृषो० नि०। तण्डुलादिकखण्डनार्थं काष्ठादिरचिते द्रव्ये, गुग्गुलौ च। [मेति” भावः।
उदूढ त्रि० उद्+वह—क्त। ऊढे, स्थूले, धृते च। उदूढलोकत्रितये”
उद्गत त्रि० उद्+गम—क्त। उदिते, उत्पन्ने, ऊर्द्ध्वगते, उद्वान्ते च।
उद्गमनीय न० उद्+गम—अनीयर्। धौतवस्त्रद्वये “गृहीतपत्युद्गमनीयवस्त्रेति” कुमारः।
उद्गाढ न० उद्+गाह—क्त। अतिशये। अत्यन्ते। अतिशययुक्ते त्रि०।
उद्गातृ पु० उच्चैर्गायति साम उद्+गै- तृच्। सामवेदगायके।
उद्गार पु० उद्+गॄ—घञ्। उद्वमने।
उद्गीति स्त्री० उद्+गै—क्तिन्। उच्चैर्गाने, मात्रावृत्ते आर्य्याभेदे च।
उद्गीथ पु० उद्+गै—थक्। सामवेदावयवभेदे।
उद्गूर्ण त्रि० उद्+गुरी—उद्यमे क्त। उद्यते।
उद्ग्राहित त्रि० उद्+ग्रह—णिच्—क्त। उपन्यस्ते, बद्धे, उद्धृते, प्रत्यायिते, ग्राहिते, च। [प्रशस्ते त्रि०।
उद्घ पु० उद्+हन—अप् नि०। करपुटे, वह्नौ, वायौ, प्रशंसायां च।
उद्घन पु० उद्+हन-अप् नि०। काष्ठतक्षणसाधनेऽधःस्थकाष्ठे यदुपरि निधाय काष्ठं तक्ष्यते।
उद्घर्षण न० उद्+घृष—ल्युट्। दृष्टकया (आमा) गात्रादिघर्षणे।
उद्घाट पु० उद्+घट—णिच्—घञ्। राजस्वग्रहणस्थाने घट्टे।
उद्घाटक पु०न० उद्+घट—णिच्—ण्वुल्। कूपात् जलोद्धारणार्थे यन्त्रभेदे (आरघट्) (धुरना) इतिख्याते। करणे ल्युट् उद्घाटनमप्यत्र न०। भावे ल्युट् उद्घाटनम्। प्रतिबन्धनिरासे, ज्ञातबन्धस्य बन्धापकरणे च न०।
उद्घात पु० उद्+हन—घञ्। आरम्भे, पादस्खलने “प्राणेन प्रेर्य्यमाणेन अपानः पीड्यते यदि। गत्वा चोर्द्ध्वं निवर्त्तेत एतदुद्घातलक्षणम्” इत्युक्तलक्षणे प्राणायामाङ्गकुम्भकभेदे, उत्तुङ्गे, मुद्गरे, ग्रन्थे, ग्रन्थपरिच्छेदे च।

उद्दंश पु० उद्दशति । मत्कुणदंशके (उडुश) कीटभेदे ।

उद्दान न०उद् दो-ल्युट् । बन्धे, चुल्ल्याम्, वाडवानले, मध्यलग्ने च

उद्दामन् त्रि० उद्गतं दाम्नः । बन्धरहिते, अप्रतिबन्धे, स्वतन्त्रे, अ-त्युग्रे च । उत्कृष्टं श्रेष्ठं दाम पाशास्त्रमस्य यस्य । वरुणे पु० ।

उद्दाल पु० उद्+दल-णिच्-अच् । बहुवारकवृक्षे, वनकोद्रवे च । संज्ञायां कन् । वेदप्रसिद्धे ऋषिभेदे ।

उद्दिष्ट त्रि० उद्+दिश-क्त । उपदिष्टे, अभिलषिते च छन्दःशास्त्रे प्रस्तारविशेषस्थानसाधने न० ।

उद्दीपन न० उद् दीप-णिच्-ल्युट् । प्रकाशने, उत्तेजने च । ल्यु । अलङ्कारोक्ते रसाद्युद्दीपके चन्द्रादौ विभावे सा०द० ।

उद्देश पु० उद् दिश-घञ् । अनुसन्धाने, अन्वेषणे, अभिलाषे च ।

उद्देशतस् अव्य० उद्देश+तसिल् एकदेशेनेत्यर्थे संक्षेपार्थे च ।

उद्द्राव पु० उद्+द्रु-घञ् । पलायने ।

उद्योत पु० उद्+द्युत-घञ् । प्रकाशे । [प्रगल्भे, आहते च त्रि०।

उद्धत पु० उद्+हन-क्त । राजमल्ले । वाक्यादिचञ्चले, अविनीते ।

उद्धरण न० उद्+हृ-भावे ल्युट् । मुक्तौ, वमने, ऋणशुद्धौ, उन्मू-लने च । कर्म्मणि ल्युट् । वान्तेऽन्नादौ ।

उद्धर्ष न०पु० उद्+हृष-णिच् घञ् । उत्सवे ।

उद्धर्षण न० उद्+हृष-णिच्-ल्युट् । रोमाञ्चे ।

उद्धव पु० उद्+हु-अप् । यज्ञाग्नौ, कृष्णदयिते यादवविशेषे च ।

उद्धान न०उद्धीयतेऽस्मिन् धाञ्-ल्युट् । चुल्ल्याम्, वमिते, उद्गते च ।

उद्धार पु० उद्ध्रियते उद्+हृ-कर्म्मणि घञ् । ऋणे । भावे घञ् । मुक्तौ, उद्धारे च । [भारमुक्ते च ।

उद्धुर त्रि० उद्गता धूरस्मात् प्रा० ब० अच् समा० । निर्भरे, दृढे

उद्धूत त्रि० उद् धू-क्त । उत्क्षिप्ते, उत्कम्पिते च ।

उद्धूनन न० उद् धू-णिच्-ल्युट् । उत्क्षेपणे ।

उद्धूलन न० उद्धूलितं धूलिं करोति उद्धूलि+णिच्-भावे ल्युट् । धू-लिमर्द्दने । "एलालवङ्गकर्पूरकस्तूरीमरिचत्वचाम् । चूर्णैरुद्-

यर्न देयं भोज्यं चौरेणुस्थवे । ग्रामवत्प्रभवेम्वेयम्" इत्युक्ता-
रूपे व्यङ्गोपकरणे कूर्मभेदे च ।

उद्धृत त्रि० उद्—हृ—धृ—वा क्त । उद्धृत्पिते, भुक्तोज्झिते, कृतोद्धारे, पृ-
थक्कृते, उत्क्षेदिते च । [रीयवहिष्कृतक्षेत्र ।

उद्धृतपाणि त्रि० उत्तरीयात् उद्धृतः बहिष्कृतः पाणिर्येन । उत्त-

उद्ध्मान न० उद्ध्मति वह्निरत्र उद्+ध्मा—ल्युट् । चुल्लाम् ।

उद्ध्र पु० उच्चान्युदकम् उच्च—यत् नि० । नदभेदे ।

उद्बन्धन न० उद्+बन्ध—ल्युट् । गलरज्ज्वादिनात्मबन्धने "उद्बन्धनमृता
ये च इति" स्मृतिः ।

उद्बुद्ध त्रि० उद्+बुध—क्त । विकसिते न्यायादिमते ज्ञातवस्तुनः संब-
न्धिज्ञानादिना कृतोद्दीपने संस्कारे च । यथा हस्तिदर्शनात् अनु-
भूतहस्तिपकसंस्कारस्य उद्बोधरूपे उद्दीपने कृते हस्तिपकः स्मर्य्यते
इति प्रबुद्धे जागरिते, उद्बुद्धां च जगद्धात्रीमिति स्मृतिः ।

उद्बोध पु० उद्+बुध—घञ् । किञ्चिद्बोधे न्यायादिमते स्मृतिजननाय
संस्कारोद्दीपने च ।

उद्भट पु० उद्+भट—अच् । कच्छपे, तण्डुलादौ प्रस्फोटनहेतौ शूर्पे,
श्रेष्ठाशये महाशये, प्रवरे, मन्थाद्यङ्गिभूते लोकादौ च ।

उद्भव पु० उद्+भू—अप् । जन्मनि उत्पत्तौ । अपादाने अप् । पर
मेश्वरे । [ल्युट् । चिन्तने ।

उद्भावन न० उद्+भू—णिच्—ल्युट् । कल्पने, उत्पादने च । उद्+भु०भू०

उद्भिज्ज त्रि० उद्+भिनत्ति क्विप् उद्भित् तथा सन् जायते जन—ड ।
भूमिमुद्भिद्य जाते तरुगुल्मादौ "उद्भिज्जाः स्थावराः सर्वे बीज-
काण्डप्ररोहिणः" इति मनुः ।

उद्भिद् त्रि० भूमिमुद्भिनत्ति उद्+भिद्—क्विप् । वृक्षलतागुल्मवल्लीतृणा-
रूपे पञ्चविधे स्थावरभेदे । यागविशेषे पु० ।

उद्भिद त्रि० उद्+भिद—क । वृक्षादौ पञ्चविधे स्थावरे ।

उद्भूत त्रि० उद्+भू—क्त । उत्पन्ने । न्यायमते प्रत्यक्षयोग्ये च ।

उद्भेद पु० उद्भिद्यतेऽनेन घञ् । रोमाञ्चे । भावे घञ् । स्फुरणे ।

उद्भ्रम पु० उद्भ्राम्यत्यनेन उद्+भ्रम–घञ् न वृद्धिः । उद्वेगे ।
उद्यत त्रि० उद्+यम–क्त । उद्युक्ते, अङ्गीकृते, प्रवृत्ते, पञ्चाध्याये च ।
उद्यम पु० उद्+यम–घञ् अवृद्धिः । उद्योगे ।
उद्यान न० उद्+या–आधारे ल्युट् । आक्रीडे वने । भावे ल्युट् ।
निःसारणे । कर्मणि ल्युट् । प्रयोजने ।
उद्योग पु० उद्+युज–घञ् । यत्ने, चेष्टायाम्, उद्यमे च ।
उद्र पु० उनत्ति क्लिद्यति उन्द्–रक् । जलविडाले । (उद्बिराल) ।
उद्रथ पु० उद्गतो रथो यस्मात् । रथकीले । उद्गतरथतुल्यः पक्षो यस्य
(ताम्रचूड़विहगे) ।
उद्रिक्त त्रि० उद्+रिच क्त । अतिशयिते, अधिके, स्फुटे च ।
उद्रेक पु० उद्+रिच–घञ् । वृद्धौ, अतिशये, उपक्रमे च ।
उद्वर्त्त पु० उद्+वृत–घञ् । अतिशयिते, अधिके च ।
उद्वर्त्तन न० उद्वर्त्त्यतेऽनेन उद्+वृत्–णिच् ल्युट् । शरीरनिर्मलीकर-
णद्रव्यादौ । भावे ल्युट् । विलेपने, घर्षणे च । उद्+वृत–
ल्युट् । उत्पतने ।
उद्वह पु० उद्वहति ऊर्द्ध्वं नयति पितॄन् वह अच् । पुत्रे “प्रयास्यामि
रघूद्वहम्” इति तन्त्रम् । ऊर्द्ध्वं वहति अच् । प्रवहवायोरूर्द्ध्व-
स्थिते वायुभेदे ।
उद्वान्त पु० उद्गतं वान्तमन्तर्जलमस्मात् प्रा० ब० । निर्मदे गजे ।
उद्+वम–क्त । उद्गीर्णे उद्गते च त्रि० ।
उद्वासन न० उद्+चु० वस–ल्युट् । मारणे उद्+वस+णिच्–ल्युट् ।
विसर्जने । [परित्यागे ।
उद्वाह पु० उद्+वह–घञ् । विवाहे भार्य्यात्वसंपादकव्यापाररूपे
उद्वाहु त्रि० उद्गतोबाहुर्यस्य । ऊर्द्ध्वमुत्तोलितबाहौ “उद्वाहुरिव वा-
मन” इति रघुः ।
उद्विग्न त्रि० उद्+विज–क्त । उद्वेगयुक्ते, दुःखपरिहाराक्षम तया
व्याकुलचित्ते, क्षुभिते च ।

उद्‌वृत्त त्रि॰ उद्गतो वृत्तात् गति॰। दुर्वृत्ते। उद्+वृत-क्त। उत्क्षिप्ते, धनोज्झिते च।

उद्वेग पु॰ उद्+विज-घञ्। व्याकुलचित्ततायाम् विरहजन्ये दुःखोद्भवे, भये च। गुवाकफले न॰। उद्गतोवेगोऽस्मात् निश्चले, स्तिमिते। शीघ्रगामिनि च।

उद्वेल त्रि॰ उद्गतो वेलाम्। अतिक्रान्तमर्य्यादे।

उद्वेष्टन न॰ उद्+वेष्ट-ल्युट्। हस्तपादयोर्बन्धने, उपश्लेषे च उद्गतं वेष्टनात् त्रि॰। उन्मुक्तबन्धने त्रि॰।

उध्रस उञ्छे क्र्या॰ पर॰ सक॰ सेट्। उध्रस्नाति औध्रासीत्।

उध्रस उत्क्षेपे उञ्छे च(कणश आदाने) चु॰सक॰सेट्। उध्रासयति ते।

उन्द क्लेदे रुधा॰ पर॰ सक॰ सेट्। उनत्ति। औन्दीत्।

उन्दर पु॰ उन्द-अर। मूषिके उर-उन्दुरः उन्दुरुश्चात्रार्थे।

उन्दुरकर्णी स्त्री॰ उन्दुरस्य कर्ण इव पर्णमस्याः। आखुकर्ण्याम्।

उन्दूर पु॰ उन्द-ऊर। मूषिके।

उन्न त्रि॰ उन्द-क्त क्लिन्ने आर्द्रे (भिजे) दयापरे च।

उन्नत त्रि॰ उद्+नम-क्त। उच्चे, महति च।

उन्नतानत त्रि॰ उन्नतं च तदानतञ्च। उच्चनीच स्थानादौ।

उन्नति स्त्री॰ उद् नम-क्तिन्। वृद्धौ, उदये, गरुडभार्य्यायाञ्च।

उन्नद्ध त्रि॰ उद्+नह-क्त। उद्गते, उत्कटे च।

उन्नमित त्रि॰ उद्+नम-णिच्-क्त। उत्तोलिते, ऊर्द्धीकृते च।

उन्न(न्ना)य पु॰ उद्+नी-अच् घञ् वा। कूपादितो जलादेरुत्तोलने।

उन्नयन न॰ उद्+नी-ल्युट्। वितर्के, ऊर्द्ध्वप्रापणे च।

उन्नस त्रि॰ उन्नता नासा यस्य नसादेशः। उन्नतनासिके।

उन्निद्र त्रि॰ उद्गता निद्रा मुद्रा यस्य। विकसिते।

उन्मज्जक पु॰ उद्+मस्ज ण्वुल्। "कण्ठदघ्ने जले स्थित्वा तपः कुर्वन् प्रवर्त्तते। उन्मज्जकः स विज्ञेयस्तापसोलोकपूजितः" इत्युक्तलक्षणे तापसे। जलादेरुपरि उत्प्लावके त्रि॰।

उन्मत्त पु॰ उद्+मद्-करणे क्त। धूस्तूरे मुचकुन्दवृक्षे च। कर्त्तरि

क्त। उन्मादवति, ग्रहावेशवति च त्रि०। [द्के द्रव्ये।

उन्मद त्रि० उद्गतो मदोहर्षोऽस्य। उन्मादयुक्ते। करणे अच् मा-

उन्मनस् त्रि० उद्भ्रान्तं मनोऽस्य। उत्कण्ठायुक्ते, अन्यमनस्के च।

उन्मथ पु० उद्+मन्थ-घञ्। वधे।

उन्माथ पु० उन्मथ्यतेऽनेन उद्+मथ-करणे घञ्। आमिषदानेन मृगादिबन्धनार्थं निवेशिते कूटयन्त्रे (फांद) इति ख्याते। भावे घञ्। विलोड्योत्थापने, हिंसने च।

उन्माद पु० उद्+मद-घञ्। चित्तविभ्रमे, भूताद्यावेशात् चित्तस्या-नवस्थितौ, विरहिणां स्मरकृतावस्थाभेदे, कायिकरोगकृते मति-भ्रंशे च। [वाणभेदे।

उन्मादन पु० उद्+मद-णिच्-ल्यु। उन्मत्तकारके कामदेवस्य

उन्मान न० उद्+मा-करणे ल्युट्। उर्द्ध्वमाने स्वर्णादेरुन्मानसा-धने, तोलकादौ, परिमाणमात्रे च। [च।

उन्मिषित त्रि० उद्+मिष-क्त। प्रफुल्ले, विकसिते, किञ्चित् प्रकाशिते

उन्मीलन न० उद्+मील-ल्युट्। उन्मेषे, विकाशने च।

उन्मुख त्रि० उद्+ऊर्द्ध्वं मुखमस्य। ऊर्द्ध्वास्ये, उद्युक्ते च।

उन्मुद्र त्रि० उद्गता मुद्रा यस्मात्। त्यक्तमुद्रे, विकसितेच।

उन्मूलन न० उन्मूल+णिच्-ल्युट्। उत्पाटने उद्गतमूलकरणे।

उन्मेष पु० उद्+मिष-घञ्। चक्षुरादेरुन्मीलने, किञ्चित्प्रकाशे च।

उप अव्य० वप-ड। अधिकार्थे, हीने, आसन्ने, सामीप्ये, सादृश्ये, प्र-तियत्ने-गुणाधाने, व्याप्तौ, पूजायाम् शक्तौ, आरम्भे, दाने, दो-षाख्याने, आश्चर्य्यकरणे अत्यये, निदर्शने च।

उपकण्ठ त्रि० उपगतः कण्ठं अत्या०स०। निकटे, कण्ठासन्ने च। ग्रामान्ते, अश्वानामास्कन्दितगतौ च न०।

उपकरण न० उपक्रियतेऽनेन उप+कृ-ल्युट्। प्रधानसाधकगुणेऽङ्गे यथा भोजनादौ व्यञ्जनादि, शयने खट्वादि, स्नानेऽनुलेपनादि, पू-जायां पुष्पादि। भूपादीनां छत्रचामरादिपरिच्छदे च।

उपकार पु० उप+कृ-घञ्। प्राधानस्यानुगुण्यसम्पादने, उपकृतौ।

**उपकारक** त्रि० उप+कृ—ण्वुल् । उपकारकर्त्तरि । स्त्रीत्वे टापि अतइत्त्वे उपकारिका । रूपालये, पटनिर्म्मितराजसदने च ।

**उपकार्य्य** त्रि० उप+कृ—ण्यत् । उपकारयोग्ये । राजालये, पटनिर्म्मितराजसदने च स्त्री० टाप् ।

**उपकुञ्चि** स्त्री० उप+कुञ्च—इ । कृष्णजीरके । ण्वुलि टापि अतइत्त्वे । उपकुञ्चिकाप्यत्र तस्यां सूक्ष्मैलायाञ्च ।

**उपकुर्वाण** पु० उप+कृ—शानच् । सावधिकब्रह्मचर्य्यकारिणि वेदाध्ययनार्थं कश्चित्कालं ब्रह्मचर्य्यव्रतधारिणि ।

**उपकुल्या** स्त्री० उप+कुल—क्यप् । पिप्पल्याम् उपगतः कुल्यां कृत्रिमं सरः । कुल्यासन्ने त्रि० ।

**उपकूप** पु० उपगतः कूपं अत्या० स० । कूपसमीपस्थे खातरूपे जलाशये ।

**उपक्रम** पु० उप+क्रम—घञ् । उपायज्ञानपूर्वकारम्भे, प्रथमारम्भे चिकित्सायाञ्च ।

**उपक्रोश** पु० उप+क्रुश—आह्वाने घञ् । निन्दायाम् । आसन्नक्रोशे त्रि० । अव्ययी० । क्रोशसमीपे अव्य० ।

**उपक्रोष्टृ** पु० उप+क्रुश—तृच् । गर्द्दभे । निन्दके त्रि० ।

**उपक्लृप्त** त्रि० उप+क्लृप—क्त । विन्यस्ते, उपभोगार्थं प्रस्तुते च ।

**उपगत** त्रि० उप+गम—क्त । स्वीकृते, उपस्थिते, ज्ञाते च ।

**उपगम** पु० उप+गम—घञ् अवृद्धिः । समीपगमने, अङ्गीकारे, ज्ञाने च

**उपगीति** स्त्री० उप+गै—क्तिन् । आर्य्याविशेषे छन्दोभेदे ।

**उपगूह्य** त्रि० उप+गुह—ण्यत् । आलिङ्ग्ये, ग्राह्ये च । भावे यत् । आलिङ्गने ।

**उपगूहन** न० उप+गुह—ल्युट् । आलिङ्गने, ग्रहणे च ।

**उपग्रह** पु० उप+ग्रह—अप् । कारावन्धने, वन्दीकरणे, उपयोगे, अनुकूलने च । कर्म्मणि घञ् । कारावद्धे वन्द्याम् । ज्योतिषोक्ते ग्रहतुल्ये गगनस्थे ज्योतिःपदार्थे धूमकेत्वादौ च ।

**उपग्राह्य** न० उप+ग्रह—ण्यत् । उपढौकने (भेट) ।

**उपघात** पु० उप+हन—घञ् । अपकारे, नाशने, रोगे च

उपघ्न पु० उप+हन–क नि० । आसन्ने आश्रये ।

उपचक्र पु० उपमितं चक्रेण तुल्यनामत्वात् । चक्रवाकपक्षिणि ।

उपचय पु० उप+चि–अच् । वृद्धौ, उन्नतौ, ज्योतिषोक्तेषु लग्नतः तृतीयषष्ठदशमैकादशस्थानेषु च ।

उपचरित त्रि० उप+चर–क्त । उपासिते लक्षणया बोधिते च ।

उपचर्य्या स्त्री० उप+चर–क्यप् । चिकित्सायां, सेवायाञ्च ।

उपचाय्य पु० उपचीयते संस्क्रियतेऽसौ नि० । यज्ञे संस्कृताग्नौ ।

उपचार पु० उप+चर–घञ् । चिकित्सायां, सेवायां, व्यवहारे, उत्कोचे, लक्षणया शक्यार्थत्यागेनान्यार्थपरत्वकल्पने, अयथार्थवाक्येन सन्तोषकरणे च उपचारपदं न चेदिदमिति कुमारः ।

उपचित त्रि० उप+चि–क्त । दग्धे, समृद्धे, सञ्चिते, समाहिते, अवयववृद्ध्या बहुलीभूते च । [ समीपस्थायां स्त्रियां च ।

उपचित्रा स्त्री० उपगता चित्रं वर्णम् । उन्दुरपर्ण्याम् चित्रातारा-

उपच्छन्द पु० उप+छन्द–घञ् । एकान्ते प्रार्थनेऽनुरोधे च । "तस्मिन्नुपच्छन्दयति प्रयोज्य"मिति रघुः ।

उपजाति स्त्री० वर्णवृत्ते छन्दोभेदे ।

उपजाप पु० उप+जप–घञ् । भेदे, विच्छेदे, "उपजापः कृतस्तेन" इति माघः । उपांशुजपे च ।

उपजिह्वा स्त्री० उपगता अनुमुखी जिह्वा यस्याः । काकीभेदे । प्रा० स० । उपरिस्थायां जिह्वायाञ्च (आलजिभ) ।

उपजीविका स्त्री० उपजीवयति उप+जीव–करणे कर्तृत्वोपचारात् ण्वुल् अत इत्वम् । जीवनोपायभूतायां वृत्तौ ।

उपजीविन् त्रि० उप+जीव–णिनि । आश्रिते ।

उपजीव्य त्रि० उप+जीव–ण्यत् । आश्रये ।

उपज्ञा स्त्री० उप+ज्ञा+कर्मणि अङ् । विनोपदेशेन स्वयमुद्भाव्य प्रथमं ज्ञायमाने । भावे अङ् । आद्ये ज्ञाने ।

उपढौकन न० उप+ढौक–कर्मणि ल्युट् । (भेट) उपहारे उपायने ।

उपत्यका स्त्री० उप+त्यकन् । पर्वतस्यासन्नायां भूमौ ।

**उपदंश** पु० उप+दन्श–घञ् । मद्यपानरोचके (चाटनी) भक्ष्यद्रव्ये, भक्ष्यद्रव्योपकरणमात्रे, उपस्थरोगभेदे च ।

**उपदर्शक** पु० उप+दृश–णिच्–ण्वुल् । द्वारपाले । दर्शयितरि त्रि०

**उपदा** स्त्री० उप+दा–अङ् । उत्कोचे, उपढौकने च ।

**उपदेश** पु०उप+दिश–घञ् । मन्त्रादिकथने, अनुशासने, हितकथने, प्रवर्त्तकवाक्ये च ।

**उपद्रव** पु० उप+द्रु–अप् । उत्पाते शुभाशुभसूचके भूकम्पादौ, रोगजन्ये ऽन्यस्मिन् पिपासादाहादौ विकारे च ।

**उपद्रुत** त्रि० उप+द्रु–क्त । व्याकुले, प्राप्तोपद्रवे च ।

**उपधा** स्त्री०उप–धा–अङ् । धर्म्मार्थकाममोक्षैः प्रत्येकं परिशोधने । उपेत्य धीयते यस्मादुपधा तेन कीर्त्तिता" इत्युक्ते धर्म्मार्थाद्युपन्यासेन मन्त्रिणां परीक्षणे व्याकरणोक्ते,अन्त्यवर्णात् पूर्व्ववर्णे च ।

**उपधातु** पु० उपमितः धातुभिः । स्वर्णादिप्रधानधातुसदृशेषु "सप्तोपधातवः स्वर्णमाक्षिकं तारमाक्षिकम् । तुत्थं कांस्यञ्च रीतिश्च सिन्दूरञ्च शिलाजतु" इत्युक्तेषु सप्तसु द्रव्येषु, शरीरस्थेषु रसादिजन्येषु स्तनदुग्धादिषु च ।

**उपधान** न० उपधीयते शिरोऽत्र । (बालिश) शिरोधाने, प्रणये, व्रतभेदे, विषे च । [ कपटे, रथचक्रे च ।

**उपधि** पु० उप+धा–कि । अन्यथास्थितस्य वस्तुनोऽन्यथा प्रकाशनरूपे

**उपधूपित** त्रि० उप+धूप–क्त । आसन्नमरणे, सन्तापयुते च ।

**उपधृति** स्त्री० उप+धृ–क्तिन् । किरणे ।

**उप(पा)ध्मानीय** पु० उप पश्च ध्मायतेऽनेन उपध्मानओष्ठस्तत्रोच्चार्य्यमाणः । पफयोः परयोः उच्चार्य्यमाणे विसर्गसदृशे वर्णभेदे तस्य व्यञ्जिका अर्द्धविसर्गाकारा रेखा । उपाध्मानीयश्च ।

**उपनत** त्रि० उप+नम–क्त । उपस्थिते, प्राप्ते च ।

**उपनय** पु० उप+नी–अच् । उपनयने "गृह्योक्तकर्म्मणा येन समीपं नीयते गुरोः । बालो वेदाय तद्योगाद् बालस्योपनयं विदुः" इति स्मृत्युक्ते संस्कारविशेषे । न्यायमते यो यो धूमवान् स वह्नि-

ङ्किकान् अयमपि तथेत्यादिवाक्यरूपे न्यायावयवभेदे, ज्ञानलक्षणा-जन्ये ज्ञानभेदे च ।

उपनयन न० उप+नी—ल्युट् । स्वसूक्ते संस्कारभेदे उपनयार्थे ।

उपनाह पु० उप+नह—घञ् । वीणायां तन्त्रबन्धनस्थाने, व्रणाद्युपश-मार्थे लेपनद्रव्ये च ।

उपनिधि पु० उप+नि+धा—कि । न्यासे विश्वासेन स्थापिते द्रव्ये ।

उपनिषद् स्त्री० उपनिषीदति प्राप्नोति ब्रह्मात्मभावोऽनया । उप+नि+सद्—क्विप् । ब्रह्मविद्यायां, तत्प्रतिपादके वेदशिरोभागे वेदान्ते च । [राजमार्गे ।

उपनिष्कर न० उपनिष्किरन्ति सैन्यान्यत्र (उप—निस्+कॄ+अप् । वीथौ ।

उपनिष्क्रमण न० उप+निस्—क्रम—ल्युट् । राजपथे ।

उपनेत्र न० उपगतं नेत्रम् । नेत्रसमीपे धृते काचादिनिर्मिते नेत्रोप-कारके द्रव्ये (चसमा) ।

उपन्यास पु० उप+नि+अस—घञ् । वाक्योपक्रमे ।

उपपति पु० उपमितः पत्या । जारे ।

उपपत्ति स्त्री० उप+पद—क्तिन् । युक्तौ, सङ्गतौ च ।

उपपद न० उपोच्चारितं पदम् प्रा० स० । समीपोच्चारिते नामोत्तरं उच्चारिते शर्मवर्मादिरूपे शब्दे, व्याकरणे प्रत्ययादिविधायक-सूत्रे सप्तम्यन्तपदेन निर्दिश्यमाने पदे च । यथा कर्मण्यण् इ-त्यादौ कर्मणीति सप्तम्यन्तं पदम् अणप्रत्ययविधाने उपपदम् ।

उपपन्न त्रि० उप+पद—क्त । युक्तियुक्ते, "उपपन्नं ननु शिवम्" इति रघुः

उपपातक न० उपमितं पातकेन । गोवधादिरूपे पापे ।

उपपादन न० उप+पद—णिच्—ल्युट् । युक्त्या समर्थने सम्यक्प्रति-पादने च । [पादिते च ।

उपपादित त्रि० उप+पद—णिच्—क्त । युक्त्या समर्थिते, सम्यक् प्रति-

उपपुर न० उप समीपे पुरम् । पुरसमीपे शाखानगरे ।

उपपुराण न० उपमितं पुराणेन । सर्गप्रतिसर्गाद्युक्तिरूपपुराणलक्षण-युक्तेषु सनत्कुमाराद्युक्तेषु अष्टादशसु ग्रन्थेषु ।

**उपप्लव** पु० उप+प्लु—अप् । गगनादुल्कापातादिरूपे उपद्रवे, चन्द्राऽर्कग्रहणे च ।

**उपप्लुत** त्रि० उप+प्लु—क्त । पीड़िते, राहु-चन्द्रेऽर्के च उपद्रुते च । "उपप्लुतं पातुमदः" इति माघः । [कारके ।

**उपभूषण** न० उपभूष्यतेऽनेन ल्युट् । घण्टाचामरादौ भूषणोप-

**उपभोग** पु० उप+भुज—घञ् । भोजनादिजन्ये सुखानुभवे भोगे ।

**उपमर्द** पु० उप+मृद—घञ् । आलोड़ने, छेदने, पूर्वधर्म्मविनाशनेन धर्म्मान्तरोत्पादने च ।

**उपमा** स्त्री० उप+मा—अङ् । सादृश्ये, अर्थालङ्कारभेदे च । सा०१०८०

**उपमान** न० उपमीयतेऽनेन उप+मा—ल्युट् । सादृश्यज्ञानसाधने सादृश्यप्रतियोगिनि च येन सादृश्यं भवति तस्मिन्, यथा चन्द्र इव मुखमित्यादौ चन्द्र उपमानम् । भावे ल्युट् । सादृश्यज्ञाने ।

**उपमिति** स्त्री० उप+मि—क्तिन् । सादृश्यज्ञाने उपमायाम् ।

**उपमेय** त्रि० उपमीयतेऽसौ उप+मि—यत् । सादृश्याश्रये यथा चन्द्र इव मुखमित्यादौ मुखम् ।

**उपमेयोपमा** स्त्री० अर्थालङ्कारभेदे साहि०१०प० ।

**उपयन्तृ** पु० उप+यम—तृच् । स्त्रियो विवाहकर्त्तरि पत्यौ ।

**उपयम** पु० उप+यम्—घञ् अवृद्धिः । विवाहे । वा वृद्धिः । उपयामश्चात्र । [मन्त्रे ।

**उपयमन** न० उप+यम—ल्युट् । विवाहे । करणे ल्युट् । वैवाहिके

**उपयाचक** त्रि० उपगम्य याचकः याच—ण्वुल् । समीपे आगम्य याच्ञाकर्त्तरि । [देवाय देये पश्वादौ च ।

**उपयाचितक** न० उप+याच—क्त स्वार्थे कन् । प्रार्थिते, स्वेष्टसिद्धये

**उपयुक्त** त्रि० उप+युज—क्त । न्याय्ये, रचिते, भुक्ते च ।

**उपयोग** पु० उप+युज—घञ् । आचरणे भोजने, इष्टसिद्धिसाधने व्यापारे च । [साधनतायाम्, प्रयोजने च ।

**उपयोगिता** स्त्री० उपयोगिनो भावः तल् । आनुकूल्ये, इष्ट-

**उपयोगिन्** त्रि० उप+युज—घिनुन् । इष्टसाधने अनुकूले उपयुक्ते च ।

**उपरक्त** पु० उप+रन्ज-क्त । राहुग्रस्ते चन्द्रे सूर्य्ये च । व्यसनेष्वा-
सक्ते, रञ्जनद्रव्येण रक्ते च ।

**उपरक्षण** न० उप+रक्ष—ल्युट् । रक्षार्थं सैन्यादिस्थापने ।

**उपरत** त्रि० उप+रम-क्त । विरते, निवृत्ते, मृते, सर्वकामनाशून्ये च ।

**उपरतस्पृह** त्रि० उपरता निवृत्ता स्पृहा यस्य । सत्यपि जीवने स्वा-
मित्वे विषयभोगादौ च अत्यन्तनिवृत्ताभिलाषे । "पितर्य्युपरत-
स्पृहे" इति स्मृतिः ।

**उपरति** स्त्री० उप+रम—क्तिन् । विरतौ, लब्धप्राप्तावौदासीन्ये,
विषयेभ्य इन्द्रियाणां निवारणे, विहितकर्मणाम् विधानत्यागरूपे
संन्यासे "पुनर्यः कर्मणा नेति धीर्य्या सोपरतिर्भवेदित्युक्तरूपायां
बुद्धौ च ।

**उपरत्न** न० उपमितं रत्नेन गति० । मणिसदृशेषु "उपरत्नानि काचश्च
कर्पूरोऽश्मा तथैव च । मुक्ताशुक्तिस्तथा शङ्ख इत्युक्तानादिषु ।

**उपरम** पु० उप+रम—घञ् अवृद्धिः विषयवैराग्ये, निवृत्तौ । "फेनो-
परमे दद्याद्" इति वैद्यकम् ।

**उपराग** पु० उप+रन्ज—घञ् । रविचन्द्रयोर्ग्रहणे । ग्रहणञ्च
राह्वधिष्ठितभूमिच्छायया चन्द्रस्य, चन्द्रमण्डलेन च रवेर्मण्डलाच्छा-
दनमिति सिद्धान्ते स्थितम् । [ ऊर्द्ध्वशब्दस्यार्थे ।

**उपरि** अव्य० ऊर्द्ध्व+रिल् उपादेशश्च । प्रथमापञ्चमीसप्तम्यन्तार्थवृत्तेः

**उपरिष्टात्** अव्य० ऊर्द्ध्व—रिष्टाति उपादेशश्च । उपरिशब्दस्यार्थे ।

**उपरोध** पु० उप+रुध—घञ् । आनुकूल्याय कथनरूपेऽनुरोधे, स-
मीपे रोधने च ।

**उपरोधक** न० उप+रुध—ण्वुल् । वासगृहे । अनुरोधकर्त्तरि त्रि० ।

**उपल** पु० उपनीयते उपस्तीर्य्यते गिरिरनेन वी—ड नस्य लत्वम् ।
प्रस्तरे । अर्श आदित्वादच् । पाषाणचितायां नदि स्त्री० ।

**उपलक्षण** समीपस्थस्य स्वसम्बन्धिनश्च लक्षणं ज्ञानं यस्मात् । स्वस्य
स्वान्यस्य च अजहत्स्वार्थया लक्षणया बोधके शब्दे यथा काकेभ्यो
दधि रक्ष्यतामित्यत्र काकपदं स्वस्य श्वान्यादेः स्वादेश्च बोधकम् ।

उपलब्धि स्त्री० उप+लभ—क्तिन् । ज्ञाने, प्राप्तौ च । "नाभाव उपलब्धेः" इति वेदान्तसूत्रम् ।

उपलम्भ पु० उप+लभ—घञ् नुम् च । लाभे, ज्ञाने च ।

उपलिङ्ग न० उपमितं लिङ्गेन । लोकसिद्धसाधनभावेन लिङ्गेनानुमापकेन सदृशे अलौकिकसाधनभावके अरिष्टसूचके भूकम्पादौ उपद्रवे ।

उपवट पु० उपमितो वटेन । वटवृक्षसदृशे पियासालवृक्षे ।

उपवन न० उपमितं वनेन । वनतुल्ये कृत्रिमे आरोपितवृक्षसमूहे उद्याने । [मध्यत न० ।

उपवर्ह पु० उप+वृह—घञ् । शिरोधाने (वालिश) लुग्ट् । उपवर्हण।

उपवसथ पु० उप+वस—अथ । ग्रामे ।

उपवास पु० उप+वस—घञ् । "तपनोदयमारभ्य यामाष्टकमभोजनम् । उपवास इति ख्यात" इति स्मृत्युक्ते अनाहारे ।

उपवाह्य पु० उप+वह—ण्यत् । राजवाहके ।

उपविष पु० उपमितं विषेण । "अर्कक्षीरं स्नुहीक्षीरं तथैव कलिहारिका । धस्तूरः करवीरश्च पञ्च चोपविषाः स्मृता इत्युक्तेष्वर्कक्षीरादिषु । [स्थापिते कार्पासे यज्ञसूत्रे ।

उपवीत न० उप+व्यज—क्त वीभावः । वहिर्भूतदक्षिणहस्ततया वामांश-

उपवीतिन् त्रि० उपवीतं नित्यमस्य । यज्ञोपवीतवति ।

उपवृंहित त्रि० उप+वृन्ह—क्त । वर्द्धिते ।

उपवेद पु० उपमितः वेदेन । वेदसदृशे आयुर्वेदादौ ।

उपव्याघ्र पु० उपमितो व्याघ्रेण । व्याघ्रतुल्ये क्षुद्रगात्रके (चितावाघ) चित्रकाख्ये पशुभेदे । [नाशे, रोगप्रतीकारे, शान्तौ च ।

उपशम पु० उप—शम—घञ् अवृद्धिः । इन्द्रियाणां निग्रहे, तृष्णा-

उपशय पु० उप+शी—अच् । समीपशयने, "औषधान्नविहाराणामुपयोगं सुखावहम् । विद्यादुपशयं व्याधेरिति वैद्यकोक्ते उपयोगभेदे च ।

उपशल्य न० उपगतं शल्यम् अस्मिन्स्थाने (भागाड़) ग्रामान्ते ।

उपशाय पु० उप+शी–घञ् । यामिकभटानां पर्य्यायेण शयने ।

उपश्रुति स्त्री० उप+श्रु–क्तिन् । अङ्गीकारे दैवशुभाशुभप्रश्ने च ।

उपश्लेष पु० उप ईषत् एकदेशेन श्लेषः सम्बन्धः । आधाराधेययोरेकदेशसम्बन्धे । यथा कटघटयोः ।

उपष्टम्भक न० उप+स्तम्भ–ण्वुल् । स्थूणायाम् । स्तम्भकारिणि त्रि० ।

उपसंग्रह पु० उप+सम्+ग्रह–अप् । पादस्पर्शपूर्वकनमस्कारे ।

उपसंयम पु० उप+सम्+यम–घञ् अवृद्धिः । उपसंहारे ।

उपसंव्यान न० उपसंवीयतेऽनेन व्येञ्–ल्युट् । परिधानवस्त्रे ।

उपसंहार पु० उप+सम्+हृ–घञ् । समाप्तौ, संग्रहे च ।

उपसत्ति स्त्री० उप+सद–क्तिन् । सेवायां, सङ्गमाले, प्रतिपादने च ।

उपसन्न त्रि० उप+सद–क्त । उपस्थिते, निकटागते च ।

उपसम्पन्न त्रि० उप+सम्+पद–क्त । यज्ञार्थहते प्रोक्षिते पशौ, पाकेन संस्कृते मांसादौ, पर्य्याप्ते, मृते च ।

उपसर पु० उप+सृ–अप् । स्त्रीगव्यादिषु पुंगवादीनां गर्भाधानायोपगमे ।

उपसर्ग पु० उप+सृज–घञ् । रोगविकारे उपद्रवे, शुभाशुभसूचके महाभूतविकाररूपे उत्पाते, व्याकरणोक्तेषु "निपाताश्चादयो ज्ञेयाः प्रादयस्तूपसर्गकाः । द्योतकत्वात् क्रियायोगे लोकादवगता इमे" इत्युक्तलक्षणेषु क्रियायोगे प्रादिषु च ।

उपसर्ज्जन न० उप+सृज–ल्युट् । अमुख्ये, गौणे, विशेषणे व्याकरणोक्ते समासशास्त्रे प्रथमान्तनिर्द्दिष्टे च ।

उपसर्य्या स्त्री० उपस्रियतेऽसौ सृ–यत् । गर्भग्रहणयोग्यायाम् ऋतुमत्यां गवि ।                [चन्द्रार्कसमीपे मण्डलाकारे परिधौ ।

उपसूर्य्यक न० उपगतं सूर्य्यं सूर्य्यमिव चन्द्रं वा संज्ञायां कन् ।

उपसूर्य्यकमण्डल न० उपसूर्य्यकं मण्डलं वेष्टनम् कर्म० । चन्द्रार्कवेष्टने परिधौ ।                [युक्ते, विसृष्टे च त्रि० ।

उपसृष्ट न० उप+सृज–क्त । मैथुने । व्याकरणोक्ते प्राद्युपसर्ग-

उपसेक पु० उप+सिच घञ् । सेचनेन मृदूकरणे ।

उपस्कर पु० उप+कृ–अप् सुट् च । व्यञ्जनादिसंस्कारके पिष्टधन्या-

कटिप्रादौ (घाटना) रन्धोपकरणे हण्डुदूखलादौ च ।

उपस्थातृ त्रि० उप+स्था—तृच् । सेवके, उपगते, ऋत्विग्भेदे च ।

उपस्थान न० उप+स्था+ल्युट् । उपेत्य स्थितौ, नमस्कारे च ।

उपस्थित त्रि० उप+स्था—क्त । समीपस्थिते, प्राप्ते, आगते च ।

उपस्पर्श पु० उप+स्पृश—घञ् । स्पर्शे, स्नाने च । उपस्पृश्यन्ते इन्द्रियाण्यत्र । विधिना जलपानपूर्वके मुखादिस्पर्शरूपे वैधाचमने । तथेत्युपस्पृश्येति रघुः ।

उपस्पृष्ट त्रि० उप+स्पृश—क्त । आचान्ते कृताचमने, समीपे आस्नानादौ स्पृष्टे च । [समीपे अव्य० ।

उपहार पु० उप+हृ—घञ् । (भेट) उपढौकने । अभ्ययी० । हार॰

उपह्वर पु० उप+ह्वृ—अप् । युद्धे । निर्जने निकटे च न० ।

उपांशु अव्य० उप+अनुश-उ । निर्जने अप्रकाशे च । "जिह्वौष्ठौ चालयेत् किञ्चित् देवतागतमानसः । निजश्रवणयोग्यः स्यादुपांशुः स जपः स्मृत इत्युक्तलक्षणे मन्त्रादेर्जपे पु० । उपांशुः स्याच्छतगुण इति मनुः ।

उपाकरण न० उप+आ+कृ—ल्युट् । उपनयनपूर्वकं वेदस्य ग्रहणे, श्रावण्यां पूर्णिमायां कर्त्तव्ये वैधकर्मविशेषे, संस्कारपूर्वकं यज्ञे पशूनां हनने, आरम्भे च ।

उपाकर्म्म न० उप+कृ—मनिन् । उपाकरणस्यार्थे । [आरब्धे च ।

उपाकृत त्रि० उप+आ+कृ—क्त । यज्ञे हननार्थं कृतसंस्कारे पशौ,

उपाख्यान न० उप+आ+ख्या—ल्युट् । पूर्ववृत्तकथने, "रामोपाख्यानमत्रैव" इति महाभारतम् । कथनमात्रे च ।

उपागम पु० उप+आ+गम—घञ् अवृद्धिः । स्वीकारे, समीपागमने च ।

उपाङ्ग न० उपमितमङ्गेन गति० । अङ्गस्याङ्गे प्रधानोपयोगिनि "साङ्गोपाङ्गैरिहोदिता" इत्यमरः ।

उपाजे अव्य० उप+अज—के वीभावाभावः । दुर्बलस्य बलाधाने ।

उपात्त त्रि० उप+आ+दा—क्त । गृहीते, प्राप्ते च "श्रयं कोचिदुपात्तस्य" इति श्रुतिः । अन्तर्गतमेदे गजे पु० ।

**उपात्यय** पु० उप+अति+इण्—अच्। लोकशास्त्राचारातिक्रमे, व्यतिक्रमे, क्रमोल्लङ्घने, नाशे च।

**उपादान** न० उप+आ+दा—ल्युट्। ग्रहणे, स्वस्वविषयेभ्य इन्द्रियाणां निवारणरूपे प्रत्याहारे, कार्य्यजननार्थमुपादीयमाने कार्य्यान्विते कारणे, यथा मृदादि घटादेः, स्वर्णादि अलङ्कारादेः, जननार्थं गृह्यते। तच्च सर्वदा कार्य्येष्वनुगतम्।

**उपादेय** त्रि० उप+आ+दा—यत्। उत्कृष्टे, ग्राह्ये, प्रधाने, विधेये च उपादेये गुणो भवेदिति भट्टकारिका।

**उपाधि** पु० उप+आ+धाञ्—कि। धर्मचिन्तायाम्, विशेषणे, उपाधिर्भिद्यते न तु तद्वानिति सांख्यसूत्रम्। स्वधर्मस्यान्यगततयावभासके, यथा दर्पणादि स्वगतं नीलिमादिकं स्वप्रतिबिम्बितमुखगततया, जवापुष्पं च स्वगतं रक्तत्वं स्फटिकगततयाऽवभासयति अतोऽत्र दर्पणादि नीलिमाद्यवभासने उपाधिः। न्यायमते हेतुव्यभिचारोद्भावके साध्यव्यापके साधनाव्यापके पदार्थे च।

**उपाध्याय** पु० उपेत्याधीयतेऽस्मात् उप+अधि+इङ्—घञ्। "एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः। योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते" इति मनूक्तलक्षणे वेदैकदेशतदङ्गाध्यापके। स्त्रियां ङीपि उपाध्यायीतिरूपद्वयम्। उपाध्यायस्य पत्नीत्यर्थे ङीष् आनुक् वा उपाध्यायानी उपाध्यायी च।

**उपानह्** स्त्री० उप+आ—नह्—क्विप्। उपसर्गदीर्घः। चर्म्मपादुकायाम्।

**उपान्त** पु० उपमितमन्तेन प्रा० स०। निकटे, प्रान्ते च।

**उपान्त्य** त्रि० उपान्ते भवः यत्। अन्त्यसमीपभवे।

**उपाय** पु० उप+अय—घञ्। साधने, उपगमे, राज्ञां रिपुनिराकरणहेतुषु सामादिषु च।

**उपायन** न० उप+अय—ल्युट्। तोषकारके उपहारे, समीपगमने च।

**उपारत** त्रि० उप+आ+रम—क्त। निवृत्ते "उपारताः पश्चिमरात्रगोचरात्" इति भारविः।

उपालम्भ पु० उप+आ+लभ–घञ् मुम् च। निन्दापूर्वकदुष्टवचने,
परस्परदूषणे च। [तेऽश्वे, प्रतिनिवृत्ते च।

उपावृत्त त्रि० उप+आ+वृत–क्त। श्रमापनयनाय पुनःपुनर्भूमिलुठि-

उपासक त्रि० उप+आस्–ण्वुल्। उपासनाकर्त्तरि, सेवके च त्रि०।

उपासङ्ग पु० उपासज्यन्ते शरा अत्र। उप+आ–सन्ज–घञ्।
तूणे। [सेवने। युच्। देवताद्याराधने स्त्री०।

उपासन न० उप+अस–क्षेपे ल्युट्। शराभ्यासे। आस–ल्युट्

उपासित त्रि० उप+आस–क्त। सेविते, कृतोपासने देशादौ च।

उपास्ति स्त्री० उप+आस–क्तिन्। उपासनायाम् "यदुपास्तिमसाव-
त्रोवि" कुसुमाञ्जलिः।

उपाहित पु० उप आसन्नमहितं यतः। उल्कापातादौ अग्न्युत्पात-
रूपे उपद्रवे। उप+आ+धा–क्त। आरोपिते, योजिते च त्रि०।

उपेक्षक त्रि० उप+ईक्ष–ण्वुल्। विवादिनोर्जयपराजयासंस्पृष्टे, त-
त्कृतहर्षविषादशून्ये, उदासीने, प्रतीकारानुद्यते च।

उपेक्षा स्त्री० उप+ईक्ष–अ। त्यागे "इदं न मम स्यात्" इति इच्छा-
भेदे, औदासीन्ये, अनपेक्षणे च।

उपेन्द्र पु० उपगत इन्द्रम् अनुजत्वात्। विष्णौ। स हि कश्यपात्
अदितौ इन्द्रादपरं वामनरूपतया संजातः।

उपेन्द्रवज्रा स्त्री० एकादशाक्षरपादके छन्दोभेदे।

उपेय त्रि० उप+इण्–यत्। उपायसाध्ये, प्राप्तव्ये च।

उपोढ त्रि० उप+वह–क्त। सन्निवेशविशेषयुक्ते व्यूढे सैन्ये निकटे, ऊढे
कृतविवाहे च।

उपोत्तम त्रि० उपगतमुत्तममन्त्यम्। अन्त्यसमीपे उपान्त्ये।

उपोदकी स्त्री० उपगतमुदकमत्र। पूतिकायाम् (पुइशाक)।

उपोद्घात पु० उप+उद्+हन–घञ्। प्रकृतोपपादके उदाहरणे प्रकृ-
तार्थं वर्णयितुमर्थान्तरवर्णने, "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं वि-
दुर्बुधाः" इत्युक्तलक्षणायां चिन्तायाञ्च।

उपोषण न० उप+उष–ल्युट्। उपवासे अहोरात्राभोजने।

**उपोषित** न० उप वस+भावे—क्त। उपवासे। कर्त्तरि क्त। उपवासकर्त्तरि त्रि०। [क्षेत्रे।

**उप्त** त्रि० वप—क्त कृतवापे धान्यादौ। अधिकरणे क्त। उप्तधान्यादौ

**उप्तकृष्ट** त्रि० पूर्वमुप्तं पश्चात् कृष्टं पूर्वकालेत्यादि स०। बीजवपनानन्तरं कृष्टे क्षेत्रे (बीजाकृते क्षेत्रे)। (कातान)।

**उब्ज** आर्जवे तुदा० पर० अक० सेट्। उब्जति औब्जीत्।

**उभ** त्रि० द्विव०। उ—भक्। द्वित्वविशिष्टार्थ। अस्य सर्वनामादित्वेऽपि द्विवचने प्रयोगो नास्ति।

**उभय** त्रि० उभौ अवयवौ यस्य उभ+अयट्। द्वित्वविशिष्टेऽर्थे।

**उभयतस्** अव्य० उभ—तसिल् इत्वौ अयः। उभयपार्श्वे।

**उभयथा** अव्य० उभ+थाच्। इत्वौ अय:। उभयप्रकारेणेत्यर्थे।

**उभयद्युस्** अव्य० उभ—द्युस् इत्वौ अय:। उभयदिनयोः। एद्युस्। उभयेद्युरप्यत्र।

**उम्** अव्य० उ—डुम्। रोषे, स्वीकारे, प्रश्ने च।

**उमा** स्त्री० ओः शिवस्य मा लक्ष्मीः। दुर्गायाम् "उमेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम" इति निरुक्तायां पार्वत्याम्। तं शिवं माति पतित्वेन मन्यते मा+क। शिवपत्न्याम्। वे—मक् संप्रसारणम्। हरिद्रायाम् अतसीवृक्षे (मसिना) कीर्त्तौ, कान्तौ, शान्तौ च।

**उमाकट** पु० उमाया अतस्या हरिद्राया वा रजः कटच्। अतस्या हरिद्रायाश्च रजसि।

**उमाधव** पु० उमाया धवः पतिः ६त०। महादेवे। उमाकान्तोमेशादयोऽप्यत्र।

**उमासुत** पु० ६त०। कार्त्तिकेये। उमापुत्रादयोऽप्यत्र।

**उम्भ** पूर्त्तौ तुदा० पर० सक० सेट्। उम्भति औम्भीत्।

**उर** गतौ (सौत्र:) पर० सक० सेट्। ओरति औरीत्।

**उरग** पु० उरसा गच्छति उरस्+गम—ड सलोपश्च। सर्पे, तद्देवताके अश्लेषानक्षत्रे च।

उरगाशन पु० उरगानश्नाति उरग+अश्—ल्यु उप० स०। गरुडे। ल्युट्। उरगाशनम् सीसके न०।

उरण पु० ऋ० क्यु, धातोरुच्। मेषे। [(दादमर्द्दन) द्रुमे।

उरणाख्य पु० उरणस्य मेषस्य अक्षीव अक्षि पुष्पं यस्य। दद्रुघ्ने

उरभ्र पु० उरु उत्कटं भ्रमति भ्रम—ड पृषो० उलोपः। मेषे।

उररी अव्य० ऋ—ररीक्। अङ्गीकारे, विस्तारे च।

उररीकृत त्रि० उररी+कृ—क्त। अङ्गीकृते, विस्तृते च।

उरश्छद पु० उरश्छाद्यतेऽनेन छद—णिच्—घ ह्रस्वः। कवचे।

उरस् न० ऋ—असुन् धातोरुच्। वक्षःस्थले।

उरसिज पु० उरसि जायते जन—ड त० सप्तम्या अलुक्। स्त्रीवक्षोजाते स्तने। [वक्षोयुते।

उरसिल त्रि० प्रशस्तमुरोऽस्त्यस्य प्राशस्त्ये मत्वर्थीय इलच्। प्रशस्त-

उरस्कट पु० उरः कट्यते आव्रियतेऽनेन कट—घञर्थे क। ब्राह्मणा-मुत्तरीयभेदे तदीये यज्ञोपवीताकारे वस्त्रभेदे च। (दुकशाकाड़)।

उरस्त्र न० उरस्त्रायते त्रै—क। वक्षोरक्षके कवचे। ल्युट्। उरस्त्राणमप्यत्र न०।

उरस्य पु० उरसा निर्म्मितः उरस्+यत्। स्वजाते औरसे पुत्रे।

उरस्वत् त्रि० प्रशस्तमुरोऽस्त्यस्य प्राशस्त्ये मतुप् मस्य वः। प्रशस्तवक्षोयुते।

उरी अव्य० ऋ—रीक्। अङ्गीकारे, विस्तारे च।

उरीकार पु० उरी+कृ—घञ्। स्वीकारे, विस्तारे च।

उरीकृत त्रि० उरी+कृ—क्त। अङ्गीकृते, विस्तृते च। [ङीप्।

उरु त्रि० ऊर्णु-कु नुलोपो ह्रस्वश्च। विशाले, महति च स्त्रियां वा

उरुक्रम पु० उरुर्महान् क्रमः पादोविक्रमो वा यस्य। विष्णौ।

उरुवूक पु० उरु—वै—उक आलोपश्च। एरण्डवृक्षे रक्तैरण्डे च।

उरोज पु० उरस् जन—ड त०। स्त्रीस्तने। [(माकडसा) मर्कटके।

उर्णनाभ पु० ऊर्णेव सूत्रं नाभौ गर्भेऽस्य अच् समा० ह्रस्वः।

उर्णा स्त्री० ऊर्णूयते आच्छाद्यते ऊर्णु—ड ह्रस्वश्च। मेषादिलोम्नि।

उर्द माने स्वादे च सक० क्रीडायाम् अक० भ्वा० आत्म० सेट् उर्दते।

उद्र पु० उद्-रक् । जलविडाले (उद्बिराल) ।
उर्द हिंसायां भ्वा० पर०सक० सेट् । उर्वति और्वीत् ।
उर्वरा स्त्री० उरु-ऋ-अच् । सर्वशस्याढ्यायां भूमौ ।
उर्वशी स्त्री० उरून् अश्नुते वशीकरोति उरु+अश-क गौरा०ङीष् ।
 स्वर्गवेश्यायाम् ।
उर्वशीरमण पु० ६त० । चन्द्रवंश्ये बुधपुत्रे पुरूरवोनामके राज्ञि ।
उर्वारु पु० उरु-ऋ-उण् । कर्कट्याम् । स्वार्थे कन् अत्रैव ।
उर्वी स्त्री० उरु+स्त्रियां गुणवचनत्वात् ङीष् । भूमौ ।
उल दाने (सौत्रः) पर० सक० सेट् । ओलति औलीत् ।
उलप पु० न० वल-कपच् सम्प्रसारणम् । शाखापत्रप्रचययुतायां लता-
 याम् । कोमले तृणभेदे न० (उलुखड़) ।
उलूक पु० वल-समवाये ऊक सम्प्रसारणम् । पेचके, इन्द्रे, दुर्य्योध-
 नमातुलशकुनिपुत्रे च तृणभेदे न० । (उलुखड़) ।
उलूखल न० ऊर्द्ध्वं खम् उलूखं पृषो० तत् लाति गृह्णाति ला-क ।
 धान्यादिकण्डनसाधने काष्ठमये पात्रे (उखरी) गुग्गुलौ च ।
उलूपिन् पु० ओः शम्भोरिव रूपमस्यास्ति इनि रस्य लत्वम् । शिशुके,
 (शोशक) मत्स्यभेदे च ।
उलूलु पु० उरु उरु इति रस्य लत्वम् । हर्षसूचके माङ्गल्यादौ
 स्त्रीध्वनिभेदे "उच्चैरुलूलुध्वनिरुच्चचार" इति नैषधम् ।
उल्का स्त्री० उष-दाहे क नि०षस्य लः । रेखाकारे गगनात् पत-
 त्तेजःपुञ्जे । [भेदे (व्याकवेयाली) ।
उल्कामुखी स्त्री० उल्केव रात्रौ ज्वलत् मुखं यस्याः । शृगाली
उल्मुक न० उष-दाहे मुक, षस्य लः । अङ्गारे ।
उल्लल त्रि० उद् लल-अच् । बहुरोमयुक्ते ।
उल्ललित त्रि० उद् लल-क्त । तरलिते, आन्दोलिते च । [पु० ।
उल्लाघ त्रि० उद्+लाघ-क्त नि० व रोगनिर्मुक्ते, दक्षे शुचौ च । मरिचे
उल्लाप पु०+लप-घञ् । काकुवाक्ये, शोकरोगादिना ध्वनेर्विकारे च ।
उल्लास पु० उद्+लस-घञ् । प्रकाशे, आह्लादे, ग्रन्थस्याध्यायस्या-

क्षोभे परिच्छेदे च। [लिखिते च।

उल्लिखित त्रि० उद्+लिख—क्त। उत्कीर्णे तनूकृते उपरि लिखिते,

उल्लेख पु० उद्+लिख—घञ्। उच्चारणे, अलङ्कारभेदे सा०द०१०प।

उल्लेखन न० उद्+लिख—ल्युट्। वमने, खनने, उच्चारणे च।

उल्लोच पु० उद्+लोच—घञ्। चन्द्रातपे विताने।

उल्लोल पु० उद्+लोड़—घञ् डस्य लत्वम्। महातरङ्गे।

उल्व न० वल—वक् सम्प्रसारणञ्च। गर्भवेष्टनचर्मणि जरायौ।

उल्वण त्रि० उद्+श्वण—अच् पृषो० दस्य लः। व्यक्ते, स्पष्टे।

उ(व)शती स्त्री० उष—शतृ, वश—शतृ सम्प्रसारणम् वा। स्त्रियां

ङीप्। अकल्याण्यां वाचि। [उशन, उशनः।

उशनस् पु० वश—कनसि। भार्गवे शुक्रे। सौ उशना सम्बुद्धौ उशनन्

उशीर पु० न० वश—ईरन् किच्च। (खस खस) वीरणमूले।

उष वधे, दाहे च भ्वादि० पर० सक० सेट्। ओषति औषीत्।

उश वधे दाहे च भ्वादि०पर०सक०सेट्। ओषति औषीत्, औक्षत्।

उष पु० उष--क दिने गुग्गुलौ, रात्रिशेषे, क्षारमृत्तिकायां च काम-

नायुक्ते त्रि०।

उषण न०उष--क्युन्। मरिचे। पिप्पल्यां, शुण्ठ्यां चव्यिके च(चइ)।

उषर्बुध पु० उषसि सन्ध्यायां बुध्यते होमार्थं प्रज्वालने प्रकाशते

उषस्+बुध--क अहरादित्वात् रः। अग्नौ, रक्तचित्रके च।

उषस् न० उष--असि किच्च। प्रत्यूषे, पञ्चपञ्चाशद्घटिकोत्तरकाले।

उषसी स्त्री० उषं तापकत्वात् दिवसं स्यति उष+षो—क गौरा०

ङीप्। सायं सन्ध्यायाम्।

उषा स्त्री० उष—क टाप्। “तेजःपरिहाणिरुषा आसोरुद्योदयं

यावत्” इति वराहोक्ते काले वाणराजसुतायाञ्च।

उषाकल पु० उषायां कलः शब्दोऽस्य। कुक्कुटे।

उषापति पु० उषाया वाणराजसुतायाः पतिः। अनिरुद्धे कन्दर्पा-

त्मजे कृष्णपौत्रे। उषाकान्तादयोऽप्यत्र।

उषित त्रि० उष—क्त। पर्युषिते दग्धे च। वस—क्त। स्थिते।

उष्ट्र पु० उष–ष्ट्रन् किच्च । स्वनामख्याते पशुभेदे, महोक्षे च ।

उष्ण पु० उष–नक् । ग्रीष्मे ऋतौ, आतपे, पलाण्डौ नरकभेदे, शीतभिन्ने स्पर्शे च । तद्वति, आलस्यरहिते दक्षे च त्रि० ।

उष्णक त्रि० उष्णमिव करोति कन् । ज्वरवति, शीघ्रकारिणि च उष्णं करोति उष्ण+णिच् । ण्वुल् ज्वरे पु० ।

उष्णगु पु० उष्णा गावः किरणा अस्य । सूर्ये । उष्णरश्मिरप्यत्र ।

उष्णनदी स्त्री० कर्म० "यमद्वारे महाघोरे तप्ता वैतरणी नदी" इत्युक्तायाम् उष्णनद्यां वैतरण्याम् ।

उष्णवारण न० उष्णं वारयति वृ–णिच्–ल्यु । आतपत्रे, छत्रे ।

उष्णवीर्य पु० उष्णरूपं वीर्यमस्य । शिशुमाराख्ये जलजन्तौ । उष्णवीर्यवति त्रि० ।

उष्णांशु पु० उष्णा अंशवो यस्य । सूर्ये ।

उष्णागम पु० उष्णस्यागमोऽस्मिन् । निदाघकाले ।

उष्णासह पु० उष्णा आसह्यतेऽत्र आ+सह–अच् । हेमन्ते ऋतौ । उष्णं न सहते अच् । असहग्रीष्मे त्रि० ।

उष्णिका स्त्री० अल्पमन्नमस्याम् अल्पार्थे कन् नि० अन्नस्य उष्णादेशः । यवाग्वाम् (याउ)। उष्णकशब्दात् टाप् । दक्षायाम् ।

उष्णिह् स्त्री० उत्+स्निह्यति क्विन् नि० षत्वम् । अष्टाक्षरपादके छन्दोभेदे । स्वादौ उष्णिक् उष्णिग्भ्याम् ।

उष्णीष पु० न० उष्णमीषते हिनस्ति ईष–क शक० पररूपम् । शिरोवेष्टनवस्त्रे, (पागड़ी) किरीटे च ।

उष्णोपगम पु० उष्णस्य उपगमोऽत्र । निदाघकाले ।

उष्म पु० उष–मक् । निदाघे, आतपे, ग्रीष्मे ऋतौ च ।

उष्मपा पु० उष्मं पिबन्ति पा–क्विप् भृगोः पुत्रे पितृगणभेदे ।

उस्र पु० वसन्ति रसा अत्र वस–रक् । किरणे, सूर्यकिरणानां जलहेतुत्वात् रसवत्त्वम् । वृषे च । सुरभ्यां उपचितावस्थायां च स्त्री० । [जहतः ।

उह वधे भ्वादि० पर०सक० सेट् । ओहति औहत्, औहीत्, उवोह

उह अव्य० उ च ह च द्व० । सम्बोधने, एवार्थे च ।
उहह अव्य० उह च ह च । सम्बोधने । [कर्म्मणि च ।
उह्यमान त्रि० वह--कर्म्मणि शानच् । आकृष्यमाणे, वहन-

## ऊ

ऊ अव्य० वेञ् क्विप् । सम्बोधने, वाक्यारम्भे, दयायां, रक्षायाञ्च ।
ऊ पु० अवतीति अव--क्विप् ऊठ् । महादेवे चन्द्रे च । पालके त्रि० ।
ऊत त्रि० वेञ-- तन्तुसन्ताने क्त । स्यूते, सूत्रेण ग्रथिते च ।
ऊति स्त्री० वेञ--क्तिन् । स्यूतौ । अव--क्तिन् नि० । रक्षणे,
लीलायां, धारणे च । [क्षीराधारे आपीने (मेड़) ।
ऊधस् न० उन्द--असुन् निपा० उतो दीर्घः । स्त्रीगव्यादेः
ऊधस्य न० ऊधसि भवम् ऊधस्+यत् । दुग्धे ।
ऊन परिहाणे अदन्तचुरा० उभ० अक० सेट् । ऊनयति ते औ-
निनत् त औनयीत् औनयिष्ट ।
ऊन त्रि० ऊन-हानौ अच् । हीने, असंपूर्णे च ।
ऊम् अव्य० अव-मुक् । रोषोक्तौ, प्रश्ने, निन्दायां, सहीयाञ्च ।
ऊय तन्तुसन्ताने भ्वा० आत्म० सक० सेट् । ऊयते औयिष्ट ।
ऊररी अव्य० ऊय-ररीक् । अङ्गीकारे, विस्तारे च ।
ऊरव्य पु० ऊरु+भवार्थे यत् । वैश्ये । तस्य ब्रह्मण ऊरुतो जन्म
“ऊरू वैश्य” इति श्रुतेः प्रसिद्धम् । ऊरुसम्भवे त्रि० ।
ऊरी अव्य० ऊय-रीक् । अङ्गीकारे, विस्तारे च ।
ऊरु पु० ऊर्णूयते आच्छाद्यते ऊर्णु-कर्म्मणि कु नुलोपश्च । जानूपरिभागे ।
ऊरुज पु० ऊरोर्ब्रह्मण ऊरोर्जायते जन-ड । वैश्ये ।
ऊरुपर्व्वन् पु० ऊरोः पर्व्वैव । जानुनि (हाँटु) ।
ऊरुस्तम्भ पु० ऊरू स्तभ्नाति अण् । स्वनामख्याते रोगे ।
ऊरुस्तम्भा स्त्री० ऊरोरुपमानभूतः स्तम्भो यस्याः । कदलीवृक्षे ।
ऊर्ज्ज जीवने बले च चु० उभ० अक० सेट् । ऊर्ज्जयति, ते औ-
र्ज्जिजत् त ।

ऊर्ज्ज पु० ऊर्ज्ज—आधारे घञ् । कार्त्तिके मासि । भावे घञ् ।
बले, उत्साहे च । अस्मिन् मान्तोऽप्यबलार्थे । [जीवनमपि ।
ऊर्ज्जस्वल त्रि० ऊर्ज्जस्+अस्त्यर्थे वलच् । बलवति । इति । ऊर्ज्ज-
ऊर्ज्जित त्रि० ऊर्ज्ज—क्त । बलातिशययुक्ते, हृद्धियुक्ते च ।
ऊर्णनाभ पु० ऊर्णेव तन्तुर्नाभावस्य अच् समा० सुख: । मर्कटे
(माकड़सा) कीटभावे ऊर्णनाभिरप्यत्र भ्रुवोर्मध्यस्थे महापुरुषचिह्ने
आवर्त्ताकारे लोमसन्ताने च ।
ऊर्णा स्त्री० ऊर्णु-करणे ड । मेषलोमनि । [मधुरे च ।
ऊर्णायु पु० ऊर्णा: सन्त्यस्य युस् । मेषे, कम्बले, ऊर्णनाभे, मष-
ऊर्णु आच्छादने अदा० उभ० सक० सेट् । ऊर्णोति, ऊर्णुते, औ-
र्णावीत् और्णुवीत् और्णवीत् और्णविष्ट और्णुविष्ट ।
ऊर्द्ध त्रि० उद् हाङ्—ड पृषो० ऊरादेशः । उच्चे उपरि च ।
ऊर्द्धक पु० ऊर्द्धः सन् कायति शब्दायते । वाद्यभेदे स च गोपुच्छ-
वदाकारस्त्रितालपरिमितः मुखेऽष्टाङ्गुलः ऊर्द्धं कृत्वा वाद्यते ।
ऊर्द्ध त्रि० उत् उपरि ध्वन्यते ध्वन—ड आदेरूरादेशः । उच्चे
तुङ्गे उपरि च । [मञ्चायतावरोहतायाञ्च ।
ऊर्द्धकण्ठी स्त्री० ऊर्द्धः कण्ठः मुखमस्याः ब० गौरा० ङीष् ।
ऊर्द्धजानु त्रि० ऊर्द्धे जानुनी यस्य । उपरिभागे स्थूलजानुयुक्ते ।
ऊर्द्धज्ञु त्रि० ऊर्द्धे जानुनी यस्य जानुनो वा ज्ञु । उपरिभागे
स्थूलजानुयुक्ते । गजारातौ पशुभेदे ।
ऊर्द्धपाद पु० ऊर्द्धाः पृष्ठस्थाः चत्वारः पादा यस्य । शरभाख्ये
ऊर्द्धपुण्ड्र पु० ऊर्द्धं ऊर्द्धमुखः पुण्ड्रः इक्षुयष्टिरिव । ललाटस्थे
ऊर्द्धमुखे पुण्ड्रेक्षुवत् रेखात्मके तिलकभेदे । तद्धारणे वि-
धिनिषेधादिकं वाचस्पत्ये द्रष्टव्यम् ।
ऊर्द्धम् अव्य० उद्—ह्वेञ् डम् आदेरूरादेशश्च । ऊर्द्धशब्दार्थे ।
ऊर्द्धमान न० ऊर्द्धमारोप्य मीयते येन मा—ल्युट् । धान्यकर्पादिमिते
पात्राधादौ (नाटखारा) । तेन हि तुलादावारोपितेन स्वर्णा-
देर्गुरुत्वमुन्नीयते । उच्चतामरिच्छेदकपरिमाणे च ।

ऊर्द्ध्वरेतस् पु० ऊर्द्ध्वं न पतत् रेतो यस्य । महादेवे, सनकादौ स-
न्न्यासिनि, भीष्मे च ।

ऊर्द्ध्वलिङ्ग पु० ऊर्द्ध्वमुन्नतं लिङ्गं चिह्नमस्य । महादेवे ऊर्द्ध्वलिङ्गं
विरूपाक्षमिति सन्ध्याकुमन्त्रः ।

ऊर्द्ध्वलोक पु० कर्म० । स्वर्गे ।

ऊर्द्ध्वासित पु० ऊर्द्ध्वमुपरिभागे असितः कृष्णः आसितो वा । कार-
वेल्ले (करला) ऊर्द्ध्वोपविष्टे त्रि० ।

ऊर्म्मि पु० स्त्री० ऋ–मि–अर्त्तेश्च । तरङ्गे, प्रकाशे, वेगे, वस्त्र-
सङ्कोचरेखायाम्, पीड़ायाम्, उत्कण्ठायाम्, क्षुधादिषु, षट्सु
च "यथा क्षुधा च पिपासा च प्राणस्य, मनसः स्मृतौ ।
शोकमोहौ, शरीरस्य जरामृत्यू षडूर्म्मय" इति । "भङ्गो-
न्नतानामन्यासां समनोन्नसमाकृतिः । अतिवेग समायुक्ता गतिश्च-
क्रिपदाकृता" इत्युक्तलक्षणायामश्वगतौ स्त्री० ।

ऊर्म्मिका स्त्री० ऊर्म्मिरिव कायति कै–क । तरङ्गवत्प्रकाशमाने अ-
ङ्गुरीयके । स्वार्थे कन् । तरङ्गादौ च ।

ऊर्म्मिमत् त्रि० ऊर्म्मिरिव वक्रताऽस्त्यस्य मतुप् यवा० मस्य न वः ।
वक्रे तरङ्गवति च ।

ऊर्म्मिमालिन् पु० ऊर्म्मिमालाऽस्त्यस्य इनि । समुद्रे ।

ऊष पु० ऊष–रुजायां क । क्षारमृदि, प्रभाते, रन्ध्रे चन्दनादौ च ।

ऊषण न० ऊष–ल्यु । मरिचे, पिप्पलीमूले, शुण्ठ्याञ्च । (चिता)
चित्रके पु० । पिप्पल्यां चव्ये च (चइ) स्त्री० ।

ऊषर त्रि० ऊष+मत्वर्थीयो रः । ऊषवति क्षारमृत्तिकायुक्ते देशे
यत्रोप्तं बीजं न प्ररोहति ।

ऊषरज न० ऊषरात् जायते जन–ड । (पाङ्गा) लवणभेदे ।

ऊषवत् त्रि० ऊष–मतुप् मस्य वः । ऊषरभूमौ ।

ऊष्मन् पु० ऊष–मनिन् । ग्रीष्मे व्याकरणोक्तेषु शोषवायुनोच्चार्य्य-
माणेषु शषसहरूपेषु वर्णेषु ।

ऊह वितर्के भ्वादि० आत्म० सक० सेट् । ऊहते औहिष्ट ।

ऊह पु० ऊह-घञ वितर्के आगमाविरोधिना तर्केण आगमार्थस्य संशयपूर्वपक्षनिरासेन, उत्तरपक्षव्यवस्थापनेन निर्णयरूपे परीक्षणे, अनन्वितार्थकविभक्तिलिङ्गत्यागपूर्वके अन्वययोग्यविभक्त्यादिकल्पने, यथा मार्वेण सौम्याव इति बहुवचनमन्वितमपि एकोद्दिष्टे अनन्वितत्वात् सौम्य इत्येकवचनान्ततया कल्पनम् पदान्तरेणाकाङ्क्षापूरणे च।

ऊहा स्त्री० ऊह अ स्त्रीत्वात् टाप्। अध्याहारे अनुपपत्त्यर्थे च।

## ऋ

ऋ गतौ भ्वा०पर०सक०अनिट्। ऋच्छति। आरत् आर्षीत्।

ऋ गतौ जुहोत्यादि० पर०सक०अनिट्। इयर्त्ति आरत्।

ऋ हिंसायां भ्वा०पर०सक०अनिट्। ऋणोति। आर्षीत्।

ऋक्थ न० ऋच्-थक्। धने स्वर्णे, ख्यातिप्रसिद्धे दायरूपे धने च।

ऋक्ष पु० ऋष-स किच्च। भल्लुके। नक्षत्रे मेषादौ च पु०न०।

ऋक्षगन्धा स्त्री० ऋक्षान् गन्धयति हिनस्ति गन्ध-अच्। अधिआङ्गलीलक्षे महाश्वेतायां, क्षीरविदार्य्यां च।

ऋक्षगिरि पु० कर्म्म०। कुलाचलभेदे ऋक्षनामके पर्व्वते।

ऋक्षराज पु० ऋक्षाणां राजा त० टच्। जाम्बवति, चन्द्रे च।

ऋक्षवत् पु० ऋक्षाः सन्त्यस्मिन् मतुप् मस्य वः। नर्म्मदातीरस्थे पर्व्वतभेदे।

ऋग्वेद पु० ऋक्प्रधानो वेदः। देवदैवत्ये ऋङ्मात्राख्याते वेदभेदे।

ऋच स्तुतौ तुदा०पर०सक०सेट्। ऋचति आर्चीत्।

ऋच् स्त्री० ऋच् क्विप्। अर्थवशेन नियताक्षरपादयुते वेदांशे।

ऋच्छ मोहे मूर्त्तौ गमने च तुदा०पर०सक० अक० च। सेट्। ऋच्छति आर्च्छीत्। आनर्च्छ।

ऋज गतौ अर्जने च भ्वा०आत्म०सक० सेट्। अर्जते आर्जिष्ट आनृजे। [नरकभेदे च।

ऋजीष न० ऋज-ईषन् किच्च। भर्ज्जनपात्रे कटाहादौ। धने,

ऋणु त्रि० ऋण—क्त । मरणे । स्त्रियां वा ङीप् ऋणी ऋणु: ।

ऋणु गतौ तना० उभ० सक० सेट् । अर्णोति ऋणोति, ऋणुते आर्णीत् आर्णिष्ट ।

ऋण न० ऋ—क्त नि० नत्वम् । अधमर्णेन उत्तमर्णात् पुनर्देयत्वेना-भ्युपगम्य गृहीते धने, (धार) जले, दुर्गे, दुर्गभूमौ च । देवर्षिपितृणणोद्देशेन यथाक्रमं यज्ञवेदाध्ययनपुत्रोत्पादनरूपेऽवश्य-कार्य्ये कृत्ये ऋणमन्त्यमवेक्षीति रघुः ।

ऋणमत्कुण पु० इदम् ऋणं मम देयमिति कुणति अभ्युपगम्य शब्दायते ऋण+मत्कुण—क । लग्नके प्रतिभुवि (जामिन) ।

ऋणमार्गण ऋणं परकीयऋणमात्मीयत्वेन मार्गयति चुरा०मृग—ल्युट् । प्रतिभुवि । (जामिन) ।

ऋणमुक्ति स्त्री० मुच—क्तिन् ६त० । ऋणशोधने ।

ऋणादान न० ऋणस्यादानम् । उत्तमर्णेनाधमर्णात् दत्तधनतुल्य-धनस्य वृद्धिकप्रकृष्टे अष्टादशव्यवहारमध्ये व्यवहारभेदे । “तेषामाद्यमृणादान”मित्यादि स्मृतिः ।

ऋणिन् पु० ऋण+मत्वर्थीय इनि । ऋणयति अधमर्णे ऋणग्रस्ते ‘ऋणी न स्यात् यथा पिता” इति स्मृतिः ।

ऋत गतौ (सौत्र:) पर०सक०सेट् । ऋतीयते आर्त्तीयिष्ट आर्त्तिष्ट ।

ऋत न० ऋ—क्त । ‘ऋतमुञ्छशिलं ज्ञेय”मित्युक्तः ब्राह्मणस्य उप-जीव्यवृत्तौ मोक्षे, जले, कर्मफले “ऋतं पिबन्ता”विति श्रुतिः सुप्रिये वाक्ये मानसादिसत्ये च । दीप्ते, सत्ये, पूजिते च त्रि०।

ऋतधामन् पु० ऋतं सत्यं धाम यस्य । परमेश्वरे, विष्णौ च ।

ऋतम् अव्य० ऋत—अमि । सत्यमित्यर्थे ।

ऋतम्भरा स्त्री० ऋतम् बिभर्त्ति ऋतम्+भृ—अच् । योगशास्त्रप्रसिद्धे त्रिपर्य्यासशून्ये यथार्थज्ञानरूपे चित्तवृत्तिभेदे ।

ऋति स्त्री० ऋ—क्तिन् । गतौ स्पर्द्धायाम् निन्दायाञ्च । कर्म्मणि क्तिन् । वर्त्मनि मङ्गले च ।

ऋतु पु० ऋ-तु किच । शिशिर: कुसुमसमयो ग्रीष्मो वर्षा शरद्धिमः ।

माघादिमासयुग्मेषु ऋतवः षट् क्रमादिषु कालभेदे।
योषितदर्शनयुक्ते गर्भधारणयोग्ये स्त्रीणामवस्थाभेदे "ऋतुः
स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः" इति मनुः। दीप्तौ
मासे च। [अवन्ध्यर्त्तौ।

ऋतुप्राप्त त्रि० ऋतुकालयोग्यः पुष्पादिः प्राप्तोऽनेन, फलेग्रहौ

ऋतुमती स्त्री० ऋतु+मतुप्। रजस्वलायां स्त्रीधर्मिण्याम्।

ऋतुराज पु० ऋतूनां राजा ६त० टच् समा०। वसन्ते ऋतौ।

ऋतुवृत्ति पु० ऋतूनां वृत्तिः पर्यायेणावर्त्तना यत्र। वत्सरे।

ऋते अव्य० ऋत (सौत्रः) के। वर्ज्जने विनार्थे च।

ऋत्विज् ऋतु—यज्—क्विन्। याजके, 'अग्न्याधेयं पाकयज्ञानग्नि-
ष्टोमादिकान् मखान्। यः करोति वृतो यस्य स तस्यर्त्विगिहो-
च्यते" इति मनूक्ते स्वानुष्ठेयवैदिकादिकर्मकरे। [च त्रि०।

ऋद्ध न० ऋध—क्त। पक्वमर्द्दितधान्ये सिद्धान्ते च। वृद्धे समृद्धे

ऋद्धि स्त्री० ऋध—क्तिन्। वृद्धौ, देवभेदे, ओषधिभेदे च।

ऋध वृद्धौ दिवा० स्वा० च पर० अक० सेट्। ऋध्यति ऋध्नोति
आर्द्धीत् आर्द्धत्। [तुदा० पर० सेट्। ऋफति आर्फीत्।

ऋफ दाने हिंसायां निन्दायां युद्धे च सक० श्लाघायां अक०

ऋभु पु० अरि स्वर्गे आदितो वा भवति ऋ+भू—डु। देवे।

ऋभुक्ष पु० ऋभवो देवाः क्षियन्ति वसन्त्यत्र क्षि+ड। स्वर्गे वज्रे
इन्द्रे च। [ऋभुक्षाः ऋभुक्षाणौ।

ऋभुक्षिन् पु० ऋभुक्षः वज्रं स्वर्गो वाऽस्यास्ति इनि। इन्द्रे स्वाटौ

ऋष गतौ तुदा० पर० सक० सेट्। ऋषति आर्षीत्।

ऋषभ पु० ऋष—अभक्। वृषभे, ओषधिभेदे, मुनिभेदे च।

ऋषभतर पु० तनुः ऋषभः तनुत्वे ष्टरच्। भारवहने मन्दशक्तौ
वृषभे। जातित्वेन स्त्रियां ङीप् ऋषभतरी।

ऋषभध्वज पु० ऋषभो ध्वजो यस्य। शिवे। वृषभध्वजोऽप्यत्र।

ऋषभा स्त्री० ऋषभ इवाचरति ऋषभ+क्विप्–अच् । पुमाकारायां स्त्रियां, शूकशिम्ब्याम्, शिरालतायाम् ।

ऋषि पु० ऋष–इन् किच्च । वेदे, मन्त्रद्रष्टरि मुनौ, चतुर्दशकर्म्म- ज्ञापकसप्तकदाचार्य्ये, गोत्रप्रवरप्रवर्त्तके मुनौ च ।

ऋषियज्ञ पु० ऋषि उद्देश्यको यज्ञः । ब्रह्मयज्ञे वेदाध्ययने ।

ऋष्टि स्त्री० ऋष–करणे क्तिन् । उभयतो धारायुक्ते खड्गे ।

ऋष्य पु० ऋष, क्यप् । मृगभेदे ।

ऋष्यगन्धा स्त्री० ऋष्यस्य गन्ध इव गन्धो यस्याः । वृद्धदारके वृक्षे ।

ऋष्यप्रोक्ता स्त्री० ऋषिभिरप्रोक्ता । शतावर्य्याम्, अतिबलायाम्, शूक- शिम्बीवृक्षे च ।

ऋष्यमूक पु० ऋष्यो मृगो मूको यत्र । "ऋष्यमूकस्तु पम्पायाः पुरतः पुष्पितद्रुम" इति रामायणोक्ते पर्व्वतभेदे ।

ऋष्यशृङ्ग पु० ऋष्यस्य मृगभेदस्य शृङ्गमिव शृङ्गमस्य । विभाण्डकपुत्रे लोमपादराजकन्यायाः शान्तायाः पत्यौ ।

## ॠ

ॠ गतौ क्र्या० पर०सक० सेट् । आर्त्ति आरीत् । आर आरतुः ।

## ए

ए अव्य० इण्–विच् । दयायां, स्मृतौ आमन्त्रणे, असूयायां, आ- ह्वाने च । विष्णौ पु० ।

एक त्रि० इण्–कन् । एकत्वरूपप्रथमसंख्यान्विते, केवले, मुख्ये, अन्यार्थे, सत्ये, अद्वितीये, समाने, अल्पे च ।

एकक त्रि० एक+कन् । असहाये । [कारके काले च ।

एककार्य्य त्रि० एकं कार्य्यं प्रयोजनमस्य । एकरूपकार्य्यकरे, परस्पर-

एकगुरु पु० एकोऽभिन्नो गुरुर्यस्य । समानाध्यापके सतीर्थ्ये ।

**एकचक्र** न० एकं चक्रं यस्य । सूर्य्यरथे पु० पुरीभेदे
स्त्री० यत्र बकासुरवधार्थं पाण्डवाः स्थिताः ।
**एकचर** त्रि० एकः सन् चरति पचाद्यच् । एकाकिचारिणि खड्गादौ ।
**एकचर्य्या** स्त्री० एकस्य चर्य्या चर, क्यप् । असहायगमने ।
**एकजाति** पु० एका जातिर्जननं यस्य । शूद्रे । एकजन्माप्यत्र ।
**एकजातीय** त्रि० एकः प्रकारो विधा यस्य प्रकारार्थे जातीयर् ।
तुल्यप्रकारा । [स्मिन् । यथा भवतामेकतमः साधुः ।
**एकतम** त्रि० एक+डतमच् । बहूनां मध्ये जात्यादिभिर्निर्द्धार्य्ये एक-
**एकतर** त्रि० एक+डतरच् । द्वयोर्मध्ये जात्यादिभिर्निर्द्धार्य्ये एकस्मिन् ।
यथा, भवतोरेकतरः साधुः ।
**एकतान** त्रि० एकं तानयति चु० तन—श्रद्धायाम् अण् । अनन्य
चित्तवृत्तौ एकविषयासक्तचित्ते तद्गतचित्ते च ।
**एकताल** पु० एकः समस्तालोमानं यत्र । समन्वितलये, विच्छेद-
रहिते च नृत्यगीतादौ ।
**एकत्र** अ० एक+त्रल् । एकस्मिन्नित्यर्थे । [व्यावर्त्तके च ।
**एकत्व** न० एक—त्व । ऐक्ये, अभेदे, साम्ये, सायुज्यमुक्तौ, भेद-
**एकदण्डिन्** पु० एकः केवलः शिखायज्ञोपवीतादिशून्यो दण्डोऽ-
स्यास्ति । "यदा तु विदितं तत् परं ब्रह्म सनातनम् । तदैक-
दण्डं संगृह्य सोपवीतां शिखां त्यजेदित्युक्तलक्षणे परिव्राजके ।
**एकदन्त** पु० एको दन्तोऽस्य । गणेशे । एकदंष्ट्रोऽप्यत्र ।
**एकदा** अव्य० एक+काले दाच् । एकस्मिन् काले इत्यर्थे ।
**एकदृक्** त्रि० एका दृक् यस्य । एकनेत्रे काणे । काके पु० ।
एकं सर्वमभिन्नं पश्यति दृश—क्विप् । शिवे ।
**एकदेश** पु० कर्म० । अवयवे, प्रतीके ।
**एकधा** अव्य० एक+प्रकारे धाच् । एकप्रकारे "एकधा बहुधा चैव
दृश्यते जलचन्द्रवत्" इति श्रुतिः ।
**एकधुरा** स्त्री० एका धूः कर्म० अच् । एकभारे । तद्वहतीत्यर्थेऽण्

तस्य लुक्। एकभारवाहके गवादौ। [गवादौ।

**एकधुरावह** त्रि० एकधुरां वहतीति वह–अच्। एकभारवाहके

**एकधुरीण** त्रि० एकधुरां वहतीति ख। एकभारवाहके गवादौ।

**एकपक्ष** त्रि० एकः पक्षो यस्य। सहाये।

**एकपत्नी** स्त्री० एकः समानः अनन्यो वा पतिर्यस्याः ङीप् नुक् च। सपत्न्यां पतिव्रतायाञ्च। यो धर्मएकपत्नीनामिति मनुः।

**एकपद** न० एकं पदं पदगतियोग्यकालो यत्र। एकपदगतियोग्य-काले तत्काले। कर्म०। एकस्मिन् पदे। निहन्ति च एकपदे इ'त माघः। [वर्त्मनि पथि।

**एकपदी** स्त्री० एकः पादोऽस्याम्। स्वाङ्गत्वात् ङीप् पद्भावः।

**एकपदे** अव्य० एक+पद–के। अकस्मादित्यर्थे कथमेकपदे निरा-गसम्” इति कुमारः।

**एकपिङ्ग** पु० एकं नेत्रं पिङ्गमस्य। कुबेरे स हि सास्रयं गौरीं निरीक्ष्य तच्छापात् नष्टनेत्रो जातः पुनः शिवप्रसादात् तच्चक्षुषः पिङ्गलत्वं जातमिति पुराणकथा। एकपिङ्गलोऽप्यत्र।

**एकभक्तव्रत** पु० न० “दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत्। एकभक्तमिति प्रोक्तं रात्रौ तन्न कदाचन” इत्युक्ते व्रतभेदे।

**एकयष्टिका** स्त्री० एका यष्टिरिवावली यस्याः ब० कप्। (एकनर) एकावलीहारभेदे।

**एकराज्** पु० एको राजते क्विप्। सार्वभौमे।

**एकवचन** न० वच–ल्युट् 6त०। व्याकरणोक्ते एकसंख्यावाचके स्वादौ तिङादौ च।

**एकवर्षिका** स्त्री० एको वर्षो वयःकालो यस्याः। एकहायन्यां गवि।

**एकविंशति** स्त्री० एकाधिका विंशतिः। एकाधिकविंशतिसंख्यायां तद्वति च। एकत्रिंशदादयश्चैवम्।

**एकवीर** पु० एको वीरः कर्म०। महावीरे अतिवीरे वृक्षभेदे च।

**एकशफ** पु० एकः शफोऽस्य। एकखुरयुक्तेषु खरादिषु “खरोऽश्वोऽ-

ऊनरो गौरः शरभककरी तथा । एते ककुदमाः इत्युक्ताः पशुषु । [यथा घटः घटौ इत्यत्र घटौ ।

एकशेष पु° एकः शेषो यत्र । व्याकरणप्रसिद्धे द्वन्द्वसमासे इत्यिभेदे ।

एकश्रुति स्त्री० एका अभिन्ना उदात्तादिस्वरूपा श्रुतिरुच्चारणम् । प्रातिशाख्ये प्रसिद्धे उदात्तानुदात्तस्वरितानामविभागेनोच्चारणे ।

एकसर्ग त्रि०एकस्मिन् सर्गे निश्चयो यस्य । अनन्यमनसि एकाग्रचित्ते ।

एकहायनी स्त्री० एकोहायनो वयोमानं यस्या ङीप् । एकवर्षवय-स्कायां गवि ।

एकाकिन् त्रि० एक+आकिन् । असहाये ।

एकाक्ष पु० एकमक्षि यस्य षच् समा० । काके । काणे त्रि० ।

एकाग्र त्रि० एकमग्रं विषयो यस्य । विषयान्तरव्यावृत्त्या एकमालम्बनस्के चित्तेपरिहृतज्ञाने च । स्वार्थे ष्यञ् ऐकाग्र्यमप्यत्र ।

एकादश त्रि० एकादशन्+पूरणे डट् । एकादशानां पूरणीभूते ।

एकादशन् त्रि० एकश्च दश च आत्वम् । एकाधिकदशसंख्यायुक्ते ।

एकादशद्वार न० एकादश द्वाराणि यत्र । शरीराख्ये पुरे तत्र हि नासिकाश्रोत्रनेत्राणां द्वयं द्वयमिति षट् शिरस्थानि, मुखमेकम्, नाभ्या सह अधःस्थानि त्रीणि, ब्रह्मरन्ध्रञ्चैकमित्येवमेकादश द्वाराणि सन्ति ।

एकादशी स्त्री० एकादशानां पूरणी । उभयपक्षीयप्रतिपदादितः एकादशपूरणायां तिथौ । यत्र हि हरिवासरव्रतम् ।

एकान्नविंशति स्त्री० एकेन न विंशति एक+नञ् आदुक् । एकोनविंशतिसंख्यायां तद्युक्ते च । एवमेकान्नत्रिंशदादयः ।

एकान्त त्रि० एकः अन्तो निश्चयो यत्र । अत्यन्ते ।

एकान्ततस् अव्य० एकान्त+तसिल् । अव्यभिचारिणि ।

एकान्न त्रि० एककालमेवान्नं भक्ष्यं यस्य । एकभक्तव्रते ।

एकान्नविंशति स्त्री० एकेन न विंशतिः । एक+न—आदुक् तस्य वा न । एकोनविंशतिसंख्यायां, तद्युक्ते च । एवमेकान्नत्रिंशदादयः ।

एकाब्दा स्त्री० एकः अब्दो वयोमानं यस्याः । एकहायन्यां गवि ।

**एकायन** त्रि० एकमयनं विषयो यस्य। विषयान्तरव्यावृत्तचित्ते एकायनमनस्के। कर्म्म० एकस्थाने।

**एकायनगत** त्रि० एकायनमेकविषयं मनोद्वारा गतः। एकाग्रचित्ते।

**एकावली** स्त्री० एकाऽद्वितीया आवली माला मणिश्रेणी। (एकनर) हारभेदे, अर्थालङ्कारभेदे च।

**एकाश्रय** त्रि० एक आश्रयो यस्य। अनन्यगतिके।

**एकाष्ठील** पु० एकमस्थि काण्डं तत्तुल्यं लाति ला-क यत्वं दीर्घश्च। वकवृक्षे पाठायां स्त्री०। [एकदिने।

**एकाह** पु० एकमहः द्विगु० अच्। अह्नाह्नान्ताः पुंसीति पुंस्त्वम्।

**एकाहगम** त्रि० एकाहेन गम्यते गम—घञ्। एकाहगम्ये देशे।

**एकाहार** पु० एकस्मिन् दिवसे एक आहारो भोजनम्। एकदिन-स्यैकवारभोजने। ब० तद्वति त्रि०।

**एकीभाव** पु० अनेकस्य एकस्य भावः एक+च्वि—भू—उप० घञ्। एकत्वे।

**एकीय** त्रि० एक—छ। एकपक्षभवे, एकसम्बन्धिनि च।

**एकोद्दिष्ट** न० एक उद्दिष्टो यत्र। एकोद्देशेन विहिते श्राद्धे "एक-मुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं तदुच्यते" इति स्मृतिः। तच्च प्रेतश्राद्धं तत्तुल्यविधिकं साम्वत्सरिकं श्राद्धमिति।

**एज** कम्पने भ्वादि० आत्म० अक० सेट्। एजते ऐजिष्ट।

**एज** दीप्तौ भ्वादि० पर० अक० सेट्। एजति ऐजीत्।

**एठ** बाधने भ्वादि० आत्म० सक० सेट्। एठते ऐठिष्ट।

**एड** पु० इल—स्वप्ने अच् डस्य लः मेषे। वधिरे त्रि०।

**एडक** पु० इल—ण्वुल् डस्य लः वनच्छागले, पृथुशृङ्गे मेषे मेषमात्रे च जातित्वात् स्त्रीत्वे अजादित्वात् टाप् एडका।

**एडगज** पु० एडो मेषो गजो भक्षत्वादस्य। दद्रुघ्ने (दादमर्द्दन)

**एडमूक** त्रि० श्रुतिरहित एडोबधिरश्चासौ मूकः। वाक्श्रुतिशक्तिरहिते।

**एडु(डू)क** न० ईड—(ऊ) उक नि० गुणः। हिंसायाम्। अन्त-र्न्यस्तास्थियुक्ते कुड्ये, भित्तौ च।

**एण** पु० इ—ण तस्य नेत्वम्। कृष्णवर्णे मृगे। स्त्रियाम् एणी।

एणतिलक पु० एणस्तिलकमिव चिह्नं यस्य । मृगाङ्के चन्द्रे ।
एत त्रि० पु० इण् तन् । कर्बुरवर्णे । तद्वति त्रि० । [illegible] च ।
एतद् त्रि० इण्–अदि तुक् च । पुरोवर्त्तिनि बुद्धिस्थे ।
एध वृद्धौ भ्वा० आत्म० अक० सेट् । एधते ऐधिष्ट ।
एध पु० इध्यतेऽग्निरनेन इन्ध-करणे घञ् नि० नलोप गुणौ । काष्ठे ।
एधस् न० इध्यतेऽग्निरनेन इन्ध असि नि० नलोप गुणौ । काष्ठे ।
एधित त्रि० एध–क्त । वृद्धियुक्ते "मधुमद्भिरिवैधित" इति माघः ।
एनस् न० इण–असुन् नुट् च । पापे, अपराधे च ।
एरका स्त्री० इण–रक । निर्यासतृणभेदे ।
एरण्ड पु० ईरयति वायुम् अङ्गं वा ईर–अण्डच् नि० गुणश्च । वृक्ष-
भेदे ( एरण्डी ) । (भेरण्डा) ।
एरण्डपत्रिका स्त्री० एरण्डस्य पत्रमिव पत्रमस्याः ब० संज्ञायां
कन् अत इत्वम् । दन्तीवृक्षे ।
एला स्त्री० इल-अच् । एलालतायाम् (एलाची) ।
एलापर्णी स्त्री० एलायाः पर्णमिव पर्णमस्याः । रास्नायाम् ।
( काटा आमरुल ) । [गन्धद्रव्यभेदे ।
ए(ल)लावालुक न० एलेव वलते वल–उण् संज्ञायां कन् । वा ह्रस्वः ।
एव अव्य० इण्–वन् । सादृश्ये अनियोगे, अवधारणे, चारनियोगे,
विनिग्रहे, परिभवे ईषदर्थे च । विशेष्यसङ्गतः अन्ययोगव्यव-
च्छेदे । यथा पार्थ एव धनुर्द्धरः इत्यादौ पार्थान्यपदार्थे प्रयुक्त-
धनुर्द्धरत्वम् व्यवच्छिद्यते । विशेषणसङ्गतः अयोगव्यवच्छेदे,
यथा शङ्खः पाण्डुर एवेत्यादौ शङ्खे पाण्डुरत्वायोगो व्यवच्छिद्यते ।
क्रियासङ्गतः अत्यन्तायोगव्यवच्छेदे यथा नीलं सरोजं भवत्येवे-
त्यादौ सरोजे नीलत्वात्यन्तायोगो व्यवच्छिद्यते । गन्तरि त्रि० ।
एवम् अव्य० इण्–वमु । सादृश्ये, इत्थंप्रकारे, "एवंवादिनि देवर्षा-
विति" कुमारः अवधारणे, स्वीकारे, प्रश्ने च ।
एष गतौ भ्वा० आत्म० सक० सेट् । एषते ऐषिष्ट ।
एषण पु० एष–ल्यु । लौहमये बाणे । युच् । इच्छायां पुत्रलोक-

धनकामनायां स्त्री० । ज्वुद् । कर्म्मकारादीनां सुखासाधने न० । विस्फोटभेदके अजगन्धे स्त्री० ङीप् । स्वार्थे कन् । एषणिकाप्यत्र ।

## ऐ

ऐकागारिक त्रि० एकमसहायमगारं प्रयोजनमस्य ठक् । चौरे ।

ऐकाग्र्य त्रि० एकाग्र+स्वार्थे ष्यञ् । एकाग्रचित्ते अनन्यासक्तचित्ते ।

ऐकात्म्य न० एक आत्मा स्वरूपं यस्य तस्य भावः ष्यञ् । ऐक्ये एकस्वरूपत्वे ।

ऐकान्तिक त्रि० एकान्तं आप्नोति ठञ् । अव्यभिचारिणि, अवश्यं भाविनि । स्त्रियां ङीप् । ऐकान्तिकी हरेर्भक्तिरुत्पातायैव कल्पते इति पुराणम् ।

ऐकाह्निक त्रि० एकाह्ने भवः कालात् ठञ् । एकदिननिष्पन्ने । एकाहमतीत्य भवः । एकाहानन्तरं जायमाने ज्वरे दिने दिने एकसमये जायमाने ज्वरे च पु० । ऐकाह्निकं ज्वरं हन्ति तस्य नामानुकीर्त्तनमिति ज्वरनाशकमन्त्रः ।

ऐक्य न० एकस्य भावः एक+ष्यञ् । अभेदे एकरूपतायाम् ।

ऐक्षव त्रि० इक्षोर्विकारः इक्षु–अण् । इक्षुविकारे गुड़ादौ । "ऐक्षवं गुड़वर्ज्जितम्" इति स्मृतिः ।

ऐक्ष्वाक पु० इक्ष्वाकोर्गोत्रापत्यम् अण् त्रि० सूर्य्यवंश्ये नृपे ।

ऐङ्गुद न० इङ्गुद्याः फलम् फले अण् तस्य न लुक् इङ्गुदी वृक्षफले ।

ऐण त्रि० एणस्य लभ्यङ्गस्येदम् अण् । लभ्यङ्गचर्म्मादौ ।

ऐणेय त्रि० एण्या इदम् ढक् । लभ्यङ्गीचर्म्मादौ ।

ऐतिह्य न० इतिह पारम्पर्य्योपदेशः अनिर्द्दिष्टप्रवक्तृकोपदेश इति यावत् स्वार्थे ष्यञ् । पारम्पर्य्योपदेशे । यथात्र वटे यक्षः प्रतिवसतीत्यादि परम्परायदेशमात्रम् । न तु केनाप्येतदुपलभ्य कथितम् । [सोमराज्याम् स्त्री० ङीप् ।

ऐन्दव न० इन्दुर्देवताऽस्य । मृगशिरोनक्षत्रे चन्द्रसम्बन्धिनि त्रि० ।

ऐन्द्र त्रि० इन्द्रस्येदम् इन्द्र+अण् । शक्रसम्बन्धिनि । ज्येष्ठा नक्षत्रे

न० । स्त्रियां ङीप् । "ऐन्द्री तमध्वरेश्वरम्" इति दुर्गादेवता-वैश्य । इन्द्रदेवताके त्रि० । प्राच्यां दिशि स्त्री० ।

ऐन्द्रजालिक त्रि० इन्द्रजालेन चरति । मायाकारके । (बाजिकर) ।

ऐन्द्रि पु० इन्द्रस्यापत्यम् इञ् । इन्द्रपुत्रे, जयन्ते, अर्जुने, सुग्रीववानरे, काके च ।

ऐन्द्रियक त्रि० इन्द्रियेण प्रकाश्यः वुञ् । इन्द्रियजन्यप्रत्यक्षेण प्रकाश्ये ।

ऐर न० इरा अन्नं तद्विकारः । अन्नमये ब्रह्मलोकस्थे सरसि च ।

ऐरावण पु० इरा सुरा जलमुदकं अत्र पूर्वपदादिति णत्वम् तत्र भवः अण् । इन्द्रगजे ऐरावते ।

ऐरावत पु० इरा जलानि सन्त्यस्य इरा+मतुप् मस्य व इरावान् समुद्रस्तत्र भवः अण् । समुद्रजाते इन्द्रगजे ।

ऐरावती स्त्री० इराः सन्त्यस्य मतुप् मस्य वः इरावान् तत्र समुद्रः भवा रण् । विद्युति ।

ऐरिण न० इरिणे ऊषरे भवः । लवणभेदे । (पांशु) ।

ऐरेय न० इरा अन्नम् तत्र भवः ढक् । अन्नभवे मद्ये ।

ऐल पु० इलायाः अपत्यम् । बुधपुत्रे पुरूरवोनामके नृपतौ ।

ऐलविल पु० इलविलाया अपत्यम् अण् । कुबेरे ।

ऐशानी स्त्री० ईशानो देवताऽस्याः । उत्तरपूर्वदिशि ।

ऐश्वर्य्य न० ईश्वरस्य भावः । अणिमाद्यष्टविधविभूतिभेदे ।

ऐषमस् अव्य० अस्मिन् वत्सरे नि० । वर्त्तमानवत्सरे ।

ऐहलौकिक त्रि० इह लोके भवः ठञ् द्विपदवृद्धिः । इहलोकजाते ।

ऐहिक त्रि० इह भवः कालाट्ठञ् । इहलोकभवे स्वशरीरसम्बन्धिनि स्रक्चन्दनादिसुखानुभवादौ च ।

## ओ

ओक पु० उच–क नि० चस्य कः पक्षिणि वृषले च ।

ओकस् न० उच–असुन् न्यङ्क्वादित्वात् कुत्वम् । स्थाने आश्रयमात्रे च

ओकोदनी स्त्री० ओक आश्रयः कूर्च्चरूपम् ओदनं भक्ष्यं यस्याः । (उकुण) केशकीटे ।

ओखृ शोषणे, भूषणे, निवारणे च सक०शोषणे अक० भ्वा०पर० सेट् । ओखति औखीत् । [हुताशने च ।

ओघ पु० उच–घञ् पृषो० च । समूहे, जलवेगे, परम्परायां

ओङ्कार पु० अव–मन् तस्याकारलोपः, ऊठ् गुणः; ओम् ततः स्वरूपे कार । प्रणवे ।

ओज बले अद० चुरा० उभ०अक० सेट् । ओजयति-ते औजिजत्-त ।

ओजस् न० उब्ज–असुन् बलोपे गुणः । दीप्तौ अवष्टम्भे, प्राणबले, प्रकाशे, सामर्थ्ये, ज्योतिषोक्ते प्रथमतृतीयादौ विषमराशौ, मल्लादिकौशले, धातुतेजसि, ज्ञानेन्द्रियाणां पाटवे, काव्यगुणभेदे, गौडरीत्याम्, वैद्यकोक्ते "भ्रमरैः फलपुष्पेभ्यो यथा सम्भ्रियते मधु । तद्वदोजः शरीरेभ्यो धातुः सम्भ्रियते नृणाम्" इति लक्षणे धातुरसपोषके वस्तुभेदे च । अष् । ओजशब्दोऽप्यत्र ।

ओजिष्ठ त्रि० अतिशयेनोजस्वी ओजस्विन् इष्ठन् मतोर्लुक् । अतितेजस्विनि सारतमे च ।

ओडिका स्त्री० उ–ड तस्य नेत्त्वम् गौरा० ङीष् स्वार्थे क ह्रस्वः । (उड़िधान) नीवारे ।

ओडी स्त्री० उ–ड तस्य नेत्त्वम् गौरा० ङीष् । (उड़ीधान) नीवारे ।

ओड्र पु० न० आ+ईषत् उनत्ति उन्द–रक् दस्य डः । जवापुष्पे ।

ओड्रपुष्प पु० ओड्रं पुष्पमस्य । जवावृक्षे ।

ओण अपनयने भ्वा० पर० सक० सेट् । ओणति औणीत् ।

ओत त्रि० आ+वेञ्–क्त । अनुस्यूते "ओतञ्च प्रोतञ्चेति" श्रुतिः । पटे दीर्घतन्तौ च ।

ओतु त्रि० अव–तुन् ऊठ् गुणः । बिडाले ।

ओदन पु० उन्द–युच् नलोपो गुणश्च । भक्ते सिक्थके ।

ओदनपाकी स्त्री० ओदनस्य पाक इव पाको यस्याः ङीष् । नीलझिण्टिकायाम् ओषधिभेदे च ।

ओदनी स्त्री० ओदन इवाचरति ओदन+क्विप्—ततः अच् गौरा० ङीप् । (बेलेडा) बलायाम् ।

ओम् अव्य० अव—मन् तस्यातोलोपः गुणः । प्रणवे, आरम्भे, स्वीकारे, ओमित्यनुज्ञावतोऽप्येति माघः । अनुमतौ, अपाकृतौ, अस्वीकारे, मङ्गले, शुभे, ज्ञेये, ब्रह्मणि च ।

ओल पु० आ—उनत्ति आ+उन्द—क नलोपे पृषो० दस्य लत्वम् । सूरणे (ओल) इति ख्याते कन्दे । आर्द्रे त्रि० ।

ओलज क्षेपे इदित् भ्वा० पर० सक० सेट् । ओलज्जति औलज्जीत् ।

ओलण्ड क्षेपे वा चुरा० उभ० पक्षे भ्वादि० पर० सक० सेट् । ओलण्डयति ते ओलण्डति औलिलण्डत् त औलण्डीत् ।

ओष पु० उष—घञ् । दाहे ।

ओषण पु० उष—ल्यु । कटुरसे (झाल) इति ख्याते रसभेदे ।

ओषधि स्त्री० ओषो दाहो धीयतेऽत्र । ओष+धा—कि जातिविवक्षत्वात् स्त्रीत्वं वा ङीप् ओषधी च । फलपाकान्ते व्रीह्यादौ ।

ओषधिप्रस्थ पु० न० । ओषधिप्रधानः प्रस्थः शाक० । हिमालयपुरे ।

ओषधिपति पु० ६त० । चन्द्रे । ओषधीशोऽप्यत्र ।

ओष्ठ पु० उष्यते उष्णाद्याहारेण उष—कर्मणि थन् । (ठोंट) दन्तच्छदे ।

ओष्ठपुष्प पु० ओष्ठोपमानं पुष्पं यस्य । बन्धूकवृक्षे ।

ओष्ठी स्त्री० ओष्ठ इवाचरति ओष्ठ+क्विप् ततः अच् गौरा० ङीप् । बिम्बफलनामके (तेलाकुचा) वृक्षे । [बिम्बिकालतायाम् ।

ओष्ठोपमफला स्त्री० ओष्ठ उपमीयतेऽनेन ओष्ठोपमं फलं यस्याः ।

## औ

औक्ष न० उक्ष्णां वृषाणां समूहः अण् टिलोपः वृषसमूहे । वुञ् । औक्षकमप्यत्र ।

औख्य त्रि० उखायां पक्वम् ष्यञ् । स्थालीपक्वे मांसादौ ।

औचिती स्त्री० उचितस्य भावः ष्यञ् । स्त्रीत्वमथ षित्वात् ङीप् यलोपः न्याय्यत्वे युक्तत्वे च ।

औचित्य न० उचितस्य भावः ष्यञ् । उचितस्य भावे न्याय्यत्वे ।
औदुम्बर पु० चतुर्दशसु यमेषु मध्ये यमभेदे, कुष्ठरोगभेदे च ।
औत्कण्ठ्य पु० उत्कण्ठाया भावः ब्राह्म० ष्यञ् । उत्कण्ठायाम् ।
औत्तानपादि पु० उत्तानपादस्य नृपभेदस्यापत्यम् इञ् ऐहिकभोग-

साधनकर्मान्ते ज्योतिर्मण्डले निश्चलतया तारकारूपेण स्थिते

ध्रुवनामके नृपतौ ।

औत्सर्गिक त्रि० उत्सर्गं सामान्यविधिमर्हति ठञ् । सामान्यविधियोग्ये ।
औत्सुक्य न० उत्सुकस्य भावः ष्यञ् । उत्कण्ठायाम् "औत्सुक्येन

कृतत्वरेति रत्नावली" ।

औदनिक त्रि० ओदनः शिल्पमस्य ठञ् । सूपकारे ।
औदरिक त्रि० उदरे प्रसितः ठक् । आद्यूने, (पेटुक) उदरमात्र-

पूरणापेक्षके ।

औदश्वित न० उदश्विति अर्द्धजलमथिते तक्रे संस्कृतम् अण् ।

उदश्वित्संस्कृते द्रव्ये । तत्रार्थे ठकि औदश्वित्कमप्यत्र ।

औदार्य्य न० उदारस्य भावः गुणवचनत्वात् ष्यञ् । उदारतायाम् ।
औदासीन्य न० उदासीनस्य भावः ष्यञ् । शुभाशुभयोरुपेक्षायाम्

तटस्थत्वे ।

औदास्य न० उदास्ते उद्+आस–अच् भावार्थे ष्यञ् । वैराग्ये ।

अनुरागशून्यतायाम् मनोयोगविरहे ।

औद्दालक न० "प्रायो वल्मीकमध्यस्थाः कपिलाः स्वल्पकीटकाः ।

कुर्वन्ति कपिलं स्वल्पं तत् स्यादौद्दालकं मधु इत्युक्ते मधुनि ।

औद्भिद न० "उद्भिदं पांशुलवणं यज्जातं भूमितः स्वयम्" इत्युक्ते

पांशुलवणे, "विदार्य्य भूमिं निम्नां यत् महत्या धारया स्रवेत् ।

तत्तोयमौद्भिदं नाम" इत्युक्तलक्षणे जले च । उद्भिद्य जायते

जन–ड उद्भिज्जं ततः स्वार्थेऽण् औद्भिज्जमप्यत्र ।

औद्वाहिक न० उद्वाहकाले लब्धं ठञ् । विवाहकाले लब्धधनादौ ।

"मैवमौद्वाहिकस्यैव" इति स्मृतिः ।

औपचारिक पु० उपचार एव विनयादित्वात् स्वार्थे ठक् । उपचारार्थे ।

औपनिषद् पु० उपनिषद्भिरेव वेद्यः अण्। वेदान्तमात्रवेद्ये परमात्मनि "तं त्वौपनिषदं पुरुषम्" इति श्रुतिः।

औपनीविक त्रि० नीविसमीपे आसृतं ठक्। नीविसमीपे आसृते। "औपनीविकमरुन्ध किल स्त्री" इति माघः।

औपम्य न० उपमैव चतुर्वर्णा० स्वार्थे ष्यञ्। सादृश्ये।

औपयिक त्रि० उप+अय–घञ् उपायस्तेन लब्धः ठक् ह्रस्वश्च। उपायलब्धे, युक्ते न्यायागतवस्तुनि च। [रोगभेदे।

औपसर्गिक पु० उपसर्गस्य निमित्तादितः ठञ्। वातादिसन्निपातजाते

औरभ्र न० उरभ्रस्य मेषस्येदम् अण्। मेषादिलोमजाते कम्बले।

औरभ्रक न० उरभ्राणां समूहः वुञ्। मेषसमूहे।

औरस पु० उरसा निर्मितः अण्। "सवर्णायां संस्कृतायां स्वयमुत्पादयेत्तु यम्। औरसं तं विजानीयादित्युक्तलक्षणे पुत्रे।

और्द्ध्वदेहिक त्रि० ऊर्द्ध्वो देहः प्रेतदेहः तत्र भवं तस्मै देयं वा श्राद्धादि ठक्। मृतदिनमारभ्य सपिण्डीकरणान्तं क्रियमाणे जलदानश्राद्धादिलक्षणे कर्म्मकलापे। अनुशतादित्वात् द्विपदवृद्धौ और्द्ध्वदैहिकमप्यत्र।

और्व पु० ऊर्वस्यापत्यम् अण्। वाडवानले तस्योर्वमुनिजातत्वात् तत्स्थानञ्च भूगोलस्य दक्षिणसीमायाम्। उर्व्यां भवः। पांशुलवणे।

औलूक न० उलूकानां समूहः अण्। पेचकसमूहे।

औलूक्य पु० वैशेषिकदर्शनकारके कणादमुनौ तच्छास्त्रवेत्तरि च।

औशनस न० उशनसा शुक्रेण प्रोक्तम् अण्। शुक्रप्रोक्ते उपपुराणादौ दण्डप्रणयनरूपे शास्त्रे च।

औशीर न० वश–ईरन् किच्च ततः प्रज्ञाद्यण्। समुदितयोः शय्यापीठयोः।

औषध न० ओषध्यां भवः अण्। रोगनाशके ओषधिभवे द्रव्ये, रोगहारके द्रव्यमात्रे।

औष्ट्र न० उष्ट्रस्येदम् अण् । उष्ट्रदुग्धादौ ।

औष्ट्रक न० उष्ट्राणां समूहः वुञ् । उष्ट्रसमूहे ।

औष्ठ्य त्रि० ओष्ठे भवः यत् । ओष्ठस्थानोच्चार्य्ये वर्णे उवर्णपवर्गादौ ।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचिते
शब्दस्तोममहानिधौ स्वरवर्णादिकाः
शब्दाः समाप्ताः ।

ओँतत्सत् ।

---

## क

**क** पु० कै शब्दे कच दीप्तौ, वा ड। ब्रह्मणि, वायौ, आत्मनि, यमे दक्षप्रजापतौ सूर्य्ये, अग्नौ, विष्णौ, काले, कामग्रन्थौ, राजनि, मयूरे, देहे, मनसि, धने, प्रकाशे, शब्दे च। सुखे शिरसि, जले, रोगे च न०।

**कंस** पु० कन-स। उग्रसेनसुते नृपे श्रीकृष्णमातुले। तैजसद्रव्ये, कांस्ये, (ताम्ररङ्गमिश्रणजनितधातुद्रव्ये। (काँसा) स्वर्णरजतादि-निर्म्मितपानपात्रे। आढ़क इति प्रसिद्धे परिमाणे च अस्त्री०। पुंसो० ताम्रपात्र इति केचित्।

**कंसक** न० कंसादिव कं जलं यस्मात् ५ब०। (हीराकस) इति प्रसिद्धे नेत्रौषधौ तत्संयोगाद्धि अग्निसंयोगेन कंसादिव चक्षुरा-दितो जलं स्रवति।

**कंसकार** पु० कंस+कृ-अण् उप०। (काँसारी) इति प्रसिद्धे जातिभेदे।

**कंसजित्** पु० कंस+जि-क्विप् ६त०। कंसरूपजयकारिणि, श्रीकृष्णे।

**कंसहन्** पु० कंस+हन्-क्विप् ६त०। कंसदैत्यघातके श्रीकृष्णे।

**कंसाराति** पु० कंस+अराति ६त०। कंसरूपशत्रौ श्रीकृष्णे।

**कंसास्थि** न० कंसः अस्थीव उपमितसमासः। शुक्लतयाऽस्थिसदृशे (काँसा) इति प्रसिद्धे धातुभेदे।

**कक** इच्छायाम् भ्वादि० आत्म० सक० सेट्। ककते। अककिष्ट।

**कक्क** गतौ भ्वादि० इदित् आत्म० सक० सेट्। कङ्कते। अकङ्किष्ट।

**ककुत्स्थ** पु० ककुदि असुरवधार्थमिन्द्रेण प्रार्थितः सन् वृषरूपधरस्य इन्द्रस्य ककुदि पृष्ठभागे तिष्ठतीति ककुत्+स्था-क। सूर्य्यवंशीय-नृपभेदे यदपत्यतया काकुत्स्थेति संज्ञाभाजः सूर्य्यवंशीया अभवन्।

**ककुद्** अस्त्री० कं सुखं कौति कुशब्दे क्विप् तुक् च तस्य दः। वृष-स्कन्धपृष्ठस्थमांसपिण्डाकारे, (झुंट) इति ख्याते वृषाङ्गे, श्वेतच्छ-त्रादौ नृपचिह्ने, प्रधाने, पर्वताग्रभागे च।

ककुद अस्त्री० कस्य देहस्य सुखस्य वा कुं भूमिं ददाति दा-क । ( झुंट ) इति ख्याते वृषाङ्गे, प्रधाने, नृपचिह्ने, छत्रादौ, पर्वताग्रभागे च ।

ककुद्मत् पु० ककुदस्यास्तीति मतुप् मयन्तत्वेऽपि यवादित्वात् न मस्य वः । वृषे, वृषोषधिविशेषे च । ककुदिव मांसपिण्डमस्यास्तीति मतुप् ङीप् । कन्याम् स्त्री० ।

ककुन्दर न० कस्य शरीरस्य (पृष्ठदेशस्य) कुं भूमिं दारयतीति ककु-दृ-णिच्-अच् पृषो० । पृष्ठवंशाधःस्थ गर्त्ताकारे कूपके ।

ककुभ् स्त्री० कं वातं स्कुभ्नाति स्कुन्भ क्विप् पृषो० । दिशि, शोभायाम्, चम्पकमालायाम्, शास्त्रे, रागिणीभेदे च ।

ककुभ पु० कं वातं स्कुभ्नातीति क पृषो० । वीणाङ्गे, स्वरगाम्भी-र्य्यसम्पादनार्थमधोवक्रदारुमयभाण्डे । कस्य वातस्य कुः भूमिः भात्यस्मात् ककु+भा–क । विस्तीर्णशाखत्वात् वातभूमिप्रकाशकेऽ-र्ज्जुनवृक्षे, रागभेदे च । दिशि, रागिणीभेदे च स्त्री० ।

कक्क हासे भ्वादि० पर० अक० सेट् । कक्कति अकक्कीत् ।

कक्कोल पु० कक्कते गच्छतीति क्विप् कक्, कोलति संस्त्यायति अच् कोलः कक् चासौ कोलश्चेति कर्म० । गन्धद्रव्यभेदे (कांकोल) इति वङ्गभाषाख्याते वनकपूर इति पाश्चात्यख्याते ।

कक्कोलक न० इदमर्थे कन् । कक्कोलफलजाते गन्धद्रव्ये वनकपूर इति ख्याते । तस्य कोषे फलवत्त्वात् कोषफल इति प्रसिद्धिः ।

कक्ष पु० कष–हिंसायां स । स्त्रीणाम् उत्तरीयवस्त्रस्य पश्चाद्भागस्थे अञ्चले (आँचल) लतायाम्, शुष्कतृणे, शुष्कवने च । पार्श्वभागे, राजान्तःपुरे, बाह्वोर्मूले पृष्ठप्रदेशनिहिताधोंऽशुकस्यैकदेशे (काछा) वस्त्राञ्चले, हस्तिबन्धनरज्ज्वाम्, काञ्च्याम्, प्रकोष्ठके, गृहभित्तौ, साम्ये, चर्म्मासरे कक्षरोगभेदे च (कांकविराली) स्त्री० ।

कक्षावेक्षक पु० कक्षं वनमुपवनं साम्यं स्त्रीणामञ्चलं वा कक्षां रा-जगृहान्तं वावेक्षते अव-ईक्ष ण्वुल् । गृहान्तपालके, उद्यानपाले, रङ्गाजीवे, कवौ, जारे च ।

कच्छोत्था स्त्री० कच्छात् शुष्कस्थानात् उत्तिष्ठति उद्+स्था-क। भद्रमुस्तायाम्।

कच्छा स्त्री० कच्छे भवा यत्। झिल्लिकायाम् कक्ष्यादिप्रकोष्ठे, सादृश्ये, वस्त्ररज्जौ, मेखलायाम् गजवक्षनरज्जौ उद्योगे, परार्थबद्धकक्षाणां ताद्दशाद्भव: कुत इति, उत्तरीयवस्त्रे च। [अकगीत्।

कग क्रियासामान्ये भ्वादि० पर० सक० अक० च सेट्। कगति अकगीत्

कङ्क पु० ककि गतौ अच्। (कांक) पक्षिभेदे यस्य पक्षेण शरपुङ्खः क्रियते। युधिष्ठिरे च सहि विराटनगरे तां संज्ञां लेभे।

कङ्कट पु० कं देहं कटति क+कट-मुम् च, ककि लौल्ये अटन् वा। कवचे। स्वार्थे कन्। कङ्कटकोऽप्यत्र। [साले च।

कङ्कण न० कं शुभं कणति कम्-कण- अच्। करभूषणे, भूषण-

कङ्कत न० ककि-अतच्। केशप्रसाधन्याम् (काकुइ)।

कङ्कतिका स्त्री० ककि-अतच् गौरा० ङीष् स्वार्थे कनि ह्रस्वे टाप्। प्रसाधन्याम् (कांकुइ) नागबलायाञ्च।

कङ्कती स्त्री० ककि-अतच् गौरा० ङीष्। प्रसाधन्याम्।

कङ्कत्रोटि पु० कङ्कस्य त्रोटिरिव चञ्चुरस्य। मत्स्यभेदे (काकिला) अच् समा०। कङ्कत्रोटोऽप्यत्र।

कङ्कपत्र पु० कङ्कस्य पत्रेण पत्रं पक्षोऽस्य। पुङ्खे तत्पक्षयुक्ते शरे।

कङ्कमुख पु० कङ्कस्य मुखमिव मुखमस्य। (सांड़ाशि) सन्दंशे।

कङ्काल पु० कं सुखं शिरो वा कालयति क्षिपति कल-अच्। त्वङ्मांसरहितशरीरारम्भकेऽस्थिपञ्जरे।

कङ्कालमालिन् पु० कङ्कालानां मालाऽस्त्यस्य इनि। रुद्रे।

कङ्गु(ङ्गू) पु० ककि-उ। (काङ्नी) धान्यभेदे। पृषो० कस्य गः कङ्गुरप्यत्र। [हिल्वे। कङ्केल्लिरप्यत्र।

कङ्केल्ल पु० कङ्कुरिव ईलति कङ्क+ईल-क। अशोकवृक्षे। पृषो० लस्य

कच रवे भ्वा० पर० अक० सेट्। कचति अकचीत् अकाचीत्।

कच बन्धे, दीप्तौ च भ्वा० पर० इदित् सक० सेट्। कञ्चति अकञ्चीत्।

कच बन्धे, सक० दीप्तौ अक० भ्वादि० आत्म० सेट्। कचते अकचिष्ट।

**कच** पु० कच–अच्। केशे, बृहस्पतिपुत्रे, शुष्कव्रणे, मेघे च। कचिमध्यां स्त्री०। भावे घ। बन्धे शोभायाञ्च।

**कचाचित** त्रि० कच आचितो विकीर्णो यस्य। विकीर्णकेशे। "कचाचितौ विष्वग्" इति भारविः।

**कचामोद** न० कचमामोदयति आ+मुद–णिच् अच्। (वाला) इति ख्याते गन्धद्रव्ये। [पतिकाङ्के द्रुमे।

**कचु** स्त्री० कच–उ। स्वनामख्याते (हरिद्रा मानक कचुरिति) मव-

**कच्चर** त्रि०कुत्सितं चरति कु–चर–अच् कदादेशः। मलिने। तक्रे न०।

**कच्चित्** अव्य० काम्यते इति कम् चीयते निश्चीयते अर्थो यस्मात् कम्+चि–क्विप् पृषो० मस्य दः। स्वाभिलषितज्ञापनाय कृते प्रश्ने, हर्षे, मङ्गले च।

**कच्छ** त्रि० कच–बन्धे–ड, केन जलेन छ्यति दीप्यते छद–ड वा। जलप्राये देशे। तटे, पुन्नागद्रुमे, नौकाङ्गे च पु०। परिधानाञ्चले, (काछा) वाराहयाम्, चीरिकायाञ्च (भिल्ली) स्त्री०।

**कच्छप** पु० कच्छं पिबति पा–क। कूर्मे। स्त्रियां जातित्वात् ङीप्। मल्लयुद्धबन्धभेदे च।

**कच्छरुहा** स्त्री० कच्छे जलप्रायदेशे रोहति रुह–क। दूर्व्वायाम्।

**कच्छुर** त्रि० कच्छूरस्यास्ति र ह्रस्वश्च। कच्छूरोगवति। कुत्सितं छुरति कु+छुर–क कदादेशः। परस्त्रीगामिनि। पुंश्चल्यां स्त्री०।

**कच्छू** स्त्री० कषं दीप्तिं छ्यति छो–कू। कण्डूकारके रोगभेदे।

**कच्छूघ्नी** स्त्री०कच्छूं हन्ति हन–टक् टित्वात् ङीप्। पटोललतायाम्।

**कच्छूरा** स्त्री० कच्छूं राति ददाति रा–क। शूकशिम्ब्याम् (आलकुशी) शट्याम्, गन्धशट्याञ्च।

**कच्छोटिका** स्त्री० कच्छया उटिका वेष्टनं वट धात्वर्थनिर्द्देशे वुञ् सम्प्रसारणञ्च। कच्छावेष्टने। अर्श आद्यचि स्त्रीत्वात् टाप् कच्छवेष्टनयुक्तायां शाट्याम्।

**कज** रोचे (सौत्रः) इदित् पर० अक० सेट्। कञ्जति अकञ्जीत्।

**कज्जल** न० कुत्सितमीषद्वा जलं नेत्रस्य यस्मात् कोः कद्। अञ्जने।

तद्वर्णत्वात् मेघे पु० । मत्स्यभेदे स्त्री० टाप् ।

कज्जलरोचक पु० न० कज्जलं रोचयति रुच–णिच्–अण् । दीपाधारे (पिलसुज) इति वङ्गभाषायां प्रसिद्धे ।

कञ्चिका स्त्री० कचि ण्वुल् । वंशशाखायाम् (कञ्ची) ।

कञ्चुक पु० कचि–उकन् । योधादेः चोलाकृतौ सन्नाहे लौहवर्म्मणि, निर्म्मोके (खोलस) स्त्रीणां चूलिकायां वस्त्रे च ।

कञ्चुकिन् पु० कञ्चुक+इनि । राज्ञामन्तःपुराधिकारिणि द्वारपाले, सर्पे जारे, यवे, चणके च । आवृतकवचे त्रि० ।

कञ्चुलिका स्त्री० कचि–उल गौरा० ङीप् स्वार्थे कन् ह्रस्वे टाप् । स्त्रीणां कूर्पासवस्त्रे (कांचली) कनभावे । कञ्चुलीत्यप्यत्र ।

कञ्ज पु० कमित्यव्ययं जलादिवाचि तस्मिन् जले मूर्ध्नि वा जायते जन–ड । पद्मे, केशे, कारणजले विष्णुबीजजातत्वात् चतुरानने च ।

कञ्जक पु० कञ्जः केशइव कायति कै–क । (मयना) पक्षिभेदे तस्य कृष्णवर्णत्वेन केशतुल्यत्वात् ।

कञ्जार पु० कं जलं जारयति जॄ–अण् । सूर्य्ये, ब्रह्मणि च । उदरे न० । ऋषौ च । कञ्जरोऽप्यत्र ।

कट गतौ भ्वादि० पर० सक० सेट् । कटति अकटीत् अकाटीत् ।

कण्ट गतौ भ्वा० इदित् पर० सक० सेट् । कण्टति अकण्टीत् ।

कट गतौ भ्वा० पर० सक० सेट् । कटति अकटीत् अकाटीत् कट्टः ।

कट हतौ वर्षणे च भ्वादि० पर० सक० सेट् । कटति अकटीत् ।

कट पु० कट–अच् कर्म्मणि घ वा । हस्तिगण्डस्थले, कटिपार्श्वे, नडादिरचिते आसने (मादुर) (दरमा) । अतिशये, काले, तृणे, शवे, शवरथे, ओषधौ, श्मशाने च । क्रियाकारके त्रि० ।

कटम्बरा स्त्री० कटं वृणोति कट+वृ–खच् मुम् च । (कटकी) कटुरोहिण्याम् । कटंवराप्यत्र ।

कटक अस्त्री० कट–वुन् । मेखलाख्ये पर्वतमध्यभागे, बाहुभूषणे वलये, हस्तिदन्तमण्डले, चक्रे, सामुद्रलवणे, राजधान्याम्,

सेनायाञ्च । [कामरूपिणि राघवे च ।

**कटप्रू** पु० कटं प्रवते प्रु—क्विप् दीर्घश्च । महादेवे, विद्याधरे,

**कट(टि)प्रोथ** प्रोथ—अच् कटस्य (कट्या वा) प्रोथोमांसपिण्डः । स्फिचि कटिदेशस्थमांसपिण्डे, कट्याञ्च ।

**कटभङ्ग** पु० भनूज—भञ् ईत० । सैन्यभङ्गद्वारा राजविनाशे, धान्यानां हस्तच्छेदने च । [अपराजितायाञ्च ।

**कटभी** स्त्री० कट इव भाति भा—क गौरा० ङीष् । ज्योतिष्मतीलतायाम् ।

**कटम्भरा** स्त्री० कटं विभर्त्ति भृ, खच् मुम् च । (गन्धभादाल) राजबलायाम् । स्योनाकवृक्षे पु० ।

**कटशर्करा** स्त्री० कथ्यते आव्रियते कटं फलं तत् शर्करा सर्परेव यस्याः (काटा) गाङ्गेष्ठीलतायाम् ।

**कटाक्ष** पु० कटं गण्डं अक्षति व्याप्नोति अच् । अपाङ्गदृष्टौ ।

**कटायन** न० कटस्य तथासनस्यायनमुत्पत्तिस्थानम् । वीरणमूले ।

**कटाह** पु० कटमाहन्ति आ—हन—ड । महिषशिशौ, तैलादेः पाक-साधनपात्रे, खर्परे, नरके च ।

**कटि(टी)** स्त्री० कट—इन् । श्रोणिदेशे (कांकाल) । कृदिकारान्त-त्वात् वा ङीप् । [बर्म्मणि च ।

**कटित्र** न० कटिं त्रायते त्रै—क । काञ्चयाम्, कटिवस्त्रे, कटि-

**कटिल्ल** पु० कट—इल्ल । कारवेल्ले (करेला) ।

**कटिसूत्र** न० कटौ धार्य्यं सूत्रं शाक० । कटिधार्य्ये कार्पासरचिते धातुमये वा सूत्रे (घुनसी गोट) । [यद्बो धार्य्यते ।

**कटीतल** पु० कट्यां तलमासदमस्य । वक्रखड्गे यतोऽसौ कटिदेशे

**कटीर** पु० कट—ईरन् । जघने, कन्दरे, च । कट्यां न० । संज्ञायां कन् नितम्बे । तद्वति, तीक्ष्णे, मत्सरिणि च त्रि० ।

**कटु** न० कट—उ । दूषणे, दुष्टकार्य्ये, रसभेदे (झाल) तद्वति त्रि० । चम्पके, चीनकर्पूरे, पटोले, कटुकीलतायाञ्च स्त्री० वा ङीप् ।

**कटुक** पु० कटु स्वार्थे संज्ञायां वा कन् । पटोले, सुगन्धितृणे, अर्क-वृक्षे, (आकन्द) कुटजवृक्षे, (कुरची) राजसर्षपे, (राइसर्षा)

शुण्ठीपिप्पलीमरिचरूपे त्रिकटुनि न० । [लशुने च ।
कटुकन्द पु० कटुः कन्दो मूलं यस्य । शिग्रुवृक्षे (सजना) आर्द्रके,
कटुकफल पु० कटुकं फलमस्य । कक्कोले ।
कटुका स्त्री० कटु+संज्ञायां कन् । (कट्की) कटुरोहिण्याम्, ता-
म्बूल्यां राजिकायां, (राइसर्षा) तिक्तालाबुनी च (तितलौ) ।
कटुकी स्त्री० कटु+स्वार्थे कन् गौरा० ङीष् । (कट्की) कटुकायाम् ।
कटुकीटक पु० कटुः कीटः स्वार्थे कन् । मशके ।
कटुक्वाण पु० कटुस्तीक्ष्णः क्वाणो यस्य । (तितिर) टिट्टिभपक्षिणि ।
कटुग्रन्थि पु० न० । कटुर्ग्रन्थिरस्य । पिप्पलीमूले, शुण्ठीमूले च ।
कटुच्छद पु० कटुः छदः पत्रं यस्य । तगरवृक्षे (टगर) ।
कटुतिक्तक पु० कटुश्चासौ तिक्तश्चेति अल्पार्थे कन् । भूनिम्बे, शण-
वृक्षे च कटुतुम्ब्याम् स्त्री० । टाप् अत इत्त्वम् ।
कटुतुम्बी स्त्री० कर्म० । (तितलाउ) लताभेदे । कटु तुण्डं मुख-
मस्याः ङीष् कटुतुण्डीत्यप्यत्र । [त्रिकमप्यत्र ।
कटुत्रय न० कटूनां त्रयम् । शुण्ठीपिप्पलीमरिचानां त्रये । कटु-
कटुदला स्त्री० कटु दलं यस्याः । (काँकुड़) कर्कट्याम् ।
कटुफल पु० कटु फलं यस्य । पटोले । कोषातक्यां स्त्री० ।
कटुभङ्ग पु० कटुः भङ्ग एकदेशो यस्य । शुण्ठ्याम् । कटुरपि भद्रः ।
हितकारी कर्म० कटुभद्रोऽप्यत्र ।
कटुमञ्जरिका स्त्री० कटुर्मञ्जरी यस्याः । अपामार्गे ।
कटुर न० कटुं विपाके कटुरसं राति रा—क । तक्रे ।
कटुरस पु० कटुस्तीक्ष्णो रसो ध्वनिर्यस्य । भेके ।
कटुरोहिणी स्त्री० कटुः सती रोहति णिनि । कटुकायाम् ।
कटुशार्ङ्गीको स्त्री० कर्म० । श्वेतकण्टकारिकायाम् ।
कटुबीजा स्त्री० कटु बीजं यस्याः । पिप्पल्याम् ।
कटुस्नेह पु० कटुः स्नेहः तैलादिरूपो निर्यासो यस्य । सर्षपे ।
कट्टार पु० कटी—क्त कट्टमावरणम् ऋच्छति ऋ—अण् । (काटार)
शस्त्रभेदे । ऋ—ण्वुल् कट्टारकोऽप्यत्र ।

कट्फल पु० कट—क्विप् कट् फलं यस्य । (कायफल) श्रीपर्णीवृक्षे गाम्भार्य्याम्, (गामार) हस्तायाम्, काकमाच्याम्, वार्त्ताक्याञ्च ।

काटुर न० कट—अरच् । तक्रे, दधिसरे, व्यञ्जने च ।

कट्वी स्त्री० कटु+गुणवचनत्वात् ङीष् । (कट्की) कटुकायाम् ।

कठ कृच्छ्राने (उत्कण्ठापूर्वकस्मरणे) वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् इदित् । कण्ठयति ते कण्ठति । अचकण्ठत् त अकण्ठीत् । [अकाठीत् ।

कठ कृच्छ्रजीवने भ्वादि० पर० अक० सेट् । कठति अकठीत्

कठ आध्याने उत्कण्ठापूर्वकस्मृतौ इदित् भ्वा० आत्म० सक० सेट् । प्रायेणोत्पूर्वः । उत्कण्ठते उदकण्ठिष्ट । [तरि च ।

कठ पु० कठ—अच् । मुनिभेदे तत्प्रोक्तायां शाखायाम् तदध्येतरि च ।

कठाकु पु० कठ काकु । पक्षिभेदे ।

कठिञ्जर पु० कठ—इन् कठिं कठिनं जरयति जॄ+णिच्—अच् । पृषो० मुम् च । तुलस्याम् पलाशदले पर्पटायाञ्च । [स्त्री० ।

कठिन त्रि०कठ—इनच् । क्रूरे, निष्ठुरे, कठोरे, स्तब्धे च स्थाल्याम्

कठिनपृष्ठ पु० कठिनं पृष्ठमस्य । कच्छपे ।

कठिनी स्त्री० कठिन+गौरा० ङीष् । वर्णलेखनसाधने द्रव्ये । खटिकायाम् । "कठिनीः क्षिणोति" इति नैषधम् स्वार्थे कन् अत्र वार्थे । [खटिकेनक्षयिरिति भावः ।

कठोर त्रि० कठ—ओरन् । कठिने, पूर्णे च । कठोरताराधिप-

कड भेदने रक्षणे च चुरा० इदित् उभ० सक० सेट् । कण्डयति ते अचकण्डत् । [अकण्डिष्ट ।

कड हर्षे भ्वा० उदित् उभ० सक० सेट् । कण्डति ते अकण्डीत्

कड भक्षणे तुदा० पर० सक० सेट् । कडति अकाडीत् अकडीत् ।

कडक न० कड—अच् संज्ञायाम् कन् । (करकच) लवणभेदे ।

कडङ्गर न० कडं गिरति गृणाति वा अच् नि० मुम् । आपमुद्गादिकाष्ठे (आगड़ा) वुषे ।

कडङ्गरीय त्रि० कडङ्गरमर्हति । वृषभछागादौ गवादौ ।

कडम्ब पु० कड–अम्बच्। शाकनाडिकायाम्, (डाँट) कोणे, प्रान्तभागे च।

कडम्बी स्त्री० कडम्बो भूयसा विद्यतेऽस्याः अर्श आद्यचि गौरा० ङीष्। (कलमी) शाकभेदे तस्याः कडम्बभूयस्त्वात्।

कडार पु० गड–सेचने आरच् गस्यकादेशः। पिङ्गलवर्णे। तद्वति त्रि०। करभकण्टकडारभाया इति माघः।

कड्ड कार्कश्ये भ्वा० पर० अक० सेट्। कड्डति अकड्डीत्।

कण आर्त्तस्वरे भ्वा० पर० अक० सेट्। कणति अकाणीत् अकणीत्। णिचि अचीकणत् त अचकाणत् त। [णति ते।

कण गतौ भ्वा०पर० सक० सेट्। कणति अका(क)णीत्। णिचि कण-

कण पु० कण–निमीलने अच्। धान्यादेरतिसूक्ष्मांशे, लेशे च गौरा० ङीष् वनजीरके स्त्री०। अल्पार्थे टाप्। क्षुद्रांशे, जीरके पिप्पल्याम्, श्वेतजीरके च। कणत् अचकाणत् त।

कण निमीलने चुरा० उभ० अक० सेट्। काणयति ते। अची-

कणजीरक न० कर्म०। क्षुद्रजीरके।

कणभक्ष पु० भक्ष–अण् उप०। श्यामचटके कणादे मुनौ "कणभक्षपक्षानुसारिणामिति प्रकाशिका। ण्वुल् कणभक्षकोऽप्यत्र।

कणिक पु० कणा विद्यतेऽस्य अस्त्यर्थे ठन्। गोधूमचूर्णे, (मयदा) अतिसूक्ष्मांशे, अग्निमन्थवृक्षे च स्त्री०।

कणित न० कण आर्त्तस्वरे क्त। पीडितानां शब्दे।

कणिश न० कणो विद्यतेऽस्य इनि कणी तं श्यति शो–क। सस्यमञ्जर्यां धान्यादिशीर्षे च।

कणीयस् त्रि० कण–ईयसु। अत्यन्ताल्पे।

कणे अव्य० कण–के। अभिलाषातिशये।

कणेर पु० कण–एर। कर्णिकारवृक्षे। वेश्यायां, हस्तिन्याञ्च स्त्री०।

कण्टक पु० न० कटि ण्वुल्। क्षुद्रशत्रौ, क्षुद्रमत्स्ये, रोमाञ्चे, मत्स्याद्यस्थि द्रुमाङ्गे (कांटा) "लग्नाम्बुद्यूनकर्माणि केन्द्रमुक्तञ्च कण्टकम् इति ज्योतिषोक्ते लग्ने, ततः चतुर्थसप्तमदशमस्थानेषु च।

**कण्टकद्रुम** पु० कण्टकाचितो द्रुमः शाक० । शाल्मलीवृक्षे (शिमुल) ।

**कण्टकप्रावृता** स्त्री० ३त० । घृतकुमार्य्याम् ।

**कण्टकफल** पु० कण्टकाचितं फलं यस्य । पनसवृक्षे (काँटाल) कण्टकिफलोऽप्यत्र । [ (बैंगुण) तस्याहन्ते कण्टकाचितत्वात् ।

**कण्टकवृन्ताकी** स्त्री० कण्टकाचिता वृन्ताकी । वार्त्ताक्याम्

**कण्टकश्रेणी** स्त्री० कण्टकानां श्रेणी यत्र । कण्टकार्य्याम् ।

**कण्टकारिका** स्त्री० कण्टकान् इयर्त्ति कण्टक+ऋ—ण्वुल् स्वनाम-ख्याते वृक्षे । फलेऽपि लुक् हरितक्यादित्वात् स्त्री० ।

**कण्टकारी** स्त्री० कण्टक+ऋ—अण् वृहत्याम् । फलेऽपि तस्य लुक् हरितक्यादित्वात् स्त्री० ।

**कण्टकाशन** पु० कण्टकमश्नाति अश—ल्यु । उष्ट्रे ।

**कण्टकित** त्रि० कण्टको रोमाञ्चो जातोऽस्य इतच् । जातपुलके "प्रीतिकण्टकितत्वच" इति कुमारः ।

**कण्टकिन्** पु० कण्टक+इनि । मत्स्यभेदे, खर्ज्जूरवृक्षे विकङ्कतवृक्षे (बइँची) गोक्षुरे, खदिरवृक्षे, वदरवृक्षे, वंशभेदे, (वेड़ बाँश) । वार्त्ताक्यां, क्षोणिकण्टाग्रश्च स्त्री० ।

**कण्टकिल** पु० कण्टक+इलच् । (वेड़ुबाँश) । वंशभेदे ।

**कण्टकिलता** स्त्री० कण्टकिनी लता कर्म० । (शसा) त्रपुषीलतायाम् ।

**कण्टकी** स्त्री० कण्टक+अर्शआदित्वादच् गौरा० ङीष् । वार्त्ताकीभेदे ।

**कण्टतनु** स्त्री० कटि—अच् कण्टः कण्टकान्विता तनुर्यस्याः । वृहत्याम् ।

**कण्टदला** स्त्री० कटि—अच् कण्टं दलं यस्याः । केतक्याम् ।

**कण्टपत्र** पु० कण्टं कण्टकान्वितं पत्रं यस्य । विकङ्कतवृक्षे ।

**कण्टपत्रफला** स्त्री० कण्टं कण्टकान्वितं पत्रं फलञ्च यस्याः । ब्रह्म-दण्ड्याम् । [ (बइँची) ।

**कण्टपाद** पु० कण्टः कण्टकान्वितः पादो मूलं यस्य । विकङ्कतवृक्षे ।

**कण्टफल** पु० कण्टं कण्टकान्वितं फलं यस्याः । गोक्षुरे, पनसे, धूस्तूरे, लताकरञ्जे, एरण्डभेदे च ।

**कण्टल** पु० कण्ट+मत्वर्थीयो लच् । वावुले (वावला) ।

कण्टवल्ली स्त्री० कण्टा कण्टकान्विता वल्ली कर्म०। श्रीवल्लीवृक्षे ।
कण्टाङ्गला स्त्री० कण्ट । अङ्गला कर्म० । नीलझिण्ट्याम् ।
कण्टालु पु० कण्ट+आलु । वृहत्यां, वंशभेदे, वार्त्ताक्याञ्च ।
कण्ठ पु० कण–ठ तस्य नेत्वम् कठि–अच् वा । ग्रीवापुरोभागे, मदनवृक्षे, समीपे, होमकुण्डाद्बाह्येऽङ्गुलिमितस्थाने च ।
कण्ठतलासिका स्त्री० कण्ठतले अश्वकण्ठस्वरूपस्थाने आस्ते आस–ण्वुल् । अश्वग्रीवावेष्टकचर्म्मादौ ।
कण्ठाग्नि पु० कण्ठे अग्निः पाकाग्निर्यस्य । पक्षिणि, तस्य कण्ठाधःकरणमात्रेणैवान्नादेः पाकाद्दीप्ताग्नित्वात् कण्ठाग्नित्वम् ।
कण्ठाल पु० कठि–आलच् । शूरणे (ओल) युद्धे, उष्ट्रे, नौकाङ्गे, अरित्रे च । जले, गोणीभेदे च स्त्री० ।
कण्ठिका स्त्री० कठि–ण्वुल् । (एकनरा) कण्ठाभरणभेदे ।
कण्ठी स्त्री० क्षुद्रः कण्ठः अल्पार्थे ङीप् । अश्वकण्ठवेष्टनरज्ज्वाम् ।
कण्ठीरव पु० कण्ठ्यां रवो यस्य । सिंहे, मत्तगजे, कपोते च ।
कण्ठेकाल पु० कण्ठे कालः सप्तम्याः अलुक् । महादेवे ।
कण्डन न० कडि–ल्युट् । मुषलादिना तण्डुलादेर्निस्तुषता सम्पादने (कांडान) । [कण्डनी चोदकुम्भश्चेति मनुः ।
कण्डनी स्त्री० कण्ड्यतेऽनेन कडि–ल्युट् । मूषले उदूखले च ।
कण्डिका स्त्री० कडि ण्वुल् । वेदैकदेशे ।
कण्डु स्त्री० कडि–उ । गात्रघर्षणे, तत्कारके रोगे च (चुलकान)
कण्डु(ण्डू)र पु० कण्डुं कण्डूं वा राति रा क । कारवेल्ललतायाम् (करेला) शूकशिम्ब्याम् (आलकुशी) स्त्री० ।
कण्डू स्त्री० कण्डूञ् गात्रविघर्षणे संपदादित्वात् क्विप् । कण्डूयने गात्रघर्षणे । "कण्डूलकण्डू"मिति कुमारः ।
कण्डूकरी स्त्री० कृ–टक् उप० । शूकशिम्ब्याम् (आलकुशी) ।
कण्डूघ्न पु० कण्डू–हन–टक् । आरग्वधे, गौरसर्षपे च ।
कण्डूति स्त्री० कण्डूय–क्तिन् । कण्डूयने गात्रघर्षणे ।

कण्डूयन स्त्री० कण्डू—यक् ल्युट् । कण्डूयाम् गात्रघर्षणे ।

कण्डूया स्त्री० कण्डू यक् कण्डूय—अ—स्त्रीत्वात् टाप् । कण्डूयाम् ।

कण्डूल पु० कण्डू+लच् । कण्डूकारके सूरणे । कण्डूयुक्ते त्रि० ।

कण्डोल पु० कडि—ओल । वंशादिरचिते धान्यस्थापनपात्रे । (डोल) उष्ट्रे च ।

कण्डूघ पु० कण्डूनामोघो यस्मात् ५ ब० । शूककीटे (शुयापोका) ।

कण्व पु० कण—क्वन् । मुनिभेदे । पापे न० ।

कतक पु० तक—हासे कस्य जलस्य तको हासः प्रकाशो यस्मात् । ५ ब० (निर्म्मली) वृक्षभेदे । यस्य फलसम्पर्कात् जलप्रसादः ।

कतम त्रि० किम्+डतमच् । बहूनां मध्ये एकस्य जातिप्रश्नेऽर्थे डतमच् । बहूनां मध्ये एकस्मिन् जातिविशिष्टे विशेषधर्मज्ञानाय पृष्टे । द्वयोर्मध्ये तदर्थे डतरच् । कतरः ।

कति त्रि० किम्+डति । संख्याभेदपरिज्ञानाय पृष्टे ।

कतिपय त्रि० कति+अयच् पुक् च । कतिशब्दार्थे ।

कत्तृण कुत्सितं तृणं कोः कदादेशः । तृणे (चाकुलिया) कुत्सिकायां (प्रामा) सुगन्धितृणे च ।

कत्तोय न० कुत्सितमीषद्वा तोयं यत्र । मद्ये ।

कत्थ श्लाघायां भ्वा०आत्म०अक०सेट् । कत्थते अकत्थिष्ट ।

कत्र शैथिल्ये अद०चुरा०उभ०अक० सेट् । कत्रयति ते अचकत्रत् त ।

कथ वाक्यरचनायां अद०चुरा०उभ०सक० सेट् । कथयति ते अचीकथत् त अचकथत् त ।

कथक त्रि० कथ—ण्वुल् । तत्त्वनिर्णयार्थं वादरूपकथाकर्त्तरि, कथोपजीविनि नाट्यवर्णनकर्त्तरि च । [मनालब्धे’ति माघः ।

कथङ्कारम् अव्य० कथम्+कृ—णमुल् । कथं कृत्वेत्यर्थे । ‘कथङ्कार-

कथञ्चन अव्य० कथम्+चन । केनांशेनेत्यर्थे ।

कथञ्चित् अव्य० कथम्+चित् । कथञ्चनार्थे अतियत्नेनेत्यर्थे च प्राणान् कथञ्चिदपि धारयितुमिति रसमञ्जरी ।

कथम् अव्य० किम्+प्रकारार्थे थमु कादेशः । केन प्रकारेणेत्यर्थे ।

कथमपि अव्य० कथम् च अपि च द्व० । अतियत्नेनेत्यर्थे अति-गौरवेणेत्यर्थे च । [द्व० । किंप्रकारप्राप्ते ।
कथम्भूत त्रि० किं प्रकारं भूतः प्राप्तः किम्+द्वितीयान्तादपि थमु ।
कथा स्त्री० कथ—अ । कथने, "प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां विदुः । परम्पराश्रया या स्यात् सा मताख्यायिका बुधै" रित्युक्तलक्षणे वाक्ये प्रबन्धरचनायां कादम्बर्यादिग्रन्थे, पक्षप्रतिपक्षोपन्यासेन विचारणायां, वादरूपे वाक्ये च ।
कथाप्रसङ्ग पु० कथायां प्रसङ्गो यस्य । वावदूके । गोष्ठोवचने वातुले, विषवैद्ये "कथाप्रसङ्गेन जनैरुदीरतादि" ति भारविः ।
कद रोदने, वैक्लव्ये अक० आह्वाने सक० भ्वा० इदित् पर० सेट् । कन्दति अकन्दीत् । [अकादिष्ट । णिच्—कदयति ते ।
कद विक्लवीभावे दिवा० आत्म० अक० सेट् घटादि । कद्यते
कदध्वन् पु० कुत्सितोऽध्वा कदादेशः गति० कुपथे । [ल्युट् । युद्धे ।
कदन न० कद—णिच्—ल्युट् । पापे, मर्द्दने, मारणे च आधारे
कदम्ब पु० कद—अम्बच् । स्वनामख्याते वृक्षे । सर्षपे देवताडवृक्षे । समूहे च न० । स्वार्थे कन् । संघे न० ।
कदम्बगोलकन्याय पु० कादम्बपुष्पस्य गोलके यथा सर्वावयवेषु युगपत्पुष्पाणामुत्पत्तिस्तादृशे एकदोत्पत्तौ दृष्टान्तभेदे ।
कदर पु० कं जलं दृणाति पचाद्यच् । श्वेतखदिरे ( काटाखावजा ) वृक्षभेदे च । [ विडम्बिते, दूषिते च ।
कदर्थित त्रि० कुत्सितोऽर्थः कदर्थस्तत् करोतीति णिच्—कर्म्मणि क्त ।
कदर्य्य त्रि० कुत्सितोऽर्य्यः स्वामी कुगति० । सति विभवे अदातरि, क्षुद्रे । "आत्मानं धर्म्मकृत्यञ्च पुत्रदारांश्च पीडयन् । यो लोभात् सञ्चिनोत्यर्थान् स कदर्य्य इति स्मृत" इत्युक्तलक्षणेऽर्थसञ्चयकारके च ।
कदल पु० कद—कलच् । रम्भावृक्षे च । अजादित्वात् टाप् पृश्नीलतायां ( चाकुलिया ) शाल्मलीवृक्षे च । [कायां, मृगभेदे च ।
कदली स्त्री० काय दल्यते त्वगादौ जलबाहुल्यात् । रम्भावृक्षे, पता-

कदलीकुसुम न० ६त० । ( मोचा ) कदलीपुष्पे ।

कदलीदण्ड पु० ६त० । कदलीमध्यस्थे दण्डाकारे पदार्थे (थोड़) ।

कदा अव्य० कस्मिन् काले किम्+दा कादेशः । कस्मिन्काले इत्यर्थे ।

कदाख्य पु० कुत्सिता आख्या यस्य कदादेशः । (कुड़) वृक्षे ।

कदाचन अव्य० कदा+चन । अनिर्द्धारिते कस्मिंश्चित् कालेऽर्थे

चित् । कदाचित् अव्य० कदा+चित् कदाचनार्थे कदापीत्यर्थे च ।

कदुष्ण न० कुत्सितम् ईषदुष्णं कोः कदादेशः । ईषदुष्णे स्पर्शे ।

तद्वति त्रि० ।

कद्रु पु० कद्-रु । पिङ्गवर्णे । तद्वति त्रि० नागमातरि स्त्री० ।

कद्रू स्त्री० कद्रु+संज्ञायामूङ् । नागमातरि कश्यपपत्न्याम् ।

कद्रू (द्रु) पुत्र पु० ६त० । सर्पे । कद्रु (द्रू) सुतादयोऽप्यत्रार्थे ।

कद्वद त्रि० कुत्सितं वदति कु+वद्-अच् कदादेशः गर्हितवाक्य-

वादिनि ।

कन प्रीतौ अक० गतौ सक० भ्वा० पर० सेट् । कनति अकनीत्

अकानीत् ।

कनक न०कन-वुन् । स्वर्णे, किंशुकवृक्षे नागकुसुमे-धुस्तूरे धुस्तूरे च ।

कनकक्षार पु० कनकस्य तद्द्रावणाय क्षारः । (सोहागा) टङ्के तस्य-

स्पर्शात् हि झटिति कनकं द्रवति ।

कनकच्छत्र न० कनकदण्डं छत्रं यस्य शाक० । राजच्छत्रे

कनकप्रसवा स्त्री० कनकमिव प्रसवः पुष्पं यस्याः । स्वर्णकेतक्याम् ।

कनकरस पु० कनकमिव रसो यस्य । हरिताले ।

कनककलोद्भव पु० कनतीति कना दीप्ता कला अवयवः तया उद्भवति

उद्+भू-अच् । (धूना) सालनिर्य्यासे ।

कनकाचल पु० कर्म० । सुमेरुपर्वते, धान्याचलादिषु दशसु दानी-

यपर्वतेषु मध्ये दानीये स्वर्णपर्वते च ।

कनकाध्यक्ष पु० ७त० । सुवर्णरक्षणादावधिकृते ।

कनकारक पु० कनकं दीप्तं यथा तथा आरूति सर्वतो व्याप्नोति आ-

ऋ-ण्वुल् । कोविदारवृक्षे ।

कनकालुका स्त्री० कनकनिर्मिता आलुः संज्ञायां कन् । भृङ्गारे (झारी) सौवर्णकलसे च ।

कनखल पु० तीर्थभेदे ।

कनिष्ठ त्रि० अयमेषामतिशयेन अल्पो युवा वा इष्ठन् कनादेशः । अतियूनि अत्यल्पे अनुजे च । अनुजायां सर्वाभ्यः क्षुद्राङ्गुल्यां च स्त्री० टाप् । कनिष्ठभ्रातुः पत्न्यामपि अजादित्वात् टाबेव ।

कनी स्त्री० कन-अच् गौरा० ङीष् । दुहितरि ।

कनीनिका स्त्री० कन-ईन संज्ञायां कन् टाप् अत इत्त्वम् अक्षितारायां, कनिष्ठाङ्गुलौ च ।

कनीयस् त्रि० अयमनयोरतिशयेन युवा अल्पो वा ईयसु कनादेशः । कनादेशः । द्वयोर्मध्ये अल्पतरे, अनुजे च । स्त्रियां ङीप् ।

कनीयस न० कनी दीप्तिः तस्यै यस्यति यस-अच् । ताम्रे ।

कन्तु पु० कम-तु । कामदेवे । हृदये न० । कं सुखमस्तीति कम्+ अस्त्यर्थे तु । सुखवति त्रि० । [ वस्त्रखण्डे । (कांथा)

कन्था स्त्री० कम-थन् । मृण्मयभित्तौ (कांथ) स्यूतपवित्रजीर्ण-

कन्थारी स्त्री० अतिकण्टका हतत्वात् कन्थामपि ऋच्छति वेधनेन प्रविशति ऋ-अण् । दुष्प्रवेशाख्ये वृक्षे ।

कन्द पु० न० कन्दति कन्दयति कन्द्यते वा कदि-अच् णिच् अच्, घञ् वा । सूरणे (ओल) शस्यमात्रमूले, गृञ्जने च (गाजर) मेघे पु० ।

कन्दगुडूची स्त्री० कन्दोद्भवा गुडूची शाक० । गुडूचीभेदे, (गुड्ची) इति ख्याते कन्दे च ।

कन्दट न० कदि+अटन् । श्वेतोत्पले ।

कन्दफला स्त्री० कन्दात् फलं यस्याः कुदुरकारवेल्लायाम् । (उच्छा)

कन्दर पु० स्त्री० कम् जलेन दीर्यते कम्+दृ-अच् दरीकारे गिरिनितम्बदेशे गुहायाम्, स्त्रीत्वे टाप् ङीप् च । अङ्कुशे पु० । आर्द्रके न० ।

कन्दराकर पु० ६त० । पर्वते । [ (पाकुड़) चाक्षोटवृक्षे च ।

कन्दराल पु० कन्दरा+अस्त्यर्थे लच् । गर्दभाण्डवृक्षे प्लक्षे

कन्दरोद्भवा स्त्री० कन्दरे उद्भवति उद्+भू—अच् । गुहयाभावभेदीहत्ये ।
कन्दर्प पु० कम् सुखं तेन तत्र वा दृप्यति कम्+दृप+अच्, कम् कुत्सितो दर्पोऽस्मात् वा । कामदेवे ।
कन्दर्पकूप पु० कन्दर्पस्य कूप इव । स्त्रीचिह्नभेदे ।
कन्दर्पजीव पु० कन्दर्पं जीवयति उद्दीपयति जीव णिच् अण् । कामवर्द्धननामकवृक्षे ।
कन्दर्पमूषल पु० कन्दर्पस्य मूषल इव । पुरुषचिह्नभेदे ।
कन्दल न० कदि—कलच् । कपाले नवाङ्कुरे, करध्वनौ अपवादे, कन्दलीलतापुष्पे च । कनके, युद्धे कलापे च पु० ।
कन्दली स्त्री० कन्दे लीयते ली—ड, कदि—कलच् वा गौरा० ङीष् । मृगभेदे गुल्मभेदे, पताकायाम्, पद्मबीजे, भूमिकदल्याञ्च ।
कन्दलीकुसुम न० ६०त० । भूमिकदलीपुष्पे, छत्राके च ।
कन्दवर्द्धन पु० कन्देन वर्द्धते वृध—ल्यु । सूरणे ( ओल) ।
कन्दवल्ली स्त्री० कन्दादारभ्य वल्ली । बन्ध्याकर्कोट्याम् ।
कन्दशूरण पु० कन्दप्रधानः सूरणः शाक० ( ओल ) सूरणे ।
कन्दु पु० स्त्री० स्कन्द उ सलोपः । ( ताओया ) स्वेदनीपात्रे कन्दुपक्वं तैलपक्वमिति स्मृतिः तण्डुलादेः भर्जनपात्रभाण्डे च गोकुले कन्दुशालायामिति स्मृतिः ।
[ कुमारः ।
कन्दुक पु० कदि—उक । गेन्दुके: "सा कन्दुकैः ललितमुत्तके" चेति
कन्दुपक्व त्रि० जलोपसेकं विना कन्दुपात्रे पक्वं तण्डुलादि । शुष्कतया भ्रष्टतण्डुलादौ । कन्दुपक्वानि तैलेनेत्यादिस्मृतिः ।
कन्दोट पु० कदि—ओटन् । श्वेतोत्पले । नीलोत्पले न० ।
कन्दोत पु० कन्दे मूले उतः वेञ्—क्त । कुमुदे ।
कन्धर पु० कम् जलम् धारयति धरः । मेघे । शिरसस्य धरा । ग्रीवायाम् स्त्री० ।
कन्धि पु० कम् शिरो धीयतेऽस्मिन् कम्+धा—कि । ग्रीवायाम् ।
कन्न न० कद्—क्त । पातके, मूर्च्छायाञ्च ।
कन्यका स्त्री० अज्ञाता कन्या कन्या+अज्ञातार्थे कन् क्षिपकादि त्वात्

मेद्यम्। "कन्यका दशमे प्रोक्तेति स्मृत्युक्तायां दशवर्षायां कुमार्य्याम्।

**कन्या** स्त्री० कन–यत् कन्यायाः कनीन् चेति निर्द्देशात् वयसि प्रथम इति न ङीप्। अनूढायां कुमार्य्याम्, मेषादितः षष्ठे राशौ च।

**कन्याकुब्ज** पु० कन्याः कुब्जा यत्र। कान्यकुब्जदेशे तत्र हि वायुना कन्याशतस्य कुब्जत्वं कृतमि' ति रामायणकथा।

**कन्याट** पु० कन्या अटत्यत्र घञ्। वासभवने।

**कप** चलने (सौत्र:) पर० अक० सेट् कपति अकपीत् अकापीत्।

**कप** चलने भ्वादि० इदित् आत्म० अक०सेट्। कम्पते कम्पिट।

**कपट** पु० न० के मूर्द्धनि अग्रे पट इवाच्छादकः। अन्यथास्थितस्य वस्तुनोऽन्यथात्वेनाच्छादने।

**कपटिन्** त्रि० कपट+इनि। छलयुक्ते। चीनानामगन्धद्रव्ये पु०।

**कपर्द्द** पु० पर्व पूरणे क्विप् रात् वलोपे पर् पार्त्तिः कस्य गङ्गाजलस्य परा पूर्त्तीं दार्यति शुध्यति क+पर्+दैप्–क। हरजटायाम्। केन सुखेन पूर्त्तिं ददाति दा–क। वराटके अल्पार्थे कन् स्त्रीत्वे टाप् अतइत्वम्। कपर्द्दिकाऽप्यत्र।

**कपर्द्दिन्** पु० कपर्द्द+अस्त्यर्थे इनि। महादेवे।

**कपाट** स्त्री० न० कं वातं पाटयति वहिर्गमयति पट–णिच् अण्। द्वारावरणेन वातरोधके स्वनामख्याते काष्ठादौ। अणन्तत्वात् स्त्रियां ङीप्। कपाटीत्यप्यत्र।

**कपाल** पु० न० कं जलं पालयति अण्। घटादेरवयवे, शिरोऽस्थ्नि, यतीनां भिक्षापात्रे, कर्परे च। सौत्रकप–कालन्। समूहे, कुष्ठरोगभेदे च।

**कपालभृत्** पु० कपालं मनुष्यः शिरोऽस्थिमयं पात्रं बिभर्त्ति भृ–क्विप्। शिवे। [ दुर्गायां स्त्री० ङीप्।

**कपालमालिन्** पु० कपालानां माला विद्यतेऽस्य इनि शिवे।

**कपालिका** स्त्री० क्षुद्रं कपालमल्पार्थे कन् अत इत्वम्। भग्नघटखण्डे (खापरा)।

**कपि** पु० कम्प कप—इ । वानरे, रक्तचन्दने, वराहे, कपिलवर्णे च । तद्वति त्रि० ।

**कपिकच्छू** स्त्री० कपीनामपि कच्छूः यस्याः ५ब० । ( आलकुशी ) कपिकच्छूरेतौ स्वकपिच्छूराम् ।

**कपिका** स्त्री० कप—वुन् । नीलसिन्धुवारवृक्षे । [ ध्वजोऽस्य ।

**कपिकेतन** पु० कपिः केतनं ध्वजरूपं चिह्नं यस्य । अर्ज्जुने कपि-

**कपिचूड़ा** स्त्री० कपीनां चूड़ेव । आम्रातकवृक्षे तस्य मुकुलेन तथात्वात् ।

**कपिचूत** पु० कपीनां चूत इव प्रियः । आम्रातकवृक्षे ।

**कपिञ्ज** पु० कं जलमिव पिञ्जयते वर्ण्यते पिजि—क नलोपः । (चिकार) चिञ्चके ।

**कपिञ्जल** पु० कपिव पिञ्जयत पिजि—कलच् । गौरतित्तिरौ, चातके च "कपिञ्जलानालभेते"ति श्रुतिः ।

**कपित्थ** पु० कपिस्तिष्ठत्यत्र तत्फलप्रियत्वात् स्था—क पृषो० । ( कय-तबेल ) वृक्षभेदे कपित्थवटराम" इति भागवतम् ।

**कपित्थत्वक्** पु० कपित्थस्य त्वगिव त्वक् वल्कलमस्य । एलवालुकवृक्षे ।

**कपित्थास्य** पु० कपित्थमिवास्यं यस्य । गोलाङ्गुलाख्ये वानरभेदे ।

**कपिप्रभा** स्त्री० कपावपि प्रभा स्वगुणप्रकाशोऽस्याः । ( आलकुशी ) कपिकच्छ्वाम् ।

**कपिप्रिय** पु० ६त० । आम्रातकवृक्षे कपित्थे च ।

**कपिरथ** पु० कपिः हनुमान् रथइव वाहनम् यस्य । रामचन्द्रे कपीरथे यस्य । अर्ज्जुने ।

**कपिल** पु० कम्—इलच् पादेशः । अग्नौ, वासुदेवे, सांख्यशास्त्रकारके मुनिभेदे, स च कर्द्दमप्रजापतितो देवहूत्यां भगवदंशेन जातः । कुक्कुरे, दानवभेदे, पिङ्गलवर्णे च तद्वति त्रि० । स्वर्णवर्णायां गवि, नदीभेदे, रक्तपुष्पयोगात् शिंशपायां पुण्डरीकनामदिग्गज-करिण्याञ्च स्त्री० ।

**कपिलधारा** स्त्री०कपिलेव शुद्धा धारा यस्याः । गङ्गायां स्वर्गङ्गायाम् । कपिलानां धारा दुग्धधारा यत्र । काश्यां प्रसिद्धे तन्नामकतीर्थे ।

कपिलशिंशपा स्त्री० कर्म० । पीतपुष्पयुक्तायां शिंशपायाम् ।
कपिलाक्षी स्त्री०कपिलमक्षिवत् पुष्पमस्याः। पीतपुष्पायां शिंशपायाम् ।
कपिलाश्व पु० कपिलरूपेणाश्वहरणात् कपिलवर्णाश्वयोगाद्वा इन्द्रे ॥
कपिलोमफला स्त्री० कपिलोमन्यपि फलं कण्डूजनकमस्याः । (आलकुशी) दुरालभायाम् ।
कपिलोह न० कपितुल्यं पिङ्गलं लोहं धातुः । पित्तले ।
कपिवक्त्र पु० कपेर्वक्त्रमिव वक्त्रमस्य । नारदे तस्य शापकृतकपिमुखत्वाख्यानं पुराणे प्रसिद्धम् । [ आम्रातकवृक्षे ।
कपिवदान्य पु० कपिषु वदान्यः बहुफलवत्त्वेन तत्प्रदानात् ।
कपिवल्ली स्त्री कपिरिव तल्लोमतुल्या वल्ली । गजपिप्पल्याम् ।
कपिश पु० कपिः कपिलवर्णोऽस्यास्ति अस्त्यर्थे श । (शिलारस) सिह्लके । कृष्णपीतमिश्रे वर्णे च । तद्वति त्रि० । नदीभेदे, कपिशां तीर्त्वेति रघुः । माधव्यां लतायाञ्च स्त्री० ।
कपिशी स्त्री० कपिश+गौरा० ङीष् । माधव्याम् मदिराभेदे च ।
कपिशीर्ष न० कपीनां प्रियं शीर्षमग्रम् शाक० । प्राकाराग्रे ।
कपिशीर्षक न०कपेः शीर्षमिव कायति कै+क । हिङ्गुले ।
कपीज्य पु० कपीभिरिज्यते यज—क्यप् । क्षीरिकावृक्षे ।
कपीतन पु० कपीनामु ई लक्ष्मीं तनोति तन—अच् । आम्रातकवृक्षे, शिरीषवृक्षे च ।
कपीन्द्र पु० कपिरिन्द्र इव । हनुमति । कपीनामिन्द्रः । सुग्रीवे ।
कपीष्ट पु० कपीनामिष्टः । राजादने कपित्थे च ।
कपूय त्रि० कुत्सितं पूयते पूयी—निरसने अच् पृषो० उलोपः । कुत्सिते । कपूयचरणाः कपूययोनिमापद्यन्ते इति श्रुतिः ।
कपोत पु० कोवातः पोतइव यस्य । पारावते पक्षिमात्रे च ।
कपोतक न० कपोत इव कायति प्रकाशते कै—क । सौवीराञ्जने ।
कपोतपालिका स्त्री० पालयति पाल+ण्वुल्—टाप० । सम्भाग्य प्रसारितदारुभेदे सौधादिप्रान्ते काष्ठादिरचिते पक्षिवासस्थाने विटङ्के (पायरा खोप) ।

**कपोतपाली** स्त्री० कपोतान् पालयति कर्म्मण्यण् ङीप्० । प्रासाद-प्रान्ते दारुनिर्म्मिते पक्षिस्थाने विटङ्के (पायराखोप) ।

**कपोतवर्णी** स्त्री० कपोतस्य वर्ण इव वर्णो यस्याः गौरा० ङीष् । सूक्ष्मैलायाम् ।

**कपोताङ्घ्रि** पु० कपोतस्याङ्घ्रिरिव रक्तवर्णत्वात् । नलीनामद्रव्ये ।

**कपोतारि** पु० कपोतस्यारिः ६त० । श्येनपक्षिणि ।

**कपोल** पु० कौलकप-ओलच् । गण्डे । गण्डे (गाल) ।

**कफ** पु० केन जलेन फलति फल-ड । शरीरस्थे धातुभेदे । श्लेष्मणि ।

**कफकूर्च्चिका** स्त्री० कफं कूर्च्चति विकरोति कूर्च्च-विकारे ण्वुल् । लालायाम् आस्रावे (थुथु) ।

**कफणि** पु० स्त्री० केन जलेन फणति स्फुरति इन् । भुजमध्यग्रन्थौ । कूर्परे (कनुइ) स्त्रीत्वे वा ङीप् ।

**कफवर्द्धन** पु० कफं वर्द्धयति वृध-णिच्-ल्यु । पिण्डीतकवृक्षे । कफ-वृद्धिकारके त्रि० ।

**कफविरोधिन्** पु० न० कफं विरुणद्धि वि+रुध-णिनि । मरिचे, कफविरोधकारके त्रि० । [बब्बूरवृक्षे, कफनाशके त्रि०

**कफान्तक** पु० कफमन्तयति तत्करोतीति अन्त+णिच्-ण्वुल् ।

**कफारि** पु० ६त० । शुण्ठ्याम् ।

**कफिन्** त्रि० कफोऽस्त्यस्य कफ+इनि । श्लेष्मप्रधाने जने ।

**कफोणि** पु० स्त्री० केन जलेन फणति इन् पृषो० ओत्वम् । भुजम-ध्यग्रन्थौ कूर्परे (कनुइ) स्त्री० वा ङीप् ।

**कबन्ध** पु० कं सुखं बध्नाति बन्ध-अण्, कं बध्यते छिन्नेऽस्मात् बन्ध-घञ्, केन वायुना बध्यते, कोवायुर्बन्धो वा यस्य यथायथं वाक्यम् । उदरे, धूमकेतौ, राहौ, राक्षसभेदे च । जले न० । 'मनुष्याणां पशूनां तु हतेषु सूतमूर्द्धसु । तदावेशात् कबन्धः स्यादेकोऽन्गुष्ठो क्रियान्वित' इत्युक्तलक्षणे शिरःशून्यक्रियायुक्तदेहे च स्त्री० । [कपित्थवृक्षे ।

**कपित्थ** पु० कपयस्तिष्ठन्त्यस्य तत्प्रियत्वात् स्था-क पृषो० पस्य बः ।

**कम्** अव्य० कम–णिङभावपक्षे विच् । पादपूरणे, जले, मस्तके सुखे, मङ्गले, निन्दायाञ्च ।

**कम** वाञ्छायां भ्वादि० आत्म० सक० सेट् । कामयते अचीकमत अचकमत । [अचकमत ।

**कम** कामनायाम् चुरा० आत्म० सक० सेट् । कामयते अचीकमत

**कमठ** पु० कम–अठन् । कच्छपे यतीनां जलपात्रे न० ।

**कमण्डलु** पु० न० मण्डनं मण्डः कस्य जलस्य मण्डं लाति ला कु । करङ्के, संन्यासिनां जलपात्रभेदे, प्लक्षवृक्षे, चतुष्पाद्जातौ च ।

**कमन** त्रि० कामयते कम–ल्यु । कामुके, अभिरूपे, सुन्दरे च । अशोकवृक्षे पु० ।

**कमनच्छद** पु० कमनः सुन्दरः छदोऽस्य । कङ्कपक्षिणि ।

**कमनीय** त्रि० कम–अनीयर् । मनोहरे, कामनायोग्ये च ।

**कमल** न० कं जलमलति भूषयति कम्+अल–अच् । पद्मे । कम–कलन् । ताम्रे, क्लोमनि, औषधे, जले च न० । मृगभेदे, सारसविहगे च पु० । [पद्मसमूहे ।

**कमलख(ष)ण्ड** न० कमलानां समूहः कमल+(ष)खण्डच् ।

**कमला** स्त्री० कमलं विद्यतेऽस्या अर्शआदित्वात् अच् । लक्ष्म्याम् । कम–कलच् वरस्त्रियाम् ।

**कमलालया** स्त्री० कमलमालयो यस्याः । लक्ष्म्याम् ।

**कमलासन** पु० कमलमासनं यस्य । चतुरानने ब्रह्मणि ।

**कमलिनी** स्त्री० कमलानां समूहः देशो वा कमल+इनि । पद्मसमूहे पद्मयुक्तलतायाञ्च ।

**कमलोत्तर** न० कमलमिवोत्तरमुत्कृष्टम् । कुसुम्भपुष्पे ।

**कमितृ** त्रि० कम–णिङभावपक्षे तृच् । कामुके स्त्रियाम् । कमित्री ।

**कम्प** पु० कपि–चलने घञ् । गात्रादिकम्पे वेपथौ । [चलने ।

**कम्पन** त्रि० कपि युच् । कम्पयुक्ते । शिशिरे ऋतौ पु० । भावे ल्युट्

**कम्पिल(ल्ल)** पु० कपि–इलच् । कमलागुण्डा रोचन्याम् । कपि–इल्लच्, करभे, "देवीं कम्पिल्लवासिनीम्" इति श्रुतिः ।

**कम्पिल्लक** पु० कम्पिल्ल इव स्वार्थे कन् । (करमचा) करञ्जभेदे ।

**कम्प्र** त्रि० कपि—र । कम्पान्विते ।

**कम्ब** गतौ भ्वा० पर० सक० सेट् । कम्बति अकम्बीत् ।

**कम्बल** पु० कम्ब कलच् । नागभेदे सास्नायां, प्रावारे, कृमौ च । स्वनामख्याते मेषलोमनिर्म्मिते वस्त्रासनादौ, जले च न० ।

**कम्बलिन्** पु० कम्बलः गलरोमरूपसास्नाऽस्त्यस्य इनि । वृषभे कम्बलवति त्रि० । [शकटे गन्त्रीरथे च ।

**कम्बलिवाह्य** न० कम्बलिना वृषेण वाह्यम् वह—ण्यत् । वृषभवाह्ये

**कम्बि** स्त्री० कम—इन् बुक् च । दर्व्याम् (हाता) वा ङीप् । कम्बी ।

**कम्बु** पु० न० कम—उ बुक् । शङ्खे गजे च । शम्बूके, वलये, नलके च न० । ग्रीवायां स्त्री० । [कन् कम्बुकाप्यत्र ।

**कम्बुकण्ठी** स्त्री० कम्बुरिव कण्ठोऽस्याः कम्बुग्रीवायाम् । स्वार्थे

**कम्बुपुष्पी** स्त्री० कम्बुः शङ्ख इव पुष्पमस्याः । शङ्खपुष्प्याम् ।

**कम्बुमालिनी** स्त्री० कम्बूनां तत्समपुष्पाणां मालाऽस्त्यस्याः इनि । शङ्खपुष्प्याम् ।

**कम्बोज** पु० कबि—ओज । हस्तिभेदे, शङ्खभेदे "पञ्चनदं समारभ्य म्लेच्छाद्दक्षिणपूर्वतः कम्बोजदेश" इत्युक्तदेशे च ।

**कम्बुतायिन** पु० कम्बुरिवाततायी । शङ्खतुल्यश्वेतपूर्वकाये शङ्खचिल्ले

**कम्भारी** स्त्री० कं जलं बिभर्त्ति कम्+भृ—अण् उप० । गाम्भार्य्याम् (गांभार) ।

**कम्र** त्रि० कम—णिङभावपक्षे र । मैथुनेच्छायति कामुके मनोहरे च

**कर** पु० कृ—अप्, कृ—अच् वा । हस्ते, किरणे, राजग्राह्ये राजस्वे, वर्षोपले, प्रत्यये, हस्तिहस्ते, हस्तनक्षत्रे च । किञ्चित्कर्म्मोपपदे तत्कर्म्मकारके । यथा कर्मकरः यशस्करः ।

**करक** पु० कृ—वुन् । करञ्जवृक्षे, पक्षिभेदे, दाडिमवृक्षे, कोविदारवृक्षे, बकुलवृक्षे, करीरे नारिकेलास्थि च (नारिकेलेरखोल) । कमण्डलौ पु० न० । कर—स्वार्थे कन्, वर्षोपले (शिल) पु० स्त्री० । स्त्रियां गौरा० ङीष् करकी ।

करकच्छपन्याय पु० कच्छपस्य करमूषणार्थकत्वेऽपि यथा करच्छपप्रयोगस्तत् तत्संबन्धताद्योतनार्थः तद्रूपे दृष्टान्ते ।

करकण्टक पु० करस्य कण्टक इव । नखे ।

करकाजल न० करकाया जलम् ६ त० (वरफ) करकासम्भिजले ।

करकाम्भस् पु० करकाया अम्भ इवाम्भो यस्य । नारिकेले ।

करग्रह पु० करस्य वधूकरस्य वरेण ग्रहो ग्रहणं यत्र । विवाहे ।

करग्रहारम्भ पु० करस्य राजग्राह्यस्य ग्रहणं प्रजाभ्य आदानं तस्यारम्भः । वार्षिककरस्य प्रथमादानारम्भे (पुण्याह) ।

करङ्क पु० कीर्य्यते द्रव्यमत्र कॄ—अप् करोऽङ्को गर्भोऽस्य शक० । नारिकेलास्थि (खोल), मस्तकखर्परे (माथारखुली), कमण्डलौ पात्रभेदे च "ताम्बूलकरङ्कवाहिनी" इति कादम्बरी ।

करच्छद पु० कर इवायरकच्छदोऽस्य । शाखोटवृक्षे (विक्रोड़ा) ।

करज पु० करे जायते जन-ड । नखे व्याघ्रनखाख्यगन्धद्रव्ये (नखी) च । कं शिरः जलं वा रञ्जयति रनुज—णिच्—अण् नि० । (करमचा) करञ्जवृक्षे ।

करञ्ज पु० कं शिरः जलं वा रञ्जयति अण् ।॰(करमचा) इति ख्याते वृक्षे ।

करञ्जफल पु० करञ्जस्य फलमिवाम्लं फलं यस्य । कपित्थे (कयतबेल) ।

करट पु० कॄ—अटन् । गजगण्डे, काके, कुसुम्भवृक्षे च । दुःखेन दोह्यायां गवि स्त्री० टाप् ।

करटिन् पु० करटः गजगण्डः ततः अस्त्यर्थे इनि । हस्तिनि ।

करटु पु० कॄ—अटु । (करकटिया) इति नामके विहगे ।

करण न० कृ—ल्युट् । क्रियानिष्पत्तौ साक्षात् अव्यवधानेन साधने व्याकरणोक्ते कारकभेदे, वर्णे, हेतौ, चेत्रे, इन्द्रिये, गात्रे च, करणं यत्र कान्तिमत्त्वेति—कुमारः । भावे ल्युट् । क्रियायाम् न० ज्योतिषोक्तेषु ववबालवादिषु कादशसु तिथ्यर्द्धेषु वैश्येन शूद्रायामुत्पादिते जातिभेदे च (करणकायस्थ) पु० ।

करणाधिप पु० करणानामिन्द्रियाणामधिपः । जीवे आत्मनि ।

करण्ड पु० कृ—अण्डन् । मधुचक्रे (मौचाक), खड्गे, कारण्डवे विहगे, वंशादिरचिते पुष्पपात्रे (साजी), समुद्गे च (कौटा), प्रकृति योगे स्त्री० टाप् ।

करतल पु० 6त० । हस्तस्य तले, हस्ते च ।

करताल न० तल—प्रतिष्ठायां घञ् करे तालो यस्य । वाद्यभेदे (करताल), तद्धि करे स्थापयित्वैव वाद्यते ।

करताली स्त्री० करौ ताड्येते यत्र ताड—घञ् 6त० गौरा० ङीष् डस्य लः । करतलध्वनौ ।

करतोया स्त्री० करस्य गौरीविवाहकाले शिवकरस्य तोयात् सम्प्रदानगालितः च्युतं तोयं यस्याः । कामरूपदेशे स्वनामख्यातायाम् नद्याम्

करपत्र न० करात् पतति—पत ष्ट्रन् । (करात) क्रकचे दारुभेदके । अस्त्रभेदे । करावेव पत्रं वाहनं यत्र । जलक्रीडायाम् । तत्र हि हस्ताभ्यां परस्परमुत्तोल्य क्रीड्यते ।

करपत्रवत् पु० करपत्रमिव पत्रमस्त्यस्य मतुप् तालवृक्षे ।

करपर्ण पु० करः हस्त इव पर्णं यस्य । (भ्यें ट) भिण्डातरुवृक्षे रक्तैरण्डे च ।

करपल्लव पु० करस्य हस्तस्य पल्लव इव । अङ्गुलौ ।

करपात्र न० कर एव पात्रं जलनिक्षेपपात्रं यत्र । हस्ताभ्यामुत्क्षिप्य परस्परजलदानक्रीडने । कर्म० । हस्तरूपे पात्रे ।

करपाल पु० करं पालयति पाल—अण् । खड्गे । संज्ञायां कन् टाप् अत इत्वम् । हस्तयष्टौ । (सोंटा) स्त्री० ङीष् ।

करपीडन न० करस्य वधूकरस्य वरेण पीडनं ग्रहणेन मर्द्दनं यत्र । विवाहे । (खड्गे ।

करवाल पु० करस्य बालः शिशुरिव । नखे । करे वालो गतिर्यस्य ।

करभ पु० कृ—अभच्, करे भाति भा—क वा । मणिबन्धात् कनिष्ठापर्य्यन्ते करस्य बाह्यदेशे, करिशावके, उष्ट्रशिशौ (नखी) नामगन्धद्रव्ये, उष्ट्रे च । "करभकण्ठकडार" मिति माघः ।

करभप्रिया स्त्री० करभस्य उष्ट्रस्य प्रिया । दुरालभायाम् । (आलकुशी) ।

करभवल्लभ पु० हत० । उष्ट्रप्रिये पीलुवृक्षे, कपित्थवृक्षे च ।
करभादनी स्त्री० करभैः उष्ट्रैरद्यते अद—कर्मणि ल्युट् टित्त्वात् स्त्रियां ङीप् । दुरालभायाम् । (यावकुशी)
करमर्द पु० करं मृद्नाति मृद—अण् । (करमचा) करमर्दके । स्वार्थे करमर्दकोऽप्यत्र । तत्फलं हि करकण्डूरिति तस्य तथात्वम् ।
करमर्दन पु० करं मृद्नाति मृद—ल्यु । (करमचाफले) ।
करमाला स्त्री० करः कराङ्गुलिपर्व मालेव जपसंख्याहेतुत्वात् । "आरभ्यानामिकामध्यं दक्षिणावर्त्ततोऽनतः । तर्जनीमूलपर्य्यन्तं करमाला प्रकीर्त्तिता"त्युक्तलक्षणायां जपसंख्यार्थं कराङ्गुलिपर्व्वरूपायां मालायाम् । [अस्त्रभेदे ।
करमुक्त न० करेण मुच्यते यत्, प्रति क्षिप्यते मुच—क्त । ( बर्च्छी )
करम्ब त्रि० कृ—अम्बच् । मिश्रिते । मिश्रणे पु० ।
करम्बित त्रि० करम्बो मिश्रणं जातोऽस्य इतच् मिश्रिते "मधुकरनिकरकरम्बिते"ति जयदेवः । [मिश्रितमात्रे च ।
करम्भ पु० केन जलेन रभ्यते मिश्र्यते रभ—घञ् मुम् च । दधि-
करहह पु० करे रोहति रुह—क । नखे । [ (तरवार)
करवाल पु० करं वालयति रक्षति चु० वल—पालने अण् । खड्गे
करवीर पु० करं वीरयति चु० वीर—विक्रान्तौ अच् । अश्वमारे, खड्गे, स्वनामख्याते वृक्षे, श्मशाने, देशभेदे च ।
करवीरक पु० करवीर इव कायति—कै—क । अर्ज्जुनवृक्षे । स्वार्थ कन् । करवीरार्थे । [ (अरहर)
करवीरभुजा स्त्री० करवीरस्येव भुजा यस्याः । आढक्याम् ।
करशाखा स्त्री० करस्य शाखेव । अङ्गुलौ । [शस्त्रकणे ।
करशीकर पु० करस्य हस्तिकरस्य शीकरः । हस्तिकरात् निर्गते ।
करशूक पु० करस्य शूकः शूकीव । नखे ।
करसूत्र न० हत० विवाहादौ हस्ते मङ्गलार्थं बध्यमाने सूत्रे ।
करहाट पु० करं हाटयति दीपयति हट—दीप्तौ णिच्—अण् । पद्मादिमूले, मदनद्रुमे, पिण्डीतरौ, देशभेदे च ।

**करहाटक** पु० करं हाटयति हट-दीप्तौ णिच्—ण्वुल् । मदन वृक्षे ।
 इतः । कुशाभरणे सुवर्णे । [(करमुचा) ।

**करामर्द** पु० करमामृद्नाति आ+मृद-अण् उप० । करमर्द

**कराल** त्रि० कृ—अप् करोविक्षेपः तमा आलाति पर्याप्नोति आल-पर्याप्तौ—अच् । विकटे भयानके तैलभेदे (गर्जनतैल) । सर्जरस-युक्ततैले, (तैलधुना) च न० । दन्तुरे, उच्चे च त्रि० । (अनन्त-मूल) वृक्षभेदे पु० ।

**करास्फोट** पु० करेण आस्फोटः शब्दो यत्र । वक्षःस्थले सङ्कुचितरूपेण स्थापिते एकबाहौ इतरकरस्याघातेन शब्दकरणे (तालठोका) । इतः बाह्वास्फोटे ।

**करिक** पु० कृ—इक । विट्खदिरे ।

**करिणी** स्त्री० करिन्—ङीप् । हस्तिन्यां धेनुकायाम् देवताभेदे च ।

**करिदारक** पु० करिणं दारयति हिनस्ति दृ—ण्वुल् । सिंहे ।

**करिन्** पु० करः शुण्डादण्डः अस्त्यस्य इनिः । हस्तिनि ।

**करीर** पु० कृ—ईरन् । घटे । वंशाङ्कुरे, "हिमांशुवंशस्य करीरमेवेति नैषधम्" । भिल्लयाम्, हस्तिदन्तमूले च स्त्री० ।

**करीष** पु० न० । कृ—ईषन् । शुष्कगोमये । [वात्यायाम् ।

**करीषङ्कषा** स्त्री० करीषं कषति कष—हिंसायाम् खच् मुम् च ।

**करुण** पु० कृ—उनन् । करुणाख्ये रसभेदे करुणाख्ये वृक्षे च । "दयासदनचरणकरुण" इति नैषधम् । दीने, अनाथे दुःखिते, करुणावति च त्रि० । दयायां स्त्री० टाप् ।

**करुणाविप्रलम्भ** पु० करुणरसान्वितो विप्रलम्भः । अलङ्कार प्रसिद्धे शृङ्गाररसमध्ये विप्रलम्भभेदे साहि० ३ परि० ।

**करुणापर** त्रि० करुणायां परः आसक्तः करुणा परा वा यस्य । अत्यन्तकरुणायुक्ते । [करुणामयी ।

**करुणामय** त्रि० करुणा+प्राचुर्ये मयट् । प्रचुरकरुणायति स्त्रियां

**करूष** पु० कृ+ऊष । देशभेदे ।

**करेट** पु० के जले रेटति रेट—क । (करकटिया) इति ख्याते खगे ।

करेणु पु० कृ—एणु । गजे । हस्तिन्यां स्त्री० ।

करोट पु० न० के शिरसि रोटते रुट्—घञर्थे अच् । शिरोऽस्थि । इन् । करोटिरप्यत्र स्त्री० वा ङीप् ।

कर्क हासे सौत्रः पर० अक० सेट् । कर्कति अकर्कीत् ।

कर्क पु० करोति करोति क्रियते वा यथायथं वाक्यम् कृ—क तस्य नेत्वम् । वह्नौ, श्वेताश्वे, दर्पणे, कुलीरे, कर्कटवृक्षे, कण्टके, मेषादितश्चतुर्थे राशौ च । घटे पु० स्त्री० वा ङीप् ।

कर्कट पु० सौत्र—कर्क—अटन् । क्षुद्रामलके, कट्फले, कर्करेटौ पक्षिणि, जलजन्तुभेदे कुलीरे, (काँकड़ा) मेषादितश्चतुर्थे राशौ, शाल्मलीवृक्षे च । स्वार्थे कन् कर्कटकोऽप्यत्रार्थेषु, वृक्षभेदे च ।

कर्कटशृङ्गी स्त्री० कर्कट इव शृङ्गं यस्याः । (काँकड़ाशिङ्गा) वृक्षभेदे । स्वार्थे कन् कर्कटशृङ्गिकाप्यत्र ।

कर्कटि स्त्री० कर्कं कण्टकमटति इन् शक० । (काँकुड़) इर्वारौ शाल्मलीवृक्षे च । वा ङीप् अत्रार्थे, कर्कटशृङ्गाञ्च ।

कर्कटु पु० सौत्र—कर्क—अटु । करेटुपक्षिणि (करकटिया) ।

कर्कन्धु स्त्री० कर्कं कण्टकं दधाति धा—कु नि० मुम् । बदर्याम् (कुल)

कर्कर पु० कर्क—हासे—अरन् । दर्पणे, चूर्णपाषाणखण्डे कङ्करे काँकर मुद्गरे च । चक्र । कर्कं हासं राति रा-क हृढे कठिने त्रि० ।

कर्कराङ्ग पु० कर्करं कठिनमङ्गं यस्य । खञ्जने पक्षिणि ।

कर्करान्धुक पु० कर्करः कठोरः अतिशयितान्धकारवत्त्वात् अन्धुः कूपः संज्ञायां कन् । अत्यन्तान्धकारवति कूपे ।

कर्करी स्त्री० कर्कं हासं राति रा—क गौरा० ङीष् । (झारी) सनालजलपात्रे, कन्दोर्ध्वतादिपकनिष्काशनसाधने (झालरा) पात्रे च । कर्क+रा—ईक् । कर्करीकोऽप्यत्र ।

कर्करेटु पु० कर्केति शब्दं रेटते भाषते रेट—भाषणे डु । (करकटिया) इति ख्याते खगे ।

कर्कश पु० करं कशति कश—शब्दे अच् पृषो०, कर्कः काठिन्यम् अस्त्यर्थे श कद्भ्योऽपि विच् कर, कश—हिंसायाम् अच् कर्म० वा ।

करञ्जे (करमचा) कासमर्दे, दन्तौ, खड्गे, खरस्पर्शे च। साहसिके, क्रूरे, निर्दये, खरस्पर्शवति च लि०।

**कर्कशच्छद** पु० कर्कशः छदः पत्रमस्य। (चिचोड़ा) श्राखोटवृक्षे पटोले च। कर्कशदलोऽप्यत्र। कोषातक्यां स्त्री० टाप्।

**कर्कसार** न० कर्कं श्वाम श्वेततां सरति गच्छति सृ—अण्। करम्भे (दधिमिश्रितछातु)। [कुष्माण्ड्यां स्त्री० वा ङङ्।

**कर्कारु** पु० कर्कं श्वाम श्वेततामृच्छति ऋ—उण्। कुष्माण्डे।

**कर्कोट** पु० कर्क—ओटच्। सर्पभेदे, स्वार्थे कन्। "कर्कोटको नाम सर्पो यो दृष्टिविष उच्यते" इत्युक्तलक्षणे सर्पे, बिल्ववृक्षे, दन्तौ, (कांकरोल) ख्याते वृक्षे च। [नक्याम्।

**कर्कोटकी** स्त्री० कर्क—ओट-संज्ञायां कन् गौरा० ङीष्। पीतघोषा-

**कर्कोटी** स्त्री० कर्क—ओट गौरा० ङीष्। (काकुड़) कर्कव्याम् कुष्माण्ड्याम्। स्वार्थे कन्। कर्कोटिकाप्यत्र।

**कर्चूर** पु० कर्च्च—ऊर पृषो०। (कचूर) गन्धद्रव्ये, शठ्यां च।

**कर्ज** पीड़ायाम् भ्वा० पर० सक० सेट्। कर्जति अकर्जीत्।

**कर्ण** भेदने अदन्त चुरादि० उभ० सक० सेट्। कर्णयति ते अचकर्णत् त। आ—श्रवणे आकर्णयति ते।

**कर्ण** पु० क—नन्, कर्ण—भेदने, अच्, कीर्य्यते शब्दग्रहणाय कॄ—नन् वा। श्रोत्रेन्द्रिये, अरित्रे कर्णनिपातके, अङ्गदेशाधिपे पृथासुते सूर्य्यात्मजे, त्रिभुजक्षेत्रे भुजकोटिभिन्नायां तिर्य्यग्रेखायाम्।

**कर्णकीटी** स्त्री० कर्णयति भिनत्ति अच् कर्णः अल्पः कीटः अल्पार्थे ङीष् कीटी कर्म० (कारूहाड़) शतपद्याम्।

**कर्णगूथ** न० ६त०। कर्णमले।

**कर्णजलूका** स्त्री० कर्णे जलूकेव। शतपद्याम् (काणकोटार) कर्णजलौकस् इत्यप्यत्र। [लोचमेति भट्टिः।

**कर्णजाह** न० कर्णस्य मूलम्। कर्ण—जाह। कर्णमूले "कर्णजाहवि-

**कर्णधार** पु० कर्णं नौकागतिनिरूपणदण्डं (हाल) धारयति धृ-णिच्—

अण् वाणिके (कानकाटी) । [कर्णभूषणभेदे ।
कर्णपाली स्त्री० कर्णं पालयति पाल–अण् । (कानवाला) ।
कर्णपुष्प पु० कर्ण इव पुष्पं यस्य । मोरटालतायाम् ।
कर्णपूर पु० कर्णं पूरयति पूर–अण् । कर्णाभरणे, नीलोत्पले, शि-
रीषवृक्षे अशोकवृक्षे च एतेषां पुष्पैः स्त्रीकर्णस्य भूषा ।
कर्णपूरक पु० कर्णं पूरयति ण्वुल् । कर्णपूरार्थे ।
कर्णमल न० ६ त० । कर्णस्थे मलाकारे पदार्थे (काणेर खल) ।
कर्णवर्जित त्रि० ३ त० । बधिरे (काला) श्रोत्रशून्ये । सर्पे पु० ।
कर्णवेध पु० विध–घञ् ६ त० । कर्णवेधनरूपे संस्कारभेदे ।
कर्णवेष्ट पु० कर्णौ वेष्ट्येते अनेन । कुण्डले । ण्वुल्, कर्णवेष्टकोऽ-
प्यत्रैव । भावे ल्युट् । कर्णवेष्टने न० ।
कर्णशष्कुली स्त्री० कर्णस्य शष्कुलीव । कर्णगोलके, तदाख्याकारे
च "अवलम्बितकर्णशष्कुली" ति नैषधम् ।
कर्णशूल न० ६ त० । कर्णरोगभेदे ।
कर्णस्फोटा स्त्री० कर्णौ स्फोटो विदारणं यस्याः । (कानफाटा) लताभेदे ।
कर्णाट पु० "रामनाथं समारभ्य श्रीरङ्गान्तं त्रिलेश्वरि ! कर्णाटदेश
इत्युक्तदेशे" काव्यरीतिभेदे, स्त्री० ङीप् ।
कर्णाभरणक पु० कर्णाभरणमिव कायति पुष्पद्वारा । आरग्वधे
वृक्षे । (सोन्दाल) । [कर्णचालने ।
कर्णास्फाल पु० आ+स्फुर–णिच्–स्फाआदेशः ६ त० । करिणां
कर्णि पु० कर्ण–इन् । शरभेदे, कण्टकारिकायां स्त्री० वा ङीप् ।
कर्णिका स्त्री० कर्ण-ण्वुल् । करिहस्ताग्रे, करमध्याङ्गुली, बीजकोषे
पद्मवराटे, लेखन्याम्, कुट्टिन्याम्, अग्निमन्थवृक्षे, गजपृष्ठोच्चे
च । कर्ण+भूषणे इकन् । कर्णभूषणभेदे ।
कर्णिकार पु० कर्णिकामृच्छति ऋ–अण् उप० । (गणियारी) वृक्ष-
भेदे, आरग्वधवृक्षभेदे च (छोट सोन्दाल) ।
कर्णीरथ पु० कर्णः सामीप्येनास्त्यस्य कर्णी स्कन्धः तत्र ई शोभा यस्य

न समासान्तः कप् च चासौ रथो रथभृत्यं वाहनं कर्म०।
कम्बयाहे यानं (पालकी) इत्यादौ।

कर्णिसुत पु० कर्ण्याः कंसमातुः सुतः। कंसासुरे।

कर्णेजप पु० कर्णे जपति जप–अच् सप्तम्या अलुक्। सूचके पिशुने, खले च। [अचकर्त्तृ त।

कर्त्त शैथिल्ये अद० चुरा० उभ० अक० सेट्। कर्त्तयति ते

कर्त्तन न० कृतो छेदने कृत–ल्युट्। छेदने। तुलपिण्डात् सूत्रनिष्कासनव्यापारे (काट्नाकाटा)।

कर्त्तरी स्त्री० कृत–घञ् कर्त्तं राति रा–क गौरा० ङीष्। कृपाण्याम्, पत्रीकृतहिरण्यादेः छेदनसाधने (कातारी), केशादिकर्त्तनसाधने (काँचि) अस्त्रे, "क्रूरमध्यगतश्चन्द्रो लग्नं वा क्रूरमध्यगम्। कर्त्तरी नाम योगोयम्" इति ज्योतिषोक्ते योगभेदे च।

कर्त्तृ त्रि० कृ–तृच्। कारके, व्याकरणोक्ते कारकान्तरप्रयोक्तरि क्रियाश्रये स्वतन्त्रे, तत्प्रयोजके च। चतुरानने पु०।

कर्त्तृका स्त्री० कृत–तृच् इडभावः संज्ञायां कन्। अस्त्रभेदे।

कर्त्त शैथिल्यकरणे अद० चुरा० उभय०सक० शैथिल्ये अक० सेट्। कर्त्तयति ते अचकर्त्तत् त। क्त कर्त्तितः।

कर्त्री स्त्री० कर्त्त–अच् गौरा० ङीष्। (काटार) इति ख्याते अस्त्रभेदे। कृ–तृच् कारिकायां स्त्रियां स्त्री० ङीप्। [अकर्द्दीत्।

कर्द्द कुत्सितरवे उदरशब्दे च भ्वा० पर० अक० सेट्। कर्द्दति

कर्द्द पु० कर्द्द–अच्। कर्द्दमे।

कर्द्दट पु० कर्द्द–अटन्। पद्मकेशरे, पङ्के च।

कर्द्दम पु० कर्द्द–अम्। पङ्के, पापे, ब्रह्मणश्छायायामुत्पन्ने प्रजापतिभेदे। मांसे न०, पङ्कवति त्रि०। [पङ्क एव हि प्ररोहः।

कर्द्दमक पु० कर्द्दमे कायति प्रकाशते कै–क। शालिभेदे, तस्य

कर्पट पु० न० कृ–कर्म्मणि विच्–कर्–पटः कर्मः। लक्तके जीर्णवस्त्रे (न्याताकानि), मलिनवस्त्रे च। करस्य पटः प्रक०।

कर्म्मादिकार्य्यार्थं कृतच्छिन्ने वस्त्रखण्डे कन्थाकारके वस्त्रे च ।

**कर्पटधारिन्** त्रि० कर्पटं मलिनं जीर्णं रक्तं वा वस्त्रं धारयति णिनि । मलिनादिवस्त्रधारके भिक्षुकादौ । [कर्पटीत्यप्यत्र ।

**कर्पटिक** त्रि० कर्पट-ठन् । कर्पटवस्त्रयुक्ते भिक्षुकादौ । इनि

**कर्पर** पु० कृप्-अरन् लत्वाभावः । कपाले शीर्षास्थनि, (माथार-खुली), शस्त्रभेदे (कात), कटाहे च ।

**कर्पराश** पु० कर्परस्यांशः । (खापरा) शर्करायाम् ।

**कर्पराल** पु० कर्परमलति अल-अण् । कन्दराले, अक्षोटवृक्षे च ।

**कर्परी** स्त्री० कृप-अरन् लत्वाभावः गौ० ङीष् । दारुहरिद्राक्वाथ-भवे तुत्थे (तुंते) । [ङीप् । कर्पासीत्यपि ।

**कर्पास** पु० न० कृ-पास । वस्त्रयोनौ (कापास) वृक्षभेदे । जातित्वे

**कर्पासफल** न० ६त० । (काकाटी) कर्पासीबीजे ।

**कर्पूर** पु० न० कृप-ऊर लत्वाभावः । स्वनामख्याते गन्धद्रव्ये ।

**कर्पूरमणि** पु० कर्पूरवर्णो मणिः रत्नभेदे, कर्पूराश्माख्ये ।

**कर्पूररस** पु० कर्पूर एव रसः । रसकर्पूरे ।

**कर्ब** गतौ भ्वा० पर० सक० सेट् । कर्बति अकर्बीत् ।

**कर्बूर** पु० कर्ब-ऊर । राक्षसे, पापाख्ये । स्वर्णे, हरिताले च न० ।

**कर्म्मकर** पु० कर्म्म करोति कृ-ट यमे । भृत्ये त्रि० । स्त्रियां ङीप् ।

**कर्म्मकाण्ड** पु० कर्म्मणां समूहः दूर्व्वादित्वात् काण्डच् । कर्म्मसमूहे, तत्प्रतिपादके वेदभागे च ।

**कर्म्मकार** पु० कर्म्म+कृ-अण् । लौहकारके जातिभेदे, (कामार) वेतनं विना (वेगार) कर्म्मकारके, वाहके च ।

**कर्म्मक्षेत्र** न० कर्म्मणां तद्विधानायोचितं क्षेत्रम् । भारतवर्षे ।

**कर्म्मठ** त्रि० कर्म्मणि कुशलः कर्म्मन्+ठ । क्रियाकुशले ।

**कर्म्मण्य** त्रि० कर्म्मणि साधुः कर्म्मन्+यत् । कर्म्मणि योग्ये, तत्र प्रवीणे च । वेतने स्त्री० ।

**कर्म्मदेवता** स्त्री० कर्म्मणा यागादिना देवता । यज्ञेन देवत्वं प्राप्ते

"अस्मिन् काले ऽश्वमेधादि कर्म कार्य्यं कथञ्चन । अत्राम्य दैवैर्याः पूज्यास्तस्याः कर्मदेवता इत्यु क्तवत्ये देवे ।

कर्मधारय पु० व्याकरणोक्ते अभेदान्वयिना समानविभक्तिकेन पदेन घटिते समासभेदे । [कारके च ।

कर्मन् न० कृ—मनिन् । क्रियायाम्, व्याकरणोक्ते कर्त्तुरीप्सिततमरूपे

कर्मफल न० कर्मणः फलम् । कर्मविपाकजनिते सुखदुःखादौ, कर्मरङ्गफले च (कामराङ्गानेबु) ।

कर्मभू स्त्री० कर्म्म कर्षणादि परिकर्म, सुकृतादिकर्म्म वा तस्य भूः । कृष्टभूमौ, आर्य्यावर्त्ते, भारतवर्षे च विहितकर्म्मास्त्रत्रैव वर्ष क्रियन्ते नान्यत्र । [प्रणीते ग्रन्थे ।

कर्ममीमांसा स्त्री० ६त० । कर्मकाण्डप्रधानवेदभागविचाररूपे जैमिनि-

कर्ममूल न० कर्मणां मूलम् । कुशतृणे । तेन हि वैदिकादि सर्वं कर्म निष्पाद्यते ।

कर्मरङ्ग पु० न० कर्मणि भोजनादौ रङ्गो रतिर्यस्मात् रन्ज—घञ् (कामराङ्गा) जम्बीरभेदे, तद्भोजने हि भोजनादौ रुचिर्भवति ।

कर्मविपाक पु० विपच्यते वि—पच—कर्मणि घञ् कर्मणो विपाकः । शुभाशुभकर्मजन्ये तत्फलभूते सुखदुःखादौ ।

कर्मव्यतिहार पु० वि—अति—हृ—घञ् । कर्मणा व्यतिहारः ३त० । परस्परैकजातीयक्रियाकरणे, क्रियाविनिमये च यथा यः कश्चित् येन कर्मणा इतरं सम्भाति, इतरोऽपि तज्जातीयेनैव कर्मणा तं सम्भाति, तयोः कर्मविनिमयो भवति । यथा अन्योन्यं ताड़यत इत्यादौ । [दृढं कर्मकारिणि च ।

कर्मशूर पु० कर्मणि शूरः । प्रयत्नेन प्रारब्धकर्मसमापके, आफलो-

कर्मसङ्ग पु० कर्मणि सङ्ग आसक्तिः सन्ज—घञ् । इदमहं करोमि अनेनैतत् फलं भोक्ष्ये इत्याकारकेऽभिनिवेशे ।

कर्मसंन्यासिन् पु० विहितकर्माणि विधानेन संन्यस्यति सं+नि+अस्-णिनि । सर्वकर्मत्यागिनि यतौ ।

कर्मसाक्षिन् पु० साक्षात् पश्यति नि० साक्षी ६त० । "सूर्यः सोमो

श्रमः कालो महाभूतानि पञ्च च। एते प्रमाणमालोक्य कर्मणो नव कारिका इत्युक्तेषु मुख्यादिषु नवसु।

कर्म्मसिद्धि स्त्री० ६त०। इष्टानिष्टफलप्राप्तौ "स्वकर्मसिद्धिं पुनरा-शशंसे" इति कुमारः।

कर्म्माध्यक्ष पु० ७त०। क्रियामात्रेऽपि कृताकृतावेक्षके।

कर्म्मार पु० कर्म्म करोति कृ—अण्। कर्म्मकारे (कामार) जातिभेदे, वंशभेदे (वेउवांश), कर्म्मरङ्गे वृक्षे च।

कर्म्मिष्ठ त्रि० अतिशयेन कर्म्मी इष्ठन् इनेर्लुक्। क्रियादक्षे जने।

कर्म्मेन्द्रिय न० कर्म्मणां क्रियाणां साधनभूतमिन्द्रियम्। हस्तपादादौ, ततो हि वचनादानादिक्रिया निष्पद्यते।

कर्व्व दर्पे भ्वा० पर० अक० सेट्। कर्वति अकर्वीत्।

कर्व्वट पु० कर्व—अट। द्विशतग्राममध्ये सुन्दरस्थाने, यत्र गत्वा क्रय-विक्रयादिना सन्निहितजनपदवासिनो जना जीवन्ति तादृशे ग्रामे पुरे वा नगरमात्रे च।

कर्व्वुर पु० कृणाति हिनस्ति कृ—बधे वरच्। व्याघ्रे, राक्षसे च। शृगाले स्त्री० ङीप्। [ कन् स्वुल्। स्व व्याघ्रकहचे।

कर्व्वुदार पु० कर्व दर्पे उण्। तं दारयति दृ—अण्। कोविदारवृक्षे स्वार्थे

कर्व्वुर पु० कर्व—उर। राक्षसे, पापे, नानावर्णे च तद्वति त्रि०।

कर्ष पु० न० कृष—अच् कर्म्मणि घञ् वा। षोडशमाषके मासे, तन्मिते सुवर्णे च।

कर्षक पु० कृष—ण्वुल्। कृषीवले।

कर्षफल पु० कर्षं तन्मात्रं फलमस्य। विभीतकवृक्षे, आमलक्याम् स्त्री० टाप्। [ गाभेर लौह )।

कर्षिणी स्त्री० कृष—णिनि। चौरिणीवृक्षे, खलीने च ( लगाम-

कर्षू पु० कृष—ऊ। करीषाग्नौ (घुटियार आगुन) कृषौ च। कुल्यायां, नदीमात्रे च स्त्री०। [ काले इत्यर्थे।

कर्हि अव्य० कस्मिन् काले किम्+र्हिल् कादेशः। अनद्यतने कस्मिन्

कर्हिचित् अव्य० कर्हि+चित्। कस्मिंश्चित्काले इत्यर्थे।

कल संख्यायां सक० शब्दे अक० भ्वा० आत्म० सेट् । कलते अकलिष्ट

कल गतौ संख्यायाञ्च अद० चुरा० उभय० सक० सेट् कलयति ते अच-कलत् त

कल मोदने (प्रेरणे) चुरा० उभय० सक० सेट् । कालयति ते अची-कलत् त ।

कल पु० कल-शब्दे घञ् अवृद्धिः मधुराव्यक्तशब्दे, शालवृक्षे च । कड मदे घञर्थे क डस्य लः । रेतसि । अजीर्णे त्रि० ।

कलकण्ठ पु० कलः कलान्वितः कण्ठोऽस्य । कोकिले हंसे, पारावते च । जातित्वे स्त्रियां ङीप् कलकण्ठी ।

कलकल पु० कलप्रकारः सुप्सुवचनत्वात् प्रकारे द्वित्वम् । कोलाहले ।

कलघोष पु० कलो घोषो यस्य । कोकिले ।

कलङ्क पु० कलयति क्विप् कल् चासौ अङ्कश्चेति चिह्ने, अपवादे, ताम्रादिधातूनां मलभेदे ( कल् कान ), ताम्रादियोगात् अम्लादेर्विकारे च ।

कलञ्ज पु० केतिशब्दं लञ्जति भाषते क इत्यव्यक्तानुकरणम् । लजि-अच् । विषाक्तास्त्रेण हते मृगे, पक्षिणि च 'न कलञ्जं भक्षयेदिति स्मृतिः । ताम्रकूटे 'कलञ्जवेष्टनधूमपानात् स्याद्वह्निशुद्धिर्मुखरोगहानिरिति' वैद्यके तत्सेवनात् मुखशुद्ध्यादि रुक्ता । 'रूपकैर्दशभिः प्रोक्तः कलञ्जो नामे"त्युक्तपरिमाणे च ।

कलत्र न० गड-त्रन् गस्य कः डस्य लः । नितम्बे, भार्य्यायाञ्च ।

कलधौत न० कलः मलः धौतोऽस्य । स्वर्णे, रजते च । कलधूत-मप्यत्र ।

कलध्वनि पु० ६ब० । कोकिले, पारावते, मयूरे च । कर्म० । मधुराव्यक्ते शब्दे ।

कलन पु० कल-ल्यु । वेतसवृक्षे । भावे ल्युट् । चिह्ने, दोषे, वक्कने एकमासिकगर्भे, ग्रहणे, संख्याने, गमने ग्रसने च, न० । "कलनात् सर्वभूतानामि"ति स्मृतिः ।

कलभ पु० कल-अभच् । पञ्चवर्षीये हस्तिशावके, धुस्तूरवृक्षे च ।

कलभवल्लभ पु० ह्न० पीलुवृक्षे । [ इति रघुमि' तिरघुः ।
कलम पु० कल–अम । लेखन्याम्, चौरे, धान्यभेदे च । 'कलमा इव
कलम्ब पु० कड–अम्बच् डस्य लः नालिकाशाके (कलमी), बाणे,
कदम्बवृक्षे, शाकनाडयाञ्च । स्वार्थे कन् । कलम्बकोऽप्यत्रार्थे ।
कलम्बिका स्त्री० कलम्बो मूलाऽस्त्यस्य ठन् । कलम्बीशाके, ग्रीवा-
स्थिनाड्यां मन्यायाञ्च ।
कलम्बी स्त्री० कड–अम्बच् डस्य लः के जले लम्बते अच् वा गौरा०
ङीष् (कलमी) जलजशाकभेदे । कलम्बी गोवधात्मिकेति स्मृतिः ।
कलरव पु० रु–अप् रवः कलोरवोऽस्य । कोकिले पारावते च
कर्म० । मधुराव्यक्ते शब्दे ।
कलल पु० न० कल–अलच् । गर्भवेष्टनचर्मणि जरायौ शुक्रशोणितयोः
संसर्गे च । [ग्यांसे (भुना) ।
कललज पु० कललं शुक्रशोणितसंघात इव जायते जन–ड । शालनि०.
कलविङ्क(ङ्ग) पु० कलं वङ्क (ङ्ग)ते वगि(वकि)–गतौ अच् पृषो० अत
इत्वम् । चटके खगे, इन्द्रयवे च ।
कलश पु० न० कलं शब्दं शवति शु–गतौ ड । घटे ।
कलशि स्त्री० कलं श्यति शो–इन् आलोपः । घटे । 'कलशिमुद-
धिगुर्वीं' मिति माघः । वा ङीष् । अवलम्बितकर्णशष्कुलीक-
लशीकमिति नैषधम् पृश्निपर्ण्याम् (चाकुलिया) ।
कलस पु० केन जलेन लसति अच् । घटे "कलसं जलसंभृतं मिति
नैषधम् । जातित्वात् स्त्रियां ङीष् । द्रोणमाने त्रि० ।
कलह पु० न० कलं हन्ति हन–ड । विवादे, युद्धे, असिकोषे च ।
कलहंस पु० कलप्रधानो हंसः । राजहंसे, 'कलहंसः कलयांबभूव स
इति नैषधम् । कादम्बहंसे (वालहाँस), नृपोत्तमे, परमात्मनि,
वर्णवृत्तेषु, नवोदशाक्षरपादके छन्दोभेदे च ।
कलहान्तरिता स्त्री० "कोपात् कान्तं पराणुद्य पश्चात् तापान्विता
यदि । कलहान्तरिता प्रोक्ता" इत्युक्तलक्षणे नायिकाभेदे ।

कला स्त्री० कल–अच् । चन्द्रमण्डलस्य षोडशे भागे, दत्तधनस्याधिकलभ्यांशे (सुद) अवयवे, कालपरिमाणे, ज्योतिषोक्ते राशेस्त्रिंशदंशस्य षष्टिभागे, नौकायाम्, कपटे, विभूतौ, सामर्थ्ये, संख्यायां, मरीचिपत्न्याम्, चतुःषष्टिप्रकारेषु गीतवाद्यादिषु च ।

कलाद पु० कलामंशमादत्ते आ–दा–क । स्वर्णकारे तेन हि अलङ्कारगठनार्थं गृहीतधनस्यांशोऽपह्रियते ।

कलादक पु० कलामत्ति कला+अद–ण्वुल् । स्वर्णकारे गठनार्थं दत्तद्रव्यांशस्य भोजनं तेन हि क्रियते ।

कलानिधि पु० कला निधीयन्तेऽत्र । कला+नि+धा–कि । चन्द्रे ।

कलानुनादिन् पु० कलमनुनदति णिनि । भ्रमरे, चटके च ।

कलान्तर पु० अन्या कला अंशः मयू० । वृद्धिभेदे 'मासे शतस्य यदि पञ्च कलान्तरं स्यादि'ति लीलावती, अन्यस्यां चन्द्र कलायाञ्च, "ज्योत्स्नान्तराणीव कलान्तराणी"ति कुमारः ।

कलाप पु० कलामाप्नोति कला–आप्–अण् । समूहे, मयूरपिच्छे, भूषणे, काञ्च्याम्, तूणे, चन्द्रे, व्याकरणभेदे ग्रामभेदे च ।

कलापक पु० कलाप+क स्वार्थे कन् । कलापार्थे,' कुलिकाख्यवन्धे, एकवाक्यतापन्ने श्लोकचतुष्के न० कलापकं चतुर्भिः स्यादित्युक्तेः

कलापिन् पु० कलापोबर्होऽस्यास्ति इनि । मयूरे तद्वर्हतुल्यशाखावति वटे च । कल+आप–णिनि । कोकिले ।

कलाभृत् पु० कलां बिभर्त्ति कला+भृ–क्विप् चन्द्रे । [ स्त्री० ।

कलाय पु० कलमयते अय–अण् । (मटर) धान्यभेदे । गण्डदूर्वायां

कलालाप पु० कलमालपति आ+लप–अण् । भ्रमरे ।

कलावत् पु० कला+अस्त्यर्थे मतुप् मस्य वः । चन्द्रे । कलावति त्रि० ।

कलि पु० कल–इन् । बिभीतकवृक्षे, विवादे, युद्धे, शूरे, अन्त्ययुगे च । कोरके स्त्री० वा ङीष् कली च ।

कलिक पु० कल+मत्वर्थे ठन् । वकभेदे (कोंचवक)

कलिका स्त्री० कल–इन् स्वार्थे कन् । (कलि) कोरके, वीणामूले च ।

कलिकापूर्व न० कलिकेव अपूर्वमदृष्टं पुण्यापुण्यम् । प्रधानकर्मजन्य-

प्रधानापूर्वस्य हेतुभूते ऽवान्तरकर्म भेदे पुण्यादौ ।

कलिकार पु० कलिं करोति कृ—अण् । भूम्याटपक्षिणि, पूतिकरञ्जे च ।

कलिकारक पु० कलिं करोति कृ—ण्वुल् । नारदे । कलहकारके त्रि० । कलिकार+स्वार्थे क । भूम्याटपक्षिणि पु० । [ल्याम् ।

कलिकारी स्त्री० कलिकामृच्छति ऋ—अण् । (विषलाङ्गलिया) लाङ्ग-

कलिङ्ग पु० कलिं गच्छति गम—खच् मुम् डिच्च । पूतिकरञ्जे भूम्याटे, कुटजवृक्षे, शिरीषवृक्षे, प्लक्षवृक्षे, "जगन्नाथात् पूर्वभागे कृष्णा-तीरान्तरं शिवे ! कलिङ्गदेशः संप्रोक्त" इत्युक्तदेशे, "उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ" इति रघुः इन्द्रयवे च । योषिति लिङ्गतायाञ्च (तेउडि) स्त्री० ।

कलित त्रि० कल—क्त । विदिते, प्राप्ते, भेदिते, गृहीते, उक्ते । संख्याते, विचारिते, बद्धे च ।

कलिद्रुम पु० कलेराश्रयः द्रुमः । विभीतकवृक्षे तत्र हि नलस्य रा-ज्यापहाराशये कलिना सुचिरं स्थितमिति भारतकथा ।

कलिन्द पु० कलिं ददाति द्यति वा खच् मुम् च । अद्रिविशेषे, यतो यमुनानदी निःसृता, विभीतकवृक्षे, सूर्य्ये च ।

कलिन्दकन्या स्त्री० ६ त० । यमुनायां, कलिन्दजादयोऽप्यत्र ।

कलिप्रिय पु० कलिः कलहः प्रियो यस्य । नारदे, वानरे च । ६ त० विभीतके । ६ब० प्रियविवादे जने त्रि० ।

कलिल त्रि० कल—इलच् । गहने, मिश्रे च । [लाङ्गल्याम् ।

कलिहारी स्त्री० कलिं हरति हृ—अण् । (विषलाङ्गलीया)

कलुष पु० स्त्री० कल—उषच्, लुष हिंसायां कस्य जलस्य लुषो घातकः इति वा । महिषे । पापे न० । तद्वति त्रि० ।

कलेवर न० कले शुक्रे वरं श्रेष्ठम् तदुत्पन्नत्वेऽपि शुचि । सप्तम्या अलुक् । देहे । [वाङ्गुलिके ।

कलोपजीविन् त्रि० कलां वृद्धिमुपजीवति उप+जीव—णिनि ।

कल्क पु० न० कल—क तस्य नेत्त्वम् । घृततैलादिशेषे, दम्भे, विभीतक-वृक्षे, विष्ठायाम्, तुरुष्कनामकगन्धद्रव्ये, घृततैलादिपाके देहे

ओषधिद्रव्यं च द्रव्यमात्रं शिलापिष्टं शुष्कं वा जलमिश्रितम् ।
तदेव सूरिभिः पूर्वैः कल्क इत्यभिधीयते" इत्युक्तलक्षणे द्रव्यभेदे,
शाठ्ये, पापे च । [ कथने कलहे च ।

कल्कन न० कल्कं करोति णिच् भावे ल्युट् । दम्भे, शाठ्ये,

कल्कि पु० कल्क+तत् करोतीति णिच्—इन् । "सम्बलग्राममुख्यस्य
ब्राह्मणस्य महात्मनः । भवने विष्णुयशसः कल्किः प्रादुर्भविष्यती-
त्युक्तलक्षणे हरेरवतारे ।

कल्किन् पु० कल्क—इनि । मत्स्यः कूर्मो वराहश्च नरसिंहश्च वामनः ।
रामो रामश्च रामश्च बुद्धः कल्कीच ते दशेति विष्णोरवतारभेदे ।

कल्प पु० क्लृप—अच् घञ् वा । यज्ञक्रियाणामुपदेशके, शिक्षाकल्पव्या-
करणादीनामन्यतमे वेदाङ्गभेदे, बौधायनादिकृते अनुष्ठेयक्रमवि-
धाने, सूत्रात्मके कर्मपद्धतिग्रन्थे, ब्रह्मदिने, प्रलये, विकल्पे, कल्प-
वृक्षे, न्याये च । उत्तरपदस्थः सादृश्ये कल्पप् । यथा पितृ-
कल्पः गुरुकल्पः ।

कल्पक पु० क्लृप—णिच् ण्वुल् । नापिते । छेदके, कल्पनाकारके त्रि० ।

कल्पतरु पु० कल्पते फलदानाय अच् कर्म० । कल्पवृक्षे । [ च ।

कल्पन न० क्लृ—भावे ल्युट् । क्लृप्तौ, छेदने, न्यायोक्ते अनुमिति भेदे

कल्पना स्त्री० क्लृप—णिच्—युच् । पल्ययनादिना करिणां सज्जीकरणे,
न्यायोक्ते अनुमितिभेदे, रचनायाञ्च ।

कल्पान्त पु० ७त० । प्रलये ।

कल्मष पु० कर्म शुभकर्म स्यति सो—क—पृषो०मत्वं रस्य लत्वञ्च ।
नरकभेदे । पापे न० । तद्वति, मलिने च त्रि० ।

कल्माष पु० कलयति कल—क्विप् तं माषयति अभिभवति अण् ।
माषः उप०। राक्षसे चित्रवर्णे, कृष्णवर्णे, कृष्णपाण्डुरवर्णे च ।
तद्वति त्रि० स्त्रियां ङीप् ।

कल्माषकण्ठ पु० कल्माषः कण्ठो यस्य । शिवे तस्य स्वयं श्वेतत्वात्
विषयोगेन कृष्णत्वात् कृष्णपाण्डुरता ।

कल्य न० कल—यत्, कलासु साधु कला+यत् वा । प्रभाते, मधुनि

ज्योतिषोक्ते लग्ने च। प्राक् स्तुतिवर्जिते सज्जीभूते, वीतरोगे, दक्षे कल्याणे च जने त्रि०।

कल्यजग्धि स्त्री० अद–क्तिन् कल्ये प्रातर्जग्धिः। प्रातर्भोजने उपचारात् तत्कालभक्ष्ये।

कल्याण न०। कल्ये प्रातः अण्यते शब्द्यते अण–घञ्। हेम्नि, मङ्गले च। शुभयुक्ते त्रि०। स्त्रियां गौरा० ङीष्।

कल्याणकृत् त्रि० कल्याणं शुभं शास्त्रविहितं करोति कृ–क्विप्। शास्त्रविहितकर्मकारके "न हि कल्याणकृत् कश्चि"दिति गीता।

कल्याणिका स्त्री० कल्याण+अल्पार्थे ठन्। मनःशिलायाम्।

कल्ल कूजने अशब्दे च भ्वा०आ०अक० सेट्। कल्लते अकल्लिष्ट।

कल्ल त्रि० कल्ल–अच्। बधिरे श्रवणेन्द्रियशून्ये।

कल्लोल पु० कल्ल–ओलच्, कम् जलं लोलं चपलं यस्माद्वा अत्र पक्षे अनुस्वारस्य लत्वम्। महातरङ्गे, हर्षे च। वैरिणि त्रि०।

कव स्तुतौ वर्णने च भ्वा०आत्म०सक०सेट्। कवते अकविष्ट।

कवक पु० कु–अप् संज्ञायां कन्। ग्रासे; भूच्छत्राके, पलाण्डु कवकानि चेति स्मृतिः।

कवच पु० कं वातं वञ्चयति वन्च–क। गर्दभाण्डे वृक्षे, पटहवाद्ये च। वर्मणि, तन्त्रोक्ते पूजादौ पाठ्ये भूर्जपत्रे लिखित्वा धार्ये च देवतामन्त्रन्यासयुक्ते वाक्यस्तोमे पु०न०।

कवर पु०न० कु–अरन्। अम्ले, लवणे, केशपाशे च। खचिते, संपृक्ते, शबले च त्रि०। वर्वरायां स्त्री० टाप्। कं शिरो वृणोति आच्छादयति क+वृ–अच् गौरा०ङीष्। केशविन्यासे केशवेशे, काकोल्यां, हिङ्गुशाके वर्वरायाञ्च स्त्री०।

कवर्ग पु० कघटितो वर्गः सजातिसंघः। कादिषु पञ्चसु वर्णेषु। एवं चवर्गादयः। [ एवं चवर्ग्य चवर्गीयादयः।

कवर्गीय पु० कवर्गे भवः छ। कवर्गमध्यभवे वर्णे। यत्। कवर्ग्यः

कवल पु० केन वलते वल–अच्। ग्रासे, (वेलेमाछ) मत्स्यभेदे च।

कवलित त्रि० कवलं ग्रासं करोति णिच्–क्त। भुक्ते, ग्रस्ते च।

कवाट न० कं वातं वटति वट—वेष्टने अण् । द्वाररोधके काष्ठखण्डे
 कुडेऽर्थे ङीप् । कवाटी ।

कवि पु० कु—इ । शुक्रे, वाल्मीकिमुनौ, भास्करे काव्यकर्त्तरि,
 ब्रह्मणि च । अतीतानागतसर्वज्ञे सूक्ष्मार्थदर्शिनि पण्डिते च त्रि०।
 खलीने स्त्री० वा ङीष् कवी ।

कविक न० कु—इ संज्ञायां कन् । खलीने यद्धि लौहमयं घोटकमुखा-
 भ्यन्तरे प्रग्रहयोजनार्थं दीयते तस्मिन् ।

कविका स्त्री० कु—इ संज्ञायां कन् । खलीने, मत्स्यभेदे च (कइ) ।

कविज्येष्ठ पु० कविषु ज्येष्ठः । वाल्मीकिमुनौ ।

कविता स्त्री० कवेः कर्म भावो वा तल् । कविकृते काव्ये "भवति
 कविता कामिनीम्" इति प्रसन्नराघवम् । [त्रि० ।

कवोष्ण न० ईषदुष्णम् कोः कवादेशः । ईषदुष्णे स्पर्शे ।

कव्य न० कु—यत् । पितृद्देशेन दत्तेऽन्नादौ । [पितृगणभेदे ।

कव्यवाल पु० कव्यं पितृद्देश्यकं द्रव्यं वालयति चु० वल—अण् ।

कश शब्दे भ्वा० अक० पर० सेट् । कशति अकशीत् अकाशीत् ।

कशा स्त्री० कश—अच् । अश्वादेश्चालनार्थं ताडनसाधने पदार्थे,
 (कोड़ा, चाबुक्) ।

कशार्ह त्रि० कशामर्हति अर्ह—अच् । कशया ताड्ये अदान्तेऽश्वादौ ।

कशिपु पु० कश—कु नि० । अन्ने, वस्त्रे च । समुदितयोर्भोज्यवस्त्रयोः,
 शय्यायाञ्च "सत्यां क्षितौ किं कशिपोः प्रयासैः" इति प्रयोगात् ।

कशेरु पु० न० कं शृणाति शृ—हिंसायां उ एरुङादेशः । पृष्ठास्थनि,
 जलजे मूलभेदे च (केशुर) । स्वार्थे कन् । अत्रार्थे ।

कशेरू स्त्री०कशेरु+अप्राणिजातिवाचत्वात् ऊङ् । जलकन्दे (केशुर) ।

कश्मल न०कश—कल मुट् च । मूर्च्छायां, मोहे, पापे च । मलिनेत्रि०।

कश्मीर पु० कश—ईरन् मुटच् च । काश्मीराख्ये देशे ।

कश्मीरज पु० कश्मीरे जायते जन—ड । कुङ्कुमे कश्मीरजन्मादयस्त्र ।

कश्य न० कश—यत् । अश्वमध्यभागे, मद्यभेदे च । कशामर्हति
 कशा+यत् । कशार्हे अदान्तेऽश्वादौ ।

कश्यप पु० कश्यं मद्यं पिबति पा—क ब्रह्मणस्तनयो योऽभूत् मरीचि-
रिति विश्रुतः । कश्यपस्तस्य पुत्रोऽभूत् कश्यपानात् स कश्यप इति निरुक्तं मुनिभेदे, मृगभेदे, मत्स्यभेदे च ।

कष वधे भ्वा० पर० सक० सेट् । कषति । अकषीत् अकाषीत् ।

कष न० कष—अच् । (कष्टी) पाषाणभेदे, "कषपाषाणनिभे नभस्तले" इति नैषधम् । [कण्डूयने च न० ।

कषण पु० कष—ल्यु । अपक्वे (काँचा) । भावे ल्युट् । घर्षणे,

कषाय पु० कषति कण्ठम् कष—आय । श्योनाकवृक्षे, रागे, अन्तः-
करणदोषे, "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रजायते" इति वेदान्तपरिभाषायाम् । धववृक्षे (बगाछ), रसभेदे (कषा), रक्त-पीतमिश्रितवर्णे च । तद्वति त्रि० । क्ली० । कुङ्कुरा— लभायां स्त्री० ।

कषायित त्रि० कषायो रक्तपीतवर्णो जातोऽस्य इतच् । जातकषाये "अत्तुनैव कषायितस्तनी" इति कुमारः ।

कषायिन् पु० कषाय+इनि । शालवृक्षे, लकुचवृक्षे, खर्जूरीवृक्षे च । विषयरागवति त्रि० ।

कष्ट न० कष—क्त कृच्छ्रगहनयोः कषइति नेट् । पीड़ायाम् व्यथा-याम्, पीड़ायुक्ते । गहने च त्रि० ।

कस गतौ भ्वा० पर० सक० सेट् । कसति अकसीत् अकासीत् ।

कस शासने गतौ च अदा० इदित् आत्म० सक० सेट् । कंस्ते अकंसिष्ट ।

सक शासने गतौ च सक० अदा० आत्म० सेट् । कस्ते अकसिष्ट ।

कसनोत्पाटन पु० कसनं कासरोगम् उत्पाटयति ल्यु । वासकवृक्षे, "वासकः कासनाशक" इति वैद्यकोक्तेः ।

कसेरु पु० कस-उ एरुआगमः । कशेरौ, शूकरस्य प्रिये जलकन्दभेदे च ।

कस्तीर पु० न० कं जलं तीरयति अच् नि० सुट् । रङ्गे (राङ्)धातौ ।

कस्तूरिका स्त्री० कस—ऊर तुट च गौरा० ङीष कस्तूरी स्वार्थे क ह्रस्वे अत इत्वम् । मृगमदे । पृषो० अतो ह्रस्वे कस्तुरि-काप्यत्र ।

**कस्तूरी** स्त्री० कसति गन्धोऽस्याः कस–ऊर तुट् च गौरा० ङीप्। मृगनाभिजाते गन्धद्रव्ये।

**कह्लार** न० के जले ह्लादते ह्लाद्–अच् पृषो० दस्य रः। श्वेतोत्पले।

**कांस्य** न० कंसेन निर्व्वृत्तम् कंस–ञ्य। वाद्यभेदे, पानपात्रे च। स्वार्थे ष्यञ्। ताम्ररङ्गमिश्रिते उपधातौ, "उपधातुर्भवेत्कांस्यं द्वयोस्तरणिरङ्गयोरित्युक्तेः। स्वार्थे कन्। उक्तार्थे।

**कांस्यकार** पु० कांस्य+कृ–अण् उप०। (काँसारि) जातिभेदे।

**काक** पु० कै–शब्दे कन् तस्य नेत्त्वम्। स्वनामख्याते पक्षिणि। खञ्जे, अदृष्टे तिलके च।

**काककला** स्त्री० काकस्य कला अवयवो जङ्घेवावयवो यस्याः काकजङ्घावृक्षे।

**काकघ्नी** स्त्री० काकं हन्ति ट। महाकरञ्जे, तत्फलसेवने हि काकस्य नाशः।

**काकचिञ्चा** स्त्री० काकवर्णा चिञ्चा प्रान्तभागः फले यस्याः। गुञ्जायाम्। पृषो० 'काकचिञ्चि', काकचिञ्ची, काकचञ्च्वाप्यत्र।

**काकच्छद** पु० काकस्य छदः पक्ष इव छदो यस्य। खञ्जनखगे।

**काकजङ्घा** स्त्री० काकस्य जङ्घेवावयवो यस्याः। स्वनामख्याते वृक्षभेदे (केओयाठेङ्गा)।

**काकजम्बु** स्त्री० काकवर्णा जम्बुः। भूमिजम्ब्वाम्।

**काकतालीय** स्त्री० काकगमनसमये तालपतनमतर्कितहेतुकमदिव छ। अतर्कितसम्भवे यादृच्छिकागतौ।

**काकतिक्ता** स्त्री० काकस्यापि तिक्ता। गुञ्जायाम्।

**काकतिन्दुक** पु० काकवर्णः तिन्दुकः। काकपीलुके (कुचला)।

**काकनासा** स्त्री० काकस्य नासेव फलमस्याः। काकजङ्घायाम् (केओठेङ्गा) काकनासाप्यत्र।

**काकपक्ष** पु० काकस्य पक्ष इव। मस्तकपार्श्वद्वयस्थे "बालानां तु शिखा प्रोक्ता काकपक्ष" इत्युक्ते केशरचनाभेदे (कायपाङ्गा)।

**काकपद** न० काकस्य पदमिव। लिपौ पतितवर्णस्य उपरिलेखने

तत्स्थानस्थचमार्ध्याख्ये काकपदाकारे चिह्ने । शीर्षस्थे काकपदाकारे केशगुच्छे च (शिखा) ।

काकपर्णी पु० काकवर्णं पर्णमस्याः । शूद्रपर्ण्याम् ।

काकपीलु पु० काकप्रियः पीलुः शाक० । (कुचला) काकतिन्दुके ।

काकपीलुक पु० काकानां पीलुरिव । (कुचला) काकतिन्दुके ।

काकपुष्ट पु० काकेन पुष्टः । कोकिले, कोकिलया हि काकनीडात् वायसडिम्बमपनीय तत्स्थाने स्वडिम्बं स्थाप्यते काक्या च स्वडिम्बधिया तत् परिपाल्यते इति प्रसिद्धम् ।

काकपुष्प पु० काकवर्णं पुष्पमस्य । ग्रन्थिपर्णे वृक्षे ।

काकभीरु पु० काकात् भीरुः । पेचके ।

काकमाची पु० काकान् मञ्चते मचि—अण् नलोपः । कटुफललतायाम् । (गुड़कामाइ) । [स्त्री]शूद्रपर्ण्याम् । (कुगामी) ।

काकमुद्गा स्त्री० मुदं गच्छति मुद्—गम्—ड काका मुद्गा यस्याः ष० ब० ।

काकरुहा स्त्री० काकवत् रोहति अन्तरीक्षे मूलशून्यतया जायते । (परगाछा) वन्दाकृक्षे ।

काकलक पु० कुत्सितं कलं कायति कै—क । ग्रीवायामुन्नतदेशे ।

काकली स्त्री० कल—इ ईषत् कलिः कादेशः वा ङीप् । सूक्ष्मे मधुरशब्दे ।

काकलीरव पु० काकली मधुराव्यक्तो रवो यस्य । कोकिले ।

काका स्त्री० काकः काकाङ्गं विद्यतेऽस्याः अर्श आद्यच् । काकोल्यां, काकनाशायाम् काकमाच्याञ्च ।

काकाक्षिगोलकन्याय पु० काकस्य एकं चक्षुर्यथा उभयगोलके पर्यायेण चक्षुःकार्य्यकारकमेवमेकस्योभयसंबन्धे दृष्टान्ते ।

काकाङ्गी स्त्री० काकस्याङ्गं मादेव फलमस्याः । काकनाशायाम् ।

काकाण्ड पु० काकस्याण्ड इव फलं यस्याः । महानिम्बे । कोलशिम्ब्याम् स्त्री० टाप् । महाज्योतिष्मत्यां च ङीप् ।

काकादनी स्त्री० काकैरद्यतेऽसौ काक+अद—ल्युट् । गुञ्जायाम् ।

काकाल पु० काकं काकेतिरवं लाति ला—क । द्रोणकाके ।

काकिणी स्त्री० कक—लौल्ये घञ् तम् अणति अण् पृषो० । (पुड़ि) यथाचतुर्थांशे "वाराटकानां दशकद्वयं तत् सा काकिणी" लीलावती । काकिनीत्यप्यत्र ।

काकी स्त्री० काकस्य जातित्वात् स्त्रियां ङीप् । काकयोषिति काकवर्णत्वात् वायसीलतायाम् ।

काकु स्त्री० काक—उण् । शोकभीत्यादिभिर्ध्वनेर्विकारे, अलङ्कार प्रसिद्धे विरुद्धार्थकल्पके नञादौ शब्दे च । [सूर्यवंश्ये नृपे ।

काकुत्स्थ पु० काकुत्स्थः सूर्यवंशीयः नृपभेदस्तस्यापत्यम् अण् ।

काकुद न० काकुं ध्वनिभेदं ददाति धत्ते दा—क, काकुद्यतेऽस्मिन् घञर्थे क वा शक० । तालुनि जिह्वेन्द्रियाधिष्ठानस्थाने (तालुया) ।

काकेन्दु पु० काकवर्ण इन्दुः पृषो० । (कुचला) कटुतिन्दुके ।

काकेष्ट पु० काकानामिष्टः । निम्बे तस्य हि फलं काकानामिष्टम् ।

काकोदर पु० कुत्सितमकति अक—अच् कोः कादेशः काकमीषदकतिमुदरं यस्य । सर्पे । [कन् । (यज्ञडुमर) वृक्षभेदे ।

काकोडु,(डु)म्बरिका स्त्री० काकप्रिया उदु(डु)म्बरी संज्ञायाम्

काकोल पु० कक—लौल्ये स्वार्थे णिच्—ओल । द्रोणकाके, सर्पे, शूकरभेदे च । नरकभेदे, विषभेदे च पु० न० । वायस्याम्, अश्वगन्धायाञ्च स्त्री० । [क्लीत् अकाङ्क्षीः ।

काक्ष वाञ्छायाम् भ्वा० उभ० इदित् सक० सेट् । काङ्क्षति अकाक्ष लि० ईषत् कुत्सितमक्षि यस्य कोः कादेशः । कुत्सिताक्षे जने, ईषद्दर्शने कटाक्षे न० ।

काक्षी स्त्री० कक्षे भवा अण् ङीप् । तुवरिकायाम् (अरहर) ।

काक्षीव पु० ईषत् क्षीवत्यस्मात् क्षीव—घञ् कादेशः शोभाञ्जनवृक्षे (सजना)

काङ्क्षा स्त्री० काक्षि—अ । इच्छायाम् ।

काङ्गा स्त्री० कुत्सितमङ्गमस्याः कादेशः टाप् । वचायाम् ।

काच पु० कच्यतेऽनेन कच—बन्धने दीप्तौ च घञ् । शिक्ये, (शिका)

मणिभेदे, मृत्तिकाभेदे क्षारे, ( काच् ) शिक्यके च ( मोम ) ।
काचन न० काचयति बध्नाति अनेन कच—स्वार्थे णिच्—ल्युट् । पत्र-
 बन्धनद्रव्ये शाखादौ । काचिदित्यर्थे-अव्य० ।
काचलवण न० काचस्य लवणम् । काचोत्पादनसाधने लवणे,
 ( सोरा ) कृष्णलवणे ( कालालोण ) ।
काचसौवर्चल न० ६ त० । काचमृत्तिकाजलवणे लवणे ।
काचस्थाली स्त्री० काचस्य स्थालीव ( पारुलगाछ ) । वृक्षभेदे,
 काचमयपात्रे च ।
काचाक्ष पु० काच इवाक्षि यस्य । कपर्दकाख्ये वकवृक्षे ।
काचित त्रि० काचे शिक्ये चितं धृतं वृषो० । शिक्यधृते पदार्थे ।
काञ्चन पु० काचि—दीप्तौ ल्यु । स्वनामख्याते वृक्षे, चम्पके, नागके-
 शरे, उदुम्बरे, धुस्तूरे च । स्वर्णे, पद्मकेशरे, काञ्चनारादिपुष्पे
 दीप्तौ च न० ।
काञ्चनक पु० काञ्चनमिव कायति प्रकाशते कै—क । पक्षिभेदे, कोवि-
 दारवृक्षे च । हरिताले न० । [ ( चापाकला ) ।
काञ्चनदली स्त्री० काञ्चनमिव दलं यस्याः । स्वर्णकदल्याम् ।
काञ्चनक्षीरी स्त्री० काञ्चनमिव क्षीरं यस्याः गौरा० ङीष् । क्षुरि-
 कालतायाम् । [ ( गर्भिणारी ) ।
काञ्चनपुष्पी स्त्री० काञ्चनमिव पुष्पमस्याः । गणिकारीवृक्षे,
काञ्चनार पु० काञ्चनं दीप्तिमृच्छति ऋ—अण् । काञ्चनवृक्षे, ।
काञ्चनाल पु० काञ्चनाय दीप्त्यै अलति पर्याप्नोति अल—अच्
 कोविदारवृक्षे । [हरिद्रायां, गोरचनायाम्, स्वर्णक्षीरीवृक्षे च ॥
काञ्चनी स्त्री० काञ्चतेऽनया काचि—दीप्तौ करणे ल्युट् ङीप् ।
काञ्चि(ञ्ची) स्त्री० काचि—इन् वा ङीप् । स्त्रीकटिभूषणभेदे, (चन्द्र-
 हार गोट) "एकयष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका । रशना
 षोडश ज्ञेय" इत्युक्तलक्षणे यष्टौ, गुञ्जायाम् "अयोध्या मथुरा
 माया काशी काञ्ची अवन्तिके" ति पुरीभेदे च ।
काञ्ची(ञ्चि)पद न० ६ त० । जघने ।

**काञ्जिक** न० अन्ज–धात्वर्थनिर्देशे वुन् कुत्सिता अञ्जिका व्यक्तिर्यस्य । आरनाले (कांजी) ।

**काण** पु० कण–निमीलने घञ् । काके । एकचक्षुर्युक्ते त्रि० ।

**काण्ड** पु० न० कण–शब्दे ड तस्य नेत्त्वम् दीर्घः । स्तम्बे, तृणादिगुच्छे, वृक्षस्कन्धे, ( गुड़ी ) बाणे, अवसरे, प्रस्तरे, नाडीवृन्दे, नाले, वस्तुपरिच्छेदात्मके ग्रन्थप्रकरणे निर्ज्जनस्थाने च । अक्षोटवृक्षे पु० । [ ( करेला ) ।

**काण्डकटुक** पु० काण्डे स्कन्धेऽपि कटुकस्तिक्तः । कारवेल्ले,

**काण्डकीलक** पु० काण्डे कीलमिव यस्य कप् समा० । लोध्रे, तस्मिन् कीटसंबन्धात् हि कीलमिव सर्वत्र जायते ।

**काण्डतिक्त** पु० काण्डे तिक्तः भूनिम्बे ( चिराता ) ।

**काण्डपट** पु० काण्ड इव पटः । ( कानात ) पटभेदे, यस्य संकोचे काण्डरूपता भवति ।

**काण्डपृष्ठ** त्रि० काण्डानि पृष्ठे यस्य । शस्त्राजीवे । "स्वकुलं पृष्ठतः कृत्वा यो वै परकुलं व्रजेत् । तेन दुश्चरितेनासौ काण्डपृष्ठ इति स्मृतः" इत्युक्तलक्षणे जने पु० ।

**काण्डरुहा** स्त्री० काण्डात् प्ररोहति । कटुकायाम् ( कट्की ) ।

**काण्डीर** त्रि० काण्डो बाणोऽस्यास्ति ईर । (तीरन्दाज) बाणधरे । अपामार्गे न० । मञ्जिष्ठायां कारवेल्लयाञ्च स्त्री० ङीप् वा ।

**काण्डेक्षु** पु० काण्डेन स्कन्धेन इक्षुरिव । (तालमाखना) तृणभेदे ।

**काण्व** पु० कण्वेनाधीतः अण् । यजुर्वेदीयशाखाभेदे । अपत्यार्थेऽण् । कण्वपुत्रादौ त्रि० ।

**कातर** त्रि० ईषत्तरति स्वकार्य्यं कर्त्तुं शक्नोति कु+तॄ अच् कोः कादेशः । अधीरे, व्यसनाकुले, भीते, विवशे, चञ्चले च । तदध्यासितकातराक्षीतो रघुः के जले आतरति प्लवते न तु विशेषतो मज्जति उडुपे ।

**कातृण** न० कुत्सितं तृणं कादेशः । कुत्सिततृणे ।

**कात्यायन** पु० कतस्यापत्यं फक् मुनिभेदे । स च धर्मशास्त्र कर्त्ता ।

वररुचि नाम्ना व्याकरणवार्त्तिककर्त्तरि च।

**कात्यायनी** स्त्री॰ कत्यस्यापत्यं स्त्री॰ फञ्। दुर्गायां शक्ति कल्पान्तरे कत्यस्यापत्यमासीत्। अर्द्धवयस्कायां काषायवस्त्रायां विधवायाञ्च।

**कादम्ब** पु॰ कद–णिच्–अम्बच्। (बालहाँस) कलहंसे, काणे, इषौ च। कदम्बे भवः अण्। कादम्बभव त्रि॰।

**कादम्बर** न॰ कादम्बं राति लाति प्रकृतित्वेन रा–क। ऐक्षवे गुडादौ, तस्य विकारे मद्ये च। कादम्बं कदम्बोद्भवं रसं राति रा–क। तत्तुल्यरसत्वात् दधिसरे पु॰।

**कादम्बरी** स्त्री॰ कुत्सितं मलिनमम्बरं यस्य कोः कदादेशः कदम्बरो बलभद्रस्तस्य प्रिया अण्। हलिप्रियायाम् मदिरायाम्। कादम्बं रसं राति रा–क गौरा॰ ङीष् कोकिलायाम्, सरस्वत्याम्, शारिकायाञ्च।

**कादम्बिनी** स्त्री॰ कादम्बाः कलहंसा बलाका वा अनुधावकत्वेन सन्त्यस्याः इनि। मेघमालायाम्। [कालभवे।

**कादाचित्क** त्रि॰ कदाचिद् भवः कालार्थत्वात् ठञ्। कदाचित्-

**काद्रवेय** पु॰ कद्र्वाः अपत्यम् ढक्। नराकारे फणालाङ्गूलवति देवयोनिभेदे नागे, सर्पे च। [सुखे च।

**कानन** न॰ पु॰ कन–दीप्तौ ल्युट् युच् वा। वने, गृहे, ब्रह्मणो

**काननाग्नि** पु॰ ६त॰। शर्मीवृक्षे, तज्जातवह्निना हि वनदाहः।

**कानीन** पु॰ कन्याया अनूढ़ाया अपत्यम् अण् कनीनादेशश्च। "कानीनः कन्यकाजातो मातामहसुतो मतः" इति स्मृत्युक्ते पुत्रभेदे। यथा व्यासः कर्णश्च।

**कान्त** पु॰ कन–क्त, कम–क्त वा। पत्यौ, लौहे, सूर्य्यपूर्बकः सूर्य्यकान्तशिलायाम्, चन्द्रपूर्बकः चन्द्रकान्तमणौ, वसन्ते, हिज्जलवृक्षे च। कस्य ब्रह्मणोऽन्तो यस्मात्। वासुदेवे। कुङ्कुमे लौहभेदे न॰। मनोरमे, शोभने, अभीष्टे च त्रि॰। नार्य्यां, प्रियङ्गुवृक्षे च स्त्री॰।

**कान्तपुष्प** पु० कान्तं पुष्पमस्य। कोविदारवृक्षे।

**कान्तलक** पु० कान्तं लकति लक—आस्वादने अच्। (तुंद) तुन्नवृक्षे।

**कान्तलोह** पु० कान्तो लौहो यस्य। अयस्कान्ते। कर्म०। (कान्तिलौह) लौहसारे। [पुष्पोद्गमौषधं यस्य। अशोकवृक्षे।

**कान्ताङ्घ्रिदोहद** पु० कान्ताङ्घ्रिः नारीपादस्पर्शः दोहदं

**कान्तायसम्** न० कान्तमयः अच् समा०। (कान्तिलौह) लौहसारे। ईष०। अयस्कान्ते मणौ।

**कान्तार** पु० कस्य जलस्य सुखस्य अन्तस्तं कान्तं मनोहरं वा ऋच्छति ऋ—अण्। कोविदारवृक्षे, इक्षुभेदे उपद्रवे, कानने, पद्मभेदे, महारण्ये, दुर्गमवर्त्मनि, गर्त्ते च।

**कान्तारक** पु० कान्तं वनमृच्छति ऋ—ण्वुल् (काजला) इक्षुभेदे।

**कान्ति** स्त्री० कम—क्तिन्। शोभायां, दीप्तौ, अभिलाषे च।

**कान्तिदा** स्त्री०कान्ति+दा—क। सोमराजीलतायाम् कान्तिप्रदे त्रि०।

**कान्तिदायक** न०कान्ति-दा-ण्वुल्। कालीयकवृक्षे। कान्तिप्रदे त्रि०।

**कान्दव** न० कन्दौ भर्ज्जनपात्रे संस्कृतम् अण्। (मिठाइ) पक्वान्ने भक्ष्यभेदे।

**कान्दविक** त्रि० कान्दवं पण्यमस्य ठक्। अपूपकारिणि तदुपजीविनि (मेठाइकर)। [पलायिते।

**कान्दिशभूत** त्रि० कां दिशं यामीत्युक्तिं भूतः प्राप्तः पृषो०। भीत्या

**कान्दिशीक** त्रि० कां दिशं यामीत्याह ठक् पृषो०। भीत्या पलायिते।

**कान्यकुब्ज** न० कन्याः कुब्जा यत्र कन्याकुब्ज+स्वार्थेऽण् पृषो०। देशभेदे, विप्रभेदे च (कनौज)। [च। कालभेदे पु०।

**कापटिक** त्रि० कपटेन चरति ठक्। कपटव्यवहारिणि शठे, परमर्मज्ञे

**कापथ** पु० कुत्सितः पन्थाः अच् समा० कादेशः। निन्द्ये वर्त्मनि।

**कापालिक** पु० कपालेन मस्तककर्परेण व्यवहरति भोजनपानादिकं करोति ठक्। स्वनामख्याते वर्णे, कुलाचारिभेदे च।

**कापिल** पु० कपिलेन प्रोक्तमधीतेऽण्। सांख्यशास्त्रज्ञे, पिङ्गलवर्णे च। तद्वृति त्रि०।

कापिश्र न० कपिशवर्णोऽस्यस्य प्रज्ञाद्यण् । मद्यभेदे ।
कापिशायनी स्त्री० कपिशस्य मद्यभेदस्यायनम् स्थानं अत्र—ल्युट् ङीप् । द्राक्षालतायाम् ।
कापुरुष पु० कुत्सितः पुरुषः कोः कादेशः । निन्दितपुरुषे ।
कापोत न० कपोतानां समूहः अण् । पारावतसमूहे । कपोतवर्णत्वात् कपोतस्येदम् अण् । सौवीराञ्जने, सर्जिकाक्षारे च ।
कापोताञ्जन न० कापोतं च तदञ्जनं चेति कर्म० । सौवीराञ्जने ।
काफल पु० कुत्सितं फलमस्य । (कट्फल) वृक्षभेदे ।
काम न० कम—णिच्—अच् । शुक्रे, इष्टानतिक्रमे, निकामे च । कम—घञ् । काम्ये, अनुमतौ, इच्छायामभीष्टविषयाभिलाषे, "पुंसो या विषयापेक्षा स काम इति भण्यते" इत्युक्तलक्षणे विषयापेक्षणे कन्दर्पे च पु० ।
कामकला स्त्री० कामस्य कला प्रिया । कलाहेतुत्वात् कामपत्न्याम् रतौ ।
कामकार त्रि० कामं काम्यं करोति अण् । कामतः प्रवृत्तौ ।
कामकेलि पु० कामे रतौ केलिर्यस्य । जारे । कर्म० । सुरते ।
कामगामिन् त्रि० कामं गच्छति गम—णिनि । यथेष्टाचरणशीले । वृषो० सुम् । कामं गामीत्यप्यत्र ।
कामचार पु० कामेन स्वेच्छया चर+घञ् चारः ।
कामद त्रि० कामान् ददाति दा—क । अभीष्टदायके, वनभेदे च ।
कामदुघा स्त्री० कामं दोग्धि दुह—क घादेशः । अभीष्टसम्पादयित्र्याम् सुरभौ गवि ।
कामदुह् स्त्री० कामं दोग्धि दुह—क्विप् । सुरभौ गवि ।
कामधेनु स्त्री० कामस्य अभीष्टस्य दोहनस्य हेतुर्धेनुः । सुरभौ गवि ।
कामध्वंसिन् पु० कामं ध्वंसयति ध्वन्स—णिच्—णिनि । शिवे ।
कामपाल पु० कामान् पालयति पाल—रक्षणे—अण् । बलभद्रे ।
कामम् अव्य० कम—णिङ्—अमु । अनुमतौ, प्रकामे, पर्याप्ते, असूयायाम्, अनुमतौ, अकामानुमतौ, स्वच्छन्दार्थे, अनिष्टस्यागत्या,

स्वीकारे च। [रूपे, सुन्दररूपे च त्रि०।

**कामरूप** पु० स्वनामख्याते देशभेदे। कामोरूपं यस्य। स्वेच्छा-

**कामरूपिन्** पु० कामतो रूपं यस्य इनि। विद्याधरे। मनोज्ञरू-
पवति, स्वेच्छारूपधारिणि च त्रि०।

**कामल** पु० कामेन लसति लस—ड। वसन्तकाले। मत्वर्थे लच्।
कामयुक्ते त्रि०। कामं कान्तिं लुनाति लू—ड। रोगभेदे (कांयोल)
पु० स्त्री० स्त्रियां टाप्।

**कामवल्लभ** पु० ६त०। आम्रवृक्षे तन्मुकुलं हि कन्दर्पप्रियम्।

**कामवृन्ता** स्त्री० कामतो वृन्तं यस्याः। पाटलायाम्। [(परगाछा)।

**कामवृक्ष** पु० कामेन बीजाङ्कुरनिरपेक्षतया यथेच्छं वृक्षः। वन्दाके

**कामशर** पु० कामस्य शर इव मुकुलवत्त्वेन। आम्रवृक्षे।

**कामसख** पु० ६त०। कामस्य सखा+टच् समा०। वसन्तकाले, तदु-
द्दीपके चन्द्रे च। [यनप्रणीते ग्रन्थे।

**कामसूत्र** न० कामस्य तत्तन्त्रस्य सूत्रम्। कामतन्त्रप्रतिपादके वात्स्या-

**कामाङ्कुश** न० कामस्याङ्कुश इव। नखे।

**कामात्मता** स्त्री० कामात्मनो भावः तल्। कर्मफलाभिलाषशीलत्वे।
कामात्मता न प्रशस्तेति मनुः।

**कामात्मन्** त्रि० कामे फलतृष्णायामात्माऽन्तःकरणं यस्य। फलकाम-
नावति, कामाकुलचित्ते च। काम आत्मा स्वरूपं यस्य। काम-
मये काम्यमानविषयशताकुलचित्तत्वेन तद्रूपतापन्नस्वभावे।

**कामान्ध** पु० कामं यथेष्टमन्धयति स्वरेण विरहिणम् चुरा० अनुध-
अच्। कोकिले। कामेनान्धः ३त०। विवेकहीने त्रि०।

**कामालु** पु० कामतोऽलति अल—पर्याप्तौ उण्। रक्तकाञ्चनवृक्षे।

**कामावशा(सा)यिता** स्त्री० कामान् अवशेते अव+शीङ्—णिनि तस्य
भावः तल्। अणिमाद्यष्टविधैश्वर्य्यमध्ये सत्यसङ्कल्पताख्ये ऐश्वर्य्ये।
कामान् अवसातुं निश्चेतुं शीलमस्य स्यतेः णिनि ततस्तल्। कामा-
वसायिताप्यत्रैवार्थे।

**कामिन्** पु० काम—णिनि। चक्रवाके, पारावते, चटके, सारसखगे च

एतेषां कामाधिक्यात् कामित्वम् । कामयति त्रि० स्त्रियां ङीप् कामिनी । भीरुस्त्रियाम्, दारुहरिद्रायाम्, मदिरायाञ्च स्त्री० ।

**कामीन** पु० काममनुगच्छति ख । रामपूगे । कामानुगते त्रि० ।

**कामुक** पु० कम–णिङ्–उक । अशोकवृक्षे, अतिमुक्तके, माधवीलतायाम्, चटके च । मैथुनकाममतिशयवति त्रि० । स्त्रियां ङीप् कामुकी । इच्छामात्रवत्यान्तु टाप् कामुका ।

**कामुककान्ता** स्त्री० कामुकानां कान्ता प्रिया । अतिमुक्तकलतायाम् ।

**काम्पिल्य** पु० कम्पिलाया नद्या अदूरभवो देशः ष्य । उत्तरदेशभेदे, तत्र जातायां गुण्डारोचनाख्यायां लतायाञ्च ।

**काम्बल** पु० कम्बलेन परिवृतो रथः । कम्बलेन समन्ताद्वेष्टिते रथे ।

**काम्बविक** पु० कम्बुः शङ्खः शिल्पमस्य । शङ्खकारे (शांखारि) ।

**काम्बोज** पु० कम्बोजो देशोऽभिजनो निवासो वा यस्य अण् कम्बोजदेशोद्भवेऽश्वे, पुन्नागवृक्षे, म्लेच्छभेदे च । श्वेतखदिरे, माषपर्ण्याम्, हयपुच्छ्याञ्च, स्त्री० ङीप् ।

**काम्य** न० कम–णिङ् यत् । यत् किञ्चित् फलमुद्दिश्य, यज्ञदानतपः-क्रिया । क्रियते बहुलायासं तत्काम्यं परिकीर्त्तितमित्युक्ते कर्मणि । कमनीये, सुन्दरे च त्रि० ।

**काय** पु० चीयतेऽन्नादिभिः चिञ् घञ् नि० । देहे । कः प्रजापतिर्ब्रह्मा वा देवताऽस्य अण् इत् अन्तादेशः वृद्धिरयादेशश्च । प्राजापतिदेवताके चरौ, प्राजापत्यविवाहे कनिष्ठानामिकयोरधोभागे, स्वल्पाङ्गुलिमूलरूपे, ब्राह्मतीर्थे, लक्ष्ये, स्वभावे, मूलधने च ।

**कायस्थ** पु० काये तिष्ठति काय+स्था–क । परमात्मनि, लिपिकरवृत्तौ (काएत) जातिभेदे च । कायस्थितिरनया स्था–क टाप् । हरीतक्याम् आमलक्याञ्च स्त्री० ।

**कायिका** स्त्री० कायेन निर्वाह्या ठक् । गवादिकर्मकरणरूपायां "दोह्यवाह्यकर्मयुक्ता कायिका समुदाहृता" इति स्मृत्युक्तायां वृद्धौ प्रत्यहं पणतदर्द्धादिदेयवृद्धौ च "कायाविरोधिनी शश्वत् पणार्द्धाद्या तु कायिकेति नारदवचनात् ।

**कार** पु० कॄ हिंसायां, कृ करणे वा भावे घञ् । वधे, निश्चये, यत्ने क्रियायाञ्च । कॄ विक्षेपे आधारे घञ् । हिमाद्रौ, यतौ च । कर्म्मोपपदे कर्त्तरि अण् । तत्कर्म्मकर्त्तरि यथा कर्मकारः स्वर्ण-कार इत्यादि । कॄ—कर्मणि घञ् विक्षिप्ते धान्यादिराशौ ।

**कारक** त्रि० कृ—ण्वुल् । क्रियाजनके । क्रियोपाधिके साक्षात् क्रि-यान्वयिनि व्याकरणोक्ते कर्त्तृकर्म्मादिषु षट्सु न० ।

**कारकदीपक** न० अलङ्कारशास्त्रे अर्थालङ्कारभेदे सा० १०प० ।

**कारण** न० कृ—णिच् करणे ल्युट् । हेतौ, यद्व्यतिरेकेण कार्य्यानुत्प-त्तिस्तस्मिन्, यथा दण्डं विना घटस्यानुत्पत्तिरतो दण्डो घटस्य कारणम् । साधने, इन्द्रिये, देहे च । कॄञ् हिंसायां स्वार्थे णिच् भावे ल्युट् । वधे । क्रियते इति कर्म्मणि, वाद्यभेदे, च । कॄञ् हिंसायां णिच्—युच् टाप् कारणा । यातनायां स्त्री० ।

**कारणमाला** स्त्री० अर्थालङ्कारभेदे साहि० १० परि० ।

**कारणोत्तर** न० कारणेन उत्तरम् । व्यवहारेषु वाद्युपन्यस्तं वस्तु सत्यत्वेनाङ्गीकृत्य तत्प्रतिकूलतासाधनकारणकथने यथा अयं शतं धारयतीत्यभियोगे सत्यं गृहीतं किन्तु शोधितम् इयं भूमिर्म्मदीया-नेन भुज्यते इत्यभियोगे सत्यमेतस्य भूमिः किन्तु दानेन क्रयादिना वा इदानीं ममेत्युत्तरकथनम् । कारणमप्येतदर्थे "मिथ्योत्तरे पूर्ब-वादे कारणे प्रतिवादिनीति" कारणोत्तरेऽपि कारणशब्द-प्रयोगात् ।

**कारण्डव** पु० रम—ड तस्य नेत्त्वम् रण्डः ईषत् रण्डः कारण्डः तं वाति वा—कः हंसभेदे ।

**कारम्भा** स्त्री० ईषत् रम्भा कोः कादेशः । प्रियङ्गुवृक्षे ।

**कारव** पु० केति रवोऽस्य । काके ।

**कारवी** स्त्री० कारं वाति वा क, केन जलेन रौति अच् गौरा० ङीष्, क+अच् करणे मयूरस्तस्येदम् अण्+कॄ—हिंसायां णिच् क्विप् कार् तमवति अण् वा । शतपुष्पायाम्, रुद्रजटायाम्, मयूरशि-खायाम् । कारवेल्ले, त्वक्पत्राम् (तेजपात) कृष्णजीरके च ।

**कारवेल्ल** पु० कारं वेल्लते वेल्ल—अण्। (करेल) लताभेदे। स्वल्पार्थे ङीप्। क्षुद्रकारवेल्लायाम् (उच्छा)।

**कारस्कर** पु० कारं करोति कृ—अण् नि० सुट्। किम्पाकवृक्षे।

**कारा** स्त्री० कृ—भिदादित्वात् अङ् नि० दीर्घः। बन्धनागारे, दूत्याम्, वीणाधःस्थकाष्ठमयभाण्डे, सुवर्णकारिकायाञ्च।

**कारागार** न० कारैवागारम्। बन्धनालये।

**कारापथ** पु० लक्ष्मणात्मजयोरङ्गदचन्द्रकेत्वोराज्यविषये देशभेदे।

**कारि** स्त्री० कृ—इञ्। क्रियायाम्। शिल्पिनि त्रि०।

**कारिका** स्त्री० कृ—धात्वर्थनिर्देशे ण्वुल्। क्रियायाम्। कर्त्तरि ण्वुल्। नटयोषिति। स्वल्पाक्षरैरल्पा बहुलार्थबोधके श्लोके, शिल्पे च कृ—भावे ण्वुल्। यातनायाम्। कृ—वुण्, नापितादिकन्ये, वृद्धिभेदे च (सुद)। [स्वयं कृतेति स्टल्युक्ता वृद्धिभेदे(सुद)।

**कारिता** स्त्री० कृ—णिच्—क्त। "कारिता नाम सा वृद्धिर्यर्णिकेन

**कारीरी** स्त्री० कं जलमृच्छति क+ऋ—णिच् कार् मेघः तमीरयतीति ईर—अण्। वृष्टिसम्पादिकायां यज्ञक्रियायाम्। कारीरीमत्तु वृष्टिरिति श्रुतिः।

**कारु** त्रि० कृ—उण्। शिल्पिनि, कारके च। विश्वकर्मणि पु०।

**कारुज** पु० कं जलमारुजति, कुत्सितं रुजति वा रुज—क। करभे, वल्मीके, नागकेशरे, गैरिके, स्वयंजाते देहस्थे तिलादिचिह्ने च।

**कारुणिक** त्रि० करुणा शीलमस्य ठक्। दयालौ दयाशीले।

**कारुण्य** न० करुणस्य भावः करुणैव वा ष्यञ्। दयायाम्।

**कार्त्तस्वर** न० कृतस्वरे व्याकरभेदे भवं, कृताः पठिताः स्वरा येन तस्मै वैदिकाय ब्राह्मणाय वा इदम् वा अण्। स्वर्णे, धुस्तूरे, काञ्चनवृक्षे च।

**कार्त्तिक** पु० कृत्तिकायां जातः अण्। स्कन्दे, कृत्तिकानक्षत्रेण युक्ता पौर्णमासी कार्त्तिकी साऽस्मिन् मासे अण्। स्वनामख्याते शरदृतोर्द्वितीये मासे

**कार्त्तिकिक** पु० कृत्तिकानक्षत्रेण युक्ता पौर्णमासी कार्त्तिकी

सा यत्र मासे ठक् । कार्त्तिके शरद्गतोर्द्वितीये मासे ।

**कार्त्तिकी** स्त्री० कृत्तिकानक्षत्रेण युक्ता पौर्णमासी अण् । चान्द्र-कार्त्तिकमासस्य पौर्णमास्याम् ।

**कार्त्तिकेय** पु० कृत्तिकानामपत्यं तत्पालितत्वात् ढक् । स्कन्दे शिवपुत्रे ।

**कार्त्तिकोत्सव** पु० ७त० कार्त्तिकशुक्लप्रतिपदि कर्त्तव्ये दीपोत्सवे ।

**कार्त्स्न्य** न० कृत्स्नस्य भावः ष्यञ् । साकल्ये, सामग्र्ये ।

**कार्पट** पु० कीर्य्यते कॄ-विच् कर्-पटः कर्म० सद्व भवति अण् । लाक्षायाम् (चापडागाला) स्वार्थेऽण् । जुद्रवस्त्रखण्डे, कर्पटेन जीर्णवस्त्रेण चरति अण् । कार्य्यार्थिनि (उमेदार) ।

**कार्पटिक** पु० कर्पटेन काषायवस्त्रेण चरति ठक् । तीर्थयात्रोद्यते ।

**कार्पण्य** न० कृपणस्य भावः ष्यञ् । उचितव्ययविमुखतया धनसञ्चये-च्छायां, "दैन्ये च" कार्पण्यदोषोपहतस्वभाव इति गीता ।

**कार्पास** पु० कार्पास्याः फलम् अण् तस्य लुक् तस्य विकारे वा अण् । (तुला) कार्पासीफले । तज्जातवस्त्रादौ त्रि० ।

**कार्पासनासिका** स्त्री० कार्पासस्य नासिकेव सूत्राकर्षण स्थानम् । यथा नासिकासूत्रदानेन पश्वादिराकृष्यते एवं सूत्राकर्षके तर्कौ, यन्त्रे (टेको) ।

**कार्पासी** स्त्री० कृ-पास स्वार्थेऽण् । वृक्षभेदे (कापास) ।

**कार्म्मण** त्रि० कर्मणि कुशलः अण् । क्रियासु दक्षे, योगविद्यायाम् ।

**कार्म्मिक** त्रि० कर्मणा शिल्पिकर्मणा निर्वृत्तं ठक् । विचित्रवस्त्रादौ ।

**कार्मुक** पु० कर्मणे प्रभवति उकञ् । वंशे, श्वेतखदिरे, महानिम्बे हिज्जले च । धनुषि न० । क्रियादक्षे, कर्मक्षमे च त्रि० ।

**कार्य्य** न० कृ-ण्यत् । प्रयोजने, हेतौ, व्याकरणोक्तेषु आ-देशप्रत्ययागमेषु, न्यायमते प्रागभावप्रतियोगिनि घटपटादि विकार-रूपे कार्य्ये, विनश्वरे, अवयववति, देहादौ, विवादे, पुण्यापुण्यरूपे अपूर्वे च । कर्त्तव्ये त्रि० ।

[illegible]र्श्य न० कृशस्य भावः ष्यञ् । कृशत्वे । स्वार्थे ष्यञ् । कृशे सा-लवृक्षे, शकुचे (टेको) वृक्षे च पु० ।

कार्षापण पु० न० कर्षस्यायम् अण् आ+पण—घञ् कार्षस्य आपणः । (काहन) षोडशसु पणेषु, पणे च । [ (तोला)

कार्षिक पु० कर्षस्यायम् ठञ् । पणचतुर्थभागे, कृष्यमाने च ।

कार्ष्य पु० कृश क स्वार्थे ष्यञ् । सालवृक्षे ।

काल पु० कुत्सितमलति अल—अच् कोः कादेशः । कृष्णवर्णे । तद्वति त्रि० । लौहे, कक्कोलके, न० । कालयति सर्वं चुरा० कल०—अच् । यमे, महाकाले शिवे, शनैश्चरे, कोकिले रक्तचित्रके, कासमर्दे, ऋणटमुञ्जादिसमये च पु०। अयं च सर्वकार्य्येषु निमित्तं कारणम् । स च आदित्यादिक्रियाप्रचयरूपस्तदुपाधिको घटादिरूपो वा ।

कालक पु० कु० कल—ण्वुल् । जतौ, ( देहस्थचिह्नभेदे ) जलव्याले च । कालशाके, यकृति, बीजगणितोक्ते अव्यक्तराशिसंज्ञाभेदे च न०।

कालकण्ठ पु० कालः कण्ठो यस्य । नीलकण्ठे शिवे, मयूरे, । खञ्जने, कलविङ्के, दात्यूहे च ।

कालकूट न० कालमपि कूटयति, दहति, कूट—अण् । विषे, कालस्य मृत्योः कूटो राशिरिव । देवासुररणे देवैर्हतस्य पृथुमालिनः । दैत्यस्य रुधिराज्जातस्तरुरश्वत्थसन्निभः । निर्यासः कालकूटोऽस्य मुनिभिः परिकीर्त्तितः । सोऽहिक्षेत्रे, शृङ्गवेरे कोङ्कणे मलयेऽभवदित्युक्ते वृक्षनिर्य्यासरूपे विषभेदे पु० न० ।

कालकृत् पु० कालं समयं स्वगत्या करोति कृ—क्विप् तुक् च । सूर्य्ये ।

कालकेशी स्त्री० कालः केशएव पत्रादिर्यस्याः । नील्याखोषधौ ।

कालखण्ड न० कर्म० । दक्षिणकुक्षिस्थे मांसखण्डे यकृति ।

कालचक्र न० कालश्चक्रमिव सङ्गृतरूपारयत्वात् सदा परिवर्त्तमानत्वाच्च । कालस्वरूपे द्वादशमासात्मके संवत्सरस्वरूपे चक्रे ।

कालचिन्तक पु० कालं चिन्तयति विचारयति चिन्ति-ण्वुल् । ज्योतिर्विदि दैवज्ञे ।

कालधर्म्म पु० ६त० मृत्यौ, समयस्वभावे च ।

**कालनियोग** पु० कालेन कृतो नियोगः कालस्य वा नियोगः आज्ञा नि+युज—घञ्। दैवाज्ञायां, कालकृतनियमे च।

**कालनिर्य्यास** पु० कर्म्म०। गुग्गुलौ।

**कालनेमि** पु० राक्षसभेदे, हिरण्यकशिपुपुत्रे दैत्ये च "कालनेमिवधे युद्धे" इति पुराणम्।

**कालपर्ण** पु० कालं कृष्णं पर्णमस्य। तगरवृक्षे।

**कालपुच्छ** पु० कालः पुच्छोऽस्य। "गुणैरेणसमः कालपुच्छो मुनिभिरीरित" इत्युक्ते मृगभेदे।

**कालपृष्ठ** पु० कालं पृष्ठमस्य। मृगभेदे, कङ्कपक्षिणि, चापे च। कालोयम इव पृष्ठमस्य। कर्णस्य चापे।

**कालमान** पु० कालं मानमस्य। कृष्णजीरके, कृष्णतुलस्याञ्च।

**कालमूल** पु० कालं मूलमस्य। रक्तचित्रकवृक्षे।

**कालमेषी** स्त्री० कालं वर्णं मिषति स्पर्द्धते मिष—अण्। मञ्जिष्ठायाम्, सोमराज्याम्, त्रिवृति च।

**कालरात्रि** स्त्री० कालस्य रात्रिर्नाशिका। सर्वभूतापहारिण्याम् स्त्र्यृद्देव्याम् यमभगिन्याम् कल्पान्तरात्रौ, "दीपावली तु या प्रोक्ता कालरात्रिश्च सा मते" त्युक्ते कार्त्तिकामावास्यारात्रिसमवे च।

**काललवण** न० कर्म्म०। विड्लवणे।

**काललौह** न० कर्म्म०। कृष्णायसे लौहभेदे।

**कालवृन्त** पु० कालं कृष्णं वृन्तमस्य। कुलत्थवृक्षे।

**कालशाक** न० कर्म्म० श्राद्धीये शाकभेदे।

**कालसर्प** पु० नित्यकर्म्म०। कृष्णसर्पे महाविषे ( केउटासाप )।

**कालसार** त्रि० कालेन सारः प्रबलः। कृष्णसाराभिधे मृगे,।

**कालसूत्र** न० कालस्य यमस्य सूत्रमिव। कुलालचक्रसूत्रच्छेदनरूपे नरकभेदे।

**कालसेय** न० कलस्यां दधिकुम्भ्यां भवं ढक्। तक्रे।

**कालस्कन्ध** पु० कालः स्कन्धो यस्य। तमालवृक्षे, तिन्दुकवृक्षे, जीरकवृक्षे, दुष्खदिरे, उदुम्बरे च।

**कालास्त्री०** काल+अर्शाद्यच् । कृष्णमिहति कालयति अच् । मञ्जिष्ठायाम् । कल-क्षेपे कर्मणि घञ् अश्वगन्धायाम् पाटलावृक्षे, कृष्णजीरके, नीलिकायाञ्च ।

**कालागुरु** न० कर्म० । प्रागज्योतिषदेशोत्पन्ने कृष्णागुरुचन्दने ।

**कालाग्नि** पु० कालकारः मृत्युकारी अग्निः प्रलयाग्नौ कालानल-दयोऽप्यत्र । [कलविङ्के, कपिञ्जले पक्षिणि च ।

**कालानुनादिन्** पु० अनुनदति अनु नद-णिनि कर्म० भ्रमरे ।

**कालानुसारक** न० कालः मृगमद इवानुसरति दूरतो गच्छति ण्-ण्वुल् । कृष्णागुरुणि पीताख्यचन्दने ।

**कालानुसारिन्** न० कालः मृगमद इवानुसरति गन्धेन दूरतो गच्छति णिनि । शैलेये गन्धद्रव्ये ।

**कालानुसार्य्य** पु० न० । कालेन मृगमदेनानुसार्य्यते अनुसृ-ण्यत् । शैलजे गन्धद्रव्ये, शिंशपावृक्षे, (शिशु) तगरे च ।

**कालान्तरविष** पु० कालान्तरे दंशनकालात् बहुकालानन्तरं विषं यस्य । मूषिकादौ । तस्य हि विषं कालान्तरे कष्टदम् ।

**कालायस** न० कर्म० । लौहभेदे ।

**कालाशुद्धि** स्त्री० कालस्य शुभकर्म योग्यसमयस्य अशुद्धिः । शुभकर्माकरणप्रयोजके मलत्याद्युक्ते कालदोषे ।

**कालिक** पु० काले वर्षाकाले चरति ठक् । बकखगे, कालं कृष्णवर्ण-मनुसरति ठक् । कृष्णचन्दने कालागुरुणि । प्रकृष्टः दीर्घः कालोऽस्य प्रकृष्टे ठञ् । वैरे । कालेन निर्वृत्ते कालस्येदं वा ठक् । कालभवे कालसम्बन्धिनि च त्रि० । कालो वर्णो ऽस्त्यस्याः ठन् । देवीभेदे वृश्चिकपत्रवृक्षे, (विचाति) क्रमेण देयवस्तुमूल्ये, नवमेघे, पटोलशाखायां रोमाल्याम् मांस्यां, काक्याम्, शिवायां, मेघावलौ, स्वर्णादिदोषे सुरायां, काकोल्यां, श्यामाख्यविहगे प्रतिमासदेयवृद्धौ कुज्झटिकायां, त्रिशिरायां हरीतक्यां च स्त्री० ।

**कालिङ्ग** पु० कुत्सितं लिङ्गमस्य । भूमिकर्कारौ, हस्तिनि, सर्पे, लौहभेदे च । कालिङ्गानां राजा अण् । कलिङ्गदेशपतौ नृ-

यतो बहुषु तस्य लुक् कलिङ्गाः। “कलिङ्गदेशमारभ्य यद्याम्योत्तमं शिवे! दक्षिणस्यां वरेशानि! कालिङ्गाः परिकीर्त्तिता इत्युक्तदेशभेदे ब० व० गौरा० ङीष्। राजकर्कट्याम्।

**कालिन्दी** स्त्री० कलिन्दाद्री भवा अण्। यमुनायाम्।

**कालिन्दीभेदन** पु० भिनत्ति हलेनाकर्षणेन गतिरोधनादिना अन्यथा करोति भिद—ल्यु ६त०। बलभद्रे तत्कथा च हरिवंशे।

**कालिमन्** पु० कालस्य भावः इमनिच्। कृष्णतायाम्।

**काली** स्त्री० कालो वर्णोऽस्त्यस्याः अच् ङीष्। देवीभेदे, मत्स्यगन्धायां व्यासमातरि सत्यवत्याम्, नवमेघालौ, पटोलादे कालाञ्जन्यां त्रिवृति, रात्रौ, दक्षिकाल्याम्, । (चिचाति) वह्नेर्जिह्वाभेदे च।

**कालीयक** पु० कालस्य वर्णस्यायं इद्वाच्छः संज्ञायां कन्। दारुहरिद्रायाम्। कृष्णचन्दने न०।

**कालेय** पु० कलेरपत्यम् ढक्। दैत्यभेदे, (कालायकृष्णवर्णताये प्रभवति ढक्। यकृति। कालचन्दने न०। स्वार्थे कन्। कुक्कुरे। कालीयके चन्दने न०। हरिद्रायाम् पु०।

**काल्पनिक** त्रि० कल्पनायाः आगतः ठक्। कल्पिते, आरोपिरे, कल्पनाभवे च। [ गर्भधारणयोग्यकालप्राप्तायां गवि।

**काल्या** स्त्री० कालः गर्भधारणयोग्य समयः प्राप्तोऽस्य यत्।

**कावेरी** स्त्री० कस्य जलस्य वेरं शरीरं तस्येदमित्यण्। सरिद्भेदे। कुत्सितमपवित्रं वेरं यस्याः स्वाङ्गात् ङीप्। वेश्यायां पुब०। हरिद्रायाम्। [कवित्वे च।

**काव्य** पु० कविरेव स्वार्थे ष्यञ्। शुक्रे। कवेः कर्म। ग्रन्थभेदे

**काव्यलिङ्ग** न० अर्थालङ्कारभेदे। सा० १० परि०।

**काव्यार्थापत्ति** स्त्री० अर्थालङ्कारभेदे। सा० १० परि०।

**काश** दीप्तौ भ्वा० आत्म० अक० सेट्। काशते अकाशिष्ट, काशाञ्चकाशे णिच् अचकाशत् त।

**काश्** दीप्तौ दिवा आत्म० अक० सेट्। काश्यते। अकाशिष्ट णिच् अचकाशत् त।

काश पु० काश–अच् । रोगभेदे, क्षुते, ऋषिभेदे च, तत्पुष्पे न० । कन् । काशकः । काशार्थे ।

काशिराज पु० ६त० टच् समा० ङ्याप्पोरिति ह्रस्वः । नृपभेदे, दिवोदासे धन्वन्तरौ नृपे च ।

काशी स्त्री० काश–अच् गौरा० ङीष् । स्वनामख्यातायां नगर्य्यां "काशीतलवाहिनी गङ्गे"ति मन्त्रोच्चारणमानम् ।

काशीश न० कं जलमश्नुते व्याप्नोति क+अश–णिनि तेषु मध्ये ईटे क । (हीराकस) उपधातुभेदे तत्संयोगात् दन्तादितो जलकर्षणात् तस्य जलव्यापनप्रधानत्वम् ।

काश्मीर न० कश्मीरदेशेषु भवः अण् । कुङ्कुमे, पुष्करमूले, टङ्के (सोहागा) 'शारदापीठमारभ्य कुङ्कुमाद्रितटान्तकम् । तावत् काश्मीरदेशः स्यात् पञ्चाशद्योजनात्मक' इत्युक्ते देशे पु० ब० व० । तेषां राजा अण् । कश्मीरनृपे तस्य बहुषु लुक् । कश्मीराः ।

काश्मीरज पु० काश्मीरदेशे जायते जन–ड । कुङ्कुमे, कुष्ठे, (कुड़) पुष्करमूले च । गौरा० ङीष् गाम्भार्य्याम् अतिविषायाम् स्त्री० । ब० । काश्मीरजन्माप्यत्र ।

काश्यप पु० कश्यपस्य गोत्रापत्यम् विदाद्यञ् मुनिभेदे, मृगभेदे, मीनभेदे, गोत्रभेदे, तत् प्रवरान्तर्गतमुनिभेदे च कश्यपात्मजमात्रे त्रि० ।

काश्यपि पु० कश्यपस्यापत्यम् इञ् । गरुड़ाग्रजे अरुणे ।

काश्यपी स्त्री० कश्यपस्येयम् अण् ङीप् । पृथिव्याम् ।

काश्यपेय पु० कश्यपस्यापत्यम् ढक् । सूर्य्ये । गरुड़े च ।

काष्ठ न० काश–क्थन् । इन्धने दारुणि ।

काष्ठकदली स्त्री० काष्ठमिव कठिना कदली शाक० । वनकदल्याम् ।

काष्ठकीट पु० ६त० । घुणाख्ये कीटे ।

काष्ठकुट्ट पु० काष्ठं कुट्टयति छिनत्ति अण् । (काट्ठोकरा) पक्षिभेदे ।

काष्ठकुद्दाल पु० कुत्सितं दालयति दल विदारणे अण् शक० कुद्दालः । ६त० । नौकादेर्जलापनयनार्थं काष्ठघटिते कुद्दाले ।

काष्ठतक्ष् पु० काष्ठं तक्षति क्विप् । रथकारे वर्द्धकौ (कुन्दर) ख्याते चक्रीर्ण्यवर्णे ।

काष्ठतक्षक पु० काष्ठं तक्षति ण्वुल् । रथकारे वर्द्धकौ (छुतार) ।

काष्ठलेखक पु० काष्ठं लिखति ण्वुल् । घुणाख्ये कीटे ।

काष्ठा स्त्री० काश–क्थन् । दिशि, दारुहरिद्रायाम् स्थितौ, पर्य्यवसानभूमौ, अष्टादशनिमेषात्मके काले, उत्कर्षे, काष्ठागतस्नेहरसानुविद्धमिति कुमारः सीमायाञ्च परा हि काष्ठा तपसस्तया पुनरिति कुमारः ।

काष्ठाम्बुवाहिनी स्त्री० पुनःपुनरम्बु वहति णिनि, काष्ठस्याम्बुवाहिनी । काष्ठरचितनौकाक्षतिजलसेचन्याम् द्रोण्याम् । (सेञ्चोनी)।

कास कुत्सितशब्दे भ्वादि० आत्म० अक० सेट् । कासते अकासिष्ट कासाञ्चक्रे चङि अचकासत् त ।

कास पु० कास–घञ् । रोगभेदे ।

कासघ्नी स्त्री० कासं रोगं हन्ति टक् । कण्टकार्य्याम् ।

कासमर्द्द पु० कासं मृद्नाति मृद–अण् । (कालकासुन्दे) वृक्षभेदे ।

कासमर्द्दन पु० मृद–ल्यु ६त० । पटोले ।

कासर पु० के जले आसरति आ+सृ–अच्, ईषत् सरति स्थूलकायत्वात् कोः कादेशः वा । महिषे ।

कासार पु० केन जलेनासम्यक् सारोऽस्य, ईषत् सारोऽस्य वा । सरोवरे, सपद्मे निष्पद्मे वा महाजलाशये ।

कासारि पु० ६त० । कासमर्द्दे, आलुकौ च ।

कासीस न० क्षुद्रः कासः कासी तां स्यति सो–क । (हीराकस) । उपधातुभेदे ।

कासू स्त्री० कस–ऊ णिच्च । विकलवाचि, दीप्तौ, बुद्धौ, रोगे च ।

काहल पु० कुत्सितं हलति लिखति अच् कोः कादेशः । कुक्कुटे, विडाले च । शब्दमात्रे, महाढक्कायाम्, वाद्यभेदे, महाध्वनौ, अव्यक्तवाक्ये न० । शुष्के, भृशं, खले च त्रि० ।

काहलापुष्प पु० काहलेव पुष्पमस्य । धुस्तूरे ।

कि ज्ञाने जुहो० पर० सक० अनिट् । चिकेति अकैषीत् ।

किंवदन्ति(न्ती) स्त्री० किम्+वद्–झिच् वा ङीप् । जनश्रुतौ सत्ये असत्ये वा लोकापवादे ।

किंवा अव्य० किमु वा च द्व० । विकल्पे, अथवेत्यर्थे ।

किंशारु पु० कुत्सितं शृणाति किम्+शॄ–अण् । धान्याद्यग्रभागे, बाणे, कङ्कपक्षिणि च ।

किकीदिवि पु० किकीति दीव्यति शब्दायते किकि+दिव–इन् नि० दीर्घः । चाषविहगे । [स्त्रियां ङीप् ।

किङ्कर त्रि० किञ्चित् कुत्सितं वा करोति–ट । भृत्ये, सेवके ।

किङ्किणी स्त्री० किञ्चित् किणं करोतीति णिच्–अच्–गौरा० ङीष् । कटिभूषणे क्षुद्रघण्टिकायाम्, विकङ्कतवृक्षे च ।

किङ्किर पु० किम्+कॄ+क । कोकिले, भ्रमरे, हये, कन्दर्पे च । रक्तवर्णे स्त्री० ।

किङ्किरात पु० किङ्किरं रक्तवर्णमतति गच्छति पुष्पद्वारा अण् । अशोकवृक्षे, शुकपक्षिणि रक्ताम्लवृक्षे (रक्तझांटी) अत–अच् कर्म० । कन्दर्पे, कोकिले च । [समासान्त ।

किञ्च अव्य० किञ्च च द्व० । आरम्भे, समुच्चये, साकल्ये, समा–

किञ्चन अव्य० किम्+चन । असाकल्ये, अल्पे च । पुंश्चिकर्ण-पलाशे पु० ।

किञ्चित् अव्य० किम्+चित् । असाकल्ये, अल्पे च ।

किञ्चुलुक पु० किञ्चित् चुलुम्पति सौत चुलुम्प–डु संज्ञायां कन् । (केंचो) महीलताख्ये कीटभेदे ।

किञ्जल्क पु० किञ्चित् जलति जल–अपवारणे क तस्य नेत्वम् । केशरे, पुष्परेणौ, नागकेशरे च पद्ममध्यस्थे केशाकारे । करहाटवेष्टने न० ।

किट गतौ सक० भये अक० भ्वा० पर० सेट् । केटति अकेटीत् ।

किट पु० किट–गतौ इन् किच्च । शूकरे । [मले च (काट) ।

किट्ट न० किट–क्त इड्भावः । धातूनां मले, तैलाद्यधोभागस्थे

किण पु० कण गतौ अच् पृषो० अत इत्वम् । (कैंटा) । शुष्कव्रणे, मांसग्रन्थौ, घर्षणजे चिह्ने च । [ङीप् । अपामार्गे ।

किणिही स्त्री० किण–अस्त्यर्थे इनि किणिनो अपान् हन्ति ह गौ०

किण्व पु० न० कण–व नि० । सुरावीजे द्रव्ये "किण्वादिभ्यो मदशक्तिवत्" इति सांख्यसूत्रम् । पापे न० ।

कित संशये रोगापनयने च भ्वा० पर० सक० सेट् । चिकित्सति अचिकित्सीत् । वासे अक० इच्छायां सक० । केतति अकेतीत् ।

कित ज्ञाने जुहो० पर० सक० सेट् । चिकेत्ति अकेतीत् ।

कितव पु० कि–भावे–क्त कितेन वाति वा–क । द्यूतकारके, वञ्चके, खले, चोरनामकगन्धद्रव्ये, धुस्तूरवृक्षे च ।

किन्तनु पु० किञ्चिन्मात्रा तनुर्यस्य । अष्टपादे (माकड्सा) कीटभेदे ।

किन्तु अव्य० किञ्च तु च द्व० । पूर्ववाक्यसङ्कोचज्ञापने, प्रायुक्तविरुद्धार्थे, किं पुनरित्यर्थे, च ।

किन्नर पु० कुत्सितो नरः कुत्सा च अश्वतुल्यत्वे नरदेहत्वात् नरतुल्यत्वे चाश्वदेहत्वात् । देवयोनिभेदे देवानां गायके ।

किन्नरेश पु० ६त० । कुबेरे धनदे ।

किन्नु अव्य० किञ्च नु च द्व० । प्रश्ने, वितर्के, सादृश्ये, स्थाने च ।

किम् अव्य० कै डिमु । प्रश्ने, निषेधे, वितर्के, निन्दायाञ्च ।

किमु अव्य० किञ्च उ च द्व० । विमर्षे सम्भावनायाञ्च ।

किमुत अव्य० किञ्च उत च द्व० । प्रश्ने, वितर्के, विकल्पे, अतिशये च ।

किम्पच त्रि० किं पचति अच् । कृपणे यद्धि आत्मोदरपूर्त्ति मात्रं पचति नागन्तुकातिथिभ्यो दानार्थम् ।

किम्पचान त्रि० किम्+पच–आनच् । आत्मोदरपूर्त्तिमात्रं पाककर्त्तरि कृपणे । [कृपणे त्रि० ।

किम्पाक पु० निन्दितः पाकोऽस्य ( माकाल ) इतिख्याते वृक्षे ।

किंपु(पू)रुष पु० कुत्सितः पु(पू)रुषः । देवयोनिभेदे देवगायके । हिमाचलहेमकूटयोर्मध्यस्थे नववर्षात्मकजम्बुद्वीपस्यैकतमे वर्षे ।

कियत् त्रि० किम्+परिमाणे, वतुप् किमः क्यादेशः वस्य यः । किंप-

रिमाया इत्यर्थे । [किंच टिबोपे यप् । उद्योगे इत्यादि ।

**कियदेतिका** स्त्री० कियत् एतत् आरभ्यमाणं करोति णिच् ।

**किर** पु० कृ—क । शूकरे ।

**किरण** पु० कृ—क्यु । सूर्य्ये, रश्मौ च ।

**किरणमालिन्** पु० किरणानां मालाऽस्त्यस्य इनि । सूर्य्ये ।

**किरात** पु० कीर्य्यन्तेऽवस्करा अत्र कृ—क पर्य्यन्तदेशमततति अण् । म्लेच्छजातिभेदे पर्य्यन्तदेशाश्रयिणि, अल्पतनौ, "तमङ्कुमाह समारभ्य रामक्षेत्रान्तकं शिवे ! किरातदेशो देवेशि ! विन्ध्यशैलेऽवतिष्ठति इत्युक्तदेशे च

**किराततिक्त** पु० किराततदेश उत्पत्तिस्थानत्वेनास्त्यस्य अच् । कर्म० (चिराता) ख्याते द्रव्ये, अश्वगन्धावृक्षे, भूनिम्बे च ।

**किरि** पु० कृ—इक् । शूकरे ।

**किरीट** पु० न० कृ—कीटन् । मुकुटे, शिरोवेष्टने च ।

**किरीटिन्** पु० किरीट+इनि । अर्ज्जुने । मुकुटवति त्रि० ।

**किर्मी** स्त्री० किरति किर् किरं माति मा—क गौरा० ङीप् । पलाशवृक्षे, वृक्षे, स्वर्णप्रतिमायाम्, लौहपुत्तलिकायाञ्च ।

**किर्म्मीर** न० कृ—ईरन् कित् मुडागमश्च । नारङ्गवृक्षे, राक्षसभेदे, चित्रवर्णे च । तद्वति त्रि० ।

**किल** अव्य० किल—क । वार्त्तायाम्, अनुनयार्थे, निश्चये, संभाव्ये प्रसिद्धमभाषद्योतके, सत्ये, हेतौ, अरुचौ, अलीके, तिरस्कारे च ।

**किलकिञ्चित** "स्मितशुष्करुदितहसितत्रासक्रोधश्रमादीनाम् । साङ्कर्य्यं किलकिञ्चितम्" इत्युक्ते स्त्रीणां विलासभेदे "स्मयन्तीं किलकिञ्चितं किले" त नैषधम् ।

**किलकिला** स्त्री० किलकिलेति वीप्सायां शिच् ततः अच् ततः टाप् । कपिस्वने, सिंहनादे, वानराणां शब्दानुकरणे च ।

**किलाटक** पु० "नष्टदुग्धस्य पक्कस्य पिण्डः प्रोक्तः किलाटकः" इत्युक्ते क्षीरविकारे ।

**किलाटिन्** पु० किलति क, अट—णिनि कर्म० । वंशे वृक्षे ।

**किलास** न० किल—क तमस्यति अस+अण् । सिध्मरोगे (छुली) ।

**किलिञ्ज** पु० किल-इन् ततो जातः जन-ड पृ०। कटे, सूक्ष्मकाष्ठे च।

**किल्बिष** न० किल-टिषच् बुक्। अपराधे, पापे, रोगे, अधर्म्मा- धर्म्मफलभूते अनिष्टे संसारे च।

**किशल** पु० न० किं शलति शल-अच् पृ० पल्लवे।

**किशलय** पु० न०। किञ्चित् शलति चलति कयन् पृ०। पल्लवे।

**किशोर** पु० कश-ओरन् नि०। हस्तिशिशौ, सूर्य्ये, तरुणावस्थे "किञ्चिच्छूरः किशोरः स्यात् यतो हि दशमात् परम्। श्मश्रु च दृश्यते किञ्चि" दित्युक्ते दशवर्षोत्तरपञ्चदशवर्षवयस्के त्रि०। स्त्रियां ङीप्।

**किष्क** वधे चुरा० आत्म० सक० सेट्। किष्कयते अचिकिष्कत।

**किष्किन्ध(न्ध्य)** पु० ओड्रदेशस्थे पर्वतभेदे। तत्रत्यगुहायां स्त्री०।

**किष्कु** पु० स्त्री० किष्क-उ। द्वादशाङ्गुलिपरिमाणे, प्रकोष्ठदेशे, हस्तपरिमाणे च।

**किष्कुपर्व्वन्** पु० किष्कुमितं पर्व यस्य। इक्षौ, वंशवृक्षे, पोट गले च (नाड़ा)।

**किसलय** पु० न० किञ्चित् सलति सल-गतौ कयन् पृ०। पल्लवे।

**कीकट** पु० किञ्चित् कुत्सितं कटति पृ०। अश्वे। मगधदेशे ब० व० च "कीकटेषु गया पुण्येति पुराणम्। कृपणे, निर्द्धने च त्रि०।

**कीकश** पु० कीति कशति कश-शब्दे अच्। चण्डाले।

**कीकस** पु० कीति कसति कस-गतौ अच्। कृमिजभेदे अस्थ्नि न० कठिने त्रि०।

**कीकि** पु० पु० कीति शब्दं कायति कै-ड। चाषपक्षिणि।

**कीचक** पु० कीत्यव्यक्तं चकति चक-तृप्त्यादौ अच्। दैत्यभेदे, "कीचका नाम ते वंशा ये स्वनन्त्यनिलाहृताः" इत्युक्ते वेणुभेदे (तल- ताबाँश) विराटराजश्याले, केकयाधिपे नृपभेदे च।

**कीचकजित्** पु० कीचकं जितवान् जि-भूते क्विप्। भीमसेने एवं कीचकभिदादयोऽप्यत्र। [ अचीकिटत्-त।

**कीट** बन्धे वर्णे च चुरा० उभ० सक० सेट्। कीटयति ते

कीट पु० कीट—अच् । क्रमिभ्यः स्वार्थे क्षुद्रजन्तुमात्रे । स्वार्थे कन् । तत्रार्थे मागधजातौ च । कठिने त्रि० ।

कीटघ्न पु० कीटं हन्ति हन—टक् । गन्धके ।

कीटजा स्त्री० कीटेभ्यो जायते जन—ड । अलुनि लाक्षायाम् ।

कीटमणि पु० कीटेषु मणिरिव । खद्योते ।

कीदृश् पु० किम्+दृश-क्विप् किमः की । किंप्रकारे । ट । कीदृशः । क्स । कीदृक्षोऽप्यत्र ।

कीनाश पु० कुत्सितं नाशयति क्लिश्नाति नि० । यमे, "कीनाशनिकेतनातिथि मिति माघः वानरभेदे, कर्षके पशुघ्ने, क्षुद्रे च ।

कीर पु० कीति ईरयति ईर—अच् । शुकपक्षिणि, देशभेदे ब० व० । मांसे न० ।

कीर्ण त्रि० कॄ—क्त । आच्छन्ने, निहिते, क्षिप्ते च ।

कीर्त्तना स्त्री० चुरा० कृत—युच् टाप् । यशसि ।

कीर्त्ति स्त्री० चु० कृत—क्तिन् । यशसि ।

कीर्त्तित त्रि० चु० कृत—क्त । कथिते—ख्याते च ।

कीर्त्तिशेष पु० कीर्त्तिरेव शेषः । मरणे । ब० । मृते त्रि० ।

कील बन्धे भ्वादि० पर० सक० सेट् । कीलति अकीलीत् ।

कील पु०स्त्री० कील—क । अग्निशिखायाम् । वारणे घञ् । शङ्कौ, शस्त्रे, कफोणौ स्तम्भे, लेशे च ।

कीलक पु० कील+स्वार्थे संज्ञायां वा कन् । कीलार्थे, गवां दोहनार्थं बन्धनस्तम्भे, गवां कण्डूयनार्थे स्तम्भे च ।

कीलाल न० कीलां वह्निशिखामलति वारयति अच् । जले, रुधिरे च । कीलामौर्वाग्नेः शिखां लाति ला—क । अमृते । कीलेन प्रतिबन्धेन अल्यते वार्य्यते अल—घञ् । पशौ पु० ।

कीलित त्रि० कील—क्त । बद्धे । भावे—क्त । बन्धे न० ।

कीश पु० कस्य वायोरपत्यम् अत इञ् किः हनुमान् ईशो यस्य । वानरे । [ङीप् । कीशपर्ण्यप्यत्र ।

कीशपर्ण पु० कीशः तल्लोमेव पर्णमस्य । अपामार्गे । जातित्वे

कु शब्दे भ्वा० आत्म० सक० अनिट् । कवते अकोष्ट ।

कु आर्त्तस्वरे तुदा० आत्म० सक० अनिट् । कुटादि । कुवते अकुत ।

कु शब्दे अदा० पर० अक० अनिट् । कौति अकौषीत् ।

कु अव्य० कु+डु । पापे, निन्दायाम्, ईषदर्थे, निवारणे च । भूमौ, धरायाञ्च स्त्री० ।

कुक आदाने भ्वा० आत्म० सक० सेट् । कोकते । अकोकिष्ट ।

कुकील पु० कोः पृथिव्याः कील इव स्तम्भहेतुत्वात् । पर्वते ।

कुकुट पु० कौ कुटति कुट–क । (सुषनि) इति ख्याते शाकभेदे ।

कुकुद पु० सत्कारपूर्वकमलङ्कृतकन्यादातरि ।

कुकुन्दर पु० कुं भूमिं दारयति अलङ्कृतयर्थे द–अण् नि० । कुत्सितं कुन्दरमत्र, स्कुद्यते कामिनाऽत्र स्कुद् नि० वा । स्त्रीणां नितम्बस्थे आवर्त्ताकारे पृष्ठवंशादधोगर्त्तद्वये ।

कुकुर पु० कुं पृथिवीं कुरति कुर–क । यदुवंशायन्तपभेदे तेषां यथातिशापात् राज्यं नास्तीति पुराणकथा । कुकुरास्त्विय इति माघः । तथाहें देशभेदे ब० व० ।

कुकूल पु० कोः भूमेः कूलं कुत्सितं वा कूलम् कु–कूलच् धातोः कुगागमश्च । तुषानले, शङ्कुभिः सङ्कीर्णे गर्त्ते, वर्म्मणि च ।

कुकोल न० कुत्सितं कोलति कुल–अच् । कोलिफले ।

कुक्कुट पु० कु–क्विप् कुक् तेन कुटति कुट–क । (कुकड़ा) ख्याते खगे, तथोल्कायां, वनकुक्कुटे, वह्निस्फुलिङ्गे च स्वार्थे कन् । तत्रैव "शूद्राज्जातो निषादयान्तु स वै कुक्कुटकः स्मृत" इति मनूक्ते सङ्कीर्णवर्णे । स्त्रियां ङीष् ।

कुक्कुटमस्तक पु० कुक्कुटस्येव मस्तकं यस्य । चव्ये (चइ) ।

कुक्कुटव्रत न० ज्यैष्ठ भाद्रशुक्लसप्तम्यां सन्तानार्थं स्त्रीभिः कर्त्तव्ये व्रतभेदे ।

कुक्कुटशिख पु० कुक्कुटस्य शिखेव शिखा यस्य । कुसुम्भशाके तस्य हि पुष्पाणि कुक्कुटशिखातुल्यानि ।

कुक्कुभ पु० कुक् इत्यव्यक्तं शब्दं कौति कु–भक् । वनकुक्कुटे ।

कुक्कुर पु० कोकते क्विप् कुरति शब्दायते कुर-घञ् क कर्म० । स्वनामख्याते । पक्षौ । पादस्पर्शे वृक्षे च० ।

कुक्कुरद्रु पु० कुक्कुरस्याप्रियो द्रुः शाक० । (कुकुरसोङ्गा) वृक्षभेदे ।

कुक्कुवाच् पु० कुक्कु इत्यव्यक्ता वाक् यस्य । वातमृगे ।

कुक्षि पु० कुष—क्सि । उदरे, उदरस्य वामदक्षिणपार्श्वयोश्च (कोंक) ।

कुक्षिम्भरि त्रि० कुक्षिं बिभर्त्ति भृ-इन्-मुम् च । देवातिथ्यादिक्षुने-मात्मोदरमात्रपूरके ।

कुक्षिरन्ध्र न० कुक्षौ रिव रन्ध्रं छिद्रं यत्र । मत्स्ये ।

कुङ्कुम न० कुकयते आदीयते कुक—उमक् नि० मुम् । काश्मीरदेशजे स्वनामख्याते गन्धद्रव्ये । [तित्स्याने पर्वतभेदे ।

कुङ्कुमाद्रि पु० कुङ्कुमस्याकरः अद्रिः । काश्मीरदेशस्थे कुङ्कुमोत्प-

कुच रोधे, सम्पर्के, लेखने च सक० कौटिल्ये अक० तु० पर० सेट् कुटादि । कुचति अकुचीत् चुकोच ।

कुच उच्चै शब्दे भ्वा० पर० अक० सेट् । कोचति अकोचीत् ।

कुच पु० कुच—सम्पर्के—अच् । स्तने ।

कुचन्दन न० कुत्सितं गन्धहीनत्वात् चन्दनम् । रक्तचन्दने, (बकम्) वृक्षभेदे च ।

कुचफल पु० कुचाविव फलमस्य । दाड़िम्बवृक्षे ।

कुचर त्रि० कुत्सितं चरति चर-अच् । परदोषकथनशीले ।

कुचेला स्त्री० कुत्सितं चेलमिव पत्रमस्याः विद्धकर्णीवृक्षे गौरा० ङीष् । अम्बष्ठायां (आकनादि) । कोशिम्बा, कुक्का ।

कुज स्तेये, भ्वा० पर० सक० सेट् उदित् । कोजति अकोजीत्

कुज पु० कौ पृथिव्यां जायते जन-ड । मङ्गलग्रहे, नरकासुरे, वृक्षमात्रे च । सीतायां कात्यायन्याञ्च स्त्री० ।

कुज्झटि(टी) स्त्री० कु—क्विप् कुत् झट—संहतौ इन्, वा ङीष् । (कुयाशा) नीहारे ।

कुञ्चन न० कुन्च—ल्युट् । कौटिल्ये अनादरे च "वाताद्यापक्षिप-क्षोचं जनयन्ति यदा मलाः । तदा द्रष्टुं न शक्नोति कुञ्चनं नाम

सन्निकृष्टमित्युक्ते नेत्ररोगभेदे च। स्वार्थे कन् अभोरेषौ।

**कुञ्चि** पु० कुन्च कौटिल्ये इन्। "अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम्" इत्युक्ते मानभेदे।

**कुञ्चिका** स्त्री० कुन्च–ण्वुल् टाप्। कृष्णजीरके, (कुंचे) इति ख्याते मत्स्यभेदे (कनुची) वंशशाखायां, तालकोद्घाटने यन्त्रभेदे (काठी) उद्घाटिनी कुञ्चिकेति प्रसन्नराघवम्।

**कुञ्चित** न० कुन्च–क्त। तगरपुष्पे। वक्रे, सङ्कुचिते च त्रि०।

**कुञ्ज** पु० कौ पृथिव्यां जायते जन–ड पृ०। हस्तिहनौ, समन्ताल्लता-दिभिराच्छादिते मध्यशून्ये पर्वतादेः स्थानभेदे पु० न०।

**कुञ्जर** पु० कुञ्ज+अस्त्यर्थे र। हस्तिनि।

**कुञ्जरच्छाय** पु० "योगो मघात्रयोदश्यां कुञ्जरच्छायसंज्ञकः। भवे-न्मघायां संस्थे च शशिन्यर्के" इत्युक्ते योगभेदे।

**कुञ्जरपिप्पली** पु० कुञ्जर इव स्थूला पिप्पली। गजपिप्पल्याम्।

**कुञ्जराशन** पु० कुञ्जरैरश्यते अश–भक्षे ल्युट्। अश्वत्थवृक्षे।

**कुञ्जल** न० कुत्सितं जलं यत्र पृ०। काञ्जिके। (आमानि)।

**कुट** कौटिल्ये तुदा० पर० सक० सेट् कुटादि। कुटति अकुटीत् चुकोट।

**कुट** प्रतापने चुरा० आत्म० सक० सेट्। कोटयते अचूकुटत।

**कुट** वैकल्ये भ्वा० इदित् पर० अक० सेट्। कुण्टति अकुण्टीत्।

**कुट** पु० कुट–अच् दुर्गे (गड़) पर्वते, वृक्षे च। घटे पु० न०। घटे स्त्री० ङीप्। शिलाकुट्टे अस्त्रे पु०। अत्र कुट्ट इत्येवेत्यन्ये।

**कुटङ्क** पु० कुटं घटं कषति ड पृ०। गृहाच्छादने, (चाल) गिरि-सन्निकटे च।

**कुटज** पु० कुटे पर्वते जायते जन–ड। (कुड़ची) वृक्षभेदे यस्य फलम् इन्द्रयवः। कुटे घटे जायते। अगस्त्यमुनौ द्रोणाचार्ये च।

**कुटजबीज** न० ६त०। इन्द्रयवे।

**कुटन्नट** पु० कुटन् वक्रीभवन् नटति। श्योनाकवृक्षे। मुस्तके न०।

कुटप पु० कुट—कपन् । मुनौ । गृहसमीपस्थोपवने, कुडवरूपमान-भेदे च । पद्मे न० ।

कुटि पु० कुट—इन् । वृक्षे, देहे, अद्रौ च । कुटङ्गके स्त्री० वा ङीप् ।

कुटिचर कुटौ जले चरति चर—अच् । वारिचरे शूकरे ।

कुटी(टि)र पु० अल्पा कुटी ईरन् । पर्णशालादौ (कुँडे) ।

कुटिल त्रि० कुट—इलच् । वक्रे, भङ्गुरे च । तगरपुष्पे न० ।

कुटिलग पु० कुटिलं गच्छति गम—ड । सर्पे । नद्यां स्त्री० टाप् ।
वक्रगामिनि त्रि० । [अच् । यतिभेदे ।

कुटि(टी)च(र)क पु० कुट्यां कुटौ वा चरति, चरति त्यजति । वा क

कुटुम्ब पु० न० कुटुम्ब—अच् । पोष्यवर्गे बान्धवे, सन्ततौ, द्वितीय-स्थाने च ।

कुटुम्ब धृतौ चुरा० आत्म० अक० सेट् । कुटुम्बयते अचुकुटुम्बत ।

कुटुम्बिनी स्त्री० कुटुम्ब+इनि । पतिपुत्रादियुतायां प्रशंसितायां स्त्रियाम् । [अचुकुट्टत् त ।

कुट्ट छेदने, भिन्दने च अद० चुरा० उभ० सक० सेट् । कुट्टयति—ते

कुट्ट प्रतापने अद० चुरा० आत्म० सक० सेट् । कुट्टयते । अचुकुट्टत ।

कुट्टक पु० कुट्ट—ण्वुल् । लीलावत्यादौ प्रसिद्धे गणिते अङ्कभेदे ।
छेदके त्रि० ।

कुट्टनी स्त्री० कुट्ट—ल्युट् ङीप् । (कुट्नी) परपुरुषेण सह परस्त्रियाः समागमकारयित्र्याम् ।

कुट्टमित न० "केशस्तनाधरादीनां ग्रहे हर्षेऽपि सम्भ्रमात् । प्राहुः कुट्टमितं नाम शिरःकरविधूननमित्युक्ते स्त्रीणां विलासभेदे ।

कुट्मल पु० न० कुट—क्मलच् । मुकुले विकाशोन्मुखकलिकायाम् ।
नरकभेदे न० यत्र रज्जुभिर्यन्त्रणा नारकिभ्यो दीयते ।

कुठ छेदने सौत्रः पर० सक० सेट् । कोठति अकोठीत् ।

कुठ वैकल्ये आलस्ये अक० मोचने सक० च इदित् भ्वा० पर० सेट् ।
कुण्ठति अकुण्ठीत् ।

कुठ पु० कुठ—अच् । वृक्षे ।

कुठर पु० कुठ–करन् । दधिमन्थनदण्डबन्धनार्थस्तम्भे । [वृक्षे पु० ।

कुठार पु० स्त्री० कुठ–आरन् । अस्त्रभेदे (कुड़ाल) स्त्रियां ङीप् ।

कुठारु पु० कुठ–आरुन् । वानरे, वृक्षे, अस्त्रकारे च ।

कुठेर पु० कुठ–एरक् । श्वेततुलस्याम्, वह्नौ, (बाबुइ) इतिख्याते
 वृक्षे च । स्वार्थे कन् । (बाबुइतुलसी) इति वृक्षे ।

कुड वैकल्ये भ्वा० इदित् पर० अक० सेट् । कुण्डति अकुण्डीत् ।

कुड दाहे भ्वा० इदित् आत्म० सक० सेट् । कुण्डते अकुण्डिष्ट ।

कुड रक्षणे चुरा० इदित् उभ० सक० सेट् । कुण्डयति ते
 अचुकुण्डत् त ।

कुड अदने सक० बाल्ये अक० तुदा० पर० सेट् । कुटादि । कुडति
 अकुडीत् चुकोड़ । [मानभेदे ।

कुडप(व) पु० कुड–कपन् (कवन्) वा । प्रस्थचतुर्थांशरूपे परि–

कुड्मल पु० न० कुड–क्मलच् । विकाशोन्मुखकलिकायां,
 नरकभेदे न० ।

कुड्य न० कुड–यत् । भित्तौ, विलेपने च । [दार्थं चौर्यं क्रियते ।

कुड्यच्छेदिन् पु० छिद–णिनि ६त० । चौरे येन गृहभित्तिं वि–

कुड्यच्छेद्य पु० कुड्यं छेद्यं यस्य । खनके ।

कुण आमन्त्रणे, मन्त्रणे च अद० चु० उभ० सक० सेट् कुणयति ते
 अचुकुणत् त । [अकोणीत्

कुण उपकरणे शब्दे च तुदा० पर० सक० सेट् । कुणति

कुणप पु० क्वण–कपन् संप्रसारणञ्च । त्यक्तप्राणे मृतदेहे शवे, पूति–
 च वहति त्रि० । गौरा० ङीष् । विट्सारिकायाम् (गुवाशालिक)।

कुणि पु० कुण–इन् । तुन्नवृक्षे (तुंद) कुत्सितकरे त्रि० ।

कुण्ठ त्रि० कुठि–अच् । क्रियासु मन्दे, अकर्मण्ये, मूर्खे च ।
 ण्वुल् । कुण्ठकः । मूर्खे ।

कुण्ड पु० कुण्ड्यते कुडि भदे, कुडि–दाहे वा घञ् । जीवति भर्त्तरि
 जारजे पुत्रे मानभेदे पात्रे, जलाशये च । होमीयाग्निस्थाप–
 नस्थानभेदे पु० न० । ङीप् । स्थाल्याम् स्त्री० ।

**कुण्डपाय्य** पु० कुण्डेन पीयते सोमोऽत्र यज्ञभेदे ।

**कुण्डल** न० कुडि दाहे रक्षणे वा कलच् कर्णभूषणे, वेष्टने, पाशके, वलये च ।

**कुण्डलना** स्त्री० कुण्डलं वेष्टनं करोति णिच् ततो युच् । वेष्टने "विषमां कुण्डलनामशापिते"ति नैषधम् तन्त्रप्रसिद्धे मूलाधारस्थिते शक्तिभेदे ( जिलिपी ) इति ख्याते पक्वान्नभेदे गुडूचीलतायां सर्प-जातिस्त्रियाञ्च ।

**कुण्डलिन्** पु० कुण्डल+अस्त्यर्थे इनि । सर्पे ।

**कुण्डलिनी** स्त्री० कुण्डलं वलयाकारवेष्टनमस्य इनि । सर्पाकारेण त्रिवेष्टनयुते तन्त्रप्रसिद्धे शक्तिभेदे, सर्प्याञ्च ।

**कुण्डिका** स्त्री० कुण्ड+संज्ञायां कन् । कमण्डलौ, स्थाल्याञ्च (कुण्ड़ि) ।

**कुण्डिन** पु० कुडि–इनच् । मुनिभेदे विदर्भनगरे, देशभेदे च ।

**कुतप** पु० कुत्सितं तपति तप–अच् । सूर्ये, वह्नौ, ब्राह्मणे, अतिथौ, गवि, भागिनेये, दौहित्रे च । वाद्ये, नेपालकम्बले, कुशतृणे, पञ्चदशधाविभक्तदिनस्याष्टमांशे काले च अस्त्री० । स च मध्याह्नात् पूर्वोत्तरदण्डद्वयात्मकः मुहूर्त्तरूपः कालः ।

**कुतस्** अव्य० किम्+तसिल् कादेशश्च । कस्मादित्यर्थे, प्रश्ने, निन्दने च ।

**कुतुक** न० कुतूं चर्मनिर्म्मितस्नेहपात्रमिव कायति कै–क पृषो० ह्रस्वः । फलनिरपेक्षतया चिकीर्षिते कौतुके ।

**कुतुप** पु० ह्रस्वा कुतूः डुपच् । अल्पे चर्ममये घृतादिस्नेहपात्रे (कुपो) ।

**कुतुम्बुरु** न० कुत्सितं तुम्बुरु कुगति० । कुत्सिततिन्दुकफले ।

**कुतू** स्त्री० कुत्सितं तन्यते तन-कू । चर्मनिर्मिते घृतादिस्नेहपात्रे (कुपा)।

**कुतूहल** न० कुतूं चर्ममयं स्नेहपात्रं हलति लिखति हल–अच् । अपूर्ववस्तुदिदृक्षातिशये चेष्टाभेदे, फलनिरपेक्षतया चिकीर्षिते कौ-तुके च । प्रशस्ते, अद्भुते च त्रि० ।

**कुतृण** न० कुत्सितं तृणं कुगति० । (पाना) [illegible] ।

कुत्र अव्य० किम्+त्रल् कादेशः । कस्मिन्नित्यर्थे । क्वचित् । कुत्रचि-
  चिदित्यप्यत्रार्थे ।

कुत्स निन्दने चुरा० आत्म० सक० सेट् । कुत्सयते अचुकुत्सत ।

कुत्सा स्त्री० कुत्स-अ टाप् । निन्दायाम्, परिवादे च ।

कुत्सित न० कुत्स-क्त । कुष्ठनामौषधे (कुड) । निन्दिते त्रि० ।

कुथ क्लेशे (कोंथ) इदित् भ्वादि० अक० सेट् । कुन्थति अकुन्थीत् ।

कुथ पूतिगन्धे दिवा० पर० अक० सेट् । कुथ्यति अकोथीत् ।

कुथ पु० स्त्री० कुथ-अच् । हस्तिपृष्ठस्थे चित्रकम्बले "कुथेन नागे-
  न्द्रमिवेन्द्रवाहनमिति" माघः स्त्रियां टाप् । कुशाख्ये पु० ।

कुदाल पु० कुं भूमिं दलयति विदारयति दल-अण् । (कोदाल)
  भूमिखननसाधने अस्त्रभेदे ।

कुदृष्टि स्त्री० कुत्सिता वेदबाह्या दृष्टितर्कादिरूपा कुमतिः । वेदबा-
  ह्यतार्किककल्पनायाम् । "याश्च काश्च कुदृष्टय" इति मनुः ।

कुद्दाल पु० न० कुं भूमिमुद्दलयति उद्+दल-अण् शक० । कोवि-
  दारवृक्षे, काञ्चनारायाञ्च, भूमिखननसाधनेऽस्त्रे (कोदाल) न० ।

कुनख पु० कुत्सितनखकारके रोगभेदे । तथा नखयुक्ते जने त्रि० ।

कुनखिन् त्रि० कुनख+अस्त्यर्थे इनि । कुनखरोगयुक्ते कुञ्चितनख-
  युक्ते जने च । [कारके त्रि० ।

कुनट पु० कुत्सितं नटति नट-अच् । श्योनाकवृक्षे । कुत्सितनाट्य-

कुनटी स्त्री० कौ नटति अच् गौरा० ङीष् । मनःशिलायाम् ।

कुनली स्त्री० कोः पृथिव्या नलइव गौरा० ङीष् । वकवृक्षे ।

कुनाशक स्त्री० कुं नाशयति नश-णिच्-ण्वुल् । दुरालभायाम् ।

कुन्थ संक्लेशे अनादरे च भ्वा० पर० सक० सेट् । कुन्थति अकुन्थीत् ।

कुन्त पु० कुं भूमिं कुनत्ति उन्द-त शक० । गवेधुकायां (गड़गडे)
  धान्ये, प्रासाख्यायुधे, भल्ले च ।

कुन्तल पु० कुन्तं कुन्ताकारं लाति ला-क । केशे, पानपात्रे,
  जवे, हले च जनपदभेदे ब० व० । [यवेश्वनेन हि केशवृद्धिः ।

कुन्तलवर्द्धन पु० कुन्तलान् वर्द्धयति वृध-णिच् ल्यु । भृङ्गराजे तद्-

कुन्ति पु० कम–भिच् मुट्च। देशभेदे। युधिष्ठिरादिमातरि स्त्री० वा ङीप्। सा च शूरसेनराजस्यौरसी पृथानाम्नी कन्या अपुत्राय कुन्तिभोजाय पित्रा अपत्यकल्पाय दत्ता।

कुन्थ श्लेषे क्लेषे च क्र्यादि० पर० अक० सेट्। कुथ्नाति अकुन्थीत्।

कुन्द पु० कुं भूमिं दारयति द्यति वा दॄ–दो–वा क नि० मुम्। (कुंद) पुष्पवृक्षे कन्दुरुनामगन्धद्रव्ये भ्रमियन्त्रे, (कुंद) कुबेरस्य निधिभेदे, करवीरवृक्षे च।

कुन्दुरु पु० कुं भूमिमुनत्ति उन्द्–उरादित्वात् नि०। सुगन्धिद्रव्यभेदे।

कुन्दुरुकी स्त्री० कुन्दुरुरिव प्रतिकृतिः कन् गौरा०। शल्लकीवृक्षे।

कुप आच्छादने इदित् वा चुरा० उभ० पक्षे भ्वादि० पर० सक० सेट्। कुम्पयति ते कुम्पति अचुकुम्पत् त अकुम्पीत्।

कुप द्युतौ चुरा० उभ० अक० सेट्। कोपयति ते अचूकुपत् त।

कुप कोपे दिवा० पर० अक० सेट्। कुप्यति अकुपत्–अकोपीत्।

कुपाणि त्रि० कुत्सितः पाणिरस्य ब०। वक्रहस्ते।

कुपिन्द पु० कुप–किन्दच्। तन्तुवाये।

कुपीलु पु० कुत्सितः पीलुः। कातेन्दौ (कुचला)।

कुपूय त्रि० कुत्सितं पूयते पूय–विशरणे अच्। आत्याचारादिनिन्दिते।

कुप्य न० गुप–क्यप् नि०। स्वर्णरूपाभ्यामन्यस्मिन् तैजसादौ उपधातौ, (दस्ता) इति ख्याते धातौ च।

कुब इदित् स्तृतौ वा० चुरा० उभ० पक्षे भ्वा० पर० सक० सेट्। कुम्बयति ते कुम्बति अचुकुम्बत् त अकुम्बीत्।

कुबे(वे)र पु० कुम्बति धनं एरक् नलोपश्च। यक्षराजे नन्दीवृक्षे च। कुत्सितं वेरं देहोऽस्य। "कुत्सायां क्वितिशब्दोऽयं शरीरं वेरमुच्यते। कुबेरः कुशरीरत्वादित्यमर्थ्यमभ्योऽप्ययम्"। कुत्सितशरीरे न०। मन्दे त्रि०। [पाटलावृक्षे, शताकरञ्जे च।

कु(बे)व(रा)क्षी स्त्री० कुबे(व)रस्याक्षीवाक्षि पुष्पमस्याः षच् षत्वा०।

कुब्ज पु० ईषत् उब्जमार्जवमस्य शक०। खड्गे, अपामार्गे च। "हृदयं यदि वा पृष्ठमुन्नतं क्रमशः सरुक्। क्रुद्धो वायुर्यदा कुर्या-

सदा तं कुब्जमादिशेत्” इत्युक्तलक्षणरोगवति जने (कुजो) त्रि० ।

कुब्जक पु० कुब्ज+कन् । कुब्जे । मञ्चासके पुष्पप्रधाने वृक्षे च तत्पुष्पे न० । “अशोकात् पुष्पवाहुल्यात् शेवतीपुष्पमुत्तमम् । शेवतीपुष्पबाहुल्यात् कुब्जकं पुष्पमुत्तममिति नारसिंहम् । [कुमारत् त ।

कुमार केलौ अद० चुरा० उभ० अक० सेट् । कुमारयति ते अचु-

कुमार पु० कुमारयति क्रीड़ति, कुत्सितो मारो यस्मात्, कौमारयति दुष्टान् वा । शुके पक्षिणि, कार्त्तिकेये, नाव्योक्तौ युवराजे, अश्ववारके, सिन्धुनदे, वरुणवृक्षे, पञ्चवर्षीये, बालके च । स्त्रियां ङीप् ।

कुमारभृत्या स्त्री० भृ—क्यप् ६त० । प्रसवकाले गर्भिण्याः परिचर्य्यायाम् । “कुमारभृत्याकुशलै”रिति रघुः ।

कुमारिका स्त्री० कुमार+वयसि प्रथम इति ङीप् ततः स्वार्थे कन् । पञ्चवर्षीयायां अविवाहितायां कन्यायाम्, नवमल्लिकावृक्षे, भारतवर्षस्य खण्डभेदे च “वर्ष व्यवस्थितिरिहैव कुमारिकाख्ये इति सिद्धान्तशिरोमणिः ।

कुमारी स्त्री० कुमार+ङीप् । नवमल्लिकायाम्, इतकुमार्य्यां नदीभेदे, अपराजितायां वन्ध्याकर्कोट्यां स्थूलैलायां वरुणपुष्पे “संप्राप्ते द्वादशे वर्षे कुमारीत्यभिधीयते” इति उक्तायां द्वादशवर्षीयायाम् अनूढ़ायां कन्यायाम्, श्यामापक्षिणि च ।

कुमाल केलौ अद० चुरा० उभ० अक० सेट् । कुमालयति ते अचुकुमालत् त ।

कुमालक पु० कुमाल—ण्वुल् । सौवीरदेशे । [अप्रीते च त्रि० ।

कुमुद् न०कौ भूमौ मोदते मुद—क्विप् । कैरवे, रक्तोत्पले च । कृपणे,

कुमुद न० कौ भूमौ मोदते मुद—क । कैरवे, कह्लारे, (कोइ) श्वेतोत्पले च । वानरभेदे, दैत्यभेदे, कर्पूरे च पु० ।

कुमुदबान्धव पु० ६त० । चन्द्रे तस्य कुमुदप्रकाशकत्वेन तद्बान्धवत्वम् एवं तन्नाथादयोऽप्यत्र कर्पूरे च ।

कुमुदा स्त्री० कौ भूमौ मोदते मुद—क टाप् । (पाना) वारिपर्ण्याम्, गाम्भारीवृक्षे, शालपर्णीवृक्षे, धातकीवृक्षे कट्फले च ।

कुमुदाभिख्य न० कुमुदस्येवाभिख्या शोभा यस्य । रजते ।
कुमुदिनी स्त्री० कुमुदानां समूहः इनि । कुमुदसमूहे । अस्त्यर्थे इनि । कुमुदयुक्तपुष्करिण्यादौ कुमुदलतायाञ्च ।
कुमुद्वत् त्रि० कुमुदानि प्रायाण्यस्मिन् ड्मतुप् मस्य वः । कुमुदबहुलदेशे । स्त्री० ङीप् । कुमुदिन्याम् ।
कुम्भ पु० कुं भूमिं कुत्सितं वा उम्भति उम्भ पूरणे अच् शक० । घटे हृद्रोगभेदे, हस्तिशिरःस्थमांसपिण्डद्वये, "तैः किं मत्तकरीन्द्रकुम्भकुहरे" इति प्रसन्नराघवम् । कुम्भकर्णस्य पुत्रे, वेश्यापतौ, प्राणायामाङ्गे श्वासरोधके चेष्टाभेदे, "दश द्रोणा भवेत् खारी कुम्भस्तु द्रोणविंशतिरित्युक्ते परिमाणभेदे" धान्यं दशभ्यः कुम्भेभ्योहरतोऽभ्यधिकमिति स्मृतिः । ज्योतिषप्रसिद्धे मेषावधिके एकादशराशौ च । गुग्गुलौ, त्रिवृति च न० ।
कुम्भक पु० कुम्भ इव कायति निश्चलतया प्रकाशते कै—क । "त्यागसंरोधने हित्वा निरोधः कुम्भकः स्मृत" इत्युक्ते श्वासप्रश्वासत्यागेन प्राणवायोर्निरोधरूपे प्राणायामाङ्गे योगशास्त्रादौ प्रसिद्धे व्यापारे ।
कुम्भकर्ण पु० कुम्भ इव कर्णावस्य । रावणानुजे राक्षसभेदे ।
कुम्भकार पु० कुम्भं करोति कृ, अण् उप० । जातिभेदे ककुभपक्षिणि च ।
कुम्भकारिका स्त्री० कुम्भ—कृ—ण्वुल् । कुलत्थायाम् (कुलत्यकलाइ) ।
कुम्भकारी स्त्री० कुम्भ+कृ—अण् ङीप् मनःशिलायां, कुलत्थाञ्जने, कुम्भकारपत्न्याञ्च ।
कुम्भतुम्बी स्त्री० कुम्भाकारा तुम्बी । (गोललाउ) अलाबुभेदे ।
कुम्भयोनि पु० कुम्भो योनिरुत्पत्तिस्थानं यस्य । अगस्त्यमुनौ कुम्भयोनेर्महौजस इति रघुः । द्रोणाचार्य्ये, द्रोणपुष्प्याञ्च । कुम्भसम्भवादयोऽप्यत्र । [ (कुमारशाला) ।
कुम्भशाला स्त्री० कुम्भस्य पाकशाला ६त० । कुम्भादिपाकस्थाने
कुम्भाण्ड पु० कुम्भाकारः अण्डः । कुष्माण्डे, वाणासुरमन्त्रिणि च गौरा० ङीष् कुम्भाण्डी स्त्री० कुष्माण्डे ।

कुम्भिका स्त्री० कुम्भ+अस्त्यर्थे ठन् । (पाना) वारिपर्ण्याम्, पाटला-
वृक्षे, द्रोणपुष्पे च ।

कुम्भिन् पु० कुम्भ+अस्त्यर्थे इनि । हस्तिनि, कुम्भीरे गुग्गुलौ च ।

कुम्भिल पु० कुम्भ+अस्त्यर्थे इलच् । चौरे शालमत्स्ये, श्लोकार्थचौरे,
श्याले च ।

कुम्भी स्त्री० कुम्भ—अच् गौरा० ङीष् । उखायां, पाटलाद्रुमे,
वारिपर्ण्याम्, पुन्नागे, गणिकारिकायां, कट्फले च ।

कुम्भीपाक पु० कुम्भ्यां तैलघटे पाको यस्मिन् । "यस्तु यमानु-
चरास्तप्ततैले पतोपरन्धयति स कुम्भीपाक" इत्युक्तलक्षणे नरकभेदे

कुम्भीर पु० कुम्भिनं हस्तिनमपीरयति ईर—अण् । जलजन्तुभेदे नक्रे

कुम्भीरमक्षिका स्त्री० कुम्भीरोपपदा मक्षिका शाक०त० । (कुमीरे
पोका) कीटभेदे ।

कुर शब्दे तुदा०पर०अक०सेट् । कुरति अकोरीत् ।

कुरङ्कर पु० कुरं शब्दं करोति कृ—अच् ष० मुम् । सारसपक्षिणि ।

कुरङ्ग पु० कौ रङ्गति रङ्ग—अच् । "कुरङ्ग ईषत्ताम्रः स्या द्धरिणा-
कृतिको महान्" इत्युक्तचिह्ने मृगभेदे मृगमात्रे च ।

कुरङ्गम पु० कौ रङ्गं मिमीते मा—ड । हरिणभेदे ।

कुरण्ट पु० कुर्य्यते शब्द्यते कुर—अण्टक् । पीतझिण्ट्याम् स्वार्थे
कन् । अत्रैवार्थे ।

कुरर पु० कवते कुङ—शब्दे क्ररन् । उत्क्रोशपक्षिणि ।

कुररी स्त्री० कुरर—ङीष् । कुररपक्षिस्त्रियां, मेघाङ्गे ।

कुरल पु० कुर—कलच् । कुररपक्षिणि अलककुपकेशेषु च ।

कुरव पु० अल्पमकरन्दयत्त्वादलीनामीषद् रवो यत्र । रक्तझिण्ट्याम्,
कुरवके, सितमन्दारे च । कुत्सितशब्दे, बहु० । तथाशब्दयुक्ते
त्रि० । ततः स्वार्थे कन् तेष्वेवार्थेषु (कुर्चि) इति ख्याते पुष्प-
वृक्षे । "कुरवकस्तवक व्यतिषङ्गिणी" ति माघः ।

कुरसपु० कुत्सितोरसोऽत्र । मद्यभेदे । कुत्सितरसयुक्ते त्रि० । गो-
जिह्वालतायां स्त्री० टाप् । कुग० । कुत्सितरसे पु० ।

**कुरु** पु० कृ—कु । चन्द्रवंशीयराजभेदे, “हस्तिनापुरमारभ्य कुरुक्षेत्राच्च दक्षिणे । पञ्चालपूर्वभागे तु कुरुदेशः प्रकीर्त्तितः” इत्युक्ते देशभेदे ब० व० । ओदने, कण्टकारिकायाम् अग्नीध्रात्मजस्य जम्बुद्वीपस्य वर्षभेदे च पु० ।

**कुरुक्षेत्र** न० कुत्सितं रौति कुरु पापं कर्म्म तस्य क्षेपणात् अपाकरणात् क्षेत्रम् “तरन्तुकारन्तुकयोर्यदन्तरं रामहृदानाञ्च मचक्रुकस्य । एतत् कुरुक्षेत्रसमन्तपञ्चकं प्रजापतेरुत्तरवेदिरुच्यते इत्युक्ते देशे तद्धि कुरुपाण्डवानां युद्धभूमिः । [ अतेवार्थे ।

**कुरुण्ट** पु० कुरुण्टति रुटि—स्तेये अण् । पीतझिण्टाम् । ण्वुल् ।

**कुरुण्टक** पु० ईषत् रौति कशब्दे संज्ञायां कुन् उण्टक् । रक्तझिण्टाम्, पीतझिण्टाञ्च ।

**कुरुविन्द** पु० कुरून् विन्दति विद-श मुचादित्वात् नुम् । मुस्तायां, कुल्माषे, दर्पणे, हिङ्गुले च । पद्मरागमणौ न० ।

**कुरुविल्व** पु० कुरुषु विल्व इव । पद्मरागमणौ ( माणिक )

**कुरुविस्त** पु० कुरुषु विस्तः । चतुस्तोलकमिते स्वर्णे ।

**कुरुवृद्ध** पु० कुरूणां जनपदानां राजानः तद्राजस्य तद्धितस्य बहुषु लुक् तेषु कुरुषु वृद्धः । भीष्मे ।

**कुरूप्य** न० ईषत् रूप्यं शुभ्रत्वेन सादृश्यात् । रङ्गनामके धातौ ।

**कु(कू)र्द्द** क्रीडायां भ्वा०आत्म० अक० सेट् । कु(कू)र्द्दते अकु(कू)र्द्दिष्ट ।

**कु(कू)र्द्दन** न० कु(कू)र्द्द—ल्युट् । क्रीडायाम् । [कफोणौ च ।

**कुर्पर** पु० कुर—क्विप् कुर् पिपर्त्ति अच् परः कर्म्म० । जानुनि, ।

**कुर्पास** पु० न० कुर्परे अस्यते आस्ते वा वञ् घ० । स्त्रीणां कञ्चुलिकायां (कांचुली) स्वार्थे कन् । अत्रैवार्थे ।

**कुर्व्वत्** त्रि० कृ—शतृ । कर्मकरे भृत्ये, कारके च ।

**कुर्व्वद्रूप** पु० कुर्वत् फलोन्मुखं रूपं यस्य । बौद्धमतसिद्धे फलजननार्हे योग्ये धान्यादौ वीजे ।

**कुल** बन्धे संहतौ च भ्वा०पर० अक० सेट् । कोलति अकोलीत् ।

**कुल** न० कुल—क । वंशे, सजातीयगणे, देशे, गृहे, देहे, तन्त्रोक्ते

श्रीवादौ, मध्यमकलद्वयेन क्रष्यमाणायां भूमौ च "दशी कुलन्तु भुञ्जीत" इति मनुः। कुले भवे त्रि०। शिल्पिकुलप्रधाने पुं०।

**कुलक** न० कुल—अच् संज्ञायां कन्। मटले, एकवाक्यतापन्न पद्यादिश्लोकसमुदाये च। वल्मीके, काकतिन्दुके, कुरु कारुके च पुं०।

**कुलकुण्डलिनी** स्त्री० कुलैः कुलाचारैरुपास्या कुण्डलिनी सार्द्ध-त्रिवलयवेष्टनाकारवती शक्तिः। तन्त्रशास्त्रप्रसिद्धे मूलाधारस्थिते सर्पीतुल्ये शक्तिभेदे।

[ पालिकायां स्त्री० टाप्।

**कुलज** त्रि० कुले सत्कुले जायते जन—ड। सत्कुलोद्भवे। कुल-

**कुलटा** स्त्री० व्यभिचारार्थं भिक्षार्थं वा कुलानि अटति अटअच् शक०। असत्यां पुंश्चल्याम्, भिक्षुक्यां सत्याञ्च।

**कुलत्थ** पुं० कुले—तिष्ठति स्था—क पुं०। कलायभेदे (कुलत्थकलाइ) वनकुलत्थे स्त्री० टाप्।

**कुलत्थिका** न० कुलत्थ इव इवार्थे कन्। कुलत्थाञ्जनाकारे प्रस्तरभेदे। कन् वनकुलत्थे।

**कुलधारक** पु० कुलस्य वंशस्य धारकः धृ—णिच् ण्वुल् औरसे पुत्रे।

**कुलपति** पुं०। "मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात्। अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः" इतिपुराणोक्तलक्षणशालिनि मुनिविशेषे, सैन्यागाध्यक्षे च।

**कुलपर्व्वत** पुं० कौ पृथिव्यां लीयते ली—ड कर्म०। "महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः। विन्ध्यश्च पारिपा (त्रा) त्रश्च सप्तैते कुलपर्वताः" इत्युक्तेषु महेन्द्रादिषु पर्वतेषु। कुलाचलादयोऽप्यत्र।

**कुलपालक** न० कुलं पालयति पाल—ण्वुल्। (कमलालेबु) नारङ्गभेदे। वंशपालके त्रि०।

[स्त्रियाम्।

**कुलस्त्री** स्त्री० कुलस्यैव स्त्री नान्यगामिनी। कुलरक्षिकायां सत्यां

**कुलाचार** पुं०। कुलोचिते धर्मे "जीवः प्रकृतितत्त्वञ्च दिक्कालाकाशमेव च। क्षित्यप्तेजोवायवश्च कुलमित्यभिधीयते। ब्रह्मबुद्ध्या निर्विकल्पमेतेष्वाचरणञ्च यत्। कुलाचारः स एवोक्त इत्युक्तरूपे ज्ञाने च।

कुलाय पु० कुलं पक्षिसङ्घातोऽयतेऽत्र अय-घञ्। पक्षिनिलये-नीडे, स्थानमात्रे च। कौ लायोगतिरस्मात्। देहे न०।

कुलायिका स्त्री० कुलाय: पक्षिवासस्थानं विद्यतेऽस्यां ठन्। पक्षि-शालायां (चिड़ियाखाना)।

कुलाल पु० कुल-कालन्, कुलमलति अल-अण् कुलमालाति आ+ला-क वा कुम्भकारे, (कुमार) कुक्कुभपक्षिणि च।

कुलाली स्त्री० कुलमलति अल-अण्। नीलोत्पलभेदे, अञ्जनभेदे, अरण्यकुलत्थिकायाम्, कुम्भकारभार्यायाञ्च।

कुलाह पु० कुलमाहन्ति आ+हन-ड। ईषत् पीतवर्णे कृष्णजानौ अश्वे। ततः संज्ञायां कन् कृकलासे, (राङ्गाकुले (खाड़ा) इति ख्याते शाकभेदे च।

कुलाहल पु० कुलमाहलति स्पर्द्धते अच्। (कुकरसोड़ा) वृक्षभेदे।

कुलि न० कुल-इन्। हस्ते। कण्टकार्य्यां स्त्री० वा ङीप्।

कुलिक पु० कुल+अस्त्यर्थे ठन्। अष्टनागान्तर्गतनागभेदे, (कुलो-खाड़ा) इति ख्याते शाके, ज्योतिषोक्ते रव्यादिवारे वेलाभेदे च। कुलश्रेष्ठे त्रि०।

कुलिङ्ग पु० कौ पृथिव्यां लिङ्गति चरणार्थं गच्छति अच्। चटके, भूम्याटे, (फिङ्गा) भूमिप्रत्यासन्नतया धान्यादिचारिणि खगे च। कुत्सितलिङ्गे न०। ब०। तद्वति त्रि०। स्वार्थे कन् चटके। ङीप् कर्कटशृङ्ग्याम्। [पेटिकायाञ्च।

कुलिङ्गाक्षी स्त्री० कुलिङ्गस्येव अक्षिणी यस्याः षच् समा०। (पेटारी)।

कुलिन् पु० कुल+अस्त्यर्थे इनि। पर्वते। सत्कुलवति त्रि०।

कुलि(ली)र पु० कुल-इरक् ईरक् वा कर्कटे (कांकड़ा) मेषाद्-धिके चतुर्थे राशौ च।

कुलिश पु० न० कुलौ हस्ते शेते शी-ड, कुलिनं पर्वतं श्यति शो-ड वा। वज्रे। कौ लिशति श्लिष्यति लिश-क। अस्थि-संहारवृक्षे, मत्स्यभेदे च। [न्याञ्च।

कुली स्त्री० कौ लीयते-ड ङीप्। कण्टकार्य्यां, पत्न्या ज्येष्ठभगि-

कुलीन पु० कुले आकरे भवः ख। अश्वभेदे। तस्योत्कृष्टकुलाचार-वति, सत्कुलीने च त्रि०।

कुलीनक पु० कौ भूमौ लीनः लीन+क संज्ञायां कन्। वनमुद्गे।

कुल्माष पु० कोलति कुल—क्विप् कुल् माषोऽस्मिन् ७ब०। "अ-र्द्धस्विन्नाश्च गोधूमा अन्ये च चणकादयः। कुल्माषा इति कथ्यन्ते" इत्युक्तेषु अर्द्धस्विन्नगोधूमादिषु "स हि कुल्माषान् खादन् बिभिक्षे" इति श्रुतिः सूर्यस्य पारिपार्श्विकभेदे, यवकधान्ये वन्यादौ च। काञ्जिके सत्रोपरिपाके च न०।

कुल्य न० कुल—संस्त्याने क्यप् अस्थ्नि, अष्टद्रोणीरूपपरिमाणे, शूर्पे, आमिषे च। कुले भव', कुलाय हितो वा यत्। सत्कुलोद्भवे कुलहिते च त्रि० कुल—क्यप् टाप्। कृत्रिमायामल्पनद्याम्, जीवन्त्यामोषधौ, कुलस्त्रियां, स्थूलवार्ताकौ च स्त्री०। [च।

कुव न० कुं भूमिं वाति गच्छति वा क। जलजे, पुष्पमाल्ये, उत्पले

कुवङ्ग न० कुत्सितं वङ्गम्। सीसके (सीसा) धातुभेदे।

कुवल न० कौ वलते वल संवलने अच्। उत्पले, मुक्ताफले च कोलिवृक्षे स्त्री० ङीप्। वदरीफले न०।

कुवलय न० कोर्वलयमिव शोभाहेतुत्वात्। उत्पले, श्वेतोत्पले नीलोत्पले च, "कुवलयदलश्यामविस्तीर्णदृष्टे" इत्युद्भटम्।

कुवलयापीठ त्रि० कुवलयमापीडा भूषणं यस्य। नीलोत्पलभूषणवति जने। कंसासुरस्य हस्तिरूपधारिणि दैत्यभेदे पु०।

कुवाद त्रि० कुत्सितं वदति अण्। अपरदोषकथनशीले। भावे घञ् कुगन०। कुत्सितवाक्ये।

कुविन्द पु० कुं भूमिं विन्दति विद—श। तन्तुवाये शूद्रीगर्भे विश्वक-र्मणो जाते वर्णभेदे च (ताँति)।

कुहस्तिकृत् पु० कोः पृथ्व्याः हस्तिं वेष्टनं करोमि कृ—क्विप्। (काँ-टाकरञ्जा) लताभेदे। कुत्सितहस्तिकर्त्तरि त्रि०।

कुवेणि(णी) स्त्री० कुत्सितं वेणन्ति मत्स्या अस्याम् वेण—इन्, वा ङीप्। मत्स्यधान्याम् (खालुइ)।

कुश पु० न० कौ शेते शी—ड्, पापं श्यति शो—वा ड कुश्यति कुश-क वा। स्वनामख्याते तृणे। कुशोनृपभेदःरामसुते च "रिपुनागाङ्कुशं कुश"मिति रघुः योक्त्रे, द्वतमनुद्रेणाहते द्वीपभेदे च पु०। जले न०।

कुश वृतौ इदित् भ्वादि० पर० सक० सेट्। कुंशति अकुंशीत्।

कुश श्ले षे दि० पर० सक० सेट्। कुश्यति। अकुशत्—अकोशीत्।

कुशध्वज पु० जनकस्य नृपस्यानुजे भ्रातरि।

कुशपुष्प न० कुशाकारं पुष्पमस्य ग्रन्थिपर्णे द्रव्ये।

कुशल न० कुश—कलन्। कल्याणे। तद्वति त्रि०। कुशान् लाति ला क। दक्षे त्रि०। कौ पृथिव्यां शलति चलयति कार्य्याणि शल—अच्। कार्य्यचतुरे त्रि०।

कुशलिन् त्रि० कुशल+अस्त्यर्थे इनि। कल्याणवति। "कुशलिनी यशस्य वार्त्ता" इति साहि०।

कुशस्थल न० ६त०। कान्यकुब्जदेशे। द्वारकायां स्त्री० ङीप्। क

कुशा स्त्री० कुश—क। वल्गायां, रज्ज्वां, मधुकर्कट्यां, वामगायां श्वोतगाम्यर्थ्योडुम्बरशङ्कु च।

कुशाकर पु० कुशैराकीर्यते समन्तादनेन भूलाच्छादनेन वेष्ट्यते आ-कृ अप्। यज्ञाग्नौ। स हि कुशकण्डिकायां कुशैरास्त्रियते

कुशाग्रीय त्रि० कुशाग्रमिव छ। अतिसूक्ष्मे।

कुशाल्मलि पु० कुत्सितः शाल्मलिः रोहितकवृक्षे।

कुशावती स्त्री० कुश—अस्त्यर्थे मतुप् मस्य वः दीर्घः। रामात्मजकुशस्य राजधान्यां पुर्य्याम्।

कुशिक पु० कुश+अस्त्यर्थे ठन्। जमदग्निपितरि, विश्वामित्रस्य पितरि च मुनिभेदे। कुश+इवार्थे इकन्। फाले, सर्जवृक्षे, विभीतकवृक्षे, अश्वकर्णवृक्षे, तैलशेषे च। केकरे (ठेरा) त्रि०।

कुशी स्त्री० कुश—अयोविकारेऽर्थे ङीप् नि०। लौहविकारे फाले।

कुशीलव पु० कुत्सितं शीलं कुगति० समासे व, कुशीलं वाति वा—क—वा। कीर्त्तिसञ्चारके नटे, चारणे, वादके च। कुशी-

समष्टिमनाच्छप्रचारकत्वात् वाल्मीकौ मुनौ।

**कुशीलव** पु० द्वि० व०। कुशश्च लवश्च द्व० नि० रामपुत्रयोः।

**कुशूल** पु० कुश-कूलच्। तुषाग्नौ, अन्नकोष्ठे, इष्टकादिनिर्म्मिते धान्यादिस्थापनार्हे स्थाने च।

**कुशूलधान्यक** पु० कुशूलपरिमितं धान्यं यस्य। यावता धान्येन वर्षत्रयं स्वस्य स्वकुटुम्बस्य सकलस्य निर्वाहो भवति तावत्कालसञ्चितधान्ये विप्रे। [कर्णिकारवृक्षे च।

**कुशेशय** न० कुशे जले शेते शी-अच् अलुक्। पद्मे, सारसपक्षिणि,

**कुष** निष्कर्षे क्र्यादि० पर० सक० सेट्। कुष्णाति अकोषीत्। निरस्तु वेट् निरकोषीत् निरकुक्षत्।

**कुषाकु** पु० कुष्णाति कुष-काकु। वानरे, सूर्य्ये, वह्नौ च। परोत्तापिनि त्रि०। [(कुठ) रोगभेदे च।

**कुष्ठ** न० कुष्णाति रोगम् देहं वा कुष-क्थन्। (कुड) विषभेदे

**कुष्ठगन्धि** न० कुष्ठस्येव (कुड़) गन्धोऽस्य इत् समा०। एलवालुके।

**कुष्ठगन्धिनी** स्त्री० कुष्ठस्य गन्धोऽस्त्यस्याः इनि। अश्वगन्धायाम्।

**कुष्ठघ्नी** स्त्री० कुष्ठं हन्ति हन-क ङीप्। काकोडुम्बरिकायाम्।

**कुष्ठनाशन** पु० कुष्ठं नाशयति नश-णिच्-ल्यु। वाराहीकन्दे, गौरसर्षपे, शिरीषवृक्षे च। [सोमराज्याम्।

**कुष्ठनाशिनी** स्त्री० कुष्ठं नाशयति नश-णिच् णिनि ङीप्।

**कुष्ठल** न० कुत्सितं स्थलम् अम्बष्ठादित्वात् षत्वम्। कुत्सितस्थले।

**कुष्ठसूदन** पु० कुष्ठं सूदयति सूद-ल्यु। आरग्वधे (सोन्दाल)।

**कुष्ठहन्तृ** पु० कुष्ठं हन्ति हन-तृच्। हस्तिकन्दे (हातिकान्दा)।

**कुष्ठहृत्** पु० कुष्ठं हरति हृ-क्विप् तुक् च। (विट्खदिरे)।

**कुष्ठारि** पु० ६त०। विट्खदिरे, पटोले, गन्धके च।

**कुष्ठिन्** त्रि० कुष्ठ+अस्त्यर्थे इनि। कुष्ठरोगयुक्ते।

**कुष्माण्ड** पु० ईषत् उष्मा पित्तहेतुत्वात् अण्डेषु वीजेषु यस्य शक०। (कुमड़ा) ख्याते वृक्षे, शिवस्य गणदेवताभेदे च। जातित्वात् स्त्रियां ङीप् कुष्माण्डीत्यप्यत्र लताभेदे ऋग्वेदप्रसिद्धेषु

कृषिविषयेषु कुष्माण्डौ पापमार्जीष्वेति श्रुतिः स्वार्थे कन् कुष्माण्ड-
कोऽपि (कुमड़ा) वृक्षे ओषधौ, क्षमायां, कर्कोटी च।

कुस श्लेषे दिवा० पर० सक० सेट्। कुस्यति अकुसत्—अकोसीत्।

कुसित पु० कुस—क्त। जनपदभेदे। देवकृष्णे पु०। महति त्रि०।

कुसीद न० कुत्सितात् सीदतस्यैव निर्विशङ्केन ऽस्मृते। चतुर्गुणं
वाऽष्टगुणं कुसीदाख्यं ततः स्मृतम्” इत्युक्ते वृद्धिभेदे (सुद)
अर्थप्रयोगे, वृद्धि (सुद) जीविकायाम् “स्थानलाभनिमित्तं यत्
दानग्रहणमिष्यते। तत् कुसीदमिति ज्ञेयम्” इत्युक्ते स्थानस्थ
मूलधनस्य यथावस्थित्यै, ततोलाभाय चोत्तमर्णाधमर्णाभ्यां दत्ते
ऽस्त्रीते च धने। अर्शआदित्वादच्। तत् प्रयोगकर्त्तरि त्रि०।

कुसीदिक त्रि० कुसीदाय वृद्ध्यै प्रयच्छति कुसीद+ठन्। वृद्ध्या
जीविनि वार्द्धुषिके। स्त्रियां षित्त्वात् ङीष्।

कुसुम न० कुस—उमक् पुष्पे, फले, स्त्रीरजसि, नेत्ररोगभेदे च।

कुसुमपुर न० (पाटना) इति ख्याते पाटलिपुत्रे नगरे, इषो०
अन्तलोपे कुसुममप्यत्र।

कुसुममध्य पु० कुसुमं मध्ये फलमध्ये यस्य। (चालटा) वृक्षभेदे।

कुसुमाकर पु० ६त०। वसन्ते ऋतौ “विद्धि मां कुसुमाकर”,
मिति गीता।

कुसुमागम पु० कुसुमानामागमो यत्रकाले। वसन्ते ऋतौ।

कुसुमाञ्जन न० कुसुमाकारमञ्जनं शाक०। पैत्तलमलजाते पुष्पा-
कारे अञ्जनभेदे। [नैव पुष्पाकारत्वम्।

कुसुमात्मक न० कुसुममेवात्मा स्वरूपं यस्य। कुङ्कुमे तस्य सर्वात्म-

कुसुमाधिप पु० कुसुमेषु कुसुमप्रधानेषु वृक्षेषु अधिपः श्रेष्ठः सुग-
न्धित्वात्। चम्पकवृक्षे।

कुसुमायुध पु० कुसुममायुधमस्य। कामदेवे। [च।

कुसुमासव न० कुसुमस्य तद्रसस्यासवम्। पौष्पे मधुनि, तज्जाते मद्ये

कुसुमेषु पु० कुसुमान्येवेषवो यस्य । कामदेवे । [ समूहे ।
कुसुमोच्चय पु० कुसुमानामुच्चयः समूहो यत्र । उपवने । ६त० पुष्प-
कुसुम्भ न० कुस–उम्भ । पुष्पप्रधानद्रव्ये (कुसुम) “कुसुम्भं माक्षिका-
 याकं माञ्जीकुमिति स्मृतिः । स्वार्थे क कमण्डलौ ।
कुसृति स्त्री० कुत्सिता सृतिः सृ—क्तिन् । शाठ्ये ।
कुसुभ पु० कुं भूमिम् ईषद्वा स्तुभ्नाति स्तुन्भ—अच् मलोप नि० ।
 विष्णौ, समुद्रे च ।
कुस्तुम्बुरु न० कुत्सितं तुम्बति तुबि-मर्द्दने उरु नि०–सुट् । धन्याके
कुस्म(स्म) कुत्सीदर्शने चुरा० आत्म० सक० सेट् । कुस्म(स्म)यति
 अचुकुस्म(स्म)त । [ अचुकुहत ।
कुह विस्मापने अद० चुरा० आत्म० सक० सेट् । कुहयते
कुह अव्य० किम्+ह—कु तिहोरिति कादेशः । कुत्रेत्यर्थे ।
कुहक न० कुह—एवुन् । इन्द्रजालमायया अन्यथास्थितस्य वस्तुनो-
 ऽन्यथादर्शनेन । तद्युक्ते त्रि० ।
कुहन न० ईषत् यत्नेन हन्यते हन—कर्मणि अच् । मृद्भाण्डे ई-
 षद् यत्नेन हन्ति कर्त्तरि अच् । सर्पे, चोरे च कुं भूमिं हन्ति-
 गच्छति अच् । मूषिके । कुह—युच् टाप् । दम्भचर्यायां स्त्री० ।
 ईर्ष्यालौ त्रि० ।
कुहर पु० कुं हरति हृ—अच् । नागभेदे । कुहं विस्मापनं राति
 रा—क । छिद्रे । कर्णे, कण्ठे, कण्ठशब्दे समीपे च न० ।
कुहलि पु० कुत्सितं हलति हल—इन् । ताम्बूल्याम् ( पान )
कुहा स्त्री० कुह–अच् । कुज्झटिकायां, कटुकायाञ्च ।
कुहू(हु) स्त्री० कुह—कु—वा ऊङ् । नष्टेन्दुकलायां चतुर्द्दशीयुता-
 याममावस्यायां, कोकिलालापे च “त्वमसि चन्द्रविरोधिकुहूरव”
 इति “कुहूरिति कुहूरवध्वनिमिमे” ति चोद्भटः ।
कुहूकण्ठ पु० कुहूरितिशब्दः कण्ठे यस्य । कोकिले ।
कुहूरव पु० कुहूरिति रवो यस्य । कोकिले । कुहूशब्दादयोऽप्यत्र ।
कुहेलिका स्त्री० कुत्सितं हेलयति ण्वुल् । कुज्झटिकायाम् ।

कूँ आर्त्तस्वरे तुदा० आत्म० अक० सेट् कुटादि । कुवते अकुविष्ट ।

कू शब्दे क्र्यादि० उभ० अक० सेट् प्वादि० । कुनाति कुनीते । अकवीत् अकविष्ट ।

कूकुद पु० अलङ्कृत्यालङ्कृतकन्यादातरि ।

कूचिका स्त्री० कु–चिक् संज्ञायां कन् । तूलिकायाम् । अल्पार्थे वा ङीप् । कूचीत्यप्यत्र ।

कूज शब्दे भ्वा० पर० सक० सेट् । कूजति अकूजीत् ।

कूजित न० कूज–क्त । पक्षिशब्दे अव्यक्तशब्दे च "मधुकरनिकरकरम्बितकूजितकुञ्जकुटीरे" इति जयदेवः ।

कूट पु० कूट–अच् कर्मणि घञ् वा । अगस्त्यमुनौ । हट्टे पु० स्त्री० । शिखले, धान्यादिराशौ, अयोघने (नेहार) लौहमुद्गरे, दम्भे, मायायां, यथार्थवस्त्वाच्छादने, अद्रिशृङ्गे, तुच्छे, फालाधारे–लाङ्गलाङ्गे, मृगबन्धनहेतौ–यन्त्रे, अनृतेऽकृच्छ्रखण्डे, पुरद्वारि च पु० । स्वार्थे कन् फाले । संज्ञायां कन् । करव्याम्, मुरामांसगन्धद्रव्ये च पु० ।

कूट अपवादे दानाभावे च चुरा० आत्म० सक० सेट् । कूटयते अचुकूटत्–त । [कूटयति ते अचुकूटत्–त ।

कूट दाहे मन्त्रणे प्रच्छादने च अद० चुरा० उभय० सक० सेट् ।

कूटकार्षापण पु० कर्म० । मिथ्याभूततौम्यादि सुद्रायाम् ।

कूटकृत् पु० कूटं मिथ्याभूतं करोति कृ–क्विप् तुक् च । कायस्थे । कितवे त्रि० । कलसादिपाकस्थाने (पोयान) ।

कूटपालक पु० कूटं मृत्तिकास्तूपं पालयति ण्वुल् । कुलाले ।

कूटयन्त्र न० कूटेन कृतं यन्त्रम् । आमिषादिदानेन मृगपक्षिधारणार्थं पातिते यन्त्रे ।

कूटशाल्मलि पु० कूटः मिथ्याभूतः शाल्मलिः । कृष्णशाल्मलौ ।

कूटसंक्रान्ति स्त्री० "अर्द्धराते व्यतीते तु यदा संक्रमते रविः । सा ज्ञेया कूटसंक्रान्तिरिति कात्यायनोक्ते रवेरर्द्धरात्रानुसारं राश्यन्तरसञ्चारे ।

**कूटसाक्षिन्** त्रि० कर्म० । साक्ष्ये मिथ्याभिधायिनि ।

**कूटस्थ** त्रि० कूटोऽयोघनवत् निश्चलं यथा तथा तिष्ठति स्था—क । एकरूपतया सर्वकालस्थायिनि परिणामादिशून्ये आत्मनि आकाशादौ, ब्रह्मणि च । व्याघ्रनखाख्यगन्धद्रव्ये पु० ।

**कूटागार** न० कर्म० । क्रीडागारे, चन्द्रशालिकायाम्, (चिलाघर) क्रीडाकक्षे च ।

**कूटायुध** न० कर्म० । अन्तर्गुप्तनिशितशस्त्रे वहिः काष्ठादिमये अस्त्रभेदे ।

**कूटार्थभाषा** स्त्री० कूटार्थस्य कल्पितार्थस्य भाषा कथा । प्रबन्धकल्पनारूपायां कथायाम् ।

**कूड** घनीभावे तुदादि० पर० अक० सेट् । कूडति अकूडीत् ।

**कूण** सङ्कोचे अद०चुरा०उभ०अक० सेट् । कूणयति—ते अचुकूणत् त ।

**कूण** सङ्कोचे चुरा० आत्म० अक० सेट् । कूणयते अचूकुणत ।

**कूणि** त्रि० कूण—इन् । रोगादिना सङ्कुचितमस्तकरादौ जने ।

**कू(कु)प** दौर्बल्ये अद० चुरा० उभ० अक० सेट् । कू(कु)पयति—ते । अचुकू(कु)पत्—त ।

**कूप** पु० कुत्सिताः ईषत् वा आपो यत्र अच् समा० कुवन्ति मण्डूकाः अस्मिन् कु—पक् दीर्घश्च वा । स्वनामख्याते जलाधारे, गर्त्ते च । ततः संज्ञायां कन् । नौकादौ गुणाधारे (मास्तुल) काष्ठमये दण्डे ।

**कूपाङ्क(ङ्ग)** पु० कूपाकारोऽङ्कश्चिह्नं कूपाकारमङ्गं वास्मिन् । रोमाञ्चे ।

**कूपार** पु० कुं पृथिवीं पिपर्त्ति पूरयति अण् पूर्वदीर्घः । समुद्रे ।

**कूपी** स्त्री०कूप—अच् गौ० ङीष् । स्नेहादिधारणार्थं चर्ममये पात्रभेदे ।

**कूर्च** पु० न० कूर्य्यते कुर—चट् नि० दीर्घः । भ्रुवोर्मध्ये, स्थिते लोमोच्चये, श्मश्रुणि, कैतवे, दम्भे, मयूरपुच्छे, कुशमुष्टौ, अङ्गुष्ठाङ्गुलिमध्यस्योपरिभागे, अङ्कूरौ, शीर्षे, आसनभेदे, तन्त्रोक्ते वीजभेदे च (हुम्) ।

**कूर्चशिरस्** न० ६त० अङ्घ्रिस्कन्धे (गुडगुडा) । [शेखरादयोऽप्यत्र ।

**कूर्चशीर्ष** पु० कूर्चं श्मश्रु तद्वत् शीर्षमस्य । नारिकेले । कूर्च—

**कूर्चिका** स्त्री० कूर्च+स्वार्थे अल्पार्थे ठन् । ( क्षीरसा ) दुग्धविकारे,

सूचिकायां, तूलिकायाम्, कुट्मले, कुञ्चिकायाञ्च द्रव्यमार्ज्जनसा-
धने द्रव्ये,—(कुंचि) ह्रस्वगुच्छे च ।

कूर्पास पु० कूर्पासवत् सर्वम् ।

कूर्म्म पु० कुत्सित: कौ वा ऊर्म्मिर्वेगो यस्य पृ० । कच्छपे, "उन्मी-
लने स्मृत: कूर्म" इत्युक्ते देहस्थे वायुभेदे च ।

कूर्म्मचक्र न० कूर्म्माकारं चक्रम् । ज्योतिषोक्ते कृषिकर्म्मोपयोगिनि,
तन्त्रोक्ते जपादिकर्म्मोपयोगिनि च कूर्म्माकारे चक्रभेदे ।

कूर्म्मपुराण न० कूर्मेण कूर्म्मावतारेण भगवता उक्तम् पुराणम् । अष्टा-
दशसु पुराणेषु मध्ये पुराणभेदे ।

कूर्म्मपृष्ठक न० कूर्मस्य पृष्ठमिव इवार्थे कन् । शरावे (शरा) ।

कूल आवृतौ भ्वा० पर० सक० सेट् । कूलति अकूलीत् ।

कूल न० कूल-अच् । नद्यादेर्जलसमीपस्थाने तीरे, स्तूपे, सैन्यपृष्ठे च ।

कूलक पु० कूल-ण्वुल् । कृमिपर्वते, वल्मीके स्थाने (उइरढीपि) ।

कूलङ्कष पु० कूलं कषति कष-खच् मुम् च । समुद्रे । नद्यां स्त्री० ।

कूवर पु० न० कुङ् शब्दे कुटादि वरच् । रथस्य चक्रकाष्ठासङ्गके
काष्ठे युगन्धरे, कवचे च । रथे त्रि० ।

कूष्माण्ड पु० कुत्सित उष्मा अण्डेषु वीजेषु यस्य । (कुमड़ा) वृक्षभेदे
गणदेवताभेदे च । जातित्वात् ङीष् कुष्माण्डीत्यप्यत्र ।

कृ क्षतौ भ्वा० उभ० सक० अनिट् । करति ते अकार्षीत् अकृत ।

कृ करणे तना० उभ० सक० अनिट् । करोति कुरुते अकार्षीत्
अकृत । कृत्रिम: ।

कृ वधे स्वादि० उभ० सक० अनिट् । कृणोति कृणुते अकार्षीत् अकृत ।

कृक पु० कृ-कन् । गले । [क्षुधाकारके देहस्थे वायुभेदे च ।

कृकण पु० कृ इति कणति कण-शब्दे अच् । (कयार) क्रकरपक्षिणि,

कृकर पु० कृ इति शब्दं करोति । क्षुधाकारे देहस्थे वायौ ।

कृकलास पु० कृकं कण्ठं लासयति अण् । सरटे (कांकलास)
पक्षिणि । [मयूरे, सरटे च ।

कृकवाकु पु० कृकेण वक्ति वच-परिभाषणे ञुण् कश्च । कुक्कुटे,

**कृकाटिका** स्त्री० कृकं कण्ठमटति अट–ण्वुल् टाप् कापि अत इत्वम्। ग्रीवायामुन्नतदेशे।

**कृच्छ्र** न० कृत–रक् कोऽन्तादेशः। कष्टे, दुःखे तत्कारणे–पापे, कष्टदायके–प्राजापत्यादिव्रते, मूत्रकृच्छ्ररोगे च। तद्वति त्रि०।

**कृत** छेदे तुदा० पर० सक० सेट्। मुचादि। कृन्तति अकर्त्तीत् कर्त्तिष्यति–कर्त्स्यति कृत्तः।

**कृत** वेष्टे रुधा० पर० सक० सेट्। कृणत्ति कृन्तः अकर्त्तीत्।

**कृत** न० कृ–क्त। "चत्वार्य्याहुः सहस्राणि वर्षाणान्तु कृतं युगम्" इति मनूक्ते दिव्यमानेन चतुःसाहस्रमितवर्षे, मानुषमानेन १७२८००० मितवर्षे, सत्ययुगे, पर्य्याप्ते, अलमर्थे, फले च। रचिते त्रि०।

**कृतक** न० कृत० कन्। विड्लवणे। कृत्रिमे, मिथ्याकल्पिते च त्रि०।

**कृतकृत्य** त्रि० कृतं कृत्यं कर्त्तव्यं येन। कृतार्थे समाप्तकार्य्ये, धन्ये, विदुषि च।

**कृतक्षण** त्रि० कृतः क्षणः समयो येन। लब्धावकाशे।

**कृतघ्न** त्रि० कृतं हन्ति हन–क। कृतोपकारस्य जनस्य अपकारे प्रवर्त्तमाने "कृतघ्ने नास्ति निष्कृति"रिति पुराणम्।

**कृतच्छिद्रा** स्त्री० कृतं छिद्रं यस्याम् कोषातकीलतायाम्।

**कृतज्ञ** त्रि० कृतं कृतोपकारं जानाति ज्ञा–क। कृतोपकारज्ञातरि–प्रत्युपकारके। कुक्कुरे पु०।

**कृतधी** त्रि० कृता सम्पादिता धीर्येन। शास्त्राभ्यासंस्कृतान्तःकरणे, स्थिरचित्ते, "कृतधीः किं प्रभाषेत" इति गीता।

**कृतप्रणाश** पु० कृतयोः पुण्यापुण्ययोर्भोगमन्तरेण प्रणाशो नाशः। कृतहानौ।

**कृतम्** अव्य० कृत–कमु। अलमर्थे, निषेधे च।

**कृतमाल** पु० कृता मालास्य। आरग्वधे, (सोन्दाल) कर्णिकारे च।

**कृतलक्षण** त्रि० कृतानि लक्षणान्यस्य। गुणैर्विख्याते।

**कृतवर्म्मन्** पु० हृदिकासुते यादवे क्षत्रियभेदे।

**कृतश्रम** त्रि० कृतः श्रमो येन महोत्साहान्विते।

**कृतवीर्य्य** पु० कृतं वीर्य्यमनेन। एकवीरनृपात्मजे कार्त्तवीर्य्यार्ज्जुनजनके नृपभेदे। वीर्य्यान्विते त्रि०।

**कृतविद्य** त्रि० कृता अभ्यस्ता विद्या येन। अभ्यस्तविद्ये।

**कृतसापत्निका** स्त्री० कृतं सापत्न्यं यस्याः कप् यलोपः टापि अत इत्वम्। अध्यूढायां स्त्रियां यस्या विवाहात् पश्चात् तत्पतिना विवाहान्तरं कृतं तस्याम्।

**कृतस्वर** पु० कृतः स्वरो यत्र। स्वस्यैकदन्तिस्थाने स्वराकरे।

**कृतहस्त** त्रि० कृतः अभ्यस्तः हस्तो वाणादित्यागमोक्षणलाघवरूपा हस्तशिक्षा येन। सुशिक्षितशरमोक्षणविद्ये जने।

**कृताकृत** न० कृतं कार्य्यमकृतं कारणं च समा० द्व०। कार्य्यकारणयोः। कर्म०। कृते अकृते च होमादौ। अतएव चतुर्विंशि-शेषस्य अत्राण: कृताकृतावेक्षणाय होमादौ वरणम्।

**कृताञ्जलि** पु० कृतोऽञ्जलिरिव पत्रसङ्कोचो येन। लज्जालुवृक्षे। संपुटीकृतहस्ते त्रि०।

**कृतात्मन्** ०० कृतः शिक्षितः संस्कृतो वा आत्माऽन्तकरणं यस्य। शिक्षितचित्ते, शुद्धान्तःकरणे च।

**कृतात्यय** पु० कृतस्य कर्मजन्यभोगस्यात्ययोऽवसानम्। भोगं विना कृतकर्मनाशे "कृतात्ययेऽनुशयवान्" इति शारीरकसूत्रम्।

**कृतान्त** पु० कृतः अन्तो विपर्य्ययनाशो निश्चयो विषयपरिच्छेदो वा येन। ज्ञातसिद्धान्ते। कृतो नाशो येन। दैवे, पापे यमे च।

**कृतान्न** न० कृतं पक्वान्नं तदन्नञ्च लड्डुकादौ पक्वान्ने, "कृतान्नसुदकं स्त्रिय" इति स्मृतिः।

**कृतार्थ** त्रि० कृतः अर्थः प्रयोजनं येन। कृतकार्य्ये।

**कृतास्त्र** त्रि० कृतं शिक्षितमस्त्रं येन। शिक्षितास्त्रे।

**कृति** स्त्री० कृ—क्तिन्। पुरुषप्रयत्ने, कर्त्तृव्यापारे, विंशत्यक्षरपादके छन्दोभेदे च। [ निपुणे, साधौ, कृतार्थे च।

**कृतिन्** स्त्री० कृतमनेन इष्टादित्वादिनि। पण्डिते, योग्ये, पुण्यवति,

**कृत्त** त्रि० कृत—क्त। छिन्ने, वेष्टिते च।

**कृत्ति** स्त्री० कृत–क्तिन्। चर्म्मणि, भूर्जपत्रे च।

**कृत्तिका** स्त्री० कृत–क्तिन् संज्ञायां कन्। अश्विन्यवधिके तृतीये नक्षत्रे। [सुतो जातः। चन्द्रे।

**कृत्तिकासुत** पु० कृत्तिकायाः सुतः स्कन्दे, कृत्तिकानक्षत्रयुक्तकाले

**कृत्तिवासस्** पु० कृत्तिश्चर्म्म वासो यस्य, कृत्तिं वस्ते वस–असुन् वा। शिवे। [कैलिमाख्येषु प्रत्ययेषु पु०। कर्त्तव्ये त्रि०।

**कृत्य** न० कृत–क्यप्। कार्य्ये, व्याकरणोक्तेषु यतृक्यप्तव्यानीयर्यत्-

**कृत्यविद्** त्रि० कृत्यं कर्त्तव्यं वेत्ति विद–क्विप्। कार्य्यज्ञे शिष्टज्ञे, कृत्यविदित्युवाचेति रघुः। [देवभेदे च।

**कृत्या** स्त्री० कृ–क्यप् टाप्। क्रियायाम्–अभिचारक्रियाजन्ये,

**कृत्रिम** न० कृ–क्त्रि मम्प् च। विड्लवणे, काचलवणे, तुरुष्कनाम-गन्धद्रव्ये, रसाञ्जने च। सिह्लके द्वादशविधपुत्रान्तर्गते पुत्रभेदे च पु०। क्रियया निष्पन्नमात्रे त्रि०।

**कृत्स्न** न० कृत–क्स्न। सकले, जले, कुक्षौ च। अशेषे त्रि०।

**कृन्तन** न० कृत–ल्युट्। नि० मुम् च। छेदने, कृन्तनं नखकेशानां छेदनञ्च वनस्पतेः” इति स्मृतिः।

**कृप** कल्पने भ्वा० आत्म० लुङि लुटि लृटि लृङि च उभ० द्युतादि अक० वेट्। कल्पते। अकल्पत अकल्पिष्ट अक्लृप्त। कल्प्तासि कल्पितासे कल्प्तासे कल्प्स्यति कल्पिष्यते।

**कृप** दौर्बल्ये अद० चुरा० उभ० अक० सेट्। कृपयति ते अचिकृपत्-त।

**कृप** शक्तौ चित्रीकरणे वा चुरा० पक्षे भ्वादि० पर०। कल्पयति ते कल्पति अचीकल्पत्–त अकल्पीत्,

**कृप** पु० कृप–क। शरद्वतः पुत्रे द्रोणश्यालके कृपाचार्य्ये।

**कृपण** पु० कृप–क्युन्। कृमौ। मन्दे, क्षुद्रे च “कृपणाः फलहेतव” इति गीता। दीने, “कार्पण्यदोषोपहतस्वभाव” इति गीता अदातरि च त्रि०। [च्छायाम्।

**कृपा** स्त्री० कृप–अङ्। दयायां फलनिरपेक्षतया दीनजनानुपच्छे-

कृपाण पु० कृपां नुदति नुद–ड । खड्गे । ङीप् । कृपाण्योऽप्यत्र ।
छुरिकायाम्, कर्त्तर्यां च ।

कृपालु त्रि० कृपां लाति ला–डु । कृपायुक्ते ।

कृपी स्त्री० द्रोणाचार्य्यस्य पत्न्याम् शरद्वतो दुहितरि ।

कृपीट न० कृप–कीटन् । उदरे, तोये च ।

कृपीटयोनि पु० कृपीटस्य जलस्य योनिः । वह्नौ "आपोऽग्निरग्नेराप इति श्रुतेरस्य जलयोनित्वम् ।

कृमि पु० क्रम–इन् सम्प्रसारणञ्च । कीटात् सूक्ष्मे–जन्तौ तज्जातायां–लाक्षायां, उदरजातकीटयुक्तरोगे च ।

कृमिकण्टक पु० कृमिरिव कण्टकोऽस्य । विडङ्गे उडुम्बरे चित्रायाञ्च ।

कृमिकोषोत्थ न० कृमेः कोषात् उत्तिष्ठते उत्पद्यते उद्–स्थाक ।
कौषेये (रेशमिवस्त्रे) ।

कृमिघ्न पु० कृमिं हन्ति हन–क । विडङ्गे, पलाण्डौ, कोलकन्दे,
भल्लातके च हरिद्रायाम् स्त्री० टाप् । धूम्रपत्रायां स्त्री० ङीप् ।

कृमिज न० कृमिभिर्जन्यते जन–कर्मणि ड । अगुरुणि चन्दने ।
कृमितोजाते त्रि० । लाक्षायां स्त्री० टाप् ।

कृमिफल पु० कृमयः फलेऽस्य । उडुम्बरे ।

कृमिशैल पु० कृमीणां शैल इव । वल्मीके ।

कृमीलक पु० कृमीन् ईरयति जनयति ईर–ण्वुल् रस्य ल ।
वनमुद्गे । [ अकर्शीत् ।

कृश तनूकरणे दिवा० पर० सक० सेट् । कृश्यति अकृशत्–

कृश त्रि० कृश-क्त नि० । अल्पे, सूक्ष्मे च ।

कृशाङ्गी स्त्री० कृशमङ्गमस्याः । प्रियङ्गुवृक्षे । कृशदेहे त्रि० ।

कृशानु पु० कृश–आनुक् । वह्नौ चित्रकवृक्षे च ।

कृशानुरेतस् पु० कृशानौ वह्नौ रेतोयस्य । शिवे । देव्या बोढुमक्षमस्य शिववीर्य्यस्याग्नौ प्रक्षेपः ततोऽग्निमुखः कार्त्तिकेयो जातः
इति पुराणकथा अनुसन्धातव्या । [अकृषत्–अकृक्षत् ।

कृष आकर्षणे विलेखने च तुदा० उभ० सक० अनिट् । कृषति ।

कृष आकर्षणे विलेखने च भ्वा० पर० सक० अनिट्। कर्षति अक्राक्षीत्-अकार्क्षीत्-अकृक्षत्।

कृषक पु० कृष-क्वुन्। फाले, वृषे। कर्षके त्रि०।

कृश(श)(स)र पु० तिलतण्डुलसम्पाकः कृ(श)(ष)र, परिकीर्त्तित इत्युक्ते तिलमिश्रिते पक्वे तण्डुलाद्यन्ने।

कृषि स्त्री० कृष-इक्। वैश्यवृत्तिभेदे भूमिकर्षणरूपे शस्योत्पादनव्यापारे। कर्मणि इक्। भूमौ। [कृषिवृत्त्या जीविनि।

कृषिजीविन् त्रि० कृष्या जीवति जीव-णिनि। स्वयमस्वयं वा कृतया

कृषीवल त्रि० कृषिरस्यास्ति वलच् दीर्घश्च। कर्षके।

कृष्टपच्य त्रि० कृष्टे क्षेत्रे स्वयमेव पच्यते पच-क्यप्। धान्यादौ।

कृष्ण पु० कृष-नक्। भगवतोऽवतारभेदे वासुदेवे देवकीनन्दने। "कृषिर्भूवाचकः शब्दः णश्च निर्वृतिवाचकः। तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" इत्युक्ते परब्रह्मणि, वेदव्यासे, अर्ज्जुने मध्यमपाण्डवे च। कृष्णवर्णत्वात् काके, कोकिले, करमर्द्दके (करमचा) वृक्षे, नीले, वर्णे च तद्वति त्रि०। कालागुरुणि अ-शुभकर्मणि च न०। द्रौपद्यां, नीलीवृक्षे, कणायां, द्राक्षायां, नीलपुनर्नवायाम्, कृष्णजीरके, गाम्भार्य्यां कटुकायाम्, राजसर्षपे, सर्षप्यां, काकोल्यां, सोमराज्याञ्च कृष्णवर्णत्वात् स्त्री० टाप्। नीलाञ्जने, लौहे, मरिचे च पु०।

पुष्पप्रधाने वृक्षे।

कृष्णकलि पु० कृष्ण इव चूडालः कलिः कलिकाऽस्य। स्वनामख्याते

कृष्णकाय पु० कृष्णः कायो यस्य। महिषे। कृष्णवर्णतनुयुक्ते त्रि०

कृष्णगन्ध पु० कृष्ण उग्रो गन्धोऽस्य। शोभाञ्जनवृक्षे।

कृष्णगर्भ पु० कृष्णवर्णो गर्भोऽस्य। कट्फले।

कृष्णचूडा स्त्री० कृष्णस्य चूडा इव चूडाऽस्य। स्वनामख्याते पुष्पवृक्षे।

कृष्णचूर्ण न० कृष्णस्य चूर्णम्। लौहमले (लोहार गु)।

कृष्णजटा स्त्री कृष्णा जटा यस्याः। जटामांस्याम्।

कृष्णजीरक पु० कर्म०। कृष्णवर्णजीरके (कालजीरे)।

कृष्णद्वैपायन पु० द्वीपे भवः कृष्णः कर्म्म० । वेदव्यासे तस्य पराशरात् यमुनाद्वीपे एव जन्मेति पुराणम् ।

कृष्णधूस्तू(धत्तू)र पु० कर्म्म० (कनकधुतरा) वृक्षभेदे ।

कृष्णपर्णी स्त्री० कृष्णं पर्णमस्याः । (कालतुलसी) कृष्णतुलस्याम् ।

कृष्णपक्ष पु० कर्म्म० । प्रतिपदाद्यमावस्यान्तासु पञ्चदशसु तिथिषु "चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मक" इत्युक्ते मासार्द्धकाले ।

कृष्णपाक पु० पच्यते इति पाकः फलं कृष्णः कृष्णवर्णः पाकोऽस्य । करमर्द्दे ।

कृष्णपाकफल पु० कृष्णपाकं फलमस्य । करमर्द्दे ।

कृष्णफल पु० कृष्णं पाकावस्थायाम् फलमस्य । करमर्द्दे, सोमराज्यां स्त्री० टाप् । [कटुकायाम् ।

कृष्णभेद पु० कृष्णोवर्णेन भेदश्छेदः यस्माद्योऽस्य । वा ङीप् ।

कृष्णमुद्ग पु० कर्म्म० । (कालमुग) मुद्गभेदे ।

कृष्णरुहा स्त्री० कृष्णः सन् रोहति रुह-क । जतुकालतायाम् ।

कृष्णलवण न० कर्म्म० । सौवर्च्चलवणे । (कालालोण) ।

कृष्णलक पु० कृष्णं वर्णं लाति आदत्ते ला-क संज्ञायां कन् । गुञ्जाफले तस्यार्द्धकृष्णत्वात्तथात्वम् "पञ्चकृष्णलकोमाष" इति मनुः

कृष्णला स्त्री० कृष्णं वर्णमग्रफले लाति ला-क टाप् । गुञ्जायाम् ।

कृष्णलोह न० कर्म० । अयस्कान्ते ।

कृष्णलोहित पु० कृष्णः सन् लोहितः वर्णौ वर्णेनेति समा० । रक्तकृष्णमिश्रवर्णे । तद्वति त्रि० ।

कृष्णवक्त्र पु० कृष्णं वक्त्रमस्य । वानरे ।

कृष्णवर्ण पु० कृष्णो वर्णोऽस्य । राहौ ग्रहे । कृष्णः श्यामो वर्णः शूद्रे । ब० । कृष्णवर्णवति त्रि० ।

कृष्णवर्त्मन् पु० कृष्णं वर्त्म धूमप्रसाररूपगतिस्थानमस्य । वह्नौ, राहौ ग्रहे, चित्रकवृक्षे च । कृष्णमपवित्रं वर्त्माचरणं यस्य । दुष्कर्मकारके त्रि० ।

कृष्णवल्लिका स्त्री० कर्म० । जतुकालतायाम् ।

कृष्णवल्ली स्त्री० कर्म० । कृष्णवल्लाम् काकमाच्याम् ।
कृष्णवीज पु० कृष्णं बीजमस्य । रक्तशिग्रौ । कालिङ्गे न० ।
कृष्णवृन्ता स्त्री० कृष्णं वृन्तमस्याः । पाटलावृक्षे माषपर्ण्याञ्च ।
संज्ञायां कन् कापि अत इत्वम् । गाम्भार्य्याम् ।
कृष्णश(सा)र पु० कृष्णाश्वो शारः (सारः) शबलश्च वर्णो वर्णोनेति
ब० । कालसारमृगे ।
कृष्णशालि पु० कर्म० (कालधान) धान्यभेदे ।
कृष्णशिम्बिका स्त्री० कर्म० । काकाण्डग्राम् ।
कृष्णशिग्रु पु० कर्म० । कृष्णशोभाञ्जने (कालसजना) ।
कृष्णशृङ्ग पु० कृष्णं शृङ्गमस्य । महिषे ।
कृष्णसर्षप पु० कर्म० । (राइ सर्षा) राजसर्षपे ।
कृष्णसार पु० कृष्णः सारोऽस्य । शिंशपावृक्षे (शिशु)
कृष्णस्कन्ध पु० कृष्णः स्कन्धोऽस्य । तमालवृक्षे ।
कृष्णागुरु न० कर्म० । कालागुरुणि, "कृष्णं गुणाधिकं तत्तु लोहवत् वारि मज्जति" त्युक्तलक्षणे धूपकाष्ठे ।
कृष्णाजिन न० कर्म० । कृष्णसारमृगचर्मणि ।
कृष्णायस न० कर्म० टच् समा० । कृष्णलौहे अयस्कान्ते ।
कृष्णार्चिस् पु० कृष्णः कृष्णाता अर्चिर्श्यो यस्य । कृष्णता कारकशिखे वह्नौ ।
कृष्णार्जक पु० कर्म० । विषघ्ने (काललुलसी) वनवर्वरे ।
कृष्णावास पु० कृष्णस्यावासोऽस्मिन् । अश्वत्थवृक्षे ।
कृष्णिका स्त्री० कृष्णेव संज्ञायां कन् । (राइ) राजसर्षपे ।
कृष्णेक्षु पु० कर्म० । (काजला) इक्षुभेदे ।
कृष्य स्त्री० कृष—अर्हार्थे क्यप् । कर्षणार्हायाम् भूमौ ।
कॄ विक्षेपे तुदा० पर० सक० सेट् । किरति अकारीत् । कीर्णः ।
कॄ हिंसने क्र्यादि० उभ० सक० सेट् । कृणाति अकारीत् ।
कॄ विज्ञाने चुरा० आत्म० सक० सेट् । कारयते अचीकरत ।
कॄत संशब्दे चु० उभ० सक० सेट् । कीर्त्तयति—ते अचकीर्त्तत्—त ।

क्लृप्त त्रि० कृप्–क्त । रचिते, नियते, "क्लृप्तेन सोपानपथेनेति रघुः ।
केकय पु० देशभेदे, तद्राजस्य अपत्ये बहुषु लुक् । तद्देशराजभेदे च
ब० ब० । तद्योगात् अपत्यजनकभावोपचारात् कैकयी स्त्री० भर-
तमातरि । [ तालिकृत्ते पुच्चे (टेरा) ।
केकर पु० के मूर्ध्नि कर्त्तुं शीलमस्य क–अच् अलुक् स० । निम्नोक्–
केका स्त्री० के मूर्ध्नि कायते कर्मणि ड अलुक् स० । मयूरवाण्याम् ।
केकावल पु० केका+अस्त्यर्थे वलच् । मयूरे ।
केकिन् पु० केका+अस्त्यर्थे इनि । मयूरे ।
केचन अव्य० किमः+पुंसि जसिरूपं ततश्चन । केचिदित्यर्थे एवं
केचिदित्यप्यत्र । [केतृ–त ।
केत मन्त्रणे अद० चुरा० उभ० सक० सेट् । केतयति–ते अचि
केतक पु० कित–निवासे ण्वुल् । "केतकः सूचिकापुष्पोजम्बुकः
क्रकचच्छद" इत्युक्तलक्षणे वृक्षे । तत्पुष्पे न० । गौरादि० ङीष् ।
केतकीत्यप्यत्र ।
केतन न० कित–भावाधिकरणकर्मकरणेषु यथायथं ल्युट् । गृहे,
निमन्त्रणे, केतौ, ध्वजे, चिह्ने, कृत्ये च ।
केतु पु० चाय–तुक्यादेशः । रोगे, द्युतौ, पताकायाम्, चिह्ने, रिपौ
च । राहोः शरीरात्मके उपग्रहे । तेषाञ्चोत्पातरूपता ज्योतिषे
सिद्धा ब० । व० ।
केतुमाल न० "सुकेतनं केतुमालं प्रतीच्यां गन्धमादनादि"त्युक्ते जम्बू-
द्वीपस्य नवखण्डान्तर्गते खण्डभेदे ।
केदार पु० के शिरसि दारोऽस्य । पर्वतभेदे, तत्स्थे शिवलिङ्गभेदे,
भूमिप्रभेदे, आलवाले, षण्डे च ।
केनिपात पु० के जले निपातोऽस्य अलुक् स० । अरित्रे नौकादेर्ग-
तिर्नियामके ( हाल ) इति प्रसिद्धे काष्ठे । वा कपि तत्रैवार्थे
केन्दु पु० कुत्सित इन्दुः कोः कादेशः । तिन्दुकवृक्षे । संज्ञायां कन्
(गाब) गाबकवृक्षे ।

केमुक पु० के शिरसि अमयति दृश्यते अम उक् अलुक् स० । (कोच्र) इतिख्याते कन्दविशेषे । फलं केमुकयजितमिति स्मृतिः ।

केयूर पु० के बाहुशिरसि याति या–ऊरच् अलुक् स० । (बाजु) (ताड़) बाहुभूषणे ।

केरल पु० ब० व० । "सुब्रह्मण्यं समारभ्य यावद्देशो जनार्द्दन ! तावत् केरलदेशः स्या"दित्युक्ते देशे । वैदिकयागानधिकारिणि–ब्रह्मसुधारिणि" कोलिसर्पा माहिषका दर्वाश्चोलाः सकेरलाः । सर्वे ते क्षत्रियास्तात । धर्मस्तेषां निराकृत इति हरिवंशोक्ते क्षत्रियभेदे च ।

केल चालने भ्वा० पर० सक० सेट् । केलति अकेलीत् । णिचि अचिकेलत् त ।

केलि पु० स्त्री० केल–इन् । परीहासे, क्रीड़ायाञ्च । [ स्त्री० वा ङीप् । पृथिव्यां

केलिवृक्ष पु० केलेः क्रीडार्थं वृक्षः । केलिकदम्बवृक्षे ।

केलिसचिव पु० केलौ सचिवः सहायः नर्मसचिवे क्रीडाविषये मन्त्रिणि ।

केव सेवने भ्वा० आत्म० सक० सेट् । केवते अकेविष्ट, णिचि अचिकेवत् त ।

केवल त्रि० केव–कलच् के सरसि वलयति वल–अच् अलुक् स० । एके, कृत्स्ने च । निश्चिते, ज्ञानभेदे, शुद्धे च न० ।

केविका स्त्री० केव–ण्वुल् टाप् कङ्कणदेशप्रसिद्धे केवेर इति ख्याते पुष्पप्रधाने वृक्षे, भृङ्गारी च ।

केश पु० क्लिश्यते क्लिश्नाति वा क्लिश–अच् ललोपश्च कस्य ईशो वा । वरुणे, ह्रीवेरे, दैत्यभेदे, विष्णौ, चिकुरे च मज्जधातुजातोपधातुविशेषोऽयं केशः । अस्य परवर्त्तिनः पाशादिशब्दाः केशभूयस्त्ववाचिनः । बालास्तु तत्पराः पाशो रचना भार उच्चयः । हस्तः पक्षः कलापश्च केशभूयस्त्ववाचकादमू ॥ ः ।

केशकीट पु० ६ त० । यूकाख्ये केशकीटे । (उकुण)

केशपर्णी स्त्री० केश इव पर्णमस्याः जातित्वात् ङीप् । अपामार्गे ।

केशपाशी स्त्री० केश+पाश-गौरा० ङीष् विन्यासयुक्ते केशसंघाते चूडायाम् ।

केशमथनी स्त्री० केशो बद्धा मथ्यतेऽसौ मथ ल्युट् ङीप् । शमीवृक्षे ।

केशमार्जक न० केशान् मार्ष्टि मृज-ण्वुल् । (काँकुइ चिरुणि) ख्याते केशप्रसाधिकायां कङ्कतिकायाम् ।

केशर पु० के जले शीर्यते शॄ-अच् । सिंहस्कन्धस्थायां जटायाम् अश्वस्कन्धस्थकेशेषु, पुन्नागवृक्षे, बकुलवृक्षे, 'नीलकेशर-वृक्षे सुराणामनक्षत्रे च । हिङ्गुले न० किञ्जल्के पु० न०

केशरञ्जन पु० केशान् रञ्जयति रञ्ज-णिच्-ल्यु । भृङ्गराजवृक्षे (भीमराज) ।

केशराज पु० केशा राजन्तेऽनेन घञ् भृङ्गराजे (भीमराज) ।

केश(स)रिन् पु० केश(स)रा: सन्त्यस्य इनि । सिंहे, अश्वे, पुन्नागवृक्षे नागकेशरवृक्षे, बीजपूरकवृक्षे हनुमत्पितरि वानरभेदे च ।

केशरूपा स्त्री० केशस्येव रूपमस्याः । वन्दाकवृक्षे (परगाछा) ।

केशव पु० केशौ ब्रह्मरुद्रौ सर्वेश्वरावपि अनुकम्प्यतया वाति वा-क० केशं केशिनं असुरं आदाय च वाति हिनस्ति वा—क वा । विष्णौ । "यस्मात् त्वयैव दुष्टात्मा हतः केशी जनार्द्दन ! तस्मात् केशव-नाम्ना त्वं लोके ख्यातो भविष्यसी"त्युक्तेः । 'अंशवो ये प्रकाशन्ते मम ते केशसंज्ञिताः सर्वज्ञाः केशवं तस्मात् मां प्राहुर्द्विजसत्तमाः' इत्युक्ते सूर्य्यादीश्वरे परेश्वरे च । केश+प्राशस्त्ये व । प्रशस्त-केशयति त्रि० ।

केशवर्द्धिनी स्त्री० केशान् वर्द्धयति वृध-णिच्-णिनि । सहदेवीलतायाम् ।

केशवेश पु० केशस्य वेशः । कवरीबन्धने । [लतायाम् ।

केशारुहा स्त्री० केशा आरोहन्त्यनया रुह—घञर्थे क । सहदेवी-

केशिक त्रि० प्रशस्ताः केशोऽस्त्यस्य ठन् । प्रशस्तकेशयुक्ते जने ।

केशिका स्त्री० केशिन इव कायति प्रकाशते कै—क । शतावरीवृक्षे ।

केशिन् त्रि० प्रशस्ताः केशाः सन्त्यस्य केश+इनि प्रशस्तकेशवति । विष्णौ, दैत्यभेदे, सिंहे च पु०

केशिनिसूदन पु० केशिनं निसूदयति हिनस्ति नि+सूद-णिच्-ल्युट्। कृष्णे केशिहादयोऽप्यत्र।

केश्य न० केशाय हितं केश+यत्। कृष्णागुरुणि। भृङ्गराजे पु०।

केसर न० के जले सरति सृ-अच्। हिङ्गौ, नागकेशरपुष्पे कासीसे, स्वर्णे च। नागकेशरवृक्षे, तुरङ्गस्कन्धस्थे केशे, सिंहस्कन्धस्थजटायां पुन्नागवृक्षे, वकुलवृक्षे च पु०। किञ्जल्के पु० न०।

कै शब्दे भ्वा० पर० अक० अनिट्। कायति अकासीत्।

कैकयी स्त्री० केकयानां देशानां राजा तस्यापत्यम् अणि ङीप्। दशरथपत्न्यां भरतमातरि। [देशभूपे।

कैकेय पु० केकय+राजनि+अञ् नि० अत एत्वं वृद्धिः। केकय-

कैकेयी स्त्री० कैकेयस्यापत्यं स्त्री अण्। भरतमातरि दशरथपत्न्याम्।

कैटभ पु० कीटवत् भाति भा-क स्वार्थे अण्। दैत्यभेदे।

कैटभजित् पु० कैटभं जितवान् जि-भूते क्विप् तुक् च। विष्णौ। कैटभार्यादयोऽप्यत्र।

कैटर्य्य पु० किट त्रासे घञ् केटं राति रा-अतितिक्तत्वात् क स्वार्थे ष्यञ्। निम्बे, भूनिम्बे, कट्फले, पूतिकरञ्जे मदनवृक्षे च।

कैतव न० कितवस्य कर्म्म अण्। कपटतायाम् स्वार्थे अण्। द्यूते, वैदूर्य्यमणौ, धुस्तूरपुष्पादौ च। [क्षेत्रसमूहे न०।

कैदार पु० केदारस्य क्षेत्रस्यायम् अण्। केदारजन्ये शालिधान्ये।

कैदार(रि)क न० केदार+समूहार्थे वुञ् ठञ् वा। क्षेत्रसमूहे।

कैरव न० के जले रौति रु-अच् अलुक् स० केरवो हंसस्तस्य प्रियम् अण्। कुमुदे, शुक्लोत्पले, शत्रौ च।

कैरविणी स्त्री० कैरव+इनि। कुमुदसमुदाये तदुद्भवलतायाञ्च।

कैरवी स्त्री० कैरवाय हिता अण्। चन्द्रिकायाम्।

कैरात पु० किरात इव शूरः इवार्थे अण्। बलवत्पुरुषे, किरातदेशे (पर्य्यन्तदेशे) भवः अण्। भूनिम्बे शम्बरचन्दने च न०।

कैराल न० केरलदेशे भवम् अण्। विडङ्गे।

कैलास पु० के जले लासो लसनं दीप्तिरस्य अलुक् स०, केलसः

स्फटिकस्येव शुभ्रः अण्, केलीनां समूहः अण्—केलं तेनास्यते—
ऽत्र आस घञ् वा । शिवकुवेरयोः स्थाने ।

कैलासपति पु० ६त० । शिवे । [ (जले) धीवरजातौ ।

कैवर्त्त पु० के जले वर्त्तते वृत-अच् अलुक् स० ततः स्वार्थे अण् ।

कैवर्त्तमुस्तक पु० कर्म० । जलस्थितमुस्तके (केशुर) ।

कैवल्य न० केवलस्य शुद्धस्य उपाधिरहितस्य भावः । मोक्षे ।

कैशिक न० केशानां समूहः ठक् । केशसमूहे । नाटकप्रसिद्धे वृत्ति-
भेदे स्त्री० ङीप् सा० ६ प० ।

कैशोर न० किशोरस्य भावः अञ् । "पौगण्डं दशमावधि, कैशोर-
मापञ्चदशात्" इत्युक्तायां किशोरावस्थायाम् ।

कैश्य न० केशानां समूहः ष्यञ् । केशसमूहे ।

कोक पु० कोकते कुक—आदाने अच् । चक्रवाके, वृके, ज्येष्ठ्याम्
खर्जूरीवृक्षे, दर्दुरे, विष्णौ च ।

कोकनद पु० कोकान् चक्रवाकान् नदति नादयति अन्तर्भूतण्यर्थे नद—
अच् । रक्तकुमुदे, रक्तपद्मे च [क्लि० ।

कोकनदच्छवि पु० कोकनदस्येव छविर्दीप्तिर्यस्य । रक्तवर्णे तद्वति

कोकबन्धु पु० कोकयोश्चक्रवाकयोर्मेलनकारित्वात् बन्धुरिव । सूर्ये ।

कोकिल पु० कुक आदाने इलच् । स्वनामख्याते विहगभेदे जातौ
स्त्रियां टाप् । [वृक्षभेदे, करवीरभेदे, इक्षुगन्धायाञ्च ।

कोकिलाक्ष पु० कोकिलस्याक्षीव रक्तमक्षि पुष्पं यस्य । (तालमाखना)

कोकिलावास पु० ६त० । आम्रवृक्षे ।

कोकिलेक्षु पु० कोकिल इव कृष्ण इक्षुः । (काजला) इक्षुभेदे ।

कोङ्कण पु० कोमिति कणन्त्यत्र । "अथाभ्यङ्गं समारभ्य कोटिदेशस्य
मध्यगे समुद्रप्रान्तदेशो हि कोङ्कणः परिकीर्त्तितः", इत्युक्ते देशभेदे ।

कोच पु० कुच—अच् । देशभेदे, तद्देशस्थे "तीवरस्यैव स पुत्रः मांस-
च्छेदसमुद्भवः । कोचजातिरिति ख्यातः" इत्युक्ते जातिभेदे च ।

कोजागर पु०कोजागर्त्तीति वदत्यस्मिन् घ० । आश्विनपौर्णमास्याम् ।
निशीथे वरदा लक्ष्मीः कोजागर्त्तीतिवादिनी" इति ।

**कोट** पु० कुट—घञ् । कौटिल्ये, दुर्गे च (गड़) ।
**कोटर** पु० न० कोटं कौटिल्यं राति रा—क । वृक्षस्थगह्वरे ।
**कोटवी** स्त्री० कोटं वाति वा—क गौरा० ङीष् । नग्निकायां स्त्रियां दुर्गायाञ्च ।
**कोटि** स्त्री० कुट—इञ् । धनुषोऽग्रभागे वस्तुमात्रस्याग्रभागे, पृक्कायाम् (पिड़िङ्गशाक) संशयस्यालम्बने, वादे निर्णयार्थं कृते पूर्वपक्षे, शतलक्षमितसंख्यायां, तत्संख्येये च । वा ङीप् कोटीत्यप्यत्र ।
**कोटिक** पु० कोट्या बहुधा कायति प्रकाशते कै—क । इन्द्रगोपकीटे ।
**कोटिर** पु० कोटिं राति रा—क । इन्द्रे, नकुले, इन्द्रगोपकीटे च ।
**कोटिवर्षा** स्त्री० कोटिभिरग्रैर्वर्षति मधु वृष—अण् । (पिड़िङ्ग) शाकभेदे ।
**कोटि(टी)श** पु० कोट्या अग्रेण श्यति शो—क । लोष्टभेदनेऽस्त्रे ।
**कोटीर** पु० कोटिमीरयति ईर—अण् । किरीटे, जटायाञ्च ।
**कोट्ट** पु० कुट्ट—घञ् नि० गुणः । दुर्गे (गड़) राजधानीभेदे च ।
**कोट्टवी** स्त्री० कोट्टं वाति वा—क गौरा० ङीष् । नग्नायां स्त्रियाम् मुक्तकेश्याञ्च ।
**कोट्टार** पु० कुट्ट—आरक् पृ० । कूपे पुष्करिण्याः पाटके च ।
**कोठ** पु० कुठि—अच् नि० नलोपः । मण्डलाकारे कुष्ठरोगे ।
**कोण** पु० कुण—करणे घञ् कर्त्तरि अच् वा । येन धनुराकृतिना काष्ठेन वीणादयो वाद्यन्ते तस्मिन् वादनसाधने काष्ठे, गृहादीनामेकदेशे, अश्रौ, अस्त्राणामग्रभागे, लगुड़े, मङ्गलग्रहे च ।
**कोणकुण** पु० कोणे मस्तकैकदेशे कुणति चलति कुण—क । मत्कुणे (छकुण) । [देशभेदे च ।
**कोदण्ड** न० कु—शब्दे विच् कोदण्डोऽस्य । धनुषि, भ्रलतायां,
**कोद्रव** पु० कु—विच् कोः द्रवति द्रु—अच् कर्म० (कोदो)धान्यभेदे ।
**कोप** पु० कुप—भावे घञ् । क्रोधे कामाप्राप्तिजे चित्तवृत्तिभेदे ।
**कोपनक** पु० कुप—युच् कोपनः स इव कायति कै—क । चोरनामकगन्धद्रव्ये ।

**कोपना** स्त्री० कुप—युच् टाप्। प्रकृत्या कोपवत्यां स्त्रियाम्। कोपशीले त्रि०। [कोपशालिनि त्रि०।

**कोपिन्** पु० अवश्यं कुप्यति णिनि। जलपारावते। अवश्य

**कोमल** न० कु—कलच् मुट् नि० गुणः। जले। मृदौ, अकठिने, मनोहरे च त्रि०। क्षीरिकायां स्त्री०। टाप्।

**कोमलवल्कली** स्त्री० कोमलं वल्कलं यस्याः। लवल्याम्।

**कोयष्टि** पु० कं जलं यष्टिरिवास्य पृ० अत ओत्वम्। जलकुक्कुभे पक्षिणि। संज्ञायां कन्। (टिटिर) टिट्टिभपक्षिणि।

**कोरक** पु० न०। कुर्य्यते कुर—वुन्। कलिकायाम्, मृणाले कक्कोले च "विकारकोरकाणीति" माघः। अमरे पुंलिङ्गोक्तिः प्रायिकाभिप्रायेण।

**कोरङ्गी** स्त्री० कुर—अङ्गच् ङीष्। सूक्ष्मलतायाम्। पिप्पल्यां च।

**कोरदूष** पु० कोरं दूषयति दुष—णिच् अण् (कोदो) धान्यभेदे।

**कोल** पु० कुल—संस्त्याने अच्। क्रोडे—शनिग्रहे, सूकरे, उडुपे (डोङ्गा), भुजान्तरे, भेलके, चित्रायाम् (चिता), अस्त्रभेदे, टङ्कद्वयमाने, जातिभेदे च। चव्ये, मरिचे, तोलकमाने, वदरफले च न०।

**कोलक** पु० कुल—ण्वुल्। अङ्कोठवृक्षे (कांकला) च। गन्धद्रव्यभेदे, मरिचे, कक्कोले च न०।

**कोलकन्द** पु० कोलमिव कन्दोऽस्य। महाकन्दभेदे।

**कोलदल** न० कोलं वदरीफलमिव दलमस्य। नखीनामगन्धद्रव्ये।

**कोलपुच्छ** पु० कोलस्य सूकरस्येव पुच्छोऽस्य। कङ्कपक्षिणि।

**कोलमूल** न० कोलस्य वदर्य्या इव मूलम्। पिप्पलीमूले।

**कोलम्बक** पु० कुल—अम्बच् संज्ञायां कन्। तन्त्रीभिन्ने अलावू प्रभृतिसमुदाये वीणायाः काये।

**कोलवल्ली** स्त्री० कोलस्य वल्ली तत्तुल्यरोमवत्त्वात्। गजपिप्पल्याम्।

**कोलशिम्बि** स्त्री० कोलपादाकारा शिम्बिरस्याः। "आलकुशीति" ख्यातायां सूकरपादिकायां लतायाम्।

**कोला** स्त्री० कुल–अच् टाप्। पिप्पल्याम्, चव्यभेषजे, कोलि-वृक्षे, देशभेदे च।

**कोलाविध्वंसिन्** त्रि० कोलां विध्वंसितुं वस्तुं शीलमस्य विशब्देन धातोरन्यार्थपरत्वम्। पर्वतवासिनि म्लेच्छभेदे, "एवं पालयतस्तस्य म्लेच्छाः पर्वतवासिनः। कोलाविध्वंसिनः प्राप्ता इति देवीभागवतम्। कोलाविध्वंसिनस्तथेति देवीमाहात्म्यम्। कोलाशब्दः कोलाहलवाचकस्तथा च कोलाहलेनैव राज्यविध्वंसं कुर्व्वन्ति ये। तेषु। [व्यक्ते शब्दे।

**कोलाहल** पु० कुल–घञ् तमाहलति अच्। बहुविधे दूरगामिन्य-

**कोलि** पु० स्त्री० कुल–इन्। बदर्य्याम् स्त्रीत्वपक्षे वा ङीप्।

**कोविद** पु० कुङ् शब्दे-विच् कोविदस्त वेत्ति विद क। पण्डिते विदुषि।

**कोविदार** पु० कुं भूमिं विदृणाति–वि+दृ–अण्। रक्तकाञ्चनारे (रक्तकाञ्चन)।

**कोश(ष)** पु० कुश(ष) घञ्। पानपात्रे, कुड्मले, खड्गपिधाने, (खाप) कृताकृतयोः स्वर्णरूप्ययोः, अर्थसञ्चये, पेश्याम् अण्डकोषे, शब्दादिसंग्रहे, योनौ, शिम्बायाम्, गुप्तगेहे, हिरण्यादिस्थापनगृहे मञ्जूषायाम् आच्छादके, पनसादि फलस्यान्तः स्थावयवभेदे च (कोया)।

**कोशफल** न० कोशेफलमस्य। कक्कोले, त्रपुष्याम् (शशा) स्त्री०टाप्।

**कोशल** पु० स्त्री० कुश–कलच् नि० गुणः। अयोध्यापुरे वा टाप्।

**कोशलात्मजा** स्त्री० कोशलानां राजा तद्राजस्य लुक् (६त०। रामचन्द्रस्य मातरि।

**कोश(ष)लिक** न० कोशं (षं) धनसञ्चयं लाति ला–क ततःभावे ठन्। उत्कोचे (घुष)।

**कोशाङ्ग** पु० न० कोशाकारमङ्गमस्य। बहुमूले तृणभेदे।

**कोशा(षा)तकी** स्त्री० कोश (ष) अतति ण्वुल् गौरा० ङीष्। (झिङ्गा) घटोल्यां तत्फलेऽपि हरीतक्यादित्वात् स्त्रीत्वम्।

**कोशिला** स्त्री० कोश+अस्त्यर्थे पिच्छादित्वात् इलच्। मुद्गपर्ण्याम्।

**कोशी(षी)** स्त्री० कुश (कुष) अच् गौरा० । चर्मपादुकायाम् धान्या- द्यग्रभागे च (शुङ्गा) ।

**कोष** पु० कोशवत् ।

**कोषचञ्चु** पु० कोषाकारा चञ्चुर्यस्य । सारसपक्षिणि ।

**कोषवृद्धि** स्त्री० कोषस्य धनस्य वृद्धिः । धनवृद्धौ कोषस्याण्डस्य वृद्धिर्यस्मिन् । रोगभेदे पु० ।

**कोषशायिका** स्त्री० कोषे शेते शी—ण्वुल् । क्षुरिकायाम् ।

**कोषिन्** पु० कोष+इनि । आम्रवृक्षे ।

**कोष्ठ** पु० कुष—थन् । गृहमध्ये, उदरमध्ये, धान्यादिस्थापने कुसूले च ( कुटी) आत्मीये त्रि० ।

**कोष्ण** न० ईषदुष्णम् कोः कादेशः । ईषदुष्णस्पर्शे । तद्वति त्रि० ।

**कोसल** पु० कौ पृथिव्यां सलति उत्कर्षं गच्छति अच् पृ० गुणः । सरयूतीरनिविष्टे देशे । अयोध्यायां स्त्री० । [ च ।

**कोहल** पु० कौ हलति स्पर्द्धते अच् पृ० गुणः । वाद्यभेदे मद्यभेदे

**कौक्कुटिक** पु० कुक्कुटीं मायां, पादपतनदेशञ्च पश्यति ठक् । दाम्भिके, कीटादिवधभीत्या पादयोरुपस्थानदृष्टौ संन्यासिनि च ।

**कौक्षेयक** कुक्षौ सततं बद्धः ढकञ् । तत्कुक्षिबद्धे खड्गे ।

**कौट** पु० कूटे अद्रिशृङ्गे भवः अञ् । कुटजे (कुरची) कूटयां प्राय- भवः । स्वतन्त्रे त्रि० ।

**कौटज** पु० कूटमेव कौटं तत्र जातः । कुटजे वृक्षे

**कौटतक्ष** पु० कर्म० । स्वाधीनकर्म्मोपजीविनि । [जीविनि व्याधे ।

**कौटिक** त्रि० कूटेन मृगबन्धनयन्त्रेण चरति ठक् । मांसविक्रय

**कौडविक** त्रि० कुडवः सम्भवति (स्वस्मिन् समावेशयति) तस्य वापः वपनयोग्यं क्षेत्रम् वा ठक् । कुडवधान्यस्थापनयोग्ये पात्रे, तद्वपनयोग्ये क्षेत्रे च ।

**कौणप** पु० कुणपः शव भक्ष्यत्वेन विद्यतेऽस्य अण् । राक्षसे ।

**कौतुक** न० कुतुक+प्रज्ञादित्वात् स्वार्थे अण् । अपूर्वदर्शनौत्सुक्ये ।

**कौतूहल** न० कुतूहल+प्रज्ञादित्वात् स्वार्थे ऽण् । कौतुके ।

कौद्रवीण त्रि० कोद्रवाणां भवनं क्षेत्रम् ख । (कोदो) धान्यभेद-भवनयोग्ये क्षेत्रे ।

कौन्ती स्त्री० कुन्तिषु देशेषु भवा अण् ङीप् । भङ्गगन्धिन्योषधौ ।

कौप त्रि० कूपे भवः अण् । "भूमौ खातोऽल्पविस्तारो गम्भीरो मण्डलाकृतिः । बद्धोऽबद्धः सकूपः स्यात्तदम्भः कौपमुच्यते" इत्युक्ते कूपोदके, स्त्रियां ङीप् "न विरसाः कौपीरपः पास्यतीति" साहि० द०।

कौपीन न० कूपे पतनमर्हति अकार्यार्थे नि० पापे, तद्वति त्रि०। गोप्यत्वात् पुरुषलिङ्गमपि कौपीनम् तदाच्छादकत्वात् । मेखलानिबद्धे वस्त्रखण्डे च "कौपीनवन्तः खलु भाग्यवन्त" इति पुराणम्

कौमार न० कुमारस्य भावः अञ् । "जातः कुं पृथिवीं प्रद्युम्नां मारयेत् स कुमारक" इत्युक्तलक्षणायां "कौमारं पञ्चमाब्दान्त"मित्युक्तावस्थायां "कौमारं यौवनं जरे"ति गीता ।

कौमारी स्त्री० कुमारस्य कार्त्तिकेयस्येयम् अण् । कार्त्तिकेयशक्तौ, अक्षतकुमारीगृहीतायाञ्च । अपूर्वपतिः कुमारी" सूपपन्नेति कौमारपूर्ववचने इत्यण् । भार्य्यायाम् ।

कौमुद पु० "कौ मोदन्ते जना यस्मिन् कौमुदस्तेन कीर्त्तित इत्युक्ते चिह्ने कार्त्तिकमासे

कौमुदी स्त्री० कुमुदानां रूपं हेतुरियम् अण् । ज्योत्स्नायां तत्सम्पर्के हि कुमुदप्रकाशः कविकल्पितः "कौ मोदन्ते जना यस्यां नानाभावैः परस्परम् । हृष्टास्तुष्टाः सुखापन्नास्तेन सा कौमुदी मता" इत्युक्तलक्षणायां कार्त्तिकपौर्णमास्याम् । आश्विनपौर्णमास्यामपि ।

कौमोदकी स्त्री० कोः पृथिव्याः पालकत्वात् मोदकः कुमोदको विष्णुः तस्येयम् अण् । विष्णुगदायाम् ।

कौरव पु० कुरोरयम् कच्छादित्वादण् । कुरुवंशपरम्परागते धृतराष्ट्रात्मजेषु पाण्डवेषु च उभयोरपि कुरुवंशजातत्वात् ।

कौरव्य पु० कुरु--ण्य । कुरुवंशजे क्षत्रिये । बहुषु लुक् । कुरवः ।

कौल त्रि० कुले सत्कुले भवः अण् । सत्कुलीने । तन्त्रोक्ते कुलाचाररते च ।

**कौलटिनेय** पु० स्त्री० भिक्षुक्याः सत्या अपत्यम् ढक् इनङादेशश्च । सत्या भिक्षुक्याः पुत्रे । स्त्रियां ङीप् ।

**कौलटेय** पु० स्त्री० कुलटायाः सत्याः असत्या वा अपत्यम् । ढक् । सत्याः असत्याश्च कुलटायाः पुत्रे । स्त्रियां ङीप् ।

**कौलटेर** पु० स्त्री० कुलटायाः असत्या अपत्यम् ढ्रक् । बन्धक्याः पुत्रे ।

**कौलिक** त्रि० कुलादागतः ठक् । कुलपरम्परागते । कुलेनाचरितः ठक् । कुलाचारे । कौलं कुलधर्मं प्रवर्त्तयति ठक् । कुलधर्मप्रवर्त्तके तन्त्रोक्ते शिवे, मन्वादौ च ।

**कौलीन** न० कौ पृथिव्यां लीनं यस्मात् अलुक् समा० । गुह्ये, परीवादे, दुष्कार्य्ये च । कुलीनस्य भावः कर्म्म वा । कुलीन कर्म्मणि प्राणिभिर्द्यूते च ।

**कौलेय** त्रि० कुले+भवः ढक् । सत्कुलोत्पन्ने ।

**कौलेयक** पु० कुले भवः श्वा ढकञ् । कुलागते कुक्कुरे ।

**कौवेरी** स्त्री० कुवेरस्येयम् अण् मातृभेदे, उत्तरदिशि च ।

**कौशल** न० कुशलस्य भावः अण् । क्रियायां नैपुण्ये ।

**कौशलिका** स्त्री० कुशलस्य पृच्छा ठक् । कुशलप्रश्ने । कुशलाय स्वमङ्गलाय नीयते ठञ् । उपायने उपढौकने ।

**कौशलेय** पु० कौशल्यायाः अपत्यम् ढक् यलोपः । रामचन्द्रे ।

**कौशल्या** स्त्री० कुशलैव चातुर्वर्ण्यादित्वात् ष्यञ् । राममातरि ।

**कौशाम्बी** स्त्री० कुशाम्बेन निर्वृत्ता नगरी अण् । वत्सपत्तने ।

**कौशिक** पु० कुशिकस्य गोत्रापत्यम् ऋष्यण् । विश्वामित्रे मुनौ । कोशे भवः ठक् । नकुले, व्यालग्राहे, पेचके, इन्द्रे गुग्गुलौ च । कोशेऽधिकृतः ठक् । कोशाध्यक्षे ।

**कौशिकफल** पु० कौशिकेन विश्वामित्रेण सृष्टं फलं यस्य । नारिकेले ।

**कौशिकाराति** पु० ६त० । पेचकशत्रौ काके तस्य पेचकशत्रुत्वं लोकप्रसिद्धम् ।

**कौशिकी** स्त्री० शरीरकोषाद्यत्तस्याः पार्वत्याः निःसृताम्बिका । कौशि-

कौशि समाख्यातेत्युक्तलक्षणायां दूर्वायाम् नदीभेदे कौशिकी चन्द्रभागा चेति स्मृतिः नाट्ये वृत्तिभेदे च ।

कौशेय त्रि० कोशादुत्थितम् ढक् । कृमिकोशादिजाते वस्त्रे ।

कौसल्या स्त्री० कोसलस्य राज्ञोऽपत्यं ञ्यङ् । राममातरि पाणिनिमते दन्त्यसकारमिदं स्यात् दन्त्यसकारयानयम् ।

कौसल्यायनि पु० कौसल्याया अपत्यं फिञ् । श्रीरामे ।

कौसुम्भ पु० कुसुम्भ+स्वार्थे अण् । अरण्यकुसुम्भे शाकभेदे च कुसुम्भेन रक्तम् अण् । कुसुम्भरागरञ्जिते वस्त्रादौ त्रि० ।

कौसृतिक त्रि० कौसृत्या चरति ठक् मायाकारके माययुक्ते ।

कौस्तुभ पु० कुं भूमिं स्तुभ्नाति कुस्तुभो जलधिः तत्र भवः अण् । विष्णोर्वक्षःस्थे कौस्तुभस्तु महातेजाः कोटिसूर्य्यसमप्रभः इत्युक्तलक्षणे मणिभेदे ।

कौस्तुभवक्षस् ई० कौस्तुभो वक्षसि यस्य । विष्णौ ।

क्नथ वधे वा० चु० उभ० पक्षे भ्वा० पर० सक० सेट् घटादि । क्नथयति-ते क्नथति अचिक्नथत्-त अक्नाथीत् ।

क्नस दीप्तौ कौटिल्ये च दिवा० पर० अक० सेट् घ० । क्नस्यति अक्नसीत्-अक्नासीत् क्नसयति-ते क्नसित्वा-क्नस्त्वा ।

क्नस दीप्तौ वा० चु० उभ० पक्षे भ्वा० क्नसयति-ते । क्नसति अचिक्नसत्-त अक्नसीत्-अक्नासीत् । क्नसित्वा-क्नस्त्वा ।

क्नू शब्दकरणे क्र्यादि० उभ० सक० सेट् प्वादि० । क्नुनाति क्नुनीते अक्नावीत् अक्नविष्ट ।

क्नूय दुर्गन्धे आर्द्रीभावे शब्दे च भ्वा० आत्म० अक० सेट् । क्नूयते अक्नूयिष्ट । क्नोपयति ते । क्नूतः ।

क्मर कौटिल्ये भ्वा० पर० अक० सेट् क्मरति अक्मारीत् ।

क्रकच पु० क्र इति कचति शब्दायते कच-शब्दे अच् । ग्रन्थिलाख्ये वृक्षे । करपत्रे (करात) पु० न० । ज्योतिषोक्ते योगभेदे च ।

क्रकचच्छद पु० क्रकच इव छदो यस्य । केतकीवृक्षे ।

क्रकचपाद्(द) क्रकचमिव पादो यस्य वा अन्त्यलोपः । ककलासे ।

क्रकचपृष्ठी स्त्री० क्रकच इव पृष्ठं यस्याः । (कट) मत्स्यभेदे ।

क्रकण पु० क्र इति कणति शब्दायते कण—अच् । (कयार) पक्षिणि ।

क्रकर पु० क्र इति शब्दं कर्त्तुं शीलमस्य ताच्छील्येऽच् (कयार) क्रकणे पक्षिणि ।

क्रतु पु० कृ—कतु । यूपसहिते, तद्रहिते, वा यज्ञे, संकल्पे, "यथाक्रतुरस्मिन् तथा प्रेत्य भवती"ति श्रुतिः । ब्रह्मणः कराज्जाते मरीच्याद्यन्तर्गते मुनिभेदे, विश्वदेवभेदे, इन्द्रियेषु च ।

क्रतुदोषनुद् पु० क्रतूनामिन्द्रियाणां दोषं नुदति क्विप् । प्राणायामे "दह्यन्ते ध्मायमानानां धातूनाञ्च यथा मलाः । प्राणायामैस्तथा दोषाः शाम्यन्तीन्द्रियगोचरा" इत्युक्तेस्तस्येन्द्रियदोषनाशकत्वम् ।

क्रतुद्विष् पु० क्रतुं द्वेष्टि द्विष—क्विप् । असुरे, नास्तिके च ।

क्रतुध्वंसिन् पु० क्रतुं दक्षयज्ञं ध्वंसयति ध्वन्स—णिच्—णिनि । शिवे ।

क्रतुभुज् पु० क्रतुं यज्ञे दत्तहविरादिकं भुङ्क्ते भुज—क्विप् । देवे ।

क्रतुराज पु० क्रतूनां राजा टच् स० । राजसूययज्ञे ।

क्रथ वधे भ्वा० पर० सक० सेट् घटा० । क्रथति अक्रथीत्—अक्राथीत् । क्रथयति—ते ।

क्रथ प्रतिहर्षे चु० उभय० सक० सेट् क्राथयति—ते अचिक्रथत्—त ।

क्रथन न० क्रथ वधे ल्युट् । मारणे छेदने च "राजन्योर्णांशुकूटक्रथनपटुरिति प्रबोधचन्द्रोदयः । संज्ञायां कन् उष्ट्रे ।

क्रद रोदने वैकल्ये अक० आह्वाने सक० भ्वा० पर० सेट् । क्रन्दति अक्रन्दीत् । [ क्रदयति ।

क्रद वैकल्ये भ्वा० आत्म० अक० सेट् घट दि० । क्रदते अक्रदिष्ट

क्रन्द निरन्तराह्वकरणे चुरा० सक० उभ० सेट् । प्रायेणाङ्पूर्वः आक्रन्दयति ते आचक्रन्दत् त ।

क्रन्दन न० क्रदि—भावे ल्युट् । शोकादिनाश्रुपातने । [क्रपयति ।

क्रप कृपायाम् भ्वा० अक० आत्म० सेट् घटादि । क्रपते अक्रपिष्ट

क्रम गतौ वा भ्वा० पर० दिवा० पर० सक० सेट् । क्रामति क्राम्यति
    अक्रमीत् क्रमित्वा क्रान्त्वा ।                [आक्रमणे, पादे च ।
क्रम पु० क्रम–घञ् । नियतपूर्वापरीभावरूपे विधाने, अनुक्रमे, शक्तौ,
क्रमि पु० क्रम–इन् । कृमिपदार्थे ।
क्र(क्रि)मिघ्न पु० क्रमिं हन्ति हन–क । विडङ्गे ।
क्रमिज क्रमेर्जायते जन–ड । अगुरुचन्दने । लाक्षायां स्त्री० ।
क्रमु पु० क्रम–उ । गुवाके (सुपारी) ।
क्रमुक पु० क्रम–उन् ततः संज्ञायां कन् । भद्रमुस्तके ब्रह्मदारुणि,
    गुवाके, पट्टिकालोध्रे च ।                [स्वार्थे ।
क्रमेल पु० क्रामति क्रम–विच् एलति चल् कर्म० । उष्ट्रे स्वार्थे कन् ।
क्रय पु० क्री–भावे अच् । मूल्यदानेन द्रव्यग्रहणे ।
क्रयलेख्य न० ६त० "गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम् ।
    पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते" इत्युक्तलक्षणे क्रयज्ञाप-
    कपत्रे (कवला) ।
क्रयविक्रयिक पु० क्रयविक्रयाभ्यां जीवति ठन् । वणिग्जने ।
क्रयिक पु० क्रयेण जीवति ठन् । वणिग्जने ।
क्रय्य त्रि० क्रयाय क्रेतारः क्रीणीयुरितिबुद्ध्या प्रसारितम् क्री-यत् क्रय्य-
    स्तदर्थे इति नि० । क्रयनिमित्तं हट्टे प्रसारिते द्रव्ये ।
क्रव्य न० क्लव–ण्यत् रलयोरेकत्वात् । आममांसे ।
क्रव्याद् पु० क्रव्यमत्ति अद–क्विप् । राक्षसे, व्याघ्रादौ च ।
क्रव्याद पु० क्रव्यमत्ति अद–अण् । राक्षसे, सिंहे, श्येने, शवमांसभ-
    क्षकेऽग्नौ "क्रव्यादोऽमृतभक्षण" इत्यग्निनामभेदे वचनात् ।
क्रशिमन् पु० कृशस्य भावः इमनिच् । कृशत्वे ।
क्रान्त पु० क्रम–क्त । अश्वे । आक्रान्ते अतिक्रान्ते व्याप्ते संक्रान्ते
    च त्रि० ।                [अतीतद्रष्टरि ।
क्रान्तदर्शिन् त्रि० क्रान्तमतीतं पश्यति णिनि । पण्डिते
क्रान्ति स्त्री० क्रम–क्तिन् । आक्रमणे, गतौ, खगोलमध्यस्थसूर्यग-
    त्यर्थं तिर्य्यग्गोलरेखायाञ्च "अयनादयनं यावत् कक्षा तिर्य्यक् तथ

धेरा। आनिर्दग्ध तथा पक्वो सदा पचेति भाषयन्" इत्युक्त-त्वात्तामपि।

क्रिमि पु० क्रम-इन् इत्वादेः। कृमिशब्दार्थे।

क्रिमिघ्न पु० क्रिमिं हन्ति हन-क। विडङ्गे। बोलपट्टाम् स्त्री० ङीप्।

क्रिया स्त्री० कृ-भावे श टाप्। आरम्भे, चेष्टायाम्, इन्द्रियव्यापारे, पाकादिशब्दप्रवृत्तिनिमित्ते फलव्यापाररूपे धात्वर्थे, निष्कृतौ, पूजायाम्, शिक्षायां, चिकित्सायां, करणे, गर्भाधानादिसंस्कारे, व्यवहारपादविशेषे च। "सर्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिया" इति स्मृतिः।

क्रियापाद: पु० कर्म०। व्यवहारे साक्षिलेख्यादिभिः प्रतिज्ञातार्थ-साधनरूपे तृतीये पादे "पूर्वपक्षः स्मृतः पूर्वो द्वितीयश्चोत्तरः स्मृतः। क्रियापादस्तृतीयः स्यादिति स्मृतिः।

क्रियाफल न० ६ त०। "उत्पत्तिराप्तिर्विकृतिः संस्कृतिश्च चतुर्विधम्। क्रियाफलं प्राङ्कुराद्यां" इत्युक्ते कर्मफले उत्पत्त्यादौ, यागादि-जन्ये पुण्यापुण्यादौ च।

क्रियायोग पु० योगार्थं क्रियमाणे देवाराधनादौ। "यस्तु वाङ्मनः-कायसंयोगः क्रियायोगः स उच्यते। प्रधानं कारणं योगो मुक्ते-र्मुनिवरोत्तम!। क्रियायोगस्तु योगस्य कारणं परमं मतम्" इति पुराणम्।

क्रियासमभिहार पु० सम्+अभि+हृ-घञ्। ६ त०। क्रियायाः पौनःपुन्ये। क्रियासमभिहारेण विराध्यन्तं क्षमेत कः इति माघः।

क्री क्रये (मूल्यदानेन द्रव्यग्रहणे) क्र्यादि० उभ० सक० अनिट्। क्रीणाति क्रीणीते अक्रैषीत् अक्रेष्ट।

क्रीड़ खेलने भ्वा० पर० अक० सेट्। क्रीडति अक्रीडीत्।

क्रीड़न न० क्रीड-ल्युट्। परीहासे, क्रीड़ायाञ्च।

क्रीड़ा स्त्री० क्रीड़-अ। परीहासे खेलने च।

क्रीत पु० क्री-क्त। द्वादशपुत्रान्तर्गते "क्रीणीयाद् यस्त्वपत्यार्थं मातृ-

पित्रोर्विक्रीतात् । स क्रीतकः सुतस्तासु" इत्युक्ते पुत्रभेदे । क्रतक्रये वस्तुमात्रे त्रि० ।

क्रीतानुशय पु० क्रीते अनुशयः इत्यादिना पश्चात्तापो यत्र । अष्टा-दशविवादेषु "क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते । क्रीतानुशय इत्येतद्विवादपदमुच्यते" इत्युक्ते विवादभेदे ।

क्रुड मज्जने दिवा० आ० अक० सेट् । क्रुड्यते । अक्रोडिष्ट ।

क्रुञ्च् पु० क्रुन्च–क्विप् । (कोंच) वकभेदे । जातित्वे टाप् क्रुञ्चा ।

क्रुञ्च पु० क्रुन्च कर्मणि घञ् । क्रौञ्चपर्वते । अच् टाप् । वीणाभेदे ।

क्रुध्(धा) स्त्री० क्रुध–सम्पदादित्वात् क्विप् वा टाप् । कामामर्षादिहे-तुके चित्तवृत्तिभेदे कोपे । [भृत्यमभिक्रुध्यति अक्रुधत् ।

क्रुध कोपे दिवा० पर० अक० सोपसर्गः सक० अनिट् । क्रुध्यति

क्रुन्च गतौ, वक्रणेऽनादरे च सक० पर० सेट् । क्रुञ्चति अक्रुञ्चीत् ।

क्रुन्थ क्लेशे क्लेशे च क्र्या० पर० अक० सेट् । क्रुथ्नाति अक्रुन्थीत् ।

क्रुश रोदने आक्रोशे च सक० भ्वा० पर० अनिट् । क्रोशति अक्रुक्षत् ।

क्रुष्ट क्रुश-भावे क्त । रोदने, रवे च । आङ्+कर्मणि क्त आहूते त्रि० ।

क्रूर त्रि० कृत–रक् धातोः क्रू । कठिने, निर्दये, परद्रोहकारिणि, नृशंसे, उष्णे च । रक्तकरवीरे श्येनखगे, कङ्कपक्षिणि ज्योति-षोक्ते रविमङ्गलमन्दराहुकेतुरूपे ग्रहे, पूर्व्वात्रयभरणीमघारूपे नक्षत्रे च पु० ।

क्रूरराविन् पु० क्रूरस्वरं रौति रु–णिनि । द्रोणकाके ।

क्रेय त्रि० क्री–यत् । क्रेतव्ये वस्तुमात्रे ।

क्रोड़ पु० न० क्रुड–घञ् । अङ्के (कोल) । रासभे शूकरे च पु० । अश्वानामुरसि भुजान्तरे च स्त्री० टाप् । वाराहीकन्दे पु०स्त्री०।

क्रोड़ाङ्घ्रि पु० क्रोड़े अङ्घ्रिर्यस्य । कच्छपे ।

क्रोध पु० क्रुध–घञ् । परापकाराय चित्तवृत्तिभेदे, परानिष्टाभिलाषे, अनिष्टविषयद्वेषहेतुके चित्तवृत्तिभेदे च ।

क्रोधज पु० क्रोधात् जायते जन–ड । मोहे "क्रोधात् भवति संमोह" इति गीता । पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् ।

वाग्दुष्टकस्तु पारुष्यं क्रोधजोऽपि गवोऽष्टक इत्युक्तो असुरभेदे च।

**क्रोधन** पु० क्रुध–ल्यु । कोपयुक्ते, कोपशीले, तन्त्रोक्ते षु अष्टसु भैरवेषु भैरवभेदे, षष्टिसम्वत्सरमध्ये ज्योतिषोक्ते "रोगोमरणबहुभिश्च विरोधोवहुसङ्कुलः। क्रोधने विषमं सर्वमित्युक्तफलके, वत्सरभेदे च ।

**क्रोश** पु० क्रुश–घञ्। रोदने आह्वाने च। अष्टसहस्रहस्तमाने (कोश) "क्रोशः सहस्रद्वितयेन तेषां" इति लीलावती । मतान्तरे चतुःसहस्रमाने । [क्रोष्टी ।

**क्रोष्टु** पु० क्रोशति क्रुश–तृन् । शृगाले । स्वार्थे कन् अत्रैवार्थे । स्त्रियां

**क्रोष्टुकपुच्छिका** स्त्री० क्रोष्टुकस्य पुच्छमिव पर्णान्यस्याः । (चाकुलिया) पृश्निपर्णाम् । [शृगाल्यां, चाकुल्याञ्च ।

**क्रोष्टी** स्त्री० क्रुश–तृन् तृज्वत् ङीप् । भूमिकुष्माण्डे, विदार्य्यां,

**क्रौञ्च** पु० क्रुञ्च+स्वार्थे अण् । (कोंचवक) वकभेदे कुररपक्षिणि, दैत्यभेदे, दधिसमुद्रेणावृते द्वीपभेदे पर्वतभेदे च ।

**क्रौञ्चदारण(क)** पु० क्रौञ्चं दैत्यं पर्वतं वा दारयति दृ–णिच् ण्वुल् युच् वा । कार्त्तिकेये स हि "क्रौञ्चे क्रौञ्चो हतो दैत्यः क्रौञ्चाद्रौ हेमकन्दरे । स्कन्देन युद्धा सुचिरं चिलमायो सुमायिना । स शैलस्तस्य दैत्यस्य ख्यातश्चितेण कर्मणा । केलुतामगमसस्य नाम्ना क्रौञ्चः स उच्यते इति पुराणम् ।

**क्रौञ्चादन** न० क्रौञ्चानां वकभेदानामदनं भक्ष्यम् । मृणाले, (चेंचु) चिञ्चोटके, पिप्पल्याञ्च । पद्मबीजे स्त्री० ।

**क्लथ** वधे वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् घटादि० । क्लथयति ते क्लथति अचिक्लथत् अक्लाथीत् अक्लथीत् ।

**क्लद** रोदने अक० आह्वाने सक० इदित् पर० भ्वा० सेट् । क्लन्दति अक्लन्दीत् । [क्लदयति ते ।

**क्लद** वैकल्ये दि० आत्म० अक० सेट् घटादि० । क्लदयते अक्लदिष्ट

**क्लद** रोदने भ्वा० उभ० इदित् अक० सेट् । क्लन्दति ते अक्लन्दीत् अक्लन्दिष्ट ।

क्लप अव्यक्तवाक्ये चुरा० उभ० अक० सेट् घटा० । क्लपयति-ते अचि-क्लिपत् त ।

क्लम ग्लानौ दिवा० पर० अक० सेट् । क्लाम्यति अक्लमीत् । क्लमि-त्वा-क्लान्त्वा । क्लान्तः । [क्लमित्वा क्लमितः ।

क्लम ग्लानौ भ्वा० पर० अक० सेट् । क्लामति अक्लमत् अक्लमीत् ।

क्लम पु० क्लम-घञ् अवृद्धिः । आयासे, श्रमे च ।

क्लमथ पु० क्लम-अथच् । आयासे । [विट्-क्लवयति क्लवित्वा । क्लूत्वा ।

क्लव भये दिवा० आत्म० अक० सेट् घटादि० । क्लव्यते अक्ल-

क्लान्त त्रि० क्लम-क्त । श्रमार्त्ते । [अक्लेदीत्-अक्लैदीत् ।

क्लिद आर्द्रीभावे दिवा० पर० अक० सेट् । क्लिद्यति । अक्लिदत्-

क्लिद रोदने इदित् भ्वा० उभ० अक० सेट् । क्लिन्दति अक्लिन्दीत् ।

क्लिन्न त्रि० क्लिद-क्त । आर्द्रे ।

क्लिश उपतापे दि० आत्म० अक० सेट् । क्लिश्यते । अक्लेशिष्ट क्लि-शित्वा । क्लिशितः-क्लिष्टः ।

क्लिश विघाते क्र्या० पर-सक० वेट् । क्लिश्नाति अक्लेशीत्-अक्लिक्षत् ।

क्लिशित त्रि० क्लिश-उपतापे क्त । क्लेशयुक्ते वा । इडभावे क्लिष्टोऽप्यत्र ।

क्लीतक न० क्लीव-क्विप् नि० वलोपः क्लीं तकति हसते अच् मधुके (यष्टिमधु) ।

क्लीतकिका स्त्री० क्लीतक कयोऽस्त्यस्याः ठन् अत्वम् । नील्यामोषधौ ।

क्लीव(ब) मदे अप्रागल्भ्ये च भ्वा० आत्म० अक० सेट् । क्लीव(ब)ते अक्लीबि(वि)ष्ट । [निरुत्साहे च ।

क्लीव(ब) पु० क्लीव(ब)-अच् । नपुंसके, विक्रमहीने, धर्म्मत्यादौ,

क्लु गतौ भ्वा० आत्म० सक० सेट् । क्लवते अक्लविष्ट ।

क्लेद पु० क्लिद-घञ् । पूतीभावे, चन्द्रे च ।

क्लेश बधे उपतापे भ्वा० आत्म० सक० सेट् । क्लेशते अक्लेशिष्ट ।

क्लेश पु० क्लिश-घञ् । दुःखे, रोगादौ, योगशास्त्रोक्तेषु अविद्या-स्मितादिषु पञ्चसु । [कौन्तेय" इति गीता ।

क्लैव्य(ब्य) न० क्लीव(ब) भावे-ष्यञ् । निर्वीर्य्यत्वे "मा क्लैव्यं गच्छ

क्लोमन् न० क्लुङ् गतौ मनिन् । "अधस्तु दक्षिणे भागे हृदयात्
    क्लोम तिष्ठति । जलवाहि शिराणूलं तृष्णाच्छादनं मतं
    मूर्ध्नि" इत्युक्ते वाङ्मोमध्ये स्थानभेदे । [मेति धात्वर्थ ।
क्व अव्य० किम्+अ कादेशः । कुत्रेत्यर्थे चिन्तृमयोः क्वचित् क्वच-
क्वण शब्दे भ्वा० पर० अक० सेट् । क्वणति अक्वाणीत् । अक्वणीत्
क्वण पु० क्वण-अप् । वीणायाः शब्दे, अनिवावे च ।
क्वथ निष्पचने भ्वा० पर० सक० सेट् । क्वथति अक्वथीत् । [च ।
क्वथित त्रि० क्वथ-क्त । अतिशयपक्वे व्यञ्जनादौ, दशमूलक्वाथादौ ।
क्वाथ पु० क्वथ-घञ् । दुःखे, द्रव्यमात्रस्यातिशये पाके ।
क्वाथोद्भव न० क्वाथादुद्भवति अच् । तुत्थाञ्जने ।
क्वेल चालने गतौ च भ्वा० पर० सक० सेट् । क्वेलति अक्वेलीत् । क्वेल-
    यति अचिक्वेलत् । [यञ्जत् त ।
क्षज कृच्छ्रजीवने इदित् चुरा० उभ० अक० सेट् । क्षञ्जयति ते अच-
क्षज वधे भ्वा० आ० सक० सेट् घटा० । क्षजते अक्षजिष्ट । क्षजयति
क्षञ्ज गतौ दाने च भ्वा० आत्म० इदित् सक० सेट् । क्षञ्जते अक्षञ्जिष्ट
क्षण वधे तना० उभ० सक० सेट् । क्षणोति क्षणुते । अक्षणीत्
    अक्षणिष्ट ।
क्षण पु० क्षणोति दुःखम् क्षण-अच् उत्सवे, अवसरे, मध्ये, दशपल-
    परिमिते काले, निमेषक्रियाचतुर्थभागे च ।
क्षणद पु० क्षणं यात्रिकादिसङ्कुल्लतत्रं वा ददाति दा-क । गणके ।
    जले न० । रात्रौ स्त्री० ।
क्षणप्रभा स्त्री० क्षणं व्याप्य प्रभा यस्याः । विद्युति ।
क्षणभङ्ग पु० क्षणात् भङ्गो यस्य उत्पन्नमात्रे, सर्वेषां भाववतां प्रति-
    क्षणमवयवैश्चलक्षणव्यापादकस्यावयवभङ्गस्य स्वीकारो यस्मिन् मते
    तादृशे बौद्धादीनां मते । [कालमात्रे वस्तुमात्रे ।
क्षणभङ्गुर त्रि० क्षणात् भज्यते भञ्ज-कर्मकर्त्तरि घुरच् क्षणे-
क्षणिक त्रि० क्षणं व्याप्नोति ठञ् । एकक्षणमात्रस्थायिनि पदार्थे ।
    येषां प्रथमक्षणे उत्पत्तिः द्वितीयक्षणे स्थितिस्तृतीयक्षणे नाश इति

ते क्षणिका यथा बुद्ध्यादय इति तार्किकाः । कार्य्यकारणसमूहानां सर्व्वपदार्थानामाद्यक्षणे उत्पत्तिर्द्वितीयक्षणे नाश इति बौद्धाः "यत् सत्तत्क्षणिक"मित्युक्ते । [क्षणयुक्ते त्रि० ।

क्षत न० क्षण–भावे क्त । क्षतद्रक्तपूयादौ व्रणे । कर्म्मणि क्त ।

क्षतघ्न पु० क्षतं हन्ति हन–क । (कुक्कुरोधा) क्षुपभेदे । लाक्षायाञ्च ।

क्षतज न० क्षतात् जायते जन–ड । रुधिरे ।

क्षति स्त्री० क्षण–क्तिन् । हानौ, अपचये क्षये च ।

क्षत्त पु० क्षद–तृच् । शूद्रात् क्षत्रियायामुत्पन्ने सङ्कीर्णवर्णे, प्रतीहारे, सारथौ, भुजिष्यापुत्रे, नियुक्ते, वेधसि च ।

क्षत्र पु० क्षण–क्विप् क्षत् ततस्त्रायते त्रै–क । क्षत्रिये "क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्द इति रघुः ।

क्षत्रबन्धु पु० क्षत्रस्य बन्धुरेव तत्कर्म्मकर्तृत्वाभावात् न तत्कर्त्ता । क्षत्रकार्य्याक्षमे निन्द्ये क्षत्रिये ।

क्षत्रिय पु० क्षत्रस्यापत्यं घ । क्षत्रजाते राजन्ये "क्षतत्रं सेवते कर्म्म वेदाध्ययनसंयुतम् । दानादानबहिर्भूतः स वै क्षत्रिय उच्यते इत्युक्ते वर्णभेदे ।

क्षद संवरणे भौवा० आत्म० सक० अनिट् । क्षदते अक्षत्त ।

क्षप क्षेपे अद० चुरा० उभ० सक० सेट् । क्षपयति ते अचक्षपत् त ।

क्षप सहने चुरा० इदित् उभ० सक० सेट् । क्षम्पयति ते अचक्षम्पत् त ।

क्षप प्रेरणे चुरा० उभ० सक० सेट् । क्षपयति ते अचिक्षपत् त ।

क्षपणक पु० क्षपयति विषयरागं क्षप–युच् संज्ञायां कन् । बौद्धसंन्यासिनि । एकःक्षपणक ! शाकाहर्त्तेत्युद्भटः ।

क्षपा स्त्री० क्षपयति चेष्टाम् क्षै–णिच् पुक् च अच् । रात्रौ ।

क्षपाकर पु० क्षपायां रात्रौ करो दीधितिर्यस्य । चन्द्रे स हि रात्रौ स्वयं तेजसा दीप्यते ।

क्षपाट पु० क्षपायामटति अट–अच् । राक्षसे "ततः क्षपाटैः पृथुपिङ्गलाक्षैरिति भट्टिः । [क्षान्तः ।

क्षम सहने भ्वादि० आत्म० सक० वेट् क्षमते अक्षमिष्ट अक्षंस्त

क्षम सहने दिवा० पर० सक० वेट् शमादि० । क्षाम्यति "कामं क्षाम्यतु यः क्षमीति माघः । अक्षमीत् ।

क्षम न० क्षम—अच् । युक्ते । शक्ते, हिते, क्षमायुक्ते च त्रि० ।

क्षमता स्त्री० क्षम+तल् । योग्यतायां, शब्दनिष्ठे अर्थप्रकाशन सामर्थ्ये च "क्षमता च त्रिरूपिणी"ति मीमांसा ।

क्षमा स्त्री० क्षम—अङ् । तितिक्षायाम्, "बाह्ये चाध्यात्मिके चैव दुःखे चोत्पातिके क्वचित् । न कुप्यति न वा हन्ति सा क्षमा परिकीर्त्तिता," "आक्रुष्टोऽभिहतो यापि नाक्रोशेन च हन्ति वा । अदुष्टैर्वाङ्मनः कायैस्तितिक्षोः सा क्षमा मते"ति योक्तलक्षणायाम् चित्तवृत्तौ, भूमौ च ।

क्षमिन् त्रि० क्षम—घिनुण् ह्रस्वाभावः । क्षमावति । कामं क्षाम्यतु यः क्षमीति माघः ।

क्षय पु० क्षि—अच् । नाशे, ह्रासे, अपचये, कासरोगभेदे गृहे, विरामे, हिंसायाम् ६० वर्षमध्ये "देशभङ्गश्च दुर्भिक्षं क्षये संक्षीयते प्रजा" इत्युक्तफलके वत्सरभेदे, रविसंक्रान्तिद्वययुतशुक्लप्रतिपदादिके अमावास्यान्ते मासे "द्विसंक्रान्तमासः क्षयः कार्त्तिकादौ" । "सौराद्यदा चन्द्रमसो गरीयान् मासो द्विसंक्रान्तिरसौ क्षयाख्य" इत्युक्ते मासे च ।

क्षयथु पु० क्षि—अथुच् (कासरोगे) ।

क्षयनाशिनी स्त्री० क्षयं कासं नाशयति नश—णिच—णिनि । जीवन्तीवृक्षे । [ कृष्णपक्षे ।

क्षयपक्ष पु० क्षयस्य (चन्द्रस्य क्षयार्थः) पक्षः अश्वघासादिवत् समा० ।

क्षर संचलने भ्वा० पर० सक० सेट् । क्षरति अक्षारीत् ।

क्षर पु० क्षर—अच् । मेघे । "कार्य्यं कारणरूपस्तु नश्वरं क्षरमुच्यते" इत्युक्ते नश्वरे त्रि० । "क्षरः सर्वाणि भूतानी"ति गीता । जले न० । [ ते क्षलति अचिक्षलत् त अक्षालीत् ।

क्षल शोधने वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । क्षालयति

क्षव पु० क्षु—अप् । क्षुते, ( हाँचि ) राजिकाभेदे च ।

क्षीर न० घस्–क्तो–घस्यादित्वात् किच् तामीरयति ईर–अच्। दुग्धे, जले च

क्षीरकण्ठ पु० क्षीरं कण्ठे यस्य। स्तनन्धये बालके।

क्षीरकन्द पु० क्षीरमिव कन्दोऽस्य। क्षीरविदार्याम्, क्षीरपत्राख्ये।

क्षीरकाण्डक पु० क्षीरान्वितं काण्डं यस्य कप्। स्नुहीवृक्षे, अर्कवृक्षे च।

क्षीरदल पु० क्षीरं दले यस्य। अर्कवृक्षे।

क्षीरनाश पु० क्षीरं नाशयति नश–णिच्–अण्। शाखोटवृक्षे (सि-होड़ा) तत्पत्रादिनिर्यासयोगेन शीघ्रमेव दुग्धं दधिवत् घनीभवतीति तस्य दुग्धनाशकता।

क्षीरपर्णी क्षीरं पर्णे यस्याः ङीप् अर्कवृक्षे।

क्षीरवल्ली स्त्री० क्षीरा क्षीरवती वल्ली। क्षीरविदार्याम्।
स्वार्थे कन् अपोह्रस्वः क्षीरवल्लिका अत्रैवार्थे।

क्षीरविकृति स्त्री० ६त० "दध्नासह पयः पक्वं यत् स्यात् सा दधि-कूर्चिकेत्युक्तायाम्। (क्षीरसा) दधिकूर्चिकायाम्।

क्षीरवृक्ष पु० क्षीरप्रधानो वृक्षः। उदुम्बरे राजादन्याम्।

क्षीरशर पु० क्षीरं शृणाति शॄ–अच्। (छाना) आमिक्षायाम्।

क्षीरशाक न० "अपक्वमेव यन्नष्टं क्षीरशाकं हि तत् पयः" इत्युक्ते नष्टे दुग्धे राजादने च। भूकुष्माण्डे स्त्री०।

क्षीरशुक्ल पु० क्षीरमिव शुक्लः। शृङ्गाटके (पानिफल)।

क्षीरसार पु० क्षीरस्य सारः। नवनीते "क्षीरसारमपनीय" इत्युद्भटः (छाना) आमिक्षायाञ्च। [शर्कराफेने।

क्षीरहिण्डीर पु० ६त०। दुग्धफेने। क्षीरमिव हिण्डीरः (फेणी)

क्षीराब्धि पु० क्षीरस्य दुग्धरसस्याब्धिः। क्षीरसमुद्रे एवं क्षीरसागरा-दयोऽप्यत्र।

क्षीराब्धिज पु० क्षीराब्धौ जायते जन–ड। चन्द्रे। लक्ष्म्यां स्त्री०।

क्षीरावी स्त्री० क्षीरमवति अव–अण् ङीप्। दुग्धिकायाम् (दुधी)।

क्षीरिका स्त्री० क्षीर+अस्त्यर्थे ठन् (खीरा) राजादन्याम्।

क्षीरिणी स्त्री० क्षीर+अस्त्यर्थे इनि। तिक्तदुग्धायां पीतदुग्धायां च

क्षीरलतायाम् । [राजादने, सोमलतायाम्, स्थालीहर्क च ।

क्षीरिन् पु० क्षीर+इनि । क्षुद्राम् वटे, प्लक्षे, उदुम्बरे, अर्कवृक्षे,

क्षीरिवृक्ष पु० कर्म० । क्षीरयुक्तेषु न्यग्रोधाश्वत्थोदुम्बरपारिषप्लक्षा-

क्षेषु पञ्चसु वृक्षेषु ।

क्षीरोद पु० क्षीरमुदकमस्य उदकस्योदादेशः । क्षीरसमुद्रे ।

क्षु क्षुतौ अदा० पर० अक० सेट् । क्षौति अक्षावीत् चुक्षाव । क्षुतः ।

क्षुत्वा । चुक्षुः । [ड्डुर्गन्ध" इति माधः ।

क्षुस त्रि० क्षुद–क्त । अभ्यस्ते, विकृते च "अभीक्ष्णमक्षुस्तयाति–

क्षुत् स्त्री० क्षु-सम्पदा० क्विप् तुक् च । (हांचि) क्षुते ।

क्षुत न० क्षु–क्त । नासातः वायुनिःसरणजे शब्दे । (हांचि) ।

क्षुद पेषणे रुधा० उभ० सक० सेट् । क्षुणत्ति क्षुन्ते । अक्षुदत् अ-

क्षोदीत् अक्षोदिष्ट ।

क्षुद्र त्रि०क्षुद–रक् । नीचे, कृपणे, क्रूरे, दरिद्रे, अल्पे, मूषिकाविषिच

क्षुद्रकण्टकी स्त्री० क्षुद्रं कण्टकं यस्याः ङीप् । वृहत्याम् ।

क्षुद्रकण्टिका क्षुद्रं कण्टकं यस्याः टाप् अत इत्वम् । कण्टका-

रिकालतायाम् ।

क्षुद्रकम्बु पु० कर्म० । शम्बूके ।

क्षुद्रघण्टिका स्त्री०घण्टेव कन् घण्टिका कर्म० । किङ्किण्याम्(घुङ्गुर)

क्षुद्रजन्तु पु० कर्म० । "क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव वा । शतं

वा प्रसृतौ येषां केचिदा नकुलादपि" इत्युक्ते स्वल्पे सत्त्वे ।

क्षुद्रजम्बू(म्बु) स्त्री० कर्म० । भूमिजम्ब्वाम् ।

क्षुद्रजीरक न० कर्म० । कणाजीरके, सुगन्धे च ।

क्षुद्रधात्री स्त्री० कर्म० । कर्कटवृक्षे ।

क्षुद्रधान्य न० कर्म० । कङ्गुप्रभृतौ तृणधान्ये ।

क्षुद्रपत्रा स्त्री०क्षुद्रं पत्रं यस्याः टाप् । चाङ्गेर्याम् (चुकोपालङ्ग) ।

ङीप् । वचायाम् ।

क्षुद्रपनस पु० कर्म० । लकुचे (मांदार) ।

क्षुद्रफल पु० क्षुद्रं फलमस्य । जीवनवृक्षे । कण्टकार्य्याम् अग्निदमन्यां, भूमिजम्ब्वाञ्च स्त्री० टाप् ।

क्षुद्रभण्टाकी स्त्री० कर्म० । बृहत्याम् ।

क्षुद्रमुस्ता स्त्री० कर्म० कसेरुकन्दे ।

क्षुद्रवार्त्ताकिनी स्त्री० कर्म० । कण्टकार्य्याम् ।

क्षुद्रवार्त्ताकी स्त्री० कर्म० । बृहत्याम् ।

क्षुद्रशङ्ख पु० कर्म० । शम्बूके ।

क्षुद्रशीर्ष पु० क्षुद्रं शीर्षमस्य । मयूरशिखावृक्षे, स्वल्पशीर्षवति त्रि० ।

क्षुद्रशुक्ति स्त्री० कर्म० । जलशुक्तिकायाम् । स्वार्थे कन् तत्रैवार्थे ।

क्षुद्रश्वास पु० कर्म० । स्वल्पश्वासरोगे । [मार्जारगन्धायाञ्च ।

क्षुद्रसहा स्त्री० सह–अच् क्षुद्रस्य सहा ६त० । मुद्गपर्ण्याम्

क्षुद्रसुवर्ण न० कर्म० । पित्तले । [तुले टाप् । अत्रैवार्थे ।

क्षुद्रहिङ्गुली स्त्री० कर्म० । कण्टकार्य्याम् । स्वार्थे कन् अत्रो

क्षुद्रा स्त्री० क्षुद–रक् । वेश्यायाम्, कण्टकार्य्याम्, नट्याम्, मक्षिकायाम्, चाङ्गेर्य्याम्, हिंसायां, गवेधुकायाञ्च (गडगडेधान) ।

क्षुद्राग्निमन्थ पु० कर्म० (छोटगणिआरी) स्वल्पगणिकारिकायाम् ।

क्षुद्राम्लपनस पु० अम्लः अम्लरसः पनसः कर्म० । लकुचे (डेओ) (मान्दार) । [स्वार्थे कन् तत्रैवार्थे ।

क्षुद्राम्ला स्त्री० अम्ला अम्लरसा कर्म० । चाङ्गेर्य्याम् ( चुकापालङ्क )

क्षुद्रेर्वारु पु० कर्म० । गोपालकर्कट्याम् ।

क्षुद्रोडुम्बरिका स्त्री० कर्म० । काकोडुम्बरिकायाम् ।

क्षुध बुभुक्षायां दिवा० पर० सक० अनिट् । क्षुध्यति अक्षुधत् ।

क्षुध्(धा) स्त्री० क्षुध–सम्पदादित्वात् क्विप् वा टाप् । भोजनेच्छायाम् ।

क्षुप पु० क्षु–पक् । ह्रस्वशाखाशिफायुक्ते शाखोटादिद्रुमे, द्वारकासन्निकृष्टे पर्वतभेदे, राजन्यभेदे च ।

क्षुब्ध पु० क्षुभ–क्त नि० । मन्थनदण्डे । क्षुभिते त्रि० ।

क्षुभ सञ्चलने भ्वा० आत्म० अक० सेट् । क्षोभते अक्षुभत् अक्षोभिष्ट क्षुब्धः । क्षुभितः ।

क्षुभ अङ्गचालने वा दिवा० क्र्या० अक० सेट् । क्षुभ्यति क्षुभ्नाति अक्षोभात् । क्षुभितः ।

क्षुभित त्रि० क्षुभ–क्त । आलोडिते, व्याकुले, भीते च ।

क्षुमा स्त्री० क्षु–मक् । (मसिना) (तिसी) अतस्याम् ।

क्षुर विलेखने तुदा० पर० सक० सेट् । क्षुरति अक्षोरीत् ।

क्षुर पु० क्षुर–क क्षु–रक् वा । नापितास्त्रे पश्वादीनां शफे, (क्षुर) कोकिलाक्षे, गोक्षुरे, मञ्चादिपादकीलके, वाणे च ।

क्षुरक पु० क्षुर–क्वुन् । गोक्षुरे, (गोखुरी) कोकिलाक्षे, तिलकवृक्षे च ।

क्षुर(रि)कर्म्मन् न० क्षुरस्य क्षुरिणो वा नापितस्य कर्म० । क्षौरे नख-केशादिकर्त्तने "क्षुर(रि)कर्म न कुर्वीत जन्ममासे च जन्मभे" इति स्मृतिः । [द्वयोरप्यस्य ।

क्षुरधान न० क्षुरो धीयतेऽस्मिन् नापितास्त्राधारे (भांड़) क्षुरभाण्डा-

क्षुरधार पु० क्षुराणां धारेव खरपत्रधारा यत्र । नरकभेदे ।

क्षुरपत्र पु० क्षुर इव पत्रमस्य । वाणे, क्षुरतुल्यपर्णयुक्ते शरतृणादौ त्रि०

क्षुरपत्रिका पु० क्षुर इव पत्रं यस्याः । पालङ्क्याके ।

क्षु(खु)रप्र पु० क्षुरः (खुरः) इव प्रणाति छिनत्ति प्र–क (खुरपी) इति ख्याते घासच्छेदनास्त्रे, तत्तुल्याग्रफलकेऽशरे च ।

क्षुरमर्द्दिन् पु० क्षुरं मृद्नाति घर्षयति मृद्–णिनि नापिते ।

क्षुरमुण्डिन् पु० क्षुरेण मुण्डयति मुण्ड–णिनि इत० । नापिते ।

क्षुराङ्ग पु० क्षुर इवाङ्गमस्य । गोक्षुरे (गोखुरी) ।

क्षुरिणी स्त्री० क्षुर+अस्त्यर्थे इनि ङीप् । वराहक्रान्तायाम् नापितभार्य्यायाञ्च ।

क्षुरिन् पु० क्षुर+इनि । नापिते, पशौ च ।

क्षु(खु)ल्ल त्रि० क्षुद(खु) क्विप् क्षुद्(खुत्) तां लाति ला–क । अल्पे, लघौ, कनिष्ठे च । [अल्पे च ।

क्षुल्लक त्रि० क्षुधा लक्यते लक–आस्वादाने कर्मार्थे क । नीचे, पामरे,

क्षेत्र न० क्षि–ष्ट्रन् । देहे, अन्तःकरणे, इन्द्रिये, "इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः । इच्छा द्वेषः सुखं दुःखं संघातश्चेतना

श्रुतिः। एतत् क्षेत्र”मिति गीतोक्ते इन्द्रियादिसंघाते, शस्याद्युत्पत्तिस्थाने केदारे, सिद्धस्थाने, कलत्रे मेषादिराशिषु च।

क्षेत्रज पु० क्षेत्रे जायते जन–ड। “यस्तल्पजः प्रमीतस्य क्लीवस्य व्याधितस्य वा। स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजो मत” इत्युक्ते द्वादशविध पुत्रमध्ये पुत्रभेदे। क्षेत्रजातमात्रे त्रि०। गोक्षिकायाम् श्वेतकण्टकार्य्याञ्च स्त्री०।

क्षेत्रज्ञ पु० क्षेत्रं देहमात्मत्वेन जानाति ज्ञा–क। “क्षेत्राण्याहुः शरीराणि तेषाञ्चैव यथासुखम्। आत्मानं वेत्ति संयोगादतः क्षेत्रज्ञ उच्यते” इत्युक्ते जीवात्मनि।

क्षेत्रपति पु० ६त०। “रुद्रं क्षेत्रपतिं प्राहुः केचिदग्निमथापरे। स्वतन्त्र एव वा कश्चित् क्षेत्रस्य पतिरुच्यते” इत्युक्तेषु रुद्रादिषु, क्षेत्रस्वामिमात्रे च क्षेत्रपालादयोऽप्यत्र।

क्षेत्ररुहा स्त्री० क्षेत्रे रोहति रुह–अच्। वालुकर्क्याम्।

क्षेत्राजीव पु० क्षेत्रं शस्योत्पादनभूमिराजीवो यस्य। कृषके।

क्षेत्रिक त्रि० क्षेत्र+अस्त्यर्थे ठन्। क्षेत्रस्वामिनि।

क्षेत्रिन् त्रि० क्षेत्र+अस्त्यर्थे इनि। क्षेत्रस्वामिनि।

क्षेत्रिय पु० परक्षेत्रे देहान्तरे चिकित्स्यः परक्षेत्रः+घ नि०। देहान्तरचिकित्सनीये असाध्ये रोगे, “दण्डोऽयं क्षेत्रियो येन मय्यपाती”ति भट्टिः परक्षेत्रोत्पन्ने क्षेत्रजपुत्रादौ च क्षेत्रजातमात्रे

क्षेप पु० क्षिप–घञ्। विक्षेपे, निन्दायाम्, गर्व्वे प्रेरणे, लङ्घने, विलम्बे, हेलायाञ्च।

क्षेपक त्रि० क्षिप–ण्वुल्। क्षेपकर्त्तरि। घञ् स्वार्थे कन्। ग्रन्थादौ ग्रन्थकर्त्तुरन्येन क्षिप्तपाठे, गुच्छे च। लीलावती प्रसिद्धे कुट्टके संयोजनीये अङ्कविशेषे च।

क्षेपण न० क्षिप–ल्युट्। प्रेरणे, “च आयुषः क्षेपणार्थञ्च दातव्यं स्त्रीधनं सदे”ति स्मृतिः।

क्षेपणिका स्त्री० क्षिप्यते चाल्यतेऽनया क्षिप–अनि। नौका चालनदण्डे, (डाड़) जालभेदे च (क्षेपला)।

क्षेपणीय क्षिप-अनीयर्। भिन्दिपालेऽस्त्रे, पाषाणादिके वा क्ष्याक्षेप। क्षेप्यमात्रे त्रि०।

क्षेपिष्ठ त्रि० अयमेषामतिशयेन क्षिप्रः इष्ठन्। अतिशीघ्र गामिनि, "वायुर्वै क्षेपिष्ठा देवते"ति श्रुतिः।

क्षेम न० क्षि-मन्। चोरकाख्यगन्धद्रव्ये। लब्धवस्तुनो रक्षणे पु०न०। कुशले न०। तद्वति त्रि०। मुक्तौ न०।

क्षेमफला स्त्री० क्षेमाय फलान्यस्याः। उडुम्बरद्रुमे।

क्षेव सेवने भ्वा० पर० सक० सेट्। क्षेवति अक्षेवीत्।

क्षै क्षये भ्वा० पर० अक० अनिट्, क्षायति अक्षासीत्।

क्षैत्र न० क्षेत्राणां समूहः भिक्षादित्वात् अञ्। क्षेत्रसमुदाये।

क्षैरेय त्रि० क्षीरे संस्कृत ढञ्। क्षीरसंस्कृते अन्नादौ। यवाग्वाम् स्त्री० ङीप्। [क्षौणिरप्यत्र।

क्षोणि(णी) स्त्री० क्षु-नि वा ङीप्। धरायाम्। इ० नि०

क्षोद पु० क्षुद-घञ्। रजसि, चूर्णे, पेषणे च।

क्षोदक्षम त्रि० क्षोदं क्षमते अच्। विचारसहे तत्त्वनिर्णयार्थं विचारणीये अप्रसक्तदूषणे वाक्ये।

क्षोदिष्ठ त्रि० अयमेषामतिशयेन क्षुद्रः इष्ठन् क्षोदादेशः। क्षुद्रतरे।

क्षोभ पु० क्षुभ-घञ्। व्यर्थमितस्ततः सञ्चलने, चित्तस्य भयादिहेतुके स्वकार्य्यासामर्थ्ये च।

क्षोभण पु० क्षोभयति क्षुभ-णिच्-ल्यु। कामबाणभेदे। सांख्याद्युक्ते प्रकृतिप्रेरके पुरुषे, ईश्वरे च।

क्षौद्र न० क्षुद्राभिः सरघाभिर्निर्वृत्तम्। अण्। 'मक्षिका कपिलाः सूक्ष्माः क्षुद्राख्यास्तत्कृतं मधु। मुनिभिः क्षौद्रमित्युक्तमित्युक्त मधुनि।

क्षौद्रज न० क्षौद्राज्जायते जन-ड। मधुजाते (मोम) सिक्थके

क्षौद्रधातु पु० कर्म०। माक्षिके मधुनि।

क्षौद्रप्रिय पु० क्षौद्रमिव प्रियः सादृश्यात्। जलमधुकद्रुमे हेम०। मधुप्रिये त्रि०।

क्षौद्रय न० क्षुद्राभिः कृतम् ढक् । सिक्थके । (मोम) ।

क्षौम पु०न० क्षुमाया अतस्याविकारः अण् । अतसीवल्कलजाते वस्त्रे, दुकूले, शणजे वस्त्रे च । क्षु-मन् प्रज्ञादित्वादण् अट्टालिकायाम् ।

क्षौमी स्त्री० क्षुमैव प्रज्ञाद्यण् । अतस्याम् क्षुमानिर्मितकन्थायाञ्च ।

क्षौर न० क्षुरेण निर्वृत्तम् अण् । क्षुरनिष्पाद्ये वपनादौ ।

क्ष्णु तेजने अदा०पर०सक०सेट् । क्ष्णौति अक्ष्णावीत् ।

क्ष्मा स्त्री० क्षमते भारं क्षम-अच् उपधालोपश्च । धरायाम् ।

क्ष्माभृत् पु० क्ष्मां पृथिवीं बिभर्त्ति पालयति वा भृ-क्विप् तुक् च । नृपे, पर्वते च । भूभृदादयोऽप्यत्र ।

क्ष्माय विधूनने भ्वा० आत्म० सक० सेट् । क्ष्मायते अक्ष्मायिष्ट ।

क्ष्मील निमेषे भ्वा० पर० अक० सेट् । क्ष्मीलति अक्ष्मीलीत् ।

क्ष्विड स्नेहे भ्वा० आत्म० अक० सेट् । क्ष्वेडते अक्ष्विडत् अक्ष्वेडिष्ट

क्ष्विद मोचने स्नेहे अक० भ्वा० आत्म० सक० सेट् । क्ष्वेदते अक्ष्विदत् अक्ष्वेदिष्ट ।

क्ष्विद कूजने दिवा०पर०अक०सेट् । क्ष्विद्यति अक्ष्वेदीत्-अक्ष्विदत् ।

क्ष्विद कूजने भ्वा० पर० अक० सेट् । क्ष्वेदति अक्ष्वेदीत् ।

क्ष्वेड पु० क्ष्विड-अच् । पीतघोषावृक्षे, विषे, वर्णातिके ध्वनौ च घोषातकीपुष्पे न० । दुरासदे, कुटिले च त्रि० । [शलाकायाञ्च ।

क्ष्वेडा स्त्री० क्ष्विड-अच् टाप् । घोषातक्याम्, सिंहनादे वंश-

क्ष्वेडित न० क्ष्वेड-क्त । सिंहनादे ।

क्ष्वेल संचालने, गतौ सक० क्रीड़ायाम् अक० भ्वा० पर० सेट् । क्ष्वेलति अक्ष्वेलीत् णिचि लुङि अचिक्ष्वेलत् ।

क्ष्वेला स्त्री० क्ष्वेल-अ । क्रीड़ायाम् ।

## ख

ख पु० खर्व-ड । सूर्ये । इन्द्रिये, देहे, पुरे, शून्ये, अभ्रे, बिन्दौ, आकाशे, स्वर्गे, सुखे च न० ।

**खक्ख** हासे भ्वा० पर० अक० सेट् । खक्खति अखक्खीत् ।

**खग** पु० खे आकाशे गच्छतीति गम–ड । सूर्य्ये, देवे, शरे, विहगे, वायौ, सूर्य्यचन्द्रादिषु ग्रहेषु च ।

**खगगति** स्त्री० ६त० । "डीनं प्रडीनमुड्डीनं संडीनं परिडीनकम् । विडीनमवडीनञ्चातिडीनं डीनडीनकम् । गतागतं प्रपतितं सम्पातः पक्षिणां गति"रित्युक्ते विहगगमने ।

**खगप** पु० खगान् पाति पा–क । गरुडे खगपत्यादयोऽप्यत्र ।

**खगस्थान** न० ६त० । द्रुमस्थे कोटरे ।

**खगान्तक** न० अन्तयति अन्तं करोति णिच्–ण्वुल् ६त० श्येनविहगे ।

**खगोल** पु० खं गोल इव । भूगोलोपरिस्थिते मण्डलाकारे आकाशे तस्य संस्थितमानविशेषो वाचस्पत्ये द्रष्टव्यः ।

**खच** भूतौ उत्पत्तौ च क्र्या० पर० सक० सेट् । खच्नाति अखचीत् अखाचीत् ।

**खच** बन्धने अद० चुरा० उभ० सक० सेट् । खचयति–ते अचखचत् त

**खचर** पु० खे आकाशे चरति चर–ट । राक्षसे स्त्रियां ङीप् । सूर्य्ये वायौ, पक्षे अश्वतरे च । आकाशगामिनि त्रि० ।

**खचित** त्रि० खच–क्त । बद्धे, संयुक्ते च ।

**खज** मन्थे भ्वा० पर० सक० सेट् । खजति अखाजीत् –अखजीत् ।

**खज** पङ्गुतायां भ्वा० इदित् पर० अक० सेट् । खञ्जति–अखञ्जीत् ।

**खज** पु० स्त्री० खज–अच् । दर्व्याम् (हाता) मन्थदण्डे च ।

**खजाका** स्त्री० खज–आक । दर्व्याम् । (हाता)

**खज्योतिस्** पु० खे आकाशे ज्योतिरस्य । खद्योते कीटे ।

**खञ्ज(क)** पु० खजि गतिवैकल्ये अच् ण्वुल् । (खाँड़ा) पादविकले ।

**खञ्जखेट** पु० खञ्ज इव खेटति अच् । खञ्जनविहगे ।

**खञ्जखेल** पु० खञ्ज इव खेलति अच् । खञ्जनखगे ।

**खञ्जन** पु० खञ्ज ल्यु । स्वनामख्याते विहगे । स्वार्थे कन् तत्रैवार्थे ।

**खञ्जरीट** पु० खञ्ज इव ऋच्छति ऋ–गतौ कीटन् । खञ्जनविहगे ।

**खट** काङ्क्षे भ्वा० पर० सक० सेट् । खटति अखाटीत्–अखटीत् ।

**खट** पु० खट–अच् । अन्धकूपे, कफे, टङ्के, तथो लाङ्गले च ।

**खटिक** पु० खट+ठन् । कुञ्जपाणौ । (खड़ि) लेखनद्रव्ये स्त्री० । खटिकाखियोतीति नैषधम् । [सम्बन्धमा यस्य त्य्कूटः ।

**खटिनी** स्त्री० खट+इनि लेखनद्रव्ये (खड़ी) । न पतति खटिनी

**खटी** स्त्री० खट–अच् गौरा० ङीष् । (खड़ी) लेखनसाधनद्रव्ये ।

**खट्ट** हतौ चुरा० उभ० सक० सेट् । खट्टयति ते अचखट्टत् त ।

**खट्वा** स्त्री० खट–क्वन् । "अष्टाभिः काष्ठखण्डैश्च कृता खट्वेति" कथ्यते इत्युक्तायां शय्यायाम् ।

**खट्वका** स्त्री० क्षुद्रा–खट्वा अल्पार्थे कन् अभाषितपुंस्कत्वात् वा अत इत्त्वम् । अल्पखट्वायाम् ।

**खट्वाङ्ग** पु० राजभेदे । खट्वाया अङ्गमिव । नरपञ्जरे, ईशायुधविशेषे, पुत्रवंशे च । इत० खट्वाया अङ्गे न० खट्वाङ्गधारक इति वटुकस्तोत्रम् । [वटुकभैरवे च ।

**खट्वाङ्गभृत्** पु० खट्वाङ्गं बिभर्त्ति भृ–क्विप् तुक् च । शिवे,

**खट्वारूढ़** पु० खट्वा अम् आरुह्–क्त नित्यस० । प्रमादवति । खट्वाश्रिते । लि० ।' [अखण्डिष्ट ।

**खण्ड** मन्थने भञ्जने च भ्वा० आत्म० इदित् सक० सेट् । खण्डते ।

**खड** भेदे चुरा० उभ० सक० सेट् । खडयति ते अचीखडत् त ।

**खड** न० खड–अच् । तृणभेदे (खड) पानान्तरे, भेदे च पु० ।

**खडक्की** स्त्री० खडक् इत्यव्यक्तशब्दं करोति कृ–ड गौ० ङीष् । पक्षद्वारे (खिड्कि) । [लेखनद्रव्ये ।

**खडी** स्त्री० खडि अच् नि० नलोपः गौरा० ङीष् । स्वनाम ख्याते

**खड्ग** पु० खडि–ग नि० नलोपः । गण्डकशृङ्गे तद्वति गण्डकपशौ च । (गाण्डार) चोरनामगन्धद्रव्ये, असौ च । लौहे न० ।

**खड्गकोष** पु० इत० । चर्म्मादिमये असिपिधाने (खाप्) वस्तुनि (ढाल) खड्गावरके च । खड्गकोषे (खाप) च ।

**खड्गधेनु** पु० खड्गस्य -पत्रमिवाच्छादकम् । (ढाल) खड्गावरके

**खड्गपिधान** न० खड्गः पिधीयतेऽनेन । (खाप्) खड्गकोषे ।

खड्गिन् पु० खड्ग+अस्त्यर्थे इनि । गण्डके । खड्गधारिजने त्रि०
खण्ड पु० खडि–घञ् भेदे "खण्डं खण्डं ययुर्घना" इति देवीमा-
माहात्म्यम् । विडलवणे, इक्षुविकारे (खांड) च न० । कर्म्मणि
घञ् । एकदेशे पु० न० ।
खण्डकर्ण पु० खण्ड इव कर्णः कन्दोऽस्य । (शकरकन्द) आलुभेदे ।
खण्डकालु पु० खण्डमिव कायति कै-क कर्म०। (शकरकन्द) आलुभेदे ।
खण्डधारा स्त्री० खण्डे एकदेशे धारा यस्याः । कर्त्तर्याम् (कांइची)
खण्डन न० खडि–ल्युट् । भञ्जने, भेदने, निराकरणे च ।
खण्डपरशु पु० खण्डयति खण्डः परशुरस्य । शिवे, तच्छिष्ये जाम-
दग्न्ये च । खण्डपर्शुरप्यत्र ।
खण्डिक पु० खण्ड+अस्त्यर्थे ठन् । कलाये, ऋषिभेदे कक्षे च कुत्से
त्रि० । खण्डिकोपाध्यायः शिष्याय चपेटं ददातीति भाष्यम् ।
खण्डित त्रि० खडि–क्त । भेदिते छिन्ने, द्विधाकृते च "ज्ञातान्यसङ्ग-
विकृतेः खण्डितेर्ष्याकषायितेत्युक्तचिह्नायां स्त्रियां स्त्री० ।
खण्डी स्त्री० खण्ड्यते गौरा० । वनमुद्गे ।
खण्डीर पु० अपकृष्टा खण्डी शुण्डादित्वात् र । पीतमुद्गे ।
खतमाल पु० खे तमाल इव । धूमे, मेघे च ।  [अखदीत् ।
खद स्थैर्य्ये अक० वधे सक० भ्वा० पर० सेट् । खदति अखादीत्–
खदिर पु० खद–किरच् । (खएर) द्रुमभेदे इन्द्रे, चन्द्रे च ।
खदिरपत्रिका स्त्री० खदिरस्येव पत्रमस्याः ङीप् ततः संज्ञायां कन्
कपि ह्रस्वः । अरिखदिरे लज्जालुलतायाञ्च । कनभावे
खदिरपत्रीत्यप्यत्र ।  [त्रिना खदिरसारेणोदाहृतः ।
खदिरसार पु० ६त० । खदिरद्रुमस्य निर्यासजे सारे (खएर)
खदिरिका स्त्री० खदिरः खदिररसोऽस्त्यस्याः ठन् । लाक्षायां तस्या
हि खदिरतुल्य निर्यासः ।  [(छागलजोड़ा) लतायाञ्च ।
खदिरी स्त्री० खद-किरच् गौरा० ङीप् । लज्जालुलतायाम्, शाकभेदे,
खदिरोपम न० खदिर उपमा यस्य । (कांटाबावला) द्रुमभेदे ।
खद्योत पु० खे द्योतते द्युत–अच् । सूर्य्ये, कीटभेदे च (जोनाकीपोका)

खधूप पु० खमाकाशं धूपयति धूप–अण्। (हाउइ) प्रस्तौ वन्हि-क्रीडने "खधुः खधूपान्" इति भट्टिः।

खन विदारे भ्वा० उभ० सक० सेट्। खनति अखानीत्–अखनीत् अखनिष्ट खायात्–खन्यात्। [लि० ।

खनक पु० खन–वुन्। मूषिके, सन्धिचौरे च। भूमिदारके (कोड़ा)

खनि(नी) स्त्री० खन–इ वा ङीप्। धातुरत्नाद्युत्पत्तिस्थाने। आ-करे भूविदारणे च।

खनित्र न० खन–इत्र। (खोन्ता) अस्त्रभेदे।

खपुर पु० खमिन्द्रियमाकाशं वा पिपर्त्ति पृ–क। गुवाकद्रुमे, (सु-पारी) भद्रमुस्तके, व्याघ्रनखे च। ऊर्द्धगते पुरे, घटे च न०। अलसे त्रि०। [पयसाम् (पाना)।

खमूली स्त्री० खे आकाशे भूमिमन्तरेणापि मूलमस्याः। वारि-

खम्ब गतौ भ्वा० पर० सक० सेट्। खम्बति अखम्बीत्।

खर पु० खं सुखमितमति यथेनास्यस्य र खमिन्द्रियं राति–रा–क वा रलयोरेकत्वम्। गर्द्दभे, अश्वतरे राक्षसभेदे च "वेरतुः खरदूष-णौ" इति भट्टिः। कण्टकिवृक्षभेदे, काके, कङ्कविहगे, कुररप-क्षिणि, ई० सम्वत्सरमध्ये वत्सरभेदे रवेः पार्श्वचरे, तिग्मस्पर्शे च। तद्वति, कठिने च त्रि० "खरविशदमभ्यवहार्य्यं" इति भाष्यम्। देवताड्वृक्षे स्त्री० टाप्।

खरकाष्ठिका स्त्री० खरमुग्रं काष्ठं यस्याः। बलायामौषधौ।

खरगन्धा स्त्री० खरोगन्धो यस्याः। नागबलायाम्। [रामे च।

खरघातन पु० खरमुग्ररोगं घातयति हन–णिच्–ल्यु। नागकेशरे,

खरच्छद पु० खरः छदः पत्रमस्य। (उलुखड़) तृणभेदे।

खरणस(स) त्रि० खरा कठिना नासिकास्य नासिकाया नस वान्त्य-लोपः। णत्वञ्च। कठिननासिके।

खरत्वच् पु० खरा कठिना त्वक् यस्य। लज्जालुभेदे।

खरदण्ड न० खरः पुष्पाद्यपेक्षया कठिनोदण्डोनालो यस्य। पद्मे।

खरदला स्त्री० खरं दलं यस्याः। काकोडुम्बरे।

खरदूषण पु० खरस्पर्शं दूषयत्युत्कटकण्टकत्वादिदोषो यत्र । धस्तूरे (धुतुरा) मत्कुदोषे त्रि० । [णिनि । रामे ।

खरध्वंसिन् पु० खरं खरनामानं राक्षसं ध्वंसयति ध्वन्स-णिच्

खरनादिनी स्त्री० खरं नदति नद-णिनि । रेणुकानामगन्धद्रव्ये ।

खरपत्र पु० खराणि पत्राण्यस्य । शाकद्रुमे, मरुबके, [illegible]-साख । गोजिह्वायां स्त्री० टाप् ।

खरपत्रक पु० खरपत्र+संज्ञायां कन् । तिलकद्रुमे ।

खरपादाढ्य न० खरैः पादैर्मूलैराढ्यः । कपित्थद्रुमे ।

खरपुष्पा(ष्पी) स्त्री० खराणि पुष्पाण्यस्याः वा ङीप् । वर्वरायाम् (बाबुइ तुलसी) ।

खरमञ्जरी स्त्री० खरा मञ्जरी यस्याः गौरा० ङीष् । अपामार्गे ।

खरवल्लिका स्त्री० खरा वल्लीव स्वार्थे कन् । नागवल्ल्याम् (पान) ।

खरशब्द पु० खर उग्रः शब्दोऽस्य । कुररखगे । तत्० गर्द्दभशब्दे । कर्म्म० उग्रशब्दे ।

खरस्कन्ध पु० खरः स्कन्धोऽस्य । प्रियालद्रुमे । खर्जूर्यां स्त्री० ।

खराश्वा स्त्री० खरैरश्यते भुज्यते अश-व । मयूरशिखायाम् (हड़-जटालता) ।

खरु पु० खन-कु रश्चान्तादेशः । दर्पे, अश्वे, दन्ते, कामदेवे श्वेतवर्णे च । श्वेतवर्णवति, निषिद्धरुचौ, निर्बोधे, क्रूरे च त्रि० पतिम्वरायां कन्यायां स्त्री० ।

खर्ज व्यथायां अक० मार्ज्जने सक० पर० सेट् । खर्जति अखर्जीत् ।

खर्ज्जन न० खर्ज्ज-ल्युट् । कण्डूयने । [द्रुमे च ।

खर्ज्जु(र्ज्जू) स्त्री० खर्ज्ज-उ वा ऊङ् । कण्डूयने, कीटभेदे, खर्ज्जूरी-

खर्ज्जु(र्ज्जू)घ्न पु० खर्ज्जुं(र्ज्जूं) कण्डूयनं हन्ति हन-टक् । चक्रमर्द्दे, (दादमर्द्दन) अर्कद्रुमे च ।

खर्ज्जूर पु० खर्ज्जूं राति सर्पणे कण्डूं ददाति । कीटभेदे (कुवा-पोका) (खेजूर) द्रुमभेदे पु० स्त्री० । स्त्रीत्वे ङीप् । तत्फले, रूप्ये च न० ।

खर्द दंशने भ्वा० पर० सक० सेट्। खर्दति अखर्दीत्।

खर्पर पु० कर्परशब्दवत् पृ० साधनम्। तस्करे, धूर्त्ते, भिक्षापात्रे कपाले भिन्नमृण्मयखण्डे च। धातुभेदे, तुत्याञ्जनभेदे च न०।

खर्व(र्ब) गतौ भ्वा० पर० सक० सेट्। खर्व(र्ब)ति अखर्वी(र्बी)त्।

खर्व(र्ब) पु० खर्व(र्ब)–अच्। कुब्जे, निधिभेदे, संख्याभेदे (सहस्रकोटौ) "अर्बुदमब्जं खर्वनिखर्वं" इति लीलावती तत्संख्याते च। नीचे, वामने च त्रि०।

खर्व(र्ब)ट पु० खर्व(र्ब) अटन्। "एकतो यत्र तु ग्रामो नगरं चैकतः स्थितम्। मिश्रं तु खर्व(र्ब)टोनाम नदीगिरिसमाकुलम्" इत्युक्त-विशे ग्रामे।

खर्वशाख त्रि० खर्वा शाखा: हस्तपादादयोऽस्य। वामने, क्षुद्रशाखावति द्रुमे पु०। [लताफलभेदे।

खर्बू(र्वू)ज न० खर्व(र्ब) ज तस्या: जायते जन–ड। (खरमुज)

खर्व गर्वे भ्वा पर० अक० सेट् खर्वति अखर्वीत्।

खल चलने सञ्चने च भ्वा० पर० अक० सेट्। खलति अखालीत्।

खल न० खल–अच्। धान्यमर्दनस्थाने, (खामार) भुवि, तिलकल्के च (खइल)। नीचे, अधमे, क्रूरे च त्रि०। खे लीयते ली-ड। सूर्य्ये। खं वस्तुतः लाति ला–क। तमालद्रुमे।

खलति पु० खल सञ्चलने अति ष्ठ०। इन्द्रलुप्तरोगे (माथारटाक) तद्वति त्रि०। [ (फरास)।

खलपू त्रि० खलं भूमिं पुनाति पू–क्विप्। स्थानशोधनकारिणि

खलाधारा स्त्री० खलं आधारो यस्या:। (तेलापोका) तैलपायिकायाम्।

खलि पु० खल–इ। तैलकीट्टे (खइल)।

खलि(ली)न पु० न० खे मुखच्छिद्रे लीनं ष्ठ० वा खुखः। अश्वमुखस्थायां कविकायां (कड़िआल)।

खलिनी स्त्री० खलानां धान्यमर्दनस्थानानां समूहः इनि। धान्यमर्दनस्थानसंघे। [ मत्स्यभेदे।

खलिश पु० खे आकाशे जलादूर्द्ध्वभागे लिशति वा। ( खलशा )

खलीकार पु० अखलं खलं करोति च्वि-कृ-घञ् । अपकारे तत्कृ-रणे हि अखलोऽपि खलो भवति ।

खलु अव्य० खल-उ । प्रश्ने, सान्त्वने, वीप्सायां, वाक्ये, निषेधे, अनु-नये, वाक्यस्य भूषणपूरणयोः, निश्चये, हेतौ च ।

खलेकपोत पु० खले धान्यमर्द्दनस्थाने यथा कपोता युगपत् पतन्ति एवं विशेषणानामेकत्र युगपदन्वयरूपे न्यायभेदे ।

खलेवाली स्त्री० खले वाल्यन्ते चाल्यन्ते वृषभा यस्याः । धान्यमर्द्द-नभूमिमध्यस्थे काष्ठे (मेढिकाठ) ।

खल्या स्त्री० खलानां समूहः यत् । धान्यमर्द्दनस्थानसमूहे ।

खल्ल पु० खलतीति क्विप् खल् तं लाति ला-क । वस्त्रभेदे, चर्म्मणि, गर्त्ते, चातके, हलौ (मयक) औषधमर्द्दनपात्रे च (खल) ।

खव सम्पत्तिपवित्रतयोः—प्रादुर्भावे, क्र्या० पर० अक० सेट् । खव्नाति अखावीत्—अखवीत् ।

खवाष्प न०६त०। रजन्यां आकाशात् निष्पन्दिनि जले हिमे (ओस) ।

खश पु० देशभेदे, हिमालयप्रान्तिकदेशे, तद्देशस्थे "शनकैस्तु क्रियालो-पादिमाः क्षत्रियजातयः । वृषलत्वं गता इत्युपक्रम्य मनुना दर्शिते पतिते क्षत्रियभेदे च ।

खष बधे भ्वा० पर० सक० सेट् । खषति । अखाषीत् अखषीत् ।

खस पु० खानि इन्द्रियाणि स्यति निश्चलीकरोति सो-क । (खोस) (पाचड़ा) रोगभेदे । [(आफिङ्) ।

खसखस पु० (पोस्ता) नामकफले द्रुमभेदे यस्य निर्यासः अहिफेनः

खाञ्जिक पु० खे आकाशे वीयते अज-घञ् आजोगतिः सोऽस्यास्ति ठन् । लाजेषु (खइ) ईषद्वायुयोगे हि तेषामाकाशगतिः ।

खाटि पु० स्त्री० खट-इन । शवरथे । स्त्री० वा ङीप् असद्ग्रहे ।

खाण्डव पु० इन्द्रप्रस्थनगरसन्निकृष्टस्थे वने । [इति स्मृतिः ।

खात न० खन-क्त । गर्त्ते, पुष्करिण्यादौ च "पूर्त्तं खातादिकर्म च"

खातक पु० खन-घञ् स्वार्थे कन् (खाइ) परिखायाम् । खात इव

खादति खै—क। अथर्वर्णे (कन्दी) खात(द)कोविसक्षीनः खा-
क्षनको विसवान् यदा” इति श्रुतिः।

खातभू स्त्री॰ खातस्य भूः स्थानम्। परिखायाम्, अल्पकूपे च।

खाद् भक्षणे भ्वा॰ पर॰ सक॰ सेट्। खादति अखादीत्।

खादक पु॰ खादति खाद्—ण्वुल्। ऋणग्राहके अथर्वर्णे “खादको-
विसक्षीनः खादु” इति श्रुतिः। भक्षके त्रि॰।

खादिर त्रि॰ खदिरस्य विकारः अण्। खदिरकाष्ठनिर्मिते यूपादौ
“खादिरे पशुं बध्नाति खादिरं वीर्य्यकामस्येति श्रुतिः। खदि-
रनिर्य्यासे (खएर) पु॰। [यकृपे धान्यादिमानभेदे।

खारि(री) स्त्री॰ खमाराति रा-क गौरा॰ङीष् वा ह्रस्वः। द्रोणचतुष्ट-

खारीक त्रि॰ खार्य्याम् वापः, खारीपरिमाणमस्य वा ईकञ्। खारी-
मितधान्यवपनयोग्ये क्षेत्रे, खारीमिते धान्यादौ च।

खिट भये भ्वा॰ पर॰ अक॰ सेट्। खेटति अखेटीत्।

खिद् दैन्ये दिवा॰ रुधा॰ च आत्म॰ अक॰ अनिट्। खिद्यते खिन्ते
अखित्त। खिन्नः। [अखैत्सीत् खिन्नः।

खिद् परिघाते तुदा॰पर॰सक॰अनिट् मुचादि। खिन्दति खिन्दतः।

खिन्न त्रि॰ खिद्—क्त। दैन्ययुक्ते, अलसे, खेदयुक्ते च।

खिल कणश आदाने तुदा॰ पर॰ सक॰ सेट्। खिलति अखेलीत्।

खिल त्रि॰ खिल—क। हलादिना अकृष्टे क्षेत्रादौ सारतः संचिप्ते
पूर्वत्रानुक्तपरिशिष्टे, यथा ऋग्वेदादौ श्रीसूक्तम्, यजुर्वेदे शिव-
संकल्पादि, महाभारते हरिवंशः। खिलेषु हरिवंश इति पुष्पि-
काव्याख्याने “खिलो नारायणः प्रोक्तस्तद्गुणा ह्यवः स्मृता इति
नीलकण्ठोक्तेः नारायणे च।

खु ध्वनौ भ्वा॰ आत्म॰ अक॰ अनिट्। खवते अखोष्ट।

खुज स्तेये भ्वा॰ पर॰ सक॰ सेट्। खोजति अखोजीत्।

खुञ्जाक पु॰ खुज—आक ष्ट॰। देवताड़वृक्षे।

खुड खञ्जे इदित् भ्वादि॰ आत्म॰ अक॰ सेट्। खुण्डते अखुण्डिष्ट।

खुड भेदने चुरा॰ उभ॰ सक॰ सेट्। खोडयति—ते अचुखोडत्—त।

खुड भेदने चुरा० उभ० इदित् सक० सेट्। खुण्डयति-ते अचुखुण्डत्-त।
खुर विलेखने तुदा० पर० सक० सेट्। खुरति अखोरीत्।
खुर पु० खुर-क। स्वनामख्याते पशूनां शफे कोलदले, नखीनाम-गन्धद्रव्ये, नापितास्त्रे, खट्वादीनां पादे च (खुरा)।
खुरक पु० खुर इव कायति कै-क। तिलवृक्षे।
खुरणस्(स) त्रि० खुर इव नासिकाऽस्य नसादेशः वा अन्त्यलोपः णत्वञ्च। चिपिटनासिके।
खुरली स्त्री० खुर इव लाति ला-क गौरा० ङीष्। शराभ्यासे
खुरालिक पु० खुराणामालिभिः कायति प्रकाशते कै-क। (भांड़) नापितास्त्रभाण्डे, नाराचास्त्रे, उपधाने च।
खु(खू)र्द् क्रीड़ायां भ्वा० आ०अक० सेट्। खु(खू)र्द्दते अखु(खू)र्द्दिष्ट।
खेचर पु० खे चरति चर-ट अलुक्स०। शिवे, सूर्यादिग्रहे, विद्याधरे च स्त्रियां ङीप्। "चित्तं चरति खे यस्मात् जिह्वा चरति खे गता। भ्रुवोरन्तर्गता जिह्वा खेचरी नाम मुद्रिका" इति तन्त्रोक्ते मुद्राभेदे स्त्री०।
खेट भोजने अद० चु०उभ० सक० सेट्। खेटयति ते अचिखेटत्-त।
खेऽट पु० खेऽटति। सूर्यादिग्रहे, "यत्रित्ये स्थिताः खेऽटा" इति ज्योतिषम्। कफे, ग्रामभेदे च। मृगयायां पु० न०। अधमे त्रि०। कर्मणि तृणे च न०।
खेटक पु० खेट-ण्वुल्। फलके (ढाल) खेटकं पूर्णचापञ्चेति दुर्गाध्यानम्।
खेड भोजने अद० चु० उभ०सक० सेट्। खेडयति ते अचखेडत्-त।
खेद पु० खिद-घञ्। शोके, अवसन्नतायाञ्च।
खेदिनी स्त्री० खेदयति खिद णिच्-णिनि। आसनपर्ण्याद्रु मे।
खेय न० खन-यत्। परिखायाम् (गडखाइ) खननीये त्रि०।
खेल चालने गत्याञ्च भ्वा० पर० सक० सेट्। खेलति अखेलीत्। अचिखेलत् त। [शारिफलके स्त्री०।
खेलन न० खेल-ल्युट्। क्रीड़ायाम्। आधारे ल्युट् ङीप्।
खेला स्त्री० खेल-अ। क्रीड़ायाम्।

खेव सेवने भ्वा० आ० सक० सेट्। खेवते अखेविष्ट अचिखेवत।
खेसर पु० खे आकाश इव शीघ्रगामित्वात् सरति सृ-ट अलुक् स०। गर्दभात् वीजाते अश्वाङ्गर्भीजाते वा अश्वतरे पशुभेदे।
खै स्थैर्ये अक० खनने हिंसायाञ्च सक० भ्वा० पर० अनिट्। खायति अखासीत्।
खोट गतिप्रतिघाते भ्वा० पर० सक० सेट्। खोटति अखोटीत्।
खोट क्षेपे अद० चु० उभ० सक० सेट्। खोटयति ते अचुखोटत् त।
खोटि(टी) स्त्री० खोट-इ वा ङीप्। चतुरायां स्त्रियां, पालङ्क्यां च।
खोड गतिप्रतिघाते भ्वा० पर० सक० सेट्। खोडति अखोडीत्। अचुखोडत् त।
खोड क्षेपे अद० चु० उभ० सक० सेट्। खोडयति ते अचुखोडत् त।
खोड त्रि० खोड गतिप्रतिघाते अच्। खञ्जे (खोंडा)।
खोर गतिवैकल्ये भ्वा० पर० सक० सेट्। खोरति अखोरीत् अचुखोरत् त। [ अचुखोलत् त।
खोल गतिवैकल्ये भ्वा० पर० सक० सेट्। खोलति अखोलीत्
खोर(ल) त्रि० खोर(ल) अच्। खञ्जे।
ख्यात त्रि० ख्या-क्त। ख्यातियुक्ते, कथिते च। [ अख्यत्।
ख्या कथने अदा० पर० सक० सेट्। आर्द्धधातुकमात्रविषयोऽयम्।
ख्याति स्त्री० ख्या+क्तिन्। प्रशंसायाम्, प्रसिद्धौ, कथने च।

## ग

ग पु० गै-क। गन्धर्वे, गणेशे, छन्दोग्रन्थोक्ते एकगुरुवर्णे च।
गगन न० गम-युच् गोऽन्तादेशः। गात्व प्रामादिकम्। आकाशे।
गगनध्वज पु० गगनस्य ध्वज इव। मेघे, सूर्ये च।
गगनेचर पु० गगने चरति चर-टक्। सूर्यादिग्रहे, नक्षत्रे च।
गग्ध हसने भ्वा० पर० सक० सेट्। गग्धति अगग्धीत्।
गङ्गा स्त्री० गम-गन्। स्वनामख्याते नदीभेदे।
गङ्गाज पु० गङ्गायां जायते जन-ड। भीष्मे, कार्त्तिकेये च स हि

अग्नौ निषिक्तस्य शिववीर्य्यस्य सोढुमशक्ततया अग्निना गङ्गायां संक्रमणे तस्माज्जात इति पुराणकथा ।

**गङ्गाधर** पु० गङ्गां धरति धृ-अच् ६त० । शिवे, सहि जटायां तामधारयदिति पुराणम् । समुद्रे च ।

**गच्छ** पु० गम-श । द्रुमे, लीलावतीप्रसिद्धे अङ्कभेदे च ।

**गज** मदे स्वने च भ्वा०पर०अक० सेट् । गजति अगाजीत्-अगजीत् ।

**गज** स्वने भ्वा० इदित् पर० अक० सेट् । गञ्जति अगञ्जीत् ।

**गज** पु० गज-अच् । हस्तिनि, अष्टसंख्यायां दिग्गजानामष्टत्वात् तथात्वम् । "अरत्नीनां शतान्यष्टावेक पञ्चाधिकानि च । गजप्रमाणमाख्यात"मित्युक्ते "साधारणनराङ्गुल्या त्रिंशदङ्गुलिको गज" इत्युक्ते च परिमाणभेदे, ज्योतिषोक्ते वास्तुभेदे, वैद्यकोक्ते गजपुटाख्ये गर्त्तभेदे च ।

**गजच्छाया** स्त्री० "यदेन्दुः पितृदैवत्ये हंसश्चैव करेस्थितः । याम्या तिथिर्भवेत् सा हि गजच्छायेति कीर्त्तितेत्युक्ते, "कृष्णपक्षे त्रयोदश्यां मघास्विन्दुकरे रविः । यदा तदा गजच्छाये"त्युक्ते च योगभेदे "द्विगुणा स्वात्मनश्छाया दर्शे स्यादपराह्णिकी गजच्छायेति सा प्रोक्तेत्युक्ते दर्शापराह्णे च ।

**गजता** स्त्री० गजानां समूहः तल् । हस्तिसमूहे ।

**गजदन्त** पु० गजस्य दन्ताविव दन्तावस्य । गणेशे । हस्तिदन्ततुल्यदन्तवति त्रि० । ६त० करिदन्ते पु०

**गजपिप्पली** स्त्री० गजोपपदा पिप्पली शाक० । स्वनामख्यातायां पिप्पल्याम् । [इत्युक्ते औषधपाकार्थे गर्त्तभेदे ।

**गजपुट** पु० "हस्तप्रमाणो गर्त्तो यः पुटः स तु गजाह्वय" ।

**गजप्रिया** स्त्री० ६त० । शल्लकीद्रुमे ।

**गजबन्धनी** स्त्री० गजा बध्यन्तेऽत्र ल्युट् ङीप् । हस्तिबन्धनशालाम् ( हातिशाला) ।

**गजभक्ष्या** स्त्री० गजैर्भक्ष्या । शल्लकीद्रुमे ।

**गजवल्लभा** स्त्री० ६त० । बङ्गीजायां गिरिकदल्यां, शल्लक्याञ्च ।

**गजसाह्वय** न० गजेन हस्तिनामकत्वेन सहितः आह्वयो यस्य । हस्तिनापुरे ( दिल्ली ) । [ हस्तिपालके ।
**गजाजीव** पु० गजैस्तत्पालनादिभिराजीव्यते जीव–अच् ।
**गजानन** पु० गजस्येवाननं यस्य । गणेशे स हि शनिदृष्ट्या छिन्नमस्तकः पश्चात् गजमस्तकेन तन्मुखमिति पुराणम् ।
**गजारोह** पु० गजमारोहति रुह–अण् हस्तिपाले (माहुत) ।
**गजा(द्)शन** पु० गजैरश्य(द्य)ते कर्म्मणि ल्युट् । अश्वत्थ द्रुमे । शल्लक्यां स्त्री० ङीप् । [ गजाह्वयमप्यत्र ।
**गजाह्व** न० गजसहिता आह्वा यस्य शाक० । हस्तिनापुरे ।
**गजेष्टा** स्त्री० गजानामिष्टा । विदार्य्याम् ( भूमिकुष्माण्ड ) ।
**गञ्ज** पु० गजि–घञ् । अवज्ञायाम् । आधारे घञ् । भाण्डागारे खनौ, कोषागारे च । ग्रामरगृहे, हट्टस्थाने, मद्भाण्डे, मदिरागृहे च स्त्री० टाप् ।
**गड** सेके भ्वा० पर० सक० सेट् घटा० । गडति अगाडीत् अगडीत् । गडयति–ते ।
**गड** वदनैकदेशे ( गण्डनव्यापारे ) इदित् भ्वा० पर० अक० सेट् । गण्डति अगण्डीत् ।
**गड** पु० गड–अच् । मत्स्यभेदे (गडुइ) विघ्ने, परिखायां, व्यवधाने, देशभेदे च । स्वार्थे कन् गडक (मत्स्ये) ।
**गडदेशज** न० गडदेशे शाम्बरदेशे जायते जन–ड । शाम्बर लवणे ।
**गडि(लि)** पु० गड(ल)–इन् । सति सामर्थ्ये दुष्टतया भारवहन भीत्या शयाने (गद्यो) गवादौ "सुखं स्वपिति गोगडि(लि)" रिति ।
**गडु** पु० गड–उ । गौणे घाटामस्तकयोर्मध्ये मांसवर्द्धके रोगे, गलगण्डे, कुब्जे, शस्त्रास्त्रे विषमग्रन्थौ च काव्यान्तर्गडुभूतत्वामालङ्कारः प्रहेलिकेति साहि १०प० ।
**गडुर(ल)** पु० गडुः कुब्जरोगोऽस्यस्य र ल वा । कुब्जे ।
**गडेर** पु० गड–एरक् । मेघे (गाड़ोल) ।
**गड्डर(ल)** पु० गड–डर (डल) वा डस्य नेत्त्वम् । मेषे ।

**गड्डरि(लि)का** स्त्री० गड्डर(ल) मेषमनुधावति ठन्। मेषानुगन्त्र्यां मेषपङ्क्तौ। तस्मादश्यादविच्छिन्नगतौ।

**गण** संख्याने अद० चु० उभ० सक० सेट्। गणयति ते अजीगणत् त अजगणत् त।

**गण** पु० गण—घञ् अच् वा। शिवानुचरे भूते, समूहे, संख्यायां, (गजसंख्या २७ रथसंख्या २७ अश्वसंख्या ८१ पदातिसंख्या १३५) एवं संख्यान्वितायां सेनायाम्, एकैक विकरणभेदभाजिद्भिन्नं भ्वाद्यदादिधातूनां समूहे, ज्योतिषोक्ते देवादिसंज्ञकनक्षत्राणां समूहे छन्दोग्रन्थोक्तेषु वर्णत्रयात्मकेषु मयरादिषु अष्टसु च।

**गणक** पु० गणयति—ण्वुल्। दैवज्ञे।

**गणदेवता** स्त्री० गणः सन् गणीभूय वा देवता। संहत्य देवत्वं प्राप्तेषु "आदित्या द्वादश प्रोक्ता विश्वे देवा दश स्मृताः। वसवश्चाष्टसंख्याताः षट्त्रिंशत् तुषिता मताः। आभास्वराश्चतुः षष्टिर्वाताः पञ्चाशदूनकाः। महाराजिकनामानो द्वे शते विंशतिस्तथा। साध्या द्वादशविख्याता रुद्राश्चैकादश स्मृता इत्युक्त तत्तत्संख्याभेदान्वितेषु आदित्यादिषु। [ काद्ययोऽप्यत्र।

**गणनाथ** पु० गणानां प्रमथादीनां नाथः। गणेशे शिवे च गणनाथ-

**गणरात्र** न० गणानां रात्रीणां समाहारः। गणशब्दस्य संख्यावत्त्वात् द्विगुस० अच्समा०। रात्रिवृन्दे।

**गणरूप** पु० गणा बहूनि रूपाण्यस्य। अर्कवृक्षे।

**गणशस्** अव्य० गणान्—गणान् इति गण+शस्। बहुश इत्यर्थे।

**गणहासक** पु० गणान् हासयति हस—णिच्—ण्वुल्। चोरनामगन्धे।

**गणान्न** न० गणायोत्सृष्टं, गणानां वाऽन्नम्। मठादौ बहुजनार्थे नोत्सृष्टान्ने, बहुस्वामिकेऽन्ने च "गणान्नं गणिकान्नञ्चेति मनुना निषिद्धान्नमध्ये गणितम्।

**गणिका** स्त्री० गणः समूहोऽस्त्यस्याः भर्तृत्वेन ठन्। वेश्यायाम्, चित्ताकर्षकत्वात् यूथिकायाम् (युइ) हस्तिन्याञ्च।

**गणिकारिका** स्त्री० गणनं गणिः तम्—कृ तं करोति अण् ङीप्,

गणिकारी स्वार्थे के ह्रस्वः। (गणियारी) । द्रुमे। कनभावे गणिकारीत्यप्यत्र ।

**गणित** न० गण—भावे क्त । गणने । करणे क्त । व्यक्ताव्यक्तरूपे अङ्कशास्त्रे । कर्मणि क्त । कृतगणने संख्याते त्रि० ।

**गणेय** त्रि० गण—एय । गणनीये ।

**गणेरु** स्त्री० गण—एरु । कर्णिकारवृक्षे, हस्तिन्यां, वेश्यायाञ्च ।

**गणेश** पु० गणानामीशः । स्वनामख्याते देवे, शिवे, च ।

**गण्ड** पु० गडि—अच् । हस्तिकपोले, कपोलमात्रे, गण्डके, (गाण्डार) चिह्ने, वीरयङ्गे, पिडके, वीरे, हयभूषणे, बुद्बुदे, स्फोटके, ग्रन्थौ ज्योतिषोक्ते विष्कुम्भादिमध्ये योगभेदे, त्याज्ये वैवाहिकजन्मलग्नस्थे अश्विन्यादितारादण्डभेदे च ।

**गण्डक** पु० गण्ड+स्वार्थे कन् । स्वनामख्याते पशौ (गण्डार) संख्याभेदे, अन्तराये, अवच्छेदे च ।

**गण्डकारी** स्त्री० गण्डं ग्रन्थिं भग्नसंयोजनरूपं सन्धिं करोति कृ—अण् ङीप् (हाड़जोड़ा) वराहक्रान्तायामोषधौ ।

**गण्डकी** स्त्री० "गण्डक्याश्चैकदेशे च शालग्रामशिलास्थल" मित्युक्ते नदीभेदे । [ याम् ।

**गण्डकीशिला** स्त्री० गण्डक्यामुत्पन्ना शिला । शालग्राम शिला-

**गण्डगात्र** न० गण्डाः स्फोटका गात्रेऽवयवे यस्य (आता) सीताफले ।

**गण्डदूर्वा** स्त्री० गण्डयुक्ता ग्रन्थिमती दूर्वा (गाटदूर्वा) । दूर्वाभेदे ।

**गण्डमाला** स्त्री० गण्डानां स्फोटकानां माला । "साङ्गण्डमाला बहुभिश्च गण्डै"रित्युक्तलक्षणे रोगभेदे ।

**गण्डमालिका** स्त्री० गण्डानां ग्रन्थीनां माला यस्य वा कप् अत इत्वम् । लज्जालुवृक्षे ।

**गण्डलेखा** स्त्री० लिख्यते ऽत्र लेखा स्थली गण्डः स्थलीव । प्रशस्तगण्डस्थल्याम् । गण्डभित्त्यादयोऽप्यत्र । [ ललाटे च ।

**गण्डशैल** पु० शैलस्य गण्ड इव, राज०म० । पर्वतात्पतितेषु स्थूलोपलेषु

**गण्डु** पु० स्त्री० गडि—उ । ग्रन्थौ, उपधाने च । स्त्रीत्वे वा ऊङ्

गण्डूपद् पु० गण्डयुक्तानि पदानि यस्य। (केँचो) किञ्चुलुके जातौ ङीप्।

गण्डूष पु० गडि ऊषन्। मुखपूरणयोग्ये तोये "गण्डाव गण्डूषमक्ष मिति कुमार:। करिहस्ताग्रे, प्रकृत्या प्रमिते जले, कराङ्गुलौ च।

गण्य त्रि गणं लब्धा गण+यत्, गण–यत् वा। गणं संख्यानं लब्धरि, गणनीये च। [भावे क्त। गमने।

गत त्रि० गम–क्त। ज्ञाते, प्राप्ते, याते, लब्धे, पतिते, समाप्ते च।

गतागत न० गतं चागतञ्च द्व०। यातायाते "गतागतं कामकामा लभन्ते" इति गीता। गतञ्चागतञ्च यत्र। पक्षिगतिभेदे।

गतार्त्तवा स्त्री० ऋतोरयमार्त्तवः तत्फलं गर्भादि च गत आर्त्तवो यस्याः। वन्ध्यायाम् वृद्धायाञ्च।

गति स्त्री० गम–भवादौ क्तिन्। गमने, पथि, ज्ञाने, दशायां, यात्रायाम्, उपाये, नाडीव्रणपथे, कर्म्मफले, प्राप्तौ च।

गद पु०गद-अच्। श्रीकृष्णानुजे, रोगे च। भावे क। कथने, विषे च।

गदा स्त्री० गद–अच् टाप्। स्वनामख्याते लौहादिकीलिते, लौहमये वाऽस्त्रभेदे पाटलावृक्षे च।

गदाग्रज पु० ६त० श्रीकृष्णे।

गदाधर पु० गदां धरतीति धृ-अच् ६त०। श्रीकृष्णे।

गदाराति पु० ७त० औषधे। [गद्गति त्रि०।

गद्गद पु० गदित्यव्यक्तं गदति क, अच् वा अव्यक्तास्फुटशब्दे।

गद्गदध्वनि पु० गद्गदः कफादिनाऽव्यक्तः ध्वनि:। हर्षशोकादिना सकफेन वायुना यथा स्थानानुच्चारणात् संजाते अव्यक्तध्वनौ। गद्गति त्रि०।

गद्य त्रि०गद-यत्। कथनीये। पद्यभिन्ने कविकृते अपादे पदसमूहे न०।

गन्त्री स्त्री० गम्यतेऽनया ष्ट्रन् ङीप्। वृषवहनीये शकटे।

गन्त्रीरथ पु० गन्त्री रथ इव अभीष्टस्थानप्रापकत्वात्। शकटे।

गन्ध द्योते चुरा० आ० सक० सेट्। गन्धयते अजगन्धत।

गन्ध पु० गन्ध–अच्। सम्बन्धे, लेशे, गन्धके, गर्वे, शोभाञ्जने, चन्दनादीनां घ्राणग्राह्ये गुणभेदे स च गन्धः पञ्चविधः "चूर्णीकृतो

वा इष्टो वा दाष्टाकर्षित एव वा। स्वः स्वार्षजोऽपि प्राकृतो-ऽथवाएव वेति” पञ्चविधकारणभेदात् इष्टचन्द्रनादौ च।

गन्धकन्दक पु० गन्ध+कन्द स्वार्थे कप्। गन्धयुक्तः कन्दोऽस्य कप्। कशेरुणि।

गन्धकचूर्ण पु० गन्धकप्रधानचूर्णः। (बारुद) इति ख्याते पदार्थे।

गन्धकाष्ठ न० गन्धयुक्तं काष्ठम् कर्म०। अगुरुचन्दने।

गन्धकुटी स्त्री० गन्धस्य कुटीवाधारः। मुरानामगन्धद्रव्ये।

गन्धकुसुमा स्त्री० गन्धयुक्तं कुसुमं यस्याः। (गणिआरी) गणिकारीवृक्षे। [गन्धवति भूतले।

गन्धखेडक न० गन्धस्य खेला यत्र कप् डलयोरैक्यात्। (वेणा)

गन्धजात न० गन्धो जातो यत्र। तेजपत्रे।

गन्धज्ञा स्त्री० गन्धं जानात्यनया करणे क। नासिकायाम्।

गन्धतैल न० गन्धयुक्तस्य चन्दनस्याग्निसंयोगेन जनितं तैलम्। यन्त्र-पाकेन जनिते तैले। (आतर) प्रभृतौ।

गन्धत्वच् स्त्री० गन्धान्विता त्वक् यस्याः। एलायाम्।

गन्धदला स्त्री० गन्धयुक्तं दलं यस्याः। अजमोदायाम्।

गन्धन न० गन्ध—भावादिषु ल्युट्। उत्साहे, प्रकाशने, सूचने, हिंसायाञ्च।

गन्धनाकुली स्त्री० गन्धान्विता नाकुली रास्ना। रास्नाभेदे।

गन्धनिलया स्त्री० गन्धस्य निलयो यत्र। नवमल्लिकायाम्।

गन्धपत्र पु० गन्धयुक्तं पत्रं यस्याः। तुलस्याम्। शठीभेदे स्त्री०।

गन्धपत्रिका स्त्री० गन्धयुक्तं पत्रं यस्याः कप् कापि अत इत्वम्। अजमोदायाम्। [याम्, अम्बष्ठायाम्, अजमोदायाञ्च।

गन्धपत्री स्त्री० गन्धयुक्तं पत्रं यस्याः गौरा० ङीष्। अश्वगन्धा-

गन्धपलाशिका स्त्री० गन्धयुक्तं पलाशं यस्याः कप्। हरिद्रायाम्।

गन्धपाषाण पु० गन्धयुक्तः पाषाणः। गन्धके।

गन्धपुष्प पु० गन्धः पुष्पेषु यस्याः। वेतसे, अङ्कोटवृक्षे, बकुलारे अ-शोके च। केतक्यां, गणिकारीवृक्षे च स्त्री० टाप्।

गन्धफल पु० गन्धयुक्तं फलं यस्य । बिल्वे, कपित्थे च । विदार्यां, गन्धकयाञ्च स्त्री० टाप् । प्रियङ्गौ स्त्री० ङीप् ।

गन्धबन्धु पु० ६ त० । आम्रवृक्षे ।

गन्धभद्रा स्त्री० गन्धेन सेव्यमानसेवनेन भद्रं यस्याः ५ ब०। (गन्धभादाल) लताभेदे ।

गन्धभाण्ड पु० गन्धस्य भाण्ड इव । (गन्धभादाल) लताभेदे ।

गन्धमांसी स्त्री० गन्धयुता मांसी कर्म० । जटामांसीभेदे ।

गन्धमादन पु० न० गन्धेन मादयति मद–णिच् ल्यु । पर्वतभेदे । भ्रमरे, वानरे, गन्धके च पु० ।

गन्धमादिनी स्त्री० गन्धेन मादयति मद–णिच्–णिनि । लाक्षायाम्, मुरानामगन्धद्रव्ये च । [ द्रव्ये ।

गन्धमालिनी स्त्री० गन्धमालाऽस्त्यस्या इनि । मुरानामगन्ध-

गन्धमुखा स्त्री० गन्धो मुखेऽस्याः छुछुन्दर्याम् (छुंचा) ।

गन्धमुण्ड पु० गन्धं मुण्डयति मुण्ड+तत्करोति णिच्–अच् । (गन्ध-भादाल) लताभेदे ।

गन्धमूल पु० गन्धो मूले यस्य । शल्लकीहक्षे–शट्याम् । पु० स्त्री० वा ङीप् । स्वार्थे कन् अत्रैवार्थे ।

गन्धमृग पु० गन्धप्रधानो मृगः । गन्धयोगौ कस्तूरीमृगे ।

गन्धराज न० गन्धेन राजते राज–अच् । चन्दने, कणगुग्गुलौ, स्वनामख्याते पुष्पवृक्षे च ।

गन्धराजी स्त्री० गन्धानां राजी टच् ङीप् । नखीगन्धद्रव्ये ।

गन्धर्व पु० गन्धमर्वति अर्व–गतौ अच् शक० । मृगभेदे, अश्वे, कोकिले, स्वर्गगायके देवयोनिभेदे, गायनमात्रे च ।

गन्धर्वनगर पु० न० गन्धर्वाणां नगरमिव । शून्याधिष्ठाने पुराकारे नीलपीतादिमेघरचनाभेदे, इन्द्रजाले च । गन्धर्वपुरमप्यत्र ।

गन्धर्वलोक पु० ६ त० । गुह्यलोकोपरि विद्याधरलोकस्याधो-निविष्टे स्थाने ।

गन्धर्वविद्या पु० ६ त० । सामवेदस्योपवेदे सङ्गीतविद्यायाम् ।

गन्धर्वहस्त पु० गन्धर्वस्य अश्वभेदस्य हस्तः पाद इव पत्रमस्य । एरण्डवृक्षे । स्वार्थे कन् तत्रैवार्थे ।

गन्धलता स्त्री० गन्धान्विता लता । प्रियङ्गौ । [जातिभेदे ।

गन्धवणिज् पु० गन्धोपजीवी वणिक् । ( गन्धवेनिया ) इति ख्याते

गन्धवती स्त्री० गन्ध+मतुप् मस्य व । व्यासमातरि, भूमौ, वायुवरुणयोर्नगर्य्याम्, सुरायाञ्च ।

गन्धवल्कल न० गन्धो वल्कलेऽस्य । (दारचिनि) त्वचे ।

गन्धवल्लरी स्त्री० गन्धान्विता वल्लरी । सहदेवीलतायाम् गन्धवल्लीत्यप्यत्र।

गन्धवह पु० गन्धं वहति वह—अच् ६ त० । वायौ । गन्धयुक्ते नासिकादौ त्रि० ।

गन्धवारि न० गन्धवासितं वारि । गन्धद्रव्येण वासिते जले ।

गन्धवाह पु० गन्धं वहति वह—अण् उप० । वायौ । नासिकायां स्त्री० ।

गन्धविह्वल पु० गन्धेन विह्वलयति ह्वल—णिच्—अच् । गोधूमे ।

गन्धवीजा स्त्री० गन्धो वीजे यस्याः । मेथिकायाम् ।

गन्धव्याकुल पु० न० गन्धेन व्याकुलयति वि+आ+कुल—णिच्—अच् । कक्कोले । [प्रभृतौ ।

गन्धशालि पु० गन्धप्रधानः शालिः । आमोदवति धान्यभेदे (वासमति)

गन्धसार पु० गन्धयुक्तः सारो यस्य । चन्दनवृक्षे ।

गन्धसारण पु० गन्धं सारयति सृ—णिच्—ल्यु । [illegible] ।

गन्धसोम न० गन्धार्थं सोमोविधुर्यस्य । कुमुदे चन्द्रोदये हि तस्य गन्धः ।

गन्धा स्त्री० गन्ध—णिच् अच् । गन्धहेतौ चम्पककलिकायाम् ।

गन्धाखु स्त्री० गन्धयुक्त आखुः । छुछुन्दर्याम् (छुंचा) ।

गन्धाजीव पु० गन्धेन गन्धद्रव्येणाजीवति आ+जीव—अच् । ( गन्धवेने) गन्धवणिजि ।

गन्धाढ्य पु० गन्धेनाढ्यः । चन्दनवृक्षे, नागरङ्गवृक्षे च । गन्धयुक्ते त्रि० । "गन्धाढ्यः सुमनोहर" इति तन्त्रम् । स्वर्णयूथ्यां, गन्धपत्रायाञ्च स्त्री० ।

गन्धाम्ला स्त्री० गन्धयुक्तः अम्लो यस्याः । वनबीजपूरके ।

गन्धार पु० गन्धमृच्छति ऋ—अण् उप० । रागे, सिन्दूरे, स्वरभेदे च । देशभेदे ब० व० । [लताभेदे ।

गन्धाली स्त्री० गन्धमलति पर्य्याप्नोति अल—अण् । ( गन्धभादाल )

गन्धालीगर्भ स्त्री० गन्धश्रेष्ठो गर्भो यस्याः । सूक्ष्मैलायाम् ।

गन्धाष्टक न० गन्धानां गन्धद्रव्याणामष्टकम् । चन्दनाद्यष्टसु गन्धद्रव्येषु प्रपञ्चस्तु वाचस्पत्ये द्रष्टव्यः ।

गन्धिनी स्त्री० गन्धोविद्यतेऽस्याः इनि । सुरानामगन्धद्रव्ये ।

गन्धिपर्ण पु० गन्धि गन्धयुक्तं पर्णं यस्य । सप्तच्छदवृक्षे (छातिम) ।

गन्धोत्कटा स्त्री० गन्धेन उत्कटा उग्रा । दमनकवृक्षे ।

गन्धोत्तमा स्त्री० गन्धेन उत्तमा उत्कृष्टा । मदिरायाम् ।

गन्धोली स्त्री० गन्धयति अर्द्दयति गन्ध—ओलच् गौरा० ङीष् । वरटायाम् ( बोलता ) ।

गभस्ति पु० गम्यते ज्ञायते गम—ड गः विषयस्तं बभस्ति भासयति भस-क्तिच् । किरणे, सूर्य्ये च । स्वाहायां वह्निपत्न्यां स्त्री०वा ङीप् ।

गभस्तिमत् पु० गभस्ति+मतुप् । सूर्य्ये ।

गभस्तिहस्त पु० गभस्तयो हस्ता इव जलाकर्षकत्वात् यस्य । सूर्य्ये ।

गभीर त्रि० गच्छति जलमत्र गम—ईरन् भान्तादेशश्च । निम्नस्थाने, अतलस्पर्शे, गहने, दुष्प्रवेशे, दुर्बोधे च ।

गम गतौ भ्वा० पर० सक० अनिट् । गच्छति अगमत् ।

गम पु० गम—अप् । द्यूतभेदे, जिगीषोर्यात्रायाम्, गमने, पथि, सदृशपाठे च । [त्वात् समास इति भाष्यम् । गमयितरि च ।

गमक त्रि० गमयति बोधयति गम—णिच्—ण्वुल् । बोधके, गमक-

गम्भारी स्त्री० कं जलं बिभर्त्ति भृ—अण् ङीप् पृ० कस्य गः । (गामारी) द्रुमभेदे ।

गम्भीर त्रि० गच्छति जलमत्र गम ईरन् भुगागमः नि० । निम्नस्थाने, मन्द्रे गभीरार्थे च । जम्बीरे, पद्मे, ऋग्मन्त्रभेदे च पु० । स्वरे सत्त्वे च नाभौ च त्रिषु गम्भीरता शुभा ।

**गम्भीरवेदिन्** पु० गम्भीरं मन्दं वेत्ति विद्–णिनि । चिरकालेन यो वेत्ति शिक्षां परिचितामपि "गम्भीरवेदी विज्ञेयः स गज इत्युक्तचिह्ने" "त्वग्भेदात् शोणितस्रावात् मांसस्य च्यवनादपि । आत्मानं यो न जानाति स स्यात् गम्भीरवेदितेत्युक्तचिह्ने च गजे । तत् गम्भीरवेदिताप्यत्र ।

**गय** पु० असुरभेदे, वानरभेदे, नृपभेदे च । तीर्थभेदे स्त्री० टाप् ।

**गर** पु० गॄ–निगरणे अच् अप् वा । विषे, रोगे, रवादधिके पञ्चमे करणे च ।

**गरघ्न** पु० गरं विषं हन्ति । बर्बरे । मत्स्यभेदे (गडुइ) स्त्री० ङीप् ।

**गरल** न० गिरति जीवनं गॄ–अलच् । विषे, सर्पविषे, तृणमूले च ।

**गरागरी** स्त्री० गरं मूषिकविषमागिरति आ+गॄ–अच् गौ० ङीष् । देवताडीद्रुमे ।

**गरिमन्** पु० गुरोर्भावः इमनिच् गरादेशः । गौरवे ।

**गरिष्ठ** त्रि० अतिशयेन गुरुः इष्ठन् । गुरुतरे । ईयसुनि गरीयानप्यत्र ।

**गरी** स्त्री० गॄ शब्दे अच् गौरा० ङीष् । देवताडीद्रुमे ।

**गरुड़** पु० गरुद्भ्यां डयते डी–ड पृ० तलोपः । कश्यपात्मजे विनतागर्भजाते पक्षिराजे ।

**गरुडध्वज** पु० गरुडो ध्वजः चिह्नमस्य । विष्णौ ।

**गरुडपुराण** न० गरुडेन प्रोक्तं पुराणम् । पुराणभेदे ।

**गरुडाग्रज** पु० ६ त० विनतायाः ज्येष्ठपुत्रे सूर्यसारथौ अरुणे ।

**गरुत्** पु० गॄ–बा० उति । खगानां नभोगतिहेतौ पक्षे (पाखा) ।

**गरुत्मत्** पु० गरुत् अस्त्यस्य मतुप् यवादित्वात् न मस्य वः । गरुड़े, विहगमात्रे च ।

**गर्ग** पु० गॄ–ग । ब्रह्मणः पुत्रे मुनिभेदे ।

**गर्गरी** स्त्री० गर्ग इति शब्दं राति रा–क गौ० ङीष् । दधिमन्थनपात्रे, कलसे च । मत्स्यभेदे, तरुणपर्णौ च पु० ।

**गर्ज** अव्यक्तहेतुकशब्दे भ्वा० पर० सक० सेट् । गर्जति । "गर्ज गर्ज क्षणं मूढ" इति देवीमाहात्म्यम् ।

गर्ज रवे चुरा० उभ० सक० सेट् । गर्जयति ते अजगर्जत्–त ।
गर्जर न० गृ–विच् गरं जरयति जॄ–णिच् अच् । (गाजर) मूलभेदे ।
गर्जित न० गर्ज–क्त । मेघशब्दे । कर्त्तरि–क्त । मत्तहस्तिनि
गर्त्त पु० गॄ–तन् । भूमिच्छिद्रे, श्रोणितल्पे कूपाकारेऽंसे रोगभेदे च "धनुः सहस्राण्यष्टौ च गतिर्यासां न विद्यते । न ता नदीशब्द-वरा गर्त्तास्ता" इत्युक्ते खाते स्त्री० टाप् ।
गर्त्तिका स्त्री० गर्त्तोऽस्त्यस्याः ठन् । तन्तुवपनशालायां (ताँतघर) ।
गर्द्द रवे वा चुरा० उभ० पक्षे भ्वा० पर० अक० सेट् । गर्द्दयति ते गर्द्दति अजगर्द्दत्–त अगर्द्दीत् । [ विडङ्गे च न० ।
गर्द्दभ पु० गर्द्द अभच् (गाधा) गर्द्दभे, गन्धभेदे च । श्वेतकुमुदे,
गर्द्दभशाक पु० स्त्री० गर्द्दभस्य भक्ष्यः शाकः । ब्रह्मयष्टिद्रुमे (बामनहाटी) भार्ग्याम् स्त्री० ङीप् ।
गर्द्दभाण्ड पु० गर्द्दभं गन्धविशेषमणति अण–ड डस्य नेत्त्वम् पत्रादिष्वश्वत्थतुल्याकारे द्रुमे (पाकुड़) प्लक्षे ।
गर्द्दभाह्वय पु० गर्द्दं गन्धविशेषमाह्वयति ह्वे–श । गर्द्दभ इति आह्वयो यस्य वा । कुमुदे ।
गर्द्दभी स्त्री० गर्द्द–अभच् गौ० ङीष् । गोमयकीटे, श्वेतकण्टकार्य्यां, अपराजितायाञ्च । गर्द्दभ+पु० योगे ङीष् । रासभ्याम्
गर्द्ध लिप्सायां चु० उभ० सक० सेट् । गर्द्धयति ते अजगर्द्धत् त ।
गर्द्ध पु० गृध–घञ् अच् वा । अतिशयस्पृहायां, गर्द्दभाण्डद्रुमे च ।
गर्द्धन त्रि० गृध–युच् । लुब्धे ।
गर्ब गतौ भ्वा० पर० सक० सेट् । गर्बति अगर्बीत् ।
गर्व दर्पे अद० चुरा० आत्म० सेट् । गर्वयते अजगर्वत ।
गर्व पु० गर्व–दर्पे घञ् । अहङ्कारे ।
गर्भ पु० गॄ–भन् । भ्रूणे देहजन्मकारके शुक्रशोणितसंयुक्तजन्ये "गर्भाशयगतं शुक्रमार्त्तवं जीवसंज्ञकम् । प्रकृतिः सविकारा च तत् सर्वं गर्भसंज्ञित" मित्युक्ते सांसिद्धिके, शिशौ, कुक्षौ, नाटकसन्धिभेदे, पनसकण्टके, अपवरके, "भाद्रकृष्णचतुर्द्दश्यां यावदा-

स्रवते अवम् । तावद् गर्भं विजानीयादित्युक्ते भाङ्गलण्यपस्तद्द्वयं
गर्भाशयाभ्यावयवस्थाने, अन्ने अन्नौ, पुत्रे, च ।

गर्भक पु० गर्भे केशमध्ये कायति कै—क । केशमध्यस्थे माल्ये ।

गर्भगृह न० गर्भ इव गृहम् । गृहमध्यभागे ।

गर्भघातिनी स्त्री० गर्भं हन्ति हन—णिनि लाङ्गलिकाख्ये ।

गर्भद पु० गर्भं ददाति दा—क । पुत्रजीवद्वृक्षे । नृपभेदे स्त्री० टच्
ङीप् गर्भदात्रीत्यपि भवाले ।

गर्भपाकिन् पु० गर्भे पाकोविद्यतेऽस्य इनि । षष्टिकधान्ये (षटेधान्) ।

गर्भपातक पु०गर्भं पातयति पत—णिच्-ण्वुल् । रक्तशोभाञ्जने (लाल-
सजना) । [ गर्भकारीवृक्षे ।

गर्भपातनी स्त्री० गर्भः पात्यतेऽनया पत—णिच् ल्युट् ङीप् ।

गर्भपातिनी स्त्री० गर्भं पातयति—पत—णिच्—णिनि ङीप् । विशल्या-
ख्ये । [ स्त्रियाम् ।

गर्भवती स्त्री० गर्भोविद्यतेऽस्या मतुप् मस्य व । आपन्नगर्भायां

गर्भशय्या स्त्री० गर्भस्य शय्येव स्थानम् । "शङ्खनाभ्याकृतिर्योनि-
स्त्र्यावर्त्ता सा च कीर्त्तिता । तस्यास्तृतीये त्वावर्त्ते गर्भशय्या-
प्रकीर्त्तिते' ति वैद्यकशारः । [पतने

गर्भस्राव पु० स्रु—घञ् ६ त० । प्रसूतिकालात् पूर्वं रोगादिना गर्भस्य

गर्भस्राविन् पु० गर्भं स्रावयति स्रु—णिच्—णिनि । हिन्तालवृक्षे ।

गर्भागार न० गर्भ इवागारारम् । गृहमध्यभागे वासगृहे । गर्भएवा-
गारम् । गर्भस्थाने ।

गर्भाधान न० गर्भः ग्रहतया आधीयतेऽनेन । दशविधसंस्कारान्तर्गते
गर्भपालस्य संस्कारपूर्वकं गर्भनिषेके ।

गर्भाशय पु० गर्भ आशेतेऽत्र शी—अच् । गर्भवेष्टनचर्मणि जरायौ ।

गर्भाष्टम पु०गर्भात् गर्भग्रहणसमयाद्टमः । गर्भग्रहणावधिकेऽष्टमे
मासि वर्षे वा "गर्भाष्टमेऽब्दे कुर्वीतेति मनुः ।

गर्भिणी स्त्री० गर्भोऽस्त्यस्याः इनि । गर्भवत्यां सगर्भायां स्त्रियाम् ।

**गर्भोपघातिनी** स्त्री० गर्भमुपहन्ति उप+हन-णिनि । गर्भघातिन्यां गवि । [भेदे च ।

**गर्मुत्** स्त्री० गृ-उति मुट् च । स्वर्णे, लतायां, (मवना) तृण-

**गर्व** मदे भ्वा० पर० सक० सेट् । गर्वति अगर्वीत् ।

**गर्व** पु० गर्व-घञ् । अभिमाने, "ऐश्वर्य्यरूपतारुण्यकुलविद्याबलै-रपि । इष्टलाभादिनान्येषामवज्ञा गर्व ईरित" इत्युक्तेऽवज्ञाभेदे च ।

**गर्ह** निन्दायां वा चुरा० पक्षे भ्वा० आत्म० सक० सेट् । गर्हयते अजगर्हत । पक्षे भ्वादिरूपम् ।

**गर्ह** कुत्सायां भ्वा० आत्म० सक० सेट् । गर्हते अगर्हिष्ट ।

**गर्ह्य** त्रि० गर्ह-ण्यत् । निन्द्ये, अधमे च ।

**गर्ह्यवादिन्** त्रि० गर्ह्यं वदति वद-णिनि । कुत्सितवादिनि कहदे ।

**गल** भक्षणे स्रावे च भ्वा० पर० सक० सेट् गलति अगालीत् ।

**गल** स्रावणे चुरा० आत्म० सक० सेट् । गालयते अजीगलत ।

**गल** पु० गल-अच् कण्ठे (गला) सर्ज्जरसे (धुना) वाद्यभेदे, गडकमत्स्ये च ।

**गलक** पु० गल-वुन् । स्वल्पशकुलमत्स्ये । [पिण्डे ।

**गलकम्बल** पु० गले कम्बल इव । सास्नायां गवां गलस्थिते मांस-

**गलगण्ड** पु० ७त० । (गरगण्ड) रोगभेदे ।

**गलग्रह** पु० "आरम्भानन्तरं यत्र प्रत्यारम्भो न दृश्यते । गर्गादिमुनयः सर्वे तमेवाहुर्गलग्रह" मित्युक्ते प्रत्यारम्भाभाववति पदार्थे, "कृष्ण-पक्षे चतुर्थी च सप्तम्यादिदिनत्रयम् । "त्रयोदशीचतुष्कञ्च अष्टा-वेते गलग्रहा" इत्युक्ते तिथ्यष्टके च ।

**गलन्तिका** स्त्री० गल-झच् ङीप् स्वार्थे कन् स्वल्पवारिधारायु-तायां (झारा) कर्कर्य्यां "इमे देया गलन्तिकेति स्मृतिः ।

**गल(ले)स्तनी** स्त्री० गले स्तनौ यस्याः वा अलुक्स० । छाग्याम् ।

**गलहस्त** पु० गलेहस्तः । अपसारणार्थंगलेऽर्पिते हस्ते (गलाटिपि) ।

**गला** स्त्री० गल-अच् । लज्जालुलताभेदे, अलम्बुषायाञ्च ।

**गलित** त्रि० गल-क्त । पतिते स्रस्ते, च्युते, हस्तादितो भ्रष्टे च ।

गलेगण्ड पु० गलेगण्ड इव यस्य । पक्षिभेदे (हाड़गिले) ।
गलोद्देश पु० गलस्य उद्देशः समीपम् । गलसमीपस्थेऽवयवे ।
गल्भ धार्ष्ट्ये, प्रागल्भ्ये, भ्वा० आ० सक० सेट् । गल्भते अगल्भिष्ट ।
गल्या स्त्री० गलानां कण्ठानां समूहः । कण्ठसमुदाये ।
गल्ल पु० गल-ल तस्य नेत्वम् । (गाल) गण्डे ।
गल्लक पु० गलति क्विप् गल् तं लाति टल्लाति ततः स्वार्थे कन् ।
चषके मद्यपानपात्रे ।
गवय पु० गु-अयच् । गोसदृशे गलकम्बलहीने पशुभेदे वानरभेदे च ।
गवल पु० गुङ् शब्दे अप् तं लाति ला-क वनमहिषे । तत्सम्बन्धि-
त्वात् तच्छृङ्गे न० । [इष्टिस्थाने वातायने ।
गवाक्ष पु० गवां किरणानामक्षि रन्ध्रमिव । जालाकारे कुलवधू-
गवाक्षी स्त्री० गां भूमिमश्नोति अण् ङीप् । (गोमुक) लताभेदे,
(शेओड़ा) शाखोटे, अपराजितायाञ्च ।
गवादन न० गोभिरद्यते अद-ल्युट् । घासे । इन्द्रवारुण्यां स्त्री० ।
गवेडु पु० गवे दीयते दीङ् रक्षणे कु पृ० दस्य ड अलुक् स० ।
(गडगडे) धान्यभेदे । [कनि स्त्रीत्वेन टाप् अत्रैवार्थे ।
गवेधु पु० गवे धीयते धाञ्-धारणे कु । (गडगडे) धान्यभेदे,
गवेरुकी स्त्री० न० । गवामीशः गोरक्षः तथाभूतः इव कायति कै
क गौरा० ङीष् । (गोरक्षचाकुलिया) लताभेदे ।
गवेष अन्वेषणे, अद० चुरा० आत्म० सेट् । गवेषयते अजगवेषत ।
गवेषणा स्त्री० गवेष-युच् टाप् । अन्वेषणे । ल्युट् अत्रैवार्थे न० ।
गव्य त्रि० गोर्विकारः गवि भवं, गोर्हितं, गोरिदं, वा सर्वत्र यत् गो-
सम्बन्धिनि, गोर्हितादौ च । ज्यायां रागद्रव्ये च न० ।
गव्यूति स्त्री० गोर्यूतिः । क्रोशद्वये क्रोशे च ।
गह्व गह्वने अद० चु० उभ० सक० सेट् । गह्वयति ते अजगह्वत् त ।
गहन न० गाह-युच् पृ० ह्रस्वः । कानने, गह्वरे, दुःखे च । दुर्गमे,
दुष्प्रवेशे च त्रि० । "गहना कर्मणोगतिः" इति गीता ।
गह्वर पु० गाह-वरच् नि० । निकुञ्जे । दम्भे, वने, रोदने, विषम-

स्थाने, अनेकानर्थसङ्कटे च न०। गुञ्जायां न०स्त्री० स्त्रीत्वपक्षे ङीप्

**गा** गतौ भ्वा० आत्म० सक० अनिट्। गाते अगास्त।

**गा** स्तुतौ सक० जन्मनि अक० जुहो०। जगाति अगासीत्।

**गाङ्गेय** पु० गङ्गा+ढक्। भीष्मे, कार्त्तिकेये च। "यं गर्भं सुषुवे गङ्गा पावकाद्दीप्ततेजसम्। तदुल्वं पर्वते न्यस्तं हिरण्यं समपद्यत" इत्युक्ते स्वर्णे, तन्नामनामके मुस्तके, कसेरुणि च।

**गाङ्गेरुकी** स्त्री० गाङ्गं जलमीरयति क्षिपति ईर-उ स्वार्थे कन् गौरा० ङीष्। नागबलायाम्।

**गाजर** न० गां जरयति जॄ-णिच्-अच्। शृञ्जने (गाजोर)।

**गाढ** न० गाह्-क्त। अतिशये दृढे। तद्युते, अवगाढे, सेविते च त्रि० तपस्विगाढां तमसां प्रापेति रघुः।

**गाणिक्य** न० गणिकानां समूहः ष्यञ्। वेश्यासमूहे।

**गाण्डि** पु० गण्ड-इन् पृ० वृद्धिः। ग्रन्थौ।

**गाण्डिव(गाण्डीव)** पु०न०। गाण्डिर्ग्रन्थिरस्यास्ति वा पूर्वपददीर्घः। अर्ज्जुनचापे, चापमात्रे च। [अर्ज्जुनवृक्षे च।

**गाण्डी(ण्डि)विन्** पु० गाण्डी(ण्डि)व-इनि। अर्ज्जुने, धानुष्कमात्रे,

**गात्र** शैथिल्ये अदा०चुरा०आत्म०अक० सेट्। गात्रयते अजगात्रत।

**गात्र** न० गा-ष्ट्रन्। देहे, गजाग्रजङ्घादौ च।

**गात्रभङ्ग** पु० भनज-घञ् गात्रस्य भङ्गोऽवसादो यस्याः। शूकशिम्ब्याम्। ईत०। अङ्गभङ्गे (गामोड़ा) स्त्री०।

**गात्रानुलेपनी** स्त्री० गात्रमनुलिप्यतेऽनया लिप-ल्युट्। अनुलेपनवर्त्तिकायाम्।

**गाथक** त्रि० गै-थकन्। गायके गानोपजीविनि।

**गाथा** स्त्री० गै-थन्। आर्य्याच्छन्दसि प्राकृतादिभाषारचिते पद्ये, श्लोके च। [अगाधिष्ट। अजगाधत्।

**गाध** प्रतिष्ठायां ग्रन्थे लिप्सायाञ्च भ्वा० आ० अक० सेट्। गाधते

**गाध** पु० गाध-घञ्। स्थाने, लिप्सायां, तलस्पर्शे च। [स्थपभेदे।

**गाधि** पु० गाध इन्। चन्द्रवंश्ये कान्यकुब्जाधिपे, विश्वामित्रपितरि

गाधिज पु० गाधेर्जायते जन--ड । विश्वामित्रे ।

गाधेय पु० गाधि+अपत्ये ढक् । विश्वामित्रे मुनौ ।

गान न० गै-ल्युट् । गीतौ, ध्वनौ च ।

गान्दिनी स्त्री० गङ्गायां, यादववंश्यस्य अक्रूरस्य मातरि च ।

गान्धर्व त्रि० गन्धर्वस्येदम् अण् । गन्धर्वसम्बन्धिनि । "इच्छयान्योन्य-संयोगः कन्यायाश्च वरस्य च । गान्धर्वः स तु विज्ञेय" इत्युक्ते विवाहभेदे, भारतवर्षीयोपद्वीपभेदे च पु० । सामवेदस्योपवेदे सङ्गीतशास्त्रे, पदस्यस्वरसंघातस्तालेन सङ्गतस्तथा । प्रयुक्तश्चावधानेन गान्धर्वमभिधीयते" इत्युक्ते गाने च न० ।

गान्धार पु० गन्धं सौरभमृच्छति अण् प्रज्ञाद्यण् । सिन्दूरे गीति-विषये रागभेदे, स्वरभेदे च । कन्दार इति ख्याते देशोद्भवे त्रि० । गन्धके न० ।

गान्धारराज पु० गान्धाराणां जनपदानां राजा टच् । दुर्य्योधनमा-तामहे सुबले, तत्सुते शकुनौ च । [धृतराष्ट्रस्य पत्न्याम् ।

गान्धारी स्त्री० गान्धारस्य स्त्र्यपत्यम् अण् । दुर्य्योधनस्य मातरि

गान्धिक पु० गन्धेन जीवति ठक् । गन्धवणिजि ।

गायत्री स्त्री० गायन्तं त्रायते त्रै--क । वेदोक्ते, मन्त्रभेदे, षड्क्ष-रपादके छन्दोभेदे च ।

गायन त्रि० गै-ल्युट् । गानोपजीविनि । स्त्रियां ङीप् ।

गारुड न० गरुडो देवताऽस्य । मरकतमणौ, विषमन्त्रे, स्वर्णे च । तेन प्रोक्तमित्यण् । गरुडेनोक्ते पुराणभेदे च ।

गारुडिक पु० गारुडेन विषमन्त्रेण जीवति ठक् । विषवैद्ये ।

गारुत्मत न० गरुत्मान् देवताऽस्य अण् मरकतमणौ ।

गार्द्धपक्ष पु० गृध्रस्यायं गार्द्ध्रः अण् स पक्ष पत्रं यस्य । गृध्रपक्ष-रचितपत्रके वाणे । [ गार्भिण्यमप्यत्र ।

गार्भिण न० गर्भिणीनां समूहः अञ् । गर्भिणीसमूहे । यञ् ।

गार्हपत्य पु० गृहपतेः नाम्ना युक्तः । यज्ञीयाग्निभेदे ।

गार्हस्थ्य न० गृहस्थस्य भावः कर्म० वा। गृहस्थाश्रमकर्त्तव्ये कर्मणि, तद्धर्मे च।

गालव पु० गल—घञ् तं वाति वा—क। मुनिभेदे, लोध्रवृक्षे च।

गालि पु० स्त्री० गल—इन्। शापे, आक्रोशे च।

गाह विलोडने भ्वा० आत्म० सक० वेट्। गाहते अगाहिष्ट आगाढ।

गि(र)रा स्त्री० गॄ क्विप् या टाप्। वाक्ये।

गिरि पु० गॄ—कि। पर्वते। "यदोर्द्धबाहुरग्नीरो सन्तोषो दिगम्बरः। सर्वत्र समभावेन भावयेद्यो नरोत्तमः। इष्ट देवीधिया नारीं स गिरिः परिकीर्त्तित" इत्युक्तलक्षणे संन्यासिनि, परिव्राजकोपाधिभेदे च। यथा आनन्दगिरिः। गिरति लोकम् गॄ—अच्। बालमूषिकायां स्त्री० वा ङीप्।

गिरिकदली पु० ७त०। बहुबीजायाम् वनरम्भायाम्।

गिरिकर्णी स्त्री० गिरिर्बालमूषिकेव कर्णः पत्रं यस्याः। अपराजितायाम्। स्वार्थे कन् गिरिकर्णिकाप्यत्र।

गिरिका स्त्री० गिरि+संज्ञायां कन्। बालमूषिकायाम्।

गिरिज न० गिरौ जायते जन—ड। अभ्रे, शिलाजतुनि, लौहे, गैरिके च। मधुकभेदे पु०। पार्वत्यां मातुलुङ्गायाञ्च स्त्री०।

गिरिदुर्ग न० गिरिरेव दुर्गम्। राज्ञां शत्रुभ्यो निःशङ्कतया वासस्थानं दुर्गम् (गड़)। पर्वतरूपे तादृशे स्थाने, "सर्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेदिति मनुः।

गिरिनिम्ब पु० ७त० महानिम्बवृक्षे।

गिरिपीलु पु० ६त० (फालसा) इति वृक्षभेदे।

गिरिपुष्पक न० गिरेः पुष्पमिव इवार्थे कन्। शैलेये, शिलाजतुनि।

गिरिभिद् पु० गिरिं भिनत्ति भिद—क। पाषाणभेदके वृक्षे, इन्द्रे च।

गिरिमल्लिका स्त्री० गिरौ मल्लीव इवार्थे कन्। कुटजवृक्षे।

गिरिश पु० गिरौ शेते शी—ड, गिगिरस्त्यस्य लोमा० श वा। शिवे।

गिरिशालिनी स्त्री०गिरिणा बालमूषिकाकर्णेनेव शलते शल-णिनि। अपराजितायाम्।

**गिरिसुत** पु० ६त० । मैनाकपर्वते । पार्वत्याम् स्त्री० ।

**गिरीश** पु० गिरेः कैलासस्य ईशः । महादेवे ।

**गिल** पु० गिलति गॄ—मूल० क लत्वम् । जम्बीरे ।

**गिलित** त्रि० गॄ—क्त गिलो जातोऽस्य तारका० इतच् । भक्षिते ।

**गीत** न० गै—क्त । गाने नक्षत्रादिके वाच्यलिङ्गे ।

**गीता** स्त्री० गै—कर्म्मणि क्त । गुरुशिष्यकल्पनया उपदेशात्मके कथाविशेषे सा च भगवद्गीतारामगीतादिभेदात् बहुला किन्तु भगवद्गीतायामेव प्रसिद्धिः । गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः । या स्वयं पद्मनाभस्य मुखपद्मात् विनिःसृतेति श्रीधरस्वामिधृतवचनम् ।

**गीति** स्त्री० गै—क्तिन् । गाने, आर्य्याछन्दोभेदे च ।

**गीर्णि** स्त्री० गॄ—क्तिन् । गिलने, स्तुतौ च ।

**गीर्व्वाण** पु० गीरेव वाणो यस्य । देवे ।

**गीष्पति** पु० गिरां पतिः इदुपधत्वात् षत्वम् । वृहस्पतौ । वा रत्वे विसर्गे च । गीर्पतिः गीःपतिरप्यत्र ।

**गु** ध्वनौ भ्वा० आत्म० अक० अनिट् । गवते अगोष्ट ।

**गु** विष्ठोत्सर्गे तुदा० कुटा० पर० अक० अनिट् । गुवति अगुत ।

**गुग्गुल(लु)** पु० गुज—क्विप् गुक् व्याधिः ततो गुडति रक्षति उ—गुड—क वा डलयोरैकत्वम् । स्वनामख्यातनिर्य्यासके वृक्षभेदे, रक्ताशोभाञ्जने च ।

**गुच्छ** पु० गु—संप० क्विप् गुतं त्यति छो—क । कलिकाकुसुमादि समूहयति स्तवके, काण्डशून्ये मूलत एव शाखाप्रधानसंघात्मके धान्यमल्लिकादेः स्तम्बे, द्वात्रिंशद्यष्टिके हारभेदे, मयूरपुच्छे च । स्वार्थे कन्‌ । उक्तार्थेषु । संज्ञायां कन् । रीठाकरञ्जे मन्त्रिपर्णे न० ।

**गुच्छकरञ्ज** पु० गुच्छाकृतिः करञ्जः । करञ्जभेदे ।

**गुच्छदन्तिका** स्त्री० गुच्छीभूता दन्ताः पुष्परूपाः सन्त्यस्याः ठन् । कदल्याम् तस्या हि मोचकरूपे पुष्पे गुच्छाकृतिदन्तरूपत्वम् ।

गु(त्स)च्छपत्र पु० गुच्छाकृतीनि पत्राण्यस्य । तालवृक्षे तस्यहि प्रत्ये-कपत्रस्य गुच्छात्मत्वम् ।

गु(त्स)च्छपुष्प पु० गु(त्सा)च्छाकृतीनि पुष्पाण्यस्य । सप्तच्छदवृक्षे । संज्ञायां कन् । रीठाकरञ्जे धातक्यां स्त्री० ङीप् ।

गु(त्स)च्छफल पु० गु(त्सा)च्छाकृतीनि फलान्यस्य । रीठाकरञ्जे, राजा-दन्यां, कतके च । अग्निदमन्यां, काकमाच्यां, द्राक्षायां कदल्याञ्च स्त्री० टाप् ।

गु(त्सा)च्छार्द्ध पु० गु(त्स)च्छस्य अर्द्धमिव ऋध-अच् । चतुर्विंशति-यष्टिके हारभेदे । ह्रस्व० गुच्छ(त्स)ार्द्ध पु० न० ।

गुज ध्वनौ तुदा० कुटा० पर०अक० सेट् । गुजति अगुजीत् जुगोज ।

गुज कूजने भ्वा० पर० अक० सेट् । गोजति अगोजीत् ।

गुजि कूजने भ्वा० पर०सक० सेट् इदित् । गुञ्जति अगुञ्जीत् "न जुगुञ्ज यः कल"मिति भट्टिः ।

गुञ्जा स्त्री० गुजि-अच् लताभेदे (कुंच) तत्फलेऽपि हरितक्यादि-त्वादणो लुक् । "तुल्या यवाभ्यां कथितात्र गुञ्जेति लीलावती । गोधूमद्वयमाने, चतुर्धान्यमाने, पटहे, मदिराघटे, मधुरध्वनौ, चञ्चायाञ्च ।

गुटि(टी) स्त्री० गु-टिक् वा ङीप् । गोलाकारायां वटिकायाम् । स्वार्थे कन् । "तत्रैवार्थे गुटिकापातादिना व्यञ्जन"मितिदायभागः ।

गुठ वेष्टने चुरा० उभ० इदित् सक० सेट् । गुण्ठयति-ते अजु-गुण्ठत्-त ।

गुड वेष्टने रक्षणे चूर्णने च चुरा० उभ० इदित् सक० सेट् । गुण्ड-यति-ते अजुगुण्डत्-त ।

गुड रक्षणे व्याघाते च तुदा० कुटा० पर० सक० सेट् । गुडति अगुडीत् जुगोड ।

गुड पु० गुड-क । गोले, हस्तिसन्नाहे, "इक्षोरसो यः सम्पक्वो जायते लोष्टवद् दृढः । सगुडः गौडदेशे तु मत्स्यण्डेरव गुडो मत"इत्युक्ते

स्वनामख्याते इक्षोरसपाकजाते पदार्थे (फेनी) इतिख्याते पदार्थे, याते, कार्पासास्त्र ।

**गुडत्वच** न० गुडस्य गुडार्थं त्वचम् । इक्षौ तत्र हि गुडोत्पत्तिः ।

**गुडत्वक्(च)** पु० गुडइव मधुरा त्वक् (चा) यस्य । त्वचे (दारचिनि) ।

**गुडदारु** पु० गुडप्रधानो दारुः शाक० । इक्षौ ।

**गुडधेनु** स्त्री० गुड़निर्मिता धेनुः । दानार्थं धेनुत्वेन शास्त्रानुसारेण कल्पिते गुड़ादिपदार्थे ।

**गुडपुष्प** पु० गुड इव मधुरं पुष्पमस्य । मधुकवृक्षे (मौल) (मङ्कुया) ।

**गुडफल** पु० गुड इव मधुरं फलमस्य पीलुवृक्षे ।

**गुडवीज** पु० गुड इव मधुरं वीजमस्य मसूरे ।

**गुडशिग्रु** पु० गुड इव मधुरः शिग्रुः । रक्तशोभाञ्जने ।

**गुडाका** स्त्री० गुड—व्याघाते आक । निद्रायाम् । [अर्ज्जुने च ।

**गुडाकेश** पु० गुडाकाया निद्रातुल्यालस्यस्य ईशः वशित्वात् । शिवे,

**गुडाशय** पु० गुडइव मधुरः आशयः फलमध्यं यस्य । आक्षोट वृक्षे (आखरोट) ईत० गुडाभिलाषे । [याम् ।

**गुडु(डू)ची** स्त्री० गुड—रक्षणे उ (ऊ) चट् । स्वनामख्यातायां लता-

**गुण** मन्त्रणे आम्रेडने इत्येके चुरा० उभ० सक० सेट् । गुणयति—ते अजुगुणत्-त ।

**गुण** पु० गुण—अच् घञ् वा । धनुषो मौर्व्याम् धनुराकर्षणदामनि, रज्जुमात्रे, सगुणोऽपि पूर्णकुम्भो यथा कूपे निमज्जतीत्युद्भटः । शौर्यादिधर्मे, राज्ञां सन्धिविग्रहादिषु षट्सु साधनेषु "षाड्गुण्य-समयुङ्क्त" इति माघः । ज्ञानविनयादिषु, गुणा गुणानुबन्धित्वादिति रघुः । सांख्यमते पुरुषोपभोगोपकरणभूतत्वात् तद्बन्धनोपयोगित्वाच्च सत्वरजस्तम आदिषु पदार्थेषु । "प्रकृतेर्गुणसमूढाः सज्जन्ते गुणकर्मस्वि"ति गीता । अप्रधाने, न्यायमते रूपादिषु चतुर्विंशतिपदार्थेषु, व्याकरणोक्ते "सत्वे निविशतेऽपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्वप्रकृतिर्गुणः" इत्युक्ते द्रव्यमात्राश्रिते द्रव्यभिन्ने उत्पाद्यानुत्पाद्यता समानाधिकरणे भिन्नरूपे

वस्तुधर्मे, व्याकरणे परिभाषिते अद्रेङ्‌गु इत्युक्ते अकारे, एकारे, ओकारे च अलङ्कारोक्तेषु माधुर्य्यादिषु, आवृत्तौ, तन्तौ, धनुर्ज्यायां, दूर्वायाञ्च ।

**गुणक** पु० गुण-आम्रेडने ण्वुल् । आवर्त्तके पूरके "गुण्यान्त्यमङ्कं गुणकेन हन्यादिति लीलावती ।। [ तनि ।

**गुणगृह्य** त्रि० ग्रह-पक्षार्थे क्यप् ६त० । गुणानां पक्षे, पक्षपा-

**गुणनिका** स्त्री० गुण-आम्रेडने युच् स्वार्थे कन् । अभ्यासे निश्चयार्थं पाठ्यस्य ग्रन्थस्य पुनः पुनरनुशीलने, वक्तृगुणनिकेव सेति माघः । शून्ये, नृत्ये, मालायाञ्च ।

**गुणवृक्षक** पु० वृक्ष इव कायति कै-क गुणानां नौकाकर्षणरज्जूनां बन्धनाधारः वृक्षः । नौकाकर्षकदामाद्याधारे काष्ठे । (मास्तुल) ।

**गुणित** त्रि० गुण-आम्रेडने कर्मणि क्त । आहते ताडिते पूरिते ।

**गुणिन्** पु० गुणोऽस्यस्य इनि । धनुषि । गुणविशिष्टे त्रि० "गुणी-गुणं वेत्ति" त्युद्भटः ।

**गुणीभूत** त्रि० अगुणः गुणः भूतः च्वि भू-क्त । अप्रधानीभूते ।

**गुणीभूतव्यङ्ग्य** न० गुणीभूतं वाच्यार्थादपकृष्टं व्यङ्ग्यं यत्र । अलङ्कारोक्ते मध्यमे काव्ये ।

**गुण्ड** पु० गुडि-वेष्टने अच् । असिपत्रे तृणभेदे यस्य कन्दः कशेरु ।

**गुण्डकन्द** पु० ६त० । कशेरुणि (केशुर) ।

**गुण्डारोचनिका** स्त्री० गुण्डा सती रोचना हरिद्रेव इवार्थे कन् (कमलागुंडि) वृक्षभेदे ।

**गुण्डिक** पु० गुण्ड+अस्त्यर्थे ठन् । चूर्णीकृते तण्डुलादौ ।

**गुण्डित** त्रि० गुडि-वेष्टने क्त । रजसाकीर्णे, चूर्णिते ।

**गुत्स** पु० गुध-स किच्च । स्तबके, विकाशोन्मुखकलिकायाम्, गुच्छार्थे, ग्रन्थपरिच्छेदे च । गुत्सकादयः गुच्छकादिवत् ।

**गुद** खेले भ्वा० आत्म० अक० सेट् गोदते अगोदिष्ट ।

**गुद** न० गुद-क्त । मलत्यागद्वारे अपानवायुनिःसारणद्वारे ।

गुदकील पु० गुदे कील इव। अर्शोरोगे। गुदाङ्कुरादयोऽप्यत्र।

गुदग्रह पु० गुदं गृह्णाति ग्रह—अच्। उदावर्त्तनामके रोगे।

गुद्र मिथ्या कथने चुरा० उभ० सक० सेट् इदित्। गुन्द्रयति ते अजुगुन्द्रत्—त।

गुध रोषे क्र्या० पर० अक० सेट्। गुध्नाति अगोधीत्।

गुध क्रीडे भ्वा० आत्म० अक० सेट्। गोधते अगोधिष्ट।

गुध वेष्टने दिवा० पर० सक० सेट्। गुध्यति अगोधीत्।

गुन्द्र पु० गुन्द्र—अच्। शरतृणे (गोटपटेरा) ख्याते तृणे च।

गुन्द्रमूला स्त्री० गुन्द्रस्येव मूलमस्याः एरकाख्ये तृणभेदे।

गुन्द्रा स्त्री० गुद्रि पचाद्यच्। एरकायाम्। गां जलं द्रावयति द्रा—क पृ०। भद्रमुस्तके, प्रियङ्गौ, गवेधुकायाञ्च।

गुप गोपने कुत्सने च भ्वा० आत्म० सक० सेट्। निन्दायां जुगुप्सते अजुगुप्सिष्ट। गोपने गोपते अगोपिष्ट। [पीत्—अगौप्सीत्।

गुप रक्षणे भ्वा० पर० सक० वेट्। गोपायति—अगोपायीत्—अगो—

गुप व्याकुलीभावे दिवा० पर० सक० सेट्। गुप्यति अगुपत् अगोपीत्।

गुप्त त्रि० गुप—रक्षणे गोपने वा क्त। रक्षिते, त्राते, गूढे, संहते च। वैश्यसंज्ञायां पु०।

गुप्तगति पु० गुप्ता गतिर्यस्य। अपसर्पे, गुप्तचरे।

गुप्तस्नेह पु० गुप्तः स्नेहस्तैलादिर्यत्र। अङ्कोटवृक्षे।

गुप्ति स्त्री० गुप—क्तिन्। रक्षणे, गोपने च राज्ञामात्मनगर्य्यां, परनगर्य्याञ्च रक्षायां (पहारा) गुप्तावपि मनोहरमिति कुमारः। कारागारे, भूगर्त्ते, अवस्करस्थाने, नौकाच्छिद्रे, यमे, गर्त्तार्थं क्षितेः खनने च।

गुफ ग्रन्थे तुदा०पर०सक०सेट् मुचा०। गुम्फति अगोफीत्। गुफितः।

गुम्फ ग्रन्थे तु० पर० सक० सेट्। गुम्फति अगुम्फीत्। गुम्फितः।

गुम्फ पु० गुम्फ—घञ्। ग्रन्थने, बाहोर्भूषणे, श्मश्रुणि च।

गुम्फना स्त्री० गुम्फ—युच्। "वाक्ये शब्दार्थयोः सम्यग्रचना गुम्फना स्मृता" इत्युक्तायां रचनायाम्।

**गुम्फित** त्रि० गुम्फ–क्त । ग्रथिते, ग्रथिते च । [गोरक्षम् ।

**गुर** बधे गत्याञ्च दिवा० आत्म० सक० सेट् । गूर्य्यते अगोरिष्ट । गूर्णः

**गुर** उद्यमे तुदा० कुटा० आत्म० अक० सेट् । गुरते अगुरिष्ट ।
गुरणम् गूर्णः ।

**गुरु** पु० गिरत्यज्ञानं ग्रणाति उपदिशति वा धर्म्मं गॄ–कु उच्च । "निषेकादीनि कर्म्माणि यः करोति यथाविधि । सम्भावयति चान्नेन स विप्रो गुरुरुच्यते" इति मनूक्ते निषेकादिकर्त्तरि पित्रादौ, "स गुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छतीत्युक्ते आचार्य्ये, शास्त्रोपदेष्टरि, सम्प्रदायप्रवर्त्तके, उपाध्याये, तान्त्रिकमन्त्रोपदेष्टरि, बृहस्पतौ, तदधिदैवे पुष्ये, द्विमात्रे दीर्घे स्वरवर्णे, विन्दुविसर्गयुक्ते–एकमात्रे, संयुक्तवर्णात् पूर्बस्थिते एकमात्रेऽपि वर्णे, द्रोणाचार्य्ये, कपिकच्छ्वाञ्च । बलवति, महति, पूज्ये, "गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः । पतिरेको गुरुः स्त्रीणां सर्वत्राभ्यागतो गुरु" इति पुराणम् । दुर्ज्जरे, गुरुत्ववति च त्रि० स्त्रियां वा गुर्व्वी ।

**गुरुक्रम** पु० ६ त० गुरुपरम्परोपदेशे । [त्वगन्तरि ।

**गुरुतल्पग** पु० गुरोः पितुस्तल्पं दारान् गच्छति गम–ड । विमा–

**गुरुपत्रा** स्त्री० गुरु पाके दुर्ज्जरं पत्रमस्याः । तिन्तिडीवृक्षे ।

**गुरुवर्च्चोघ्न** पु० गुरुवर्चः रोगभेदं हन्ति हन–क । निष्पाके (पातिलेबु) ।

**गुरुसारा** स्त्री० गुरुः गुरुत्ववान् सारो यस्याः । (शिशु) शिंशपायाम् ।

**गुरुस्कन्ध** पु० गुरुः स्कन्धो यस्य । श्लेष्मातकवृक्षे ।

**गुर्ज्जर** पु० देशभेदे (गुजराट) तद्देशवासिनि ब० व० ।

**गु(गू)र्द** कुर्दने भ्वा० आत्म० अक० सेट् । गु(गू)र्दते अगु(गू)र्दिष्ट ।

**गु(गू)र्द** निवासे कुर्दने च चुरा० उभ० अक० सेट् । गु(गू)र्दयति ते अजुगु(गू)र्दत् त ।

**गुर्व्व** उद्यमे भ्वा० पर० अक० सेट् । गुर्व्वति अगुर्व्वीत् । गूर्णः ।

**गुर्व्विणी** स्त्री० गुरुर्गर्भोऽस्त्यस्याः व्रीह्यादित्वात् इनि नि० गुणाभावः । गर्भिण्याम् ।

**गुर्व्वी** स्त्री० गुरु—ङीप्। गर्भवत्यां "नहि वन्ध्या विजानाति गुर्व्वीप्रसववेदनां" इति। गौरववत्यां स्त्रियां, गुरुस्त्रियाञ्च।

**गुल्फ** पु० गल—फक् नि० अस्योत्त्वं। पादग्रन्थौ।

**गुल्म** पु० गुड़—रक्षणे वेष्टने वा मक्। डलयोरैक्यम्। प्रधानपुरुषाधिष्ठिते रक्षके पुरुषसंघे, (गजाः ६, रथाः ६, अश्वाः २७ पदातयः ४५) एतत्संख्यान्विते सैन्यसमुदाये, स्वनामख्याते रोगभेदे, चक्रदेशे रक्षार्थं स्थापिते सैन्ये, अप्रकाण्डे लताप्रतानादौ वृक्षे, "एकमूलेषु सङ्घातजातेषु शरेक्षुप्रभृतिषु तृणभेदेषु, प्लीहरोगे च।

**गुल्ममूल** न० गुल्ममालाति मूलमस्य। आर्द्रके।

**गुल्मवल्ली** स्त्री० गुल्माकारा वल्ली। सोमलतायाम्।

**गुल्मिनी** स्त्री० गुल्म+इनि। द्राक्षाताम्बूलीप्रभृतौ लतायाम्।

**गुल्मी** स्त्री० गुल्माकारफलत्वात् गुल्मरोगहन्तृत्वाद्वा अच् गौ० ङीष्। आमलक्यां, लवल्याम्, एलायाम्, वस्त्रनिर्म्मितगृहे, वन्याम्, अम्लखोटके, (गुड़काकोली)।

**गु(गू)वाक** पु० गु—पिनाकादित्वात् आक नि० (सुपारी) क्रमुके।

**गुह** संवरणे भ्वा० उभ० सक० सेट्। गूहति ते अगूहीत् अघुक्षत् अगूहिष्ट अगूढ।

**गुह** पु० गुह—क। कार्त्तिकेये, अश्वे, राममित्रे शृङ्गवेराधिपे चण्डालनाथे, गर्त्ते, विष्णौ च सिंहपुच्छीलतायाम् अकृत्रिमे देवखाते पर्वतगर्त्ते, हृदये च स्त्री०। गुहां प्रविष्टाविति श्रुतिः।

**गुहाशय** पु० गुहायां गर्त्ते आशेते शी—अच्। अज्ञाने। "सिंहव्याघ्रवृकाऋक्षतरक्षुद्वीपिनस्तथा। वभ्रुजम्बुकमार्ज्जारा इत्याद्याः स्युर्गुहाशया इत्युक्तेषु सिंहादिषु, हृदये, बुद्धौ च स्थिते जीवे, ईश्वरे च "गुहाशयं गह्वरेष्ठ" इति श्रुतिः।

**गुहिल** न० गुह—इलच् किच्च। धने, वने च।

**गुह्य** त्रि० गुह—क्यप्। कच्छपे, दम्भे, परमात्मनि च। रहसि, भगे, लिङ्गे च न०। रहस्ये, गुहामर्हति दण्डादित्वात् यति।

अप्रकाश्ये च त्रि० । [कुबेरधनरक्षके देवयोनिभेदे ।

**गुह्यक** पु० गुह्यं कं सुखं यस्य, गुह्यं कुत्सित कायति कै—क वा ।

**गुह्यकेश्वर** पु० ६त० । कुबेरे ।

**गुह्यपुष्प** पु० गुह्यं पुष्पमस्य । अश्वत्थवृक्षे । [गुवः ।

**गू** विष्ठात्यागे तुदा० कुटा० पर०अक० सेट् । गुवति अगुविष्ट जुगाव ।

**गू** स्त्री० गच्छत्यपानेन देहात् गम–कू टिलोपश्च । विष्ठायां, मले च ।

गूधातु क्विप्प्रत्ययान्ततकथनं पुंलिङ्गताकथनञ्च प्रामादिकम् ।

**गूढ़** त्रि० गुह–क्त । गुप्ते, संवृते, गहने च । रहसि न० ।

**गूढ़ज** पु० गूढं गुप्तं यथा तथा जातः—गूढः सन् वा जातः जन ड ।

द्वादशपुत्रमध्ये पुत्रभेदे । [केनापि न दृष्टम् ।

**गूढ़नीड** पु० गूढं नीडं वासस्थानं यस्य । खञ्जनखगे तद्वासस्थानं हि

**गूढ़पत्र** पु० गूढं पत्रमस्य । अङ्कोटे, करीरे च ।

**गूढ़पाद्(द)** पु० गूढ़ाः पादा अस्य वा पाद्भावः । सर्पे ।

**गूढ़पुरुष** पु० कर्म० । गुप्तचरे, प्रणिधौ ।

**गूढ़पुष्प** पु० गूढ़ानि संवृतानि पुष्पाण्यस्य । वकुलवृक्षे ।

**गूढ़फल** पु० गूढं यथा तथा फलति अच् । वदरे ।

**गूढ़मैथुन** पु० गूढं केनाप्यदृश्यं मैथुनं यस्य । काके ।

**गूढ़वर्त्तिका** स्त्री० कर्म० । अक्षोटवृक्षे ।

**गूढ़साक्षिन्** पु० कर्म० । अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम् ।

यः श्राव्यते तदा गूढ़ो गूढ़साक्षी स उच्यते" इत्युक्ते साक्षिभेदे ।

**गूढ़ाङ्ग** पु० गूढ़ान्यङ्गान्यस्य । कच्छपे ।

**गूढ़ोत्पन्न** पु० "उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः । स गृहे

गूढ़ उत्पन्न स्तस्य स्यात् यस्य तल्पजः" इत्युक्ते पुत्रभेदे ।

**गूथ** पु० न० । गू—थक् । विष्ठायाम् ।

**गूर** उद्यमे चुरा० आ० अक० सेट् । गूरयते अजूगुरत ।

**गूर** वधे गतौ च दिवा० आत्म० सक० सेट् । गूर्यते अगूरिष्ट ।

**गृ** सेके भ्वा० पर० सक० अनिट् । गरति अगार्षीत् ।

**गृज** ध्वनौ भ्वा० पर० अक० सेट् । गर्जति अगर्जीत् ।

**गृज** ध्वनौ भ्वा० पर० अक० सेट् इदित्। गृञ्जति अगृञ्जीत्।

**गृञ्जन** पु० गृञ्ज्यते भक्ष्यत्वेन कथ्यते रोगेषु गृञ्जि-ल्युट्। "गन्धाकृतिरसैस्तुल्यः सूक्ष्मनालः पलाण्डुने"त्युक्तलक्षणे मूलभेदे (रसुन) इति ख्याते मूलभेदे च। विषदग्धपशुमांसे न०।

**गृध** लिप्सायां दिवा० पर० सक० सेट्। गृध्यति अगृधत्–अगर्द्धीत्। गर्द्धित्वा–गृद्ध्वा।

**गृध्नु** त्रि० गृध–क्नु। लुब्धे।

**गृध्र** पु० गृध–क्रन्। (शकुनि) खगभेदे।

**गृध्रनखी** स्त्री० गृध्रस्य नख इव पत्रादि अस्याः ङीप्। वदर्य्याम् (कुलेखाडा) कुलिकट्टचे च।

**गृध्रराज** पु० इत०। गरुडात्मजे जटायुखगे।

**गृष्टि** स्त्री० सकृत् गर्भं गृह्णाति ग्रह–क्तिच्–पृ० नि०। सकृत्प्रसूतायां गवि, वराहक्रान्तायां, वदरायामोषधौ, काश्मर्य्याञ्च।

**गृह** ग्रहणे अद० चु० आत्म० सक० सेट्। गृहयते अजगृहत।

**गृह** न० ग्रह० गेहार्थे क। इष्टकामृत्तिकादिरचिते गेहे। गृह-ग्रहणे अच्। कलत्रे "न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते" इति स्मृतिः। नामनि, मेषादिभवने राशौ च। अर्द्धर्चादित्वादयमुभयलिङ्गः तत्र एकगृहे न० पुंलिङ्गस्तु बहुवचनान्तएव "तत्रागारं धनपतिगृहा"निति मेघदूतम्। कलत्रेऽपि दारशब्दवत् ब० व०।

**गृहकच्छप** पु० गृहे कच्छप इव। पेषणशिलायाम्।

**गृहकन्या** स्त्री० गृहे कन्येव। घृतकुमार्य्याम्।

**गृहकारक** पु० गृहं करोति कृ–ण्वुल्। (घरामि) गृहनिर्म्माणकारके वर्णसङ्करभेदे। [चित्रकण्ठे (घुघू)।

**गृहनाशन** पु० गृहं नाशयति नश–णिच् ल्यु। वनकपोते

**गृहगोधा** स्त्री० गृहस्य गोधेव। (टिक्टिकी) ज्येष्ठ्याम्। स्वार्थे कन् तत्रैवार्थे।

**गृहपति** पु० इत०। गृहस्वामिनि, गृहस्थे, मन्त्रिणि, धर्मे च।

**गृहभूमि** स्त्री० गृहयोग्या भूमिः। वास्तुभूमौ।

**गृहमणि** पु० गृहे मणिरिव। प्रदीपे।

**गृहमृग** पु० गृहस्य मृगइव। कुक्कुरे।

**गृहमेधिन्** पु० गृहैर्दारैर्मेधते संगच्छते मेध-सङ्गमे णिनि। गृहस्थे।

**गृहमेधीय** पु० गृहमेधिनोऽयं छ। गृहस्थकर्त्तव्ये धर्मे।

**गृहयालु** त्रि० गृह-आलु। ग्रहीतरि।

**गृहवाटिका** स्त्री० गृहसमीपे वाटिका आरामः। गृहसमीप-स्थोपवने।

**गृहस्थ** पु० गृहेषु दारेषु तिष्ठति अभिरमते स्था-क। गृहिणि।

**गृहागत** पु० गृहमागतः आ+गम क्त। आगन्तुके, अतिथौ गृहा-गते त्रि०।

**गृहाराम** -० गृहे गृहसमीपे आरामः। गृहसमीपस्थे उपवने।

**गृहावग्रहणी** स्त्री० गृहमवगृह्यते अनेन अव+ग्रह-करणे ल्युट्, ङीप्। देहल्याम् (देओयाल)।

**गृहिणी** स्त्री० गृह-अस्त्यर्थे इनि। भार्य्यायाम् गेहकर्मकुशलायाम्। गृहिणी सचिवो मिथः सखी" ति रघुः।

**गृहिन्** पु० गृहा दाराः सन्त्यस्य इनि गृहस्थे।

**गृहीत** त्रि० ग्रह-क्त। स्वीकृते, ज्ञाते, प्राप्ते, धृते च।

**गृहेनर्द्दिन्** पु० गृहे एव नर्द्दति न युद्धे, पात्रेसमितादि० स०। कापुरुषे रणभीरौ गृहे आस्फालयितरि।

**गृह्य** पु० ग्रह-पदास्वैरीत्यादिना क्यप्। गृहासक्ते खगे मृगे च मलद्वारे, वेदोदितकर्मप्रयोगज्ञापके गोभिलसूत्रादौ ग्रन्थभेदे च। अस्वैरिणि आयत्ते, स्वपक्षीये पक्षे च त्रि०। गृहे भवः यत्। गृहभवे, वस्तुनि त्रि०। स्वार्थे कन् तत्रैवार्थे। नगरवाह्यस्थ ग्रामे स्त्री० टाप् गृह्या।

**गॄ** विज्ञापने चुरा० आत्म० सक० सेट्। गारयते अजीगरत।

**गॄ** शब्दे क्र्या० पर० प्वादि० सक० सेट्। गृणाति अगारीत्।

**गॄ** निगरणे तुदा० पर० सक० सेट्। गिरति-गिलति अगारीत् अगालीत्

गेद गतौ भ्वा० आत्म० सक० सेट् । गेदते अगेदिष्ट । अजिगेदत् गेदित्वा गेत्त्वा ।

गेन्दु(ण्डु)क पु० गच्छतीति ग इन्दुरिव इवार्थे कन् । कन्दुके वस्त्रनिर्म्मिते गोलाकारे क्रीडनके । पृषो० वा डत्वे गेण्डुकश्च ।

गेय त्रि० गै—भव्यगेयेत्यादिना कर्त्तरि यत् । गायने । भावे यत् । गीतौ "गेये केन विनीतं वा" मिति रघुः । कर्म्मणि यत् । गातव्ये त्रि० पूर्वाह्णे गेयं सामेति भाष्यम् ।

गेव सेवने भ्वा० आ० सक० सेट् । गेवते अगेविष्ट । अजिगेवत् ।

गेष अन्वेषणे भ्वा० आत्म० सक० सेट् । गेषते अगेषिष्ट अजिगेषत् ।

गेह न० गो गणेशो गन्धर्वो वा ईहः ईप्सितो यत्र । गृहे ।

गेहेनर्द्दिन् पु० गृहेनर्द्दिवत् सर्वम् ।

गेहेशूर पु० गृह एव शूरः । पात्रे समितादि स० । कापुरुषे रणभीरौ ।

गै गाने भ्वा० पर० सक० सेट् । गायति । अगासीत् ।

गैरिक न० गिरौ भवः ठक् । (गिरि) इति ख्याते पर्वतजाते उपधातुभेदे, स्वर्णे च ।

गैरिकाक्ष पु० गैरिकमिवाक्षि पुष्पमस्य । जलमधूके वृक्षे ।

गैरी स्त्री० गिरौ जाता अण् । (विषलाङ्गली) लाङ्गलीवृक्षे ।

गैरेय न० गिरौ भवः ढक् । (शैलज) शिलाजतुनि ।

गो पु० गम—डो । वृषभे, स्वर्गे किरणे, वज्रे जले, पशौ, चन्द्रे, वायौ, सूर्य्ये, ऋषभनामौषधौ च । सौरभेय्याम् दृष्टौ, वाणे, दिशि, मातरि, वाचि, भूमौ च स्त्री० । [विकङ्कतवृक्षे च (वैद्यक)] ।

गोकण्टक पु० गोर्धेनोः पृथिव्या वा कण्टकः । खुरे, विषमोन्नते स्थपुटे ।

गोकर्ण पु० गौरिव कर्णो यस्य । सर्पे, "भ्रश्यन्ति गोकर्णशरीरभाजः" इति चौरः । गोरिव कर्णावस्य । अश्वतरे, मृगभेदे, गणदेवताभेदे, अनामिकायुतवितस्तिमाने, शैवे तीर्थभेदे च ।

गोकर्णी स्त्री० गोः कर्ण इव यस्याः । मूर्वालतायाम् ।

गोकील पु० गोः पृथिव्याः कीलइव । लाङ्गले, मुसले च ।

गोकुल न० गवां कुलं यत्र । गोस्थाने गोष्ठे, "गोकुले कन्दुशाला-

या"मिति स्मृतिः। व्रजग्रामके प्रसिद्धे स्थाने "गोकुले रामकेश-वाविति पुराणम्। हृत०। गोमयसमूहे।

**गोखुर** पु० गोः खुरइव। गोक्षुरवृक्षे हृत०। गवां खुरे।

**गोग्रन्थि** पु० गोर्ग्रन्थिरिव। करीषे (घुंटा) गवां ग्रन्थिः पङ्क्तिर्यत्र गोष्ठे। गोर्ग्रन्थिरिव, गोजिह्विकौषधौ।

**गोघ्न** पु० गौर्हन्यते यस्मै हन-सम्प्रदाने टक्। अतिथौ तदागमने हि मधुपर्कार्थं गोर्वधो विहितः। कर्त्तरि टक्। गोघातके त्रि०।

**गोचर** पु० गावः इन्द्रियाणि चरन्त्यस्मिन् नि० क। इन्द्रियविषये रूपरसादौ। गावश्चरन्त्यस्मिन्। गवां प्रचारस्थाने, देशमात्रे, ज्योतिषोक्ते जन्मराश्यवधिके तत्तत् स्थाने सूर्य्यादिग्रहगमनेषु च। "गोचरे वा विलग्ने वा ये ग्रहारिष्टसूचका इति ज्योतिषम्।

**गोचर्म्मन्** न० हृत०। गवां चर्म्मणि, "सप्तहस्तेन दण्डेन त्रिंशद्दण्डैर्निवर्त्तनम्। दश तान्येव गोचर्म्म"त्युक्ते भूमिपरिमाणभेदे च।

**गोच्छाल** पु० गां भूमिमाच्छादयति छद-णिच् अण् पृ०। भूकदम्बे (चाकुलिया)।

**गोजा** स्त्री० गवि पृथिव्यां व्रीह्यादिरूपेण जायते विट् आत्त्वम्। व्रीह्यादिषु।

**गोजिह्वा** स्त्री० गोर्जिह्वेव। (गोजिया) लताभेदे। स्वार्थे कन् अत्रैवार्थे। [अच् (तरमुज) शीर्णवृन्ते पु०।

**गोडुम्बा** स्त्री० गां भूमिं तुम्बति अर्द्दते तुबि-क पृ०। (गोमुक)गवादन्यां।

**गोणी** स्त्री० गुण-घञ् नि० गुणः गोण+आवपनेऽर्थे ङीष्। धान्याधारे (गुण) ख्याते आवपनपात्रे छिद्रवस्त्रे, शाख्यां, "द्विशूर्पो गोणयुदाहृते"ति मानभेदे द्रोणीपरिमाणे च।

**गोण्ड** पु० गोरण्ड इव। नीचजातिभेदे (गोंड) वृद्धनाभौ च तद्वति।

**गोतम** पु० ब्रह्मणः पुत्रे स्वनामख्याते मुनिभेदे।

**गोतीर्थ** न० गोहेतुकं तत्स्थित्या तीर्थमिव। गोष्ठे।

**गोत्र** पु० गां पृथिवीं त्रायते त्रै-क। पर्वते। नामनि, कानने, क्षेत्रे, पथि, छत्रे, सजातीयगणे, पौत्राद्यपत्ये वंशे, ऋषिशब्दवाच्येषु

आदिपुरुषेषु शाण्डिल्यादिषु चतुर्विंशतौ मनुष्येषु च। विस्तरो वाचस्पत्ये।

**गोत्रज** त्रि॰ गोत्रे समाने गोत्रे जायते जन—ड। एकगोत्रोत्पन्ने।

**गोत्रभिद्** पु॰ गोत्रान् पर्वतान् भिनत्ति भिद्—क्विप्। इन्द्रे।

**गोत्रा** स्त्री॰ गोत्राः पर्वताः सन्त्यस्याः अर्श आदित्वादच्। धरायाम्। गो+समूहे त्रल्। गोसमूहे।

**गोदन्त** न॰ गोर्दन्त इवावयवो यस्य। हरिताले। हैत॰। गवां दन्ते पु॰।

**गोदान** न॰ गावः केशा दीयन्ते छिद्यन्तेऽत्र दो—ल्युट्। केशान्तरूप-संस्कारभेदे 'अथास्य गोदानविधेरनन्तर'मिति रघुः।

**गोदारण** न॰ गां भूमिं दारयति दृ—णिच्—ल्यु। लाङ्गले, कुद्दाले च।

**गोदावरी** स्त्री॰ नदीभेदे। गोदावरी। सरस्वति। इति जले तीर्थावाहनमन्त्रः।

**गोधन** न॰ गवां धनं समूहः। गोसमूहे। गौरेव धनमस्य। गोरूपधनवति त्रि॰। गौरेव धनम्। गोरूपे धने न॰।

**गोधा** स्त्री॰ गुध्यते वेष्ट्यतेऽवाङ्गुरनया करणे घञ्। धनुर्गुणाघातवारणाय प्रकोष्ठे बद्धे चर्मणि। कर्त्तरि अच्। (गोसाप) इति ख्याते सर्पभेदे 'शशकः शल्लकी गोधेति" मनुः। स्वार्थे कन् अत्रैवार्थे।

**गोधापदी** स्त्री॰ गोधेव पादो मूलमस्याः स्वाङ्गत्वात् जातित्वाच्च ङीपि पद्भावः। (गोयालिया) लताभेदे। स्वार्थे कन् अत्रैवार्थे।

**गोधास्कन्ध** पु॰ गोधेव स्कन्धोऽस्य। विट्खदिरे।

**गोधि** पु॰ गुध—इन्। ललाटे, गोधायां च।

**गोधिनी** स्त्री॰ गुध—णिनि। इष्टतीभेदे।

**गोधूम** पु॰ गुध—ऊम। व्रीहिभेदे (गोधुम) नागरङ्गे च।

**गोधूलि** पु॰ गोभ्य उत्थितो धूलिर्यत्र काले। (सन्ध्यातपाकणिन पश्चिमदिग्विभागे व्योम्नि स्फुरद्विरलतारकसन्निवेशे। रक्ते गवां खुरपुटोत्थितैरजोभिर्गोधूलिरित्युक्ते काले।

गोनर्द्द पु० गां जलं नर्दयति नर्द्द—अण्। सारसपक्षिणि, पर्व्वतभेदे च। कैवर्त्तीमुस्तके न०।

गोनर्द्दीय पु० गोनर्द्दे तत्समीपे देशे भवः। पाणिनौ मुनौ।

गोनस पु० गोरिव नासाऽस्य नसादेशः। सर्पभेदे।

गोप पु० गां भूमिं वा पाति रक्षति पा—क। (गोयाला) जातिभेदे। ग्रामाधिकृते भूरक्षके, उपकारके च त्रि०।

गोपघण्टा स्त्री० गोपप्रिया घोण्टा। हस्तिकोलौ 'बदरीसदृशाकारो वृक्षः सूक्ष्मफलो भवेत्। अटव्यामेव सा घोण्टा गोपघण्टेति कीर्त्तितेत्युक्तवृक्षे च।

गोपति पु० ६त०। गवां पत्यौ वृषे, (सांड) वृषपतौ शिवे, भूमिपतौ नृपे श्रीकृष्णे, किरणपतौ सूर्य्ये स्वर्गपतौ शक्रे, ऋषभनामौषधौ च।

गोपदल पु० गोपदमात्रस्थानं लाति ला—क। गुवाके।

गोपभद्र पु० न० गोपेभ्यो भद्रमस्मात् ५ब०। शालुके।

गोपभद्रिका स्त्री० गोपेभ्यो भद्रं यस्मात् ५ब० कप् अतइत्वम्। गाम्भार्य्याम्।

गोपवल्ली स्त्री० गां पाति पा—क कर्म०। मूर्व्वालतायाम् श्यामालतायां ( श्यामाघास )।

गोपा स्त्री० गां पाति पा—क टाप्। श्यामालतायाम्।

गोपानसी स्त्री० गवां किरणानां पानं शोषणं गोपानं स्यति सो-क गौरा० ङीष्। कुड्ये छादनार्थं वक्रे वक्रकाष्ठे, (सटनी) वस्त्र-नाधारे पटलाधारे वंशपञ्जरे च। [कृष्णे च।

गोपाल पु० गां सुरभीरूपभादिकं भूमिं वा पालयति। गोपार्थे,

गोपालकर्कटी स्त्री०। पाल—अण् गोपालस्य गोरक्षस्य प्रिया कर्कटी। क्षुद्रकर्कट्याम्।

गोपुच्छ पु० गोः पुच्छ इव पुच्छो यस्य। गोलाङ्गूलवानरे। गोपुच्छाकारत्वात् हारभेदे। ६त०। गोलाङ्गूले न०।

गोपुर न० गावः पूर्य्यन्ते यत्र पूूर—क। पुरद्वारे, कैवर्त्तीमुस्तके च।

गोप्य पु० गुप—यत्। रक्ष्ये दासीपुत्रे। रक्षणीयमात्रे, गुह्ये च त्रि०।

**गोमती** स्त्री० नदीभेदे, वेदमन्त्रभेदे च ।

**गोम** लेपने अद० चुरा० उभ० सक० सेट् । गोमयति-ते अजुगोमत्-त ।

**गोमन्त** पु० विन्ध्यपर्वतस्य प्रत्यन्तपर्वते ।

**गोमय** पु० न० गवां पुरीषम् गो+मयट् । गोपुरीषे (गोवर) ।

**गोमयच्छत्र** न० गोमये तदाधारस्थाने छत्रमिव । शिलीन्ध्रे (छातिया) ।

**गोमयोत्था** स्त्री० गोमयादुत्तिष्ठति उद्+स्था—क टाप् । (गुवरिया-पोका) कीटभेदे ।

**गोमायु** पु० गां विकृतां वाचं मिनोति मा—उण् । शृगाले, गन्धर्व-भेदे च ।

**गोमिन्** त्रि० गो+अस्त्यर्थे मिनि । गवां स्वामिनि । शृगाले पु० ।

**गोमुख** पु० गोरिव मुखमस्य । यक्षभेदे, नक्रे, कुटिलाकारे वाद्यभाण्ड-चौरकृतसन्धिभेदे, लेपने, तन्त्रोक्ते जपमालास्थापनार्थं पट्टवस्त्रा-दिनिर्मिते यन्त्रभेदे च । हिमालयैकदेशात् गङ्गापतनगुहायां स्त्री० ङीप् ।

**गोमूत्रिका** स्त्री० गोमूत्रं साधनत्वेनास्त्याः ठन् । गोमूत्रजातायां लतायां गोमूत्रतुल्यसन्निवेशविशेषवति काव्यबन्धे च ।

**गोमेद** पु० मणिभेदे, द्वीपभेदे च । "गोमेदे गोपतिर्भास इत्युपक्रम्य यज्ञवाटे हतागावो दग्धाः कोपाग्निना तदा । तन्मेदसा मही व्याप्ता गोमेदः स ततोऽभवदिति पुराणेऽस्य गोमेदता निरुक्ता ।

**गोमेध** पु० गावो मेध्यन्ते यत्र मेध—आधारे घञ् । यज्ञभेदे ।

**गोरक्ष** पु० रक्षतीति रक्ष—अच् । नारङ्गवृक्षे ( गोरक्षचाकुलिया ) । लताभेदे च । गोरक्षके त्रि० ।

**गोरक्षकर्कटी** स्त्री० कर्म० । क्षुद्रकर्कट्याम् (राखालकाँकुड़) ।

**गोरक्षजम्बु** स्त्री० गोरक्षे गोमे जम्बुरिव । घोण्टाफले गोधूमे च ।

**गोरक्षतण्डुली** स्त्री० गोरक्षं तण्डुलं बीजं यस्याः । (गोरक्षचा-कुलिया) क्षुपभेदे ।

**गोरक्षतुम्बी** स्त्री० गोरक्षो तुम्बी । कुम्भाकारतुम्ब्याम् ।

**गोरच** न० गौः किरण इव रोचते रुच—अच् । हरिताले ।

गोरोचना स्त्री० गोभ्योजाता रोचना हरिद्रा । स्वनामख्याते गन्ध-द्रव्ये "गोरोचनालक्तककुङ्कुमेनेति तन्त्रम् ।

गोर्द न० गुर अब्दादित्वात् नि० । मस्तिष्के मस्तकस्थे घृते ।

गोल पु० गुड—घञ् डलयोरैक्यम् । सर्वतोवर्त्तुले, मदनद्रुमे, भर्त्तरि मृते जारजे पुत्रे, ज्योतिषोक्ते भूगोले, खगोले, एकराशौ षड्ग्रहयोगे च । मण्डले न० । स्वार्थादौ कन् मृते भर्त्तरि जारजाते पुत्रे, मणिके, (जाला) गुडे, पिण्डे, गन्धरसे कलाये च ।

गोला स्त्री० गां दीप्तिं लाति ला—क । गोदावरीनद्याम् सख्यां, कुनद्यां, मनःशिलायां(?), मणिके, मण्डले, बालक्रीडनके च ।

गोलाङ्गूल पु० गोरिव कृष्णं लाङ्गूलमस्य । कृष्णमुखे वानरभेदे न्यायभेदे च । [ झिल्लीभेदे च (कातिया) ।

गोलास पु० गवि गोमये लासो जन्म यस्य । गोमयकीटे ।

गोलिह पु० गोभिर्लिह्यते लिह घञर्थे क । घण्टापाटलौ (घण्टा-पारुलि) ।

गोलीढ पु० गोभिर्लिह्यते लिह—क्त । घण्टापाटलौ (घण्टापारुलि) ।

गोलोक पु०न० ६त० । वैकुण्ठस्य दक्षिणभागस्थे स्थानभेदे, विष्णु-निवासस्थाने पु० ।

गोलोमिका स्त्री० गौः गोसदृशं लोमास्य ङीप् ततः स्वार्थे कनि अणो ह्रस्वः । (पायुरी) (गोधुमा) इति च ख्यातायां गन्धरियाम् क्रोष्टुकपुच्छायाञ्च ।

गोलोमी स्त्री० गौरिव गोलोमसदृशंलोमास्य ङीप् । श्वेतदूर्वायाम् । गोलोमस्य जाता अण् । वचायाम् । गोलोम्नामियम् अण् । वेश्यायाम् ।

गोवन्दनी स्त्री०गवि भूमौ वन्द्यते ल्युट् । प्रियङ्गौ, पीतचण्डोत्पले च ।

गोवर्द्धन पु० गां वर्द्धयति वृध—णिच् ल्यु । वृन्दावनस्थे पर्वतभेदे घासादिद्वारा तस्य हि गोवर्द्धकत्वम् ।

गोवर्द्धनधर पु०गोवर्द्धनं पर्वतं धारयति धृ—अच् । श्रीकृष्णे नन्दनन्दने ।

**गोविन्द** पु० गां विन्दति विद्–श। श्रीकृष्णे, वृहस्पतौ च। गवाध्यक्षे त्रि०।

**गोविश्** पु० न० द्रुत०। गोमये।

**गोशीर्ष** न० गोः शीर्षमिव "गोशीर्षः पर्वत स्तत्र जातत्वात्। मलयैक-देशे जाते चन्दने। ६त० गोमस्तके न०।

**गोशीर्षक** पु० गोशीर्षमिव कायति कै–क। द्रोणपुष्पीवृक्षे ऋषभा-द्रिजाते गोरोचनातुल्ये चन्दनभेदे च। [गोः शृङ्ग।

**गोशृङ्ग** पु० गोः शृङ्गमिव शृङ्गमग्रं यस्य। वर्वुरवृक्षे। ६त०।

**गोष्ठ** संघाते भ्वा० आत्म० सक० सेट्। गोष्ठते अगोष्टिष्ट।

**गोष्ठ** न० गावस्तिष्ठन्त्यत्र घञर्थे क षत्वम्। गवां स्थाने।

**गोष्ठी** स्त्री० गावोऽनेका वाचस्तिष्ठन्त्यत्र घञर्थे कः षत्वं गौरा० ङीष्। सभायाम्।

**गोष्पद** न० गोः पदम्, गावः पद्यन्ते यस्मिन् देशे वा सुट्। गोःपद-जाते गर्त्ते, गोपदप्रमाणे च। गोभिः सेवितो देशः। गोप्र-धाने देशे त्रि०।

**गोसंख्य** पु० गावः संचष्टे संचक्ष–श्च्। गोपे।

**गोसम्भवा** स्त्री० गोरिव सम्भवो लोमादिरूपकाणो यस्याः। श्वेत दूर्वायां। गोजाते त्रि०।

**गोसव** पु० गावः सूयन्ते बध्यन्तेऽत्र सु–अप्। गोमेधयज्ञे।

**गोस्तन** पु० गोः स्तना इव गुच्छो यस्य। चतुर्यष्टिकहारे।

**गोस्तनी** स्त्री० गोरिव स्तनः फलमस्याः। द्राक्षाभेदे।

**गोस्थानक** न० गवां स्थानं स्वार्थे कन्। गोष्ठे।

**गोहरितकी** स्त्री० गोः हरितकीव हितकारित्वात्। बिल्ववृक्षे।

**गोहित** पु० गवां हितं यस्मात् ५ब०। बिल्वे, घोषलतायाञ्च। गोहितकारके त्रि०।

**गौड** पु०। "वङ्गदेशं समारभ्य भुवनेशान्तगं शिवे!। गौडदेशः समा-ख्यात इत्युक्ते देशे। तद्देशस्थे जने ब० व०। "सारस्वताः कान्यकुब्जा गौडमैथिलकोत्कलाः पञ्च गौडा इति ख्यातविन्ध्य-

ड्योत्तरवासिनि इत्युक्ते विन्ध्यपर्वतोत्तरभागवासिषु ब्राह्मणभेदेषु च ।

गौडवास्तु(स्तू)क पु० न० "तदेव चेत् वृहत्पत्रं रक्तं स्याद्गौडवास्तुकमित्युक्ते वास्तूकभेदे । [रीतिभेदे च ।

गौडी स्त्री० गुडस्य विकारः अण् । सुराभेदे अलङ्कारोक्ते काव्य-

गौण त्रि० गुणादागतः अण् । गुणयोगात् प्रवृत्ते शब्दे अमुख्यवृत्त्योपपादितेऽर्थे च । शब्दनिष्ठे अर्थबोधकताशक्तिरूपे वृत्ति-भेदे स्त्री० ङीप् ।

गौतम पु० गोतमस्यापत्यम् । शिष्यो वा अण् । शतानन्दे नाचिकेतसो जनके मुनिभेदे, शाक्यसिंहे च ।

गौतमसम्भवा स्त्री० गौतमात् सम्भवतीति अच् गोदावरीनद्याम् ।

गौतमी स्त्री० गोतम+इदमर्थे अण् ततो ङीप् । गोतमप्रणीतायां षोडशपदार्थीरूपायाम् शाक्यसिंहप्रणीतायाञ्च विद्यायां, गोदावरीनद्याम्, राक्षसीभेदे, कृपभगिन्याञ्च ।

गौधार पु० गोधायाः अपत्यम् आरक् । गोधापुत्रे ।

गौधेय पु० गोधा+ढक् । गोधासुते ढक् गौधेरोऽप्यत्र ।

गौर पु० गुर—र नि० । श्वेतसर्षपे, चन्द्रे, धवहक्षे, अरुणवर्णे, श्वेतवर्णे च तत्तद्वर्णवति, विशुद्धे च त्रि० । स्त्रियां गौरी । केशरे, पङ्कजे, कुङ्कुमे, स्वर्णे च न० ।

गौरजीरक पु० कर्म० । श्वेतजीरके ।

गौरत्वच् पु० गौरी त्वक् यस्य । इङ्गुदीवृक्षे (जीवपुति) ।

गौरव न० गुरोर्भावः अण् । गुरुत्वे अभ्युत्थानादिसम्माने च ।

गौरवित त्रि० गौरवं जातमस्य तार० इतच् । पूज्ये ।

गौरशाक पु० गौरः शाकोऽस्य । मधूकभेदे ।

गौरी स्त्री० गौर+ङीष् "शङ्खेन्दुकुन्दधवला ततो गौरी तु सा मते" त्युक्तायां पार्वत्याम् "अष्टवर्षा भवेद्गौरी"त्युक्ताम् अष्टवर्षायाम् अजातरजस्कायां कन्यायां, हरिद्रायाम् दारुहरिद्रायां, गोरोचनायाम्, प्रियङ्गौ, भूमौ, नदीभेदे, मञ्जिष्ठायां श्वेतदूर्वायां, मल्लिकायाम्, तुलस्याम्, सुवर्णकदल्याम् आकाशमांस्यां रागिणीभेदे च ।

**गौरीपुष्प** पु० गौरीव पीतं पुष्पमस्य । प्रियङ्गुवृक्षे ।

**गौरीशिखर** न० पार्वती तपस्यास्थाने 'जगाम गौरीशिखरमिति कुमारः ।

**गौष्ठीन** न० पूर्वं भूतं गोष्ठं खञ् । भूतपूर्वगोष्ठे ।

ग्रथ कुटिलीकरणे आत्म० इदित् सक० सेट् । ग्रन्थते अग्रन्थिष्ट ।

**ग्रथित** त्रि० ग्रन्थ संदर्भे—क्त । गुम्फिते, हिंसिते, आक्रान्ते च ।

**ग्रन्थ** संदर्भे वा चु० पक्षे क्र्या० उभ० सक० सेट् । ग्रन्थयति–ते–ग्रथाति ग्रथीते अजग्रन्थत्, अग्रन्थीत् अग्रन्थिष्ट ।

**ग्रन्थ** पु० ग्रन्थ—घञ् । गुम्फने, धने च । करणे घञ् । शास्त्रे । अनुष्टुप्छन्दस्के पद्ये च ।

**ग्रन्थि** पु० ग्रन्थ—इन् । वंशादिसन्धौ (गांट) ख्याते कौटिल्ये, "ग्रन्थग्रन्थिरिह क्वचित्" इति नैषधम् । ग्रन्थि पर्णवृक्षे, बन्धने, रोगभेदे च । [ करीरे च । देवत्रे पु० ।

**ग्रन्थिक** न० ग्रन्थ—अस्त्यर्थे ठन् पिप्पलीमूले । ग्रन्थिपर्णे, गुग्गुलौ

**ग्रन्थिदूर्वा** स्त्री० ग्रन्थिमती दूर्वा (गांटदूर्वा) दूर्वाभेदे ।

**ग्रन्थिपर्ण** न० ग्रन्थिग्रन्थयुतं पर्णं यस्य । चोरनामगन्धद्रव्ये ।

**ग्रन्थिफल** पु० ग्रन्थि युक्तं फलमस्य । कपित्थवृक्षे, मदनवृक्षे, कुक्कुरे (कुकुरसोङा) ।

**ग्रन्थिभेद** पु० ग्रन्थिं भिनत्ति भिद—अण् ( गांटकाटा) चौरभेदे ) अङ्गुलिं ग्रन्थिभेदस्य छेदयेत् प्रथमे ग्रहे" इति स्मृतिः ।

**ग्रन्थिमत्** पु० ग्रन्थिः सन्धिरस्यास्ति मतुप् (हाड़जोड़ा) अस्थिसंहारकवृक्षे । ग्रन्थियुक्ते त्रि० ।

**ग्रन्थिमत्फल** पु० ग्रन्थिमत् फलं यस्य । (मान्दार) लकुचे ।

**ग्रन्थिमूल** न० ग्रन्थियुतं मूलमस्य । गृञ्जने (गाजर) ।

**ग्रन्थिमूला** स्त्री० ग्रन्थि ग्रन्थयुतं मूलमपि यस्याः । मालादूर्वायाम् ।

**ग्रन्थिल** न० ग्रन्थिं लाति ला—क । पिप्पलीमूले, आर्द्रके च । विकङ्कतवृक्षे, ( वइचि ) करीरे, तण्डुलीयशाके (पोदिना) भद्रमुस्तायां मालादूर्वायाञ्च स्त्री० । छितावल्लाम् पिण्डालौ चोरनामगन्धद्रव्ये पु० । ग्रन्थिमति त्रि० ।

**ग्रस** भक्षणे भ्वा० आत्म० सक० सेट्। ग्रसते अग्रसिष्ट ग्रसित्वा ग्रस्त्वा।

**ग्रस** भक्षणे वा० चुरा० उभ० पक्षे भ्वा० सक० सेट्। ग्रासयति-ते ग्रसति अजिग्रसत्-त अग्रासीत् अग्रसीत्।

**ग्रस्त** न० ग्रस-क्त। लुप्तवर्णपदे वाक्यविशेषे, भक्षिते त्रि०।

**ग्रह** ग्रहणे क्र्या० उभ० सक० सेट्। गृह्णाति गृह्णीते अग्रहीत् अग्रहीष्ट।

**ग्रह** आदाने वा चुरा० उभ० पक्षे भ्वा० पर० सक० वेट्। ग्राहयति ते ग्रहति। अजिग्रहत्-त अग्राहीत्-त अग्रहीत्।

**ग्रह** पु० ग्रह-अच् सूर्य्यादिषु नवसु। अनुग्रहे, निर्बन्धे ग्रहणे, रणोद्यमे, बालारिष्टकारकेषु पूतनादिषु, चन्द्रसूर्य्ययोर्ग्रासे च "तदा सम्भाव्यते ग्रहः" इति ज्योतिषम्।

**ग्रहण** न० ग्रह-भावादौ ल्युट्। स्वीकारे, आदाने, आदरे, कर्णे, ज्ञाने, बन्धने चन्द्रसूर्य्ययोर्ग्रासे, इन्द्रिये च।

**ग्रहणि(णी)** स्त्री० ग्रह-अनि वा ङीप्। स्वनामख्याते रोगभेदे।

**ग्रहणीहर** न० ग्रहणीं हरति हृ-अच्। लवङ्गे, ग्रहणीरोगहारिणि त्रि०। [ज्योतियान] वृक्षभेदे।

**ग्रहनाश** पु० ग्रहं ग्रहजन्यारिष्टं नाशयति नश-णिच्-अण्।

**ग्रहपति** पु० ६त०। सूर्य्ये एवं ग्रहनायकादयोऽप्यत्र।

**ग्रहयाग** पु० ग्रहेभ्यो यागः। अरिष्टनिवारणार्थं पुष्ट्यर्थं वा ग्रहोद्देशके यागभेदे।

**ग्रहाधार** पु० ६त०। ध्रुवनक्षत्रे।

**ग्रहवह्नि** पु० ग्रहाणां वह्निः। 'कपिलः पिङ्गलो धूमकेतुश्च जठराग्निकः। शिखी च हाटकश्चैव महातेजा हुताशनः। हुताशनश्च विज्ञेयो नवैते ग्रहवह्नय इत्युक्ते सूर्य्यादिक्रमेण वह्निभेदे।

**ग्राम** पु० ग्रस-मन् आदन्तादेशः "विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति हि। स तु ग्राम इति प्रोक्तः शूद्राणां वास एव वा" "तथा शूद्रजनप्रायाः सुसमृद्धकृषीवलाः क्षेत्रोपयोगभूमध्ये वसति ग्राम-

संनिवेश्य ग्रामचर्ये विप्रादीनां वासस्थाने, यथा कुटुम्बिनः सर्वेऽप्ये-कीभूता भवन्ति हि । तथा स्वराणां सन्दोहो ग्राम इत्यभिधीयते" इत्युक्ते स्वरभेदे, किञ्चिच्छब्दोपपदे तदर्थसंघाते च यथा शब्द-ग्रामः अर्थग्राम इत्यादि ।

**ग्रामगृह्या** स्त्री० ग्रह-बाह्यार्थे क्यप् । ग्रामवहिर्भूतायां सेनायाम् ।

**ग्रामणी** पु० ग्रामं नयति नी-क्विप् । णत्वम् । नापिते । पत्यौ, प्रधाने च त्रि० । ग्रामगम्यायां वेश्यायां, नीलिकायाञ्च स्त्री० ।

**ग्रामता** स्त्री० ग्रामाणां समूहः तल् । ग्रामसमूहे ।

**ग्रामधर्म्म** पु० ग्रामे भवः अण् कर्म० । मैथुने व्यवाये ।

**ग्राममुख** पु० ग्रामस्य मुखं यत्र । हट्टे ।

**ग्राममृग** पु० ६त० । कुक्कुरे ।

**ग्रामयाजक** पु० ६त० । ग्रामस्य नानावर्णानां याजके अपकृष्ट विप्रे ।

**ग्रामान्त** न० ६त० । ग्रामस्य समीपस्थे ग्रामनिकटे ।

**ग्रामीण** पु० ग्रामे भवः खञ् । कुक्कुरे, काके, ग्राम्यशूकरे च ग्रामोद्भवे त्रि० । ग्रामीणस्य प्रथमत इति भाषापरि० नीलिकौषधौ पालङ्क्यशाके च स्त्री० ।

**ग्राम्य** त्रि० ग्रामे भवः य । प्राकृते, मूढे, ग्रामभवे, ज्योतिषोक्ते मिथुनादिराशिभेदे "छागमेषवृषाश्वाद्या ग्राम्याः प्रोक्ता इत्युक्तेषु, पशुभेदेषु, अश्लीलव्यञ्जके भण्डादिवाक्ये, च । लवायां नी-ल्याञ्च स्त्री० ।

**ग्राम्यकन्द** पु०—कर्म० । कन्दभेदे (ग्रामेर ओल) ।

**ग्राम्यकर्कटी** स्त्री० कर्म० । कुष्माण्डे ।

**ग्राम्यकुङ्कुम** न० कर्म० । कुसुम्भे । [इत्युक्तेषु सप्तसु पशुषु ।

**ग्राम्यपशु** पु० कर्म० । "गौर्मेषोऽजो महिषश्च अश्वाश्वतरगर्द्दभाः"

**ग्राम्यवल्लभा** स्त्री० ६त० । पालङ्क्यशाके (पालङ्) ।

**ग्राम्याश्व** पु० कर्म० । गर्दभे ।

**ग्रावन्** पु० ग्रसते ग्रस-ड ग्रः आवनति वन-संभक्तौ विच् कर्म० । प्रस्तरे, पर्वते, मेघे च । दृढे त्रि० ।

ग्रास पु० ग्रस–घञ् । पिण्डाकारे अन्नादेः कवले "कुक्कुटाण्डप्रमाणं वा यावद्वा प्रविशेन्मुखम् । एतं ग्रासं विजानीया"दित्युक्ते मुखपूरणयोग्यान्नादौ ।

ग्राह पु० ग्रह–भावे घञ् । आदाने, ज्ञाने, ग्रहणे च । कर्त्तरि ण । जलजन्तुभेदे (हाङ्गर) । [त्रि० ।

ग्राहक पु० ग्रह–ण्वुल् । श्येनपक्षिणि विषवैद्ये च । ग्रहीतरि

ग्राहिणी स्त्री० ग्रह–णिनि । क्षुद्रदुरालभायाम् (विरङ्ग) ताम्रमूलावृक्षे, ग्रहीतृस्त्रियाञ्च । त्रि० ।

ग्राहिन् पु० ग्रह–णिनि । कपित्थे । ग्राहके, मलबन्धकारके च

ग्राहिफल पु० ग्राहि मलबन्धकं फलं यस्य । कपित्थवृक्षे ।

ग्राह्य त्रि० ग्रह–ण्यत् । ग्रहीतुमुचिते, ग्रहणयोग्ये, उपादेये, स्वीकार्य्ये, ज्ञेये च ।

ग्रीवा स्त्री० गॄ–व नि० । कन्धरायाम् ।

ग्रीष्म पु० ग्रस–म नि० । निदाघे, घर्मजनके आतपादौ तदाधारकाले ज्यैष्ठाषाढमासे, ऊष्मणि च तद्वति त्रि० ।

ग्रीष्मजा स्त्री० ग्रीष्मे जायते जन–ड । (लोणा आता) लवल्याम् नवमल्लिकायाञ्च ।

ग्रीष्मपुष्पी स्त्री० ग्रीष्मे पुष्पं यस्याः । करुणपुष्पवृक्षे ।

ग्रीष्मभवा स्त्री० ग्रीष्मे भवति भू–अच् । नवमल्लिकायाम् ।

ग्रीष्मसुन्दर पु० ७त० । (गिमा) शाकभेदे ।

ग्रुच चौर्य्ये गतौ च भ्वा० पर० सक० सेट् । ग्रोचति अग्रुचत्–अग्रोचीत् । ग्रुचित्वा ग्रुक्त्वा ।

ग्रैव न० ग्रीवायां भवम् अण् । ग्रीवाभरणे ।

ग्रैवेय न० ग्रीवायां भवं ढञ् । ग्रीवाभूषणे ढकञ् ग्रैवेयकमप्यत्र । "ग्रैवेयकं नोज्ज्वल"मिति साहि० ।

ग्लस भक्षणे भ्वा० आत्म० सक० सेट् । ग्लसते अग्लसिष्ट । ग्लसित्वा–ग्लस्त्वा ।

ग्लह आदाने वा चुरा० उभ० पक्षे भ्वा० सक० वेट् । ग्लाहयति ते ग्लहति अजग्लहत् त अग्लहीत् ।

ग्लह पु० ग्लह्–घ। द्यूताङ्गौ कृते पणे, द्यूते च।

ग्लास्नु त्रि० ग्लै–स्नु। ग्लानियुक्ते।

ग्लुच चौर्य्ये गतौ च भ्वा० पर० सक० सेट्। ग्लोचति अग्लुचत्–अग्लोचीत्। क्त्वा वेट्। [अग्लुचत्–अग्लुञ्चीत्।

ग्लुन्च चौर्य्ये गतौ च भ्वा० पर० सक० सेट् क्त्वा वेट्। ग्लुञ्चति

ग्लेप दैन्ये गतौ चाले च भ्वा० आत्म० सक० सेट्। ग्लेपते अग्लेपिष्ट। अजिग्लेपत्।

ग्लेव सेवने भ्वा० आ० सक० सेट्। ग्लेवते अग्लेविष्ट। अजिग्लेवत।

ग्लेष अन्वेषणे भ्वा० आ० सक० सेट्। ग्लेषते अग्लेषिष्ट अजग्लेषत्।

ग्लै क्षमे हर्षक्षये च भ्वा० पर० अक० अनिट्। ग्लायति अग्लासीत्।

ग्लौ पु० ग्लै–डौ। चन्द्रे, कर्पूरे च।

## घ

घ पु० घट–ड घण्टायां, घर्घरशब्दे च।

घग्घ हसने भ्वा० पर० अक० सेट्। घग्घति अघग्घीत्।

घट चेष्टायां भ्वा० आत्म० अक० सेट् घटादि। घटते अघटिष्ट घटयति। घटा।

घट हिंसे सक० सङ्घाते अक० चु० उभ० सेट्। घाटयति-ते अजीघटत्-त।

घट दूरतौ वा चु० उभ० पक्षे भ्वा० पर० अक० सेट्। घाटयति ते घटति। अजीघटत् त अघाटीत् अघटीत्।

घट शब्दकरणे चुरा० उभ० अक० सेट् इदित्। घण्टयति-ते अजघण्टत्।

घट पु० घट–अच्। कलसे, कुम्भशब्दार्थे परिमाणभेदे च।

घटक त्रि० घटयति स्वविशिष्टतया निरूपयति घट णिच्–ण्वुल्। वाक्यलक्षणादिषु मध्यपातिनि पदार्थे, योजके च।

घटना स्त्री० चु० घट–युच्। संहतकरणे, योजने, मेलने, करिणां समूहे च। [डम्बरे च।

घटा स्त्री० घट–अ। घटने, सभायां, समूहे, गजसंहतौ, मेघा-

घटिका स्त्री० "गुर्वक्षराणामुदितं च षष्ट्या पलं पलानां घटिका

किलके"ति ज्योतिर्विदाभरणोक्ते षष्टिपलात्मके दण्डरूपे काले। घटयति विहितकार्य्यकरणाय घट–णिच्–ण्वुल्। दण्डद्वयरूपे मुहूर्त्तात्मके काले। अल्पो घटः कन्। स्वल्पे घटे। इवार्थे कन्। नितम्बे न०। [काले। अल्पार्थे ङीप्। क्षुद्रे घटे।

**घटी** स्त्री० घटेन कालमानज्ञापकेन सच्छिद्रेण कुम्भेन साध्या दण्डात्मके

**घटीयन्त्र** न० इत०। कूपादितो जलोद्धारणयन्त्रे अरघट्टे, उद्घाटने, प्रहणीरोगभेदे च।

**घटोत्कच** पु० हिडिम्बायां राक्षस्यां भीमसेनाज्जाते राक्षसभेदे।

**घट्ट** चालने भ्वा० आत्म० सक० सेट्। घट्टते अघट्टिष्ट।

**घट्ट** चालने चुरा० उभ० सक० सेट्। घट्टयति-ते अजघट्टत्-त।

**घट्ट** पु० घट्यतेऽत्र घञ्। स्नानाद्यावतरणस्थाने (घाट) शुल्कग्रहण-स्थाने च। भावे घञ्। चालने।

**घट्टजीविन्** पु० घट्टे जीवति जीव-णिनि। (घाटुनि) प्रसिद्धे जातिभेदे।

**घट्टित** त्रि० घट्ट–क्त। निर्म्मिते, चालिते, चित्रपटादेरञ्जनार्थम् अभ्र-चूर्णमण्डेन लिप्ते वसनादौ (कलप दिए घोटा)।

**घण** दीप्तौ तना० उभ० अक० सेट्। घणोति घणुते। अघाणीत्-अघणीत् अघणिष्ट। घणित्वा–घण्त्वा।

**घण्टा** स्त्री० हन–ट तस्य नेत्त्वम् नि० घः। कांस्यादिनिर्मिते वाद्य-भेदे। अतिबलायां, नागबलायां, घण्टापारुलौ च।

**घण्टाकर्ण** पु० घण्टेव कर्णोऽस्य। शिवानुचरभेदे (घेंटु)।

**घण्टापथ** घण्टोपलक्षितः, घण्टावतां हस्त्यादीनां गमनयोग्यो वा पन्थाः टच्। "दशधन्वन्तरो राजमार्गो घण्टापथः स्मृत" इत्युक्त-परिमाणे नगरप्रधानवर्त्मनि।

**घण्टापाटलि** पु० हन्यते स्म हन–कर्म्मणि ट टस्य नेत्त्वम् घत्वं नि०, पट गतौ घञ् पाटस्तं लाति ला–डि कर्म०। (घण्टा-पारुलि) वृक्षभेदे। [फलं पक्वं सत् भज्झायते।

**घण्टारवा** स्त्री० घण्टेवारौति आ+रु–अच्। (वनशण) वृक्षभेदे यस्य

**घण्टाली** स्त्री० घण्टां तच्छब्दमलति अल–अण् ङीप् । कोषातक्याम् । ६त० । घण्टाश्रेण्यौ ।

**घण्टावीज** पु० घण्टेव वीजमस्य । जयपाले वृक्षे ।

**घण्टिका** स्त्री० क्षुद्रा घण्टा स्वल्पार्थे कन् । क्षुद्रघण्टायां तत्तुल्याकारत्वात् (आलजिव) तालुस्थजिह्वायाम् ।

**घण्टेश्वर** पु० व्रणदायके मङ्गलस्य मेधानाम्न्यां पत्न्यां जाते पुत्रे ।

**घन** पु० हन–अप् घनादेशः । मेघे, मुस्तायां, ओघे, दार्ढ्ये, काठिन्ये, विस्तारे, देहे, लौहमुद्गरे, कफे, अभ्रके, "तमत्रिघातश्च घनः प्रदिष्ट" इत्युक्ते सजातीयाङ्कत्रयघात्ये त्र्यगुणने च यथा त्रयाणां घनः २७ चतुर्णां ६४ । निविडे, सान्द्रे, पूर्णे, दृढे च त्रि० । कांस्यतालादिवाद्ये, मध्यमनृत्ये लौहे च न० ।

**घनकफ** पु० घनस्य मेघस्य कफ इव । मेघोपले करके ।

**घनच्छद** पु० घनो निविडश्छदो यस्य । शिग्रौ ।

**घनत्वच्** पु० घना निविडा त्वक् यस्य । लोध्रे ।

**घनद्रुम** पु० कर्म० । विकण्टकवृक्षे ।

**घननाभि** पु० ६त०। धूमे तस्य मेघयोनित्वात् तन्नाभित्वं "धूमज्योतिः सलिलमरुतां" मिति मेघदूते तद्धेतुतोक्ता ।

**घनपत्र** पु० घनानि पत्राण्यस्य । पुनर्णवायाम् ।

**घनपदवी** स्त्री० ६त० । आकाशे तस्य मेघाधारतया तत्सञ्चारस्थानतया च तथात्वम् ।

**घनरस** पु० घनस्य रसो निष्यन्दः । जले । कर्म० । सान्द्रनिर्यासादौ । कर्पूरे पीलुपर्ण्याम् पु० । ब० निविडरसे त्रि० ।

**घनवल्लिका** स्त्री० घना निविडा वल्ली । अमृतस्रवालतायाम् ।

**घनवल्ली** स्त्री० घनस्य मेघस्य वल्लीव । विद्युति । [जले च ।

**घनसार** पु० घनस्य सार इव शीतलत्वात् । कर्पूरे, दक्षिणावर्त्ते, पारदे,

**घनस्कन्ध** पु० घनः स्कन्धो यस्य । कोशाम्रवृक्षे ।

**घना** स्त्री० रुद्रजटायां माषपर्ण्याम् । [राजपथे ह्री"ति नैषधम् ।

**घनागम** पु० घनानां मेघानामागमो यत्र । वर्षाकाले "घनागमे

**घनाघन** पु० हन–अच् नि० । इन्द्रे वर्षकमेघे मत्ते–घातुके–गजे, चक्रे, अन्योन्यघट्टने च । निरन्तरघातुके त्रि० ।

**घनात्यय** पु० घनानामत्ययो यत्र काले । शरत्काले ।

**घनामय** पु० घनो दृढ़: आमयो यस्मात् ५ब० । खर्जूरवृक्षे ।

**घनामल** पु० घनोऽमल: विशेषणस० । वास्तूकशाके ।

**घनोपल** पु० ईत० । घनस्य उपल इव संहत्य कठिनत्वात् । करके ( शिल ) ।

**घम्ब** गतौ भ्वा० पर० सक० सेट् । घम्बति अघम्बीत् ।

**घरट्ट** पु० घृ–अच् घरोऽट्ट: यस्मात् ५ब० शक० । (जाँता) "प्रतिघरट्टपथे घरट्टजादि"ति नैषधम् ।

**घर्घर** पु० पुन: पुन: घरति यङ्लुक् अच् । चलद्वारिध्वनौ नटभेदे, द्वारे, स्वरभेदे च । क्षुद्रघण्टिकायाम् स्त्री० ।

**घर्घरिका** स्त्री० घर्घर+अस्त्यर्थे ठन् । क्षुद्रघण्टायाम् वाद्यभेदे । भ्रष्टधान्ये, नदभेदे च पु० ।

**घर्ब** गतौ भ्वा० पर० सक० सेट् । घर्बति अघर्बीत् ।

**घर्म** पु० घृ–सेके मक् नि० गुण: । घर्मार्त्तस्य गात्रात् निःस्यन्दिनि–जले, आतपे, ग्रीष्मे च । [ व्रणभेदे ।

**घर्मविचर्चिका** पु० घर्मोत्था विचर्चिका । (घामाचि) राजिका क्षतौ

**घर्षणाल** पु० घर्षणाय अलति पर्याप्नोति अल–अच् । शिलापुत्रके (नोडा) ।

**घर्षणी** स्त्री० घृष–कर्म्मणि ल्युट् ङीप् । हरिद्रायाम् ।

**घष(स)** क्षरणे भ्वा०आत्म०अक०सेट् इदित् घंष(स)ते अघंषि(सि)ष्ट ।

**घस** भक्षणे भ्वा०पर०सक०अनिट् । घसति । अघसत् । घस्ता घस्यति ।

**घस्मर** त्रि० घस–क्मरच् । भक्षणशीले ।

**घस्र** पु० घस–रक् । दिवसे । हिंस्रे त्रि० ।

**घाट** प्र० पु० घट–अच् । ग्रीवायाः पश्चाद्भागे । तत्रैवार्थे स्त्री० टाप् । स्वार्थे कन् अत इत्वार्थे ।

**घाण्टिक** पु० घण्टया चरति ठक् । "राज्ञां प्रबोधसमये घण्टाशि-

ल्यास्तु घाण्टिका" इत्युक्तलक्षणेषु राज्ञां प्रबोधनाय घण्टां वाद-
यित्वा स्तुतिपाठकेषु धुस्तूरे च। घण्टावादके त्रि०।

**घात** पु० हन—घञ्। प्रहारे, मारणे, अङ्कस्य पूरणे, गुणने च।
करणे घञ्। वाणे।

**घातिन्** त्रि० हन—तच्छीलार्थे णिनि। हननकरणशीले।

**घातुक** त्रि० हन—उकञ्। हिंस्रे, क्रूरे च।

**घार** पु० घृ-सेके घञ्। सेचने। [भक्ष्यभेदे (घिओड़)।

**घार्त्तिक** पु० घृतेन निर्मितः तस्य विकारो वा ठक्। घृतपूरे

**घास** पु० घस—कर्मणि घञ्। गवादीनां भक्ष्ये तृणभेदे।

**घिण** ग्रहणे भ्वा० आ० सक० सेट् इदित्। घिण्णते अघिण्णिष्ट।

**घु** ध्वनौ भ्वा० आत्म० अक० अनिट्। घवते अघोष्ट।

**घुट** आवर्त्तने भ्वा० आत्म० सक० सेट्। घोटते अघुटत् अघोटिष्ट।

**घुट** प्रतिघाते तु० कुटा० पर०सक० सेट्। घुटति अघुटीत् जुघोट।

**घुट** पु० तु० घुट—अच्। चरणग्रन्थौ गुल्फे। इन्। तत्रैवार्थे
स्त्री० वा ङीप्। स्वार्थे कन् अत्रैवार्थे।

**घुड** व्याघाते तु० कु० पर० सक० सेट् घुडति अघुडीत् जुघोड।

**घुण** भ्रमणे तु० आत्म० सेट् घोणते अघोणिष्ट।

**घुण** भ्रमणे तु० पर० सेट्। घुणति अघोणीत्।

**घुण** ग्रहणे भ्वा० आत्म० सक० सेट्। घुणते अघोणिष्ट।

**घुण** पु० घुण—क। स्वनामख्याते काष्ठभक्षकक्रमौ।

**घुण्ट** पु० घुट—क नि० नुम्। गुल्फे। स्वार्थे कन्। तत्रैवार्थे।

**घुर** ध्वनौ भीमभवने च तु० पर० अक०सेट्। घुरति अघोरीत्।

**घुर्घुर** पु० घुरित्यव्यक्तं ध्वनिं घुरति घुर—क। (घुर्घुरिया) कीटभेदे
शूकरशब्दे च "न घुर्घुरायित घुरीति मा० श्परि०।

**घुष** कान्तौ क्षतौच भ्वा० आत्म० सक० सेट् इदित्। घुंसते अघुंसिष्ट।

**घुष** बधे भ्वा० पर० सक० सेट्। घोषति अघुषत्।

**घुष** स्तुतौ आविष्करणे च वा चु० उभ० पक्षे भ्वा०पर० सक० सेट्।
घोषयति ते घोषति अजूघुषत् त। अघुषत्।

**घुसृण** न० घुस–क्नण्च् । कुङ्कुमे "घुसृणैर्यत्र जलाशयोदरे" इति नैषधम् ।

**घूक** पु० घू इति कायति कै–क । उलूके पेचके ।

**घूकारि** पु० ६त० काके तस्य पेचकवैरित्वं लोकप्रसिद्धम् ।

**घूकावास** पु० ६त० । शाखोटवृक्षे तस्य निबिडसूक्ष्मशाखायुतत्वेन कोटरतुल्यत्वात् दिवाभीरोर्घूकस्यावासस्थानत्वम् ।

**घूर** हिंसायां सक० जीर्णतायाम् अक० दि० आत्म० सेट् । घूर्यते अघूरिष्ट । घूर्णः । [ घूर्णितः ।

**घूर्ण** भ्रमणे तु० उभ० सक० सेट् घूर्णति ते अघूर्णीत् अघूर्णिष्ट

**घृ** सेके भ्वा० पर० सक० अनिट् । घरति अघार्षीत् । [घारितः ।

**घृ** सेके चु० उभ० सक० सेट् । घारयति ते अजीघरत् त । घारयिता

**घृ** भासे अक० सेके सक० जु० पर० अनिट् जिघर्त्ति अघार्षीत् ।

**घृण** दीप्तौ तना० उभ० अक० सेट् । घर्णोति घर्णुते अघर्णीत् ।

**घृण** ग्रहणे भ्वा० आत्म० सक० सेट् इदित् । घृण्णते अघृण्णिष्ट ।

**घृणा** स्त्री० घृ–सेके नक् । कारुण्ये, दयायां, जुगुप्सायाञ्च ।

**घृणि** पु०घृ–निनि० गुणाभावः । किरणे, ज्वालायां, तरङ्गे, सूर्य्ये च ।

**घृत** न० घृ–भासे भावे क्त । दीप्तौ । कर्त्तरि क्त । दीप्ते त्रि० । सेकार्थस्य कर्त्तरि क्त । जले, पक्वनवनीते सर्पिषि च न० ।

**घृतकुमारी** स्त्री० घृतप्रधाना कुमारी । स्वनामख्यातायामोषधौ तस्या हि दले दलिते घृतमिव स्रवति ।

**घृतपूर** पु० घृतेन पूर्य्यते पूर–घञ् । पक्वान्नभेदे ( घिओड ) ।

**घृताची** स्त्री० अप्सरोभेदे ।

**घृष** संघर्षे सक० हर्षे अक०भ्वा० आत्म० सेट् घर्षते अघर्षिष्ट ।

**घृष्टि** पु० घृष–क्तिच् । वराहे । क्तिन् । घर्षणे, स्पर्द्धायां, विष्णुक्रान्तायां, वाराह्याञ्च स्त्री० ।

**घृष्टिला** स्त्री० घृष्टिं लाति ला–क । पृश्निपर्ण्याम् । (चाकुलिया) ।

**घोट(क)** पु० घुट–अच् ण्वुल् वा । अश्वे । [ प्रसिद्धः ।

**घोटकारि** पु० ६त०। महिषे, तस्य महिषेण सह वैरिभावस्य लोके

**घोणा** स्त्री० घुण–अच्। अश्वनासिकायां, नासामात्रे च।

**घोणिन्** पु० घोणा नासाऽस्त्यस्य प्रौढ्यादित्वात् इनि। वराहे तस्य दीर्घनासत्वात् तथात्वम्।

**घोण्टा** स्त्री० घुण–ट तस्य नेत्त्वम्। (सेयाकुल) बदरीभेदे।

**घोर** पु० घुर–अच्। शिवे, ऋषिभेदे, सांख्योक्तेषु रजःप्रधानेषु आकाशादिविशेषधर्मेषु। विषे न०। दारुणे, भयानके, दुर्गमे च त्रि०।

**घोररासन** पु० घोरं रासनं शब्दोऽस्य। शृगाले।

**घोरा** स्त्री० घुर–अच्। देवताडीलतायां, भयानकायां रात्रौ, सांख्योक्तायां राजस्यां मनोवृत्तौ, ज्योतिषोक्ते "रवावुग्रभे संक्रमे भास्करस्य भवेद्घोर" नाम्नीत्युक्ते रविसंक्रान्तिभेदे च।

**घोल** पु० न० घुड–कर्मणि घञ् डस्य लः। तक्रे मथितदध्नि।

**घोष** पु० घोषन्ति गावोऽत्र घुष–आधारे घञ्। आभीरपल्लीग्रामे भावे घञ्। ध्वनौ, अम्बुदनादे च। कर्त्तरि अच्। अपामार्गे, व्याकरणोक्ते वर्णविशेषोत्पत्तौ बाह्यप्रयत्नभेदे च। कांस्ये न०।

**घोषणा** स्त्री० घुष–णिच्–युच्। लोकेख्यापनार्थं उच्चैः शब्दकरणे।

**घोषा** स्त्री० घुष्यते भ्रमरैरियं कर्मणि घञ्। शतपुष्पायां, मधुरिकायां, कर्कटशृङ्ग्यां, कोषातक्याञ्च।

**घ्रा** गन्धग्रहणे भ्वा० पर० अक० घ्राणमात्रे सक० अनिट्। जिघ्रति अघ्रात्–अघ्रासीत्। घ्राणः–घ्रातः। [ आघ्राते त्रि०।

**घ्राण** न० घ्रायतेऽनेन घ्रा–ल्युट्। नासिकायाम् घ्रा–क्त।

**घ्राणतर्पण** पु० घ्राणं नासिकां तर्पयति तृप्–णिच्–ल्यु। सुगन्धौ।

## ङ

**ङ** पु० ङु–ड। विषये, विषयरक्षायाम्।

**ङु** ध्वनौ भ्वा० आत्म० अक० अनिट्। ङवते अङोष्ट।

## च

**च** अव्य० चि–ड। अन्वाचये (एकस्य प्राधान्येनेतरस्यानुषङ्गिकत्वेनोक्तौ

यथा ग्रामं गच्छ अजाञ्चानय अत्र ग्रामगमनमेव मुख्यमजानयनन्वानुषङ्गिकम् । समुच्चये ( परस्परापेक्षारहितस्यानेकस्य एकस्मिन् कर्मादौ अन्वये ) यथा पिता पुत्रश्च ग्रामं गच्छति । अत्रैकस्मिन् गमने कर्मणि पितुरिव पुत्रस्यापि अन्वयः । इतरेतरयोगे ( परस्पर सापेक्षाणामेकस्मिन् कर्मादावन्वये ) तत्र च द्वन्द्वसमासएव यथा पितापुत्रौ गच्छतः । अत्रोभयोरपि एकस्मिन् प्रत्येकरूपेण गमने परस्परसापेक्षतयैवान्वयः अन्वाचयादयमेवास्य विशेषः । सापेक्षता च स्वघटितनामोत्तरवर्त्ति विभक्त्यन्वयित्वेन । समाहारे (मिलितानामन्वये) यथा हस्तपादं वादयति अत्र हस्तादीनां मिलितानामेवान्वयः इतरेतरयोगे तु प्रत्येकस्यान्वयः अथवा तद्वर्त्ति पदसमुदयोपस्थाप्यतत्तत् पदार्थसंहतिरेव तत्र प्रधानं संहतेश्चैकत्वात् तत्रैकवचनता । व्यासवाक्ये च चकारेणोभयत्र इतरेतरयोगस्य समाहाररूपसंहतेश्च प्राधान्यं द्योत्यते । पक्षान्तरे, अवधारणे, हेतौ, तुल्यत्वे, विनियोगे, पादपूरणे च । कच्छपे, चन्द्रे, कच्छपे, चौरे च पु० । दुर्जने निर्बीजे च त्रि० ।

चक भ्रान्तौ भ्वा० पर० अक० सेट् इदित् चङ्कति अचङ्कीत् ।

चक प्रतिघाते सक० तृप्तौ अक० भ्वा० उभ० सेट् घटा० । चकति–ते अचकीत्–अचाकीत् अचकिष्ट । चकयति ।

चकास दीप्तौ अदा० जक्षा० पर० अक० सेट् । चकास्ति अचकासीत् । अचचकासत् ।

चकित न० चक–भावे क्त । भये, । कर्त्तरि क्त । भीते त्रि० । षोडशाक्षरपादके छन्दोभेदे स्त्री० ।

चकोर पु० चक–तृप्तौ ओरन् । स्वनामख्याते–पक्षिभेदे चकोर पारणकरीति मुरारिः ।

चक्क अर्त्तौ चुरा० उभ० सक० सेट् । चक्कयति–ते अचचक्कत्–त ।

चक्र पु० क्रियतेऽनेन कृ–घञर्थे क नि० द्वित्वम् । चक्रवाके पक्षिणि, (चक्रा) रथाङ्गे, (चाका) सैन्ये, समुदाये, राष्ट्रे दम्भभेदे, कुम्भकारोपकरणे, “कलसे निजहेतुदण्डजः किमु चक्रभ्रमिकारिते”ति

नैषधम् वस्त्रभेदे, । पुटभेदे, जलावर्त्ते, ग्रामजाले, तगरपुष्पे, व्यूहभेदे, तन्त्रोक्तेषु मूलाधारादिषु स्थितेषु षट्सु पद्मेषु, देवार्चनयन्त्रेषु, "श्रीचक्रमेतदुदितमि"ति तन्त्रम् । मन्त्रदीक्षोपयोगिषु अकडमादिषु, वीरादिचक्रेषु, "प्रवृत्ते भैरवीचक्रे सर्वे वर्णा द्विजोत्तमा" इति तन्त्रम् अलङ्कारोक्ते काव्यबन्धविशेषे च न० । अर्द्धर्चादित्वात् द्विलिङ्गत्वेऽपि लक्ष्यभेदेनैवास्य लिङ्गनियमः ।

**चक्रक** पु० चक्रमिव कायति कै—क । स्वापेक्षापेक्ष्यपेक्षित्वनिबन्धनेऽनिष्टप्रसङ्गरूपे तर्कभेदे ।

**चक्रकारक** न० नखाकृतित्वेन चक्रवत् वेष्टनं करोति कृ—ण्वुल् ६ त० । व्याघ्रनखाख्ये गन्धद्रव्ये ।

**चक्रकुल्या** स्त्री० चक्रस्य तद्वद्वेष्टनाकारस्य कुल्येवाधारः । (चाकुलिया) पृश्निपर्ण्याम् । [(दादमर्दन)।

**चक्रगज** पु० चक्रे चक्राकारे दद्रुरोगे गजइव मर्द्दकत्वात् । चक्रमर्द्दे ।

**चक्रगुच्छ** पु० चक्रमिव वेष्टनाकारो गुच्छःस्तवको यस्य । अशोकवृक्षे ।

**चक्रधर** पु० चक्रमस्त्रभेदं फणामण्डलं वा धारयति धृ—अच् । विष्णौ, सर्पे च ।

**चक्रधारा** स्त्री० चक्रस्य धाराग्रम् । चक्राग्रे यदंशेऽस्य तीक्ष्णता स चाग्रे एवेत्यग्रमेव धारा । [गन्धद्रव्ये ।

**चक्रनख** पु०चक्राकारो नखइव नृभ्रादि० न णत्वम् । व्याघ्रनखाख्ये ।

**चक्रपद्माट** पु० पद्मं पद्मवनमटति अण् । पद्माटोगजश्चक्रे चक्राकारे दद्रुरोगे पद्माटः गजइव मर्द्दकत्वात् । चक्रमर्द्दे वृक्षे (दादमर्दन) ।

**चक्रपर्णी** स्त्री०चक्रमिव पर्णमस्याः ङीप् । (चाकुलिया) पृश्निपर्ण्याम् ।

**चक्रपाणि** पु० चक्रं प्रहरणं पाणौ यस्य । विष्णौ ।

**चक्रपाद** पु० चक्रं पाद इव गतिसाधनत्वात् यस्य । रथे चक्रमिव पादोऽस्य । हस्तिनि ।

**चक्रपुष्करिणी** स्त्री० हरिचक्रेण निखाता पुष्करिणी । काशीनीथस्थे मणिकर्णिकाख्ये चक्रतीर्थे । [र्योगः ।

**चक्रबन्धु** पु० चक्रयोः मेलकत्वात् बन्धुरिव । सूर्ये दिवाहि तयो

**चक्रभेदिनी** स्त्री० चक्रौ भिनत्ति परस्परं वियोजयति भिद्—णिनि । रात्रौ तत्र हि तयोर्वियोगः लोकप्रसिद्धः ।

**चक्रभ्रम** पु० चक्रमिव भ्रमति अच् । कुन्दाख्ये शिल्पिनां यन्त्रभेदे ।

**चक्रमर्द्द** पु० चक्रं चक्राकारं दद्रुरोगं मृद्नाति मृद—अण् । (दादमर्दन) क्षुपभेदे । एडल् । चक्रमर्द्दकोऽप्यत्र ।

**चक्रला** स्त्री० चक्रं रोगभेदं लाति ला—क । उच्चटायाम् मुस्ताभेदे ।

**चक्रवर्त्तिन्** पु० चक्रे भूमण्डले, वर्त्तितुं, चक्रं सैन्यचक्रं वा सर्वभूमौ वर्त्तयितुं शीलमस्य वृत-णिच् वा णिनि । समुद्रपर्य्यन्तक्षितेरधीश्वरे, वास्तूकशाके च । चक्रवत् वर्त्तिनि त्रि० । जतुकायां जटामांस्याम् अलक्तके च स्त्री० ङीप् ।

**चक्रवाक** पु० चक्रशब्देन उच्यते वच—परिभाषणे कर्म्मणि घञ् । स्वनामख्याते खगे । [मण्डले न० ।

**चक्रवाडल** पु० चक्रमिव वाडते वेष्टयति अच् । लोकालोकपर्वते ।

**चक्रवृद्धि** स्त्री० "वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृते"ति स्मृत्युक्ते वृद्धिभेदे ( सुदेर सुद ) । [मण्डलाकारे सैन्यस्थापने ।

**चक्रव्यूह** पु० चक्रमिव व्यूहः सैन्यस्थितिरचनाविशेषः । युद्धार्थं

**चक्रा** स्त्री० चक-दीप्तौ रक् । नागरमुस्तायां, कर्कटशृङ्ग्याञ्च ।

**चक्राङ्ग** पु० चक्रमङ्गमङ्गे चक्रमिवाङ्गं यस्य । हंसे । चक्रमङ्गमस्य । रथे । [मञ्जिष्ठायाञ्च ।

**चक्राङ्गी** स्त्री० चक्रं वृत्तिकरमङ्गमस्याः । कटुरोहिण्यां, हिलमोचिकायां,

**चक्रिन्** पु० चक्र+अस्त्यर्थे इनि । विष्णौ, सर्पे, चक्रवाके, कुम्भकारे, सूचके, तैलिकभेदे चक्रवर्त्तिनि, चक्रमर्द्दे व्यालनखे, खरे, ग्रामजालिके च । चक्रवति त्रि० । [गर्दभे, क्षुपभेदे च ।

**चक्रीवत्** पु० चक्रवत् भ्रमणमस्यास्ति मतुप् मस्य वः नि० अत ईत्त्वम् ।

**चक्ष** कथने त्यागे च अदा० आत्म० सक० सेट् । चष्टे । अख्यत अख्यत ख्यास्यते अक्शासीत् अक्शास्त । त्यागे तु समचक्षिट ।

**चक्षण** न० चक्ष—ल्युट् न ख्यादेशः । मद्यपानरोचके आदंशे (चाकना)

चक्षुःश्रवस् पु० चक्षुषा शृणोति श्रु—असुन् चक्षुरेव श्रवः कर्णौ यस्य वा। सर्पे।

चक्षुष्य पु० चक्षुषे हितः यत्। केतके, पुण्डरीकवृक्षे, शोभाञ्जने, रसाञ्जने च। सौवीराञ्जने, स्थलपद्मे, खर्परीतुत्थे च न०। प्रियदर्शने, चक्षुर्हिते च त्रि०। कुलत्थिकायां, सुभगायाम्, अजशृङ्ग्याम्, वनकुलत्थिकायाञ्च स्त्री०।

चक्षुस् न० चक्ष—उसि शिच्च तेन न ख्यादेशः। लोचने।

चघ यातने स्वादि० पर० सक० सेट्। चघ्नोति अचघीत् अचाघीत्।

चङ्कुर पु० स्त्री० चकि उरच्। रथे, वृक्षे च। यानमात्रे न०।

चङ्क्रमण न० क्रम—यङ्—ल्युट्। पुनःपुनर्भ्रमणे, अतिशयभ्रमणे, इतस्ततो भ्रमणे, कुटिलभ्रमणे च।

चञ्चरी स्त्री० चनुच—गतौ घञ् तं लाति ला—क रस्य लः चञ्च+अस्त्यर्थे र वा गौरा० ङीप्। भ्रमर्य्यां, तिन्तिडीवृक्षे च।

चञ्चरीक पु० चर—ईकन् पर्फरीकादित्वात् नि०। भ्रमरे।

चञ्चल पु० चनुच—अलच् चञ्चं गतिं वा लाति ला—क वा। कामुके, वायौ च। चपले, अस्थिरे च त्रि०। विद्युति, लक्ष्म्याञ्च स्त्री०।

चञ्चा स्त्री० चनुच—अच्। नलनिर्म्मिते कटभेदे ( चाँच ) चञ्चेवेति इवार्थे कन् "लुप् मनुष्ये" इति तस्य लुप्। तृणमयपुरुषे।

चञ्चु पु० चनुच—उ। एरण्डके, रक्तैरण्डे, नाड़ीचशाके च। पक्षिणामोष्ठे (ठोट)। अत्र वा ऊङ् इत्यन्ये। चञ्चूः।

चञ्चुसूचि पु० स्त्री० चञ्चुः सूचिरिव यस्य। कारण्डपक्षिणि स्त्रीत्वपक्षे वा ङीप्। अलैव।

चट भेदे भ्वा० पर० सक० सेट्। चटति अचटीत्—अचाटीत्।

चट बधे भेदे च चु० उभ० सक० सेट्। चाटयति ते अचीचटत्—त।

चटक पु० चटति भिनत्ति धान्यादिकम् कुन्। कलविङ्के (चड़ुइ) स्वार्थ कन् चटककोऽप्यत्र। जातौ स्त्रियामजादित्वात् टाप् न तु ङीप्। कन्पक्षे चटकिका।

चटकाशिरस् पु० चटकायाः शिर इव। पिप्पलीमूले।

चटु पु० चट-कु। प्रियवाक्ये, व्रतिनामासनभेदे, उदरे च। क्लीवत्वमपीत्यन्ये।

चटुल त्रि० चट-उलच्। चञ्चले, चपले। विद्युति स्त्री०।

चड कोपे भ्वा० आत्म० अक० सेट् इदित्। चण्डते अचण्डिष्ट।

चड कोपे चुरा० उभ० अक० सेट् इदित्। चण्डयति ते अच-चण्डत् त। [चाणयति।

चण शब्दे भ्वा० पर० सक० सेट्। चणति अचाणीत्-अचणीत्।

चण गतौ हिंसे च भ्वा० पर० सक० सेट् वा घटा०। चणति अचा-णीत् अचणीत्। चणयति-चाणयति।

चण दाने भ्वा० पर० अक० सेट् घटा०। चणति अचणीत्-अचा-णीत्। चणयति। [गोत्रापत्यं चाणक्यः।

चणक पु० चण-दाने क्वुन्। शस्यभेदे (बुट) (छोला) मुनिभेदे च यस्य

चण्ड पु० चडि-कोपे-अण्। तिन्तिडीवृक्षे, यमदूते, दैत्यभेदे च। तीक्ष्णे न०। तीक्ष्णतावति कोपने च त्रि०। स्त्रियां ङीप्। चण्डी। "मल्लिकामुकुले चण्डी"त्युद्भटः।

चण्डा पु० चडि-अच् टाप्। चोरनामगन्धद्रव्ये, शङ्खपुष्प्याम् लिङ्गिनीलतायां, कपिकच्छ्वां, आखुपर्ण्यां, श्वेतदूर्वायां, पद्मावती नद्याञ्च।

चण्डांशु पु० चण्डास्तीव्रा अंशवो यस्य। सूर्य्ये।

चण्डात पु० चण्डमतति अत-अच्। करवीरे।

चण्डातक पु०न० चण्डां कोपनामतति अत-ण्वुल्। वरस्त्रीणा मर्द्धो-रुपर्य्यन्ते वस्त्रे। [आह्मण्यामुत्पादिते सङ्कीर्णवर्णे

चण्डाल पु० चडि-आलच्। स्वनामख्याते जातिभेदे, शूद्रेण

चण्डिमन् पु० चण्डस्य भावः इमनिच्। उग्रत्वे।

चण्डी स्त्री० चडि-अच् बह्वादित्वात् ङीप् कोपवत्यां, दुर्गायां तन्मा-हात्म्ययुक्तत्वात् सप्तशतीनामके स्तोत्रे च "चण्ड्याः शतावृत्ति पाठादिति स्मृतिः।

चण्डीकुसुम पु० चण्डीप्रियं कुसुमं यस्य। रक्तकरवीरवृक्षे।

**चत** याचने भ्वा० उ० द्विक० सेट् । चतति–ते अचतीत् अचतिष्ट ।

**चतुःपत्री** स्त्री० चत्वारि चत्वारि पत्राण्यस्याः । क्षुद्रपाषाणभेदे ।

**चतुःपर्णी** स्त्री० चत्वारि चत्वारि प्रतिपर्णं पर्णान्यस्याः । क्षुद्राम्लिकायाम् (आमरुल्) ।

**चतुःफला** स्त्री० चतुर्धा विभक्तं फलमस्याः । नागबलायाम् ।

**चतुःशाला** न० चतस्रः अन्योन्याभिमुख्यः शाला यत्र । अन्योन्याभिमुखगृहचतुष्कयुतभवने, "एकग्रामे चतुः शाले, दुर्भिक्षे इति ज्योतिषम् ।

**चतुःसम** न० चत्वारि समानि यत्र । "लवङ्ग' जीरकं पथ्या यमानी च चतुःसममित्युक्ते लवङ्गादितुल्यचतुर्द्रव्यात्मके औषधे, कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य तु । कुङ्कुमस्य त्रयश्चैव शशिनस्य चतुःसम मित्युक्तेषु मिलितेषु तत्तत्परिमाणान्वितकस्तूरीचन्दनकुङ्कुमकर्पूरेषु च । वा सत्वं चतुःसममप्युभयत्र ।

**चतुर्** त्रि० ब०व०चत–उरन् । चतुःसंख्यायाम्, चतुःसंख्यान्विते च । स्त्रियां चतस्रः । [ नेत्रगोचरे च त्रि० ।

**चतुर** पु० चत–उरच् । हस्तिशालायाम् । कार्य्यकुशले, दक्षे

**चतुरङ्ग** न० चत्वारि अङ्गानि यस्य । हस्त्यश्वरथपदातिरूपाङ्गचतुष्टययुते सैन्ये । रक्तहरितपीतश्यामलरूपाणि चत्वारि बलरूपाणि क्रीड़ासाधनान्यङ्गान्यस्य । (चतुराजी क्रीड़ाभेदे ।

**चतुरङ्गुला** स्त्री० चतस्रोऽङ्गुल्यः प्रमाणमस्य पर्वणः अच्समा० । आरग्वधे (सोन्दाल) ।

**चतुरस्र** त्रि० चतस्रः अस्रयः कोणाः यस्य सुतप्रातेत्यादि नि० । चतुष्कोणे, ज्योतिषोक्तयोः लग्नाच्चतुर्थाष्टमस्थानयोश्च । दन्त्यगर्भ चतुरस्रमित्यन्ये । [सुखादयोऽप्यत्र ।

**चतुराननं** पु० चत्वारि आननानि यस्य । ब्रह्मणि एवं चतु

**चतुर्थ** त्रि० चतुर्णां पूरणः । येन चतुः संख्या पूर्य्यते तादृशे तुरीये ।

**चतुर्थांश** पु० चतुर्थोऽंशः । चतुर्भागैकभागे पादे, "चतुर्थांशहराः स्मृता" इति स्मृतिः ।

**चतुर्थी** स्त्री० चन्द्रस्य चतुर्थकलायाः प्रवेशनिर्गमनरूपक्रियात्मकतिथौ । व्याकरणोक्तेषु ङे भ्याम् इति प्रत्ययेषु च ।

**चतुर्दन्त** पु० चत्वारो दन्ता अस्य । ऐरावते इन्द्रगजे ।

**चतुर्दशन्** त्रि० ब० व० । चतुरधिका दश । संख्याभेदे तत्संख्याते पदार्थे च । तत्संख्यापूरणे तु डट् । चतुर्दशः स्त्रियां चतुर्दशी । चन्द्रस्य चतुर्दशकलाक्रियायां चतुर्दशी ।

**चतुर्दोल** न० चतुर्भि र्वाह्यते यत्, चतुर्दोलं तदुच्यते इत्युक्ते द्विपदैश्चतुर्भि र्वाह्ये यानभेदे (चौदोल) ।

**चतुर्धा** अव्य० चतुःप्रकारम् धाच् । चतुःप्रकारे ।

**चतुर्भद्र** न० चत्वारि भद्राणि धर्मार्थकाममोक्षरूपाणि कल्याणानि अन्यूनानतिरेकेण समाहृतानि । मिलिते धर्मादिचतुष्टये ।

**चतुर्भुज** पु० चत्वारो भुजा हस्ता यस्य । नारायणे ।

**चतुर्युग** न० चतुर्णां युगानां समाहारः पात्रादित्वान्न ङीप् । सत्यत्रेताद्वापरकलिरूपयुगचतुष्टये "त्रित्रियं तच्चतुर्युगमिति मनुः ।

**चतुर्वर्ग** पु० चतुर्णां धर्मार्थकाममोक्षाणां वर्गः समुदायः । धर्म्मार्थकाममोक्षेषु चतुर्षु पुरुषार्थेषु ।

**चतुर्विंशति** स्त्री० चतुरधिका विंशतिः । (चब्बिश) चतुर्युतविंशतिसंख्यायाम्, तत् संख्याते च ।

**चतुर्विद्य** पु० चतस्रो विद्या वेदज्ञानरूपा यस्य । चतुर्वेदवेत्तरि । प्रज्ञाद्यणि द्विपदवृद्धिः । चातुर्विद्योऽप्यत्र ।

**चतुर्विधशरीर** न० कर्म० । जरायुजाण्डजस्वेदजोद्भिज्जेषु शरीरेषु । चतुर्विधशरीराणि धृत्वा मुक्ता सहस्रश इति ।

**चतुर्व्यूह** पु० सृष्ट्यादिकार्यार्थं चत्वारो व्यूहा विभागा यस्य । वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धात्मके विष्णौ । [चतुष्क ।

**चतुष्क** न० चतुर्भिः स्तम्भैः कायति कै-क । चतुःस्तम्भयुक्तमण्डपे । कन्

**चतुष्टय** त्रि० चत्वारोऽवयवा विधा अस्य तयप् । चतुर्विभागवति चतुष्के च । स्त्रियां ङीप् "प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी" ति कुमारः । [ (चुचुनी) शाकभेदे ।

चतुष्पञ्ची स्त्री० चत्वारि चत्वारि प्रत्येकपत्रे पत्राण्यस्याः ङीप् ।
चतुष्पथ पु० चत्वारः पन्थानः ब्रह्मचर्यादयः आश्रमा यस्य अच् समा० । ब्राह्मणे । चतुर्णां पथां समाहारः अच् । (चौमाथा) चतुर्मुखे पथि ।
चतुष्पद् पु० चत्वारि पदानि चरणा यस्य । गवादौ पशौ । ज्योतिषोक्ते करणभेदे, मेषवृषसिंहधनुरन्त्यार्द्धमकरपूर्वार्द्धरूपराशिभेदे च । पादशब्दस्य पद्भावे चतुष्पादप्यत्र ।
चतुष्पदी स्त्री० चत्वारः पादा अस्याः पादस्य पद्भावे ङीपि पद्भावः । चतुश्चरणात्मके पद्ये । [ चतुर्द्वात्रिंशिकायाम् ।
चतुष्पर्णी स्त्री० चत्वारि चत्वारि प्रतिपर्व्व पर्णान्यस्याः । (आमरुल)
चतुस्त्रिंशत् त्रि० चतुरधिका त्रिंशत् । चतुरधिकायां त्रिंशति (चौतिश) तत्संख्याते च चतुश्चत्वारिंशदादयोऽप्येवम् ।
चत्वर न० चत-ष्वरच् । स्थण्डिले, यागार्थं संस्कृतभूमौ, अङ्गने च (उठान) । [ (चल्लिश) संख्याभेदे तत्संख्याते च ।
चत्वारिंशत् स्त्री० चत्वारि दशतः परिमाणमस्य नि० ।
चत्वाल पु० चत-वालच् । होमकुण्डे, दर्भे च ।
चद् याचने भ्वा० उभ० द्विक० सेट् । चदति-ते अचदीत् ।
चद् आह्लाते दीप्तौ च भ्वा०पर०अक० सेट् इदित् चन्दति अचन्दीत् ।
चन हिंसायां अङ्गाप्रतिघाते च भ्वा० पर०सक० सेट् घटा० चनति । अचानीत्-अचनीत् । चनयति । [चानयति ।
चन शब्दे तुदा० पर० सक० सेट् । चनति । अचानीत्-अचनीत् ।
चन अव्य०चन-शब्दे-अच् । असाकल्ये यथा किञ्चन । अप्यर्थे च ।
चन्च गतौ भ्वा० पर० सक० सेट् । चञ्चति अचञ्चीत् "चञ्चद्भुजभ्रमिते"ति वेणी० । [ओषधिभेदे च ।
चन्दन चदि-णिच्-ल्यु । मलयजाते गन्धसारे, रक्तचन्दने, वानरभेदे,
चन्दनधेनु स्त्री० चन्दनेनाङ्किता धेनुः । "पतिपुत्रवती नारी म्रियते भर्त्तुरग्रतः । चन्दनेनाङ्किता धेनुस्तस्याः स्वर्गाय दीयते इति स्मृत्युक्तायां चन्दनाङ्कितायां देयधेन्वाम् ।

**चन्द्रनपुष्प** न० चन्द्रनस्येव पुष्पमस्य । लवङ्गे ।

**चन्द्र** पु० चदि-रक् । इन्द्रौ, मृगशिरानक्षत्रे, कर्पूरे, काम्पिल्ले, हीरके, जले, काम्ये, सुन्दरे, कृष्णवर्णे मयूरचन्द्रके, शोणमुक्ताफले च । आह्लादकद्रव्ये त्रि० स्वर्णे, सुक्रे च न० ।

**चन्द्रक** पु० चन्द्र इव कायति कै-क इवार्थे कन् वा । मयूरस्य पुच्छस्थिते चन्द्राकृतौ पदार्थे, मत्स्यभेदे (चांदा) शिग्रुवीजे, शुभ्रमरिचे च ।

**चन्द्रकला** स्त्री० ६त० । चन्द्रस्य षोडशे भागे, दृन्दुभ्याद्यभेदे च ।

**चन्द्रकान्त** पु० चन्द्रः कान्तोऽभीष्टो यस्य । स्वनामख्याते मणिभेदे तद्दर्शने हि तस्य जलस्रावात् तत्कान्तत्वम् । कैरवे, श्रीखण्डचन्दने च न० । रात्रौ, ज्योत्स्नायां, चन्द्रघोषायां, चन्द्रपत्न्याञ्च स्त्री० ।

**चन्द्रकान्ति** न० चन्द्रस्येव कान्तिरस्य शुभ्रत्वात् । रजते रूप्ये, ६त० चन्द्रस्य दीप्तौ । [मयूरे ।

**चन्द्रकावत्** पु० चन्द्रक+अस्त्यर्थे मतुप् मस्य वः संज्ञायां पूर्वपददीर्घः ।

**चन्द्रकिन्** पु० चन्द्रक+अस्त्यर्थे इनि । मयूरे ।

**चन्द्रकूट** पु० कामरूपस्थे पर्वतभेदे ।

**चन्द्रगुप्त** पु० प्रसूतनन्दस्य मुरानाम्न्यां दास्यां जाते चाणक्येन योगानन्दं सपुत्रं हत्वा कृतराज्याभिषेके राजभेदे ।

**चन्द्रपुष्पी** स्त्री० चन्द्र इव शुभ्रं पुष्पमस्याः । श्वेतकण्टकार्य्याम् ।

**चन्द्रबाला** स्त्री० चन्द्रस्य कर्पूरस्य बालेव तुल्यगन्धित्वात् । स्थूलैलायाम् । अत्यन्तमध्य इत्यन्ये ।

**चन्द्रभागा** स्त्री० काश्मीरदेशस्थे नदीभेदे ।

**चन्द्रमण्डल** न० ६त० । चन्द्रस्य मण्डलाकारे बिम्बे ।

**चन्द्रमस्** पु० चन्द्रमाह्लादं मिमीतेमि असिमादेशः चन्द्रं कर्पूरं माति तुलयति मा-असि वा । चन्द्रे ।

**चन्द्रमौलि** पु० चन्द्रो मौलौ यस्य । चन्द्रशेखरे शिवे ।

**चन्द्रवल्लरी** स्त्री० ६त० । सोमलतायाम् ।

**चन्द्रवल्ली** स्त्री० चन्द्र इव वल्ली सुधातुल्यमधुरत्वाविलत्वात्। माधवीलतायाम्

**चन्द्रव्रत** न० चन्द्रस्य चन्द्रलोकप्राप्तये व्रतम् नियमः। चान्द्रायण-संज्ञके व्रते।

**चन्द्रशाला** स्त्री० चन्द्रः शालेवाधारो यस्याः। ज्योत्स्नायाम्। चन्द्र इवाह्लादिका शाला। प्रासादोपरिस्थे गृहे (चिलेघर)। स्वार्थे कन् तत्रैव। [पर्वतभेदे च।

**चन्द्रशेखर** पु० चन्द्रः शेखरं शिरोभूषणं यस्य। शिवे पूर्वदेशस्थे

**चन्द्रसम्भव** पु० सम्भवत्यस्मात् सम्भवः चन्द्रः सम्भवो यस्य। बुधे एवं सोमसुतादयोऽप्यत्र। नर्मदायां, स्थूलैलायाञ्च स्त्री०।

**चन्द्रहास** पु० चन्द्र इव हासः प्रभाऽस्य चन्द्रं हसति वा सितत्वात् अण् वा। खड्गे। रौप्ये न० गुडूच्यां स्त्री०।

**चन्द्रा** स्त्री० चदि–रक्। एलायां, चन्द्रातपे च (चान्दोया)।

**चन्द्रातप** पु० चन्द्रस्य आतो गमनं ततः पाति पा–क। (चान्दोया) विताने चन्द्रस्य आतप इव किरणः। ज्योत्स्नायाम्।

**चन्द्रापीड़** पु० चन्द्र आपीड़ः शिरोभूषणं यस्य। शिवे, तारापी-ड़सुते नृपभेदे च।

**चन्द्रिका** स्त्री० चन्द्रः स्वाश्रयत्वेन अस्त्यस्याः ठन्। ज्योत्स्नायां, स्थूलैलायाम्, कर्णस्फोटायाम्, त्रयोदशाक्षरपादके छन्दोभेदे च।

**चन्द्रिकाद्राव** पु० चन्द्रिकया द्रावोनिष्यन्दो यस्य। चन्द्रकान्तमणौ।

**चन्द्रिकापायिन्** पु० चन्द्रिकां पिबति पा-णिनि। चकोरपक्षिणि।

**चन्द्रेष्टा** स्त्री० चन्द्र इष्टो यस्याः उत्पललतायाम् उत्पलिन्याम्।

**चन्द्रोपल** पु० चन्द्रप्रियः उपलः। चन्द्रकान्तमणौ।

**चप** चूर्णीकरणे चु० उभ० सक० सेट् घटा०। चपयति-ते अचीच-पत्–त। चिधातोरेव स्वार्थे णिजित्यन्ये।

**चप** सान्त्वने भ्वा०पर०सक०सेट्। चपति अचापीत्-अचपीत्। चपयति

**चप** गतौ चु० उभ० सक० सेट् इदित्। चम्पयति ते अचचम्पत् त।

**चपल** पु० चप-णिच् घञ् चपं सान्त्वनं लाति ला-क। पारदे, मीने, चोरनामगन्धद्रव्ये, प्रस्तरभेदे, राजमाषे च। तरले, चञ्चले, चणिके,

विकले, दुर्विनीते च त्रि० लज्जायां विद्रुति, पुंश्चल्याम्, पिप्पल्यां, विजयायां, मदिरायां, जिह्वायां, आर्य्याभेदे च स्त्री० ।

**चपेट** पु० चप-घञर्थे क चपाय सान्त्वनाय इटति गच्छति इट-क । विस्तृताङ्गुलिके हस्ते प्रतले (चापड़) स्त्रीमपीष्यते । खण्डिकोपाध्यायः शिष्याय चपेटां ददातीति भाष्यप्रयोगात् । स्वार्थे कन् अत्रैवार्थे । [चम्नोति अचमीत् । चमित्वा-चान्त्वा ।

**चम** भक्षणे भ्वा०स्वादि० च पर०सक०सेट् । चमति आचामति विचमति

**चमत्कार** पु० चमदित्यव्यक्तं क्रियते कृ-घञ् । लोकातीतवस्तु दृष्ट्वा चित्तस्य आनन्दहेतौ प्रकाशे विस्मये, अपामार्गवृक्षे च ।

**चमर** पु० चम-अरच् । महिषाकृतौ मृगभेदे, यस्य पुच्छेन चामराख्यं व्यजनं भवति, दैत्यभेदे च । जातौ स्त्रियां ङीप् चमरी । चमरव्यजने चामरे न० । [काञ्चनारे च ।

**चमरिक** पु० चमरमिव पुष्पमस्त्यस्य ठन् । कोविदारवृक्षे रक्त-

**चमस** पु० न० चम-असच् । काष्ठजाते यज्ञिये पात्रभेदे, सोमरसपानपात्रे च । पिष्टकभेदे लड्डुके च पु० ।

**चमीकर** पु० कृतस्वराभिधे स्वर्णस्रोतुत्पत्तिस्थाने यद्योगात् स्वर्णं चामीकरमित्युच्यते ।

**चमू** स्त्री० चम-ऊ । सेनामात्रे (गजाः ७२९, रथाः ७२९ अश्वाः २१८७, पदातयः ३६४५), एतत्संख्याभेदान्विते सैन्यभेदे च ।

**चमूरु** पु० चम-ऊरच् । मृगभेदे, कोविदारवृक्षे च । चारु चमूरुचर्म्मणेति माघः । [फलभेदे न० (चाँपाकला) ।

**चम्पक** पु०चपि-गतौ क्वुन् । (चाँपा) इति नामके वृक्षभेदे कदली-

**चम्पकमाला** स्त्री० ईत० । स्वर्णचम्पकैः निर्म्मितायां स्त्रीणां कण्ठाभरणे (चांपाकला) दशाक्षरपादके पङ्क्तिच्छन्दोभेदे च ।

**चम्पकरम्भा** स्त्री० चम्पक इव रम्भा । स्वर्णकदल्याम् ।

**चम्पकोष** पु० चपि ... पनसे तस्य हि कोषोभक्ष्यते ।

**चम्पा** स्त्री० चपि-अच्। नगरीभेदे नदीभेदे तीर्थभेदे कर्णस्य भार्य्यायाञ्च।

**चम्पाधिप** पु० ६त०। कर्णे।

**चम्पावती** स्त्री० चम्पा+मतुप् मस्य व। कर्णराजधान्यां नगर्य्याम्।

**चम्पू** स्त्री० "गद्यपद्यमयी वाणी चम्पूरित्यभिधीयते" इत्युक्ते काव्यभेदे।

**चम्ब** गतौ भ्वा० पर० सक० सेट् चम्बति अचम्बीत्।

**चय** गतौ भ्वा० आ० सक० सेट्। चयते अचयिष्ट।

**चय** पु० चि-अच्। प्राकारमूले प्राकाराधारवेदिकायाम्, समूहे समाहृतौ। [पुष्पादेरुच्चाटितो यहणे च।

**चयन** न० चि-ल्युट्। इष्टकादीनामूर्द्ध्वाधोभावनरूपे रचनाभेदे।

**चर** गतौ भ्वा० पर० सक० सेट्। चरति अचारीत्।

**चर** संशये चुरा० उभ० सक० सेट्। चारयति-ते अचीचरत् त।

**चर** पु० चर-अच्। स्वपरराष्ट्रवृत्तान्तज्ञानार्थं राजनियोगेन इतस्ततो भ्रमणकर्त्तरि चारे प्रणिधौ, कपर्द्दके, ज्योतिषोक्तेषु मेषकर्कटतुलामकरराशिषु च। स्वातिपुनर्वसुश्रवणादित्रिकरूपे नक्षत्रभेदे भौमवारे च न०। चले जङ्गमे त्रि०।

**चरक** पु० चर-क्वुन् स्वार्थे कन् वा। चारे राजदूते, पर्यटे भिक्षौ, वैद्यकशास्त्रकर्त्तरि मुनिभेदे तत्कृते तन्नामके ग्रन्थे च। "देवाकर्णय सुश्रुतेन चरकस्योक्तेन जानेऽखिलमिति" नैषधम्।

**चरण** पु० न०। चर-करणे ल्युट्। पादे, वेदैकदेशे शाखारूपे ग्रन्थे, तदध्येतरि जने, गोत्रे च। भावे ल्युट्। गतौ, भक्षणे, आचारे, शीले च न०।

**चरणग्रन्थि** पु० ६त०। गुल्फे।

**चरणायुध** पु० चरणाभ्यामायुध्यति आ+युध-क। कुक्कुटे।

**चरणव्यूह** पु० चरणानां वेदशाखानां व्यूहो विशेषेणोहो निरूपणं यत्र। व्यासकृते ग्रन्थभेदे।

**चरम** त्रि० चर-अमच्। अन्ते अवसाने, पश्चिमे च।

**चरमाचल** पु० चरमः पश्चिमः अचलः कर्म०। अस्ताचले। चर-

मशैलादयोऽप्यत्र । [ ब० । कपर्द्दके पु० ।

चराचर न० चर-अच् नि०। जगति । समा० द्व०। जङ्गमेऽजङ्गमे एक

चरित(त्र) ह० चर-क्त (इत्र वा) । अनुष्ठाने, सञ्चारे, व्रतकर्मादौ चेष्टिते, लीलादौ च ।

चरु पु० चर-उ । हव्यान्ने, होमार्थं पाच्यान्ने, "अनास्रावितानल्पऊष्मपाकओदनश्चरुरिति याज्ञिकाः । चरुपाकपात्रभाण्डे च ।

चर्च अध्ययने चुरा० उभ० सक० सेट् । चर्चयति-ते अचच-र्चत्-त । चर्चितः चर्चा ।

चर्च उक्तौ भर्त्सने च तु० पर० सक० सेट् । चर्चति अचर्चीत् ।

चर्चरी स्त्री० चर्च-अरन् गौरा० ङीप् । गीतिभेदे, कुटिलकेशे, हर्षक्रीड़ायाम्, साटोपवाक्ये, छन्दोभेदे च ।

चर्चा स्त्री० अर्च-अ । विचारे, चिन्तायां, चन्दनादिना देहलेपने च ।

चर्चित त्रि० चर्चा जातास्य इतच् । चन्दनादिना कृतगात्रानुलेपने ।

चर्ब गतौ भक्षणे च भ्वा० पर० सक० सेट् । चर्बति अचर्बीत् ।

चर्मकार पु० चर्म तन्मयं पादुकादिकं करोति कृ-अण् । चामार पादुकाकारे एवं चर्मकृदादयोऽप्यत्र ।

चर्मण्वती स्त्री० चर्मास्त्यस्याम् मतुप् नि० । नदीभेदे ।

चर्मदण्ड पु० चर्मणा कृतोदण्डः । कशायाम् (कोड़ा) ।

चर्मन् न० चर-मनिन् । रक्तवरायां त्वचि, इन्द्रियभेदे येन स्पर्श उपलभ्यते तस्मिन् 'शरीरावरकं शस्त्रं चर्म इत्यभिधीयते" इत्युक्ते (ढाल) फलके च ।

चर्मपादुका स्त्री० चर्मनिर्मिता पादुका । उपानहि (जुता) ।

चर्मप्रभेदिका स्त्री० प्रभिनत्ति प्र+भिद्-ण्वुल् इत० । चर्मभेदनेऽस्त्रभेदे ।

चर्मप्रसेविका स्त्री० चर्मणा प्रसीव्यते षिव-ण्वुल् । अग्नि सन्दीपनार्थं चर्मणा प्रसीव्यते भस्त्रानाम्नि यन्त्रे ।

चर्मिन् पु० चर्म-फलकमस्यास्ति व्रीह्यादित्वादिनि । फलकास्त्रवति, लघुपचर्मतरौ, भूर्जवृक्षे, भृङ्गरीटे, कदल्याञ्च ।

चर्य्या स्त्री० चर–क्यप्। नियमापरित्यागे गुरूपदिष्ट व्रताद्यनुष्ठाने

चर्व भक्षे (दन्तैश्चूर्णने वा चुरा० उभ० पक्षे भ्वा० पर०। चर्वयति–ते चर्वति अचचर्वत्–त अचर्वीत्।

चर्षणि पु० कृष–अणि पृ० आदेश्चत्वम्। जने "स चर्षणीनामुद्गादि"ति भागवतम्।

चल गतौ भ्वा०पर०सक०सेट् ज्वलादि०। चलति अचालीत्। चलः चालः।

चल विलासे तु०पर०अक०सेट्। चलति अचालीत्।

चल प्रेषणे चुरा० उभ० सक० सेट्। चालयति अचीचलत्–त।

चल त्रि० चल–ज्वलादित्वात् वा अच्। तरले, चञ्चले कम्पयुक्ते। भावे क। कम्पे। [ पत्रादयोऽप्यत्र।

चलदल पु० चलानि चञ्चलानि दलान्यस्य। अश्वत्थवृक्षे चल

चला स्त्री० चल–अच्। लक्ष्म्यां, सिल्हके च।

चलाचल त्रि० चल–अच् नि०। अत्यन्तचञ्चले। काके पु०।

चवि स्त्री० चर्व–इण् पृ०। (चइ) चव्ये। [कार्थे।

चविका स्त्री० चर्व क्वुन् पृ०। चव्ये (चइ) इकन् पृ०। चविकमप्य-

चव्य न० चव्यते चर्व–यत् पृ०। ( चइ ) वृक्षे, वचायां, कार्पास्याञ्च

चव्यजा स्त्री० चव्यमिव जायते जन–ड। गजपिप्पल्याम्।

चष भक्षे भ्वा० उभ० पर० सक० सेट्। चषति–ते अचाषीत् अचषीत् अचषिष्ट।

चष बधे भ्वा० पर० सक० सेट् चषति अचाषीत्–अचषीत्।

चषक पु० न० चष–करणे क्वुन्। मद्यपानपात्रे। कर्मणि क्वुन्। मधुनि, मद्यभेदे च न०।

चषाल पु० चष–आलच्। यज्ञीयपशुबन्धनार्थे काष्ठे यूपमध्ये देये वलयाकारे काष्ठमये लौहमये वा पदार्थे।

चह प्रतारणे भ्वा० पर० सक० सेट् चहति अचहीत्।

चह प्रतारणे अद०चुरा०उभ०सक० सेट् चहयति–ते अचचहत् त।

चह प्रतारणे चुरा० पर० सक० सेट् घटा० चहयति अचीचहत्–त।

**चाकचक्य** न० चक-अच् चकः प्रकारे द्वित्वं चकचकस्तस्य भावः । उज्ज्वलतायाम् । चाकचक्यादिसादृश्यसंदर्शनसमुद्भूतेति वेदान्त-परिभाषा ।

**चाक्षुष** न० चक्षुषा निर्वृत्तम् अण् । चक्षुर्जन्ये ज्ञाने, षष्ठे मनौ च ।

**चाक्रिक** पु० चक्रेण समूहेन चरति ठक् । संहत्य स्तुतिपाठके घाण्टिकार्थे ।

**चाङ्गेरी** स्त्री० "चङ्गुस्तु शोभने दन्ते" इत्युक्ते चाङ्गं-शोभनदन्तता मीरयति ईर-अण् गौरा० ङीप् । (आमरुल) क्षुपभेदे ।

**चाट** पु० चु० चट-भेदे अच् । आदौ विश्वासमुत्पाद्य पश्चात् धनापहर्त्तरि चौरे "चाटचारणदासेषु दत्तं भवति निष्फलमि"ति स्मृतिः ।

**चाटकेर** पु० चटकायाः चटकस्य वाऽपत्यम् एरक् । चटकापत्ये ।

**चाटु** पु०न० चट-ञुण् । प्रियवाक्ये मिथ्याप्रियवाक्ये च स्वार्थे कन् । अत्रैवार्थे "विश्रब्धचाटुकशतानी"ति साहि० दर्प० ।

**चाटुपटु** पु० चाटौ मिथ्यापरितोषणे वाक्ये पटुः । (भाण्ड) (खोसामुदे) जने । ह० पक्षे वः चाटुवटुरप्यत्र विदूषके च ।

**चाणकीन** त्रि० चणकस्य भवनं क्षेत्रम् खञ् । चणकभवनयोग्ये क्षेत्रादौ ।

**चाणक्य** पु० चणकस्य मुनेर्गोत्रापत्यम् यञ् । नाम नन्दान् हत्वा चन्द्रगुप्ताय राज्यं दातरि विष्णुगुप्ते ।

**चाणून(र)** पु० चण (न)-ऊरण् । कंसासुरस्य प्रधानमल्ले ।

**चाणू(नू)रसूदन** पु० चाणू(नू)रं सूदयति ल्युट् । श्रीकृष्णे ।

**चाण्डाल** पु० चण्डाल एव प्रज्ञाद्यण् । श्वपचे चण्डालार्थे ।

**चातक** पु० चतति याचते सततमम्भो मेघम् चत-ण्वुल् । स्वनामख्याते पक्षिभेदे । [चातुरी तुरी"ति नैषधम् ।

**चातुरी** स्त्री० चतुरस्य भावः तस्येदं वा ष्यञ् । "चातुर्य

**चातुर्मास्य** न० चतुर्षु मासेषु विहितम् ण्य । चतुर्माससाध्ये यज्ञभेदे व्रतभेदे च "आषाढशुक्लद्वादश्यां पौर्णमास्यामथापि वा चातुर्मास्यव्रतारम्भ"मित्युपक्रम्य "कार्त्तिक्यां शुक्लपक्षे तु द्वादश्यां तत् समापयेदि"त्युक्तं वाराहे ।

**चातुर्वर्ण्य** न० चत्वारो ब्राह्मणादयोवर्णा एव स्वार्थे ष्यञ्। ब्राह्मणादिषु चतुर्षु वर्णेषु "चातुर्वर्ण्यं मया सृष्ट"मिति गीता। भावे-ष्यञ्। चतुर्वर्णधर्मे।

**चान्द्र** पु० चन्द्रोदेवताऽस्य, तस्येदमिति वा अण्। चन्द्रकान्तमणौ, त्रिंशत्तिथ्यात्मके पौर्णमास्यन्ते अमान्ते वा मासे च। चान्द्रायणव्रते न० चन्द्रलोके पु०। चन्द्रेण प्रोक्तमण्। व्याकरणभेदे। तदधीते। पुनरण्। चान्द्रव्याकरणाध्यायिनि त्रि०।

**चान्द्रमास** पु० कर्म०। "तत्त्रिंशता भवेन्मासश्चान्द्रस्तु तिथिभिस्तथे"त्युक्तलक्षणे मासि।

**चान्द्रायण** चान्द्रश्चन्द्रलोकोऽयते ऽनेन अय—ल्युट् णत्वम्। व्रतभेदे।

**चान्द्री** स्त्री० चन्द्रस्येयम् अण्। चन्द्रपत्न्यां ज्योत्स्नायाञ्च। तत्तुल्य-शुभ्रत्वात् श्वेतकण्टकार्य्याम्। [रात्रौ च।

**चाप** पु० चपस्य वंशभेदस्य विकारः अण्। धनुषि, मेषावधिके नवमे

**चापल** न० चपलस्य भावः कर्म वा अण्। अविमृश्यकारिताक्षेपे, प्रयोजनं विनाऽपि पाण्यादेश्चालनरूपे वा चपलकर्मणि "मात्सर्य्य-द्वेषरागादेश्चापलं त्वनवस्थिति" रित्युक्तलक्षणेऽनवस्थाने च। ष्यञ्। चापल्यमप्यत्र। [कृतव्यजने।

**चामर** पु० न० चमरस्य विकारः तत्पुच्छनिर्मितत्वात्। चमरपुच्छ-

**चामरपुष्प** पु० चामरमिव पुष्पमस्य। क्रमुके, काशे, केतके, आम्रे च।

**चामीकर** न० चमीकरे आकरभेदे भवः अण्। स्वर्णे धुस्तूरे च।

**चामुण्डा** स्त्री० चमूं सेनां वियदादिसमूहरूपां लाति आदत्ते ला—क पृ०। दुर्गायाम् "यस्माच्चण्डञ्च मुण्डञ्च गृहीत्वा त्वमुपागता चामुण्डेति ततो लोके ख्याता देवी"त्युक्ते र्वा चण्डमुण्डान्-यित्र्यां दुर्गायाम्।

**चाम्पेय** न० चम्पायां भवः ढक्। चम्पके, नागकेशरे, स्वर्णे, किञ्जल्के च। स्वार्थे कन् किञ्जल्के।

**चाय** दर्शने भ्वा० उभ० सक० वेट्। चायति ते अचायीत् अचासीत् अचायिष्ट—अचास्त।

**चार** पु० चर एव स्वार्थे अण् । चरे "चारैः पश्यन्ति राजान" इति नीतिशास्त्रम् । चर-भावे घञ् । गमने बन्धे च । आधारे घञ् । कारागारे । कृत्रिमविषे न० ।

**चारण** पु० चारयति कीर्त्तिं चर-णिच् ल्यु । कीर्त्तिसञ्चारके नटे "चाटचारणदासेष्वि"ति स्मृतिः ।

**चारित्र** न० चरित्रमेव स्वार्थेऽण् । चरित्रे ।

**चारु** पु० चर-उण् । बृहस्पतौ । मनोज्ञे मनोहरे त्रि० ।

**चारुकेशरा** स्त्री० चारूणि केशराण्यस्याः । नागरमुस्तायाम् ।

**चारुनालक** न० चारु-नालं यस्य कप् कुम्भा० । रक्तपद्मे ।

**चारुपर्णी** चारूणि पर्णान्यस्याः ङीप् । (गन्धभादाल) प्रसारिण्याम् ।

**चारुफला** स्त्री० चारूणि स्वादूनि फलान्यस्याः । द्राक्षायाम् ।

**चार्च्चिक्य** न० चर्च्च-धा[illegible]ण्वुल् चर्चिक स्वार्थे ष्यञ् । चन्दनादिना गात्रलेपने । [ रथे ।

**चार्म्म** पु० चर्मणा परिवृतो रथः अण् । चर्मणा सर्वतो वेष्टिते

**चार्म्मण** न० चर्मणां समूहः अण् । चर्मसमुदाये ।

**चार्म्मिण** चर्मिणां समूहः अण् । चर्मिसमुदाये (ढालि) समूहे ।

**चार्व्वाक** पु० चारुर्लोकसिद्धो वाको वचनं यस्य पृ० । प्रत्यक्षप्रमाणवादिनि लौकायतिके यस्य मतप्रस्थापको बृहस्पतिः ।

**चार्व्वी** स्त्री० चारु-ङीप् । चारुत्वगुणवत्याम्, स्त्रियां ज्योत्स्नायाम्, दीप्तौ, कुवेरपत्न्याञ्च ।

**चाल** पु० चल-ण । स्वनामख्याते गृहाच्छादने तृणादौ ।

**चालनी** स्त्री० चाल्यते शस्यादिरनया चल-णिच्-करणे ल्युट् । स्वनामख्याते बहुच्छिद्रे शस्यादिचालनसाधने पदार्थे ।

**चाष** पु० चष-भक्षणे णिच् अच् । स्वर्णचूड़े नीलाङ्ग खगे(नीलकण्ठ)।

**चास** पु० चस-णिच्-अच् । इक्षौ चाषे पक्षिणि च ।

**चि** चयने स्वादि० उभ० द्विक० अनिट् । चिनोति चिनुते । अचैषीत् अचेष्ट चिकाय-चिकाय-चिचाय । चाययति चपयतीत्येके ।

**चि** चयने वा चु० पक्षे भ्वा० उभ० द्वि० अनिट् घटादि । चप-

यति-ते चययति ते । अचीचपत् त अचैषीत् अचेष्ट ।

**चिकित्सक** पु० कित-रोगापनयने स्वार्थे सन्-ण्वुल् । रोगापनयन कर्त्तरि वैद्ये ।

**चिकित्सा** स्त्री० कित-स्वार्थे सन्-अ । रोगप्रतीकारोपायकरणे ।

**चिकित्स्य** त्रि० चिकित्सयितुं योग्ये अर्हार्थे ण्यत् । साध्ये रोगे रोगात् मोचनयोग्ये जने च ।

**चिकुर** पु० चि इत्यव्यक्तं शब्दं कुरति कुर-क । केशे, वृक्षभेदे, पर्वते, सरीसृपे च । चपले, तरले, चञ्चले च त्रि० ।

**चिक्क** पीड़ने चुरा० उभ० सक० सेट् । चिक्कयति ते अचिचिक्कत् त ।

**चिक्कण** पु० चिक्क-क्विप् चिक् तं कणति कण शब्दे अच् । गुवाकवृक्षे । तत्फले न० । मसृणे स्निग्धे (चिकन) त्रि० । चिक्कणगुणवत्यां उत्तमायां गवि स्त्री० ।

**चिच्छक्ति** स्त्री० चिदेव शक्तिः । "चिच्छक्तिः परमेश्वरस्य विमलं चैतन्यमेवोच्यते" इत्युक्ते चैतन्ये ।

**चिञ्चा** स्त्री० चिमित्यव्यक्तं शब्दं चिनोति चि-ड । तिन्तिड़ीवृक्षे । स्वार्थे कन् अत्रैव ।

**चिञ्चाम्ल** न० चिञ्चेवाम्लम् । अम्लशाके ।

**चिट** प्रेषणे भ्वा०पर० सक० सेट् । चेटति अचेटीत् ।

**चिट** प्रेषणे चुरा०उभ०सक०सेट् । चेटयति ते अचीचिटत् त ।

**चित** ज्ञाने भ्वा०पर०सक० सेट् । चेतयति ते अचेतीत् । चित्तम् ।

**चित** ज्ञाने चुरा० आत्म० सक० सेट् । चेतयति ते अचीचितत् त ।

**चित** स्मृतौ चु० उभ० सक० सेट् इदित् । चिन्तयति ते अचिचिन्तत् त

**चित्** स्त्री० चित-सम्पदा० क्विप् । ज्ञाने चेतनायाम् चैतन्ये ।

**चित्** अव्य० चित-क्विप् । असाकल्ये यथा किञ्चित् जातुचित् ।

**चित** त्रि० चि-क्त । कृतचयने पुष्पादौ कृते च । शवदाहार्थकाष्ठचुल्ल्यां स्त्री० ।

**चिति** स्त्री० चि-क्तिन् चितायां, समूहे, वेदान्तोक्ते निर्विषयसंवेदने, "निर्विशेषचितिरेव कारणे"ति संक्षेपशारीरकम् । प्रासादादिषु

इष्टकादिसंख्याज्ञानार्थं अङ्कशास्त्रोक्ते (घर) इति ख्याते पदार्थे, अग्निस्थानभेदे च ।

**चित्त** न० चित्यते ज्ञायतेऽनेन चित–क्त । मनसि, वेदान्तोक्ते अनुसन्धानात्मकवृत्तिमति अन्तःकरणे, चिताकाष्ठे च ।

**चित्तविक्षेप** पु० चित्तं विक्षिपन्ति योगादपनयन्ति क्षिप–अण् । योगशास्त्रोक्तेषु योगप्रतिपक्षेषु व्याध्यादिषु नवसु ।

**चित्तविप्लव** पु० चित्तस्य विप्लवोऽनवस्थानं यस्मात् ५ ब० । उन्मादरोगे

**चित्तविभ्रम** पु० चित्तस्य विभ्रमो विशेषेण भ्रमणमनवस्थानं यस्मात् । ५ ब० । उन्मादरोगे ।

**चित्तसमुन्नति** स्त्री० सम्+उद् नम–क्तिन् ६ त० । चित्तस्य सम्यगुन्नमने तद्धेतौ गर्वे च चात्तोन्नतिरप्यत्र गर्वे च ।

**चित्ताभोग** पु० सम्यग् भोग आभोग एकविषयता ६ त० । एकविषये स्थिरचित्ततायाम् ।

**चित्य** पु० चीयतेऽसौ चि–क्यप् । अग्नौ । चितायां स्त्री० ।

**चित्र** चणिके–लेख्ये अद्भुते च अद० चु० उभ० सक० सेट् । चित्रयति ते अचिचित्रत् त ।

**चित्र** पु० चित क्विप् त्रायते त्रै–क वा तलोपः चित्र–अच् वा । यमभेदे "चित्रोदराय चित्राये" ति तर्पणमन्त्रः । अशोकवृक्षे, (चिता) चित्रकवृक्षे, एरण्डवृक्षे, आकाशे, कुष्ठभेदे, नानावर्णे च । तद्वति अद्भुते च त्रि० । लेख्ये तिलके शब्दालङ्कारभेदे च न० । स्वार्थे कन् उक्तार्थे (चिराता) वृक्षभेदे । चित्रइव कायति कै–क व्याघ्रभेदे । पु० ।

**चित्रकण्ठ** पु० चित्रः कण्ठोऽस्य । पारावते तद्भेदे वनकपोते च (घुघु) ।

**चित्रकम्बल** पु० कर्म० । कम्बलभेदे । [ चित्रकारोऽप्यत्र ।

**चित्रकर** पु० चित्रं करोति कृ–टच् । वर्णसङ्करभेदे । अण्

**चित्रकाय** पु० चित्रः कायो यस्य । (चितावाघ) व्याघ्रभेदे ।

**चित्रकूट** पु० चित्रं कूटमस्य । पर्वतभेदे ।

**चित्रगुप्त** पु० यमभेदे "चित्रगुप्ताय वै नमः" इति तर्पणमन्त्रः ।

**चित्रतण्डुला** स्त्री० न० चित्रस्तण्डुलोऽस्याः। विडङ्गे।
**चित्रत्वच्** पु० चित्रा त्वक् यस्य। भूर्जत्वचे।
**चित्रदण्डक** पु० चित्रोदण्डः काण्डो यस्य कप्। (ओल) सूरणे।
**चित्रपट** पु० कर्म०। (छिट) प्रभृतौ वस्त्रे।
**चित्रपत्रिका** स्त्री० चित्राणि पत्राण्यस्याः संज्ञायां कन् कापि अत
इत्त्वम्। द्रोणपुष्प्यां, कपित्थपर्ण्याञ्च।
**चित्रपत्री** स्त्री० चित्राणि पत्राण्यस्याः ङीप्। जलपिप्पल्याम्।
**चित्रपदा** स्त्री० चित्रं पदं स्वाधिष्ठानस्थानं यस्याः। गोधालतायां,
अष्टाक्षरपादके छन्दोभेदे च।
**चित्रपर्णी** स्त्री० चित्राणि पर्णान्यस्याः (चाकुलिया) पृश्निपर्ण्याम्।
**चित्रपादा** स्त्री० चित्रौ पादौ यस्याः। सारिकापक्षिणि।
**चित्रपुष्पी** स्त्री० चित्राणि पुष्पाण्यस्याः ङीप्। अम्बष्ठालतायाम्।
**चित्रपृष्ठ** पु० चित्रं पृष्ठमस्य। कलविङ्कपक्षिणि।
**चित्रफला** स्त्री० चित्रं फलं यस्याः। कण्टकार्य्यां वार्त्ताक्याम्।
**चित्रभानु**: पु० चित्राभानवो यस्य। अग्नौ, सूर्य्ये, चित्रकवृक्षे,
अर्कवृक्षे च। [ डुम्बरिकायाम्।
**चित्रभेषजा** स्त्री० चित्रमाश्चर्य्यं भेषजं यस्याः पूव०। काको-
**चित्ररथ** पु० चित्रोरथोऽस्य। सूर्य्ये, गन्धर्वभेदे च।
**चित्रलता** स्त्री० कर्म०। मञ्जिष्ठायाम्।
**चित्रलेखा** स्त्री० अप्सरोभेदे कुम्भाण्डसुतायाम् उषासख्यां, अष्टद
शाक्षरपादके छन्दोभेदे च।
**चित्रवीर्य्य** पु० चित्रमाश्चर्य्यं वीर्य्यमस्य। रक्तैरण्डे।
**चित्रशिखण्डिज** पु० चित्रशिखण्डिनोऽङ्गिरसो जायते जन–ड।
वृहस्पतौ।
**चित्रशिखण्डिन्** पु० चित्रः शिखण्डः अस्त्यस्य इनि। "मरीचिर-
ङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः। वसिष्ठश्चेति सप्तैते ज्ञेया-
श्चित्रशिखण्डिन" इत्युक्तेषु सप्तसु मुनिषु।
**चित्राङ्ग** पु० चित्रमङ्गमस्य। रक्तचित्रके, सर्पे च।

**चित्राङ्गद** पु० शान्तनुराजसुते विचित्रवीर्य्यभ्रातरि, गन्धर्वभेदे च ।

**चित्राङ्गी** स्त्री० चित्रमङ्गमस्याः । मञ्जिष्ठायां कर्णजलौकसि च ।

**चित्रायस** न० कर्म० अच् समा० । तीक्ष्णलौहे (इस्पात) ।

**चिद्रूप** पु० चिदेव रूपमस्य । आत्मनि, स्फूर्त्तिमति च ।

**चिदाकाश** न० चिद् आकाशमिव निर्लेपत्वात् सर्वाधारत्वाच्च । शुद्धे ब्रह्मणि ।

**चिदाभास** पु० चित आभासः प्रतिबिम्बः । बुद्धावात्मप्रतिबिम्बे । जीवे बुद्धिवृत्तिचिदाभासाविति वेदान्तः । [इष्टपदार्थस्मरणे ।

**चिन्ता** स्त्री० चिति-अ । प्रागनुभूतज्ञानजन्ये संस्कारोद्बोधे पूर्व-

**चिन्तामणि** पु० चिन्ताविषयस्य (तदुद्भवार्थे) मणिः । चिन्तामात्रेण चिन्तितार्थप्रदायके मणौ, स्पर्शमणौ च । "यथा चिन्तामणिं स्पृष्ट्वा लौहः काञ्चनतां व्रजे"दिति ।

**चिन्न** पु० चित-क्त पृ० तस्य नः । (चिना) शस्यभेदे ।

**चिन्मय** पु० चिदेव चित्+मयट् । चैतन्यरूपात्मके परमेश्वरे "चिन्मयस्याद्वितीयस्ये"त्यादि । [कन् । अल्पार्थे ।

**चिपिट** पु० चि-पिटच् किच्च । (चिड़ा) इति ख्याते पृथुके स्वार्थे

**चिर** न० चि-रक् । दीर्घकाले । तद्वर्त्तिनि पदार्थे त्रि० ।

**चिरक्रिय** त्रि० चिरकालेन क्रिया यस्य । दीर्घसूत्रे ।

**चिरजीवक** पु० चिरं जीवति जीव-ण्वुल् । जीवकवृक्षे ।

**चिरजीविन्** पु० चिरं जीवति णिनि । काके, जीवकवृक्षे, शाल्मलिवृक्षे, मार्कण्डेये, "अश्वत्थामा बलिर्व्यासो हनुमांश्च विभीषणः कृपः परशुरामश्च सप्तैते चिरजीविन" इत्युक्तेषु सप्तसु च । चिरजीविनि त्रि० ।

**चिरञ्जीविन्** पु० चिरं जीवति जीव-णिनि । चिरजीविपदार्थे ।

**चिरण्टी** स्त्री० चिरेण अटति पितृगेहात् भर्तृगेहम् अट-अच् पृ० । यौवनवत्यां पितृगेहस्थायां स्त्रियाम् ।

**चिरतिक्त** पु० चिरं तिक्तो रसो यत्र । (चिराता) भूनिम्बे ।

**चिरत्न** त्रि० चिरे भवः त्न । चिरन्तने पुरातने ।

**चिरन्तन** त्रि० चिरम्+ट्युल् तुट् च । पुरातने । स्त्रियां ङीप् ।

**चिरपाकिन्** पु० चिरेण पाकोऽस्यस्य दुर्ज्जरत्वात् । कपित्थे ।

**चिरपुष्प** पु० चिराणि पुष्पाण्यस्य । वकुलवृक्षे ।

**चिरम्** अव्य० चि—रमुक् बहुकालार्थे ।

**चिररात्र** पु० चिरा रात्रिः अच् । बहुकाले ।

**चिररात्राय** अव्य० चिररात्रात् अयते अय—अण् । बहुकाले ।

**चिरविल्व** पु० चिरं विलति विल—भेदने व करञ्जवृक्षे ।

**चिरसूता** स्त्री० चिरं प्रसूता । बहुकालप्रसववत्यां गवादौ । स्वार्थे कन् अत्रार्थे ।

**चिरस्य** अव्य० चिरमस्यति अस—ण्यत् अक० । दीर्घकाले ।

**चिरात्** अव्य० चिरमतति अत—क्विप् । दीर्घकाले, गरुड़े पु० ।

**चिराय** अव्य० चिरमयते अण् । चिरकाले दीर्घकाले ।

**चिरायुस्** पु० चिरामायुर्यस्य । देवे । चिरजीविनि त्रि० ।

**चिरि** हिंसे स्वादि० पर० सक० सेट् । चिरिणोति अचिरायीत् ।

**चिरेण** अव्य० चि+एनप् । दीर्घकालार्थे । [ चिर्भिटीप्यत्र ।

**चिर्भटी** स्त्री० चिरेण भटति अच् ङीप् पु० । कर्कट्याम् ।

**चिल** वासे तु० पर० अक० सेट् । चिलति अचेलीत् ।

**चिलिचिम** पु० चिल इन् चिलिं वासं चिनोति चि—मक् । (वेलेगुड़गुड़िया) मत्स्यभेदे ।

**चिल्ल** शैथिल्ये भावकृतौ च भ्वा० पर० अक० सेट् । चिल्लति अचिल्लीत् । [ चिल् । क्लिन्ननेत्रे त्रि० ।

**चिल्ल** पु० चिल्ल—अच् । ( चिल ) पक्षिभेदे । क्लिन्न+ल क्लिन्नस्य

**चिल्लक** पु० चिल्ल—ण्वुल् । लोध्रे । झिल्लिकायां स्त्री० ।

**चिल्लाभ** पु० चिल्ल इवं प्रसह्यहारित्वादाभाति भा—क । ग्रन्थिभेदके चौरे । [ कशाके च ।

**चिल्ली** स्त्री० चिल्ल—अच् गौरा० ङीप् । झिल्लीकीटे, लोध्रे, वास्तु-

**चिवुक** न० चीव—संवरणे उ पृ० ह्रस्वः । ओष्ठाधोभागे । स्वार्थे कन् तत्रैवार्थे । मुचकुन्दवृक्षे पु० ।

चिह्न लक्षणे अ० चु० उभ० सक० सेट् । चिह्नयति ते अचिचिह्नत् त ।
चिह्न न० चिह्–अच्–चह्–न उपधाया इत्त्वम् वा । लाञ्छने लक्षणे ।
चीक मर्षणे वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । चीकयति ते चीकति अचीचिकत् त अचीकीत् ।
चीन पु० चि–नक् द्र० दीर्घः । "मानसेशात् दक्षपूर्वे चीनदेशः प्रकीर्त्तित" इत्युक्ते देशे, तद्देशस्थे जने व० व० । तन्त्रोक्ते तद्देशाचारभेदे च । तद्देशोद्भववस्त्रे न० "चीनपीनस्तनवसनदशान्दोलने" त्युद्भटः । कङ्गुतुल्यव्रीहिभेदे स्त्रके, मृगभेदे च पु० । पताकायां, सीसके च न० । स्वार्थे कन् । कङ्गुधान्यभेदे । [भेदे ।
चीत्कार पु० चीदित्यव्यक्तशब्दस्य कारः कृ–घञ् । भयहेतुके ध्वनि-
चीनपिष्ट न० पिष–क्त पिष्टं चूर्णं इत० । (चीनेर सिन्दूर) सिन्दूरभेदे । [अचिचीभत् त ।
चीभ प्रशंसायां भ्वा० आत्म० सक० सेट् । चीभति अचीभीत् ।
चीर न० चि–क्रन् दीर्घश्च । वस्त्रखण्डे "चीराणि किंपथि न सन्ती" ति भागवतम् । लेखनभेदे, चूडायां, सीसके वृक्षत्वचः खण्डे, वस्त्रभेदे च । [चञ्चुशाके ।
चीरपत्रिका स्त्री० चीरमिव पत्रमस्याः स्वार्थे कन् अत इत्त्वम् ।
चीरपर्ण पु० चीरमिव पर्णमस्य । शालवृक्षे ।
चीरितच्छद पु० चीरवदाचरितः छदो दलं यस्य । पालङ्क्यशाके ।
चीर्ण त्रि० चर क्त द्र० अत ईत्त्वम् । कृते, शीलिते, अधीते च ।
चीव ग्रहणे संवृतौ च भ्वा० उभ० सक० सेट् । चीवति ते अचीवीत् अचीविष्ट । अचिचीवत् त ।
चीव दीप्तौ चुरा० उभ० सक० सेट् । चीवयति ते अचीचिवत् त ।
चीवर न० चि–ष्वरच् दीर्घश्च । भिक्षुवस्त्रे, कौपीनादौ ।
चुक्क पीडने चु० उभ० सक० सेट् । चुक्कयति ते अचुचुक्कत् त ।
चुक्र पु० चक–रक् अत उत्त्वञ्च । अम्लवेतसे (चुकोपालङ्ग) शाकभेदे,

शुक्रभेदे च। स्वार्थे कन् (आमरूल) शाके, तिन्तिड्याञ्च स्त्री०।

चुक्राम्ल पु० चुक्रमिवाम्लम्। वृक्षाम्ले। अम्ललोणायां, चिञ्चायां, काञ्जिकभेदे च स्त्री०।

चुक्रिका स्त्री० चुक्र इव स्वार्थे कन्। (चुकोपालङ्क) शाकभेदे।

चु(चू)चुक न० चु(चू)चु इत्यव्यक्तं शब्दं कायति यत्र कै—क। कुचाग्रे स्तनवृन्ते। [ चुच्यति अचुच्यीत् चुक्रः।

चुच्य स्नाने मन्थने पीड़ने सुरादिसम्पादने च भ्वा० पर० सक० सेट्।

चुट अल्पीभावे भ्वा० पर० अक० सेट्। चोटति अचोटीत्।

चुट अल्पीभावे भ्वा० पर० अक० सेट् इदित्। चुण्टति अचुण्टीत्।

चुट छेदने वा० चु० उभ० पक्षे तुदा० कुटा० पर० सक० सेट्। चोटयति—ते अचूचुटत्—त पक्षे चुटति अचुटीत् चुचोट।

चुट छेदने चुरा० उभ० सक० सेट् इदित्। चुण्टयति—ते अचुचुण्टत् त।

चुट्ट अल्पीभावे चुरा० उभ० अक० सेट्। चुट्टयति—ते अचुचुट्टत्—त।

चुड छेदने चुरा० उभ० सक० सेट् इदित्। चुण्डयति-ते अचुचुण्डत्-त।

चुड अल्पीभावे भ्वा० पर० अक० सेट् इदित्। चुण्डति अचुण्डीत्।

चुड्ड(ट्ड) हृतौ भावे च भ्वा० पर० सक० सेट्। चुड्डति अचुड्डीत्।

चुण छेदने तु० कु० पर० सक० सेट्। चुणति अचुणीत् चुचोण।

चुत क्षरणे भ्वा० प० अक० सेट्। चोतति अचुतत्—अचोतीत्।

चुद नोदने चु० उ० सक० सेट् चोदयति-ते अचूचुदत्-त चोदना चूड़ा।

चुप मन्दगतौ भ्वा० पर० अक० सेट्। चोपति अचोपीत्।

चुब चुम्बने वा० चु० उभ० भ्वा० पर० सक० सेट् इदित्। चुम्बयति—ते चुम्बति अचुचुम्बत्—त अचुम्बीत्।

चुम्बक पु० चुबि—ण्वुल्। स्वनामख्याते अयस्कान्ते मणौ। धूर्त्ते चुम्बनकर्त्तरि, ग्रन्थैकदेशाभिज्ञे च त्रि०।

चुर स्तेये (परद्रव्यापहरणे) वा० चु० उभ० पक्षे भ्वा० पर० सक० सेट्। चोरयति—ते चोरति अचूचुरत्—त अचोरीत्।

चुरा स्त्री० चुर—क टाप्। चौर्य्ये।

चुल समुच्छ्राये चुरा० उभ० सक० सेट्। चेलयति-ते अचूचुलत्-त।
चुलुक पु० चुल-उकञ्। प्रसृतौ निविडपङ्के, भाण्डभेदे च। माप-मात्रमज्जनयोग्ये जले न०।
चुलुकिन् पु० चुलुक+अस्त्यर्थे इनि। शिशुमाराकारे मत्स्यभेदे।
चुलुम्प लौल्ये भ्वा० पर० अक० सेट्। चुलुम्पति अचुलुम्पीत्।
चुल्ल भावकृतौ भ्वा० पर० अक० सेट् चुल्लति अचुल्लीत्।
चुल्ल पु०क्लिन्नस्य चुल्लादेशः लच्प्रत्ययः। क्लिन्ने नेत्रे तद्युक्ते जने। त्रि०
चुल्लि(ल्ली) स्त्री० चुल्ल-इन् वा ङीप् चुट-लिक् वा। पाकार्थमग्निस्थापनस्थाने (चुला) चुल्ली चिरं रोदितीत्युद्भटः। अच्। चुल्लाप्यत्र।
चूडा स्त्री० चुट-अङ् नि०, चुल समुच्छ्राये दीर्घः अङ् डस्य लः वा। मयूरशिखायां मस्तकमध्यस्थशिखामात्रे, जटिकायां, बाहुभूषणे, शिखायाम्, (अग्रे), भूषणमात्रे, कूपे, दशविधसंस्कारान्तर्गते संस्कारभेदे च। "प्रथमेऽब्दे तृतीये वा चूडा कार्य्ये"ति मनुः।
चूडामणि पु० ६त०। शिरोरत्ने "चूडामणौ कृतविधु"रिति।
चूडाम्ल न० चूडायामग्रेऽम्लम्। इञ्चाम्ले।
चूडाल न० चूडा शिखास्त्यस्य ल। मस्तके। शिखायुक्तजने त्रि०। श्वेतगुञ्जायां, नागरमुस्तायाम्, उच्चटायां च स्त्री० टाप्।
चूण सङ्कोचे चुरा० उभ० सक० सेट्। चूणति अचूणीत्।
चूत पु० चुष-क्त पृ०। आम्रे, नवचूतप्रसवोमभिष्यतीति काव्यम्: च्यु-क्त पृ०। गुह्यद्वारे न०। स्वार्थे कन् आम्रे, कूपके च।
चूर दाहे दिवा० आत्म० सक० सेट्। चूर्य्यते अचूरिष्ट। चूर्णः।
चूर्ण पेषणे चु० उभ० सक० सेट्। चूर्णयति-ते अचुचूर्णत्-त।
चूर्ण पु० चूर्ण-घञ्। पेषणजाते रजसि धूलौ (आबीर) ख्याते द्रव्ये, ताम्बूलचर्व्वणोपयोगिद्रव्ये च चूर्णमानीयतां तूर्णमिति।
चूर्णक पु० चूर्ण-ण्वुल्। सक्तु। स्वार्थे कन् चूर्णार्थे च। अकठोराक्षरं स्वल्पसमासं चूर्णकं विदु"रित्युक्ते गद्यभेदे न०।
चूर्णकार पु० चूर्णं करोति कृ-अण्। (चुनारी) जातिभेदे।
चूर्णकुन्तल द०चूर्ण्यते इति चूर्णः कर्म०। शिरःस्थे क्षुद्रकेशे (अलके)।

**चूर्णि(र्णी)** पु० चुर—चर—वा क्तिच् । नि० । पतञ्जलिकृते महाभाष्ये, कपर्द्दके च ।

**चूला** स्त्री० चुल-अ दीर्घः । प्रासादोपरिस्थे गृहे (चिलाघर) चूडायाञ्च ।

**चूलिका** स्त्री० चुल—समुच्छ्राये ण्वुल् पृ० दीर्घः । हस्तिकर्णमूले, नाटकाङ्गभेदे च ।

**चूष** पाने भ्वा० पर० सक० सेट् । चूषति । अचूषीत् ।

**चृत** हिंसे ग्रन्थने च तुदा० सक० सेट् । चृतति अचर्तीत् ।

**चृत(प)** सन्दीपने वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । चर्त्त(र्प) यति—ते । अचीचृत(प)त् अचचर्त्त(र्प)त् त । पक्षे चर्त्त(र्प)ति अचर्त्ती(र्पी)त् ।

**चेट(ड)** पु० चिट—परप्रेष्ये अच् वा टस्य डः । दासे, उभयत्र ङीप् । दास्याम् । ण्वुल् । दासे, उपनायके च स्त्रियां चेटि(डि) का । [ तया कथने च ।

**चेत्** अव्य० चित्—विच् यद्यर्थे पक्षान्तरे, असन्दे हेऽपि सन्दिग्ध-

**चेतकी** स्त्री० चित—वुन् । हरितक्याम्, तत्फलेऽपि स्त्री० ।

**चेतन** पु० चित—युच् आत्मनि, जीवे परमेश्वरे प्राणिनि च । चैतन्ययुक्ते त्रि० ।

**चेतनकी** पु० चेतनं करोति कृ—ड गौ० ङीप् । हरितक्याम् ।

**चेतना** स्त्री० चु० चित युच् । बुद्धौ ज्ञाने ।

**चेतनीया** स्त्री० चेतनाय हिता छ । ऋद्धिनामौषधे ।

**चेतस्** न० चित—असुन् । चित्ते । आत्मनि पु० "साक्षीचेताः केवलो निर्गुणश्चे"ति श्रुतिः ।

**चेतोमुख** पु० चेतो मुखं द्वारमस्य । वेदान्तोक्ते सुषुप्त्यभिमानिनि जीवे ।

**चेदि** पु० देशभेदे । तद्देशस्थे जने ब० व० ।

**चेदिपति** पु० चेदीनां पतिः शिशुपाले उपरिचरवसुनामके नृपे च । चेदिराजादयोऽप्यत्र । [ चेलत् त ।

**चेल** लौल्ये गतौ च भ्वा० पर० सक० सेट् । चेलति अचेलीत् अचि-

**चेल** न० चिल-आच्छादने कर्मणि घञ्। वस्त्रे। चेल-चौर्य्ये अच्।
अधमे त्रि०।

**चेल्ल** चालने गतौ च भ्वा० पर० सक० सेट्। चेल्लति अचेल्लीत्।

**चेष्ट** ईहायां भ्वा० आ० अक० सेट्। चेष्टते अचेष्टिष्ट। अचचेष्टत्।
अचिचेष्टत्।

**चेष्टा** स्त्री० चेष्ट+अङ्। "आत्मजन्या भवेदिच्छा इच्छाजन्या भवेत्
कृतिः। कृतिजन्या भवेच्चेष्टे"त्युक्ते कायिके व्यापारे।

**चैतन्य** न० चेतन+भावे स्वार्थे वा ष्यञ्। चेतनायां, ब्रह्मणि प्रकृतौ च।

**चैत्त** न० चित्तस्येदम् अण्। बौद्धमते विज्ञानातिरिक्ते स्कन्धमात्रे।

**चैत्य** न० चित्याया इदमण्। ग्रामादिप्रसिद्धे महावृक्षे, देवावासे
वृक्षे, जनानां सभास्थतरौ, बुद्धभेदे, आयतने, चिताचिह्ने, जनस-
भायां, यज्ञस्थाने, जनानां विश्रामस्थाने। देवस्थाने च।

**चैत्यगृह** न० चैत्यस्य समीपे गृहम्। चतुष्पथस्थे चैत्यसन्निहिते गृहे।

**चैत्यवृक्ष** पु० कर्म०। अश्वत्थादिप्रसिद्धे वृक्षे।

**चैत्र** पु० चित्रानक्षत्रेण युक्ता पौर्णमासी चैत्री साऽस्मिन् मासेऽण्।
स्वनामख्याते शुक्लप्रतिपदादिदर्शान्तरूपे मासे। ठक्। चैत्रिकः।
कन्। चैत्रकोऽप्यत्र पर्वतभेदे च

**चैत्ररथ** पु० चित्ररथेन गन्धर्वेण निर्वृत्तम् अण्। कुबेरोद्याने।

**चैत्रावली** स्त्री० चैत्रे सम्यक् बलिरस्याम्। चैत्रपौर्णमास्याम्।

**चैत्री** स्त्री० चित्रानक्षत्रेण युक्ता पौर्णमासी अण्। चैत्रमासपौर्णमा-
स्याम् तत्रैव तद्योगसम्भवात्।

**चैद्य** पु० चेदीनां जनपदानामयम् ष्यञ्। शिशुपाले।

**चोदना** स्त्री० चु० चुद-युच्। "चोदना चोपदेशश्च विधिश्चैकार्थवा-
चिनः" इति भट्टोक्ते प्रवर्त्तनावाक्ये "चोदनालक्षणोऽर्थो धर्म"
इति मीमांसासूत्रम्। प्रेरणायां, तर्ज्जनायां, प्रवर्त्तनायाञ्च।

**चोद्य** न० चुद-ण्यत्। प्रश्ने, पूर्वपक्षे, अद्भुते च। प्रेरणार्हे त्रि०।

**चोपन** न० चुप-ल्युट्। मन्दगमने हस्तीन्मवने, मौने च।

चोर पु० चुर-अच् । स्तेयकर्त्तरि परद्रव्यापहारके गन्धद्रव्यभेदे, तस्यागयायाञ्च ।

चोरक पु० चोरः स्वनामख्यातद्रव्यमिव कायति कै-क । ग्रन्थिपर्णवृक्षे ।

चोरपुष्पी स्त्री० चोर इव पुष्पमस्याः रात्रिविकाशित्वात् । शङ्खिन्याम् । स्वार्थे कन् अत इत्त्वम् । चोरपुष्पिकाऽप्यत्र ।

चोरा स्त्री० चोरतुल्यं रात्रिविकाशित्वेन पुष्पमस्त्यस्याः अर्श आद्यच् । शङ्खपुष्पिकायाम् ।

चो(चौ)रिका स्त्री० चोर+कर्मणि ठन् ठक् वा । चौर्य्ये ।

चोल न० चुल-घञ् । स्त्रीणां कञ्चुकाख्ये आप्रपदीने वस्त्रे । (चोला) इति ख्याते पुंसां वस्त्रभेदे च द्राविड़कलिङ्गयोर्मध्ये, देशभेदे पु० ।

चोलकी पु० चुल-ण्वुल् गौरा० ङीष् । करीरे, नागरङ्गे, किष्कुपर्वणि च ।

चोली स्त्री० अल्पश्चोलः ङीष् । कुर्पासके वस्त्रभेदे ।

चोष्य त्रि० चूष-ण्यत् पृ० । इक्षुदण्डादौ भक्ष्यभेदे ।

चौड(ल) न० चूडा प्रयोजनमस्य अण् । चूडाकर्मणि संस्कारभेदे । वा डस्य लः ।

चौर त्रि० चुरा शीलमस्य चोरएव वा अण् । प्रच्छन्नपरद्रव्यापहारके । चोरनामगन्धद्रव्ये पु० ।

चौर्य्य न० चोरस्य भावः कर्म वा ष्यञ् । परद्रव्यापहरणे ।

च्यवन पु० च्यु-युच् । मुनिभेदे ।

च्यु गतौ भ्वा० आत्म० सक० अनिट् । च्यवते अच्योष्ट ।

च्यु हासे सहने च चुरा० उभ० सक० अनिट् । च्यावयति ते अचुच्यवत् त ।

च्युत क्षरणे भ्वा० पर० अक० सेट् । च्योतति अच्युतत्-अच्योतीत् ।

च्युति स्त्री० च्यु-क्तिन् । क्षरणे नाशे च अपादाने क्तिच् । भगे ।

## छ

छ त्रि० छो-क । छेदनकर्त्तरि, निर्मले, तरले च । गृहे न० ।

छगल पु० छो-कलच् गुट् च । पशुभेदे छागे । जातौ ङीष् ।

नीलवृक्षे न०। वृद्धदारकवृक्षे स्त्री० टाप्। स्वार्थे कन्। पशुभेदे छागे।

छगलान्त्री(ङ्घ्री) स्त्री० छगलस्येवान्त्रम् अङ्घ्रिर्वा अस्याः गौरा० ङीष्। वृद्धदारकौषधे, वृकी च। स्वार्थे कन्। अत्रैवार्थे।

छटा स्त्री० छो—अटन् दीप्तौ, परम्परायाञ्च।

छटाफल पु० छटेव परम्परान्वितं फलं यस्य। गुवाके।

छत्र पु० छद—णिच्—ष्ट्रन् ह्रस्वः। यवाकारमूलपत्रे (छातारिया) क्षुपभेदे। आतपत्रे न०। अतिच्छत्रायां (सुल्फा) वृक्षे स्त्री०।

छत्रक पु० छत्रमिव कायति कै—क। (राङ्गाकुलेखाड़ा) वृक्षे, मत्स्यरङ्गे पक्षिणि च। स्वार्थे कन् छत्रे न०।

छत्रपत्र न० छत्रमिव पत्रमस्य। स्थलपद्मे, भूर्जपत्रवृक्षे पु०।

छत्रपुष्प पु० छत्रमिव पुष्पमस्य। तिलकवृक्षे।

छत्रभङ्ग पु० छत्रस्य भङ्गो यत्र। नृपनाशे, वैधव्ये अस्वातन्त्र्ये च।

छत्राक न० छत्रा अतिच्छत्रेव कायति कै—क। शिलीन्ध्रे “छत्राकं विड्वराहञ्चे”ति मनुः।

छत्राकी स्त्री० चत्रमकति अक—कुटिलगतौ अण्। रास्नायाम्।

छद संवृतौ अद० चु० उभ०सक० सेट्। छदयति ते अचिच्छदत् त।

छद बलाधाने जीवने च भ्वा० पर० अक० सेट्। छदति—अच्छदत्-अच्छदीत्—अच्छादीत्।

छद संवरणे वा० चुरा० पक्षे भ्वा० उभ०सकर्म० सेट् इदित्। छन्दयति-ते अचच्छन्दत्—त। छन्दति-ते अच्छन्दीत् अच्छन्दिष्ट।

छद अपवारणे भ्वा० उभ० सक० सेट्। छदति छदते। अच्छदीत्—अच्छादीत्—अच्छदिष्ट।

छद पु० छद—क। पत्रे, पक्षिणां पक्षे, ग्रन्थिपर्णवृक्षे, तमालवृक्षे च।

छदन न० छद—ल्युट्। पत्रे, पक्षे, (तेजपात) त्वचे च। भावे ल्युट्। पिधाने।

छदपत्र पु० छदार्थं पत्रमस्य। भूर्ज्जपत्रे।

छदि पु० छद—इन्। पटले (चाल) इति ख्याते गृहाच्छादके तृणपुञ्जे।

**छदिस्** स्त्री० छद्–इसि । पटले (चाल) ।

**छद्मतापस** पु० छद्मना छलेन तापसः । लोकप्रतारणार्थं तापसता-ख्यापनाय तापसलिङ्गधारिणि तत्कर्म्माननुष्ठायिनि वैडालव्रतिके ।

**छद्मन्** न० छाद्यते स्वरूपमनेन छद्–मनिन् । कपटे छले ।

**छन्द** पु० छदि संवरणे धातोरनेकार्थत्वात् इह इच्छायाम् घञ् अभि-लाषे, वशतायाम्, विषभेदे च ।

**छन्दस्** न० छदि–असि । वेदे, स्वैराचारे, अभिलाषे, नियताक्षरव-र्णमात्रादिसंनिवेशवशात् चतुश्चरणादौ उक्थादिभेदे गायत्र्यादौ छन्दसि, पद्ये च ।

**छन्दोग** पु० छन्दः सामवेदं गायति गै–क । सामवेदगे विप्रादौ ।

**छन्न** त्रि० छद्–णिच् क्त नि० । आच्छादिते । निर्ज्जने रहसि न० ।

**छप** गतौ वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् इदित् । छम्प-यति ते छम्पति अचच्छम्पत् त अच्छम्पीत् ।

**छम** भक्षणे भ्वा० पर० सक० सेट् । छमति अच्छमीत् । छमित्वा छान्त्वा ।

**छर्द्द** वमने चुरा० उभ० सक० सेट् । छर्द्दयति ते अचच्छर्द्दत् त ।

**छर्द्दन** पु० छर्द्द–णिच्–ल्यु निम्बवृक्षे मदनवृक्षे च । भावे ल्युट् । वमने न० ।

**छर्द्दि** (र्द्दी) स्त्री० छर्द्द-णिच्–इन् । वमनरोगे वा ङीप् । अत्रैवार्थे ।

**छर्द्दिका** स्त्री० छर्द्द–णिच्–ण्वुल् । वत्काशिकायां, विष्णुक्रान्ता-याञ्च । धात्वर्थे ण्वुल् । वमने ।

**छर्द्दिकारिपु** पु० ६त० । क्षुद्रैलायाम् । छर्द्दिनाशके त्रि० ।

**छर्द्दिघ्न** पु० छर्द्दिं हन्ति–हन्–टक् । निम्बभेदे छर्द्दिनाशके त्रि० ।

**छर्द्दिस्** स्त्री० छर्द्द–इसि । वमने ।

**छल** न० छो कलच् । शाठ्ये, स्वरूपाच्छादने छद्मनि, न्यायोक्ते ता-त्पर्य्यान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरकल्पनेन वाद्युक्तौ प्रतिवादिना दत्तदूषणे च । यथा नेपालादागतोऽयं नवकम्बलवत्त्वादिति वादिन उक्तौ नवशब्दस्य नूतनत्वार्थपरत्वे स्थिते प्रतिवादिना तस्य

नवसंख्यायुक्तार्थत्वकल्पनेन नास्य नव संख्यककम्बलवत्त्वमिति यदूदू-
षणं दीयते ।

**छलना** स्त्री० छल+तत्करोति णिच्-भावे-युच् । परप्रतारणायाम् ।

**छल्ली** स्त्री० छद-क्विप् तां लाति ला-क गौ० ङीष् । वल्कले (छाल) लतायाम्, सन्ततौ च ।

**छवि** स्त्री०छ्यति अमारं छिनत्ति तमो या नि०। शोभायां कान्तौ च ।

**छष** वधे भ्वा० उभ० सक० सेट् । छषति ते अच्छाषीत् अच्छषीत् अच्छषिष्ट । [ अण् । छाग्यादुग्धे छागमांसे च न० ।

**छाग** पु० छो गन् । छागले । जातौ स्त्रियां ङीष् । पुरोडाशे च । छटमर्थे

**छागल** पु० छगलइव प्रज्ञाद्यण् । स्वनामख्याते पशौ, छगलस्यापत्यम् अण् । ऋषिभेदे ।

**छागवाहन** पु० छागो वाहनमस्य । अग्नौ ।

**छात** त्रि० छो-कर्मणि कर्त्तरि वा क्त । छिन्ने, दुर्बले च । छातेतराम्बुच्छटेति काव्य० प्र० १उ० ।

**छात्र** पु० गुरोर्दोषावरणं छत्रं तच्छीलमस्य ण । शिष्ये, "वरटाः कपिलाः पीताः प्रायोक्तिमवतो वने । कुर्वन्ति छत्रकाकारं तज्जं छात्रं मधु स्मृत"मित्युक्ते मधुभेदे न० ।

**छादन** पु० छद-णिच्-ल्यु । नीलाम्लानवृक्षे भावे ल्युट् । छादने । करणे ल्युट् । पत्रे न० ।

**छान्दस** पु० छन्दोवेदमधीतेऽण् । वेदाध्ययनकर्त्तरि ।

**छान्दोग्य** न० छन्दोग+आम्नायाद्यर्थे ञ्य । सामगानां धर्मे आम्नाये, ( मन्त्रब्राह्मणात्मके शास्त्रे ) समूहे च ।

**छाया** स्त्री० छो-ण । आतपाभावे, कान्तौ, प्रतिबिम्बे, पालने, उत्कोचे, पङ्क्तौ, संज्ञाप्रतिरूपायां सूर्यभार्य्यायाम्, ऊनविंशाक्षरपादके छन्दोभेदे च ।

**छायातनय** पु० ६त० । शनैश्चरे "छायासुतादयोऽप्यत ।

**छायापुरुष** पु० छायया पुरुष इव । आकाशे दृश्ये निजच्छायानुरूपे छायात्मके पुरुषे ।

**छायावृक्ष** पु० छायाप्रधानो वृक्षः शाक० । वटादौ वृक्षे ।
**छिक्कनी** स्त्री० छिक् इत्यव्यक्तं नासिकाशब्दं करोति शब्दायते अच् गौरा० ङीष् । ( नाकछिकनी ) वृक्षभेदे ।
**छिक्का** स्त्री० छिक् इत्यव्यक्तं शब्दं करोति क ङ । क्षुते ।
**छित्वर** त्रि० छिद्-ष्वरप् । पु० तुक् च । वैरिणि, धूर्त्ते, छेदके च । स्त्रियां ङीप् । छेदने न० । [अच्छिदत् अच्छैत्त, छिदा ।
**छिद** द्वैधीकरणे रुधा०उभ०सक०अनिट् । छिनत्ति छिन्ते अच्छैत्सीत्-
**छिद्दिर** पु० छिद्-किरच् । कुठारे पावके, रज्जुभेदे, करवाले च ।
**छिदुर** त्रि० छिद्-कुरच् । वैरिणि, धूर्त्ते, छेदके, छेदनद्रव्ये च ।
**छिद्र** भेदने अद० चुरा० उभ० सक० सेट् । छिद्रयति ते अचिच्छिद्रत् त । [लग्नतोऽष्टमस्थाने च ।
**छिद्र** न०छिद-रक् छिद्र-अच् वा । दूषणे, गर्त्ते, अवकाशे ज्योतिषोक्ते
**छिद्रान्तर** पु० छिद्रमन्तर्मध्यं यस्य । नले ।
**छिद्रित** त्रि० छिद्र क्त । विद्धे कृतच्छिद्रे ।
**छिन्नपत्री** स्त्री० छिन्नं पत्रं यस्याः । अम्बष्ठायाम् । (आकनादी) ।
**छिन्नमस्ता** स्त्री० छिन्नं मस्तं यस्याः । महाविद्यायां विद्याभेदे ।
**छिन्नरुह** पु० छिन्नोऽपि रोहति रुह-क । तिलवृक्षे । गुडूच्यां, शल्लक्यां, केतक्याञ्च स्त्री० ।
**छिन्नोद्भवा** स्त्री० छिन्नाप्युद्भवति उद्+भू-अच् । गुडूच्याम् ।
**छुछुन्दरी** स्त्री० छुछु इत्यव्यक्तं दृणाति अच् पु० । (छुछु) जन्तुभेदे गन्धमूषिके । [छुटति । अचुच्छुटत् त अच्छुटीत् ।
**छुट** छेदने वा चुरा०उभ०पक्षे तु०कुटा०पर०सक० सेट् । छोटयति ते
**छुड** छेदने तु० कु० पर० सक० सेट् । छुडति अच्छुडीत् चुच्छोड ।
**छुप** स्पर्शे तु० पर० सक० अनिट् । छुपति अच्छौप्सीत् ।
**छुप** पु० छुप-क । क्षुपे स्पर्शे, चपले, युद्धे च ।
**छुर** छेदे भ्वा० पर० सक० सेट् । छोरति अच्छोरीत् ।
**छुर** लेपने तु० कु० पर० सक० सेट् । छुरति अच्छुरीत् ।

क्षुरिका स्त्री० क्षुर-कन् । अस्त्रभेदे (छुरि) । क्षुर-क गौ० ङीष् । क्षुरीत्यप्यत्र ।

क्षृद् सन्दीपने वा चु० उ० पक्षे भ्वा० पर० सक० सेट् । क्षर्दयति ते क्षर्दति । अचक्षर्द्दत्–अचिक्षृदत् त अक्षर्द्दीत् ।

क्षृद् देवने दीप्तौ च अक० वमने सक० रुधा० उभ० सेट् । क्षृणत्ति क्षृन्ते अक्षृदत् अक्षर्द्दीत् ।

क्षृप यातने हिंस० शब्दे अक० वा चुरा० उभ० पक्षे भ्वा० पर० सेट् । क्षर्पयति ते क्षर्पति । अचिक्षृपत् त–अचक्षर्पत् त । अक्षर्पीत् । [नागरे च त्रि० ।

क्षेक पु० क्षे–ईकन् । टहाभते पक्षिणि, मृगे च । विदग्धे,

क्षेकानुप्रास पु० क्षेकस्य विदग्धस्य प्रियोऽनुप्रासः शाक० । अनुप्रासभेदे शब्दालङ्कारे । [भेदे ।

क्षेकोक्ति स्त्री० क्षेकाया: विदग्धाया उक्तिः । वक्रोक्तिरूपेऽलङ्कार-

क्षेद् क्षेदने अद० चु० उभ० सक० सेट् क्षेदयति ते अचिक्षेदत् त ।

क्षेद् पु० क्षिद्–घञ् । क्षेदने क्षेदके भाजके च "क्षेदं गुणं गुणं क्षेदमिति लीलावती । कर्म्मणि घञ् । खण्डे, "वत्राकृतक्षेद-विभक्तरागा"मिति कुमारः ।

क्षैदिक पु० क्षेदं नित्यं सर्पति ठक् । वेतसे ।

क्षो क्षेदने दि० पर० सक० अनिट् । क्ष्यति अक्षात् अक्षासीत् ।

क्षोटिका स्त्री० चु० क्षुट–ण्वुल् । तर्जन्यङ्गुष्ठजनिते शब्दे ।

क्ष्यु गतौ भ्वा० आत्म० सक० अनिट् क्ष्यवते अक्ष्योष्ट ।

## ज

ज पु० जि–जन–जा ड शिवे, विष्णौ, जनके, वेगे, मुक्तौ त्रिषु, छन्दोग्रन्थोक्ते गुरुमध्यगे वर्णत्रये च ।

जक्ष भक्षणे सक० हासे अक० अदा० अचा० पर० सेट् । जक्षिति अजक्षीत् ।

जगच्चक्षुः पु० जगतां चक्षुरिव सर्व्वपदार्थदर्शकत्वात् । सूर्ये

**जगत्** पु० गम-क्विप् नि० । वायौ । जङ्गमे त्रि० विश्वे लोके न० ।
**जगत्प्राण** पु० जगतां प्राणो जीवनहेतुत्वात् । वायौ ।
**जगत्साक्षिन्** पु० जगतां साक्षीव सर्वस्य साक्षाद्दर्शनात् । सूर्य्ये ।
**जगती** स्त्री० गम-क्विप् नि० । पृथिव्यां, भुवने, जने, जम्बुक्षेत्रे, वास्तुभेदे, द्वादशाक्षरपादके छन्दोभेदे च ।
**जगदाधार** पु० ६त० । वायौ, जगतामाश्रये च "कालो हि जगदाधार" इति स्मृतिः । [ मिति स्मृतिः ।
**जगद्धात्री** स्त्री०धा-तृच् ६त०। दुर्गाभेदे । "उद्बुद्धास्तु जगद्धात्री"
**जगद्योनि** पु० जगतां योनिरुत्पत्तिः यस्मात् । शिवे, विष्णौ, हिरण्यगर्भे, कुमारे च । ६त० पृथिव्याम् ।
**जगन्नाथ** पु० ६त०। विष्णौ, तदीयक्षेत्रभेदे, विकलापीठस्थे भैरवभेदे च।
**जगल** पु० गल-अदने यङ् अच् नि० । मद्यकल्के ( मदेर गोडा ) मदनवृक्षे, पिष्टमद्ये धूर्त्ते च ।
**जग्ध** त्रि० अद्-क्त । भुक्ते ।
**जग्धि** स्त्री० अद्-क्तिन् । भोजने, सहभोजने च ।
**जघन** न० वक्रं हन्ति हन-यङ् अच् पृ० । स्त्रीणां श्रोणिपुरोभागे, श्रोणौ च । "पीनस्तनजघनाया" इत्युद्भटः ।
**जघनेफला** स्त्री० जघने इव मध्यभागे फलमस्याः अलुक् स० । काकोडुम्बरिकायाम् ।
**जघन्य** त्रि०हन-यङ् अच् पृ०, जघनमिव इवार्थे यत् वा । अधमे, चरमे, गर्हिते च । शूद्रे पु० । जघनमनुशीलितं यस्य । पुंसां लिङ्गे ।
**जघन्यज** पु० जघन्ये चरमे जायते जन-ड । शूद्रे, कनिष्ठे त्रि० ।
**जङ्गम** त्रि० गम-यङ्-अच् । गतिशक्तियुते ।
**जङ्गल** न० गल-यङ्-अच् पृ० । वने, रहसि च । मांसे पु० ।
**जङ्घा** स्त्री० जङ्घन्यते कुटिलं गच्छति गत्यर्थकस्य हन्तेः कौटिल्ये यङ्-अ पृ० । गुल्फजान्वोरन्तराले अवयवे ।

**जङ्घाकरिक** त्रि० कृ—अप् करः विक्षेपः ६त० ततः अस्त्यर्थे ठन् । जङ्घाचलनेनाजीवति धावके (धाउडे) ।

**जङ्घाल** त्रि० जङ्घा वेगवती अस्त्यस्य लच् । धावके जङ्घाजीविनि । "हरिणैणकुरङ्गर्ष्यपृषतन्यङ्कुशम्बराः । राजीवश्च तथा मुण्डी जङ्घालाः परिकीर्त्तिताः" इत्युक्तेषु मृगेषु पु० ।

**जङ्घिल** त्रि० अतिशयवेगवती जङ्घास्त्यस्य इलच् । वेगवज्जङ्घाविशिष्टे धावके ।

**जज** युद्धे भ्वा० पर० अक० सेट् । जजति अजाजीत्—अजजीत् ।

**जञ्ज** योधने भ्वा० पर० सक० सेट् इदित् । जञ्जति अजञ्जीत् ।

**जट** संहतौ भ्वा० पर० अक० सेट् । जटति अजाटीत् अजटीत् ।

**जटा** स्त्री० जट—अच् । अन्योन्यसंलग्ने केशे, व्रतिनां शिखायाम्, सिंहादेः सटायाम्, वृक्षादेर्मूले, (जड़) जटामांस्यां, वेदस्य पाठभेदे, रुद्रजटायाम् लतायाम् शतावर्य्याञ्च ।

**जटाजूट** पु० ६त० । जटानां जूटे (बन्धे) समूहे च "जटाजूटसमायुक्तामिति दुर्गाध्यानम् । [गन्धद्रव्यभेदे ।

**जटामांसी** पु० जटां मन्यते मन—स दीर्घश्च । स्वनामख्याते

**जटायु(स्)** पु० जटां याति या—क, जट—संहतौ अच् जटं संहतमायुरस्य वा । स्वनामख्याते खगभेदे, गुग्गुलौ च ।

**जटाल** पु० जटास्त्यस्य लच् । गुग्गुलौ, वटे, कर्पूरे, मुष्कके च । जटायुक्ते त्रि० । जटामांस्यां स्त्री० ।

**जटावल्ली** स्त्री० जटेव वल्ली । रुद्रजटायाम् ।

**जटि(टी)** पु० जट-इन् । वटवृक्षे, समूहे च । जटामांस्यां स्त्री० वा ङीप् ।

**जटिन्** पु० जटा अस्त्यस्य इनि । प्लक्षे (पाकुड़) अश्वत्थतुल्यपत्रयुक्ते वृक्षभेदे । जटायुते त्रि० ।

**जटिल** पु० जटा अस्त्यर्थे इलच् । सिंहे, ब्रह्मचारिभेदे च । जटायुक्ते त्रि० । जटामांस्यां, पिप्पल्यां, वचायां, दमनवृक्षे च स्त्री० ।

**जटु(टु)ल** पु० जट—उलच् पृ० टस्य ड वा। देहस्थे कृष्णचिह्नभेदे पिप्लौ (जड़ुल)। [वृद्धे, कठिने च त्रि०।

**जठर** न० जायते जन्तुर्गर्भो वास्मिन् जन—अर—ठान्तादेशः। कुक्षौ।

**जड** त्रि० जलति घनीभवति जल—अच् डस्य लः। इष्टानिष्टानभिज्ञे, हिमार्त्ते, मूके, बुद्धिहीने, अप्रकाशे, वेदग्रहणासमर्थे मूर्खे च। जले, सीसके च न०। जडयति तत्करोति णिच्—अच्। शूकशिम्ब्यां भूम्यालक्याञ्च स्त्री० टाप्।

**जतु** न० जन—उ तोन्तादेशः। अलक्ते, लाक्षायाञ्च।

**जतुका** स्त्री० जतु+इवार्थे कन्। (चामचिका) पक्षिभेदे गन्धद्रव्यभेदे, जन्त्यां, पर्पट्यां, तिर्य्यक्फलायां, निशाख्यायाञ्च।

**जतुकारी** स्त्री० जतु करोति कृ—अण् ङीप्। जतुकालतायाम्।

**जतुरसः** पु० ६ त०। अलक्तके। [स्थितयोरस्थ्नोः।

**जत्रु** न० जन—रु तान्तादेशः। स्कन्धकक्षयोः सन्धौ, कण्ठस्याधोभाग-

**जन** जनने जुहो० पर० अक० सेट् घटा०। जजन्ति। अजनत्—अजनीत् अजानीत्। जनयति जनितः। [यति जातः।

**जन** जनने दि० आ० अक० सेट् घटा०। जायते अजनिष्ट। जन-

**जन** पु० जन—अच्। लोके, पामरलोके, महोलोकादूर्द्ध्वलोके च।

**जनक** पु० जन—णिच्—ण्वुल्। पितरि, मिथिलाधिपे राजभेदे च। कारणे त्रि०।

**जनकसुता** स्त्री० जनकस्य [illegible]तया ख्याता। सीतादेव्यां रामपत्न्याम्।

**जनता** स्त्री० जनानां समूहः तल्। जनसमूहे।

**जननि(नी)** स्त्री० जन—अनि वा ङीप्। मातरि, जनिनामगन्धद्रव्ये, दयायां, कटुकायाम्, अलक्तके, जटामांस्याञ्च।

**जनपद** पु० जनाः पद्यन्ते गच्छन्ति यत्र पद—घ। देशे।

**जनमेजय** पु० जन+एज—णिच्—खश् मुम्च्। परीक्षिद्राजपुत्रे, नृपभेदे। पृ० जन्मेजयोऽप्यत्र।

**जनयितृ** पु० जन—णिच्—तृच्। पितरि। मातरि स्त्री० ङीप्।

**जनलोक** पु० महोलोकोपरि भुवनभेदे।

**जनवल्लभ** पु० ६त० । श्वेतरोहितवृक्षे । जनप्रिये त्रि० ।

**जनश्रुति** स्त्री० जनेषु श्रुतिरेव न दृष्टिर्यस्याः । सत्यमिथ्यासाधारण-लोकप्रसिद्धौ किम्वदन्त्याम् ।

**जनस्थान** न० दण्डकारण्यस्य समीपे स्थानभेदे, जनाधारस्थाने च । जनस्थाने भ्रान्तमित्युद्भटः ।

**जनान्तिक** न० ६त० । जनसमीपे, अप्रकाशे; त्रिपताककरेणान्या-मपवार्य्यान्तिके जनान् । अन्योन्यामन्त्रणं यत् स्यात् जनानां तज्जनान्तिकमित्युक्ते नाटकेऽभिनयकर्त्तॄणामन्योन्यगुप्तभाषणे च ।

**जनार्द्दन** पु० जनैरर्द्द्यते याच्यते स्वाभीष्टमसौ अर्द्द—याचने कर्म्मणि ल्युट्, जनं जननमर्द्दयति वा अर्द्द—हिंसायां ल्यु वा । विष्णौ ।

**जनाश्रय** पु० जनानां लोकानामाश्रयः । मण्डपे ।

**जनि(नी)** स्त्री० जन—भावे इन् वा ङीप् । उत्पत्तौ अभूतप्रादुर्भावे, जायते गर्भोऽस्याम्, नार्य्याम् । मातरि, स्नुषायां, जायायाञ्च । जायते आरोग्यमनया । ओषधिभेदे जतुकायाञ्च ।

**जनुस्** न० जन—उसि । उत्पत्तौ ।

**जनु(नू)** स्त्री० जन—उ वा ऊङ् । उत्पत्तौ ।

**जनेष्ट** पु० जनानामिष्टः । मुद्गरवृक्षे । वृद्धिनामौषधौ, जातीपुष्पे, हरिद्रायां जतुकायाञ्च स्त्री० । [मानिनि जीवे ।

**जन्तु** पु० जन—तु । जननशीले प्राणिनि अविद्यादोषात् देहात्माभि-

**जतुका** स्त्री० जन्तुभिः कायति प्रकाशते कै—क । लाक्षायां, तस्याहि कीटैः प्रकाशः । हिङ्गुले च ।

**जन्तुघ्न** पु० जन्तून् कृमीन् हन्ति टक् बीजपुरे । विडङ्गे, हिङ्गुनि च न० । प्राणिघातके त्रि० ।

**जन्तुफल** पु० जन्तवः फलेऽस्य । उदुम्बरे ।

**जन्तुमारी** स्त्री० जन्तून् कृमीन् मारयति मृ—णिच्—अण् उप० । निम्बूके ( निमकी ) । [क्षुद्रकीटानां स्थितिः ।

**जन्तुला** स्त्री० जन्तून् कीटान् लाति ला—क । काशतृणे तत्र हि

**जन्मन्** न० जन—मनि । उत्पत्तौ, आद्यक्षणसम्बन्धे, गर्भवासयो

निनि:सारणेन देहस्य हृणो, न्यायादुक्ते अपूर्वदेहादिभिः सम्बन्धे, ज्योतिषोक्ते जन्मनक्षत्रे, स्वावधिके दशमे ऊनविंशे च नक्षत्रे, जन्मलग्ने च ।

**जन्ममास** पु० ६त० । "आरभ्य जन्मदिवसं यावत् त्रिंशद्दिनानि च । जन्ममासः स विज्ञेय वर्ज्जितः सर्वकर्मसु" इत्युक्ते जन्मदिनावधिके त्रिंशद्दिनात्मके मासे ।

**जन्मान्तर** न० अन्यत् जन्म मयू० । भवान्तरे परलोके ।

**जन्माष्टमी** स्त्री० श्रीकृष्णस्य जन्मतिथौ मुख्यचान्द्रेण श्रावणस्य कृष्णाष्टम्याम् ।

**जन्मिन्** पु० जन्मास्त्यस्य ब्रीह्यादि० इनि । प्राणिनि जीवे ।

**जन्य** त्रि० जन–कर्त्तरि यत् । जायमाने । जन–णिच्–यत् । उत्पाद्ये, जनके च । जनीं वधूं वहति नयति वा यत् । नवोढाज्ञातिमित्रभृत्यस्निग्धेषु त्रि०। अट्टे, परीवादे, प्रीतौ, युद्धे, देहे च पु० । भावे यत् । जनने न० । मातृवयस्यायां स्त्री० ।

**जप** उच्चारणे वाचि च भ्वा०पर०सक०सेट् । जपति अजापीत्-अजपीत् ।

**जप** पु० जप–अच् । वेदमन्त्रादेरावृत्तौ अस्फुटुच्चारणे "जपस्तद्भावना ध्येयसम्मुखीकरणं मुने" इत्युक्ते मन्त्रादिभावना च ।

**जपा**(बा) स्त्री० जप–अच् वा पस्य वः । स्वनामख्याते वृक्षे तत्पुष्पे च ।

**जभ** मैथुने भ्वा० पर० सक० सेट् । जभति अजभीत् ।

**जभ** मैथुने भ्वा० पर० सक० सेट् इदित् । जम्भति अजम्भीत् ।

**जभ** जृम्भणे भ्वा० आत्म० अक० सेट् इदित् । जम्भते अजम्भिष्ट ।

**जभ** नाशे चुरा० उभ० सक० इदित् । जम्भयति-ते अजजम्भत् त ।

**जभ** जृम्भणे भ्वा० आत्म० सेट् । जभते अजम्भिष्ट ।

**जम** भक्षे भ्वा०पर०सक०सेट् । जमति अजमीत् । जमित्वा-जान्त्वा ।

**जमदग्नि** पु० । परशुरामस्य पितरि मुनिभेदे ।

**जम्पती** पु०द्वि०व० । जाया च पतिश्च द्व० जायाया जम् । दम्पत्योः स्त्रीपुरुषयोः । [शैवाले, कतकवृक्षे ।

**जम्बाल** पु० जम्ब–घञ् जम्बमालाति आदत्ते आ+ला–क । पङ्के,

**जम्बालिनी** स्त्री० जम्बाल+अस्त्यर्थे इनि । नद्याम् ।

**जम्बीर** पु० जम–विच् वीर–विक्रान्तौ क कर्म० ( गोड़ानेबु ) वृक्षभेदे, मरुवके, सितार्ज्जके च ।

**जम्बु(म्बू)** स्त्री० जम–कु नि० वुक् ऊप० वा ऊङ् ( जाम ) । इति ख्याते वृक्षे । तस्याः फले अण् तस्य वा लुप् । जाम्बवम् । वा ह्रस्वे । जम्बु चाप्यत्र ।

**जम्बुक** पु० जम्बुरिव कायति कै–क । ( गोलापजाम ) इति ख्याते वृक्षे, श्योनाकभेदे च । स्वार्थे कन् जम्बुशब्दार्थे ।

**जम्बुद्वीप** पु० जम्बुवृक्षचिह्नितो द्वीपः शाक० । सप्तद्वीपमध्ये स्वनामख्याते द्वीपभेदे ।

**जम्बूक** पु० जम० उलूकादि० नि० । शृगाले, नीचे, वरुणे, जम्बुकार्थे च (गोलापजाम) द्राक्षाभेदे स्त्री० ।

**जम्भ** पु० जभि–घञ् । दैत्यभेदे, दन्ते, जम्बीरे, अंशे, हनौ, तूणे च भावे घञ् । भक्षणे जृम्भणे च । अ ! जृम्भायां स्त्री० ।

**जम्भभेदिन्** पु० जम्भं दैत्यं भिनत्ति भिद्–णिनि । इन्द्रे जम्भभेदनादयोऽप्यत्र ।

**जम्भला** स्त्री० जम्भं जृम्भां लाति ला–क । राक्षसीभेदे तस्याः स्मरणे ज्वरनाशात् ज्वरनाशे च तत्पूर्वाङ्गजृम्भाया अपि नाशः "समुद्रस्योत्तरे तीरे जम्भला नाम राक्षसी"ति ।

**जय** पु० जि–भावे अच् । शत्रूणामभिभावने, नारायणपार्श्वचरे, "एतौ द्वौ पार्श्वगौ मह्यं जयो विजय एव चे"ति भागवतम् विराटपुरस्थे गुप्तसंज्ञके युधिष्ठिरे च ।

**जयढक्का** स्त्री० जयसाधिका ढक्का । वाद्यभेदे ।

**जयद्रथ** पु० जयन् रथो यस्य । सिन्धुराजे दुर्योधनभगिनीपतौ स्वनामख्याते नृपे, सूर्य्ये, भीमे च ।

**जयन्त** पु० जि–झच् । इन्द्रस्य पुत्रे चन्द्रे, शिवे, विराटपुरस्थे गुप्तसंज्ञके भीमे च ।

**जयन्ती** स्त्री० जयति रोगान् अन्यान्यौ धान्ति वा जि–शतृ ङीप् ।

जरायाम्, नादेय्याम् दुर्गाभेदे "जयन्ती मङ्गला काली"ति मन्त्रः। पताकायाम्, जयन्तीवृक्षे, "रोहिणीसहिता कृष्णा मासे च श्रावणेऽष्टमी। अर्द्धरात्रादधश्चोर्द्ध्वम् कलयापि यदा भवेत् जयन्ती नाम सा प्रोक्ते"त्युक्तलक्षणे योगभेदे च।

**जयपत्र** न० जयसूचकं पत्रम्। "पूर्वोत्तरक्रियायुक्तं निर्णयान्तं यदा नृप। प्रदद्यात् जयिने लेख्यं जयपत्रं तदुच्यते" इत्युक्ते पत्रे

**जयपाल** पु० जयेन मलजयेन पालयति पाल—अत्। स्वनामख्याते सारकफलके वृक्षे। दृत०। विष्णौ, नृपे च।

**जया** स्त्री० जि अच्। हरितक्याम्, जयन्त्याम्, दुर्गायां तत्सहचर्य्यां गणिकारिकायां, विजयायां (भङ्गा) पताकाभेदे, नीलदूर्वायाम्, अग्निमन्थवृक्षे, ज्योतिषोक्ते "त्रयोदश्यष्टमी चैव तृतीया च जयामते"त्युक्ते तिथिसमुदाये च।

**जय्य** त्रि० जेतुं शक्यः जि—यत् क्षय्यजय्यौ तदर्थे नि०। जेतुं शक्ये

**जरठ** त्रि० जॄ—अठच्। कर्कशे, कठिने, पाण्डौ, जीर्णे च।

**जरण** पु०न०। जॄ णिच्-ल्यु। जीरके, हिङ्गुनि, सौवर्चले, कृष्णौपधौ च। कासमर्द्दे पु०। कृष्णजीरके स्त्री०।

**जरत्** त्रि० जॄ—अतृन्। वृद्धे, जीर्णे, जरायुक्ते, पुरातने च। स्त्रियां जरती।

**जरत्कारु** पु० मनसादेव्याः पत्यौ मुनिभेदे। मनसादेव्यां स्त्री०

**जरद्गव** पु० जरन् गौः षच् समा०। वृद्धोक्षे, पक्षिभेदे च।

**जरन्त** पु० जॄ—झच्। महिषे। जीर्णे त्रि०।

**जरा** स्त्री० जॄ—अङ्। शैथिल्यापादकावस्थाभेदे।

**जरायु** पु० जरामेति ञुण्। गर्भावरणचर्म्मणि गर्भाशये, जटायौ पक्षिणि च।

**जरायुज** त्रि० जरायुतो जायते जन—ड। "पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः। रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजा" इत्युक्ते पश्वादिमनुष्यान्तेषु "धातुवर्णाकृतिः सूक्ष्मा जरायुः सा निगद्यते शुक्रशोणितयोर्योगसञ्चिन् पंजयतो यतः। तान गर्भो शरोद्याम्

तेन प्रोक्तोजरायुज इत्युक्ते गर्भे च ।        [ निरुक्तौ न्टपभेदे ।

**जरासन्धः** पु० "जरया सन्धितो यस्मात् जरासन्धस्ततोऽभवदित्युक्ते-

**जरूथ** पु०न० जॄ—ऊथन् । स्थूलमांसे । [अज(र्चीत्)(र्च्छीत्)(र्जीत्) ।

**जर्च**(र्छ)(र्ज) उक्तौ भर्त्सने च तु० पर० सक० सेट् । जर्च(र्छ)(र्ज)ति

**जर्ज्जर** पु०न० । जर्ज्ज—अरन् । शक्रध्वजे, शैलजे, गन्धद्रव्ये च ।

जीर्णे त्रि० ।        [ जीर्णे त्रि० ।

**जर्ज्जरीक** त्रि० जर्ज—ईकन् पर्फरीकादि० नि० । बहुछिद्रे द्रव्ये ।

**जर्भ** उक्तौ निन्दायाञ्च तु०पर०सक० सेट् । जर्भति अजर्भीत् ।

**जर्त्तिल** पु० जॄ—णिच् कर्म० । अरण्यतिले ।

**जर्स** भर्त्सने उक्तौ रक्षणे च भ्वा०पर०सक०सेट् । जर्सति अजर्सीत्

**जल** आच्छादने चुरा० उभ०सक० सेट् । जालयति ते अजीजलत् त ।

**जल** तीक्ष्णतादिवत्त्वे भ्वा०पर० सक० सेट् ज्वलादि । जलति अजा-

लीत् । जलः जालः ।

**जल** त्रि० जल—अच् । जडे । उदके, ह्रीवेरे गन्धद्रव्ये ज्योतिषोक्ते

लग्नावधिके चतुर्थस्थाने, पूर्वाषाढानक्षत्रे च न० ।

**जलकण्टक** पु० जलस्य कण्टक इव । शृङ्गाटके । (पानफल) कुम्भीरे च

**जलकपि** पु० जले कपिरिव । शिशुमारे जलजन्तुभेदे (शोसक) ।

**जलकरङ्क** पु० जलस्य करङ्क इवाधारः । नारिकेले, मेघे च । जले

करङ्क इव । शङ्खे जललतायाञ्च ।

**जलकाक** पु० जले काक इव । (पानकौडी) पक्षिभेदे ।

**जलकुन्तल** पु० जलस्य कुन्तलः केश इव । शैवाले ।

**जलचर** पु० जले चरति चर—टक् । ग्राहादिषु जलजन्तुषु ।

**जलज** पु० जले जायते जन—ड । शैवाले, वानीरवृक्षे हिज्जलवृक्षे,

मत्स्ये, ज्योतिषोक्तेषु कर्कटमीनमकरान्त्यार्द्धराशिषु च । व्यासभेदे

पद्मे च न० । शङ्खे पु०न० । जलजातमात्रे त्रि० ।

**जलजन्तु** पु० इत० जलस्थेषु ग्राहादिषु प्राणिषु ।

**जलजन्तुका** स्त्री० जलजन्तुः अल्पार्थे कन् । जलौकायाम् (जोंक) ।

**जलद** पु० जलं ददाति दा—क । मेघे, कर्पूरे च जलदातरि त्रि० ।

**जलदागम** पु० जलदानामागमो यस्मिन् काले। वर्षाकाले।

**जलधर** पु० जलानां धरः धृ—अच्। मेघे—कर्पूरे, समुद्रे, तिनिश-वृक्षे च। जलधारिणि त्रि०। [भेदे च।

**जलधरमाला** स्त्री० ६त०। मेघपङ्क्तौ, द्वादशाक्षरपादके छन्दो-

**जलधि** पु० जलानि धीयन्तेऽत्र धा—कि। समुद्रे। तीर्थधिप्रभृतयोऽप्यत्र, चतुःसङ्ख्यायां संख्याभेदे, "जलधिश्चान्त्यं मध्यं परार्द्ध-मि"ति लीलावती।

**जलधिजा** स्त्री० जलधेर्जायते जन—ड। लक्ष्म्याम्।

**जलनिधि** पु० जलानि निधीयन्तेऽत्र नि+धा—कि। समुद्रे चतुःसंख्यायाञ्च।

**जलनिर्गम** पु० जलानां निर्गमः। नद्यादेर्जलभ्रमणे, अधःस्थितस्य जलस्योर्द्ध्वगतौ, प्राकारादिषु जलनिःसारणजालके च।

**जलनीली** स्त्री० जलं नीलयति नील+तत्करोति णिच् अण्। शैवाले। स्वार्थे कन् जलनीलिकाप्यत्र।

**जलपृष्ठजा** स्त्री० जलस्य पृष्ठे उपरि जायते जन-ड। शैवाले।

**जलप्राय** न० जलं प्रायं यत्र। जलबहुले देशे।

**जलप्लव** पु० जले प्लवते प्लु—अच्। (उद्बिराल) जलजन्तुभेदे।

**जलबुद्बुद** न० ६त०। जलविम्बे।

**जलमद्गु** पु० जले मद्गुरिव निरन्तरमज्जनोन्मज्जनत्वात् मनुष्यरङ्कविहगे

**जलमार्ग** पु० ६त०। प्रणाल्याम् (नाला) (नरदामा)।

**जलमुच्** पु० जलानि मुञ्चति मुच—क्विप्। मेघे।

**जलमोद** न० जलेन जलयोगेन मोदयति सेविनं मुद—णिच् अच्। उशीरे (वेणारमूल)। [धारायन्त्रे।

**जलयन्त्र** न० जलानामुत्क्षेपणार्थं यन्त्रम्। (फोहारा) ख्याते

**जलवल्क** पु० जलानां वल्कल इव। कुम्भिकायाम्।

**जलविषुव** न० रवेः तुलाराशिसंक्रान्तौ।

**जलवेतस** पु० जले जातो वेतसः शाक०। वेतसभेदे।

**जलव्याल** पुं० जलस्थो व्यालो हिंस्रः। सर्पभेदे, क्रूरकर्मणि जन्तौ च।

जलशायिन् पु० जले समुद्रजले शेते शी—णिनि। नारायणे।

जलशुक्ति स्त्री० जलस्य शुक्तिरिव। शम्बूके।

जलशूक न० जलस्य शूकमग्रम्। शैवाले।

जलशूकर पु० जलस्य शूकर इव। कुम्भीरे।

जलसर्पिणी स्त्री० जले सर्पति सृप—णिनि। जलौकायाम् (जोंक)।

जलहस्तिन् पु० जले हस्तीव। ग्राहाख्ये जलजन्तौ। ७त०। जलस्थे हस्तिरूपे जन्तुभेदे।

जलहास पु० जलानां हास इव शुभ्रत्वात्। फेने, समुद्रफेने च।

जलाधार पु० ६त०। तड़ागादौ जलाशये समुद्रे च। जलमाधारो यस्य। शृङ्गाटके। उशीरे न०। जलस्थिते त्रि० एवं जलाशयादयोऽपि शब्दा अत्रार्थे बोध्याः।

जलार्द्रा स्त्री० जलेनार्द्रा। जलेनार्द्रीकृते व्यजने।

जलालूक न० ६त०। शालूके, पद्मादिकन्दे मृणालमूले च।

जलावर्त्त पु० आ+वृत—णिच्—अच् ६त०। स्वतो जलानां भ्रमणे।

जलूका स्त्री० जलमोको यस्याः पृ०। जलौकायाम्।

जलेचर पु० जले चरति चर—टक् अलुक् स०। हंसादौ।

जलेन्धन पु० जलान्येवेन्धनानि यस्य। वाड़वानले।

जलेरुहा स्त्री० जले रोहति—रुह-अच् अलुक् स०। कुटुम्बिनीवृक्षे।

जलेशय पु० जले शेते शी—अच् अलुक् स०। मत्स्ये।

जलेश्वर पु० ६त०। वरुणे, समुद्रे च।

जलोच्छास पु० जलान्युच्छसन्त्येभि: उद्—श्वस—घञ्। प्रवृद्धजलस्य निर्गममार्गे, अधिकजलस्य सर्वतोवहने च।

जलोदर न० जलप्रधानमुदरं यस्मात् ५ब०। उदरामयरोगभेदे

जलोद्भवा स्त्री० जले उद्भवति उद्+भू—अच्। स्वल्पब्राह्मीशाके।

जलौकस् स्त्री० जलमोको वसतिरस्याः। (जोंक) ख्यातायां रक्तपायाम्। अमरमते ब० व०।

जलौकस पु० जलमोकोऽस्त्यस्य अच्। (जोंक) रक्तपायां जलौकसेनेव रक्ताकृष्टिनिपुणेन वेश्याजनेनेति वासवदत्ता।

**जलौका** स्त्री० उच क नि० क जलमोकः स्थानं यस्याः। (जोंक) रक्तपायाम्। [कल्पनाधिनाथे” इति न्यायशिरोमणिः।

**जल्प** वाग्विशेषे भ्वा०पर०सक०सेट्। जल्पति अजल्पीत्। “मयि जल्पति

**जल्प** पु० जल्प–घञ्। परमतनिकारणपूर्वकं स्वमतस्थापनरूपे वाक्यभेदे, तत्त्वबुभुत्सोः कथारूपे वादे, कथने च।

**जल्पाक** त्रि० जल्प–षाकन्। बहुकुत्सितवाक्यवदनशीले (वाचाल)।

**जव** संघाते चुरा०उभ०अक०सेट् इदित्। जम्बयति–ते अजजम्बत् त।

**जव** पु० जु–अप्। वेगे।

**जवन** पु० जु-युच्। वेगवति शीघ्रके घोटके। देशभेदे, जातिभेदे च।

**जवनिका** स्त्री० जवन्त्यस्यां जु–ल्युट् स्वार्थे कन्। (कानात्) (परदा) ख्याते वस्त्रभेदे।

**जवस** न० जु–असच्। घासे।

**जविन्** पु० जवोऽस्त्यस्य इनि। घोटके, उष्ट्रे च। वेगवति त्रि०।

**जष** वधे भ्वा० उभ० सक० सेट्। जषति ते अजाषीत्–अजषीत्।

**जस** मोक्षणे दिवा० पर० सक० सेट्। जस्यति अजसत्–अजासीत् अजसीत्। [जसत् त।

**जस** वधे अनादरे च चुरा० उभ० सक० सेट्। जासयति ते अजी-

**जस** रक्षणे चु० उभ०सक० सेट् इदित्। जंसयति ते अजजंसत् त।

**जहत्स्वार्था** स्त्री० जहत् स्वार्थोयाम्। लक्षणाभेदे, यथा आयुर्घृतं

**जहदजहल्लक्षणा** स्त्री० जहच्च अजहच्च स्वार्थोयां तादृशी लक्षणा। वाच्यार्थैकदेशत्यागेनैकदेशवृत्तौ लक्षणायाम् यथा सोऽयं देवदत्त इत्यत्र तत्कालैतत्कालरूपार्थत्यागेन केवलदेवदत्तमात्रार्थबोधनात् वाच्यार्थैकदेशवृत्तिता।

**जहल्लक्षणा** स्त्री० जहत् स्वार्थोयाम् उत्तरपदलोपः कर्म०। जहत् स्वार्थायां लक्षणायाम्। यथा आयुर्घृतम्।

**जह्नु** पु० चन्द्रवंशीये राजर्षिभेदे येन गङ्गावतरणकाले गङ्गा- पीतेति पुराणम्। [गङ्गायाम्।

**जह्नुतनया** स्त्री० जह्नोस्तनयेव तदुदरं गत्वा ततो निःसरणात्।

**जह्नुसप्तमी** स्त्री० वैशाखशुक्लसप्तम्याम् ।

**जागर** पु० जागृ—अप् । निद्राभावे जागरणे, कवचे च ।

**जागरित** न० जागृ—क्त । इन्द्रियैर्विषयोपलब्धियोग्यावस्थायाम् ।
जीवोहि स्वप्नादिहेतुकर्मनाशे इन्द्रियविषयान् अनुमेयांश्च स्थूल-विषयान् व्यवहारिकांश्च पदार्थान् यस्यामवस्थायामनुभवति तज्जागरितम् । कर्त्तरि—क्त । जागरणयुक्ते त्रि० । [ संज्ञे जीवे ।

**जागरितस्थान** पु० जागरितं स्थानमस्य । वेदान्तोक्ते विश्व-

**जागरूक** त्रि० जागृ+ऊक । जागरणशीले, अप्रमत्ते च ।

**जागर्य्या** स्त्री० जागृ—श । जागरणे । अ । जागराप्यत्र ।

**जागृ** निद्राभावे अदा०पर०अक०सेट् जक्षा०। जागर्त्ति अजागरीत् ।

**जागृवि** पु० जागृ क्विन् । अग्नौ, नृपे च ।

**जाग्रत्** न० जागृ—शतृ । इन्द्रियादिभिः विषयज्ञानयोग्यावस्थायाम् ।
तद्वति त्रि० स्त्रियां ङीप् ।

**जाङ्गल** पु० जङ्गले भवः, तत् शीलितं यस्य वा अण् । कपिञ्जले खगे निर्जलदेशे हरिणादिषु पशुषु कुरुदेशसमीपस्थे देशे च तद्देशस्थे त्रि० व०व० ।

**जाङ्गलि** पु० जङ्गलं परिशीलितमस्य जङ्गल—इञ् । विषवैद्ये ।

**जाङ्गलिक** पु० जाङ्गल्याविषविद्यया चरति ठक् । विषवैद्ये ।

**जाङ्गली** स्त्री० जाङ्गलेरियम् अण् ङीप् । विषविद्यायाम्, शूक-शिम्ब्याञ्च ।

**जाङ्गुली** स्त्री० गम—यङ् उलच् नि० ङीप् । विषविद्यायाम् ।

**जाङ्घिक** त्रि० जङ्घाभ्यामाजीवति वेतनादि० ठक् । धावके, जङ्घा-जीविनि । उष्ट्रे पु० । [ च त्रि० ।

**जात** न० जन—क्त । समूहे, व्यक्ते, जन्मनि च । उत्पन्ने, प्रशस्ते

**जातक** न० जातस्य हितम् कन् । जातस्य शुभाशुभनिर्णायके वृह-ज्जातकादौ ग्रन्थे, जातकर्म्मरूपे संस्कारभेदे च ।

**जातकर्म्मन्** न० जातस्य कर्म मन्त्रवत् सर्पिःप्राशनादि । संस्कारभेदे ।

**जातमात्र** त्रि० जात एव मयूर० । सद्योजाते बालकादौ ।

**जातरूप** न० जातं रूपमस्य । प्रशस्तवर्णे, स्वर्णे ।

**जातवेदस्** पु० जातान् प्राणिनः विन्दते जठरानलत्वेन विद्लाभे असुन् । वह्नौ, चित्रकवृक्षे च ।

**जाति** स्त्री० जन-क्तिन् । जन्मनि, अनुगतैकाकारबुद्धिजननसमर्थे, अवयवव्यङ्ग्ये सकृदुपदेशव्यङ्ग्ये च धर्मभेदे, यथा गोत्वमनुष्यत्वादि ब्राह्मणत्वशूद्रत्वादि च । व्याकरणोक्ते पौत्राद्यपत्यात्मके गोत्रे, वेदशाखाभेदे च । न्यायोक्ते साधर्म्यवैधर्म्याभ्यां व्याप्तिनिरपेक्षाभ्यां वादिवाक्येषु दूषणदानरूपे वाक्ये, षड्जादिषु सप्तसु स्वरेषु, अलङ्कारभेदे, चुल्ल्याम्, आमलक्याम्, काम्पिल्ले, छन्दसि, जातिफले, मालत्यां, ( चामेली ) पुष्पप्रधानवृक्षे च । [स्त्री० ङीप् ।

**जातिकोष** न० जात्याः कोषमिव ( जायफल ) जात्याम् जयन्त्याम्

**जातिब्राह्मण** पु० जात्या ब्राह्मणः । "तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव स" इत्युक्ते निन्द्ये विप्रे ।

**जातिशस्य** न० जात्याः शस्यम् (जायफल) जातिफले ।

**जातिस्मर** त्रि० जातिं पूर्वजन्म स्मरति स्मृ-अच् । अतीतजन्मवृत्तान्तस्मृत्युक्ते जने । [भेदे च यस्याः फल (जायफल) ।

**जाती** स्त्री०जन-क्तिच् ङीप् । मालत्याम् (चामेली) तत्पुष्पेऽप लता-

**जातीफल** न० इत० (जायफल) इति ख्याते फले ।

**जातीय** त्रि० जातौ भवः छ । समानजातियुक्ते सजातीये किञ्चिच्छब्दात् जातीयप्रत्ययः । प्रकारार्थे । यथा तार्किकजातीयः तार्किकप्रकारः । [अविकल्पे, निषेधे च ।

**जातु** अव्य० जै-क्षये तुन् । कदाचिदित्यर्थे, शब्दे, निन्दायाम्

**जातुधान** पु० जातु कदाचिदन्यं प्राप्य धनं सन्निधानमस्य । राक्षसे ।

**जातुष** त्रि० जतुनो विकारः अण् षुगागमः । जतुविकारनिर्म्मिते पदार्थे ।

**जातूकर्ण** पु० मुनिभेदे । [यागभेदः । जातकर्म्माख्ये संस्कारभेदे ।

**जातेष्टि** स्त्री० यज-क्तिन् इष्टिः जातस्य संस्कारार्थं कर्त्तव्या इष्टिः

**जातोक्ष** पु० जातः प्राप्तदम्यावस्थः उक्षा टच् समा० । युववृषे ।

**जात्य** त्रि० जातौ भवः यत् । कुलीने, श्रेष्ठे, कान्ते च ।
**जात्यन्ध** त्रि० जातौ जन्मन्येवान्धः । जन्मान्धे "जात्यन्धोवधिरस्त-थे"ति मनुः । [न्यायोक्ते असदुत्तरे ।
**जात्युत्तर** न० जात्या व्याप्तिविधुराभ्यां साधर्म्यवैधर्म्याभ्यामुत्तरम् ।
**जानकी** स्त्री० जनकस्येयम् दुहितृत्वेन अण् । सीतायाम् ।
**जानपद** त्रि० जनपदे भवः, तत आगतो वा अण् । देशस्थे देशादा-गते च । जनपदानां वृत्तौ स्त्री० ङीप् । [अत्रैवार्थे ।
**जानु** न० जन-ञुण् । अरुजङ्घयोर्मध्यभागे ( आंठु ) स्वार्थे कन्
**जामदग्न्य** पु० जमदग्नेरपत्यम् यञ् । जमदग्निपुत्रे परशुरामे ।
**जामातृ** पु० जायां माति मिनोति मिमीते वा तृच् । दुहितृ पतौ, वल्लभे, स्वामिनि च ।
**जामि** स्त्री० जन-मिण् नि० वृद्धिः । भगिन्यां दुहितरि, स्नुषायां, कुलस्त्रियां, सन्निहितस्त्रियाम्, "जामयो यानि गेहानी"ति मनुः
**जाम्बवत्** पु० रामायणप्रसिद्धे भल्लुकराजे ।
**जाम्बवती** स्त्री० जाम्बवतोऽपत्यं स्त्री । कृष्णस्य भार्य्याभेदे जाम्बवत्-कन्यायाम् "शाम्ब ! शाम्ब ! महाबाहो ! शृणु जाम्बवतीसुतेति' सूर्य्यस्तवः । नागदमन्याञ्च ।
**जाम्बूनद** न० जम्बूनदे भवम् अण् । स्वर्णे "तीरमृत् तद्रसं प्राप्य सुखवायुविशोषिता । जाम्बूनदाख्यं भवति सुवर्णं सिद्धभूषणमि-त्युक्ते सुवर्णभेदे (तद्रसं जम्बूरसम्) धुस्तूरे च ।
**जायक** न० जयति गन्धान्तरं जि-ण्वुल् । पीतवर्णे सुगन्धिकाष्ठे ।
**जाया** स्त्री० जन-यक् । "पतिर्भार्य्यां संप्रविश्य गर्भोभूत्वेह जायते जायायास्तद्धि जायात्वं यदस्यां जायते पुन"रित्युक्तायां स्त्रियाम्, ज्योतिषोक्ते लग्नतः सप्तमे स्थाने च ।
**जायाजीव** पु० जायया जीवति जीव-क । नटे ।
**जायानुजीविन्** पु० जायामनुजीवति अनु+जीव-णिनि । नटे, वेश्यापतौ, वके, दुःस्थे च ।

जागु पु० जयति रोगान् जि—उण् । औषधे ।
जार पु० जीर्य्यतेऽनेन जॄ—करणे घञ् । उपपतौ ।
जारज त्रि० जारात् जायते जन-ड । अनियुक्तायामुपपतिजाते कुण्डे, गोलके च पुत्रे ।
जारणी स्त्री० जारयत्यनया चु० जॄ-करणे ल्युट् । स्थूलजीरके ।
जाल पु० चु० जल सम्वरणे घञ्, जल—घातने, णिच्—अच्, जले— क्षिप्यते इत्यण् वा । कदम्बवृक्षे गवाक्षच्छिद्रे "गवाक्षजालैरभि- निष्पतन्त्य" इति भट्टिः । मत्स्यधारणार्थे शणसूत्रनिर्मिते स्वनाम- ख्याते आनाये, अस्फुटकलिकायां, क्षुद्रफले, मृगपक्ष्यादिधारणार्थे पाशे च । गवाक्षे, दम्भे, समूहे, इन्द्रजाले च न० । स्वार्थे कन् । गवाक्षच्छिद्रे पु० । मोचकफले नवकलिकासमूहे, जारके च न० ।
जालकारक पु० कृ—ण्वुल् ६ त० । जालस्य मक्षिकादिपातनाय पाशकारके-मर्कटे (माकड़सा) शाल्मस्य कृत्रिमस्य च कर्त्तरि त्रि०।
जालन्धर पु० त्रिगर्त्ताख्ये देशे तद्देशस्थे जने ब० व० ।
जालपाद् पु०जालमिव पादावस्य पाङ्गाः । हंसे (शरारि)पक्षिभेदे च ।
जालवर्वुरक पु० जालाकारो वर्वुरकः । (कांटाबावला) वृक्षभेदे ।
जालिक पु० जालेन चरति जाल+ठक् । वागुरिके जालजीविनि, कैवर्त्ते, मर्कटके च । जालोपजीविनि त्रि० ।
जालिनी स्त्री० जाल+अस्त्यर्थे इनि । चित्रशालायां, कोषातक्याम्, (झिञा) तस्याः पक्वफलकोषे हि जालवत्त्वम् ।
जाली स्त्री० जालं विद्यतेऽस्याः अच् गौरा०ङीप् (झिञा) लताभेदे
जाल्म त्रि० जालयति अपवारयति म । पामरे, मूर्खे, क्रूरे, आमलक्याञ्च ।
जावाल पु० जबालाया अपत्यम् अण् । मुनिभेदे ।
जाह्नवी स्त्री० "जानुद्वारा पुरादात्तां जह्नुःसंपीय कोपनः । तस्य कन्यास्वरूपा च जाह्नवी तेन कीर्त्तिते"त्युक्तनिर्वचनायां गङ्गायाम्।
जि जये भ्वा० पर० सक० अनिट् । जयति अजैषीत् ।
जिगीषा स्त्री० जि—सन् अ । जयेच्छायां, प्रकर्षे, उद्यमे च ।
जिज्ञासु त्रि० ज्ञातुमिच्छुः ज्ञा-सन् उ । ज्ञातुमिच्छौ, मुमुक्षौ च ।

जित न० जि—भावे क्त । जये । कर्मणि क्त । अभिभूते पराजिते जय-लब्धे, वशीकृते, आयत्तीकृते च ।

जितकाशिन् त्रि० जितेन जयेन काशते प्रकाशते णिनि । जिताहवे, जयिनि च । [जितेन्द्रिये ।

जितात्मन् त्रि० जित—वशीकृत आत्मा इन्द्रियं मनो वा येन ।

जितेन्द्रिय त्रि० जितानि वशीकृतानीन्द्रियाणि येन । "श्रुत्वा दृष्ट्वा तथा स्पृष्ट्वा भुक्त्वाघ्रात्वा च यो नरः । न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रिय"इत्युक्ते हर्षविषादशून्ये शान्ते जने । काम-हरिवृक्षे पु० । [अस्य क्लीवोक्तिः प्रामादिकी ।

जित्य पु० जि-क्यप् । वृहद्धले कृष्यभूमिसमीकरणार्थं स्थूलकाष्ठे (मइ) ।

जित्वर जि—क्वरप् । जयशीले । स्त्रियां ङीप् ।

जिन पु० जयति संसारं जि—नक् । बुद्धे, विष्णौ च । जित्वरे त्रि० ।

जिम भक्षे भ्वा० पर० सक० सेट् । जेमति अजेमीत् ।

जिरि हिंसायां स्वा० पर० सक० सेट् । जिरिणोति अजिरायीत् ।

जिव प्रीणने भ्वा० पर०सक० सेट् इदित् । जिन्वति अजिन्वीत् ।

जिष सेके भ्वा० पर० सक० सेट् । जेषति अजेषीत् ।

जिष्णु पु० जिष—ग्स्नु । अर्ज्जुने, इन्द्रे, विष्णौ, सूर्ये, वसुषु च । जित्वरे त्रि० ।

जिह्म त्रि० हा—मन् द्वित्वादि नि० । कुटिले, मन्दे, तगरवृक्षे च ।

जिह्मग पु० जिह्मं गच्छति गम—ड । सर्पे, मदनवृक्षे च । मन्दगे, कुटिले च त्रि० ।

जिह्वा स्त्री० लेढि अनया लिह—व नि० । रसज्ञानेन्द्रिये रसनायाम्

जिह्वामूलीय पु० जिह्वामूले भवः छ । कखाभ्यां प्राक् अर्द्धविसर्ग-रेखालेख्ये विसर्गभेदे ।

जिह्वारद पु० जिह्वैव रदो दन्तश्चर्वणसाधनं यस्य । दन्तहीने जिह्वयैव चर्वणकरे खगे । [जरति, चर्मपुटे च ।

जीन त्रि० ज्या—वयोहानौ कर्त्तरि क्त संप्रसारणं दीर्घश्च । वृद्धे,

जीमूत पु० ज्या—क्विप् जीः तया जरया मूतो बद्धः मू—बन्धने क्त,

जयति नभः, जीयते वायुना वा जि—क्त मूट् दीर्घश्च वा। मेघे, मुक्तके, पर्व्वते, धृतिकरे, देवताडवृक्षे, इन्द्रे कोषातकीलतायाञ्च।

**जीर** पु० ज्या—रक्। जीरके, खड्गे, अणौ च। संज्ञायां कन्। (जीरा)। ख्याते पदार्थे।

**जीर्ण** पु० जॄ—क्त। जीरके। शैलजे न०। जरायुक्ते त्रि०। स्थूलजीरके स्त्री०। [कर्म०। पुरातनपत्रे न०।

**जीर्णपर्ण** पु० जीर्णानि पर्णान्यस्य। कदम्बे। पुरातनपत्रयुक्ते त्रि०।

**जीर्णि** स्त्री० जॄ—क्तिन्। जीर्णतायाम्।

**जीर्णोद्धार** पु० जीर्णस्य भग्नमन्दिरादेरुद्धारो यत्र। संस्कारभेदे।

**जीव** प्राणधारणे भ्वा० पर० अक० सेट्। जीवति अजीवीत्। णिच् अजिजीवत् त अजीजिवत् त।

**जीव** पु० जीव—क। देहाभिमानिनि आत्मनि मनुष्यावधिकीटपर्य्यन्ते चेतने "प्राणान् चेतनरूपेण धारयन् जीव उच्यते" इत्युक्ते प्राणिनि। करणे घञ्। जीवनोपाये। जीव—णिच् अच्। वृक्षभेदे। भावे घञ्। प्राणधारणे।

**जीवक** पु० जीवयति जीव—णिच् ण्वुल्। औषधभेदे। पीतशाले वृक्षे, क्षपणे च सेवके, वृद्ध्याजीविनि, जीव्यात् आशिषि वुन्। आशास्यमानजीवने जने त्रि०।

**जीवघन** पु० जीव एव घनोमूर्त्तिः सैन्धवशिलाघनवद्यस्य। हिरण्यगर्भे। [चकोरपक्षिणि।

**जीवजीव** पु० जीवान् जीवयति दर्शनेन हृष्टिकरत्वात् क।

**जीवञ्जीव** पु० जीवान् जीवयति खच्। चकोरे, वृक्षभेदे च।

**जीवन** न० जीव्यतेऽनेन जीव—ल्युट्। वृत्तौ, जले, मज्जनि, हैयङ्गवीने च भावे ल्युट्। प्राणधारणे। जीवयति णिच्—ल्यु। पुत्रे, जीवकौषधे, वायौ, क्षुद्रफलकवृक्षे च पु०।

**जीवनयोनि** स्त्री० ६ त०। न्यायोक्ते देहे प्राणसञ्चारकारणे अतीन्द्रिये यत्नभेदे।

**जीवनहेतु** पु० ६ त० ( "विद्याशिल्पं भृतिः सेवा गोरक्षा विपणिः

कृषिः । वृत्तिर्भैक्ष्यं कुसीदञ्च दश जीवनहेतवः” इत्युक्तेषु विद्यादिषु जीवनोपायेषु दशसु ।

**जीवनी** स्त्री० जीव्यतेऽनया जीव–ल्युट् ङीप् । जीवन्त्याम्, काकोल्यां, स्वर्णहरितकीभेदे, यूथ्यां, गुडूच्याम्, वन्दायाञ्च ।

**जीवन्तिका** स्त्री० जीव–झ ङीप् स्वार्थे कन् ह्रस्वे अत इत्वम् । गुडूच्याम्, जीवाख्यशाके, वन्दायां, हरितक्याञ्च ।

**जीवन्ती** स्त्री० जीव–झ ङीप् । जीवन्त्यां, मधुस्रवाख्यौषधौ, यूथ्यां, गुडूच्यां, वन्दायां, हरितक्याञ्च ।

**जीवन्मुक्त** त्रि० जीवन्नेव मुक्तः त्यक्तसंसारः । कृतात्मसाक्षात्कारे प्रारब्धकर्मक्षयपर्य्यन्तं सुषुप्तिवत् व्यवहर्त्तरि आत्मज्ञे जीवे ‘सुषुप्तिवद् जाग्रति यो न पश्यति द्वयन्तु पश्यन्नपि चाद्वयत्वतः । तथा च कुर्वन्नपि निष्क्रियश्च यः स आत्मविन्नान्य इतीह निश्चय इत्युक्ते ब्रह्मात्मज्ञानयुक्ते ।

**जीवन्मुक्ति** स्त्री० जीवत एव मुक्तिः कर्तृत्वभोक्तृत्वादिबन्धात् । जीवतो बन्धनिवृत्तौ ।

**जीवपुत्त्रक** पु० जीवयतीति क जीवः पुत्र इव हर्षहेतुत्वात् इवार्थे कन् । (जीयापुता) वृक्षभेदे ।

**जीवपुत्त्रा** स्त्री० जीवं पुत्रं यस्याः । वृहज्जीवन्त्याम् ।

**जीवप्रिया** स्त्री० ६त० । हरितक्याम् । [नामौषधे च ।

**जीवभद्रा** स्त्री० जीवानां भद्रं यस्याः ५व० । जीवन्तीलतायां वृद्धि-

**जीववल्ली** स्त्री० जीवयतीति जीवा कर्म० क्षीरकाकोल्याम् ।

**जीवस्थान** न० ६त० । मर्मणि ।

**जीवा** स्त्री० जीव–अच् जीवयतेरच् वा टाप् । धनुषो गुणे, जीवन्तिकायामौषधौ, वचायां, शिञ्जिते, भूमौ, जीवनोपाये च ।

**जीवातु** पु०न० । जीव–आतु । अन्ने, जीविते, जीवनौषधे, मृतसञ्जीवनौषधे च ।

**जीवात्मन्** पु० कर्म० । देहाभिमानिनि जीवे ।

**जीवाधार** पु० ६त० । हृदये, देहे च ।

**जीविका** स्त्री० जीव–अ कन् अत इत्त्वम् । जीवनोपाये आजीवने ।
**जीवितकाल** पु०जीव–भावे क्त तस्य कालः । जीवनावधि काले आयुषि
**जीवितेश** पु० ६त० । यमे, प्राणस्वामिनि, "जीवितेशवसतिं जगाम से"ति रघुः । जीवातौ, चन्द्रे सूर्य्ये च । प्रियनाथे त्रि० ।
**जीवोपाधि** पु० ६त० । स्वप्नसुषुप्तिजाग्रदवस्थासु ।
**जीव्या** स्त्री० जीवाय हिता यत् । हरितक्याम्, जीवन्त्यां, गोक्षुरदुग्धायाञ्च ।
**जु** रंहसि भ्वा०पर०अक० अनिट् । जवति । अजौषीत् । जवः ।
**जु** गतौ सौ आत्म० सक० अनिट् । जवते । अजोष्ट ।
**जुग** त्यागे भ्वा० पर० सक० सेट् इदित् । जुङ्गति । अजुङ्गीत् ।
**जुगुप्सा** स्त्री० गुप–निन्दायां स्वार्थे सन्–अ टाप् । निन्दायाम् ।
**जुङ्ग** पु० जुगि–अच् । वृद्धदारकवृक्षे वा स्त्री० इति केचित् ।
**जुटिका** स्त्री० जट–संहतौ टाप् इ० । शिखायां, संहतकेशे च ।
**जुड** प्रेरणे चु० उभ० सक० सेट् । जोडयति ते अजूजुडत् ।
**जुड** बन्धे तुदा०कुटा०पर०सक० सेट् । जुडति अजुडीत् जुजोड ।
**जुड** गतौ तु० पर० सक० सेट् । जुडति अजोडीत् ।
**जुत** दीप्तौ भ्वा०आत्म०अक० सेट् । जोतते अजोतिष्ट । अजुजोतत् त
**जुन** गतौ तु० पर० सक० सेट् । जुनति अजोनीत् ।
**जुर्व** बधे भ्वा० पर०सक० सेट् । जूर्वति अजूर्वीत् । जूर्त्तः जूर्त्तिः
**जुल** पेषणे चु० उभ०सक० सेट् । जोलयति ते अजूजुलत् त ।
**जुष** तृप्तौ तर्के च वा चु० उभ० पक्षे भ्वा०पर०सक० सेट् । जोषयति ते जोषति अजूजुषत् त अजोषीत् ।
**जुष** प्रीतौ अक० सेवने सक० तुदा० आत्म० सेट् । जुषते अजोषिष्ट ।
**जुष्ट** न० जुष–क्त । उच्छिष्टे । सेविते त्रि० ।
**जुहू** स्त्री० जुहोत्यनया हु–क्विप् नि० । पलाशकाष्ठनिर्मिते अर्द्धचन्द्राकृतिरूपे यज्ञपात्रभेदे, पर्णमये यज्ञपात्रभेदे च "यस्य पर्णमयी जुहूर्भवती"ति श्रुतिः ।
**जूट** पु० जट बन्धे घ इ० । बन्धे, समूहे, जटायाञ्च ।

जूति स्त्री० जु–क्तिन् नि० दीर्घः । वेगे ।

जूर् वयोहानौ अक० वधे सक० दिवा० आत्म० सेट् । जूर्यते अजूरिष्ट । जूर्णः ।

जूर्ण पु० जूर्–क्त (उलुखड़) तृणभेदे ।

जूर्त्ति स्त्री० ज्वर–क्तिन् संप्रसारणम् । ज्वरे ।

जूष वधे भ्वा० उभ० सक० सेट् । जूषति ते अजूषीत् अजूषिष्ट ।

जूष पु०न० जूष–घञ् अच् वा । मुद्गादीनां क्वाथे (यूष) ।

जूषण न० जूष–ल्युट् । धातपुष्पाम् (धाइफुल) ।

जृ न्यक्कारे भ्वा० पर० सक० अनिट् । जरति अजार्षीत् ।

जृभ जृम्भणे ( हाइयोला ) भ्वादि० आत्म० सक० सेट् इदित् । जृम्भते अजृम्भिष्ट ।

जृभ जृम्भे भ्वा० आत्म० सक० सेट् । जर्भते अजर्भिष्ट ।

जृभ पु० जृभि–घञ् । मुखविकाशे (हाइतोला) अ टाप् । अत्रैव स्त्री० । ततः स्वार्थे कन् अत इत्वम् जृम्भिकाप्यत्रैव ।

जृम्भकास्त्र न० जृभि–णिच्–ण्वुल् कर्म० । विपक्षस्य जृम्भोपलक्षित-निद्राकारकेऽस्त्रे ।

जृम्भिणी स्त्री० जृभि–णिनि । एलापर्ण्याम् ।

जॄ जरायां दिवा० पर० अक० सेट् घटादि० । जीर्यति अजरत् अजारीत् । जीर्णः । जरा । जरयति ।

जॄ जरायां वा चुरा० उभ० पक्षे क्र्यादि० प्वादि० अक० सेट् । जारयति ते जृणाति । अङि अजरत् अजरत्–अजारीत् ।

जेमन न० जिम–ल्युट् । भक्षणे ।

जेय त्रि० जि–कर्मणि यत् । जेतव्यमात्रे ।

जेष गतौ भ्वा० आत्म० सक० सेट् । जेषते अजेषिष्ट । णिच् अजि-जेषत् त ।

जेह यत्ने भ्वा० आत्म० अक० सेट् । जेहते अजेहिष्ट । णिच् । अजिजेहत् त ।

जै क्षये भ्वा० पर० अक० अनिट् । जयति अजासीत् । जानः ।

**जैत्र** त्रि० जेतैव जेतृ प्रज्ञादि० अण्। जयशीले। पारदे पु०। औषधे न०।

**जैत्री** स्त्री० जेत्र्येव जेतृ+स्वार्थे अण् ङीप्। जयन्तीवृक्षे।

**जैन** पु० जिनो देवतास्य अण्। बौद्धधर्मावलम्बिनि अर्हदुपासके।

**जैमिनि** पु० वेदमीमांसासूत्रकर्त्तरि व्यासशिष्ये मुनिभेदे।

**जैवातृक** पु० जीव–आतृच् ततः–कण् वृद्धिश्च। चन्द्रे, औषधे, कर्पूरे च। दीर्घायुष्के त्रि०।

**जोङ्गक** पु०न०। जुगि–वर्ज्जने ण्वुल् नि०। अगुरुचन्दने।

**जोषम्** अव्य० जुष–असु। सुखे, प्रशंसायां, तुष्णीमर्थे, लज्जने च।

**जोषा** स्त्री० जुष्यते जुषते वा जुष–घञ्। नार्य्याम्।

**जोषित्** स्त्री० जुष–इति। नार्य्याम्।

**ज्ञ** पु० ज्ञा-क। ब्रह्मणि, पण्डिते, सोमपुत्रे, बुधे च।

**ज्ञप** मारणे, आलोके, निशाने, तोषणे, स्तुतौ च चुरा०उभ०सक० सेट् घटा०। ज्ञपयति–ते अजिज्ञपत्–त।

**ज्ञपित** त्रि० ज्ञप क्त। मारिते, ज्ञापिते च नि० ज्ञप्तोऽप्यत्र।

**ज्ञप्ति** स्त्री०–क्तिन्। बुद्धौ।

**ज्ञा** बोधे क्र्या० पर० सक० अनिट्। जानाति अज्ञासीत्।

**ज्ञा** ज्ञपधात्वर्थे चुरा० उभ० सक० सेट् घटा०। ज्ञपयति ते अजिज्ञपत् त।

**ज्ञा** प्रेरणे चुरा० उभ० सक० सेट्। ज्ञापयति ते अजिज्ञपत् त।

**ज्ञातसिद्धान्त** पु० ज्ञातः सिद्धान्तः तत्त्वार्थो येन। सिद्धान्तज्ञे।

**ज्ञाति** पु० ज्ञा–कर्त्तरि करणे वा क्तिच्। पितरि पितृवंश्ये सपिण्डसकुल्यसमानोदकरूपे एकगोत्रोत्पन्ने पितृव्यादौ।

**ज्ञातेय** न० ज्ञातेर्भावः ढक्। ज्ञातित्वे।

**ज्ञान** न० ज्ञा–भावे ल्युट्। सामान्यविशेषरूपे बुद्धिभावे, "ज्ञानं द्विधा वस्तुमात्रद्योतकं निर्विकल्पकम्। सविकल्पन्तु संज्ञादिद्योतकत्वादनेकधा। संकल्पसंशयभ्रान्तिस्मृतिसादृश्यनिश्चयाः ऊहोऽनध्यवसायश्च तथान्येऽप्यूहवादयः" इत्युक्तेषु नानाविधेषु बुद्धिपरिणामेषु,

ज्ञानयोग पु० ज्ञानमेव योगः कौशलं ब्रह्मप्राप्त्युपायो वा। ब्रह्मलाभोपाये निष्ठाभेदे।

ज्ञानलक्षणा स्त्री० ज्ञानमेव लक्षणं स्वरूपं यस्याः व्याप्तेः। न्याय-मते ज्ञानसाधनाय अलौकिके सन्निकर्षभेदे। सम्प्रति यद्विषयस्य ज्ञानं जननीयं पूर्वं तद्विषयज्ञानमेव तत्र पूर्वज्ञातवस्तुनः प्रत्यासत्तिः।

ज्ञानवापी स्त्री० काश्यां स्थिते तीर्थभेदे।

ज्ञानसाधन न० सिध–णिच्–करणे ल्युट् ६त०। इन्द्रिये।

ज्ञानापोह पु० अप+ऊह–घञ् ६त०। विस्मरणे।

ज्ञानाभ्यास पु० ६त०। "तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम्। एतदेकपरत्वञ्च ज्ञानाभ्यासं विदुर्बुधा" इत्युक्ते ध्येयविषयचिन्तादौ।

ज्ञानिन् त्रि० ज्ञानमस्यास्ति इनि। ज्ञानसामान्यवति, तत्त्वज्ञानिनि च "तेषां ज्ञानी नित्ययुक्त" इति गीता। दैवज्ञे पु०।

ज्ञानेन्द्रिय न० ६त०। श्रवणदर्शनादिज्ञानसाधने श्रोत्रनेत्रनासिका-जिह्वात्वगूपेन्द्रिये, अन्तःकरणे च।

ज्या जरायां क्र्या० प्वा० पर० अक० अनिट्। जिनाति अज्यासीत्।

ज्या स्त्री० ज्या–अङ्। धनुषो गुणे मौर्व्याम्, मातरि, भूमौ च।

ज्यानि स्त्री० ज्या–क्तिन्। जीर्णतायां, हानौ, नद्याञ्च।

ज्यायस् त्रि० अतिशयेन वृद्धः ईयसु ज्यादेश इत आत्त्वञ्च। अति-शयवृद्धे। स्त्रियां ङीप्।

ज्यु गतौ भ्वा० आत्म० सक० अनिट्। ज्यवते अज्योष्ट।

ज्युत दीप्तौ भ्वा० पर० सक० सेट्। ज्योतति अज्युतत् अज्योतीत्।

ज्युत दीप्तौ भ्वा० आत्म० अक० सेट्। ज्योतति अज्योतिष्ट। णिचः अजुज्योतत् त।

ज्येष्ठ त्रि० वृद्ध+इष्ठन् ज्यादेशः। अतिवृद्धे, श्रेष्ठे च। अग्रजे पु०। ज्येष्ठभगिन्याम्, वयोज्येष्ठायां, ज्येष्ठस्य पत्न्यामपि स्त्री० अजादित्वात् टावेव। गङ्गायाम्, अलक्ष्म्याम्, अश्विन्यवधिके अष्टादशे नक्षत्रे च स्त्री० गृहगोधिकायां ( टिकटिकी ) स्त्री० ङीप् "ज्येष्ठीरुते श्रुतेप्येव" मिति स्मृतिः।

**ज्येष्ठतात** पु० तातस्य ज्येष्ठः राजदन्तादि० । पितुरग्रजे (जेठा) ।
**ज्येष्ठश्वश्रू** स्त्री० ज्येष्ठत्वात् पत्न्याः अग्रजत्वेन अविवाह्यत्वात् पत्नीमाध्वतयैवात्मनो मान्यत्वाच्च श्वश्रूरिव । पत्न्याज्येष्ठभगिन्याम् ।
**ज्येष्ठसामन्** न० मूर्द्धनि दिवइत्यस्यामृचि गीते सामनि, तत्सामाङ्गव्रते च ।
**ज्येष्ठाश्रम** पु० ज्येष्ठ आश्रमो यस्य । "यस्मात् त्रयोप्याश्रमिणो ज्ञानेनान्नेन चान्वहम् । गृहस्थेनैव धार्य्यन्ते तस्मात् ज्येष्ठाश्रमो गृही"त्युक्ते गृहस्थाश्रमे । इनि । गृहस्थाश्रमीत्यप्यत्र ।
**ज्येष्ठ** पु० ज्येष्ठानक्षत्रेण युक्ता पौर्णमासी ज्यैष्ठी सास्मिन् मासे अण् । स्वनामख्याते चान्द्रे मासे । [तत्रैव तत्सम्भवात् ।
**ज्यैष्ठी** स्त्री० ज्येष्ठायुक्ता पौर्णमासी अण् । चान्द्रज्येष्ठमासपौर्णमास्याम्
**ज्यैष्ठ्य** न० ज्येष्ठस्य भावः ष्यञ् । ज्येष्ठत्वे "विप्राणां ज्ञानतो ज्यैष्ठ्य"मिति मनुः । [ज्यवते स्वज्यास्त ।
**ज्यो** नियमे उपनये व्रतोपदेशे च भ्वा० आत्म० सक० अनिट् ।
**ज्योक्** अ० ज्यो—डोकि । सम्प्रत्यर्थे, कालभूयस्त्वे, शीघ्रतायां, प्रश्ने च ।
**ज्योतिरिङ्ग** पु० ज्योतिरिव इङ्गति इगि—गतौ अच् । खद्योते युच् । ज्योतिरिङ्गणोऽप्यत्र । [ज्योतिःशास्त्राभिज्ञे ।
**ज्योतिर्विद्** पु० ज्योतिषां सूर्य्यादीनां गत्यादिकं वेत्ति विद्-क्विप् ।
**ज्योतिश्चक्र** न० ६त०। सूर्य्यादीनां ज्योतिषां मण्डले, सप्तविंशतिभैर्ज्योतिश्चक्रं स्तिमितवायुगमि"त्युक्ते सप्तविंशतिनक्षत्रात्मके राशिचक्रे च
**ज्योतिश्शास्त्र** न० ६त० । ग्रहनक्षत्रादीनां गतिस्वरूपादिनिरूपके "पञ्चस्कन्धमिदं शास्त्रं होरागणितसंहिताः । केरलिः शकुनं चेति ज्योतिश्शास्त्रमुदीरित"मित्युक्ते पञ्चाङ्गे शास्त्रे ।
**ज्योतिष** न० ज्योतिरधिकृत्य कृतोग्रन्थः नि० न वृद्धिः । ज्योतिःशास्त्रे । वृद्धौ । ज्यौतिषमप्यत्र ।
**ज्योतिष्क** पु० ज्योतिरिव इवार्थे कन् । चित्रकवृक्षे, मेथिकाबीजे, गणिकारीवृक्षे च । स्वार्थे कन् । ग्रहनक्षत्रादिषु ब० व० । ज्योतिष्मतीलतायाम् स्त्री० मेरोः शृङ्गान्तरे न० ।

ज्योतिष्टोम पु० ज्योतींषि स्तोमायस्य यत्वम्। षोड़शर्त्विक्साध्ये यज्ञभेदे।
ज्योतिष्मत् पु० ज्योतिरस्त्यस्य मतुप्। सूर्य्ये प्लक्षद्वीपस्थे पर्वतभेदे च (मालकाङ्गनी) लताभेदे। रात्रौ, योगशास्त्रोक्ते चित्तवृत्तिभेदे च स्त्री० ङीप्। ज्योतिर्युक्ते त्रि०।
ज्योतिस् पु० द्योतते द्युत्यतेऽनेन वा द्युत-इसुन् आदेर्दस्यजः। सूर्य्ये, अग्नौ, मेथिकावृक्षे च। नेत्रकनीनिकामध्यस्थे दर्शनसाधने, पदार्थे, नक्षत्रे, प्रकाशे, स्वयंप्रकाशे, सर्व्वावभासके चैतन्ये च न०।
ज्योत्स्ना स्त्री० ज्योतिरस्त्यस्याम् न उपधालोपश्च। कौमुद्याम् चन्द्रकिरणे च। ङीप्। ज्योतिर्युक्तरात्रौ, ( झिङ्गा ) पटोलिकायां रेणुकानामगन्धद्रव्ये च स्त्री०।
ज्यौतिषिक पु० ज्योतिषं शास्त्रं वेत्त्यधीते वा ठक्। दैवज्ञे।
ज्रि अभिभवे भ्वा० पर० सक० अनिट्। ज्रयति अज्रैषीत्।
ज्री वयोहानौ वा० चुरा० उभ० पक्षे क्र्या० प्वा० प० अक० अनिट् ज्रापयति ते ज्रिणाति अजिज्रयत् स अज्रैषीत्।
ज्वर रोगे भ्वा०प०अ० सेट् घ०। ज्वरति अज्वारीत्। ज्वरयति ते।
ज्वर पु० ज्वर-घ। स्वनामख्याते रोगभेदे।
ज्वरघ्न पु० ज्वरं हन्ति हन-टक्। गुडूच्याम्, वास्तूके च। ज्वरनाशके त्रि०। मञ्जिष्ठायां स्त्री० ङीप्।
ज्वरान्तक पु० अन्तयति अन्त+तत् करोति णिच् ण्वुल् ६ त०। नेपालनिम्बे, आरग्वधे, लौहघटितौषधभेदे च। ज्वरनाशके त्रि०।
ज्वरापहा स्त्री० ज्वरमपहन्ति अप+हन-ड। (बेलशुण्ठ) बिल्वशुण्ठ्याम्, बिल्वपत्र्याञ्च। ज्वरनाशके त्रि०।
ज्वरित त्रि० ज्वरः सञ्जातोऽस्य तारका० इतच्। ज्वरयुक्ते।
ज्वल दीप्तौ चलने च भ्वा० पर०अक० सेट् घटा० ज्वला०। ज्वलति अज्वालीत्। ज्वलयति। ज्वलः ज्वालः।
ज्वलन पु० ज्वलति ज्वल+युच्। वह्नौ, चित्रकवृक्षे च। भावे ल्युट्। दीप्तौ दाहे च।

ज्वलनाश्मन् पु० ज्वलतीति ज्वलनो देदीप्यमानोऽर्ककिरणसम्पर्कात् अश्मा उपलः । सूर्यकान्तमणौ ।

ज्वलित त्रि० ज्वल–क्त । दग्धे, दीप्ते, उज्ज्वले, भास्वरे च ।

ज्वाल पु० ज्वल–ण । अग्निशिखायाम् । स्त्रीत्वमपि टाप् । दग्धान्ने दाहे च । दीप्ते त्रि० । [त्वात् । वह्नौ ।

ज्वालजिह्व पु० ज्वालः शिखेव जिह्वा यस्य दाह्यवस्तुलेहक-

ज्वालामुखी स्त्री० पीठस्थानभेदे । ज्वालामुख्यां महाजिह्वो देव उन्मत्तभैरवः । अम्बिका सिद्धिकानाम्नी स्तनो जालन्धरे ममेति तन्त्रम् ।

## झ

झ पु० झम संहतौ भक्षे पिधाने वा ड । झञ्झावाते, सुरगुरौ, इन्द्रे, ध्वनौ च । नष्टद्रव्ये त्रि० ।

झङ्कार पु० झमित्यव्यक्तशब्दस्य कारः कृ–घञ् । भ्रमरादिशब्दे ।

झङ्कृति स्त्री० झन् इत्यव्यक्तशब्दस्य कृतिः कृ–क्तिन् । कांस्यादेर्ध्वनौ ।

झञ्झा स्त्री० झमितिकृत्वा झच्यते यत्र ड ध्वनिभेदे, तथाध्वनियुक्ते प्रचण्डानिले च । [वातादयोऽप्यत्र ।

झञ्झानिल पु० झञ्झाप्रधानोऽनिलः शाक० । प्रचण्डानिले झञ्झा–

झट संहतौ भ्वा० पर० सक० सेट् । झटति अझाटीत् अझटीत् ।

झटा स्त्री० झट–अच् । शीघ्रे ।

झटिति अव्य० झट क्विप् झट् इण–क्तिन् द्वित० । शीघ्रे ।

झन(ण)त्कार पु० झन(ण)दित्यव्यक्तशब्दस्य कारः कृ–घञ् । कङ्कणादिध्वनौ ।

झम भ्वा०पर०सक०सेट् । झमति अझमीत् । झमित्वा-झान्त्वा झान्तः ।

झम्प पु० झम–पन्, झमिति कृत्य पतति पत–ड वा । वेगेनोर्द्धादि-देशादास्फालनपूर्वकपतने, लम्फे च । स्त्रीत्वमपीच्छति । पाताल-झम्पाश्च ताः इति वीरचरितम् । [तत्रैवार्थे ।

झर पु० झॄ–अण् । निर्झरे उत्सान्निर्गते जलप्रवाहे । अङ् टाप् ।

झर्च(र्छ)(र्झ) उक्तौ भर्त्सने च सु० पर० सक० सेट्। झर्च(र्छ)(र्झ)ति अझर्चीत्(र्छी)(र्झी)त्।

झर्झर पु० झर्झ–अरन्। (झांज) इति ख्याते वाद्यभेदे पटहे, कलियुगे, नदभेदे, च। वाद्यभेदे स्त्री० ङीप्।

झलज्झला स्त्री० जलन्त जलति अच् पृ०। हस्तिकर्णास्फालने।

झल्ल पु० जातिभेदे।

झल्लक पु० न० झर्झ–ण्वुल् पृ०। कांस्यवाद्यभेदे "चिताङ्गारे झल्लकञ्चेति स्मृतिः। [स्त्री० टाप्।

झल्लरी स्त्री० झर्झति झर्झ–अरन् पृ०। वाद्यभेदे। शुद्धे, क्लेदे च

झष बधे भ्वा० पर० सक० सेट्। झषति अझाषीत् अझषीत्।

झष पद्मणे पिधाने च भ्वा० उभ० सक० सेट्। झषति–ते अझाषीत् अझषीत्।

झष पु० झष्यते कर्मणि घ। मत्स्ये, मीनराशौ च। भावे–घ। तापे। अच्। खिले, वने च न०। नागवलायां स्त्री०।

झषकेतु पु० झषो मीनो मकरो वा केतुर्यस्य। मदने। झषकेतनादयोऽप्यत्र। [भूम्यामलक्यां यूथिकायाञ्च स्त्री० टाप्।

झाट पु० झट–णिच्–अच्। निकुञ्जे, कान्तारे, व्रणादीनां मार्ज्जने,

झाटल पु० झट–णिच् अलच्। मुष्टीपाटलौ।

झामक न० झाम-कर्मणि ण्वुल्। (झामा) अतिशयपक्वेष्टकायाम्।

झावु पु० झा–इति वाति गच्छति वा-डु। (झाउ) वृक्षभेदे स्वार्थे कन्। तत्रैव।

झिङ्गाक न० लिगि–आक पृ०। (झिङ्गा) फलभेदे।

झिङ्गिनी स्त्री० लिगि–णिनि पृ०। झिङ्गिनीवृक्षे, उल्कायाञ्च।

झिङ्गी स्त्री० लिगि–अच् गौरा० ङीप्। झिङ्गिनीवृक्षे। (झिङ्गा)।

झिञ्झी स्त्री० झिञ्झा [illegible] अच् गौरा० ङीप्। झिल्लयाम् (झिंझिपोका)।

**दाय** पु० दा—कर्मणि घञ् । "विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते" इत्युक्ते पित्रादिसम्बन्धवति तदुपरमे तत्सम्बन्धिभिः पुत्रादिभिः विभजनीये द्रव्ये, विवाहकाले जामात्रादिभ्यो देये धने च । भावे घञ् । दाने । दो—भावे घञ् । खण्डने । दैप—करणादौ घञ् । अम्बुनि, स्थाने, लये, सोल्लुण्ठनवाक्ये च ।

**दायभाग** पु० दायस्य सम्बन्धिस्वामिकधनस्य तत्सम्बन्धिमरणादौ तस्य सम्बन्धिभिः पुत्रादिभिर्भागः विभजनं गुटिकापातनादिना व्यञ्जनम् । अष्टादशविवादान्तर्गते विवादभेदे, तादृशविवादविषये पुत्रादिभिः पित्रादिधनस्य विभजने च ।

**दायाद** पु० दायं विभजनीयधनमादत्ते आ+दा—क । पुत्रे । दायमत्ति अद—अण् उपपदसमासः । सपिण्डे ।

**दार** पु० ब० व० दारयन्ति भ्रातॄन् इम् दॄ—णिच्—अच् । पत्न्याम् सा हि पत्युः भ्रातॄन् भिनत्तीति लोकप्रसिद्धम् ।

**दारक** पु० दृणाति भिनत्ति उदरं दॄ—ण्वुल् । बालके बालिकायां स्त्री० टाप् अत इत्त्वम् भेदके त्रि० । ग्रामशूकरे पु० ।

**दारकर्मन्** पु० दारौपयिकं दारसम्पादकं कर्म० । विवाहे "सवर्णाग्रे द्विजातीनां दारकर्मणी"ति स्मृतिः ।

**दारद** पु० दरदि देशे भवः अण् । विषभेदे, पारदे हिङ्गुले च । दरदा देशेन एकदिक् अण् । दरद्देशसन्निकृष्टे समुद्रे ।

**दारु** न० दॄ—उण् । काष्ठे, पित्तले, देवदारौ च । शिल्पिनि, दातरि च त्रि० । [ काष्ठे च न०

**दारुक** पु० कृष्णसारथौ । दारु—स्वार्थे कन् । देवदारुवृक्षे,

**दारुगन्धा** स्त्री० दारुणि गन्धो यस्याः । (चीड़ा) गन्धद्रव्ये ।

**दारुण** पु० दारयति चित्तं दृ—भये उनन् । चित्तके, रौद्ररसे, भयानकरसे च । भयावहे, दुःसहे, भीषणे, भयहेतौ च त्रि० ।

**दारुनिशा** स्त्री० दारुमयी—निशा शत्वम् । दारुहरिद्रायाम् ।

**दारुपत्री** स्त्री० दारुमयं पत्रं यस्या ङीप् । हिङ्गुपत्र्याम् ।

**दारुपुत्रिका** स्त्री० दारुमयी पुत्रिका । काष्ठपुत्तलिकायाम् ।

दारुसार न० दारुषु सारं श्रेष्ठम् । चन्दने ।

दारुसिता स्त्री० दारुमयी सिता मधुरत्वात् । (दारचिनी) पदार्थे ।

दारुहरिद्रा स्त्री० दारुमयी हरिद्रा । स्वनामख्यातायाम् हरिद्रायाम् ।

दारुहस्तक पु० हस्त इव कन् दारुमयः हस्तकः । काष्ठनिर्म्मिते ह-स्ताकारे (हाता) पदार्थे ।

दार्वट न० दारुवत् निश्चलतया निरूपणीयविषयनिश्चयार्थमटत्यत्र अट-घञर्थे क । चिन्तास्थाने, मन्त्रस्थाने च ।

दार्वाघाट(त) पु० दारूणि आहन्ति हन–अण् वा टान्ता देशः । (काटठोकरा) पक्षिभेदे ।

दार्विका स्त्री० दारयति उणादि० नि० दार्वी दारुहरिद्रा तस्या विकारः ठक् । दारुहरिद्राक्वाथोद्भवे तुत्थे । दार्वी+संज्ञायां कन् ङ्यो ह्रस्वः । गोजिह्वालतायाम् ।

दार्वी स्त्री० दॄ–उण् गौ० ङीप् । देवदारुणि । उणा० नि० । ह-रिद्रायाम् गोजिह्वायाम् दारुहरिद्रायाञ्च ।

दाल पु० चु० दल–अच् । कोद्रव्ये (कोदो) धान्यभेदे, मधुभेदे च । देवतालीलतायां स्त्री० ङीप् । [ माषे ।

दाव पु० दुनोति दु–ण । वने, वनभवेऽग्नौ, अग्निमात्रे च भावे घञ् ।

दावाग्नि पु० दावस्य वनस्याग्निः । वनोद्भवेऽग्नौ । दावानलादयोऽप्यत्र ।

दाविक त्रि० देविकायां नद्यां भवः । अण् देविकादेरेत आत्त्वम् । देविकानदीभवे ।

दाश(स) हिंसने स्वा० पर० सेट् । दाश्नो(स्नो)ति अदाशी(सी)त् ।

दाश दाने चु० उभ० सक० सेट् । दाशयति–ते अदिदाशत्–त ।

दाश दाने भ्वा० उ० सक० सेट् । दाशति–ते अदाशीत् अदाशिष्ट । णिच् अदिदाशत्–त ।

दाश(स) पु० दशति मत्स्यान् दनुश घञ् नि०, दास्यते मूल्यमस्मै दास–घञ् वा । मत्स्योपजीविनि धीवरे ।

दाश(स)पुर न० दाशा(सा)न् कैवर्त्तान् पिपूर्त्ति पालयति पॄ–क । कैवर्त्तीमुस्तके ।

दाशरथ पु० दशरथस्येदम् अण्। श्रीरामे "प्रदीयतां दाशरथाय मैथिलो"ति नाटकम् ।

दाशरथि पु० दशरथस्या पत्यम् अत इञ्। दशरथस्यापत्येषु श्रीरामादिषु चतुर्षु । [ विष्णौ, दशार्हदेशजे त्रि० ।

दाशार्ह पु० दाशं दानमर्हति अर्ह-अण् दशार्हवंशे भवः अण् वा ।

दाशेरक पु० मालवदेशे । तद्देशस्थे जने ब० व० ।

दास दाने भ्वा० उभ० सक० सेट् । दासति ते अदासीत् अदासिष्ट । णिच् अददासत् त ।

दास पु० दास–अच् । शूद्रे, ज्ञातात्मनि, धीवरे, दानपात्रे शूद्रस्योपाधौ "शूद्रे दासं प्रयोजयेदि"ति स्मृतिः । दासते दीयतेऽस्मै भक्तादि दास–घञ् । भृत्ये सेवके च द्वि० । स्त्रियां ङीप् दासी ।

दासी स्त्री० दस क्षेपे कर्मणि घञ् । झिण्टाम्, काकजङ्घायाम्, नीलझिण्ट्यां चेव्याञ्च । दासस्य पत्नी ङीप् । शूद्रपत्न्यां, कैवर्त्तभार्य्यायाञ्च ।

दासेय पु० दास्या अपत्यं ढक् । दासीगर्भजाते दासे । दासस्य धीवरस्या पत्यं ढक् । व्यासजनन्यां स्त्री० ।

दासेर पु० दास–एरक् । उष्ट्रे । दास्या अपत्यं ढक् । दासीपुत्रे दासे । स्वार्थे कन् । अत्रैवार्थे ।

दाह पु० दह–घञ् । भस्मीकरणे, गात्रादिसन्तापे च ।

दाहक पु० दह–ण्वुल् । चित्रकवृक्षे, रक्तचित्रके च । दाहकर्त्तरि त्रि० । स्त्रियां दाहिका ।

दाहहरण न० दाहो ह्रियतेऽनेन ल्युट् णिच्–कर्त्तरि ल्यु वा । वीरणमूले (वेणार मूल) । दाहनाशके त्रि० ।

दिक्कर पु० दिशु कीर्य्यतेऽसौ कॄ–अप् । तरुणे । युवत्यां स्त्री० ।

दिक्पति पु० ६ त० । दिशामधीश्वरेषु "इन्द्रो वह्निः पितृपति र्नैरृतो वरुणो मरुत् । कुवेर ईशः पतयः पूर्वादीना मधीश्वरा" इत्युक्तेषु इन्द्रादिषु "सूर्य्यः शुक्रः क्षमापुत्रः सैंहिकेयः शनिः शशी ।

सौम्यस्त्विदग्निमन्त्री च पूर्वादीनामधीश्वराः” इत्युक्तेषु सूर्यादिषु च। “पवनो दिक्पतिर्भूमिरिति मन्त्रः। एवं दिक्पालादयोऽपि इन्द्रादिष्वेव।

**दिगम्बर** पु० दिक् शून्यमेवाम्बरं यस्य। शिवे, क्षपणकभेदे, “दिगम्बरा मध्यमत्वमाङ्कुरापादमस्तकम्। चैतन्यस्यापि संदृष्टेराऽनखाग्रश्रुतेरपी”त्युक्ते जीवस्य देहपरिमाणाङ्गीकारके, बौद्धभेदे च। नग्ने त्रि०। कालिकायां स्त्री० ङीप्। दिशामम्बरमिवावरकत्वात्। तमसि न०।

**दिग्गज** पु० ६त०। ऐरावतः पुण्डरीकः वामनः कुमुदोऽञ्जनः पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजा”इत्युक्तेषु पूर्वादिदिक्षु भूमिधारणाय स्थितेषु ऐरावतादिषु गजेषु।

**दिग्ध** पु० दिह–क्त। विषाक्तवाणे, वह्नौ, च। भावे क्त। स्नेहे, लेपने च न०। कर्मणि क्त। लिप्ते त्रि०।

**दिङ्मात्र** न० दिशोरीतेर्मात्रा अंशः। एकदेशे। ६त०। अल्पमात्रे त्रि०

**दिति(ती)** स्त्री० दो–अवखण्डने क्तिच् वा ङीप्। दैत्यमातरि कश्यपपत्न्याम्। भावे क्तिन् न ङीप्। खण्डने।

**दितिज** पु० दितेर्जायते जन–ड। असुरे। दितिसुतादयोऽप्यत्र।

**दिदिधिषु(षू)** पु० दिधिषूमात्मन इच्छति क्यच्–क्विप् उ० वा हृस्वः। द्विरूढायाः स्त्रियाः स्वामिनि।

**दिधिषू** स्त्री० दधाति पापं धिष्यते वा धा–धिष–वा ऊ नि०, दिधिं धैर्यं स्यति सो–ऊवा सत्वम्। द्विरूढायां स्त्रियां पुनर्भूस्त्रियाम्, “ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा। सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः”स्मृतेत्युक्तायां ज्येष्ठायामनूढायां सत्याम् ऊढायां कनिष्ठभगिन्यां च।

**दिधिषूपति** पु० ६त०। “भ्रातुर्मृतस्य भार्यायां योऽनुरज्येत कामतः। धर्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपति”रित्युक्ते पुनर्भूपतौ। ज्येष्ठाविवाहाभावे ऊढायाः कनिष्ठाया भगिन्याः पत्यौ च।

**दिन** पु० द्यति तमः। सूर्यकिरणोपलक्षिते षष्टिदण्डात्मके तद्विशिष्टे

वा चतुर्थमात्मके काले। तत्र मनुष्याणां षष्टिदण्डात्मकम्, पितॄणाम्, गौणचान्द्रमासात्मकं तेषां हि चन्द्रलोकोपरिस्थितेः कृष्णाष्टमीतएव सूर्य्यस्य तल्लोके किरणसम्बन्धः शुक्लाष्टम्यां पुनर्भूग्रस्तेनाच्छादनाच्च न तत्सम्पर्कः। देवानामसुराणाञ्च सौरवर्षकालात्मकं तद्विस्तरस्तु वाचस्पत्ये। ब्रह्मणो दिव्यमानेन युगसहस्रकल्पकालात्मकमिति विवेकः। [ यज्ञ वा। सूर्य्ये।

दिनकर पु० दिनं करोति स्वोदयेन कृ—टक्, दिने—करः किरणो

दिनक्षय पु० "एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा तदा दिनक्षयः प्रोक्त" इत्युक्ते एकसावनदिनस्थितिथि त्रयरूपे काले।

दिनपति पु० ६त०। सूर्य्ये, अर्कवृक्षे च। दिनेशादयोऽप्यत्र।

दिनमणि पु० दिने मणिरिव प्रकाशकत्वात्। सूर्य्ये, अर्कवृक्षे च।

दिन्भ संघाते चु० आत्म०अक० सेट्। दिम्भयते अदिदिम्भत।

दिनादि पु० ६त०। प्रातः काले।

दिनान्त पु० ६त०। दिवावसाने सायं काले। [ दिम्भत् त।

दिभ प्रेरणे चुरा० उभ० सक० सेट् इदित्। दिम्भयति—ते अदिदिम्प संघाते चुरा० उभ० सक० सेट्। दिम्पयति ते अदिदिम्पत्—त।

दिलीप पु० सूर्य्यवंश्ये नृपभेदे रघोः पितरि।

दिव प्रीतौ भ्वा० पर० सक० सेट् इदित्। दिन्वति अदिन्वीत्।

दिव जिगीषायां पणे व्यवहारे इच्छायां आज्ञायाञ्च दिवा० पर० अक० सक० च सेट्। दीव्यति अदेवीत्। देवित्वा द्यूत्वा।

दिव कूजने चु० आत्म० सक० सेट्। देवयते अदिदेवत।

दिव अर्द्दे चु० उभ० सक० सेट्। देवयति ते अदीदिवत् त।

दिव् स्त्री० दिव—डिवि। स्वर्गे, आकाशे च। [वने, वने च।

दिव न० दिव—क। स्वर्गे, "दिवौकस" इत्यत्रादन्तता। आकाशे, दि-

दिवस पु० दीव्यन्त्यत्र दिव—असच् किच्च। "नाडीषष्टितमस्तत्र सावनो दिवसः स्मृतः। त्रिंशभागोऽर्कराशेस्तु दिवसः सौर उच्यते। चान्द्रस्तु तिथ्यवच्छिन्नो भौमो भूपरिधेर्मत" इत्युक्तेषु सावनादिषु दिनेषु।

दिवसमुख न० ६त० । प्रभाते ।

दिवस्पति पु० ६त० अलुक् स० सत्वञ्च । इन्द्रे ।

दिवस्पृथिवी स्त्री० द्वि० व० । दिवश्च पृथिवी च, नि० सुट् । मिलि-
तयोः भूमिस्वर्गयोः रोदस्योः ।

दिवा अव्य० दिव—का । दिवसे ।

दिवाकीर्त्ति पु० दिवैव कीर्त्तिः कत्थ यस्य रात्रौ क्षुरकर्मनिषेधात् ।
नापिते [पङ्कजानां दिवातनीमि"ति भट्टिः ।

दिवातन त्रि० दिवा भवः ट्यु तुट् च । दिवाभवे । स्त्रियां ङीप् ।

दिवान्ध पु० दिवा दिने अन्धः दर्शनाभावात् । पेचकादौ "दिवान्धाः
प्राणिनः केचि"दिति चाणक्यः । [मिवान्धकारमि"ति कुमारः ।

दिवाभीतपु०दिवा दिवसे भीतः । चौरे, चन्द्रे, पेचके च । 'दिवाभीत-

दिवि पु० दिव कि । चाषपक्षिणि ।

दिविज पु० दिवि जायते जन—ड हल० अलुक् स० । स्वर्गीये
दिविभवादयोऽप्यत्र । [ादयोऽप्यत्र ।

दिविषद् पु० दिवि सीदति क्विप् सुषमादि० षत्वम् । देवे दिवि-

दिवो(वौ)कस्(स) पु० दिवि दिवम् वा ओकस् यस्य पृ० अदन्तत्वम् ।
देवे । "तारकेण दिवौकस"इति कुमारः ।

दिवोदास पु० चन्द्रवंशीये काशिराजे नृपभेदे ।

दिव्य न० दिवि भवं यत् । लवङ्गे चन्दने, शपथरूपे, अलौकिक
प्रमाणभेदे गुग्गुलौ, तन्त्रोक्ते भावभेदे च । नायकभेदे पु० ।
दीव्यतेऽनेन दिव—क्यप् । मनोहरे द्योतनात्मके च त्रि० ।

दिव्यगन्ध पु० दिव्यो मनोहरो गन्धोऽस्य । गन्धके । लवङ्गे न० ।
स्थूलैलायां स्त्री० । कर्म० । उत्तमगन्धे पु० ।

दिव्यगायन पु० कर्म० । गन्धर्वे ।

दिव्यतेजस् स्त्री० दिव्यं तेजो यस्याः । ब्राह्मीलतायाम् ।

दिव्यदोहद न० "यत् दीयते तु देवेभ्यो मनोराज्यस्य सिद्धये । उप-

याचितक' दिव्यदोहद' तद्विदुर्बुधा" इत्युक्ते अभीष्टसिद्धये देवेभ्यो देये द्रव्ये ।

**दिव्यपुष्प** पु० दिव्य' पुष्पमस्य । करवीरे । महाद्रोणायां स्त्री० ।

**दिव्यलता** स्त्री० कर्म० । मूर्व्वालतायाम् ।

**दिव्यसार** पु० दिव्यः सारो यस्य । शालवृक्षे ।

**दिव्या** स्त्री० दीव्यतेऽनेन दिव–क्यप् । वन्ध्याकर्कोट्यां शतावर्य्याम्, महामेदायां, आमलक्याम्, श्वेतदूर्व्वायां, श्वेतजीरके, हरितक्याञ्च ।

**दिव्योदक** न० कर्म० । मेघजले ।

**दिव्योपपादुक** पु० उपपद्यते मातृपित्रादिदृष्टकारणमनपेक्ष्यैव अदृष्टसहकृततायुभ्य एव उत्पद्यते उप+पद–उकञ् पिशाचादिव्यावृत्तये दिव्य इति विशेषणं तेषाञ्च मातृपित्रादिदृष्टकारणापेक्षाभावेऽपि दिव्यत्वाभावाञ्च तथात्वम् । देवे ।

**दिव्यौषधि** स्त्री० कर्म० । मनःशिलायाम् ।

**दिश** दाने आज्ञापने च तु० उभ०सक० अनिट् । दिशति अदिक्षत ।

**दि(श)शा** स्त्री० दिश–क्विप् वा टाप् । आशायाम् ककुभि ।

**दिश्य** त्रि० दिशि भवं दिग्भ्य उपनीतं वा यत् । दिग्भवे, दिग्भ्य उपनीते च । [पु० । उपदिष्टे त्रि० ।

**दिष्ट** न० दिश–क्त । भाग्ये "न दिष्टमिष्टं कुरुते" इति माघः । काले

**दिष्टान्त** पु० दिष्टस्य भाग्यस्यान्तः । भाग्यस्यान्तोपलक्षिते मरणे ।

**दिष्ट्या** अव्य० दिश–यक् अमरादि नि० । मङ्गले, हर्षे, भाग्येनेत्यर्थे च । [अधिक्षत–अदिग्ध ।

**दिह** लेपने अदा० उभ० सक० अनिट् । देग्धि दिग्धे अधिक्षत्

**दी** क्षये दि० आत्म० अ० अनिट् । दीयते अदास्त । दिग्ये । दीनः ।

**दीक्ष** मौण्ड्ये, यागे, उपनयने, नियमव्रतयोरादेशे च भ्वा०आ०सक० सेट् । दीक्षते अदीक्षिष्ट ।

**दीक्षणीया** स्त्री० दीक्ष–अनीयर् । सोमसाध्ये यज्ञभेदे ।

**दीक्षा** स्त्री० दीक्ष–अ । नियमे, संस्कारे "क्रियाकृदीक्षां निरवर्त्तयद्गुरु"रिति रघुः । "दीयते विमलं ज्ञानं क्षीयते कर्मवासना

तेन दीक्षेति सा प्रोक्ता”ति तन्त्रोक्ते अभीष्टप्रदमन्त्रग्रहणे, तदुप-
देशे, यागे, च ।

**दीक्षागुरु** पु० दीक्षायां गुरुरुपदेष्टा । मन्त्राद्युपदेष्टरि ।

**दीक्षान्त** पु० दीक्षायाः प्रधानयागस्य अन्तः अन्तोपलक्षितः तत्समापको
यागभेदः । अवभृथरूपे यागभेदे ।

**दीक्षित** त्रि० दीक्ष–क्त । सोमयागादौ संकल्पं विधाय कृतनियमे ।
दीक्षा तन्त्रोक्ता संजाताऽस्य इतच् । तान्त्रिकदीक्षावति ।

**दीदिवि** पु० दिव–क्विन् अभ्यासोदीर्घश्च । बृहस्पतौ । अन्ने पु० न० ।
उदिते त्रि० ।

**दीधिति** स्त्री० दिधी–क्तिन् यङादित्वादिट् इकारलोपश्च । किरणे ।

**दीधी** देवने दीप्तौ च अदा० जक्षा० आत्म० अक० सेट् । दीधीते
अदीधिष्ट । [सूचिकायां स्त्री० ।

**दीन** त्रि० दी–क्त तस्य नः । दुःखिते, भीते च । तगरपुष्पे न० ।

**दीनार** पु० दी–आरक् तुट् च । स्वर्णभूषणे, मुद्रायां, सुवर्णकर्ष-
द्वये, निष्कमाने, द्वात्रिंशद्रत्तिकापरिमितकाञ्चने च ।

**दीप** दीप्तौ दि० आत्म० अक० सेट् । दीप्यते–अदीपि–अदीपिष्ट ।
दीप्तः । णिच् अदीदिपत् त अदिदीपत् त ।

**दीप** पु० दीप–क । प्रदीपे तैलादिस्नेहयोगेन वर्त्तिकादाहकशिखान्विते

**दीपक** पु० दीप+स्वार्थे कन् । प्रदीपे, श्येनपक्षिणि, रागभेदे च ।
कुङ्कुमे अर्थालङ्कारभेदे च न० । दीपयति णिच् ण्वुल् । यमा-
न्याम्, स्त्री० । कार्य्यप्रकाशके, कुशले च त्रि० । स्त्रियां टाप्
अत इत्त्वम् ग्रन्थप्रभेदे ।

**दीपन** पु० दीपयति भक्षणात् जठराग्निमुत्तेजयति दीप–णिच् ल्यु ।
पलाण्डौ, काशमर्द्दे, मयूरशिखायां शालिकशाके, तगरमूले,
कुङ्कुमे च । दीपनकर्त्तरि त्रि० । पाठायां, मेथिकायां, ताम्यां
स्त्री० ङीप् ।

**दीपपुष्प** पु० दीप इव पुष्पमस्य । चम्पकवृक्षे ।

दीपमालिका स्त्री० दीपानां माला यस्याम् कप् अत इत्वम् । दीपान्वितायाममावस्यायाम् । इत० । दीपसमूहे ।

दीपवृक्ष पु० स्वार्थे कन् दीपस्याधारो वृक्षः । (पिलसुज)दीपाधारे तैजसे काष्ठादिनिर्म्मिते वा पदार्थे । [दीपान्वितायाममावस्यायाम् ।

दीपान्विता स्त्री० दीपैरन्विता । गौणचान्द्रेण कार्त्तिकस्य, मुख्यचान्द्रे-

दीप्त पु० दीप-क्त । निम्बुके, सिंहे च । स्वर्णे हिङ्गुनि च न० । ज्वलिते, दग्धे भासिते, दीप्तिमति च त्रि० । लाङ्गलिकायाम्, अग्निशिखौषधौ, ज्योतिष्मत्याञ्च स्त्री० टाप् ।

दीप्तजिह्वा स्त्री० दीप्ता ज्वलन्ती जिह्वा यस्याः । उल्कामुख्यां शृगालीभेदे तस्या हि रात्रौ जिह्वाज्वलतीति प्रसिद्धिः ।

दीप्ताग्नि पु० दीप्तः अग्निर्जठरानलो यस्य । अगस्त्ये । तीक्ष्णजठराग्निमति त्रि० ।

दीप्ति स्त्री० दीप-क्तिन् । कान्तौ, "कान्तिरेव वयोभोगदेशकालगुणादिभिः । उद्दीपिताऽतिविस्तारं प्राप्ता दीप्तिरिहोच्यते" इत्युक्ते स्त्रीणां गुणभेदे ।

दीप्तिक स्त्री० दीप्त्या कायति कै-क । दुग्धपाषाणवृक्षे ।

दीप्य पु० दीप-यत् । जीरके श्वेतजीरके न० । दीपने साधुयत् । यमान्यां पु० स्त्री० । [स्वरवर्णे च । आयते त्रि० ।

दीर्घ पु० दॄ-घञ् घस्य नेत्त्वम् । शालतालवृक्षे, उष्ट्रे, हिमालये

दीर्घकणा स्त्री० दीर्घः कणो लेशो यस्याः । श्वेते जीरके ।

दीर्घकण्टक पु० दीर्घः कण्टको यस्य । वर्बुरे (बाबला) ।

दीर्घकण्ठ पु० दीर्घः कण्ठो यस्य । बके । आयतकण्ठमात्रे त्रि० ।

दीर्घकन्द न० कर्म० मूलके । दीर्घः कन्दो यस्याः कप् अत इत्वम् । मूषल्याम् स्त्री० । [तत्रैवार्थे ।

दीर्घकील पु० दीर्घः कीलो यत्र । अङ्कोटके । स्वार्थे कन् ।

दीर्घकोषिका स्त्री० दीर्घः कोषो यस्याः कप् अत इत्वम् । (झिनुक) दुर्णामायाम् । तालव्यमध्योऽपि ।

दीर्घग्रन्थि पु० दीर्घो ग्रन्थिः पर्व यस्य । गजपिप्पल्याम् ।

दीर्घग्रीव पु० दीर्घा ग्रीवा यस्य । उष्ट्रे, मौलक्रौञ्चे च ।
दीर्घच्छद पु० दीर्घाश्छदा यस्य । इक्षौ ।
दीर्घजङ्घ पु० दीर्घा जङ्घा यस्य । उष्ट्रे, बके च ।
दीर्घजिह्व पु० दीर्घा जिह्वा यस्य । सर्पे ।
दीर्घतरु पु० कर्म० । तालवृक्षे । [घ्या स्त्री० ङीप् ।
दीर्घदण्ड पु० दीर्घो दण्ड इव काण्डेन । एरण्डवृक्षे । गोर-
दीर्घदर्शिन् पु० दीर्घात् पश्यति दृश-णिनि । दूरदर्शिनि पण्डिते, भल्लूके च । आगामिकार्य्यज्ञे, दूरदर्शिमात्रे त्रि० ।
दीर्घदृष्टि पु० दीर्घा दृष्टिरस्य । पण्डिते । दीर्घा दूरगा दृष्टिर्यया ब० । दूरवीक्षणे यन्त्रभेदे । [ न णत्वम् । शङ्खे ।
दीर्घनाद पु० दीर्घो दूरगामित्वात् विस्तीर्णो नादोऽस्य शुभ्रा०
दीर्घनिद्रा स्त्री० कर्म० क्षुभ्ना० न णत्वम् । मृत्यौ, बहुकालिकनिद्रायाञ्च । "दीर्घनिद्रामवापित" इति रघुः । [लताभेदे ।
दीर्घपटोलिका स्त्री० कुत्सिता पटोली कन् कर्म० । (धुधुल)
दीर्घपत्र पु० दीर्घाणि पत्राण्यस्य । राजपलाण्डौ, विष्णुकन्दे, हरिदर्भे, कुन्दरे, ताले, कुपीलौ च अल्पजम्बुवृक्षे, गन्धपत्रायाञ्च स्त्री० टाप् । सज्ञायां कन् अत इत्त्वम् । घृतकुमार्य्यां, श्वेतवचायाञ्च । चञ्चुशाके, पलाशीलतायाञ्च स्त्री० ङीप् ।
दीर्घपर्णी स्त्री० दीर्घाणि पर्णान्यस्याः ङीप् । पृश्निपर्ण्याम् (चाकलिया) ।
दीर्घपल्लव पु० दीर्घः पल्लवोऽस्य । शणवृक्षे । कर्म० । दीर्घच्छदे पु० । न० । दीर्घच्छदयुक्तमात्रे त्रि० ।
दीर्घपादप पु० कर्म० । ताले, पूगे च ।
दीर्घपृष्ठ पु० दीर्घं पृष्ठमस्य । सर्पे ।
दीर्घफल पु० दीर्घाणि फलान्यस्य । आरग्वधे (सोन्दाल) संज्ञायां कन् । अगस्त्यवृक्षे पु० । कपिलद्राक्षायां, जतुकायाञ्च स्त्री० ।
दीर्घमूल पु० दीर्घं मूलं यस्य । मोरटालतायां, बिल्वभेदे च । वीरणे न० । कर्म० । संज्ञायां कन् । मूलके । श्यामालतायां स्त्री०

टाप्। दुर्बालभार्य्यां स्त्री० ङीप्। [ रिद्रायाम् ।

दीर्घरागा स्त्री० दीर्घो बहुकालस्थायी रागो रञ्जनं यस्याः । ह-

दीर्घरात्र न० कर्म्म०। दीर्घायां रात्रौ। ७त० बहुरात्रि युक्ते

चिरकाले।

दीर्घरोमन् पु० दीर्घाणि रोमाण्यस्य। भल्लूके।

दीर्घवल्ली स्त्री० कर्म०। पलाश्यां, पातालगरुडीलतायां, माहेन्द्र वा

रुण्याम्, आयनायां लतायाञ्च।

दीर्घवृन्त पु० दीर्घं वृन्तमस्य। श्योनाके वृक्षे। स्वार्थे कन्।

तत्रार्थे। चन्द्रार्चिर्भण्ट्यां स्त्री० टाप्। संज्ञायां कन् अत इत्त्वम्।

एलापर्ण्याम् स्त्री०।

दीर्घशाख पु० दीर्घा शाखा यस्य। शालवृक्षे। संज्ञायां कन् अत

इत्त्वम्। एलापर्ण्याम् स्त्री० टाप्। [ राजाम्रे ।

दीर्घशूक पु० दीर्घः शूकोऽग्रमस्य। शालिभेदे। संज्ञायां कन्।

दीर्घसत्र न० कर्म०। दीर्घकालिके यज्ञभेदे ६त०। तत्कर्त्तरि

त्रि० "हविषे दीर्घसत्रस्य साचेदानीं प्रचेतस" इति रघुः।

दीर्घसूत्र त्रि० दीर्घश्च चिरकालेन सूत्रमीप्सितकर्म्म यस्य। चिरकालेन

प्रारब्धकर्मानुष्ठातरि। कर्म०। आयततन्तौ न०।

दीर्घस्कन्ध पु० दीर्घः स्कन्धः काण्डोऽस्य। तालवृक्षे।

दीर्घायुष पु० दीर्घमायुष्यं यस्य श्वेतमन्दारकवृक्षे, मार्कण्डेये च।

दीर्घायुस् पु० दीर्घम् आयुर्जीवनकालोऽस्य। काके, शाल्मलिवृक्षे च।

दीर्घिका स्त्री० दीर्घैव विस्तारमपेक्ष्य आयतैव। जलाशयभेदे अस्या

लक्षणं तड़ागशब्दे द्रष्टव्यम्।

दीर्ण त्रि० दॄ-क्त। विदारिते, भीतेच भावे क्त। विदारे, भये च न०।

दु गतौ भ्वा० पर० सक० अनिट्। दवति अदौषीत् केचित्तु वेडयमि-

त्याहुस्तेन अदावीदित्यपि। [ दूनः। दवथुः।

दु उपतापने भ्वा० पर० सक० वेट्। दुनोति अदावीत् अदौषीत्

दुःख दुःखकरणे अद० चुरा० उभ० सक० सेट्। दुःखयति ते

अदुदुःखत् त।

वर्षमध्ये "प्राणिनां जायते कृष्णौ दुन्दुभौ वरवर्णिनी" त्युक्तलक्षणे वत्सरभेदे च । वाद्यके स्त्री० ।

दुर(स्) अव्य० दु रुक् तुक् वा । दुष्टे निन्दायां, निषेधे, दुःखे च ।

दुरक्ष पु० दुष्टोऽक्षः प्रा० । कपटपाशके । दुष्टोऽक्षो यत्र । दुष्ट्यूते

दुरत्यय त्रि० दुःखेनातीयते दुर्+अति–इ–खल् । दुरतिक्रमणीये, दुस्तरे च ।

दुरदृष्ट न० दुष्टमदृष्टं प्रा० । दुर्भाग्ये पापे । दुर्गमे, दुर्ज्ञेये च ।

दुरधिगम त्रि० दुःखेनाधिगम्यते दुर् अधि–गम–खल् । दुष्प्राप्ये ।

दुरध्व पु० दुष्टोऽध्वा प्रा० अच् दुष्टवर्त्मनि ।

दुरन्त त्रि० दुष्टोऽन्तोऽवसानं यस्य । मृगयाद्यूतपानादिषु व्यसनेषु तानि हि प्रथमं सुखयित्वा अन्ते दुःखयन्ति । दुर्ज्ञेयोऽन्तः परिच्छेदो यस्य । दुर्ज्ञेये, गभीरे च ।

दुरभिग्रह पु० दुःखेनाभिमुख्येन गृह्यतेऽसौ खल् । अपामार्गे दुःखेन ग्राह्ये त्रि० । दुरालभायां, कपिकच्छ्वाञ्च स्त्री० ।

दुराग्रह पु० दुष्ट आग्रहः निर्बन्धः । युक्तिरहितेऽभिनिवेशे, ह्व० । तद्युक्ते त्रि० ।

दुराचार पु० दुष्ट आचारः प्रा० । विरुद्धाचरणे । ह्व० । तदाचारवति त्रि० । "अपि चेत् सुदुराचारः" इति गीता ।

दुरात्मन् त्रि० दुष्ट आत्मा चित्तं यस्य । दुष्टचित्ते जने ।

दुराधर्ष पु० दुष्टान् राक्षसान् आधर्षयति अच् । श्वेतसर्षपे तत्क्षेपणे हि वेतालादीनामपसर्पणं स्मृतौ दर्शितम् । दुःखेन ईषदपि धर्षयितुमशक्यम् दुर्+आ+धृष–खल् । धर्षयितुमशक्ये त्रि० । कुटुम्बिनीवृक्षे स्त्री० ।

दुरारुह पु० दुःखेनारुह्यतेऽसौ दुर्+आ+रुह–कअर्थे कर्मणि क । विल्वे, नारिकेले च खर्जूर्य्यां स्त्री० ।

दुरारोह पु० दुःखेनारुह्यते दुर्+आ+रुह–खल् । शाल्मलिवृक्षे । श्रीवल्ल्यां स्त्री० । दुरारोहमात्रे त्रि० ।

**दुःख** न० दुःख—अच्—घञ् वा प्रतिकूलवेदनीये चित्तधर्मभेदे, न्यायमते आत्मधर्मभेदे, पीड़ायां, कष्टे च। दुःखसाधने पदार्थे, तद्वति च त्रि०। [ दुःखानां त्रितये ।

**दुःखत्रय** न० ६त०। अध्यात्मिकाधिदैविकाधिभौतिकरूपे।

**दुःशासन** पु० दुःखेन शिष्यतेऽसौ शास—खलर्थे युच्। भारत प्रसिद्धे दुर्योधनस्यानन्तरानुजे धृतराष्ट्रसुते।

**दुःषमम्** अव्य० दुष्टं समम्अत्र तिष्ठद्गु० अव्य० यत्वम्। गर्हे ६त० अषत्वम्। असमञ्जसे त्रि०।

**दुःसहा** स्त्री० दुःखेन सह्यते दुर्+सह—खल्। नागदमन्याम्।

**दुःस्थ** त्रि० दुःखेन तिष्ठति स्था-क। दीने, मूर्खे, लुब्धे च।

**दुःस्थित** त्रि० दुर्+स्था—क्त। अनवस्थिते, दुःखेन स्थिते च।

**दुःस्पर्श** पु० स्त्री० दुःखेन स्पृश्यतेऽसौ दुर् स्पृश—खल्। दुरालभायाम्। लताकरञ्जे पु०। कण्टकार्य्याम्, कपिकच्छ्वाम्, आकाशवल्ल्याञ्च स्त्री०। दुःस्पर्शवस्तुमात्रे त्रि०।

**दुकूल** न० दु—जलच् कुक् च दुष्टं कूलमिव कूलमावरणं क वा पृ०। क्षौमाम्बरे, श्लक्ष्णवस्त्रे, सूक्ष्मवस्त्रे च।

**दुग्ध** न० दुह—क्त। पयसि क्षीरे, स्त्रीजातिस्तननिष्यन्दिद्रव द्रव्ये। कर्मणि क्त। कृतदोहायां धेन्वादौ स्त्री०। प्रपूरिते त्रि०। भावे क्त। दोहने न०।

**दुग्धपाषाण** पु० दुग्धं निर्यासः पाषाणइव यस्य। (शिरगोला) ख्याते वृक्षभेदे। स्वार्थे कन्। अत्रैवार्थे।

**दुग्धिका** स्त्री० दुग्धं क्षीरमिव निर्यासोऽस्त्यस्याः ठन्। (दुधि) (क्षीरा) इति ख्याते वृक्षभेदे।

**दुग्धी** स्त्री० दुग्धमिव निर्यासोऽस्त्यस्य अर्शआद्यच् गौ० ङीष्। दुग्धिकायाम् ( दुधि )।

**दुद्रुम** पु० दुष्टो द्रुमः पृ०। हरित्पत्रे पलाण्डौ।

**दुन्दुभि** पु० दुन्दु इति शब्देन उभति पूरयति उभ—क शक०। वृहड्ढक्कायां, भेर्य्यां, वरुणे, दैत्यभेदे, राक्षसभेदे, विषे, ६०

दुरालभा(आ) स्त्री० दुःखेनालभ्यते स्पृश्यते असौ दुर्+आ+लभ-खल् वा टाप्। (आलकुशी) लताभेदे।

दुरालाप पु० दुष्ट आलापः प्रा०। दुष्टवचनकथने ग्लानिप्रकाशे च। ६त०। तद्वति त्रि०।

दुरासद त्रि० दुःखेनासद्यते गम्यतेऽसौ दुर्+आ+सद्-खल्। "दुर्गस्य दुर्धर्षं च स बभूव दुरासद" इति रघुः।

दुरित न० दुष्टमितं गमनं नरकादिस्थानप्राप्तिरनेन। पापे।

दुरुक्त न० दुष्टमुक्तम्। पापे। [दुर्निवारे।

दुरुच्छेद त्रि० दुःखेन उच्छिद्यतेऽसौ दुर्+उद्+छिद्-खल्।

दुरुत्तर त्रि० दुःखेन उत्तीर्यते दुर्+उद्+तॄ-खल्। दुष्टरे दुष्टमुत्तरम् प्रा०। दुष्टे उत्तरे न०।

दुरूह त्रि० दुःखेन ऊह्यते वितर्क्यते ऊह-खल्। दुर्विज्ञेये।

दुरोदर पु० दुष्टम् समन्तादुदरमस्य। द्यूतकारे, पणे, अक्षे च। द्यूते न०। "दुरोदरच्छद्मजितामि"ति भारविः।

दुर्ग पु० दुःखेन गम्यतेऽसौ कर्मणि ड। असुरभेदे, तद्धन्त्र्यां देव्यां स्त्री०। "तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम् दुर्गादेवीति विख्यातमिति चण्डी। अपराजितायां, नील्याञ्च। गुग्गुलौ पु०। दुःखेन गच्छत्यत्र दुर्+गम-आधारे ड। पर्वतादिभिर्दुर्गमे पुरे, कोट्टे (किल्ला) (गड़) ख्याते न०। दुर्गमदेशे, उच्छ्रिते, दुःखेन गम्यादौ च त्रि०। कामक्रोधादिदुःखेन दुस्तरे संसारे न०।

दुर्गत त्रि० दुर्गच्छति दुर्+गम+क्त। दरिद्रे दौर्गत्ये च।

दुर्गति स्त्री० दुर्+गम-क्तिन्। नरके, दारिद्र्ये, दुष्टायां गतौ च।

दुर्गन्ध पु० दुष्टोगन्धः। पूतिगन्धे। ६त०। तद्वति त्रि०। पलाण्डौ पु०।

दुर्गसञ्चर पु० दुर्गे देशे सञ्चरत्यनेन। (साँको) संक्रमे।

दुर्गानवमी स्त्री० ६त०। जगद्धात्रीनामकदुर्गापूजाकालरूपायां कार्त्तिकशुक्लनवम्याम्।

दुर्जन त्रि० दुष्टो जनो यस्मात् यदाचरणेन साधुरपि दुष्यति। खले। दुष्टः जनः प्रा० स०। खले पु०।

**दुर्जर** त्रि० जॄ–अङ् जरा दुःखेन जरा जीर्णता यस्य । दुःखेन जीर्यति पदार्थे । ज्योतिष्मतीलतायां स्त्री० ।

**दुर्जात** न० दुष्टं जातम्, प्रा० । व्यसने, आपदादौ । ईष० असम्यग्जाते अनुचिते च त्रि० । [(भिक्षुक) ।

**दुर्णामा** स्त्री० दुष्टं निन्दितं नामास्य ङीप् णत्वम् । दीर्घकोषिकायाम्

**दुर्दान्त** पु० दुष्टं दान्तं दमनं यत्र । कलहे । दुःखेन दम्यते वा दमन्ना । अशान्ते वत्सतरे त्रि० ।

**दुर्दिन** न० द्यति तमः इति दिनं दुष्टं मेघाच्छादनादिना तमोनाशकत्वरूपहीनं दिनं प्रा० । मेघाच्छन्ने दिवसे । दुष्टं स्वरूपहीनं दिनं यस्मात् ५ब० । मेघान्धकारे, वर्षणे च ।

**दुर्द्धर** पु० दुर्+धृ–खल् । नरकभेदे, ऋषभौषधौ, भल्लातके दैत्यभेदे च "दुर्द्धरं दुर्मुखश्चैवेति" चण्डी । दुःखेन सुखसुभिक्षदये धार्य्यते, केनापि न धार्य्यते वा खल् । विष्णौ । दुःखधार्य्ये दुर्द्धर्षे च पदार्थे त्रि० । [कन्यारीठके च स्त्री० ।

**दुर्द्धर्ष** त्रि० दुःखेन धृष्यते । अक्षोभ्ये, अप्रधृष्ये च । नागदमन्यां

**दुर्बल** त्रि० दुष्टं बलं यस्य । बलशून्ये, कृशे, अल्पमांसे च ।

**दुर्भग** त्रि० दुष्टं भगं भाग्यं यस्य । अल्पभाग्ये । पतिस्नेहशून्यायां स्त्रियां स्त्री० ।

**दुर्भाग्य** न० दुष्टं भाग्यं प्रा० । दुरदृष्टे पापे । ६ब० । तद्वति त्रि० ।

**दुर्भिक्ष** अव्य० भिक्षाया अभावः अर्थाभावेऽव्ययीभावः अदन्तत्वादम् तृतीयासप्तम्योर्वा तेन "दुर्भिक्षे राष्ट्रविप्लवे" इति दुर्भिक्षमत्यमित्यादि च सिद्धम् । भिक्षाया अभावे, तदुपलक्षिते काले अल्पान्नकाले च ।

**दुर्मति** त्रि० दुष्टा मतिर्यस्य । विवेकप्रतिबन्धकपापेन कलुषित बुद्धौ जने, ६० वर्षमध्ये "भवेद्धै मध्यमा वृष्टिर्दुर्मतौ समुपस्थिते इत्युक्तलक्षणे वर्षभेदे पु० । प्रा० स० । दुष्टायां बुद्धौ ।

**दुर्मनस्** त्रि० दुष्टं चिन्तादिना व्याकुलं मनोऽस्य । विमनस्के । सुतावर्य्यां स्त्री० ।

दुर्म्मरा स्त्री० दुःखेन म्रियते मृ—अच् । दूर्व्वायाम् ।

दुर्मुख पु० दुष्टं मुखमस्य । अश्वे, वानरे, नागभेदे, दैत्यभेदे च । अप्रियवादिनि त्रि० । [समर्थचित्ते ।

दुर्म्मेधस् त्रि० दुष्टा मेधाऽस्य असिच् समा० । मन्दबुद्धौ विवेका-

दुर्य्योधन पु० दुःखेन युध्यतेऽसौ युध—खलर्थे युच् । धृतराष्ट्रनृपतेर्ज्येष्ठपुत्रे नृपभेदे । दुःखेन योध्ये त्रि० ।

दुर्लभ पु० दुर्—लभ—खल् । कर्चूरे । दुष्प्रापे त्रि० "मानुष्यं दुर्लभं लोके विद्या तत्र सुदुर्लभे"ति पुराणम् । दुरालभायां, श्वेतकण्टकार्य्याञ्च स्त्री० ।

दुर्ललित न० दुष्टं ललितम् ईहम् लल—ईप्से क्त । चन्द्रप्रार्थनादिरूपे अलभ्यविषये आग्रहे । (आव्‌दार) दुश्चेष्टिते च । "दुष्टं ललितं यस्य । तादृशाग्रहवति (आवदेरे) । दुश्चेष्टे च त्रि० ।

दुर्व्व बधे भ्वा० पर० सक० सेट् । दूर्वति अदूर्व्वीत् । दूर्त्तः ।

दुर्वर्ण न० दुष्टोऽपि वर्ण्यते रज्यतेऽनेन दुष्टं मलिनं वा वर्णयति शुभ्रतापादनेन रूपान्तरं करोति । रजके, एलवालुके च । दुष्टवर्णवति मलिने त्रि० ।

दुर्व्वासस् त्रि० दुष्टं वासोऽस्य । मलिनवस्त्रे । अत्रिपुत्रे शङ्करांशजाते मुनिभेदे पु० । [नैषधम् खले मूर्खे च ।

दुर्विध त्रि० दुष्टा विधा यस्य । दरिद्रे "विदधाते कथिगर्वदुर्विधमि"ति

दुर्हृद् त्रि० दुष्टं हृदयं यस्य मतावर्थे नित्यं हृदादेशः । शत्रौ । दुष्टचित्ते त्रि० अत्र दुर्हृदयोऽपि ।

दुल उत्क्षेपे चुरा० उभ० सक० सेट् । दोलयति—ते अदूदुलत् ।

दुलि(ली) स्त्री० दुल—इन् नि० गिलुक् वा ङीप् । कमठ्याम् । मुनिभेदे पु० । [इति स्मृत्युक्ते महापातकजचिह्नवति ।

दुश्चर्म्मन् पु० दुष्टं चर्म्म यस्य । अप्राकृतमेढ्रे "दुश्चर्म्मा गुरुतल्पी स्यात्"

दुश्च्यवन पु० दुःखेन च्यवनं पतनं यस्य, दुष्टः क्रुद्धच्यवनो मुनिरस्य वा । इन्द्रे, स हि च्यवनेन कदाचित् कोपात् स्वपदात् पातितः ।

दुष वैकृत्ये दिवा० पर० अक० अनिट् । दुष्यति अदुषत् अदुक्षत् ।

दुष्कर न० दुःखेन कीर्य्यते कृ—खल् । आकाशे । कृ—खल् । दुःखेन कार्य्ये त्रि० ।

दुष्कर्म्मन् न० दुष्टं कर्म्म प्रा० स० । पापे । द्वन्द्व० । तद्वति त्रि० ।

दुष्कृत न० दुष्टं कृतं कृतिः । पापे । "सुकृतं दुष्कृतं लोके गच्छन्तमनुगच्छती"ति स्मृतिः दुष्कृतिरप्यत्र । द्वन्द्व० । तद्वति त्रि० ।

दुष्ट त्रि० दुष—क्त । दुर्बले, अधमे, दुर्ज्जने, दोषयुक्ते च । (कुड़) कुष्ठे पु० । पुंसत्वाम् स्त्री० ।

दुष्ठु अव्य० दुर्+स्था—कु षत्वम् । निन्दायां, निकृष्टतायां, दुःस्थाने च ।

दुष्पत्र पु० दुष्टानि पत्राण्यस्य । चोरनामगन्धद्रव्ये ।

दुष्प्रधर्षणी स्त्री० दुःखेन प्रधृष्यते कर्म्मणि ल्युट् । वार्त्ताक्याम् ।

दुष्प्रवेशा स्त्री० दुःखेन प्रवेशो यत्र । कन्थारीवृक्षे ।

दु(ष्य)ष्मन्त पु० चन्द्रवंशीये राजभेदे भरतराजपितरि शकुन्तलापतौ ।

दुह दोहे अदा० उभ० द्विक० अनिट् । दोग्धि दुग्धे । अधुक्षत्, अधुक्षत अदुग्ध ।

दुह बधे भ्वा० पर० सक० सेट् । दोहति अदुहत्—अदोहीत् ।

दुहितुःपति पु० ६त० अलुक् स० । जामातरि ।

दुहितृ स्त्री० दुह—तृच् गुणाभावः इट् च नि० । सुतायाम् ।

दू खेदे दिवा० आत्म० अक० सेट् । दूयते अदविष्ट । दूनः ।

दूत पु० दु—क्त दीर्घश्च । सन्देशहरे वार्त्ताहरे ।

दूति(ती) स्त्री० दू—क्तिच् वा ङीप् । स्त्रीपुंसयोः सन्देशहारिकायां स्त्रियाम् । "रतिदूतिपदे निवेशिते"ति कुमारः ।

दूत्य न० दूतस्य दूत्या वा भावः कर्म्म वा यत् । दूतकर्म्मणि दूतस्वभावे च ।

दून त्रि० दू—क्त । अध्वगमनादिना श्रान्ते, सन्तप्ते च "पित्तेन दूने रसने सितापी"ति नैषधम् । [विप्रकृष्टे अगोचरे च ।

दूर त्रि० दुःखेनेयते प्राप्यते दुर्+इण्—रक् इणो लोपश्च ।

दूरदर्शन पु० दूरात् पश्यति दृश—युच् । गृध्रे ।

दूरदर्शिन् पु० दूरात् कार्य्योत्तमन्तः प्राक् पश्यति दृश—णिनि । पण्डिते । दूरात् दर्शके त्रि० ।

दूरमूल पु० दूरपर्य्यन्तं मूलमस्य । मुञ्जतृणे (मुञ्ज) ।
दूर्व्वा स्त्री० दूर्व-हिंसायां अ । स्वनामख्याते घासभेदे ।
दूर्व्वाकाण्ड न० दूर्वाणां समूहः काण्डच् । दूर्वासमूहे ।
दूर्व्वाष्टमी स्त्री० भाद्रशुक्लाष्टम्यां तद्दिने दूर्वया देवार्च्चनस्य स्मृतौ विधानात्तथात्वम् । दूर्वाष्टम "श्रावणी दौर्गनवमी दूर्वा चैव हुताशनीति स्मृतौ तदर्थे दूर्वाशब्दप्रयोगात् ।
दूषण पु० रावणस्य मातृष्वस्रेये राक्षसभेदे । दूष-णिच्-ल्युट् । दोषदाने न० । [ (पिचुटि) ।
दूषिका स्त्री० दूषयति नेत्रं क्लिन्नं करोति दुष-णिच् ण्वुल् । नेत्रमले
दूषित त्रि० दुष-णिच्-क्त । अभिशस्ते, निन्दिते, दत्तदोषे च ।
दूष्य न० दुष-णिच्-य । वस्त्रनिर्म्मिते गृहे । दूषणीये त्रि० दूष्यं वचो ममपुनर्निपुणं विभाव्ये"ति शिरोमणिः । कक्षायां गजमध्यबन्धनरज्ज्वाञ्च स्त्री० ।
दृ बधे स्वा० पर० सक० अनिट् दृणोति अदार्षीत् ।
दृ आदरे तुदा० आ० सक० अनिट् आङ्पूर्वः । आद्रियते आदृत ।
दृक्प्रसाद स्त्री०दृशं प्रसादयति प्र+सद-णिच् अच् । कुलत्थायां तदञ्जनेन हि दृशः प्रसादो भवति ।
दृढ़ न० दृह-क्त नि० दृढभावः लौहे रूपककाव्यभेदे, अतिशये, नितान्ते च । तद्वति, स्थूले, प्रगाढे, बलवति शक्ते, कठिने च त्रि० ।
दृढ़कण्टक पु० दृढः कण्टकोऽस्य । (मञ्जाआकड़ा) क्षुद्रकण्टक युक्ते वृक्षभेदे । [ हिज्जले न० ।
दृढ़काण्ड पु० दृढ़ः कठिनः काण्डः स्कन्धोऽस्य । वंशदृचे दीर्घरो-
दृढ़क्षुरा स्त्री० दृढं क्षुरमिवाग्रं यस्याः । बल्वजाख्याम् तृणभेदे ।
दृढ़ग्रन्थि पु० दृढो ग्रन्थिः पर्वास्य । वंशे ।
दृढ़तृण पु० दृढं कठिनं तृणं कर्म० । मुञ्जतृणे । बल्वजायां स्त्री० ।
दृढ़नीर पु० कालेन दृढतां प्राप्तं नीरं यस्य । नारिकेले तस्य जलेनैव हि क्रमशः तत्कस्य सत्पद्यते ।

**दृढ़पत्र** पु० दृढं पत्रं यस्य। वंशे। वल्वजायां स्त्री० गौरा० ङीष्।
**दृढ़पादा** स्त्री० दृढः पादोमूलमस्या ङीप्। (भूइआमला) वृक्षभेदे।
**दृढ़प्ररोह** पु० दृढः प्ररोहः अङ्कुरोऽस्य। प्लक्षवृक्षे।
**दृढ़फल** पु० दृढ़ानि फलानि यस्य। नारिकेले।
**दृढ़बन्धिनी** स्त्री० दृढं बध्नाति यथाति स्वाश्रयं णिनि श्यामायाम्।
**दृढ़भूमि** त्रि० दृढ़ा भूमिरस्य। योगविषयेण संस्कृतान्तःकरणे वि-
षयसुखरागादिना चालयितुमशक्ये चित्ते।
**दृढ़मुष्टि** पु० दृढ़ा मुष्टिः यत्र, यस्मात् वा खड्गे तद्धारणे हि मुष्टेर्दृ-
ढ़ता। दृढ़ा अशिथिला मुष्टि, र्यस्य। कृपणे। स हि धना-
दिकं मुष्टौ निधाय अतिदृढ़तया दृढ़तरं बध्नाति।
**दृढ़मूल** पु० दृढं मूलमस्य। मुञ्जतृणे, नारिकेले च।
**दृढ़वल्कल** पु० दृढं वल्कलमस्य। पूगवृक्षे। अम्बष्ठायां स्त्री० तत्र
दृढ़त्वचापि।
**दृढ़वीज** पु० दृढं वीजमस्य। वदरे, चक्रमर्द्दे, वर्वुरे च।
**दृढ़व्रत** त्रि०दृढं व्रतं नियमोऽस्य। आफलोदर्कं प्रारब्धकार्य्यात्यागिनि।
**दृढ़सन्धि** त्रि० दृढः सन्धिः सन्धानं यस्य। निश्छिद्रतया संहते।
**दृढ़सूत्रिका** स्त्री० दृढं सूत्रं यस्याः स्वार्थे कन् अत इत्वम्।
मूर्वालतायाम्।
**दृढ़स्कन्ध** पु० दृढः स्कन्धोऽस्य। क्षीरिकावृक्षे।
**दृता** स्त्री० द्रियते दृ–क्त। जीरके।
**दृति** पु० दृ–क्तिच्। चर्म्मनिर्मितोदकपात्रे, चर्म्मनोदनचर्मयन्त्रे
(भिस्ति) मत्स्यभेदे च।
**दृतिहर** पु० दृतिं चर्मपात्रं हरति हृ–ट। कुक्कुरे।
**दृन्फ** क्लेशे तु० पर० अक० सेट्। दृफति दृम्फति अदृम्फीत्।
**दृन्भू** पु० दृभ–ऊ नि०। रूपे, वज्रे, सूर्य्ये, सर्पे, चक्रे च।
**दृप** बाधने तु० पर० सक० सेट्। दृपति अदर्पीत्।
**दृप** सन्दीपने वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट्। दर्प-
यति ते दर्पति। अदीदृपत्–त अददर्पत्–त अदर्पीत्।

दृप हर्षे गर्वे च दिवा० पर० अक० सेट् । दृप्यति अदृपत् अदर्पीत् दर्पित्वा दृप्त्वा । दृप्तः । [चरान्" इति रामकवचम् ।

दृप्त त्रि० दृप–क्त । गर्विते "वरदृप्तान् जघानैव रावणादिनिशा–

दृफ क्लेशे तु० दृ० पर० अक० सेट् । दृफति अदर्फीत् ।

दृब्ध त्रि० दृभ–क्त । ग्रथिते, भीते च ।

दृंभ ग्रथने वा चुरा० उभ० पक्षे तु० पर० सक० सेट् । दर्भयति ते दृभति अदीदृभत् त अददर्भत् त अदर्भीत् ।

दृभ भये वा चुरा० उभ० पक्षे भ्वा० पर० अक० सेट् । दर्भयति ते दर्भति । अदीदृभत् अददर्भत् त । अदर्भीत् ।

दृम्प राशीकरणे चुरा० उभ० सक० सेट् । दृम्पयति ते अददृम्पत्-त ।

दृंश चाक्षुषज्ञाने भ्वा० पर० सक० अनिट् । पश्यति अदर्शत्-अद्राक्षीत् ।

दृश्(शा) स्त्री० दृश–सम्प० भावे क्विप् वा टाप् । दर्शने ज्ञाने । करणे क्विप् । नेत्रे, द्वित्वसंख्यायाञ्च । कर्त्तरि क्विप् । साक्षिणि, द्रष्टरि ज्ञातरि च त्रि० ।

दृश(ष)द् स्त्री० दृ–विदारे अदि दुक् (षुक्) वा ह्रस्वः । पाषाणे निष्पेषणशिलायाञ्च (शिल) । [त्यो"रिति मनुः ।

दृश(ष)द्वती स्त्री० दृषद्+मतुप् मस्य वः । नदीभेदे "सरस्वती दृषद्व-

दृष्ट न० दृश–क्त । स्वपरचक्रभये । वीक्षिते, लौकिके च त्रि० ।

दृष्टरजस् स्त्री० दृष्टं रजो यया । प्रौढ़ायां स्त्रियाम् ।

दृष्टान्त पु० दृष्टोऽन्तो नाशोऽवसानं परिच्छेदश्च यस्मिन् । मरणे, शास्त्रे, प्रतिपाद्यप्रतिपादकयोः बुद्धिसाम्यविषयरूपे उदाहरणे, यथा यो धूमवान् स वह्निमान् यथा पाकस्थानमित्यादौ धूमवह्निमत्त्वयोर्व्याप्तौ पाकस्थानमुदाहरणम् अलङ्कारोक्ते अर्थालङ्कारभेदे च ।

दृष्टि स्त्री० दृश–भावे क्तिन् । दर्शने, बुद्धौ च । करणे क्तिन् । नेत्रे, द्वित्वसंख्यायां "चक्षुर्जन्यमनोवृत्तिश्चिद्युक्ता रूपभासिका दृष्टिरि-त्युच्यते" इत्युक्तायां मनोवृत्तौ च ।

दृष्टिविष पु० दृष्टौ विषं यस्य । सर्पभेदे । [दृंहति अदृंहीत् ।

दृह वृद्धौ भ्वा० पर० अक० सेट् । दर्हति अदर्हीत् अयमिदित् तत्र

दृ भये भ्वा० पर० सक० सेट् घटा० । दरति अदारीत् णिच् दरयति ।
दृ विदारे दिवा० क्र्या० च प्वा० पर० सक० सेट् । दीर्य्यति दृणाति ।
अदारीत् ।
दृ भये क्र्या० प्वा० पर० अक० सेट् । दृणाति अदारीत् ।
दे पालने भ्वा० आत्म सक० अनिट् । दयते अदास्त ।
देव क्रीडने भ्वा० आत्म० अक० सेट् । देवते अदेविष्ट ।
देव पु० दिव–पचाद्यच् । अमरे । द्योतनात्मके आत्मनि "दीव्यति
क्रीड़ते यस्माद्रोचते द्योतते दिवि । तस्माद्देव इति प्रोक्तः स्तूयते
सर्वदैवतै"रित्युक्ते परमेश्वरे ब्राह्मणसोपाधौ च इन्द्रिये न० । पूज्ये
त्रि० । नाट्योक्तौ राजनि पु० ।
देवक पु० श्रीकृष्णस्य मातामहे देवक्याः पितरि नृपभेदे ।
दे(दै)वकी स्त्री० देवकस्य नृपतेः आत्मजा पुंयोगे केकयोति बहु ङीप् ।
श्रीकृष्णस्य मातरि वसुदेवस्य भार्य्यायाम् अपत्यार्थेऽण् दैवकीति तत्रैव ।
दे(दै)वकीनन्दन पु० ६त० श्रीकृष्णे वसुदेवात्मजे दे(दै)वकीसुता-
दयोऽप्यत्र ।
देवकुसुम न० देवानां प्रियं योग्यं वा कुसुमम् शाकं । लवङ्गे ।
देवखात न० देवेन खातं खन–क्त । अकृत्रिमे जलाशये । ७त०
देवमन्दिरस्थे खाते च ।
देवखातविल न० देवेन खातं विदारितं विलम् । गुहायाम् ।
देवगायन पु० ६त० । गन्धर्वे ।
देवगिरि पु० देवानां प्रियः गिरिः । पर्वतभेदे ।
देवगुरु पु० ६त० । बृहस्पतौ ।
देवच्छन्द पु० देवैः छन्द्यते प्रार्थ्यते छन्द कर्मणि घञ् । शतयष्टिके हारे ।
देवजग्धक न० देवैरद्यते स्म अद–क्त जग्धादेशः स्वार्थे कन् । कत्तृणे,
गन्धतृणे च । [रुहाः पु० ।
देवतरु पु० ६त० । मन्दारपारिजातसन्तानकल्पवृक्षहरिचन्दनेषु पञ्चसु
देवता स्त्री० देव+स्वार्थे तल् "क्वचित् स्वार्थिका अपि प्रत्ययाः प्रकृ-
तितो लिङ्गवचनान्यतिवर्त्तन्ते" इति भाष्योक्तेः स्त्रीत्वम् । इन्द्रादौ सुरे ।

देवताड पु० देवमिन्द्रियं ताडयति ताड–अण्। (देवताड) वृक्ष-भेदे, अग्नौ, राहौ, मेघे च।

देवदण्डा स्त्री० देवमिन्द्रियं दण्डयति दण्ड–अच्। नागबलायाम्।

देवदत्त पु० देवा एनं देयासुः आशिषि क्तच्। देवार्पिते तन्नामके जने, अर्जुनशङ्खे "देवदत्तं धनञ्जय" इति गीता कृकरपाकरे वायौ च। देवाय दत्तः। देवोद्देशेन त्यक्ते त्रि०।

देवदारु न० देवानां प्रियं दारु यस्य तस्मादचन्दनस्य देवप्रियत्वात्। स्वनामख्याते वृक्षे अयं पुमानयस्य अमुं पुरः पश्यसि देवदारु-मिति रघुः। [पूरके, वेश्यायाञ्च।

देवदासी स्त्री० देवमिन्द्रियं दास्नोति दास–वधे अण्। वनबीज-

देवदीप पु० देवेषु इन्द्रियेषु दीप इव रूपप्रकाशत्वात्। लोचने।

देवदुन्दुभि पु० देवानां दुन्दुभिरिव हर्षप्रदत्वात्। रक्ततुलस्याम्। ६त०। देवढक्कायाम्। [वनबीजपूरके।

देवदूती स्त्री० देवानि इन्द्रियाणि दूयन्ते खिद्यन्तेऽनया दूक्तिच् ङीप्।

देवदेव पु० देवेषु मध्ये दीव्यति दिव–अच्। महादेवे।

देवधान न० देवानां योग्यं धान्यम्। (देधान) धान्यभेदे।

देवन पु० दीव्यत्यनेन दिव–करणे ल्युट्। पाशके। भावे ल्युट्। क्री-ड़ायां, दीप्तौ, व्यवहारे, जिगीषायां, स्तुतौ च न०। दीव्यत्य-स्याधारे ल्युट्। लीलोद्याने, पद्मे च।

देवनदी स्त्री० ६त०। गङ्गायाम्, "असंबाधा देवनदी"ति महाभा०

देवनिर्म्मिता स्त्री० देवैः निर्मिता। गुडूच्याम्।

देवपथ पु० देवैरर्च्चिरादिभिरातिवाहिकैरुपलक्षितः पन्थाः अच् समा०। उत्तरमार्गे। देवानां पन्थाः। छायापथे (यमनाला)।

देवपुरोधस् पु० ६त०। वृहस्पतौ।

देवप्रिय पु० ६त०। पीतभृङ्गराजे। वकपुष्पे न०।

देवबला स्त्री० देवानामिन्द्रियाणां बलं यस्याः ५ब०। सहदेवीलतायाम्।

देव(व)ल्लभ पु० ६त०। पुन्नागवृक्षे।

देवभवन न० देवानां भवनमिव। अश्वत्थवृक्षे। ६त०। स्वर्गे।

**देवभूय** न० देवस्य भावः भू—क्यप् । देवत्वे देवसायुज्ये ।

**देवमणि** पु० देवेषु मणिरिव प्रकाशकत्वात् । शिवे, अश्वस्य कण्ठस्थे रोमावर्त्ते, कौस्तुभमणौ, महाश्वेतायाञ्च ।

**देवमातृक** त्रि० देवः पर्ज्जन्यरूपीन्द्रःमातेव पालकोऽस्य । दृष्टि-जलसम्पन्नव्रीहिपालिते देशे ।

**देवयान** न० ६त० । देवरथे देवैरुपलक्षितं यानं मार्गः । अर्चि-रादिमार्गे शुक्राचार्य्यकन्यायां स्त्री० ङीप् ।

**देवयोनि** पु० देवा एव योनिः कारणमस्य । विद्याधरादौ देवांशभूते ।

**देवर** पु० देव—अर । पत्युः कनिष्ठभ्रातरि ।

**देवरथ** पु० ६त० । देवानां नभोगमनसाधने विमानादौ याने ।

**देवराज** पु० देवानां राजा टच् समा० । इन्द्रे देवाधिपादयोऽप्यत्र ।

**देवरात** पु० देवा एनं रायासुः क्तच् । अभिमन्युसुते परीक्षिन्नृपे ।

**देवर्षि** पु० वेद द्रष्टा ऋषिः देव एव सन् ऋषिः । नारदादिमुनौ ।

**देवल** पु० मुनिभेदे व्यासशिष्ये धौम्यस्य ज्येष्ठभ्रातरि, देवान् जीविकार्थं लाति ला—क । देवोपजीविनि । स्वार्थे कन् अतएव "देवकोशोप-जीवी च नाम्ना देवलको भवे"दित्युक्ते विप्रे ।

**देवलता** स्त्री० दीव्यति प्रकाशते देवा कर्म० । नवमल्लिकायाम् ।

**देवलोक** पु० ६त० । स्वर्गे । देवस्य ईश्वरस्य सम्पद्रूपोलोकः । "भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महर्जनः । तपः सत्यञ्च सप्तैते देवलोकः प्रकीर्त्तित" इत्युक्तेषु भूरादिषु सप्तसु लोकेषु ।

**देववर्द्धकि** पु० ६त० । विश्वकर्मणि । [वृक्षे पु, गुग्गुलौ च ।

**देववृक्ष** पु० दीव्यति देवः कर्म्म० । सप्तपर्णवृक्षे, ६त० मन्दारादि-

**देवव्रत** पु० देवम् इन्द्रियसंयमनं व्रतमस्य । भीष्मे ।

**देवसात्** अव्य० देवेभ्यो देयं तदधीनं साति वा देवेभ्योदेये, तदधीने च

**देवसायुज्य** न० युनक्ति युज-क सह युजेन सयुजः तस्य भावः सायुज्यं देवेन सायुज्यमेकासनयोगिता । देवसहयोगे ।

**देवसेना** स्त्री० इन्द्रस्य सुतायां षष्ठीनाम्न्यां कार्त्तिकेयपत्न्याम्, मातृ-काभेदे । ६त० । देवानां सेनायाञ्च ।

देवसेनापति पु० ६त० । कार्त्तिकेये । इन्द्रसुते, देवसेनानामीयेच ।
देवस्व न० "यद्धनं यज्ञशीलानां देवस्वं तद्विदुर्बुधा" इत्युक्ते धने ।
देवहूति स्त्री० स्वायम्भुवमनोः कन्यायाम् ।
देवा स्त्री० दिव–अच् । पद्मचारिण्यां लतायाम्, अशनपर्ण्याञ्च ।
देवागारिक त्रि० देवागारे नियुक्तः ठन् । देवागारे नियुक्ते ।
देवाजीव त्रि० देवं देवप्रतिमाद्रव्यमाजीवति जीव अण् । (पूजारी)
देवले । णिनि देवाजीवीत्यप्यत्र ।
देवात्मन् पु० देवो विष्णुरात्मा यस्य । अश्वत्थे तस्य विष्णुरूपत्वम्
अश्वत्थरूपी भगवानिति मन्त्रात् सिद्धम् ।
देवानांप्रिय पु० । अलुक्समासः । छागे । मूर्खे त्रि० ।
देवापि पु० चन्द्रवंश्ये नृपभेदे ।
देवार्ह न० देवानर्हति अण् । सुरपर्ण्यो । महदेवीलतायां स्त्री० ।
देवयोग्यमात्रे त्रि० ।
[यतनमप्यत्र ।
देवालय पु० देवानामालयः । स्वर्गे, देवप्रतिमादीनां गृहे च देवा-
देवावास पु० ६त० । अश्वत्थवृक्षे ।
देविका स्त्री० दिव–ण्वुल् । "अर्द्धयोजनविस्तारां पञ्चयोजनमाय-
ताम् । एतावद्देविकामाहु"रित्युक्ते नदीभेदे धुस्तूरे च ।
देवी स्त्री० दीव्यति दिव अण् गौ० ङीप् । दुर्गायाम्, मूर्व्वायां, पृक्का-
याञ्च । देवस्य पत्नी ङीप् । देवपत्न्यां, नाट्योक्तौ कृताभिषेकायां
राजवनितायां, विप्रस्त्रीणामुपाधौ च देव्यन्ता विप्रयोषित"इत्युक्तेः ।
देवृ पु० दिव–ऋ । देवरे स्वामिनः कनिष्ठ भ्रातरि ।
देवेश न० ६त० । महादेवे । तत्पत्न्यां दुर्गायां स्त्री० ङीप् ।
देवेष्ट पु० देवानामिष्टः । गुग्गुलौ । दैत्यमेदजातत्वात् देवप्रियत्व-
मस्य । वनबीजपूरके स्त्री० ।
देवोद्यान न० ६त० देवोद्यानानि वैभ्राजं मिश्रकं चित्रकारणम् ।
नन्दनञ्चेति चत्वारीत्युक्तेषु चतुर्षु वने । [पदेषु स्थानमात्रे च ।
देश पु० दिश–अच् । भूगोलविभागमात्रे कुरुपाञ्चालादिषु प्रसिद्धजन-
देशरूप न० देशनं देशः प्रशस्तदेशः उचिते समञ्जसे ।

देशान्तर न० अन्यो देशः मयूर० । "वाचो यत्र विभिद्यन्ते गिरि र्वा व्यवधायकः । महानद्यन्तरं यत्र तद्देशान्तरमुच्यते, इत्युक्ते देशभेदे, ज्योतिषोक्ते सुमेरुलङ्कयोर्मध्यरेखावर्त्तिदेशावधिके देशे तदवधिके अन्तरयोजनादौ च ।

देशिक पु० देशेषु प्रवितः ठन् । पथिके । देशोदेशनोपदेशस्तत्र साधु ठन् । गुरौ ।

देशिनी स्त्री० दिशति दिश—करणस्य कर्त्तृत्वविवक्षायां णिनि । तर्ज्जन्याम् ।

देश्य न० दिश—ण्यत् । पूर्वपक्षे । देशमर्हति यत् । देशयोग्ये त्रि० ।

देह पु० न० दिह—घञ् । स्थूलसूक्ष्मकार्य्यकारणरूपे शरीरे ज्योतिषोक्ते लग्ने च । भावे घञ् लेपने पु० ।

देहधारक पु० न० देहं धारयति धृ—णिच् ण्वुल् । अस्थ्नि ।

देहभृत् पु० देहं बिभर्त्ति भृ—क्विप् । जीवे ।

देहयात्रा स्त्री० देहो याति गच्छत्यनेन या—करणे ष्ट्रन् न ङीप् । शरीररक्षासाधने भोजने । ६त० । मरणे तदुपलक्षिते यमपुरीगमने च ।

देहली(लि) देहं लेपनं लाति गृह्णाति ला—क गौरा० ङीष् पृ० वा ह्रस्वः । लेपनयोग्यायां द्वारपिण्डिकायां, (देयाल) कपाटस्येऽधःकाष्ठखण्डे च ।

देहसार पु० ६त० । मज्जनि ।

देहात्मवादिन् पु० देहमेव आत्मतया वदति वद—णिनि । चार्वाके ।

देहिन् त्रि० देह+अस्त्यर्थे इनि । प्राणिनि देहात्माभिमानिनि जीवे ।

दैप शोधने भ्वा० पर० सक० सेट् पित् । दायति अदासीत् दायात् ।

दैतेय पु० दितेरपत्यम् दिति ढक् । असुरे । ष्य । दैत्योऽप्यत्र ।

दैत्यगुरु पु० ६त० । शुक्राचार्य्ये, दैत्याचार्य्यादयोऽप्यत्र ।

दैत्यनिसूदन पु० दैत्यान् निसूदयति हिनस्ति सूद णिच् ल्यु । विष्णौ

दैत्यमेदज पु० दैत्यानां मेदाज्जायते जन ड । गुग्गुलौ । पृथिव्यां ।

स्त्री० मधुकैटभमेदजातत्वात्तस्यास्तथात्वम् । [द्रव्ये, चण्डोपधौ च ।
**दैत्या** स्त्री० दैत्यस्य प्रिया यत् । दैत्यभार्य्यायाम्, सुरायां, मुरानामगन्ध-
**दैत्यारि** पु० ६त० । विष्णौ ।
**दैन** न० दीनस्य भावः । दीनत्वे । दिने भवं अण् । दिनभवे त्रि० ।
**दैनन्दिन** त्रि० दिनं दिनं प्रतिदिनम् तत्र भवम् अण् नि० ।
प्रतिदिनभवे ।
**दैनन्दिनप्रलय** पु० ७त० ब्रह्मणः स्वमानानुसारेण प्रतिदिनावसाने
सर्व्वस्थूलवस्तुनां चये । विस्तरो वाचस्पत्ये ।
**दैन्य** न० दीनस्य भावः ष्यञ् । दीनत्वे, कार्पण्ये च ।
**दैव** न० देवादागतम्, देवोदेवताऽस्य, देवस्येदं वा अण् । भाग्ये
फलोन्मुखे शुभाशुभकर्म्मणि, "प्राग्जन्मनि कृतं कर्म्म शुभं वा
यदि वाऽशुभम् । दैवशब्देन निर्द्दिष्टमिह जन्मनि तद् बुधैरित्युक्ते
पूर्वजन्मार्ज्जिते कर्मणि, दक्षिणहस्ताङ्गुलीनामग्ररूपे देवतीर्थे मन्त्रा-
णामनुग्राहकदेवताध्याने, उत्पातज्ञाने च । विवाहभेदे, त्रिवि-
धभूतादिसर्गे च पु० । देवसम्बन्धिनि श्राद्धहोमादौ त्रि० ।
**दैवज्ञ** पु० दैवं पूर्वजन्मार्जितशुभाशुभं जनानां जन्मलग्नादिना जानाति
ज्ञा—क ६त० । गणके ज्योतिर्विदि । लक्षणादिना शुभाशुभज्ञायां
स्त्रियां स्त्री० टाप् । [समूहे अण् । देवसमूहे न० ।
**दैवत** पु० न० । देवएव देवता ततः प्रज्ञाद्यण् । देवे । देवतानां
**दैवतन्त्र** त्रि० दैवस्यैव तन्त्रमायत्तम् । भाग्याधीने ।
**दैवपर** त्रि० दैवमेव परं श्रेष्ठं यस्य । दैवसारे यदृच्छिणि ।
**दैवप्रश्न** पु० "नक्तं निर्गत्य यत्किञ्चिच्छुभाशुभकरं वचः । श्रूयते तद्वि-
दुर्धीरा दैवप्रश्न"मित्युक्ते रात्रौ अकस्मात् आकाशादौ श्रूयमाणे
शुभाशुभसूचके वाक्ये ।
**दैवलेखक** पु० दैवं लिखति । गणके ।
**दैववाणी** स्त्री० देवस्येयम् अण् कर्म० । आकाशवाण्याम् संस्कृतवाण्याञ्च
**दैवसर्ग** पु० देवकृतः सत्वगुणकृतः सर्गः । सांख्योक्तभूतसर्गमध्ये
सात्त्विकांशरूपे ।

दैवात् अव्य० दैवमतति क्विप्। हठादित्यर्थे।

दैविक न० दैवोदेवताऽस्य ठक् "देवानुद्दिश्य यच्छ्राद्धं दैविकं तत्‌ प्रचक्षते" इत्युक्ते देवोद्देश्यके श्राद्धे। देवस्येदं देवादागतं वा ठक्। देवादागते देवसम्बन्धिनि च त्रि०।

दैवी स्त्री० देवस्येयम् अण्। सात्त्विकप्रकृतौ, "दैवी सम्पद्विमोक्षाये"ति गीता। देवसम्बन्धिन्याञ्च।

दैवोदासि पु० दिवोदासस्यापत्यम् अत इञ्। प्रतर्द्दने नृपे।

दैव्य न० देवेन कृतम् देवानामिदम् वा यञ्। भाग्ये। देवसम्बन्धिनि त्रि०।

दैशिक त्रि० देशेन निर्वृत्तं देशस्येदं वा ठक्। देशसम्बन्धिनि न्याये।क्ते देशकृतस्वरूपभेदे विशेषणसम्बन्धे च। स्त्रियां ङीप्।

दैष्टिक त्रि० दिष्टं भागधेयमेव सर्वसाधनमिति यस्य मतिः ठक्। भाग्याधीनतावादिनि।

दो छेदे दिवा० पर० सक० अनिट्। द्यति अदात्।

दोःशिखर न० ६त०। स्कन्धे [स्त्री० ङीप्।

दोग्धृ पु० दुह-तृच्। वत्से, गोपाले, दोहनकर्त्तरि त्रि०। गवि

दोर्दण्ड पु० दोर्दण्डइव दीर्घत्वात् कार्य्यसाधकत्वाच्च। बाहुदण्डे। एवं भुजदण्डादयोऽप्यत्र।

दोर्मूल न० ६त०। कक्षे बाहुमूले। [दोलयालादोलोत्सवोऽप्यत्र।

दोल पु० दुल-भावे घञ्। श्रीकृष्णस्य दोलनरूपे उत्सवभेदे।

दोला स्त्री० दुल-अच् टाप् अ वा। (डोली) यानभेदे, उद्यानादौ क्रीडार्थे दोलनयन्त्रे च। स्वार्थे कन्। अत्रार्थे।

दोलायमान त्रि० दोलां दोलनमाचरते क्यङ्-शानच्। दोलनं कुर्वति दोलायन्त्रारूढे।

दोष पु० दुष-घञ्। दूषणे पापे "वातः पित्तःकफश्चेति त्रयोदोषाः समासतः" इत्युक्तेषु वातादिषु, अलङ्कारोक्ते रसाद्यपकर्षाधायके दुष्टशब्दादिभेदे न्यायाद्युक्तेषु रागद्वेषमोहेषु च।

दोषग्राहिन् त्रि० दोषानेव गृह्णाति न गुणान् ग्रह-णिनि। दोष-

ग्राही गुणत्यागी चालनीव हि दुर्जन" इत्युक्ते दुर्जने ।

**दोषज्ञ** त्रि० दोषान् जानाति ज्ञा—क । पण्डिते, वातादिदोषज्ञे चिकित्सके च ।

**दोषत्रय** न० दोषाणां त्रयम् । वातपित्तकफेषु ।

**दोषा** अव्य० दुष—अच् । रात्रौ ।

**दोषाकर** पु० दोषा रात्रिं करोति तस्मिन् करः किरणो यस्य वा । चन्द्रे । दोषाणामाकरः दोषाश्रये पु० ।

**दोषाक्लेशा** स्त्री० दोषा रात्रौ क्लिश्यति अच् टाप् । वनबर्बुरिकायाम्

**दोषैकदृक्** त्रि० दोषे एव न गुणे एकादृग् यस्य । खले ।

**दोस्(षा)** पु० दम करणे डोसि । भुजे, भागुरिमते टापि षत्वम् ।

**दोह** पु० दुह-कर्मणि घञ् । दुग्धे "सन्दोहयाहमेऽहमी"ति श्रुतिः । आधारे घञ् । दोहनपात्रे । भावे घञ् । दोहने ।

**दोहद** पु० न० द्वयोः गर्भिणीतदपत्ययोर्हृदयमत्र नि० । गर्भं सुदक्षिणा दोहदलक्षणमिति रघुः । दोहमाकर्षं ददाति दा—क । (माद) गर्भिण्यभिलाषे लालसायाञ्च । चिह्ने, गर्भलक्षणे च न० । द० औत् । दौहृदमप्यत्र । [नारीमाङ्कर्दौहृदिनीमित्युक्तेः ।

**दोहदिनी** स्त्री० दोहदोऽस्त्यस्याः इनि । गर्भिण्याम् "ताञ्च दिहृदयां

**दोहनी** स्त्री० दुह्यतेऽत्र आधारे ल्युट् । दोहनपात्रे ।

**दोहा** स्त्री० मात्रावृत्तभेदे ।

**दौत्य** न० दूतस्य भावः कर्म वा ष्यञ् । दूतस्य भावे तत्कर्मणि च ।

**दौर्भागिनेय** पु० दुर्भगाया अपत्यम् ढक् इनङादेशः द्विपदवृद्धिः । दुर्भगापुत्रे ।

**दौर्मनस्य** न० दुर्मनसो भावः ष्यञ् । वाह्याभ्यन्तरकारणैर्मनसः दौस्थ्ये, स्वस्थीभावे दुःखहेतुके चित्तस्यावसादे च ।

**दौवारिक** पु० द्वारे नियुक्तः ठक् । द्वारपाले । प्रतीहार्य्यां स्त्री० ।

**दौष्कुलेय** त्रि० दुष्कुलस्यापत्यम् ढक् । निन्दितकुलजाते ।

**दौहित्र** पु० दुहितुरपत्यम् अण् । दुहितुः सुते "दौहित्रं खड्ग-

भित्याक्षरपत्य' द हिमुक्तिला: । कपिकाया इतस्त्रैव दौहित्रमिति चोच्यते इत्युक्तेषु खड्गादिषु न० ।

द्यावापृथिवी स्त्री० द्वि० व० । द्यौश्च पृथिवी च द्व० द्यावादेशः । स्वर्गपृथिव्योर्मिलितयो एवं द्यावाभू स्यात्‌द्योऽप्यत्र द्यावाभूमी अन-यस्मिति श्रुतिः ।

द्यु अभिसर्पणे अदा० पर० सक० अनिट् । द्यौति अद्यौषीत् ।

द्यु पु० दिव–क्किप् पृ० हुस्वः । अग्नौ, सूर्य्ये, अर्कवृक्षे च आकाशे, दिवसे च न० ।

द्युत दीप्तौ भ्वा० आत्म० अक० सेट् । द्योतते अद्युतत् अद्योतिष्ट ।

द्युति(ती) स्त्री० द्युत–इन् वा ङीप् । कान्तौ दीप्तौ, शोभायाम् प्रकाशे च । [ रश्मादयोऽप्यत्र ।

द्युपतिपु० ६त० । सूर्य्ये अर्कवृक्षे च एवं दिवोमणिरिव । द्युम-

द्युम्न पु० दिव मनति म्ना–क । धने, बले च ।

द्यूत न० दिव क्त । (जुया) पाशकक्रीडायाम् अप्राणिकरणक क्रीडायां, कैतवे च ।

द्यूतकर त्रि० द्यूतं करोति कृ–ठक् । पाशकादिक्रीडाकारके (जु-यारी) एवुल् । द्यूतकारकोऽप्यत्र । क्किप् । द्यूतकृदप्यत्र ।

द्यूतपूर्णिमा स्त्री० द्यूतस्य द्यूतार्थं पूर्णिमा । आश्विनपौर्णमास्यां कोजागरपौर्णमास्याम् ।

द्यूतप्रतिपद्(द) स्त्री० चतुर्थ्यर्थे ६त० । कार्त्तिकशुक्लप्रतिपदि । "द्यूतप्रतिपदा नाम तत भावी महोत्सव" इति स्मृतिः ।

द्यूतवृत्ति पु० द्यूतमेव वृत्तिर्जीविका यस्य । सभिके ।

द्यै तिरस्कारे भ्वा० पर० सक० अनिट् । द्यायति अद्यासीत् ।

द्यो स्त्री० द्युत–डो स्वर्गे, आकाशे च ।

द्योत पु० द्युत–घञ् । प्रकाशे, आतपे च ।

द्रढिमन् पु० दृढस्य भावः इमनिच् द्रढादेशः । दृढत्वे दार्ढ्ये ।

द्रप्स(प्स) न० दृप्यन्त्यनेन स (प्स) अम् च । घनभिन्ने द्रवीभूते दधि ।

द्रम गतौ भ्वा० पर० सक० अक० सेट् । द्रमति अद्रमीत् ।

द्रम्म पु० "वराटकानां दशकद्वयं यत सा काकिणी ताश्च पणश्चतस्रः ते षोड़श द्रम्म" इत्युक्ते परिमाणभेदे (काहन)।

द्रव पु० द्रु—अप्। रसे पलायने, गतौ, वेगे परीहासे च।

द्रवज पु० द्रवात् रसात् जायते जन—ड। गुड़े। द्रवजातमात्रे त्रि०।

द्रवत्व न० द्रवति स्यन्दते द्रु—अच् तस्य भावः। न्यायोक्ते स्यन्दनकारणे पृथिवीजलतेजोवृत्तौ गुणभेदे।

द्रवद्रव्य न० द्रवतीति द्रवं कर्म्म०। दुग्धदधिघृतादौ निर्य्यन्दिनि द्रव्ये।

द्रवन्ती स्त्री० द्रु—शतृ। नद्याम्। शतमूलिकायां मूषिकपर्ण्याञ्च।

द्रविड पु० देशभेदे। तद्देशस्थे ब० व०।

द्रविण न० द्रु—इनन्। वित्ते, काञ्चने, पराक्रमे, बले च।

द्रविणनाशन पु० द्रविणं बलं नाशयति नश—णिच् ल्यु। शोभाञ्जनवृक्षे।

द्रव्य न० द्रु—यत्। पित्तले, वित्ते, विलेपनद्रव्ये, भेषजे, भव्ये, जतुनि, विनये, मद्ये, न्यायोक्तेषु पृथिव्यादिषु गुणवत्सु नवसु। व्याकरणोक्ते लिङ्गसंख्यान्वयिनि पदार्थे। द्रोर्वृक्षस्य विकारः तस्येदम् वा यत्। वृक्षविकारे तत्सम्बन्धिनि च त्रि०।

द्रष्टृ त्रि० दृश—तृच्। विचारकुशले—चेतने, साक्षिणि, द्रष्टा दृष्टः; कर्त्तरीत्युक्ते दर्शनकर्त्तरि च।

द्रा स्वप्ने पलायने अदा० अक० अनिट्। द्राति अद्रासीत्।

द्राक् अव्य० द्रा—कु। शीघ्रे झटितीत्यर्थे।

द्राक्ष काङ्क्षायां भ्वा०पर० सक० सेट् इदित्। द्राङ्क्षति अद्राङ्क्षीत्।

द्राक्षा स्त्री० द्राक्षि—अ नि० नलोपः। मृद्वीकायाम् (किसमिस) "द्राक्षे! द्रक्ष्यन्ति के" त्वामिति जयदेवः।

द्राख शोषणे अलमर्थे च भ्वा० पर० स० सेट्। द्राखति अद्राखीत्। णिच् अदद्राखत्। [अद्राघीत्। णिच् अदद्राघत्।

द्राघ आयासे शक्तौ भ्रमे च भ्वा० पर० सक० सेट्। द्राघति

द्राघिमन् पु० दीर्घस्य भावः इमनिच् द्राघादेशः। दीर्घत्वे।

**द्वाः(द्वा)स्थ** पु० द्वारि तिष्ठति स्था—क वा विसर्गलोपः। द्वारपाले स्था कर्त्तरि—क्त। द्वाः (द्वा)स्थितोऽप्यत्र।

**द्वाचत्वारिंशत्** स्त्री० द्व्यधिका चत्वारिंशत् द्वौ च चत्वारिंशच्च वा आत्वम्। (वेयाल्लिश) संख्याभेदे द्वात्रिंशदादयोऽप्यत्र।

**द्वादश** त्रि० द्वादशानां पूरणः डट्। येन द्वादशसंख्या पूर्य्यते तस्मिन्

**द्वादशन्** पु० द्वौ च दश च द्व्यधिका वा दश आत्वम् (बारो) संख्याभेदे द्विरावृत्ता दश विंशतिसंख्यायाम्।

**द्वादशकर** पु० द्वादश करा हस्ता अस्य। कार्त्तिकेये हृहस्पतौ च द्वादशहस्तादयोऽप्यत्र। [ शलोचनादयोऽप्यत्र।

**द्वादशनेत्र** पु० द्वादश नेत्राण्यस्य। षड़ानने कार्त्तिकेये। द्वाद-

**द्वादशाङ्गुल** पु० द्वादश अङ्गुलयः प्रमाणमस्य तद्धितार्थे द्विगुः तद्धितस्य लुकि अच् समा०। वितस्तिप्रमाणे।

**द्वादशात्मन्** पु० द्वादश आत्मानोमूर्त्तयोऽस्य। सूर्य्ये, अर्कवृक्षे च।

**द्वादशायुस्** पु० द्वादश वर्षमायुर्यस्य। कुक्कुरे।

**द्वापर** पु० द्वौ परौ प्रकारौ विषयौ वा यस्य पृ० आत्त्वम्। संशये सत्यत्रेतानन्तरे युगभेदे द्व्यङ्कसङ्ख्यान्वितपाशकपार्श्वे च।

**द्वापराय** पु० पाशकस्य द्व्यङ्कसङ्ख्यान्वितं पार्श्वं द्वापरं तस्य अयः उत्तानतया पतनम्। द्यूतभेदे द्व्यङ्कान्वितपार्श्वस्योत्तानतया पतने।

**द्वामुष्यायण** पु० द्वयोरमुयोरपत्यम्। नि०। द्वयोः पुत्रे। गौतमे सुनौ च।

**द्वार्** स्त्री० वृ—वरणे णिच्—विच्। गृहादि निर्गमनस्थाने, प्रतीहारे, उपाये, सुखे च। [ सुखे च।

**द्वार** न० वृ—णिच् अच्। गृहादिनिर्गमनस्थाने, प्रतीहारे, उपाये,

**द्वारका** स्त्री० द्वारेण प्रशस्तद्वारेण कायति कै—क। समुद्रसन्निकृष्टे तीर्थभेदे द्वारवत्यादयोऽप्यत्र।

**द्वारकेश** पु० ६ त०। श्रीकृष्णे। [ ण्वुल् च। एतावप्यत्रार्थे।

**द्वारप** त्रि० द्वारं पाति रक्षति पा—क। द्वारपाले। पाल—अण्,

**द्वारयन्त्र** न० ६त०। तालके। (ताला) (कुलुप) ख्याते पदार्थे

द्वारावती स्त्री० द्वाराणि सीमोपायाः सन्त्यस्याम् मतुप् पूर्व दीर्घः । तीर्थभेदे पुरी द्वारावती चैव सप्तैता इति पुराणम् द्वार+अस्त्यर्थे ठनि द्वारिकाप्यत्र ।

द्वारिन् त्रि० द्वारं पाल्यत्वेनास्त्यस्य इनि । द्वारपाले ।

द्वाविंशति स्त्री० द्व्यधिकाविंशतिः द्वौ च विंशतिश्च आत्वम् । (बा-इस) सङ्ख्याभेदे ।

द्वि त्रि० द्वि०व० । द्रु—ड । द्वित्वसङ्ख्यान्विते ।

द्विक पु० द्वौ कौ ककारौ यत्र । काके, कोके, द्व्यवयवम् कन् द्वित्व-सङ्ख्यायाम् तद्वति च न० । एकं द्विकं त्रिकञ्चेति कारिका ।

द्विककुद् पु० द्वे ककुदे यस्य अन्त्यलोपः । उष्ट्रे ।

द्विगु पु० व्याकरणोक्ते समासभेदे । द्व० । गोद्वयस्वामिनि त्रि० ।

द्विगुण त्रि० द्वाभ्यां गुण्यते गुण—घञर्थे क । द्वाभ्यां गुणिते ।

द्विगुणाकृत त्रि० द्विगुणं कृत्वा कृष्टम् डाच्+कृ—क्त । द्विवार-कृष्टे क्षेत्रे ।

द्विज पु० द्विर्जायते जन ड वृत्तौ सङ्ख्याया वारार्थत्वम् । ब्राह्मणे ब्राह्मणादिवर्णत्रये, "जन्मना जायते शूद्रः संस्कारैर्द्विज उच्यते" इति स्मृतिः । दन्ते, अण्डजे विहगादौ, तुम्बुरुवृक्षे च ।

द्विजकुत्सित पु० ३त० । श्लेष्मातकवृक्षे तत्फलस्य द्विजानामभक्ष्य-त्वात् तन्निन्द्यत्वम् ।

द्विजदेव पु० द्विजेषु देवइव । ब्राह्मणे, ऋषौ च ।

द्विजन्मन् पु० द्वे जन्मनी यस्य । ब्राह्मणक्षत्रियवैश्यरूपवर्ण त्रये, "मातुरग्रेऽधिजननं द्वितीयं मौञ्जीबन्धने इति स्मृतिः दन्ते, अण्डजे च ।

द्विजबन्धु पु० द्विजो बन्धुर्यस्य तद्गोत्रोत्पन्नत्वात् । स्वकार्यरहितेषु जन्म-मात्रोपजीविषु अधमेषु ब्राह्मणक्षत्रियवैश्येषु ।

द्विजराज पु० ६त० टच् समा० । चन्द्रे, अनन्ते, गरुडे च ।

द्विजवर पु० द्विजेषु वरः । विप्रे । द्विजवर्य्य द्विजोत्तमादयोऽप्यत्र ।

द्विजशप्त पु० ३त० । राजमाषे (बरबटी) ।

द्विजा स्त्री० द्विर्जायते जन–ड टाप्। पालक्यां, भार्ग्यां, रेणुकागन्धद्रव्ये च।

द्विजाति पु० द्वे जाती जन्मनी यस्य। "ब्राह्मणः क्षत्रियोवैश्यस्त्रयोवर्णा द्विजातय" इति मनूक्ते वर्णत्रये मातुरग्रेऽधिजननं द्वितीयं मौञ्जीबन्धने" इत्युक्तेस्तेषां तथात्वम्।

द्विजिह्व पु० द्वे जिह्वे यस्य। सर्पे। खले, चौरे, दुःसाध्ये च त्रि०।

द्वितय त्रि० द्वाववयवावस्य द्व्यवयवं वा द्वि–तयप्। द्वित्वसङ्ख्यान्विते "यदि वायौ द्वितयेऽपि तेऽचला" इति भारविः स्त्रियां ङीप्। द्वित्वसङ्ख्यायाञ्च न०।

द्वितीय त्रि० द्वयोः पूरणः तीय। द्वयोः पूरणे। चन्द्रस्य द्वितीयकलाक्रियारूपे तिथौ स्त्री० भागार्थेऽण्। द्वितीये भागे।

द्वितीयाकृत त्रि० द्वितीयं कृत्वा कृष्टम् डाच्+कृ–क्त। द्विवारकृष्टे क्षेत्रे

द्विदत् त्रि० द्वौ दन्तावस्य वयसि दन्तस्य दत्रादेशः। द्विदन्तोपलक्षितवयस्के वृषादौ स्त्रियां ङीप्।

द्विदेव पु० द्वौ देवावस्य अण् उत्तरपदवृद्धिः। विशाखानक्षत्रे तस्याः शक्राग्निदेवताकत्वात् तथात्वम्।

द्विधा अव्य० द्विप्रकारम् द्वि+धाच्। द्विप्रकारे।

द्विधालेख्य पु० द्विधा लेखा रेखामर्हति यत्। हिन्तालवृक्षे। द्विप्रकारलेखनीये त्रि०।

द्विप पु० द्वाभ्यां मुखशुण्डाभ्यां पिबति पा–क। हस्तिनि।

द्विपद् पु० द्वे पदे यस्य। मनुष्ये, देवे, पक्षिणि, राक्षसे, च। "मिथुनतुलाघटकन्याद्विपदाख्या चापपूर्वभागश्चेति" ज्योतिषोक्ते राशिभेदे च।

द्विपदा स्त्री० द्वौ पादावस्या पादस्यान्त्यलोपः टापि भत्वात् पदादेशः। ऋग्विशेषे। छन्दोभेदे ङीप् द्विपदी।

द्विपर्णी स्त्री० द्वे द्वे पर्णे प्रतिपर्णमस्याः ङीप्। वनकोल्यां शालपर्ण्यां, पृश्निपर्ण्याञ्च। पर्णद्वययुक्ते त्रि०। स्त्रियां टाप्।

द्विमातृक पु० द्वे मातरावस्य। दुर्गाचामुण्डापालिते गणेशे जरासन्धे च

**नागफल** पु० नागाकारं फलमस्य दीर्घत्वात् । पटोलभेदे (धुधुल) ।
**नागबला** स्त्री० नागानां दन्तिनां बलं यस्याः ५ब० । ( गोरक्ष-चाकुलिया) लताभेदे ।
**नागमातृ** स्त्री०६त०। कद्रुनामाख्यायां काश्यपपत्न्याम्, मनसादेव्याञ्च ।
**नागमार** पु० नागं हस्तिनं मारयति मृ–णिच्–अण् । भङ्गराजे तद्भक्षणे हि हस्तिनो म्रायः । हस्तिमारके त्रि० ।
**नागयष्टि** स्त्री० नागाश्रयार्था यष्टिः । (रङ्गाठ) पुष्करिण्यादौ अ-ष्टानां नागानां मध्ये अष्टतनामानुसारेण तदीयस्याश्रयत्वेन कल्पिते दीर्घयूपाकारे काष्ठे ।
**नागर** त्रि० नगरे भवः । विदग्धे । अगं राति अगरः न अगरः । देवरे, नागरङ्गे, जम्बीरभेदे, मुस्तकभेदे च (नागरमुथा) ।
**नागरक** पु० नगरे भवः ततः कुत्सितार्थे प्राबीण्ये वा वुञ् । चौरे, चित्रलेखनकारे शिल्पिनि च ।
**नागरघन** पु० नागराख्यः घनः मुस्तकः । (नागरमुथा) मुस्तकभेदे ।
**नागरङ्ग**पु०नागस्य विन्दूरस्येव रङ्गोरागो यत्र । जम्बीरभेदे (नारांगी)
**नागरमुस्ता** पु०न०कर्म०। स्वनामख्याते मुस्तकभेदे । नागरमुस्ताप्यत्र
**नागराज** पु० नागानां सर्पाणां हस्तिनां च राजा टच् समा० । अनन्ते–सर्पे, ऐरावते–गजे च । [लिङ्गे च ।
**नागलता** स्त्री० नागाकारा नागलोकस्य वा लता । ताम्बूल्यां पुरुष-
**नागलोक** पु० ६त० । पाताले । [ताम्बूल्याम् नागवल्ल्यादयोऽप्यत्र ।
**नागवल्लरी** स्त्री० नागाकारा नागलोकस्य वा वल्लरी लता ।
**नागसम्भव** न० नागं सीसं सम्भवोऽस्य । सिन्दूरे ।
**नागस्फोता** स्त्री० नाग इव स्फोता । नागदन्तीवृक्षे, दन्तीवृक्षे च ।
**नागहनु** पु० नागस्य हस्तिनो हनुरिव । नखनामगन्धद्रव्ये ।
**नागहन्त्री** स्त्री० नागान् सर्पान् हन्ति हन् टच् ङीप् । वन्ध्याकर्कोट्याम् ।
**नागान्तक** पु० ६त० । गरुडे । नागारातिरप्यत्र वन्ध्याकर्कोट्याञ्च ।
**नागालाबु** स्त्री०नागः नागकुम्भ इवालाबूः। कुम्भाकारायां तुम्ब्याम् ।
**नागाशन** न० नागान् अश्नाति अश–ल्यु । गरुडे ।

**नागाङ्क** न० नागेन युक्ताङ्का यस्य। हस्तिनापुरे। नागाह्वयादयोऽप्यत्र।

**नागी** स्त्री० नाग+पुंयोगे ङीप्। सर्पयोषिति, हस्तियोषिति च। स्थौल्ये अनपदेत्यादिना ङीप्। स्थूलगुणयोगात् हस्तितुल्यासु स्त्रियाम्। दीर्घगुणयोगात् सर्पतुल्यायान्तु स्त्रियां न ङीप् किन्तु टाप्।

**नाचिकेतस्** पु० अग्नौ, ऋषिभेदे, नचाग्नि, वेदोक्तोपाख्यानभेदे च।

**नाट** पु० नट—घञ्। नृत्ये, कर्णाटदेशे च।

**नाटक** पु० कामाख्यास्थपर्वतभेदे, "नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वित"मित्याद्युक्तलक्षणे सा० द०प० दृश्यकाव्ये भेदे न०। नाटयति चुरा० नट—ण्वुल्। नर्त्तके त्रि०।

**नाटाम्र** पु० (तरमुज) लतापनसे।

**नाटार** पु० नटस्यापत्यम् आरक्। नटस्य पुत्रे।

**नाटिका** स्त्री० नाटकप्रभेदे।

**नाटेय(र)** नट्या अपत्यम् ढक्। नट्या अपत्ये। ढ्रक्। नाटेरोऽप्यत्र।

**नाट्य** न० नटानां कर्म ष्यञ्। नटकर्त्तव्ये नृत्यगीतवाद्यरूपे त्रिके।

**नाट्यशाला** स्त्री० नाट्यस्य नाट्यार्थं शाला। (नाटमन्दिर)। देवप्रासादसम्मुखस्थे गृहे। [तद्विस्तरस्तु वाचस्पत्ये।

**नाट्योक्ति** स्त्री० नाट्ये नटकर्मणि उक्तिः। नाटकविषये वचने।

**नाडिन्धम** पु० नाडीं वंशनलीं धमति ध्मा—खश् धमादेशः मुम् ह्रस्वश्च। स्वर्णकारे। [(नालिताशाक)।

**नाडिपत्र** पु० नाडीमयं पत्रं यस्य पृ० ह्रस्वः। नाडीचशाके।

**नाडि(डी)** स्त्री० नड—भ्रंशे चु० नड—इन्। वा ङीप्। देहस्थायां शिरायां, शुष्कस्य काण्डे, नाले, व्रणभेदे, गण्डदूर्वायां, षष्टिपलात्मके काले, तृणभेदे, वंशनल्यां च।

**ना(डि)डीका** स्त्री० नाडी नालं विद्यतेऽस्य ठन् वा ह्रस्वः (कलम्बी) शाके "कुसुम्भं नाडिकाशाक"मिति स्मृतिः पट्टशाके पु०।

**नाडीच** पु० नाडिं चमति चम—ड। (नालिता) शाकभेदे।

**नाडीचक्र** न० "नाडीमण्डलमासाद्य कुक्कुटाण्डमिव स्थितम्। नाडी—

चक्रमिति प्रोक्तस्तत्रानाद्यः समुद्गता" इत्युक्ते नाभिस्थे नाडी-
निक्षरणचक्रभेदे । [मुनिभेदे च ।

**नाडिजङ्घ** पु० नाडीव जङ्घाऽस्य । काके, ब्रह्मणः प्रिये वकभेदे,

**नाडीतरङ्ग** पु० नाडी तरङ्ग इव यस्य । कक्कोले ।

**नाणक** पु० न अणकः कुत्सितः नञर्थनशब्देन स० । प्रशस्ते, मुद्रा-
चिह्निते निष्कादौ न० । "तुलाशासनमानानां कूटकृत् नाणकस्य
च"ेति स्मृतिः ।

**नाथ** उपतापे प्रार्थने च पर०, आशीर्व्वादे आत्म०, सक० ऐश्वर्ये अक०
सेट् । नाथति अनाथीत् आशिषि नाथते अनाथिष्ट । णिचि
अननाथत् ।

**नाथ** पु० नाथ-ऐश्वर्ये अच् । अधिपे स्वामिनि, प्रार्थनीये त्रि० ।

**नाथवत्** त्रि० नाथोऽस्त्यस्य मतुप् मस्य वः । पराधीने परतन्त्रे ।

**नाथहरि** पु० नाथं हरति हृ-इन् । पशौ ।

**नाद** पु० नद-घञ् । शब्दे, अर्द्धमात्रात्मके अर्द्धचन्द्राकृतिव्यञ्ज्ये
अनुस्वारतुल्ये वर्णे, 'नाभेरूर्द्ध्वं हृदि स्थानात् मारुतः प्राणसंज्ञकः ।
नदति ब्रह्मरन्ध्रान्ते तेन नादः प्रकीर्त्तित" इत्युक्ते, "आकाशा-
ग्निमरुज्जातो नाभेरूर्द्ध्वं समुच्चरन् । मुखेऽभिव्यक्तिमापन्नः यः स
नाद इतीरित" इत्युक्ते च प्राणवायुवृत्तिभेदे च ।

**नादेय** न० नद्या नदस्य वा इदम् ढक् । सैन्धवलवणे सौवीराञ्जने
नदीनदसम्बन्धिजले च । काशतृणे वेतसवृक्षे च पु० । नदी भवे
त्रि० । नागरङ्गे, जयायां, पताकायाम्, अम्बुवेतसे, भूमिज-
म्ब्वाम्, अग्निमन्थे, जवायां, काकजम्ब्वां च स्त्री० ङीप् ।

**नाध** याच्ञार्थे भ्वा० आ० सक० सेट् । नाधते अनाधिष्ट ।

**नाना** अव्य० न+नाञ् । विनार्थे, अनेकार्थे, उभयार्थे च ।

**नानाकन्द** पु० नाना कन्दा यस्य । पिण्डालौ । बहुविधमूले त्रि० ।

**नानार्थ** त्रि० नानाविधाः अर्थाः अभिधेयानि प्रयोजनानि वा यस्य
बहुविधाभिधेये, बहुप्रयोजने च ।

**नान्तरीयक** त्रि० अन्तरं प्रतिबन्धादिना व्यवधानं तदनुभवति इ

नञर्थनशब्देन समासे नान्तरीयं ततः स्वार्थे कन्। अवश्यम्भाविनि, व्याप्ते च।

**नान्दी** स्त्री० नन्दन्ति देवाः पितरो वा अत्र नन्द-इन् ङीप् पृ० । समृद्धौ। "नान्दीश्राद्धं ततः कुर्य्यादि"ति स्मृतिः, नाटकादौ सूत्रधारेण कर्त्तव्ये "देवद्विजनृपादीनामाशीर्वादपरायणाः। नन्दन्ति देवता यस्मात्तस्मान्नान्दी प्रकीर्त्तिते"त्युक्ते मङ्गलाचरणभेदे च।

**नान्दीमुख** पु० नान्द्यर्थं वृद्ध्यर्थं बन्धनान्वितं मुखं यस्य। कूपादिमुखबन्धने पटे। नान्दी वृद्धिस्तदर्थं श्राद्धं चामुखे यस्य। नान्दीश्राद्धभुजि पितृगणे। मात्रादौ स्त्री० ङीप्।

**नान्दीवादिन्** पु० नान्द्यर्थं वदति वादयति वा। नाटकादौ नान्दीकरे सूत्रधारे, तदर्थं तूर्य्यादिवादके नटादौ च।

**नापित** पु० क्षुरकर्मकारके जातिभेदे।

**नाभि** पु० नह्यन्ते अत्र नह्यतेऽनेन या नह इञ् भान्तादेशः। द्वादशान्तपचक्रस्य मध्ये, रथचक्रस्य वामपिण्डाग्राम्, क्षत्रिये च। मृगमदे स्त्री०। प्राण्यङ्गभेदे (नाइ) पु०स्त्री०। स्त्रीत्वे वा ङीप्। प्रधाने, मुख्ये त्रि०।

**नाभिज** पु० नाभौ विष्णुनाभौ जायते जन-ड। चतुर्मुखे ब्रह्मणि, नाभिजन्मादयोऽप्यत्र।

**नाम** अव्य० नामयति नम-णिच् ड। स्वीकारे, विस्मये, स्मरणे सम्भावनायां, निन्दायां प्राकाश्ये, विकल्पे, अलीके, कोपे च।

**नामकरण** न० नाम क्रियतेऽत्र कृ-ल्युट्। 'दशमेऽहनि पिता नाम कुर्य्या'दिति स्मृत्युक्ते दशमादिदिने कर्त्तव्ये संस्कारभेदे।

**नामधेय** न० नामैव स्वार्थे धेय। नामनि वाचकशब्दे संज्ञायाम् 'वाचारम्भणं विकारो नामधेय'मिति श्रुतिः।

**नामन्** न० नम्यतेऽभिधीयतेऽर्थोऽनेन नामन्सीमन्निति नि०। अकाशादिप्रपञ्चार्थबोधके संज्ञाशब्दे, आख्यायाम् तानि च पञ्च 'उणाद्यन्तं कृदन्तं च तद्धितान्तं समासजम्। शब्दानुकरणं चेति नाम पञ्चविधं स्मृत'मित्युक्तेः।

**नामधेय** त्रि० नामैव धेयो न देवादिरस्य । स्वते । नाममात्र धेयो यत्र । मरणे पुं० ।

**नायक** पु० नी–ण्वुल् । नेतरि, स्वामिनि, प्रभौ हारमध्यमणौ, सेनापतौ शृङ्गाररसावलम्बने पत्युपपत्यादौ च । प्रापयितरि च त्रि० ।

**नायिका** स्त्री० नी–ण्वुल् । शृङ्गाररसालम्बने भार्य्यादौ, दुर्गायाः सहचरीषु उग्रचण्डादिषु च ।

**नार** पु० नरस्यायम् अण् । बालके, जले च । 'आपो नारा इति प्रोक्ता' इति मनुः । परमात्मसम्बन्धिनि मनुष्यसम्बन्धिनि च त्रि० "नारं सृष्टा तु सर्व्वेह"मिति स्मृतिः । नराणां समूहः अण् । नरसमूहे न० ।

**नारक** पु० नृ–वुन् प्रज्ञाद्यण् । नरके । नरके भवः अण् । नरकस्थे त्रि० । [भोगिनि जीवे ।

**नारकिन्** त्रि० नारकं भोग्यत्वेनास्त्यस्य इनि । नरकयातना

**नारङ्ग** पु० न अरङ्गः अरङ्गनं यस्य । स्वनामख्याते जम्बीरभेदे, पिप्पलीरसे, विटे च । गर्ज्जरे न० ।

**नारद** पु० नारं जलं ददाति दा–क । "नारं पानीय"मित्युक्तं तत् पितृभ्यः सदा भवान् । ददाति तेन ते नाम नारदेति भविष्यति" त्युक्तनिर्वचनयुते मुनिभेदे । नारमज्ञानं द्यति दो–क, नारं ज्ञानं ददाति दा–क वा । मुनिभेदे तत्प्रोक्ते पञ्चविंशतिसहस्रात्मके महापुराणे न० ।

**नारदीय** न० नारदेन प्रोक्तम् छ । उपपुराणभेदे ।

**नारसिंह** न० नरसिंहमधिकृत्य कृतः ग्रन्थ इत्यण् । उपपुराणभेदे ।

**नाराच** न० नराणां समूहः नारमाचमति चम–ड । सर्व्वलौहमये अस्त्रभेदे ।

**नारायण** पु० "आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः" इति मनूक्तनिर्वचनवति विष्णौ ।

**नारायणतैल** न० ६त० । "शताह्वमवधिं कृत्वा यावद्वस्तचतुष्टयम् ।

अत्र नारायणः स्वामी”त्युक्ते गङ्गायाः प्रवाहा वधिहस्तचतुष्टय-
मितस्थाने ।

नारायणबलि पु० कृत्युक्ते कृतानां पापबद्धदीनां प्राय-
[श्चित्तात्मके विधानभेदे ।

नारायणी स्त्री० “जलायना नराधारा सम्पूर्णयनापि वा । नारा-
यणी समाख्याता नरनारी प्रकीर्त्तिते”त्युक्तायां विष्णुशक्तौ
लक्ष्म्यां, दुर्गायां, “नारायणि नमोऽस्तु ते” इति चण्डी गङ्गायां,
शतावर्य्याञ्च ।

नारिकेल पु० नल–इण् नालिः केन वायुना जलेन वा इलति चलति
इल–क कर्म्म० रलयोरैक्यम् । स्वनामख्याते वृक्षे ।

नारीष्टा स्त्री० नारीभिरिष्टा । मल्लिकायाम् ।

नाल न० नल–ज्वलादि० ण । काण्डे, उत्पलादिदण्डे, मृणाले न०
स्त्री० । “नाला मृणालाग्रभुजो भजाम” इति नै० ।

नालि(ली) स्त्री० नल–इण् वा ङीप् । हेमस्थिरायाम्, शाकभेदे,
पद्मादिदण्डे च । संज्ञायां कन् । श्वेतकलम्बाम्, नाडीशाके,
घर्म्मयवक्षायाम्, हस्तिकर्णवेधन्याम्, नाले, कुञ्चिच्छिद्रे, वेणुभा-
जने, दण्डात्मके काले च ।

नालिता स्त्री० नल–णिच् क्त । स्वनामख्याते शाकभेदे ।

नालीक पु० नाल्या कायति कै–क । मुखनाले लौहसंयुक्ते अन्त-
श्छिद्रे शरभेदे, शरीरे च । पद्मखण्डे न० ।

नाविक पु० नावा चरति ठक् । कर्णधारे ।

नाव्य त्रि० नावा तीर्य्यतेऽसौ नौ–यत् । नौतार्य्ये देये ।

नाश पु० नश–घञ् । पलायने, अदर्शने, निधने, अनुपलब्धौ च ।

नासत्य पु० द्वि० व० । नास्ति असत्यं ययोः नञ् प्रकृत्या, नासां
त्यजतः त्यज–ड नि० वा । अश्विनीकुमारयोः तौ हि सूर्य्यते-
जोऽसहमानाया संज्ञायाः उत्तरकुरुषु अश्वरूपं धृत्वा तपस्यन्त्याः
अश्वरूपधारिणा सूर्य्येण संगतायाः अन्यपुरुषधिया तद्रेतो नासा-
रन्ध्रेण त्यजन्त्यास्तन्नासात्यागेन जाताविति पुराणकथा ।

नासा स्त्री० नास–शब्दे अ । नासिकायां गन्धग्राहकेन्द्रियभेदे, शब्दे च ।

**नासादारु** न० नासायै शब्दाय दारु । द्वारोर्द्ध्वस्थे काष्ठखण्डे ( कनकाठ )

**नासालु** पु० नासायै नासिकायैशब्दात् अलते पर्याप्नोति अल अण् । कट्फलवृक्षे तत्फलचूर्णयोगे हि नासिकाशब्दो भवति ।

**नासिका** स्त्री० नास–ण्वुल् । गन्धग्राहकेन्द्रियभेदे नासायाम् ।

**नासिक्य** त्रि० नासिकायै हितं तत्र भवो वा यत् । नासाभवे, नासिकाहिते च । नासाभवयोरश्विनीकुमारयोः पु० द्वि० व० ।

**नासीर** न० नास–ईरन् । अग्रसरे सैन्ये, सेनामुखे च । अग्रसरे त्रि० ।

**नास्ति** अव्य० अस्तीति विभक्तिप्रतिरूपमव्ययं सुप् सुपेति नञ् शब्देन स० । अविद्यमानतायां, सत्त्वाभावे, यथा "अस्ति नास्ति न जानाती"ति चाणक्यः ।

**नास्तिक** त्रि० नास्ति परलोकस्तत्साधनमदृष्टं, तत्साक्षीश्वरो वा इति मतिरस्य ठन् । परलोकाभाववादिनि तत्साधनादृष्टाभाववादिनि, तत्साक्षिण ईश्वरस्यासत्त्ववादिनि च चार्वाकादौ ।

**नास्तिकता** स्त्री० नास्तिकस्य भावः । मिथ्यादृष्टौ परलोकाद्यभावज्ञानस्य मिथ्यात्वात् ।

**नास्तिक्य** न० नास्तिकस्य भावः कर्म वा यत् । शास्त्रोक्तेषु फलवत्-कर्मसु अफलताबुद्धौ ।

**नि** अव्य० नह–डि । निषेधे, भृशार्थे, नित्यार्थे, संशये, कौशले, क्षेपे, उपरमे, सामीप्ये, आदरे, दाने, मोक्षे, अन्तर्भावे, बन्धने, राशौ, अधोभावे, विन्यासे, निश्चये, निषेधे, च ।

**निःशलाक** त्रि० निर्गतः शलाकायाः निर्गता शलाका यस्मात् वा । निर्जने रहसि । [ शीघ्रं शल्यं निर्गच्छति ।

**निःशल्या** स्त्री० निर्गतं शल्यं यस्याः प्र० ब० । दन्तीवृक्षे । तस्य वने ।

**निःशेष** त्रि० निर्गता शेषात् प्रा० त० । निखिले सकले ।

**निःशोध्य** त्रि० निर्गतं शोध्यमस्मात् प्र० ब० निर्मले, स्वच्छे, शोधिते च ।

**निःश्रयणी** स्त्री० निःश्रयन्त्यनया नि–श्रि–ल्युट् ङीप् । अधिरोहिण्याम् (मइ) ।

निःश्रेणि(णी) स्त्री० निर्गता श्रेणिः पंक्तिरत्र । वंशनिर्मिते आरो-
याने, खर्ज्जूरीवृक्षे च ।

निःश्रेयस न० नितराम् श्रेयः नि० अच् समा० । मोक्षे, मङ्गले,
विज्ञाने, भक्तौ, अनुभावे च ।

निःश्वास पु० निर्+श्वस–घञ् । मुखनासाभ्यां निर्गते वायौ ।

निःसत्त्व त्रि० निर्गतं सत्त्वं यत्र । धैर्यशून्ये, बलशून्ये, प्राणिशून्ये च ।

निःसम्पात पु० निर्गतः सम्पातो गतागतं यस्मात् । अर्द्धरात्रे ।

निःसरण न० निःसरत्यस्मात् निर्+सृ–अपादाने ल्युट् । गेहादिद्वारे ।
भावे ल्युट् । निर्गमे, मरणे निर्वाणे च । करणे ल्युट् उपाये ।

निःसार पु० निर्गता सारात् । शाखोटवृक्षे, श्योनाकवृक्षे च । सा-
ररहिते त्रि० । कदलीवृक्षे स्त्री० ।

निःसारण न० निः सार्य्यतेऽनेन निर्+सृ–णिच्–ल्युट् गृहा-
दिभ्योनिर्गमपथे ।

निःस्नेहा स्त्री० निर्गच्छति स्नेहो यस्मात् । अतसीवृक्षे (तिसिना)
स्नेहशून्ये त्रि० ।

निःस्राव पु० निःस्रवति स्रु–ण । (माड़) (फेण) भक्तरसे ।

निःस्व पु० नास्ति स्वमस्य । दरिद्रे । [ तद्वति च ।

निकट न० नि+सन्नार्थे कटच् । नि+कट–अच् वा । समीपे

निकर पु० नि+कॄ–अप् समूहे, सारे, न्यायदेये, वित्ते, निधौ च ।

निकर्षण न० निर्गतः कर्षणात् । ग्रामादौ क्रीडादिरक्षणार्थं परि-
च्छिन्ने देशे, बहिर्विहरणभूमौ च ।

निकष(स) पु० नि+कष(स) अच् घ वा । (कष्टीपाथर) कषपाषा-
णे, अस्त्रादितीक्ष्णतासाधने पाषाणादौ च ।

निकषण न० नि+कष–भावे ल्युट् । उल्लेखने ।

निकषा अव्य० नि+कष आ । निकटे, मध्ये च । रावणमातरि स्त्री० ।

निकषात्मज पु० ६ त० । राक्षसे निकषात्मजादयोऽप्यत्र ।

निकषोपल पु० कर्म० । शाणे । स्वर्णादिकषणसाधने प्रस्तरे च (क-
ष्टीपाथर) ।

निकाम न० नि+कम–घञ्। यथेप्सिते, इच्छानतिक्रमे, अतिशये, "निकामतप्तापी"ति कु० टटीका, पर्य्याप्ते च।

निकाय पु० नि+चि–घञ् कुत्वम्। समानधर्मप्राणिसंघे, निवासे च।

निकाय्य न० निचीयतेऽत्र नि+चि ण्यत् कुत्वम्। गृहे।

निकार पु० नि–कृ–घञ्। परिभवे, अपकारे, तिरस्कारे च। कॄ–घञ्। धान्यादेरुत्क्षेपे।

निकार पु० नि+कृ–णिच् घञ्। मारणे, परिभवकरणे।

निकुञ्ज न० निःशेषेण कौ जायते जन–ड पृ०। लतादिपिहितस्थले।

निकुम्भ पु० नि–कु+उम्भ–अच् पृ०। कुम्भकर्णराक्षससुते, दन्तिवृक्षे च गौरा० ङीष् निकुम्भीत्यत्र। [स्यायां देव्याञ्च।

निकुम्भिला स्त्री० लङ्कायाः पश्चिमभागस्थायां गुहायां तत्-

निकुरम्ब न० नि+कुर–शब्दे अम्बच्। समूहे।

निकृत त्रि० नि+कृ–क्त। परिभूते, उपकृते, प्रत्याख्याते, वञ्चिते, नीचे, शठे च।

निकृति स्त्री० नि+कृ–क्तिन्। शाठ्ये, क्षेपे, तिरस्कारे, दैन्ये च।

निकृष्ट त्रि० नि+कृष–क्त। आचाराचारादिभिर्निन्दिते, अपकृष्टे, अधमे।

निकेत पु० नि+कित–निवासे आधारे घञ्। गृहे, निकेतने।

निकेतन न० नि+कित–निवासे आधारे ल्युट्। गृहे। कर्मणि ल्युट्। पलाण्डौ पु०।

निकोचक पु० नि+कुच–शब्दे वुन्। अङ्कोटवृक्षे।

निकोठक पु० नि+कुठि–वुन् पृ० नलोपः अङ्कोटवृक्षे।

निक्व(क्वा)ण पु० नि+क्वण–अप्, घञ् वा। वीणायाः शब्दे।

निक्षिप्त त्रि० नि+क्षिप–क्त। न्यस्ते, स्थापिते, (गच्छित)।

निक्षेप पु० नि+क्षिप–कर्मणि घञ्। अन्यस्मिन् अर्पिते स्वधनादौ, शिल्पिहस्ते संस्कारार्थं प्रदत्ते च। भावे घञ्। स्वद्रव्यस्यान्यस्मिन् विश्वासात् स्थापनरूपे "स्वद्रव्यं यदि विश्वासात् निक्षिपत्यविशङ्कितः। निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैरि"त्युक्ते व्यवहारभेदे च।

**निखर्व** पु० निखर्वति नि+खर्व—गतौ अच् । अर्बुदमब्जं खर्वनिखर्वमहापद्मशङ्कवस्तस्मादि”ति लीलावत्युक्ते दशसहस्रकोटिरूपे संख्याभेदे तत्संख्येये च । वामने त्रि० ।

**निखात** त्रि० नि+खन—क्त । खनित्वा स्थापिते ।

**निखिल** त्रि० निवृत्तं खिलं शेषो यस्मात् । सकले समग्रे ।

**निगड** पु० न० । नि+गल—अच् डलयोरैक्यात् डत्वम् । शृङ्खलायाम् । (बेड़ी) निवृत्तो गडः सेचनमस्मात् कठिनत्वात् । लौ[illegible] हस्तिपादबन्धने अन्दुके ।

**निगडित** त्रि० निगडो जातोऽस्य तार० इतच् । बद्धे संयते ।

**निगद** पु० नि+गद—अच् । भाषणे, शब्दमात्रे च ।

**निगम** पु० निगम्यतेऽत्र अनेन वा नि+गम—घञ्, निगमे पुरभेदे भवः अण् न वृद्धिः वा । वाणिजे, पुरभेदे, कटभेदे वणिक्पथे, निश्चये, अध्वनि, प्रतिज्ञायाम्, पर्यायकथनेन वेदार्थबोधके ग्रन्थभेदे, न्यायमतसिद्धे पञ्चावयवन्यायमध्ये चरमावयवे, न्यायशास्त्रे, तन्त्रभेदे, वेदे च “निगमकल्पतरो”रिति भागवतम् ।

**निगमन** न० नि+गम—ल्युट् । प्रतिकूलप्रमाणबाधनेन प्रकृतप्रमाणोपसंहारात्मके पञ्चाङ्गन्यायमध्ये “तस्मात् वह्निमान्” इत्याद्याकारके चरमावयवे ।

**निग(गा)र** पु० नि+गॄ—अप्, घञ् वा । भोजने ।

**निगाल** पु० नि+गल—अदने घञ् । अश्वगलदेशे ।

**निगूढ़** पु० नि+गुह—क्त । वनमुद्गे । गुप्ते, आलिङ्गिते च त्रि० ।

**निगृहीत** त्रि० नि+ग्रह—क्त । तर्जिते, पीड़िते, अवरुद्धे च ।

**निग्रह** पु० नि+ग्रह—अप् । भर्त्सने, सीमायाम्, बन्धने, अनुग्रहाभावे, चिकित्सायां, निषिद्धप्रवृत्तस्य तिरस्कारे मारणे, प्रवृत्तिवारणाय रोधे च ।

**निग्रहस्थान** न० निग्रहस्य वादिन[illegible]स्य स्थानम् । गौतमोक्तेषु षोडशसु पदार्थेषु मध्ये [illegible] विस्तरस्तु वाचस्पत्ये ।

निग्राह पु० नि+ग्रह–घञ् । अनिष्टं ते भूयादित्येवं रूपे शापे ।
निघ पु० निर्विशेषेण हन्यते हन–क नि० । समविस्तारदैर्घ्ये, तुल्यारोहपरिणाहे च पदार्थे ।
निघण्टिका स्त्री० नि+घटि–ण्वुल् । गुलञ्चवृक्षे ।
निघण्टु पु० नि+घटि–उ । नामग्राहके कोषाभिधानादौ ।
निघस पु० नि+अद–अप् घसादेशः । भोजने ।
[illegible] त्रि० नि+हन–घञर्थे क । अधीने, गुणिते च "द्विगुणान्त्यनिघ्न" इति लीलावती ।
निचय पु० नि+चि–कर्मणि अच् । अवयवादिना उपचिते पदार्थे, "सर्वे क्षयान्ता निचयाः" इति पुराणम् । भावे अच् । समुच्चये, वस्तुसमूहे, निश्चये च ।
निचाय पु० नि+चि–घञ् । राशीकृते धान्यादौ ।
निचित त्रि० नि+चि–क्त । व्याप्ते, पूरिते, सङ्कीर्णे, निर्म्मिते च ।
निचुल पु० नि+चुल–क । हिज्जलवृक्षे, वेतसे, निचोले च ।
निचूल पु० नि+चुल–क पृ० दीर्घः । हिज्जले वृक्षे, निचोले च ।
निचोल पु० नि+चुल–अच् । प्रच्छदपटे ( येन शय्यादि प्रच्छाद्यते तस्मिन् ) दोलिकाद्यावरणवस्त्रे, स्त्रीपिधानपटे च ।
निचोलक पु० नि+चुल–ण्वुल् । सैन्यादेः चोलाकृतौ सन्नाहे, वारवाणे, कूर्पासे च ।
निचोली स्त्री० नि+चुल–क गौरा० ङीष् । स्त्रीणां प्रच्छादने पटे ।
निज त्रि० नि+जन–ड । आत्मीये, स्वाभाविके, नित्ये च ।
निण्डिका स्त्री० (तेओड़ा) कलायभेदे ।
नितम्ब पु० नि+तम्ब–अच्, निभृतं तम्यते काम्यते कामुकैः तम–ब वा । स्त्रीणां पश्चात् कटितटे, स्कन्धे, कूले, कच्छा अधोभागे, कटके, (पर्वतवप्रस्थाने) कटिमात्रे च ।
नितम्बिनी स्त्री० नितम्ब+प्राशस्त्ये इनि । प्रशस्तनितम्बवत्यां, स्त्रियां, स्त्रीमात्रे च ।
नितराम् अव्य० नि+तर–आमु । सुतरामित्यर्थे, अतिशयेनेत्यर्थे च ।

**नितल** न० निःशेषेण तलमधोभागः। पातालभेदे।

**नितान्त** न० नितास्यति स्म नि+तम-क्त। एकान्ते अत्यन्ते। तद्वति त्रि०।

**नित्य** न० नियमेन वा भवं नि+त्यप्। सतते अहरहः क्रियमाणत्वेन विधिबोधिते, प्रत्यवायसाधनाभावप्रतियोगिनि कर्मणि, यथा अहरहः सन्ध्यामुपासीतेति अत्र सन्ध्याभावे प्रत्यवायसाधनत्वम्। अविच्छिन्नपरम्पराके, उत्पत्तिविनाशरहिते च यथा वर्णा नित्याः। तद्वति, शाश्वते, कालत्रयस्थे, वस्तुनि च त्रि०। समुद्रे पु०।

**नित्यकर्म्म** न० कर्म०। अकरणे प्रत्यवायसाधने सन्ध्यावन्दनादौ।

**नित्यतृप्त** त्रि० नित्यं तृप्तः नित्येन ब्रह्मानन्देन वा तृप्तः। परमानन्दलाभेन सततहृष्टे "नित्यतृप्तो निराश्रय इति गी०।

**नित्यदा** अव्य० नित्य+दाच्। सातत्ये, सदेत्यर्थे।

**नित्यमुक्त** पु० नित्यं मुक्तः। कालत्रयेऽपि बन्धशून्ये परमात्मनि।

**नित्ययज्ञ** पु० कर्म०। फलयोगं विना जीवनमात्रनिमित्तेन विहिते यथाकथञ्चित् प्रतिनिध्यादिना, अमुख्यद्रव्येण वाऽनुष्ठेये, अग्निहोत्रादौ यज्ञे।

**नित्यसत्त्वस्थ** त्रि० नित्यमचलं यत् सत्त्वं धैर्यं गुणभेदो वा तत्र तिष्ठति स्था-क। धैर्यावलम्बिनि, रजस्तमसी अभिभूय सदा सत्त्वगुणावलम्बिनि च।

**नित्यसमास** पु० कर्म०। व्याकरणोक्ते समस्यमानयावत्पदरहितविग्रहवाक्यसूचिते समासभेदे।

**नित्यानध्याय** पु० सर्वथा वर्ज्जनीयवेदपाठकालादौ। "द्वावेव वर्ज्जयेन्नित्यमनध्यायौ प्रयत्नतः। स्वाध्यायभूमिञ्चाशुद्धामात्मानं चाशुचिं द्विजः" इति "इमान्नित्यमनध्यायानधीयानो विवर्ज्जयेदि"ति मनुना प्रदर्शितेऽनध्यायभेदे।

**नित्याभियुक्त** त्रि० नित्यमभि समन्तात् युक्तः योगे व्यापृतः। देहयात्रामात्रार्थं प्रयतमाने, इतरत्यागासक्ते योगिनि।

**निदर्शन** न० नि+दृश-ल्युट्। उदाहरणे, च अर्थालङ्कारभेदे स्त्री० टाप्।

**निदाघ** पु० नितरां दह्यतेऽत्र नि+दह–घञ् न्यङ्क्वादि० कुत्वम् । उष्णे, घर्मे, घर्मकाले ज्यैष्ठाषाढ़मासयोः, घर्मजले च ।

**निदाघकर** पु० निदाघं घर्मं करोति कृ–अच् । सूर्य्ये ।

**निदाघकाल** पु० ६त० । ग्रीष्मर्त्तौ ज्यैष्ठाषाढ़मासयोः ।

**निदान** न० नितरामसाधारणया दीयते दा–ल्युट् । आदिकारणे, कारणमात्रे, शुद्धौ, तपसः फलयाचने, वत्सदामनि, अवसाने, रोगनिर्णायके ग्रन्थभेदे, रोगहेतौ च ।

**निदिग्ध** त्रि० नि+दिह–क्त । उपचिते, लेपादिना वर्द्धिते च एलायां स्त्री० । ततः संज्ञायां कन् । कण्टकारिकायां स्त्री० ।

**निदिध्यासन** न० "निरन्तरं विचारो यः श्रुतार्थस्य गुरोर्मुखात् । तन्निदिध्यासनं प्रोक्त"मिति निरुक्ते विचारभेदे "ताभ्यां निर्विचिकित्सेऽर्थे चित्तस्य स्थापितस्य यत् । एकतानत्वमेतद्धि निदिध्यासनमुच्यते" इत्युक्ते ध्यानभेदे च ।

**निदेश** पु० नि+दिश–घञ् । शासने, आज्ञायां, कथने निकटे, भाजने च ।

**निद्रा** स्त्री० नि+द्रा–अङ् । शयने "यदा तु मनसि क्लान्ते कर्म्मात्मानः क्लमान्विताः । विषयेभ्यो निवर्त्तन्ते तदा स्वपिति मानवः" इत्युक्तहेतुके विषयेभ्यो कर्मेन्द्रियाणां व्यापारोपरमरूपे जीवस्यावस्थाभेदे स्वप्ने । [वधिके अष्टमस्थाने ।

**निधन** पु० न० नि+धा–क्यु । मरणे, नाशे, कुले, ज्योतिषोक्ते लग्ना-

**निधान** न० नि+धा–ल्युट् । शङ्खपद्मादौ निधौ, "निधानकुम्भस्य यथेति रघुः । आश्रये, कार्य्यावसाने च ।

**निधि** पु० नि+धा–कि । धनाधिदेवशङ्खपद्मादिभेदे । विस्तरस्तु वाचस्पत्ये । पुनरादानाय क्वचित्प्रदेशे अर्पणे, अस्वामिके द्रव्यभेदे च । आधारे कि । आधारे । यथा गुणनिधिः । वारिधिरित्यादि समुद्रे, नलिकानामगन्धद्रव्ये च पु० ।

**निधीश** पु० ६त० कुबेरे निधिपत्यादयोऽप्यत्र ।

**निधुवन** न० नितरां धुवनं कम्पादिकम्पनं यत्र । सुरते स्त्रीपुंसयोः केलिभेदे । "निधुवनविनोदेन च मनु"मिति श्यामास्तोत्रम् ।

निन(ना)द पु० नि+नद्–अप्, घञ् वा ध्वनौ शब्दे रथघोषे च।
निन्दा स्त्री० निन्द्–अ। अपवादे, गर्हायां कुत्सायां, दूषणे च।
निप पु० न०। नियतं पिबत्यनेन पा–क। कलशे, कदम्बवृक्षे पु०।
निपत्या स्त्री० निपतत्यत्र आधारे क्यप्। पिच्छिलभूमौ, युद्धभूमौ च।
निपात पु० निकृष्टः पातः। अनियमपतने मरणे, व्याकरणोक्तेषु चादिषु, प्रादिषु च। [धारस्थाने, गोदोहनपात्रे च।
निपान न० नियतं पीयतेऽत्र। कूपसमीपस्थे जलाशये, कूपोद्धृतजला–
निपीडित त्रि० नितरां पीडितः नि+पीड–क्त। (नेंड़ान) क्षत–निष्पीड़ने।
निपुण त्रि० नि+पुण–कर्मणि क। प्रवीणे, क्रियासु दक्षे।
निफला स्त्री० निकृष्टं फलं यस्याः। ज्योतिष्मत्याम् लतायाम्।
निबन्ध पु० नि+बन्ध–घञ्। कालविशेषे देयत्वेन प्रतिश्रुते वस्तुनि, "निबन्धो द्रव्यमेवमवे"ति स्मृतिः संग्रहग्रन्थभेदे, मूत्ररोधरूपे रोग-भेदे, बन्धने च। 'निबन्धायासुरीमते'ति गीता। निबध्नाति कोष्ठम् अच्। निम्बवृक्षे तत्सेवने हि कोष्ठरोधो भवति।
निबन्धन न० निबध्यतेऽनेनात्र वा ल्युट्। हेतौ, वीणायास्तन्त्रीनि–बन्धनोर्द्ध्वभागे च। भावे ल्युट्। बन्धने।
निभ पु० निभाति नि+भा–क। व्याजे। उत्तरपदस्थः। सदृशे त्रि०। यथा पितृनिभः मातृनिभेत्यादि तत्सदृशः इत्यर्थः। स्वातन्त्र्येणास्य न प्रयोगः।
निभालन न० नि+चु० भल० ल्युट्। दर्शने।
निभृत त्रि० नि+भृ–क्त। धृते, विनीते, निश्चले, एकाग्रे, गुप्ते, नि-र्जने, अस्तायोपस्थिते च "नभसा निभृतेन्दुने"ति रघुः।
निमज्जथु पु० नि+मस्ज–अथुच्। अवगाहने, निश्चेष्टतया स्थितौ च।
निमज्जन न० नि+मस्ज–ल्युट्। अवगाहने, जलादौ प्रवेशे, निश्च-लतया स्थितौ च।
निमन्त्रण न० नि+मन्त्र–ल्युट्। अकरणे प्रत्यवायसाधने नियोगभेदे

यथा श्राद्धादौ भोजनार्थं नियोगः "तस्याकरणे प्रत्यवायो जायते" इति स्मृतौ प्रसिद्धम् आह्वाने च ।

**निमान** न० निमीयते क्रीयतेऽनेन मा—ल्युट् । मूल्ये ।

**निमि** पु० इक्ष्वाकुवंश्ये, चन्द्रवंश्ये च नृपभेदे ।

**निमित्त** न० नि+मिद्—क्त । कारणे, हेतौ, शरव्ये, चिह्ने, भावि शुभाशुभसूचके ज्योतिषाद्युक्ते शकुने च "नमित्तस्य तपोधन" इति रघुः "निमित्तानि च पश्यामी"ति गीता । उद्देश्ये च । "निमित्तात् कर्मसंयोगे" इति पाणिनिः ।

**निमित्तकारण** न० कर्म० । न्यायोक्ते समवाय्यसमवायिभिन्ने कारणे यथा घटादौ मृदादिः समवायिकारणं कपालद्वयसंयोगश्चासमवायिकारणम् तदुभयभिन्नं कुलालादि निमित्तकारणम् ।

**निमि(मे)ष** पु० निमेषति नि+भ्वा० मिष—क अच् वा । कालभेदे, चक्षुषः स्वाभाविकस्पन्दनमितकाले (पलक), भावे अप् कु० न गुणः, घञ् वा गुणः । चक्षुर्मीलने ।

**निमीलन** न० नि+मील—ल्युट् । मरणे, सङ्कोचने, चक्षुर्मुद्रणे च ।

**निम्न** त्रि० निकृष्टं मनति म्ना—अभ्यासे क । गभीरे नीचे ।

**निम्नगा** स्त्री० निम्नं गच्छति गम—ड । नदीमात्रे । नीचगामिनि त्रि० ।

**निम्नोन्नत** त्रि० निम्नं तदुन्नतञ्च । उन्नतानते बन्धुरे ।

**निम्ब** पु० निम्बति स्वास्थ्यं निवि सेचने अच् । (निम) वृक्षे ।

**निम्बतरु** पु० निम्ब—अच् कर्म० । मन्दारवृक्षे ।

**निम्बवीज** पु० निम्ब—अच् तद्वीजं यस्य । राजादनीवृक्षे ।

**निम्बू** स्त्री० निम्ब—ऊ । (नेबु) वृक्षभेदे । स्वार्थे कन् । अत्रैव ।

**निम्लोचन** न० नि+म्लुच—ल्युट् । अस्तप्राये ।

**नियत** त्रि० नि—यम—क्त । निश्चिते, नित्ये, आचारयुक्ते, नियमवति, वशीकृतेन्द्रिये च । नित्यकर्मणि न० ।

**नियति** स्त्री० नि+यम—क्तिन् । नियमे, भाग्ये "नियतिः केन बाध्यते" इति पुराणम् । प्राक्तनशुभाशुभकर्मणि, पुरुषे च ।

**नियन्तृ** पु० नियच्छति वाहान् नि+यम–तृच् । सारथौ । शासितरि पशुप्रेरके त्रि० । स्त्रियां ङीप् ।

**नियन्त्रित** त्रि० नितरां यन्त्रितः नि+यन्त्र–क्त । अबाधे, प्रतिरुद्धे च

**नियम** पु० नि+यम–घञ् । यन्त्रणे, प्रतिज्ञायां, निश्चये, अङ्गीकारे, पूर्वमीमांसोक्ते पक्षतः प्राप्तस्य इतरपक्षव्युदासेन एकतरपक्षे व्यवस्थापने, यथा ब्रीहीनवहन्ति । अत्र वितुषीकरणसाधनभूतस्य नखादेरवहननस्य वा उभयोः प्राप्तौ अवघात एव प्रवृत्तिर्व्यवस्थाप्यते । स्मृते, "नियमस्तु स यत् कर्मानित्यमागन्तुसाधन"मित्युक्ते अनित्ये आगन्तुकसाधने उपवासादौ कर्मणि, शौचादिषु च । विस्तरस्तु वाचस्पत्ये ।

**नियामक** पु० नि+यम–ण्वुल् । कर्णधारे । नियन्तरि त्रि० ।

**नियुत** न० "शतं सहस्रमयुतं नियुतं प्रयुतं तथे"त्युक्तायां लक्षसङ्ख्यायां "लक्षञ्च नियुतञ्चैव"त्युक्तायां दशलक्षसंख्यायां, तत्सङ्ख्यान्विते च ।

**नियुद्ध** न० निःटम्य नितरां वा युद्धम् । बाहुयुद्धे ।

**नियोग** पु० नि+युज–भावे घञ् । अवधारणे, आज्ञायाम्, नियुक्तस्य प्रेरणे च । नियुज्यतेऽस्मिन् आधारे घञ् । कार्य्ये ।

**नियोग्य** त्रि० नियोक्तुमर्हति ण्यत् । नियोगकरणार्हे प्रभौ ।

**नियोज्य** त्रि० नियोक्तुं शक्यते कर्मणि ण्यत् कुत्वाभावः । प्रेष्ये प्रेरणार्हे भृत्ये । [क्तान्ताद्यर्थे च

**निर्** अव्य० नॄ–क्विप् । न दीर्घः । निषेधे, निश्चये, बहिर्भावे नि–

**निरंश** त्रि० निर्गतोऽंशोऽस्य । अंशरहिते पतितक्लीबादिपुत्रादौ । राश्यंशरहिते प्रथमदिने अन्तिमदिने संक्रान्तिदिने च ।

**निरग्नि** पु० नास्ति अग्निरस्य । अग्निसाध्यश्रौतकर्मशून्येषु विप्रादिषु त्रिषु वर्णेषु ।

**निरङ्कुश** त्रि० निर्गतोऽङ्कुशात् । बाधाशून्ये, अनिवार्य्ये च ।

**निरञ्जन** त्रि० निर्गतमञ्जनं यस्मात् । अञ्जनशून्ये निर्मले । अञ्जनं तमः मलिनस्वभावत्वात् तस्मात् निर्गतं तन्निर्गतं यस्माद्वा । परमब्रह्मणि "निरञ्जनं साम्यमुपैति दिव्य"मिति श्रुतिः ।

**निरतिशय** त्रि० निर्गतोऽतिशयोऽस्मात् । अतिशयशून्ये परमोत्कृष्टे ।
**निरत्यय** त्रि० निर्गतोऽत्ययोऽस्मात् । निर्बाधे अमायिके च "निरत्ययं साम" इति भारविः । [निरवधौ, निश्छिद्रे च ।
**निरन्तर** त्रि० निर्गतमन्तरात् निर्गतमन्तरं वा यस्मात् । निबिडे,
**निरपत्रप** त्रि० निर्गतोऽपत्रपायाः । निर्लज्जे ।
**निरर्गल** त्रि० निर्गतमर्गलं यस्मात् । अबाधे प्रतिबन्धरहिते च ।
**निरर्थक** त्रि० निर्गतोऽर्थो यस्मात् कप् । निष्प्रयोजने अभिधेयशून्ये च ।
**निरवग्रह** त्रि० निर्गतोऽवग्रहात् । निष्प्रतिबन्धे ।
**निरवद्य** त्रि० निर्गतोऽवद्यात् । दोषशून्ये, उत्कृष्टे च । [त्रि० ।
**निरवयव** पु० निर्गतोऽवयवात् । परमाणौ । आकारशून्ये आकाशादौ
**निरवशेष** त्रि० निर्गतोऽवशेषो यस्मात् । सर्वस्मिन् ।
**निरवसित** त्रि० निर+अव+सो—क्त । पात्रवहिष्कृते (यस्य भोजनपात्रं संस्कारेणापि न शुध्यति तस्मिन्) चाण्डालादौ नीचवर्णे ।
**निरसन** न० निर्+अस—ल्युट् । परित्यागे, प्रतिक्षेपे वधे, निष्कासने च ।
**निरस्त** त्रि० निर+अस—क्त । त्वरितोच्चारिते, निष्ठ्यूते, क्षिप्ते, प्रतिहते, भर्त्सिते च ।
**निराकरण** न० निर्+आ+कृ—ल्युट् । निवारणे, दूरीकरणे च ।
**निराकरिष्णु** त्रि० निर्+आ+कृ—इष्णुच् । निवारणशीले प्रतिक्षेपकर्त्तरि च ।
**निराकृत** त्रि० निर्+आ+कृ—क्त । दूरीकृते, निवारिते च ।
**निराकृति** स्त्री० निर्+आ+कृ—क्तिन् । निवारणे ।
**निरामय** त्रि० निर्गत आमयात् । रोगरहिते । वनच्छागले, शूकरे च पु० ।
**निरामालु** पु० नितरां रमतेऽत्र रम—आलु । कपित्थवृक्षे ।
**निरालम्बा** स्त्री० निर्गत आलम्बोऽस्मात् । आकाशलम्बिन्यां मांस्याम् ।
**निरीश** न० निर्गतमीशायाः । फाले । ईश्वरशून्यतावादिनि नास्तिके त्रि० ।
**निरुक्त** न० निश्चयेनोच्यतेऽत्र । निर्+वच—क्त । "वर्णागमो वर्णविपर्य्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्त"मित्युक्तदिशा प्रकृतिप्रत्ययाद्यन्वयार्थनिर्व-

चनप्रतिपादके वेदाङ्गे ग्रन्थभेदे । [सम्यगुदितार्थबोधने ।

निरुक्ति स्त्री० निर्+वच-क्तिन्। निर्वचने प्रकृतिप्रत्ययाद्यन्वयार्थकथनद्वारा

निरुपाख्य त्रि० निर्गता उपाख्या यस्मात् । असत्पदार्थे बन्ध्यापुत्रादौ, वाचोमनसम विषयतयोल्लेखनायोग्ये अस्फुटस्वरूपे च ब्रह्मणि ।

निरूढ़ निर्+वह्—क्त । शक्तितुल्यलक्षणयाऽर्थबोधके शब्दे ।

निरूढ़लक्षणा स्त्री० निरूढ़ा शक्तितुल्या लक्षणा । व्याकरणकोषादि-हेतुतः प्रसिद्धार्थे शक्तितुल्यायां लक्षणारूपायां शब्दस्यार्थबोधनाशक्तौ ।

निरूढ़ि स्त्री० निर्+वह्—क्तिन् । प्रसिद्धौ [निदर्शने, आलोके च ।

निरूपण न० नि+रूप—ल्युट् । तत्त्वज्ञानानुकूलशब्दप्रयोगे विचारे,

निरूपित त्रि० नि+रूप—क्त । नियुक्ते, कृतनिरूपणे, कल्पिते, न्यायोक्ते निरूपकतासम्बन्धेन सम्बन्धिनि च ।

निरोध पु० नि+रुध—घञ् । नाशे, "[illegible]धो नचोत्पत्ति[illegible]" ति पुराणम् । प्रलये, प्रतिरोधे च ।"

निरोधन न० नि+रुध—ल्युट् । कार[illegible]रादौ प्रवेशनेन गतिरोधने ।

निर्ऋति नियता ऋतिर्घृणा यत्र । द[illegible]पश्चिमविदिक्पतौ । अलक्ष्म्याम् स्त्री० । निरुपद्रवे त्रि० ।

निर्गन्धपुष्पी स्त्री० निर्गन्धं गन्धशून्यं पुष्पं यस्याः ङीप्। शाल्मलीवृक्षे ।

निर्गुण पु० निर्गतो गुणेभ्यः । सत्त्वरजस्तमोरूपगुणत्रयशून्ये निर्धर्मके परमात्मनि । निर्गताः गुणाः शौर्य्यादयो रूपादयो वा यस्मात् । गुणहीने त्रि० ।

निर्गुण्डी स्त्री० निर्गता गुड़ात् वेष्टनात् पृ० गौरा० ङीष् । नीरसे, कलिकायां, सिन्धुवारवृक्षे, पद्मकन्दे च ।

निर्ग्रन्थ पु० निर्गतो ग्रन्थेभ्यः । क्षपणके, दिगम्बरे, बौद्धभेदे, द्यूतकारे, मुनिभेदे च । निर्धने, मूर्खे, निःसहाये, निर्यद गते च त्रि० । स्वार्थे कन् । क्षपणे, निष्फले च पु० यस्त्ररहिते त्रि० ।

निर्ग्रन्थन न० निर्+ग्रथि—कौटिल्ये ल्युट् । मारणे ।

निर्ग्रन्थिक पु० निर्गतो ग्रन्थिर्नस्यग्रन्थिर्यस्य कप् । क्षपणके । निपुणे, ग्रन्थिहीने च त्रि० ।

**निर्घात** पु० निर्+हन–घञ् । "पवनः पवनाभिहतो, गगनादवनौ यदा पतति । भवति तदा निर्घात" इत्युक्ते पवनाहतपवनजन्ये शब्दभेदे । "निर्घाते भूमिचलने" इति स्मृतिः ।

**निर्घृण** त्रि० निर्गता घृणा दया यस्मात् । निर्दये ।

**निर्घोष** पु० निर्+घुष–घञ् । शब्दमात्रे ।

**निर्जन** निर्गतो जनो यस्मात् । जनैरनाकीर्णे विजने ।

**निर्जर** पु० निर्गता जरा यस्मात् । देवे । जराशून्ये त्रि० । ५व० । अमृते न० ।

**निर्जरा** स्त्री० निर्गता जरा यस्याः ५व० । गुडूच्यां, तालपर्ण्याञ्च ।

**निर्झर** पु० निर्+झॄ–अप् । पर्वतादिनिःसृतजलप्रवाहे (झरणा) ।

**निर्झरिणी** स्त्री० निर्झरः पर्वतादिनिःसृतजलप्रवाहः कारणत्वेनास्त्यस्या इति । नद्याम् ।

**[illegible]** पु० निर्+नी–अच् । निश्चये, तदर्थमाक्षिप्ये कति तद्ग्राहिणि ज्ञाने, सन्देहे [illegible] भावाभावौ द्वावेव विषयतया भासेते नैवं निश्चये तत्र एकविध एवावभासते । विरोधपरिहारे, मीमांसोक्ते पञ्चावयवन्यायमध्ये चरमावयवे, न्यायोक्ते "सन्दिह्य पक्ष प्रतिपक्षयोः साधनबाधनाभ्यामर्थावधारणे च ।

**निर्णयपाद** पु० चतुष्पादव्यवहारमध्ये चरमावयवे येन सभासदां जयपराजयपदार्थनिर्णयस्तस्मिन् पादे ।

**निर्णिक्त** त्रि० निर्+निज–क्त । शोधिते, अपगतमले च ।

**निर्णेजक** पु० निर्+निज–ण्वुल् । रजके ।

**निर्दहन** पु० निः शेषेण दहति ल्यु । भल्लातके । करणे ल्युट् ङीप् । मूर्वालतायां स्त्री० । निर्गतोदहनोऽस्मात् । शीतादिवह्निशून्ये त्रि० ।

**निर्दिष्ट** त्रि० निर्+दिश–क्त । उपदिष्टे प्रदर्शिते, कथिते च ।

**निर्देश** पु० निर्+दिश-भावे घञ् । शासने, आज्ञायां, उपदेशे च । निर्दिश्यतेऽभिधीयतेऽनेन घञ् । प्रतिपादकशब्दरूपे नाम्नि, वेतने च "कालमेव प्रतीक्षेत निर्देशं भृतको यथे"ति पुराणम् । कथने, उपान्ते, देशान्निर्गते च त्रि० ।

**निर्द्धन** पु० निकृष्टं धनमस्मात् । जरद्गवे । धनहीने त्रि० ।

**निर्द्धारण** न० निर्+धृ—णिच्-ल्युट् जातिगुणक्रियासंज्ञाभिः समुदाया-
देकदेशस्य पृथक्करणे । यथा नराणां क्षत्रियः शूरः इत्यादौ
नररूपसमुदायात् क्षत्रियजातेरेकदेशस्य शूरत्वेन पृथक्करणम् ।

**निर्द्धारित** त्रि० निर्+धृ—णिच्—क्त । कृतनिश्चये निर्द्धारण-
विषये च ।

**निर्द्वन्द्व** त्रि० निर्गतो द्वन्द्वेभ्यः शीतोष्णादिविरुद्धधर्मयुगलेभ्यः । रागद्वे-
षशीतोष्णलाभालाभादिद्वन्द्वरहिते ।

**निर्बन्ध** पु० निर्+बन्ध—घञ् । आग्रहे, अभिनिवेशे ।

**निर्बाध** त्रि० निर्गता बाधा यस्मात् । निरुपद्रवे बाधाशून्ये च ।

**निर्भय** पु० निर्+भी—अच् । हयश्रेष्ठे । भयरहिते त्रि० ।

**निर्भर** न० निःशेषेण भरो भारोऽत्र । अतिमात्रे । तद्युक्ते त्रि० ।

**निर्मचिक** अव्य० मचिकायाः अभावः । मचिकाया अभावे ।

**निर्मन्थदारु** न० निर्मन्थस्य अग्न्युत्थापनस्य दारु काष्ठम् । घर्षणेन
अग्न्युत्थापनसाधने काष्ठे । [ शून्ये योगिभेदे ।

**निर्मम** त्रि० निर्गतो ममकारो यस्मात् । पुत्रदेहादौ ममता-

**निर्मल** त्रि० निर्गतो मलात् । रजस्तम आदिमलहीने, रागादि-
मलरहिते अशुद्धिरहिते, शुद्धे च । अभ्रके न० । निर्गतोमलो
यस्मात् पु० । कतके तस्य हि फलसम्बन्धात् जलमलनाशक-
त्वम् प्रसिद्धम् । [ कामभेदे च ।

**निर्माण** न० निर्+मा—ल्युट् । रचनायाम्, सारे, समञ्जसे,

**निर्माल्य** न० "विसर्जिते तु देवेशे निर्माल्यं भवति क्षणादि" त्युक्ते
देवविसर्जनोत्तरं देवदत्तद्रव्ये देवोच्छिष्टे ।

**निर्मुक्त** पु० निर्+मुच—क्त । मुक्तकञ्चुके सर्पे (खोलसछाड़ासाप) नि:-
शेषेण मुक्तः । निष्परिग्रहे, सङ्गरहिते, बन्धशून्ये च ।

**निर्मोक** पु० । निर्+मुच्—घञ् । सर्पकञ्चुके, (खोलस) मोचने, स-
न्नाहे, आकाशे च । [सदामनि, अभ्रादिनिर्गमे, मोक्षे च ।

**निर्याण** न० निर्+या ल्युट् । गजापाङ्गदेशे, पशूनां पादबन्ध-

**निर्यातन** न० निर्+यत–णिच्–ल्युट्। वैरशुद्धौ, प्रतिदाने, दाने, न्याससमर्पणे च।

**निर्यास** पु० निर्+यस–घञ्। वृक्षात् तरलतया निर्गते कालेन कठिनतां प्राप्ते, रसे (गँद) वृक्षरसे, क्वाथे च। [घोड़े घ खरे च।

**निर्यूह** पु० निर्+ऊह–क पु०। नागदन्तके, द्वारे, निर्यासे, आ-

**निर्ल्वयनी** स्त्री० नितरां लयति अहिरस्याम् त्वचि ल्युट् ङीप् पु० सर्पत्वचि (खोलस) "यथाहिनिर्ल्वयनी प्रत्यस्ता मृता शेत" इति श्रुतिः। [मायां निवृत्तौ।

**निर्वचन** न० निर्+वच–ल्युट्। प्रकृतिप्रत्ययविभागेन अर्थ कथनवृ-

**निर्वपण** न० निर्+वप–ल्युट्। अन्नादीनां विभागे, दाने च।

**निर्वर्त्तित** त्रि० निर्+वृत–णिच्–क्त। निष्पादिते।

**निर्वहण** न० निर्+वह–ल्युट्। नाट्योक्तौ प्रस्तुतकथासमाप्तौ, प्रकृताभिनयस्य निर्वाहे, नाटकसन्धिभेदे च।

**निर्वाण** न० निर्+वा–भावे क्त नि० न। मोक्षे, आत्यन्तिकमोक्षे, निवृत्तौ, विनाशे, गजमज्जने, कर्दमे च। कर्त्तरि क्त। निवृत्ते, शान्ते, मुक्ते, निश्चले, शून्ये, विश्रान्ते च त्रि०।

**निर्वाद** पु० निर्+वद–घञ्। लोकापवादे।

**निर्वापण** न० निर्+वप, वा णिच्–ल्युट् मारणे वधे दाने च।

**निर्वासन** न० निर्+वस–णिच्–ल्युट्। नगरात् वहिष्करणे, मारणे, हिंसने, विसर्ज्जने च।

**निर्वाह** न० निर्+वह–घञ्। कार्य्यसम्पादने, निष्पत्तौ, समाप्तौ च।

**निर्विकल्प** त्रि० निर्गतो विकल्पो ज्ञातृज्ञेयादिविभागो विशेष्यविशेषणतासम्बन्धो वा यस्मात्। वेदान्तोक्ते ज्ञातृज्ञेयादिविभागशून्ये विशेष्यविशेषणतासम्बन्धरहिते च ब्रह्मात्मैकात्मविषये अखण्डाकारके एकविषयके ज्ञाने, "आत्मारामा विहितरतयो निर्विकल्पे समाधा"विति वेणी० वा कप्। तत् प्रमा नाप्रमा नापि ज्ञानं यन्निर्विकल्पकम्। प्रकारतादिशून्यं हि सम्बन्धानवगाहि यत्" इतिन्यायोक्ते अलौकिके आलोचनात्मके ज्ञानभेदे।

**निर्विकार** पु० प्रकृतेरन्यथाभावः स निर्गतो यस्मात्। जन्मादिषड्भावविकारहीने परमात्मनि। विकारशून्ये त्रि०।

**निर्वीजा** स्त्री० निर्गतं वीजं यस्याः। द्राक्षाभेदे "अल्पवीजे वीजशून्ये च त्रि०। शास्त्रोक्ते समाधिभेदे पु०।

**निर्वृति** स्त्री० निर्+वृ-क्तिन् सुखे, सुस्थितौ, अस्तगमने, मोक्षे, मृत्यौ च।

**निर्वृत्त** त्रि० निर्+वृत-क्त निष्पन्ने। निर्गता वृत्तिर्यस्य। वृत्तिरहिते त्रि०।

**निर्वेद** पु० निर्+विद-घञ्। स्वस्यावमाने, बहुकालेनाप्यभिष्टपदार्थे निष्प्रयोजनत्वेन अनुतापे, औदासीन्ये, वैराग्ये, "तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य चे"ति गीता अलङ्कारोक्ते शान्तिरसस्य स्थायिभावे च।

**निर्वेश** पु० निर्+विश-घञ्। भोगे, वेतने, मूर्च्छने, विवाहे च।

**निर्व्यथन** न० व्यथ-भावे ल्युट् निश्चयेन व्यथनं भयं चलनं वा यत्र। छिद्रे, शोकस्थाने, व्यसनादौ दुःखोत्पादके व्यापारे च।

**निर्व्यूढ** त्रि० निर्+वि+वह-क्त। त्यक्ते, असमाप्ते, यत् वस्तु सम्यक्पूर्णेनापर्य्याप्तं तस्मिन् च। यथा पत्न्यादीनां भक्तधने न सम्यक्स्वत्वं यथेष्टदानासामर्थ्यात् इति न तस्य निर्व्यूढत्वं भवति च दौहित्रादेः स्वत्वं सम्यगेव पर्याप्तमतस्तन्निर्व्यूढम्। [निष्कासने च।

**निर्हरण** न० निःशेषेण हरणम्। दाहार्थं शवादिहरणे,

**निर्हार** पु० निर्+हृ-घञ्। निखातशल्यादेः उद्धरणे, मलमूत्रादित्यागे, "आहारनिर्हारविहारयोगा" इति स्मृतिः। प्रेतदेहस्य दाहार्थं वहिर्नयने, यथेष्टविनियोगे च। "न निर्हारं स्त्रियः कुर्य्युरि"ति मनुः।

**निर्हारिन्** पु० निर्हरति दूरं गच्छति निर्+हृ-णिनि। दूरगामिगन्धे। निर्हरणकर्त्तरि त्रि०।

**निर्ह्राद** पु० निश्चयेन ह्रादः ह्रद-घञ्। शब्दे।

**निलय** पु० निलीयते अत्र ली—अच् । गृहे, आवासस्थाने च ।
**निवचने** अव्य० वचननियमे । निवचनेकृत्य वाचं नियम्येत्यर्थः ।
**निवपन** न० नियतं वपनम् । पित्राद्युद्देशेन दाने ।
**निवर्त्तन** न० उभयतो विंशतिवंशमिते क्षेत्रादौ "निवर्त्तनं विंशति-
वंशसंख्यै"रिति ली० । नि+वृत—ल्युट् । निवारणे ।
**निवर्हण** न० नितरां वर्हणं वर्ह—हिंसायां ल्युट् । मारणे ।
**निवसति** स्त्री० नि+वस—आधारे अतिच् । गृहे ।
**निवसथ** पु० न्युष्यतेऽत्र नि+वस—अथच् । ग्रामे ।
**निवसन** न० न्युष्यतेऽत्र ल्युट् । गृहे । नि+वस—आच्छादने ल्युट् ।
वस्त्रे । [सप्तवायुमध्ये वायुभेदे ।
**निवह** पु० नितरामुह्यते वह—घ । समूहे । नि+वह—अच् ।
**निवात** पु० निवृत्तो निरुद्धो वा वातोऽस्मात् । दृढ़कवचे शस्त्राद्यभे-
द्यकवचे, आश्रये च । वातशून्ये देशे त्रि० ।
**निवातकवच** पु० हिरण्यकशिपोः पुत्रस्य संह्लादस्य दैत्यस्य पुत्रे
दैत्यभेदे ।
**निवाप** पु० न्युप्यते नि+वप—घञ् । पित्रुद्देशेन दानमात्रे च ।
**निवास** पु० नि+वस—आधारे घञ् । गृहे, आश्रये च "जगन्निवासो
वसुदेवसद्मनी"ति माघः ।
**निविड़** त्रि० नितरां विड़ति संहन्यते नि+विड़—क । सान्द्रे घने
नीरन्ध्रे दृढे च । निनता नासिका नि+नासायाः विड़च् । नत-
नासिकायाम् स्त्री० ।
**निवीत** न० नि+व्ये—क्त । कण्ठलम्बिते यज्ञसूत्रे । व्येञ् संवरणे क्त
संप्रसारणादि । प्रावृतवस्त्रे ।
**निवृत्त** नि+वृत—भावे क्त । निषेधे, "निवृत्तं पदार्थे"इति भाष्यम्
कर्त्तरि क्त । विरते त्रि० ।
**निवृत्ति** स्त्री० नि+वृत-क्तिन् । उपरमे, विरतौ च "निवृत्तिस्तु
महाफले"ति मनुः ।
**निवेदन** न० नि+विद-णिच्-ल्युट् । सम्मानपूर्वकं ज्ञापने, समर्पणे च ।

**निवेश** पु० नि+विश-घञ्। विन्यासे, शिविरे, आगन्तुकसैन्यनिवेशने, उद्वाहे, स्थाने च।

**निवेशन** न० नि+विश-आधारे ल्युट्। गेहे। भावे ल्युट्। प्रवेशे, स्थितौ च।

**निश्** स्त्री० नितरां श्यति तनूकरोति व्यापारान् शो-क पृ०। [रात्रौ, हरिद्रायाञ्च।

**निश(शा)मन** न० नि+शम-णिच्-ल्युट्। वा ह्रस्वः। श्रवणे, दर्शने च।

**निशा** स्त्री० नितरां श्यति व्यापारान् शो-क। रात्रौ हरिद्रायाम्, "अजगोपतियुग्मञ्च कर्किधन्विमृगा निशा" इति ज्योतिषोक्तेषु मेषादिराशिषु च।

**निशाकर** पु० निशां करोति कृ-ट। चन्द्रे, कुक्कुटे च।

**निशाचर** पु० निशायां चरति चर-ट। राक्षसे, शृगाले, पेचके, सर्पे, पिशाचे, चक्रवाके, चौरे च। रात्रिचरमात्रे त्रि०। ङीप्। राक्षस्याम् कुलटायां केशिनीनामगन्धद्रव्ये च स्त्री०।

**निशा(शि)त** त्रि० नि+शो-क्त वा ह्रस्वम्। तेजिते तीक्ष्णीकृते।

**निशान** न० नि+शो-ल्युट्। तीक्ष्णीकरणे।

**निशान्त** न० निशायामस्यते स्म अम-गतौ कर्मणि क्त। गृहे। नितरां शान्ते त्रि०।

**निशापति** पु० ६त०। चन्द्रे, कर्पूरे च।

**निशिपुष्पा** स्त्री० निशि रात्रौ पुष्यति पुष्प-अच् अलुक् स०। शेफालिकायाम्। निशिपुष्पीत्यादयोऽप्यत्र।

**निशीथ** पु० निशेरतेऽत्र नि+शी-थक्। अर्द्धरात्रे, रात्रिमात्रे च।

**निशीथिनी** स्त्री० निशीथोऽस्त्यस्या इनि। रात्रौ।

**निशुम्भ** पु० नि+शुन्भ-अच् घञ् वा। शुम्भासुरानुजे दैत्यभेदे। मर्द्दने च "प्रागप्राप्तनिशुम्भशाम्भवधनु"रिति वीरचरितम्।

**निशुम्भमर्द्दिनी** स्त्री० निशुम्भं मृद्नाति मृद-णिनि ६त०। दुर्गायाम्

**निश्चय** पु० निर्+चि-अच्। संशयाभावज्ञाने निर्णये, सिद्धान्ते, इदमेवेति विषयपरिच्छेदे च।

**निश्चल** त्रि० निर्+चल–अच् । स्थिरे, अचले, असम्भावनाविपरीत-भावनारहिते च । भूमौ, शालपर्ण्याञ्च स्त्री० टाप् ।

**निश्वास** पु० नि+श्वस–घञ् । मुखनासिकाभ्यां प्राणवायोर्निःसरणे ।

**निषङ्ग** पु० नितरां सजन्ति शरा यत्र सनृज–घञ् । तूणीरे ।

**निषङ्गिन्** त्रि० निषङ्ग+अस्त्यर्थे इनि । धनुर्द्धरे ।

**निषद्या** स्त्री० निषीदन्त्यस्याम् जनाः सद्–क्यप् । पण्यविक्रयशालायां (हाटचाला) हट्टे, क्षुद्रखट्वायाञ्च ।

**निषद्वर** पु० नि+सद्–क्विप् निषद् आसनं तां वृणाति वरः आवरकः वृ–अच् । जम्बाले कर्द्दमे ।

**निषध** पु० नि+सद्–अच् पृ० । कठिने, देशभेदे च तद्देशस्थे ब० व० । तद्देशनृपे, निषादस्वरे, हरिवर्षस्य मर्य्यादापर्वते च पु० ।

**निषाद** पु० निषीदति मनः, पापं वा यस्मिन् षद्–घञ् । "निषादं रौति कुञ्जर" इत्युक्ते तन्त्रीकण्ठोत्थिते स्वरभेदे, चण्डाले, ब्राह्मणात् ऊढायां शूद्रायामुत्पन्ने पारशवाख्ये वर्णसङ्करे च ।

**निषादिन्** पु० निषादयति उपवेशयति हस्तिनं नि+सद्–णिच् णिनि । हस्तिपाले ।

**निषिद्ध** त्रि० नि+षिध–क्त । निषेधविषये, इष्टसाधनताभ्रमनिषेधकेन नञ्पदेन, लिङाद्यनुषक्तनञ्पदेन वा बोध्ये, पदार्थे बाधिते च ।

**निषेक** पु० नि सिच–घञ् । गर्भाधाने "निषेकादि श्मशानान्त" मिति मनुः ।

**निषेध** पु० नि+सिध-घञ् । निवृत्तौ, प्रतिषेधे, नञादिना बोधितार्थे ।

**निष्क** माने चु० आत्म० सक० सेट् । निष्कयते अनिनिष्कत । प्रादिभ्यो न णत्वम् ।

**निष्क** पु० न० निश्चयेन कायति कै–क । शास्त्रीयषोड़शमाषकपरिमितसुवर्णानामष्टाधिकशते, व्यवहारिकरूपके दीनारे, (टाका) चतुर्भिः सुवर्णपरिमिते मानभेदे, षोडशद्रम्मे (काहन) परिमाणे, वक्षोभूषणे, हेममात्रे पलपरिमाणे च ।

**निष्कण्ठ** पु० निर्गतः कण्ठोऽस्मात् । स्कन्धशून्ये वरुणाख्ये द्रुमे ।

**निष्कर्ष** पु० निर्+कृष-घञ् । इयत्तापरिच्छेदे, निश्चये च ।

**निष्कल** त्रि० निर्गता कला यस्मात् । कलाशून्ये, नष्टवीर्य्ये च । आधारे पु० । कलाऽवयवस्तच्छून्ये ब्रह्मणि-न० । "निष्कलस्याद्वितीयस्ये"ति पुराणम् । विगतार्त्तवायाम् वृद्धायां स्त्रियां स्त्री० वा गौरा० ङीष् ।

**निष्कासित** त्रि० निस्+कस-गतौ णिच्-क्त । निःसारिते ।

**निष्कुट** पु० निस्+कुट-क । गृहसमीपस्थे उपवने, केदारे क्षेत्रे, राज्ञाम् अन्तःपुरे च । [ङीप् एलायाम् ।

**निष्कुटि(टी)** स्त्री० कुट-इन् कौटिल्यम् निर्गता कुटिर्यस्याः वा

**निष्कुषित** त्रि० निर्+कुष-क्त । खण्डिते, निस्त्वचीकृते च "काकैर्निष्कुषित"मिति गङ्गास्तवः । [जाते रन्ध्रे कोटरे ।

**निष्कुह** पु० निःशब्देन कुहयते विस्मापयति कुह-क । वृक्षादिस्थे स्वयं

**निष्कृति** स्त्री० निर्+कृ-क्तिन् । निस्तारे, निर्मुक्तौ, पापादिभ्य उद्धारे च "कृतघ्ने नास्ति निष्कृति"रिति स्मृतिः ।

**निष्कृष्ट** त्रि० निर्+कृष-क्त । सारांशे ।

**निष्कोषण** न० निर्+कुष-ल्युट् । अन्तरवयवानां वहिर्निःसारणे ।

**निष्क्रम** पु० निर्+क्रम-घञ् । बुद्धिसम्पद्धौ, निर्गमे, दुष्कुले च ।

**निष्क्रमण** न० निर्+क्रम-ल्युट् । वहिर्गमने, चतुर्थे मासि शिशोः कर्त्तव्ये संस्कारभेदे च "चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहा"दिति मनुः ।

**निष्ठा** स्त्री० नि+स्था-अङ् । नाट्योक्ताया प्रस्तुतकथासमाप्तौ, निष्पत्तौ, नाशे, अन्ते, याच्ञायाम्, उत्कर्षे, व्यवस्थायाम्, क्लेशे, ब्रते, गुरुशुश्रूषादौ, तत्परतायां, धर्मादौ श्रद्धायां च "लोकेऽस्मिन् द्विविधा निष्ठे"ति गीता । निश्चयेन स्थितौ च "तेषां निष्ठां तु तामसी"ति गीता । [व्यञ्जने ।

**निष्ठान** न० निष्ठीयतेऽत्र स्था-ल्युट् । भक्ताद्यन्नोपसेचने दध्यादौ

**निष्ठी(ष्ठे)व** पु० नि+ष्ठिव-घञ् वा दीर्घः । मुखेन श्लेष्मनिरसने । ल्युट् वा दीर्घः । निष्ठीवननिष्ठेवने एते अप्यत्र ।

निष्ठुर न० नि+स्था-उरच् । परुषवाक्ये । कठोरे, त्रि० । "गुह्या-ङ्गमेध्यशब्दानां वचनं निष्ठुरं विदुः । यदन्यद्वा वचो नीचं स्त्रीपुं-समैथुनाश्रय"मित्युक्ते, अश्लीलवाक्ये न० । तत्तद्विशिष्टे त्रि० ।

निष्ठ्यूत त्रि० नि+ष्ठिव-क्त । क्षिप्ते । [निपुणे, पारङ्गते च ।

निष्णात त्रि० नितरां स्नातः पारं गत. शुद्धो वा नि+स्ना-क्त षत्वम् ।

निष्पक्व त्रि० निरतिशयं पक्वम् । अतिशयेन पक्वे क्वाथिते दशमू-लादौ । पक्वं पाकः निरा० स० । पाकशून्ये त्रि० ।

निष्पत्ति स्त्री० निर्+पद्-क्तिन् । समाप्तौ, सिद्धौ च ।

निष्पत्राकृति स्त्री० पत्रं पुङ्खमस्यास्ति अच् पत्रः शरः तस्यापरपार्श्वे निष्काशनं सपत्रं ततः कृञि । "सपत्रनिष्पत्राभ्यामत्यन्तव्यथने" इति डाच्-क्तिन् । अतिव्यथायाम् ।

निष्पत्रिका स्त्री०निर्गतं पत्रं यस्याः ५ब०। करीरवृक्षे (टाउरकाटा)

निष्पन्न त्रि० निर्+पद्-क्त । सिद्धे, समाप्ते च ।

निष्परिग्रह त्रि० निर्गतः कन्याकौपीनपुस्तकाद्यतिरिक्तः परिग्रहोऽ-स्मात् । परमहंसे परिव्राजके । त्यक्तसङ्गे त्रि० ।

निष्पाव पु० निष्पूयते तुषाद्यपनयनेन शोध्यतेऽनेन निर्+पू-करणे घञ् । शूर्पादिवायौ तेन हि खलस्थधान्यादिकं कडङ्करादि-शून्यं करोति । कर्म्मणि घञ् । कडङ्करे (आगड़ा) राजमाषे (वरवटी) श्वेतशिम्बिधान्ये, शिम्बीमात्रे च । निर्व्विकल्पे त्रि० ।

निष्पावक पु० निर्+पू-ण्वुल् । श्वेतशिम्बराम् ( वरवटी ) शीतादिव-ह्निशून्ये त्रि० ।

निष्पावी स्त्री० निर्+पू-घञ् गौ० । श्वेतशिम्बीधान्ये (वरवटी) ।

निष्पृह त्रि० निवृत्ता स्पृहा यस्य । वैषयिके सुखे इच्छाशून्ये ।

निष्पेष पु० निर्+पिष-घञ् । संघर्षे ।

निष्प्रतिभ त्रि० निर्गतः प्रतिभायाः। जडे, अज्ञे, प्रागल्भ्यरहिते च ।

निष्प्रवाणि त्रि० प्रोयन्तेऽस्यामनया वा प्र+वेञ्-ल्युट् ङीप् प्रवाणी तन्तुवायशलाका निर्गतः प्रवाण्याः निरा० स० । नवाम्बरे, अभि-नवे । (तान्तकाटा) वसने ।

निष्फल त्रि० निर्गतं फलं यस्मात् । फलरहिते । पलाले फलशून्ये धान्यकाण्डे, (नाड़ा) पु० । विगतार्त्तवायां स्त्रियां स्त्री० ।

निस् अव्य० निर्जसो–क्विप् पृ० । निषेधे, निश्चये, साकल्ये, अतीते च

निसर्ग पु० नि+सृज–घञ् । स्वभावे, स्वरूपे, सृष्टौ च ।

निसिन्धु पु० नितरां सिन्धुरिव बहुद्रवपत्रादिमत्त्वात् । सिन्धुवारे (निसिन्दा)

निसूदन न० नि+सूद–ल्युट् । मारणे बधे ।

निसृता स्त्री० नितरां सृता सृ–क्त । त्रिवृतायाम् (तेओड़ि) ।

निसृष्ट त्रि० नि–सृज क्त । न्यस्ते, मध्यस्थे च ।

निसृष्टार्थ पु० "उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् । सन्दिष्टः कुरुते कर्म निसृष्टार्थस्तु स स्मृत". इत्युक्ते दासभेदे ।

निस्तरण न० निर्+तॄ–करणे ल्युट् । उपाये । भावे ल्युट् । निस्तारे, पारगमने, तरणे, निर्गमे च ।

निस्तर्हण न० नि+स्तृह–हिंसायां ल्युट् । मारणे ।

निस्तल त्रि० निरस्तं तलं प्रतिष्ठा यस्य । वर्त्तुले, तलशून्ये, चले च । गौरा० ङीष् । वटिकायाम् स्त्री० । नितरां तलम् । तले न० ।

निस्तार पु० निःशेषेण तारः पारगमनम् । उद्धारे, पारगमने, अभीष्टप्राप्तौ च । [तस्य हि चूर्णं चौरवत् शुभ्रम् ।

निस्तुषक्षीर पु० निस्तुषमन्तः शस्यं क्षीरमिव शुभ्रं यस्य । गोधूमे

निस्तुषित त्रि० निस्तुष+कृतौ णिच्–क्त । त्वग्विहीने कृते तण्डुलादौ, लघूकृते, त्यक्ते च ।

निस्त्रिंश पु० निर्गतस्त्रिंशद्भ्योऽङ्गुलिभ्यः डच् समा० । खड्गे, त्रिंशदङ्गुल्यधिकस्यैव खड्गत्वात् ततो न्यूनत्वे छुरिका । तत्तुल्यहिंसकत्वात् निर्द्दये त्रि० । [स्नुहीभेदे ।

निस्त्रिंशपत्रिका स्त्री० निस्त्रिंशइव पत्रमस्त्यस्याः ठन् । (मनसा)

निस्त्रैगुण्य त्रि० निष्क्रान्तः त्रैगुण्यात् त्रिगुणकार्य्यात् संसारात् त्रिगुणकार्य्येभ्यः कामादिभ्यो वा । काममनादिशून्ये संसारातीते च "निस्त्रैगुण्यो भवार्जुने"ति गीता ।

निस्नेहफला स्त्री० निस्नेहं स्नेहशून्यं फलं यस्याः । श्वेतकण्टकार्य्याम्

**निस्य(ष्य)न्द** पु० निस्य(ष्य)+न्द–घञ् वा षत्वम् । स्यन्दने ईषत्क्षरणे निष्क्रान्तं स्यन्दनं यस्मात् । स्यन्दनशून्ये त्रि० । [अपक्षरणे च ।
**निस्र(स्रा)व** पु० नि+स्रु-अप्, संज्ञायां घञ् वा । भक्तमण्डे (माड़)
**निस्व(स्वा)न** पु० नि+स्वन–अप् घञ्, वा । शब्दे ।
**निहनन** न० नि+हन ल्युट् । बधे ।
**निहव** पु० नि+ह्वे–अप् सम्प्रसारणञ्च । आह्वाने ।
**निहाका** स्त्री० नियतं जहाति भुवं हा-कन् न ह्रस्वः । गोधिकायाम्
**निहित** त्रि० नि+धा–क्त । स्थापिते, गुप्ते, स्थिते, निक्षिप्ते च । नितरां हितः । अत्यन्तहिते ।
**निह्नव** पु० नि+ह्नु–अप् । शाठ्ये अन्यथा स्थितस्य वस्तुनोऽन्यथात्वेन सूचने अपलापे । ह्नु–क्तिन् । अपह्नुतिरप्यत्र ।
**निह्राद** पु० नितरां ह्लादः नि+ह्लद–घञ् । अव्यक्ते शब्दे ।
**नीकाश** पु० नि+काश-घञ् दीर्घः । निश्चये । पचाद्यच् । सदृशे किन्तु निभादिवत् परपदस्थतयैवास्य प्रयोगो नान्यथा यज्ञनीकाश इत्यादि । [चोरनामके गन्धद्रव्ये पु० ।
**नीच** त्रि० निकृष्टामीं लक्ष्मीं चमति च–ड । पामरे, निम्ने वामने च
**नीचभोज्य** पु० ३ त० । पलाण्डौ । पामरभक्ष्यमात्रे पु०
**नीचैस्** अव्य० निकृष्टं चीयते चि–डैसि दीर्घश्च । नीचे, अल्पे, क्षुद्रे च
**नीड़** पु० निश्चिता इलन्त्यत्र इल–क डलयोरैक्यात् लस्य ड । निवासस्थाने पक्षिणां कुलाये च ।
**नीड़ज** पु० नीडे जायते जन–ड । विहगे नीड़ोद्भवादयोऽप्यत्र ।
**नीति** स्त्री० नीयन्ते उन्नीयन्तेऽर्था अनया नी–क्तिन् । शुक्राचार्यादिकृतशास्त्रविद्यायां कार्य्यकारणयोरभेदात् तच्छास्त्रे च । भावे क्तिन् प्रापणे । [भारतहितोपदेशादौ शास्त्रे ।
**नीतिशास्त्र** न०नीतिबोधकं शास्त्रं शाक० गुरुशुक्रकामन्दकपञ्चतन्त्रमहा–
**नीध्र(व्र)** न० निश्चयेन धरति वृणोति वा जलादि–धृ–वृ वा मूल० क दीर्घः । पटलप्रान्तभागे । वने, नेमौ चन्द्रे, रेवतीनक्षत्रे च ।

नीप पु० नी—पक्, । कदम्बे बन्धूके, नीलाशोकवृक्षे च ।
नीर न० नी—रक्, निर्गतं रादग्नितो वा "अग्नेरापः इति" श्रुतेस्तस्या-
जन्यत्वम् । जले, रसे च ।
नीरज न० नीरे जायते जन—ड । पद्मे, मुक्तायां कुष्ठौषधौ च ।
जलजातमात्रे त्रि० । जलजन्तुभेदे पु० (उद्‌बेराल) ।
नीरद पु० नीरं ददाति दा—क । मेघे, मुस्तके च । निर्गतोरदो
दन्तोऽस्मात् । दन्तशून्ये त्रि० ।
नीरन्ध्र त्रि० निर्गतं रन्ध्रं यस्मात् । सान्द्रे घने ।
नीरस पु० निःसरन् रसो यस्मात् । दाड़िमे । रसहीने त्रि० "नीर-
सतरुरय"मित्युद्भटः ।
नीराजन न० नीरस्य शान्त्युदकस्य अजनं क्षेपोऽत्र नि०, निःशेषेण
राजनमत्र वा । दीपादिना सत्कारे निर्मञ्छने, "पञ्चनीराजनं कु-
र्यात् प्रथमं दीपमालया । द्वितीयं सोदकाब्जेन तृतीयं धौतवा-
ससा । चूताश्वत्थादिपत्रैश्च चतुर्थं परिकीर्त्तितम् ।पञ्चमं प्रणिपातेन
साष्टाङ्गेन यथाविधी"त्युक्तदिशा दीपादिभिः पञ्चवारसंस्कारे आरा-
त्रिके, आश्विनमासादौ घोटकादेः पूजनविशेषे च ।
नीराजना स्त्री० निःशेषेण राजना राज—णिच्—युच् । दीपादिना-
संस्कारे "नीराजनां जनयतामिति" नैषधम् । वाजिनीराजनाविधा-
धाविति रघुः ।
नीरुज् स्त्री० निवृत्ता रुक् । स्वास्थ्ये । निर्गता रुक् यस्मात् ।
रोगरहिते त्रि० ।
नीरुज न० निवृत्ता रुजा यस्मात् ५ब० । कुष्ठौषधौ (कुड़)
नील पु० नील वर्णे क । इलावृतवर्षस्योत्तरस्थे रम्यक वर्षस्य मर्या-
दापर्वते, भारतवर्षस्थे पर्वतभेदे, वानरभेदे, निधिभेदे, लाञ्छने,
वटवृक्षे, "चरणानि मुखं पुच्छं यस्य श्वेतानि गोपते । लाक्षा-
रससवर्णश्च तं नीलमिति निर्दिशे"दित्युक्ते, "लोहितो यस्तु वर्णेन
पुच्छाग्रेण तु पाण्डुरः श्वेतः । खुरविषाणाभ्यां स नीलो वृष उच्यते"
इत्युक्ते च वृषभेदे, "नीलं वा वृषमुत्सृजेदि"ति वायुपुराणम् ।

कृष्णवर्णे च। तद्वति त्रि०। औषधौ स्त्री० ङीप्। नील्या रक्तमन्। नीलीरक्ते त्रि०। इन्द्रनीलमणौ (नीलम) तालीशपत्रे, विषे, सौवीराञ्जने च (तु ते) न०।

**नीलक** न० नील इव कायति कै—क। (कालालवण) काचलवणे, बीजगणितोक्तायां यावत्तावन्मानज्ञापनार्थायामव्यक्तराशिसंज्ञायां, लौहभेदे च। असनवृक्षे पु०।

**नीलकण्ठ** पु० नीलः कण्ठोऽस्य। "क्षीराब्धेर्मथ्यमानाच्च विषं कालाहलोद्भवम्। हरेण धारितं कण्ठे नीलकण्ठस्ततो हर" इत्युक्ते शिवे, मयूरे, दात्यूहे, ग्रामचटके, खञ्जने, पीतसारे—चन्दनभेदे च। मूलके न०।

**नीलकन्द** पु० नीलः कन्दो मूलमस्य। विषकन्दे, महिषकन्दे च वृक्षे

**नीलकुरण्टक** पु० कर्म०। नीलझिण्ट्याम्। नीलझिण्टीत्यप्यत्र।

**नीलताल** पु० तालमेव तालं नीलं तालमस्य। हिन्ताले, तमाल वृक्षे च।

**नीलदूर्वा** स्त्री० कर्म०। हरितवर्णदूर्वायाम्। [त्रि०।

**नीलध्वज** पु० नीलाकारो ध्वज इव। तालवृक्षे। नीलध्वजयति

**नीलनिर्यासक** पु० नीलवर्णो निर्यासो यस्य कप्। नीलवर्णासनवृक्षे। नीलवर्णनिर्यासे पु०। इव०। तद्वति त्रि०।

**नीलपत्र** न० नीलं पत्रं पर्णं पुष्पदलं वा (पावड़ि) यस्य। नीलवर्णे कुमुदे, गुण्डतृणे, अश्मन्तकवृक्षे नीलासनवृक्षे दाड़िमे च। कर्म० नीलवर्णपर्णे न० इव० तद्वति त्रि०।

**नीलपुष्प** पु० नीलं पुष्पमस्य। नीलभृङ्गराजे, नीलाम्लाने च। ग्रन्थिपर्णे न०। अपराजितायां स्त्री०। अतस्यां (मसिना) ङीप्। स्वार्थे कन् तत्रैव।

**नीलफला** स्त्री० नीलं फलं यस्याः। जम्बूवृक्षे।

**नीलमणि** पु० कर्म०। (नीलम) इन्द्रनीलमणौ।

**नीलमाष** पु० कर्म०। माषभेदे (कालकलाइ)।

**नीललोहित** पु० नीलः कण्ठे लोहितः केशेषु शिवे तद्रूपव्यक्तिव्रतभेदे, कृष्णरक्तमिश्रिते वर्णे च। तद्वति त्रि० कर्म०। जम्ब्वां स्त्री०।

**नीलवर्षाभू** पु० वर्षायां भवति भू–क्विप् कर्म० । कृष्णवर्णमूर्वालतायां, कृष्णभेके च ।

**नीलवल्ली** स्त्री० कर्म० । वन्दायाम् (परगाछा) ।

**नील(ली)वस्त्र** नील्या रक्तं नीलं कर्म० नील्या वा रक्तं वस्त्रं शाक० । नील्या रञ्जिते वस्त्रे "नीलीवस्त्रं न स्पृशेत्" इति स्मृतिः । नीलवसनादयोऽप्यत्र । ६ब० । तद्वति त्रि० ।

**नीलवृन्त** न० नीलं वृन्तमस्य । तूले ।

**नीलवृषा** स्त्री० नीलवर्णं पत्रं पुष्पं फलं च वर्षति प्रसूते वृष–क । वार्त्ताकीभेदे । [ सरस्वी"ति तत्स्तोत्रम् ।

**नीलसरस्वती** स्त्री० द्वितीयविद्यायां तारायाम् । "मातर्नील-

**नीलसार** पु० नीलः सारोऽस्य । तिन्दुवृक्षे (केंद) । [ योऽप्यत्र

**नीलसिन्दुक** पु० कर्म० । कृष्णवर्णसिन्दुवारे नीलसिन्दुवारादू-

**नीलाञ्जन** पु० कर्म । सौवीराञ्जने (तुँते) ।

**नीलाम्बर** न० नीलमम्बरं यस्य । बलदेवे, शनैश्चरे च । कर्म० । नीलीरक्ते वस्त्रे न० । ६ब० तद्वति त्रि० ।

**नीलाम्ला** पु० ईषत्कालेन म्लायति आ+म्ला–क कर्म० । नीलझिण्टयाम् । तस्या हि पुष्पमल्पकालेनैव गलति ।

**नीलालु** पु० कर्म० । श्यामवर्णकन्दे आलुभेदे ।

**नीलासन** पु० कर्म० । (पियासाल) वृक्षभेदे । [ च ।

**नीलिमन्** स्त्री० नीलोवर्णोऽस्यस्याः इनि । नीलीवृक्षे कृष्णनिर्गुण्डि

**नीलोत्पल** न० कर्म० । इन्दीवरे सौगन्धिके नीलवर्णे कुमुदे ।

**नीवाक** पु० नियतं वाको वचनं वच–घञ् दीर्घः । महार्घहेतो धान्यसञ्चयादरे । [ कडङ्गरीयैरि"ति रघुः ।

**नीवार** पु० नि+वृ–घञ् दीर्घः । तृणधान्यभेदे "नीवारपाकादि

**नीवि(वी)** स्त्री० निव्ययति निवीयते वा नि+व्ये इन् यलोपः दीर्घो ङिच्च वा ङीप् । वणिजां मूलधने, कटीवस्त्रबन्धे च "नीविं प्रति प्रणिहिते तु करे" इति सा० द० । [ पदे ।

**नीवृत्** पु०स्त्री० नियतं वर्त्ततेऽत्र नि+वृत–क्विप् दीर्घः । देशे, जन-

पर्य्युषित त्रि० परिक्रम्य स्वकालमतिक्रम्य उषितम् वस–क्त। (बासि) यातयामादौ पदार्थे, "यातयामं गतरसं पूति पर्य्युषितञ्च यदि"ति मनुः। [पदार्थपरीक्षायाम्, अन्वेषणायाञ्च।

पर्य्येषणा स्त्री० परितस्तर्कादिना एषणा परीक्षा। तर्कादिद्वारा

पर्व्व पूर्त्तौ भ्वा० पर० सक० सेट्। पर्व्वति अपर्व्वीत्।

पर्व्वत पु० पर्व्व–अतच्, पर्व्वाणि भागाः सन्त्यस्य त वा। गिरौ भूधरे, दानार्थं कल्पिते पर्व्वताकारे गुडादिशैलप्रभेदे, मुनिभेदे "नारदं चित्रमनु तं प्रययौ यत् पर्व्वतस्तु सखि"ति नैषधं मत्स्यभेदे (पावदा) वृक्षे, शाकभेदे च।

पर्व्वतमोचा स्त्री० ६ त०। गिरिकदल्याम्। [गायत्र्याञ्च।

पर्व्वतवासिनी स्त्री० पर्व्वते वसति वस–णिनि। आकाशमांस्याम्,

पर्व्वतीय पु० पर्व्वते भवः छ। (पाहाड़ीया) जातिभेदे "पर्व्वतीयगणैरभूदि"ति रघुः। पर्व्वतजातमात्रे त्रि०।

पर्व्वन् न० पॄ–वनिप्। उत्सवे, ग्रन्थौ (गांट) लक्षणभेदे, प्रस्तावे, ग्रन्थविच्छेदस्थाने "चतुर्द्दश्यष्टमी चैव अमावस्या च पूर्णिमा। पर्व्वाण्येतानि राजेन्द्र! रविसंक्रान्तिरेव चे"ति स्मृत्युक्तेषु पञ्चसु कालभेदेषु च।

पर्व्वयोनि पु० पर्व्व ग्रन्थिर्योनिरुत्पत्तिस्थानं यस्य। इक्षुप्रभृतौ इक्षौ।

पर्व्वरुह पु० पर्व्वणि रोहति रुह–क्विप्। दाड़िमे।

पर्व्ववल्ली स्त्री० पर्व्वप्रधाना ग्रन्थिमती वल्ली। मालादूर्व्वायाम् (गांटदूर्वा)।

पर्व्वसन्धि पु० पर्व्वणः सन्धिः। पञ्चदश्याः (पूर्णिमायाः अमावस्यायाः) प्रतिपदश्चाशेषान्तराले चन्द्रसूर्य्यग्रहणयोग्ये काले।

पर्शुका स्त्री० पर्शुरिव कायति प्रकाशते कै–क। पार्श्वस्थे अस्थ्नि। तस्य परश्वाकारत्वात् तथात्वम्। पर्शूरप्यत्र।

पर्ष स्नेहे भ्वा० आत्म० सक० सेट्। पर्षते अपर्षिष्ट।

पर्षद् स्त्री० पृष–अदि। सभायाम्, धर्म्मोपदेशकपण्डितसमाजे च। ततः अस्त्यर्थे वलच्। सभासदे त्रि०।

पल गतौ भ्वा० पर० सक० सेट् जला०। पलति अपालीत्।

**पल** रचणे चुरा० उभ० सक० सेट्। पालयति ते अपीपलत्—त।

**पल** न० पल—अच्। मांसे, आमिषे, कर्षचतुष्टयपरिमाणे, शास्त्रीय-तोलकचतुष्टये लौकिकसार्द्धत्रितोलकाधिकतोलकत्रितयपरिमाणे, षष्टिगुर्वक्षरोच्चारणयोग्ये दण्डषष्टिभागे विनाडिकाख्ये काले च। पाताले (तुच्छधान्ये) पु०।

**पलगण्ड** पु० पलं मांसं गण्डति गण्डमिव करोति। लेपनकरे(राज)

**पलङ्कष** पु० पलं मांसमुद्दिश्य कषति हिनस्ति खच्। राक्षसे, कण-गुग्गुलौ च। रास्नायां, लाक्षायाम्, गुग्गुलौ, गोक्षुरे, महा-श्रावण्यां, पलाशे, मक्षिकायाञ्च स्त्री० टाप्। [राक्षसे पु०।

**पलल** न० पल-कलच्। मांसे, पङ्के, तिलचूर्णे च। पलं लाति ला-क।

**पलाण्डु** पु० पलं मांसमण्डति अण्ड—उ। (पियाज) मूलभेदे "प-लाण्डुं कवकानि च" इति मनुः। [स्थानगमने।

**पलायन** न० परा—अय—ल्युट् रस्य लः। भयादिना स्थानत्यागेनान्य-

**पलाल** पु० न० पल—कालन्। शस्यशून्ये धान्यकाण्डे (नाडा)(पोयाल)

**पलालदोहद** पु० पलालं दोहदं यस्य। आम्रवृक्षे पलालवेष्टने हि तस्य वृद्धिः।

**पलाश** न० पल-गतौ वर्णार्थे क पलं चलनमश्नुते, पलं वियोगिनां मांसमिवाश्नाति शोषकत्वाद्वा अश—अण्। स्वनामख्याते वृक्षे "नवपलाशपलाशवन" मिति माघः। पर्णसवर्णत्वात् हरिद्वर्णे पु०। तद्वति त्रि०। लाक्षायां, लताभेदे च स्त्री० गौ० ङीष्।

**पलाशक** पु० पलं मांसमश्नाति ण्वुल्। शठ्याम्, पलाशवृक्षे च।

**पलाशपर्णी** स्त्री० पलाशदलस्येव पर्णमस्याः। अश्वगन्धायाम्।

**पलाशिन्** पु० पलाशानि सन्त्यस्य इनि। वृक्षे। [गवि च।

**पलिक्नी** स्त्री० पलित+ङीप् नि०। वृद्धायां योषिति, बालगर्भिण्यां

**पलित** न० पल—भावे क्त। केशादौ जरया जातायां श्वेततायाम्, मांसादेर्विपरीतभावे च। कर्त्तरि क्त। वृद्धे। स्त्रियां पलिता। योषिति तु पलिक्नीत्युक्तम्।

**पल्यङ्क** पु० परिगतोऽङ्कं रस्य लः। शय्यायाम्। (पालङ्क)।

**पल्ययन** न० परि–इण–ल्युट् रस्य लः। घोटकसज्जाभेदे (जिन्)।

**पल्युल** छेदने, पूतौ च अद० चुरा० उभ० सक० सेट्। पल्युलयति ते अपपल्युलत् त। [ते अपपल्यूलत् त।

**पल्यूल** छेदने पवित्रताकरणे च अ०चु०उभ०सक० सेट्। पल्यूलयति

**पल्ल** गतौ भ्वा० पर० सक० सेट्। पल्लति अपल्लीत्।

**पल्ल** पु० पल्ल–अच्। स्थूलकुसूलके इड़ति धान्यादिस्थापनस्थाने (पालुइ) (मराइ)।

**पल्लव** पु० पल्यते अस्य० क्विप् पल्, लूयते लू–अप् कर्म०। अभिनवे पत्रविस्तारे, "लवोऽपि पल्लवे" इति नैषधम् तद्युक्तशाखायां विस्तारे, बले, अलक्तकरागे, वलये, वापने च।

**पल्लवद्रु** पु० पल्लवप्रधानः द्रुः। अशोकवृक्षे।

**पल्लवित** त्रि० पल्लवं नूतनपत्रं विस्तारो वा जातः अस्य तार० इतच्। पल्लवयुक्ते, विस्तारयुक्ते च "[illegible] पल्लवितञ्च विस्मृत"मिति नैषधम्।

**पल्लि(ल्ली)** स्त्री० पल्ल–इन् वा ङीप्। क्षुद्रग्रामे, कुड्याम्, गेहे च। पल्लं गृहमाश्रयत्वेनास्त्यस्याः अच्। गृहगोधिकायाम् स्त्री० ङीप्।

**पल्लिका** स्त्री० पल्लयां गृहे कायति कै–क। गृहगोधिकायाम्।

**पल्वल** पु० न० पल–वल। क्षुद्रे सरसि (डोवा) "स पल्वलजलेऽधुने"ति भामिनीविलासः। [अच्। वायौ।

**पव** पु० पू–अप्। धान्यादेः शोधने, वस्तुशोधकरणे च व्यापारे। कर्त्तरि

**पवन** पु० पू–युच्। धान्यादेः शोधने, वस्तुशोधकरणे च व्यापारे, कर्त्तरि ल्यु। वाते। भावे ल्युट्। शोधने न०। करणे ल्युट्। जले न०। आधारे ल्युट्। आमघटादिपाकस्थाने। (पोयान)। "पवनोमर्दिपङ्कलेप" इत्युद्भटः।

**पवनव्याधि** पु० पवनजनितो व्याधिर्यस्य शाक०। उद्धवे, "संवसन् पवनव्याधे"रिति माघः। कर्म०। वायुरोगे पु०।

**पवनात्मज** पु० ६त०। हनुमति, भीमे, वह्नौ च "वायोरग्निरि"ति श्रुतेस्तस्य वायुजातत्वात्तत्सुतत्वम्। पवनसुतादयोऽप्यत्र।

**पवनाश** पु० पवनमश्नाति अश-अण् । सर्पे, वायुभक्षके त्रि० । युच् । पवनाशनोऽप्यत्र ।

**पवमान** पु० पूङ्-शानच् । वायौ ।

**पवि** पु० पू-इन् । वज्रे ।

**पवित** त्रि० पू-क्त । पवित्रे, स्तुते च मरिचे न० ।

**पवित्र** स्त्री० न० पू-इत्र । यज्ञाद्यर्थे, कुशे "पवित्रासि वैष्णवी"ति यजुर्मन्त्रः । ताम्रे, जले, वर्षणे, घर्षणे, अर्घोपकरणे, यज्ञोपवीते, मधुनि, घृते, "अनन्तर्गर्भितं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं सर्वकर्म"स्वित्युक्ते कुशद्वये च न० । व्रतादिना शुद्धे त्रि० । तिलवृक्षे, पुत्रजीववृक्षे च पु० । तुलस्यां, हरिद्रायां, नदीभेदे च स्त्री० ।

**पवित्रक** पु० पवित्र-स्वार्थे कन् । अश्वत्थे, उदुम्बरे, कुशे, दमनकवृक्षे च ।

**पवित्रारोपण** न० पवित्रस्य यज्ञोपवीतस्य विष्णवे आरोपणं दानं यत्र । "श्रावणशुक्लद्वादश्यां केशवोद्देशेन यज्ञोपवीतदानरूपे उत्सवे । पवित्रारोहणमप्यत्र ।

**पश**(ष) बाधे भ्वा० उभ० आ सक० सेट् । पश(ष)ति ते अपशी(षी)त् अपाशी(षी)त् अपशि(षि)ष्ट ।

**पश**(ष) स्पर्शे, गतौ, अनुपसर्गात् बन्धे, बाधे च अद० चु० उभ०सक० सेट् । पश(ष)यति ते अपपश(ष)त् त ।

**पश**(ष) बन्धे चुरा० उभ०सक० सेट् । पाश(ष)यति ते अपीपश(ष)त्त ।

**पशु** पु० सर्वमविशेषेण पश्यति दृश-कु पशादेशः । छागादौ लोमवल्लाङ्गूलवति जन्तुभेदे, देवे च । दर्शनार्थेऽव्ययम् ।

**पशुपति** पु० पशूनां सर्वत्र समदर्शिनां देवानां पतिः । महादेवे ।

**पशुराज** पु० पशूनां राजा टच् समा० । सिंहे ।

**पशुहरितकी** स्त्री० पशूनां हरीतकीव हितकारित्वात् । आम्रातकफले

**पश्चात्** अव्य० अपर+प्रथमापञ्चमीसप्तम्यर्थे आति पश्चादेशः । प्रथमाद्यर्थंहस्तेरपरशब्दस्यार्थे, चरमे, अधिकारे च । [अनुशोचने ।

**पश्चात्ताप** पु०पश्चात् चरमस्तापः । अनुशये कृतस्य कर्मणोऽनुचितत्वधिया

पश्चार्द्ध पु० अपरमर्द्धं पश्चादेशः । शेषार्द्धे अपरभागे, "पश्चार्द्धेन प्रविष्टः शरपतनभया"दिति शकुन्तला ।

पश्चिम त्रि० पश्चात् भवः डिमच् । शेषभवे । प्रतीच्यामस्ताचललक्षित-कष्टायां दिशि स्त्री० । [चौरभेदे ।

पश्यतोहर पु० पश्यन्तमनादृत्य हरति हृ-अच् अलुक् ६त० ।

पश्यन्ती स्त्री० दृश-शतृ-ङीप् । परादिशब्दचतुष्टयमध्ये शब्दभेदे विस्तरो वाचस्पत्ये ।

पश्वाचार पु० पशुर्द्वैधः समदर्शी तस्येवाचारः । तन्त्रोक्ते वैदिकमार्गा-नुसारिणि आचारे । [अपसिष्ट ।

पस बाधे, ग्रन्थे च भ्वा०उभ०सक०सेट् । पसति ते अपसीत्-अपासीत्

पस नाशने चु० उभ० सक० सेट् इदित् । पंसयति ते अपपंसत्-त ।

पह्नव पु० म्लेच्छधारिस्ले च्छजातिभेदे, "शका यवनकाम्बोजाः पारदाः पह्नवास्तथे"ति मनुः ।

पा पाने भ्वा०पर०सक०अनिट् । पिबति अपात् । णिच् पाययति ।

पा रक्षणे अदा०पर०सक०सेट् । पाति अपासीत् । णिच्-पालयति ।

पांशव पु० पांशोर्विकारः अण् । (पाङ्गा) लवणभेदे, पांशुजादयोऽप्यत्र

पांशु(सु) पु० पश-पसि-वा कु० दृ० । धूलौ, शस्यार्थं चिरसञ्चिते शुष्कगोमये, कर्पूरभेदे च ।

पांशुपत्र न० पांशुभिः सञ्चितगोमये पत्रमस्य । वास्तूकशाके ।

पांशुर पु० पांशु राति रा क । खञ्जे, दंशके च (डांश) ।

पांशुल पांशुः पांशु तुल्यं पापमस्यास्ति । पापवति, पुंश्चले च । कुल-टायां स्त्री० । "अपांशुलानां धुरि कीर्त्तनीये"ति रघुः । विभूति-युक्ते शिवे पु० । धूलियुक्ते त्रि० । "त्रेधा निदधे पदं समूढमस्य पांशुले" इति श्रुतिः ।

पांसन त्रि० पसि-ल्यु दृ० । दूषके ।

पाक पु० पच भावे घञ् । पचने, छेदने, छेदनेन निष्पादने निष्पत्तौ, परिणामे च आधारे घञ् । स्थाल्यादौ, मेचके, राज्ञादिभङ्गे,

भये च। पिबति स्तनं पा—क। शिशौ त्रि० स्त्रियां पाका।

**पाककृष्ण** पु० फलपाके कृष्णः। (पानीआमला) वृक्षभेदे।

**पाककृष्णफल** पु० पाके परिणामे कृष्णं फलं यस्य। (पानीआमला) वृक्षभेदे।

**पाकज** न० पाकाज्जायते जन—ड। काचलवणे। पाकजातमात्रे त्रि०।

**पाकयज्ञ** पु० पाकसाध्यो यज्ञः। चरुपाकसाध्ये वृषोत्सर्गादौ कर्मणि।

**पाकरञ्जन** न० पाकं पच्यमानं रञ्जयति रन्ज—णिच्—ल्युट्। तेजपत्रे। [पु०। कर्कोट्यां स्त्री०गौ० ङीप्।

**पाकल** न० पाकं लाति ला-क। कुष्ठौषधौ (कुड)। वह्नौ, वायौ च

**पाकशाला** स्त्री० ६त०। पाकस्थाने। पाकगृहपाकस्थानादयोऽप्यत्र।

**पाकशासन** पु० पाकं तन्नामासुरं शास्ति शास—ल्यु। इन्द्रे।

**पाकिम** त्रि० पाकेन निर्वृत्तम् इमन्। पाकनिष्पन्ने।

**पाक्य** न० पच ण्यत् कुत्वम्। विड्लवणे पांशुलवणे च। यवक्षारे पु०

**पाक्षिक** त्रि० पक्षतः प्राप्तः ठक्। पक्षतः प्राप्ते, प्राप्त्यप्राप्तिसम्भावनाविषये एकतरपक्षे दत्तहस्ते नियमे, "नियमः पाक्षिके सती"ति मीमांसा।

**पाचक** पु० पचति पच—ण्वुल्। वह्नौ। पाककर्त्तरि सूदादौ भुक्तान्नजारकौषधौ च त्रि०। पित्ताख्ये धातुभेदे न०।

**पाचन** न० पच—णिच्—ल्युट्। पित्तादिदोषनाशके वैद्यकोक्ते क्वाथभेदे, प्रायश्चित्ते च। पच—णिच्—कर्त्तरि ल्यु। वह्नौ, अम्लरसे, रक्तैरण्डे च पु०। हरितक्यां स्त्री० ङीप्।

**पाञ्चजन्य** पु० पञ्चजने दैत्यभेदे भवः यञ्। विष्णुशङ्खे "पाञ्चजन्यं हृषीकेशः" इति गीता। [पाञ्चाली।

**पाञ्चाल** त्रि० पञ्चालदेशे भवः अण्। पञ्चालदेशभवे। स्त्रियां ङीप्

**पाटच्चर** पु० पटच्चर एव स्वार्थे प्रज्ञादित्वादण्। चौरे।

**पाटल** पु० पाटयति पट—णिच्—कलच्। श्वेतरक्तवर्णे। तद्वति त्रि० (पारुल) ख्याते वृक्षे स्त्री०। तत्पुष्पे, आशुधान्ये च न०।

**पाटलि** स्त्री० पट—णिच् अलि वा ङीप् (पारुल) ख्याते वृक्षे "पा-

टलिसंसर्गसुरभिवनवाताः" इति शकुन्तला। श्वेतपाटलौ च।

**पाटलिपुत्र** न० (पाटना) इति ख्याते नगरभेदे।

**पाटव** न० पटोर्भावः अण्। पटुतायाम् क्रियायोग्यतायाम् आरोग्ये च "अपाटवाद्यशौचाद्यै"रिति स्मृतिः।

**पाटी** स्त्री० पट-णिच् इन् ङीप्। धारायां, व्यक्तगणनायां लीलावत्यादौ (बाला) इति ख्याते क्षुपे च। [च।

**पाठ** पु० पठ-घञ्। अक्षराणामुच्चारणे गुरुमुखश्रवणपूर्वकोच्चारणे

**पाठक** पु० पठति पाठयति वा ण्वुल् अध्येतरि, अध्यापके च।

**पाठशाला** स्त्री० ६त०। पाठमन्दिरे।

**पाठा** स्त्री० पठ-कर्मणि घञ् टाप्। निम्नकर्ण्याम् (आकनादि।

**पाठिन्** पु० पठ-णिनि। चित्रकवृक्षे। पाठके त्रि०।

**पाठीन** पु० पाठिं पृष्ठं नमयति नम-ड दीर्घः। गुग्गुलुवृक्षे मत्स्यभेदे च (बोयाल) "पाठीनरोहिताबाद्यावि"ति मनुः पठ-ईनण्। पाठके त्रि०। पण्यगोष्ठ्यां, हट्टे च स्त्री०।

**पाणि** पु० पण-इण् आयाभावः। करे, कुलिके हस्ते च (कुलेखाड़ा)

**पाणिगृहीती** स्त्री० पाणिर्गृहीतो यस्याः ङीप्। भार्य्यायाम्।

**पाणिग्रहण** न० पाणिर्गृह्यतेऽत्र ग्रह-आधारे ल्युट्। विवाहे। "पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते" इति मनुः। पाणिपीडनादयोऽप्यत्र।

**पाणिघ** पु० पाणिं हन्ति, पाणिना वा हन्ति वादयति हन-टक् कुत्वम्। पाणिताड़के, पाणिना मृदङ्गादिवादके च।

**पाणिनि** पु० पणनं पणः ततः अस्त्यर्थे इनि तदपत्यम् अण् तस्य छात्रः इञ्। अष्टाध्यायीव्याकरणादिकारके दाक्षीपुत्रे शालातुरीयग्रामभवे मुनिभेदे।"सिंहो व्याकरणस्य कर्त्तुरहरत् प्राणान् प्रियान् पाणिने"रिति पञ्चतन्त्रम्।

**पाणिनीय** त्रि० पाणिनिना प्रोक्तम्, तस्येदम् वा छ। पाणिनिना कृते अष्टाध्यायीरूपादौ व्याकरणादौ।

**पाणिभुज्** पु० पाणिरिव भुज्यते मोट्यते भुज-मोटने क्विप्। उदु-

म्बरवृक्षे । पाणिना भुङ्क्ते भुज क्विप् । हस्तेन भक्षके त्रि० ।

**पाणिवाद** पु० पाणिं, पाणिना वा मृदङ्गादिकं वादयति वद-णिच्-अच् वा । हस्ततालके, हस्तेन मृदङ्गादिवादके च । ण्वुल् । पाणिवादकोऽप्यत्र ।

**पाणिसर्ग्या** स्त्री० पाणिना सृज्यतेऽसौ सृज-ण्यत् । रज्जौ ।

**पाण्डर** पु० पडि-अर दीर्घश्च । मरुवकवृक्षे, श्वेतवर्णे च । तद्वति त्रि० । कुन्दपुष्पे, गैरिके च न० । [ युधिष्ठिरादौ ।

**पाण्डव** पु० पाण्डोरपत्यम् अण् । चन्द्रवंश्यस्य नृपभेदस्य क्षेत्रजे पुत्रे

**पाण्डु** पु० पडि-कु नि० दीर्घः । चन्द्रवंश्ये, नृपभेदे, श्वेतवर्णे, केतकी धूलिसन्निभे पीतवर्णाढ्ये वर्णभेदे च । तद्वति त्रि० नागभेदे, श्वेतहस्तिनि, रोगभेदे, पटोलवृक्षे च पु० । माषपर्ण्यां स्त्री० ।

**पाण्डुकण्टक** पु० पाण्डुवर्णानि कण्टकानि यस्य । अपामार्गे ।

**पाण्डुकम्बल** पु० कर्म० । श्वेतवर्णप्रावारे । कम्बल इव । पाण्डुः राज० । प्रस्तरभेदे । [ वर्णकम्बलप्रावृते रथे ।

**पाण्डुकम्बलिन्** पु० पाण्डुकम्बल+अस्त्यर्थे इनि । पाण्डु-

**पाण्डुतरु** पु० कर्म० । धववृक्षे । [ हस्तिनि, श्वेतवर्णे च ।

**पाण्डुनाग** पु० नाग इव पाण्डुः राज० । पुन्नागवृक्षे, श्वेत

**पाण्डुफल** पु० पाण्डूनि फलान्यस्य । पटोले । चिर्भिटायां स्त्री० ।

**पाण्डुर** पु० पाण्डुवर्णोऽस्यास्ति र । श्वेतपीतमिश्रिते वर्णे । पडि-उर पृ० वृद्धिः । श्वेतवर्णे च । तद्वति त्रि० कामलाख्ये रोगे, श्वित्ररोगे च न० । माषपर्ण्यां स्त्री० टाप् ।

**पाण्डुरङ्ग** पु० पाण्डुरङ्गमस्य प्रक० । (पाटराङ्गा) शाके ।

**पाण्डुरद्रुम** पु० कर्म० । कुटजवृक्षे (कुड्ची) ।

**पाण्डुराग** पु० पाण्डुः रागो वर्णो यस्य । दमनकवृक्षे ।

**पाण्डुलोमशा** स्त्री० पाण्डूनि लोमानीवाङ्गानि सन्ति यस्याः श । माषपर्ण्याम् । श्वेतलोमवति त्रि० ।

**पात** पु० पत-घञ् पतने । पा-क्त । रक्षिते त्रि० । पत-ण । ज्योतिषोक्ते क्रान्तिसाम्यसम्पादके राहुरूपे ग्रहभेदे ।

**पातक** न० पातयति अधो गमयति पत–णिच्–ण्वुल् । पातित्य सम्पादके पापे, पापजनके प्राणिवधादौ च ।

**पातञ्जल** न० पतञ्जलिना प्रोक्तम् अण् । पाणिनिसूत्रवार्त्तिकव्याख्यानरूपे "अथ शब्दानुशासन"मित्यादिके महाभाष्ये, "अथ योगानुशासन"मित्यादिके–योगशास्त्रे च ।

**पाताल** न० पत–आलञ् । धरायास्तलस्थे भुवने, ज्योतिषोक्ते लग्नाच्चतुर्थे स्थाने च ।

**पातालनिवास** पु० नि+वस–आधारे घञ् पाताले निवासो यस्य । दैत्ये पातालनिलयादयोऽप्यत्र ।

**पातुक** त्रि० पत–उकञ् पतनशीले । प्रपाते, जलहस्तिनि च पु० ।

**पात्र** न०स्त्री० पाति रक्षत्याधेय, पिबत्यनेन वा पा-ष्ट्रन् स्त्रियां ङीप् । जलाद्याधारे भोजनयोग्ये अमत्रे, विद्यादियुक्ते दानयोग्ये ब्राह्मणे "ब्राह्मणं पात्रमाहुः"इतिस्मृतिः यज्ञिये स्रुवादौ, तीरद्वयमध्यवर्त्तिनि जलाधारस्थाने, नाटके ऽभिनेये नायकादौ च न० ।

**पात्रीय** त्रि० पात्रे यज्ञपात्रे योग्यः छ । यज्ञद्रव्ये । स्वार्थे छ । योग्ये, "विप्रः पात्रीयतामियाद्"ति स्मृतिः ।

**पात्रेसमित** त्रि० पात्रे भोजनपात्रासादनकाले एव समितः सङ्गतः । भोजनादन्यत्र अनुपस्थिते कार्य्यादौ ।

**पाथ** न० पीयतेऽदः थ । जले । पाति रक्षति थ । अग्नौ, सूर्य्ये च ।

**पाथस्** न० पाति रक्षति, पीयते वा पा–पाने, रक्षणे वा असुन् थुक् च । जले, अन्ने च अन्नभोजने हि देहरक्षा ।

**पाथेय** त्रि० पथि हितं ढञ् । पथि भोजनोचिते द्रव्ये ।

**पाद्** पु० पद–णिच् क्विप् । चरणे पादे । [ देवमूले च ।

**पाद** पु० पद्यते गम्यतेऽनेन करणे घञ् । चरणे, चतुर्थांशे, वृक्ष–

**पादकटक** पु० पादस्य कटक इव । नूपुरे ।

**पादकृच्छ्र** पु० पादमितशलर्यांशमितः कृच्छ्रः शाक० । "उपवासेन चैकेन पादकृच्छ्र उदाहृत" इत्युक्ते व्रतभेदे ।

पादग्रहण न० पादयोः ग्रहणं यत्र । पादग्रहणपूर्ब्बके प्रणामभेदे "अमुष्य पादग्रहणं प्रत्यहञ्चाभिवादन"मिति मनुः ।
पादचारिन् पु० पादेन चरति चर-णिनि इत० । पदातौ । पद्भ्यां गन्तरि त्रि० ।
पादत्राण न० पादौ त्रायेते येन त्रै-करणे ल्युट् । पादुकायाम् ।
पादप पु० पादेन मूलेन पिबति सिक्तं जलम् पा-क । वृक्षे । पादं पाति रक्षति पा-क । पादपीठे ।
पादपरुहा स्त्री० पादपं रोहति रुह-क । वन्दायाम् (परगाछा) ।
पादपीठ न० ६ त० । पादस्थापनासने । सिंहासनं तस्य सपादपीठमि"ति भट्टिः । पादुकायां स्त्री० टाप् ।
पादमूल न० ६ त० । चरणस्याधोभागे ।
पादरोह पु० पादेन मूलेन रोहति रुह-अच् । वटवृक्षे ।
पादवल्मीक न० पादस्य वल्मीकमिव । श्लीपदरोगे (गोद) ।
पादविक त्रि० पदवीं धावति ठक् । पथिके पथिधावके ।
पादविरजस् स्त्री० पादौ विरजसौ धूलिशून्यौ यस्याः । ५ ब० । पादुकायाम् । [ टानाटौ ।
पादशस् अव्य० पादं पादं ददाति करोति वा शस् । ( पोयापोया )
पादशैल पु० पादाकारः शैलः । प्रत्यन्तपर्वते ।
पादस्फोट पु० । पादौ स्फोटयति अण् । रोगभेदे ।
पादाग्र न० ६ त० । चरणाग्रभागे प्रपदे ।
पादाङ्गद न० पादस्य अङ्गदमिव । नूपुरे ।
पादात न० पदातीनां समूहः अण् । सैन्यसमुदाये पादाभ्यामतति गच्छति अच् । पदातौ सैन्ये । पादातिपादातिकोऽप्यत्र ।
पादुका स्त्री० पद-णिच्-ऊ ततः स्वार्थे कन् ह्रस्वः । चर्ममये पादाच्छादने पदार्थे (जुता) । कनभावे पादूरप्यत्र ।
पादुकाकार पु० पादुकां करोति कृ-अण् उप० । चर्मकारे पादूकृत्पादुकाकृदादयोऽप्यत्र ।
पाद्य न० पादाय पादप्रक्षालनाय साधु यत् । पादप्रक्षालनार्थे जले

अर्पा स्त्रीत्वेन स्त्रीत्वमपि । पाद्याः पाद्याः इत्यादि पाद्यदानमन्त्रः ।

**पान** न० पा—ल्युट् । द्रवद्रव्यस्य गलाधःसंयोजने, रक्षणे च आधारे ल्युट् । पानभाजने ।

**पानगोष्ठी** स्त्री० पानार्थं गोष्ठीसभा । (चक्र) पानार्थं सभायाम् ।

**पानभाजन** न० पीयतेऽस्मिन् पा—ल्युट् कर्म० । पानपात्रे पानपात्रादयोऽप्यत्र ।

**पानीय** न० पीयते यत् पा—अनीयर् । जले । पातव्ये रक्षितव्ये च त्रि० । [ कुम्भग्राम् ।

**पानीयपृष्ठज** पु० पानीयपृष्ठे जलोपरि जायते जन—ड । ( पाना )

**पानीयफल** न० ६त० । (माखना) जलकन्दफलभेदे ।

**पानीयमूलक** न० पानीये मूलं यस्य कप् । सोमराज्याम् ।

**पानीयशालिका** स्त्री० पीयतेऽस्याम् आधारे अनीयर् तादृशी पानीयवितरणार्थं शा या शाला स्वार्थे कन् । प्रपायाम् (जलछत्रघटे) ।

**पानीयामलक** न० कर्म० । (पानिआमला) वृक्षभेदे ।

**पान्थ** पु० पन्थानं गच्छति पथिन्+अण् पन्थादेशः । पथिके ।

**पाप** न० पाति रक्षति आत्मानमस्मात् पा—अपादाने प । नरकहेतौ दुरदृष्टे, तत्साधने हिंसादौ, ज्योतिषोक्तेषु क्षीणचन्द्ररविप्रभृतिषु ग्रहेषु । [ पापनाशके त्रि० ।

**पापघ्न** पु० पापं हन्ति टक् । तिले तस्य हि दानेन पापनाशकत्वम् ।

**पापचेली** स्त्री० पुनः पुनः पचति पा—यङ्—अच् पापचोवायुस्तमीरयति ईर—अण् रस्य लः । (आकनादि) पाठालतायाम् ।

**पापपुरुष** पु० पापात्मकः पुरुषः पुरुषाकारः । तन्त्रोक्ते वाम कुक्षिस्थे पापात्मके ध्येये नराकारे पदार्थे ।

**पापशमनी** स्त्री० पापं शम्यतेऽनया शम—णिच्—करणे ल्युट् । ङीप् । शमीवृक्षे ।

**पापात्मन्** पु० पापयुक्त आत्मा अन्तः करणं यस्य । पापान्विते जीवे “पापात्मा पापसम्भव” इति पुराणम् ।

**पाप्मन्** पु० आप्नोति व्याप्नोति आप—मनिन् नि० । पापे ।

**पामन्** न० पा—मनिन् । विचर्चिकायां (खोस पाचड़ा) स्त्रीत्वमपि मनन्तात् ङीप् । पामाप्यत्र ।

**पामघ्न** पु० पाम हन्ति हन—टक् । गन्धके । कटुक्यां स्त्री० ङीप् ।

**पामन** त्रि० पामास्त्यस्य अस्त्यर्थे न । पामरोगवति ।

**पामर** त्रि० पाति क्विप् पाः तयीधर्म्मः स म्रियतेऽनेन मृ—घ । मूर्खे, नीचे, खले च । [ गुडूच्याम् ।

**पामरोद्गारा** स्त्री० पामरमुद्गरति उद्—गृ अण् अजादित्वात् टाप् ।

**पामारि** पु० ६ त० । गन्धके तत्सेवने हि पामरोगनाशः ।

**पायस** पु० पयसि दुग्धे संस्कृतः अण् । परमान्ने । पयः सम्बन्धिनि त्रि० "पायसं दधिसक्तव" इति स्मृतिः । चन्दने च ।

**पायु** पु० पा—उण् । अपानवायुस्थाने ।

**पाय्य** न० मीयतेऽनेन मा—ण्यत् नि० पादेशः । परिमाणे । पानीये न० । निन्दनीये त्रि० । [ अपपारत् त ।

**पार** कर्मसमाप्तौ अद० चु० उभ० सक० सेट् । पारयति ते

**पार** न० परमेव अण् पारं परं तीरं पृ—घञ् वा । नद्योलङ्घनेन प्राप्ये परे तीरे । पार—अच्—घञ् । प्रान्तभागे ।

**पारक्य** त्रि० परलोकाय हितं ष्यञ् । कुक् च । परलोकहितसाधने कर्मणि । [शेषगामिणि च ।

**पारग** त्रि० पारं गच्छति गम—ड । कर्मसमाप्तिकर्त्तरि, परपारंगन्तरि

**पारण** न० पार—ल्युट् । व्रतान्तभोजने । युच् । तत्रैव स्त्री० । "तव पारणा स्या"दिति रघुः । पृ—णिच्—ल्यु । मेघे पु० ।

**पारतन्त्र्य** न० परतन्त्रस्य भावः ष्यञ् । पराधीनत्वे "पारतन्त्र्यं विधेः कृत" इति मीमांसा । [ कर्म्मणि परलोकभवे च ।

**पारत्रिक** त्रि० परत्र भवं, हितं वा ठक् । परलोकहितकारके

**पारद**(त) पु० पॄ—णिच्—तन्, पृ० तस्य दः वा । धातुभेदे (पारा) पारं ददाति दा—क । पारदायिनि त्रि० ।

**पारदारिक** पु० परस्य दारान् गच्छति ठक् । यथेष्टं परस्त्रीगामिणि ।

**पारदार्य्य** पु० परस्य दारा एव दारा यस्य तस्य भावः ष्यञ् । पर-

दारगमने "पारदार्य्यं पारिवित्त" मत्य,पपातकगणने स्मृतिः ।

**पारमार्थिक** त्रि॰ परमार्थाय पारलौकिकधर्माय हितं ठक् । परमार्थोपायभूते श्रेयःसाधने कर्मणि ।

**पारम्पर्य्य** न॰ परम्परैव स्वार्थे ष्यञ् । कुलादिपरम्परयाम् "पारम्पर्य्यक्रमागत" इति स्मृतिः ।

**पारम्पर्य्योपदेश** पु॰ पारम्पर्य्येण पित्रादिपरम्परया उपदेशः न तु साक्षात्कारादिज्ञानम् । ऐतिह्ये "यथा इह वटे यक्ष" इत्यादिरुपदिश्यते एव सर्वैः, न तु तत्र यक्षः केनचित् दृश्यते ।

**पारलौकिक** त्रि॰ परलोकाय हितं ठक् द्विपदवृद्धिः । परलोके, जन्मान्तरादौ, हिते कर्मणि ।

**पारशव** पु॰ "निषादः शूद्रकन्यायां यः पारशव उच्यते । स पारयन्नेव शवस्तस्मात् पारशवः स्मृत" इति मनूक्ते ऊढायां शूद्रायां ब्राह्मणेनोत्पादिते निषादरूपे सङ्कीर्णवर्णे, परस्त्रीतनये, लौहे च । परशु+इदमर्थे ऽण् । परशुसम्बन्धिनि त्रि॰ ।

**पारश्वध** पु॰ परश्वधः प्रहरणमस्य अण् । परशुना युद्धकर्त्तरि । ठक् । पारश्वधिकोऽप्यत्र ।

**पारसीक** पु॰ देशभेदे तद्देशस्थे जने ब॰व॰ । "पारसीकांस्ततोजेतु"मिति रघुः । तद्देशस्थे घोटके पु॰ (आरविघोड़ा) ।

**पारस्त्रैणेय** त्रि॰ परस्त्रिया अपत्यं ढञ् इनङादेशः । जारजे परस्त्रियाः सुते । [(पायरा) ।

**पारापत** पु॰ पारादप्यापतति प्रेम्णा आ+पत–अच् । पारावते

**पारापा(वा)र** न॰ पारमपारञ्चास्त्यस्य अर्श आद्यच् । समुद्रे इ॰ । तटद्वये । पारावारशब्दोऽप्युभयत्र ।

**पारायण** न॰ पारं समाप्तिमयतेऽनेन अय–ल्युट् । साकल्ये, ग्रन्थादीनामाद्यन्ते, तत्पाठे च । [राद्यन्तपाठके ।

**पारायणिक** त्रि॰ पारायणमाद्यन्तमावर्त्तयति ठक् । पुराणादे-

**पारावत** पु॰ परं जीवनवति ज्ञानोपदेशेन अव–शत परावत् दत्तात्रेयः तस्येदमित्यण् । कपोते (पायरा) ।

**पारावतपदी** स्त्री० पारावतस्येव पादौ यस्याः ङीप् पदादेशः । काकजङ्घायाम् ।

**पारावताङ्घ्रि** पु० पारावतस्याङ्घ्रिरिव मूलमस्य । ज्योतिष्मतीलतायाम् ।

**पारावारीण** त्रि० पारमवारञ्च गच्छति खञ् । तटद्वयगामिनि, समुद्रपारगे च । पारापारीणोऽप्यत्र ।

**पाराशर** पु० पराशरस्यापत्यम् शिवाद्यण् । वेदव्यासे । तेन प्रोक्तमित्यण् । पराशरोक्ते भिक्षुसूत्रे । तत्स्मृतौ स्त्री० ङीप् । "कलौ पाराशरी स्मृति"रिति स्मृतिः ।

**पाराशरिन्** पु० पराशरेण प्रोक्तं भिक्षुसूत्रमध्येतया ऽस्त्यस्य इनि । भिक्षुके सर्वकर्मत्यागिनि संन्यासिनि ।

**पाराशर्य्य** पु० पराशरस्यापत्यं गर्गादित्वात् यञ् । वेदव्यासे । अत इञ् पाराशरिरप्यत्र ।

**पारिकाङ्क्षिन्** पु० पारमस्यास्ति इनि पारि ब्रह्मज्ञानं तत्काङ्क्षति णिनि । मौनव्रतधारिणि वाचंयमे मुनिभेदे ।

**पारिजात** पु० पारमस्यास्ति पारी समुद्रस्तत्र जातः जन—क्त । देवतरुभेदे । स्वार्थ कन् । अत्रैव ।

**पारिणाय्य** त्रि० परिणयकाले लब्धम् ष्यञ् । विवाहकाले लब्धे धने । "मातुः पारिणाय्यं स्त्रियो विभजेरन्नि"ति स्मृतिः ।

**पारि(री)न्द्र** पु० पृणाति छिनत्ति णिनि पारी इन्द्र इव शकन्ध्वा० वा । सिंहे, अजगरसर्पे च ।

**पारिपन्थिक** पु० परिपन्थं गृह्णाति ठक् । पन्थादेशश्च । चौरे ।

**पारिपा(या)त्र** पु० विन्ध्यपर्वतपश्चिमदेशे मालवदेशस्य सीमापर्वते । स्वार्थे कन् । तत्रैव ।

**पारिपार्श्विक** पु० परिपार्श्वं गृह्णाति तत्र चरति वा ठक् । सूत्रधारस्य पार्श्वचरे नटे, "नटो विदूषको वापि पारिपार्श्विक एव वे"ति सा० द० ।

**पारिप्लव** न० परि+प्लु—अच् स्वार्थेऽण् । चञ्चले, आकुले च ।

**पारिभद्र(क)** पु० परितो भद्रमस्त्यस्य प्रज्ञाद्यण् (पालदेमान्दार) वृक्षे

परिभद्राय कायति कै—क। देवदारुवृक्षे, निम्बवृक्षे च पु०। कुष्ठौषधौ न०।

**पारिभाव्य** न० परिभवाय रोगप्रशमनाय हितः ष्यञ्। कुष्ठौषधौ। परिभुवः प्रतिभुवो भावः ष्यञ्। प्रतिभूभवने "साक्षित्वं प्रातिभाव्यञ्चे"ति स्मृतिः।

**पारिमाण्डल्य** न० परितो मण्डलं यस्य, सर्वत्र विद्यमानत्वात् परिमण्डलः परमाणुस्तस्य भावः ष्यञ्। न्यायोक्ते कारणताशून्ये परमाणुपरिमाणे। [ख्याते वृक्षे।

**पारिश** पु० पिपर्त्ति पृ णिनि पारी तं श्यति शो—क। (पलाश पिपुल)

**पारिषद** त्रि० परिषदि भवः तिष्ठति वा अण्। सभास्थे सभ्ये। यञ्। पारिषद्योऽप्यत्र। [बलये, कटके।

**पारिहार्य** पु० परिह्रियतेऽसौ परि+हृ—कर्मणि घञ् स्वार्थे ष्यञ्।

**पारीण** त्रि० पारं गच्छति पार—खञ्। पारगे, कर्मसमाप्तिकारके।

**पार्थ** पु० पृथाया अपत्यम् अण्। पृथापुत्रे, युधिष्ठिरादौ, अर्जुने वृक्षे, पृथिवीपतौ च।

**पार्थिव** पु० पृथिव्या ईश्वरः अण्। राजनि। पृथिव्या विकारः इदं वा अण्। भूमिभवे त्रि०। सीतायां स्त्री०। तगरपुष्पे न०।

**पार्वण** त्रि० पर्वणि पूर्णिमादौ भवः अण्। पूर्णिमादिभवे "न शारदः पार्वणशर्वरीश्वर" इति नैषधम् पर्वणि अमावस्यादौ विहितम् अण्। स्मृत्युक्ते श्राद्धभेदे न०। पृ-वनिप् प्रज्ञाद्यण्। मृगभेदे पु०।

**पार्वत** पु० पर्वते भवः अण्। (घोड़ानिम्ब) निम्बभेदे, पर्वतजातमात्रे त्रि०। शल्लक्यां, गोपालपतिकायां, जीवन्त्यां, सौराष्ट्रमृत्तिकायाम्, क्षुद्रपाषाणभेदायां, धातक्यां, दुर्गायाञ्च स्त्री० ङीप्।

**पार्वतीनन्दन** पु० ६त०। कार्त्तिकेये, पार्वतीसुतादयोऽप्यत्र।

**पार्वतेय** न० पर्वते भवं ढक्। सौवीराञ्जने। सूर्यावर्त्तवृक्षे पु०।

**पार्श्व** पु० न० स्पृश-स्पश् धातोः पृ च। कक्षाधोभागे, समीपे, चक्रे, पाशे च। पर्शूनां पार्श्वस्थां समूहः पर्शू+णस्। पर्शूसमूहे न०।

**पार्श्वपरिवर्त्तन** न० पार्श्वेन परिवर्त्तनम्। यत्पार्श्वमधःस्थापयित्वा

शयितं तत्पार्श्वस्योर्द्धशयने (पाशमोड़ा) पार्श्वस्य परावृत्तौ । शयनस्य हरेः भाद्रशुक्लद्वादश्यां कर्त्तव्ये पार्श्वपरिवर्त्तनाख्ये उत्सवभेदे च ।

**पार्श्वस्थास्थि** न० कर्म० । (पाजर) शरीरपार्श्वस्थिते अस्थ्नि ।

**पार्षद** पु० पर्षदि भवस्तत्र स्थितो वा अण् सभास्थे । ष्यञ् पार्षद्योऽप्यत्र

**पार्ष्णि** पु० स्त्री० पृष–नि नि० वृद्धिः । पादग्रन्थेः गुल्फस्याधोभागे । (गोड़ारि) पृष्ठे, सैन्यपृष्ठे, जिगीषायाञ्च पु० ।

**पार्ष्णिग्राह** पु० पार्ष्णिं पृष्ठपदं गृह्णाति अण् । विजयार्थं जिगमिषोः पश्चात्पदग्राहिणि पृष्ठस्थे शत्रौ ।

**पाल** रक्षणे चु० उ० स० सेट् । पालयति ते अपीपलत् त ।

**पाल** त्रि० पालयति पाल–अच् । रक्षके "पालदोषविनाशे च पाले दण्डोविधीयते" इति स्मृतिः ।

**पालक** पु० पालयति पाल–ण्वुल् । अश्वरक्षके, चित्रकवृक्षे च ।

**पालघ्न** पु० पालं छत्रं हन्ति हन–ठक् । छत्राख्ये जलजतृणभेदे ।

**पालङ्क** पु० पाल–सम्प० क्विप् पाला अङ्क्यते अङ्क–घञ् । (पालङ) शाकभेदे स्त्रीत्वमपि ङीप् । अत्रैव । कुन्दुरुवृक्षे स्त्री० गौ० ङीष् । कर्मणि यत् पालङ्क्याप्यत्र ।

**पालाश** न० पलाशं पर्णमस्त्यस्य प्रज्ञाद्यण् । तेजपत्रे । तद्वर्णोऽस्त्यस्य । हरिद्वर्णे पु० तद्वति, पलाशस्येदम् अण् । पलाशसम्बन्धिनि च त्रि० । "ब्राह्मणस्य पालाशोदण्ड" इति स्मृतिः ।

**पालि(ली)** पाल–इन् वा ङीप् । कोणे, पङ्क्तौ, यूकायाम्, सेतौ, प्रान्तभागे, प्रशंसायां, क्रोड़े, च । स्वार्थे कन् । कोणे, कर्णपत्रे च ।

**पालिन्द** पु० पालिं ददाति दा–क पृ० मुम् । कुन्दुरुवृक्षे । श्यामा-लतायां स्त्री० गौरा० ङीष् ।

**पावक** पु० पुनाति पू–ण्वुल् । वह्नौ, वैद्युताग्नौ च ।

**पावकि** पु० पावक+अपत्यार्थे इञ् । कार्त्तिकेये स हि शिववीर्य्यात् वह्नौ निहिताज्जात इति पुराणम् ।

**पावन** पु० पावयति पू–णिच्–ल्यु । अग्नौ, व्यासे, सिह्लके, पीतभृङ्गराजे च । गोमये, प्रायश्चित्ते, कृच्छ्रसाध्ये कर्मणि, च न० ।

पाश्यतेऽनया ल्युट् ङीप् । गङ्गायां, हरीतक्यां, तुलस्याञ्च स्त्री० । पवित्रतासाधके त्रि० ।

**पाश** पु० पश्यते बध्यतेऽनेन पश-घञ् । मृगपक्ष्यादिबन्धने रज्जुभेदे (फांद) रज्जुमात्रे च । केशादुत्तरं पाशः समूहार्थः । यथा केशपाशः । कर्णात् परः शोभार्थः । यथा कर्णपाशः शोभनकर्ण इत्यर्थः । छात्रादिभ्यः पाशप् । अपकृष्टछात्र इत्याद्यर्थे ।

**पाशक** पु० पश-ण्वुल् । द्यूतक्रीड़ासाधने गुटिकादौ (पाशा) ।

**पाशपाणि** पु० पाशः पाणौ यस्य । वरुणे पाशहस्तादयोऽप्यत्र पाश+इनि । पाशीत्यप्यत्र ।

**पाशुपत** पु० पशुपतेरिदं, सोऽस्य देवता वा अण् । वकवृक्षे । मतभेदे, अस्त्रभेदे च न० । तद्भक्ते त्रि० ।

**[पा]शुपाल्य** न० पशून् पालयति अण् तस्य भावः ततः ष्यञ् । [वैश्यधर्मे ।

**पाश्चात्य** त्रि० पश्चाद् भवः त्यक् । पश्चिमदेशभवे ।

**पाश्या** स्त्री० पाशानां समूहः यत् । पाशसमूहे ।

**पाष(ख)ण्ड** पु० पाति रक्षति दुरितेभ्यः पा-क्विप् पाः वेदधर्मस्तं षण्डयति निष्फलं करोति, खण्डयति वा । "पालनाच्च त्रयीधर्मः पाशब्देन निगद्यते (ष)खण्डयन्ति तु तं यस्मात् पा(ष)खण्डस्तेन कीर्त्तिताः" इत्युक्ते वेदाचारत्यागिनि ।

**पाषण्डिन्** पु० पां वेदधर्मं षण्डयति षण्ड+णिच् इनि । पाषण्ड

**पाषाण** पु० पिनष्टि पिष-संचूर्णने आनच् पृ० । प्रस्तरे अल्पार्थे ङीप् । (वाटखारा) तुलामानपाषाणे ।

**पाषाणदारक** पु० पाषाणं दारयति दृ-ण्वुल् । टङ्कास्त्रे (पाथरकाटाछेनी) । युच् । पाषाणदारणोऽप्यत्र ।

**पाषाणभेदन** पु० पाषाणं भिनत्ति ल्यु । (हाड़जोड़ा) वृक्षभेदे ।

**पाषाणभेदिन्** पु० पाषाणं भिनत्ति भिद्-णिनि ( पाथरचुर ) । वृक्षभेदे ।

**पि** गतौ तु० कु० पर० अनिट् । पियति । अपैपीत् ।

पिक पु० अपि—कायति कै—क अपेरतोलोपः। कोकिले।

पिकप्रिया स्त्री० ६त०। महाजम्ब्वाम्।

पिकबन्धु पु० ६त०। आम्रवृक्षे।

पिङ्ग पु० पिजि—वर्णे—अच् नङ्का० कुत्वम्। मूषके दीपशिखाभे पिङ्गलवर्णे च। तद्वति त्रि०। हरिताले न०। गोरोचनायां, नालिकायां दुर्गायाम् हरिद्रायां, हिङ्गुनि, वंशरोचनायाञ्च स्त्री० टाप्। शमीवृक्षे स्त्री० ङीप्।

पिङ्गल पु० पिङ्गं लाति—ला—क, पिजि—कलच् वा कुत्वम्। नागभेदे, रुद्रे, सूर्य्यपारिपार्श्विके, वानरे, निधिभेदे, मुनिभेदे, मङ्गले ग्रहे, स्थावरविषभेदे, क्षुद्रोलूके ६०वर्षमध्ये "पिङ्गले चारुपञ्चाशि! दुर्भिक्षं नर्म्मदातटे" इत्युक्तलक्षणे वत्सरभेदे, प्राकृतच्छन्दोग्रन्थकारके, नागरूपे मुनिभेदे, दीपशिखातुल्ये वर्णे च तद्वति त्रि०। "कुमुददिग्गजस्य योषिति" नाड़ीभेदे, राजनीतौ, शिंशपावृक्षे वामनाख्यदिग्गजस्य योषिति, वेश्याभेदे च स्त्री० टाप्। "यथा संछिद्य कान्तायां सुखं सुष्वाप पिङ्गले"ति पुराणम्।

पिङ्गललोह न० लौहं धातुः कर्म्म०। पित्तले।

पिङ्गाक्ष पु० पिङ्गे अक्षिणी यस्य षच् समा०। शिवे तस्य तृतीयेक्षणस्याग्निरूपत्वात्तथात्वम्। पिङ्गेक्षणोऽप्यत्र।

पिचण्ड पु० अपि+चम—ड तस्य नेत्त्वम् अपेरल्लोपः। उदरे, पशोरवयवे च। पृ० ह्रस्वम्। पिचिण्डोऽप्यत्र।

पिच(चि)ण्डिल त्रि० पिच(चि)ण्ड+अस्त्यर्थे इलच्। तुन्दिले, वृहत्कुक्षौ।

पिचव्य पु० पिचवे तूलाय साधु यत्। कार्पासवृक्षे।

पिचु पु० पच—उ पृ०। कार्पासतूले, (तुला) कुष्ठभेदे, कर्षे, असुरभेदे, शस्यभेदे, च।

पिचुक पु० पिचुरिव कायति कै—क। मदनवृक्षे (मयना)।

पिचुतूल न० ६त०। तूले, (तुला)। [वृक्षे।

पिचुमन्द(र्द) पु० पिचुं कुष्ठं मन्दयति, मर्द्दाति वा अच्। निम्ब-

**पिचुल** पु० पिचुं लाति ला—क। झावुकवृक्षे (झाउ) इज्वले, तूले, जलवायसे च।

**पिच्च** छेदे चु० उभ० सक० सेट्। पिच्चयति ते अपिपिच्चत् त।

**पिच्चट** न० पिच्च—अटन्। सीसके, रङ्गे, नेत्ररोगभेदे च।

**पिच्छ** बाधे तु० प० सक० सेट्। पिच्छति अपिच्छीत्।

**पिच्छ** न० पिच्छ—अच्। मयूरपुच्छे, चूड़ायाञ्च। लाङ्गूले पु०। शाल्मलिवृक्षे, पूगे, परम्परायाम्, कोषे, मोचायां, भक्तसंभूत मण्डे, पङ्क्तौ, शिंशपावृक्षे, कोलिकायाम्, अश्वस्य चरणरोगभेदे च स्त्री० टाप्।

**पिच्छल** त्रि० पिच्छ+कलच्। (पिचल) स्निग्धे मसृणे।

**पिच्छलदला** स्त्री० पिच्छलं दलं यस्याः। वदरीवृक्षे, पिच्छिलपत्रादयोऽप्यत्र। [शिंशपायाम्।

**पिच्छितिका** स्त्री० पिच्छ—णिच् पु० क्त्र् ततः स्वार्थे कन्।

**पिच्छिल** त्रि० पिच्छा+अस्त्यर्थे इलच्। (पिचल) मसृणे स्निग्धे पिच्छिलानि च दधीनी”ति काव्यप्र०। भक्तमण्डे, सरसव्यञ्जनसूपादौ, मण्डयुक्तभक्ते च। सेल्पातकवृक्षे पु०।

**पिच्छिलत्वच्** पु० पिच्छिला श्लक्ष्णा त्वक् यस्य। नागरङ्गवृक्षे।

**पिच्छिलसार** पु० पिच्छिलः सारोऽस्य। मोचरसे।

**पिज** दीप्तौ वासे, वले च अक० हिंसायां दाने च सक० चु० उभ० सेट् इदित्। पिञ्जयति ते अपिपिञ्जत् त।

**पिञ्ज** न० पिजि—अच्। बले। कर्पूरभेदे पु०। व्याकुले त्रि०। तूले, हरिद्रायां, अहिंसायां च स्त्री०। भावेऽच्। बधे पु०।

**पिञ्जट** पु० पिजि—अटन्। नेत्रमले (पिचुटि)।

**पिञ्जर** न० पिजि—अरच्। हरिताले, स्वर्णे, नागकेशरे, विहगादिबन्धनस्थाने, देहास्थिवृन्दे च। अश्वभेदे पु०। पीतरक्तवर्णे, च पु०। तद्वति त्रि०।

**पिञ्जल** न० पिजि—कलच्। हरिताले, कुशपत्रे च अत्यन्ताकुलसैन्यादौ पु० कुशान्तरवेष्टिते साग्रकुशपत्रद्वये स्त्री ङीष्।

पिञ्जिका स्त्री० पिजिण्वुल् अत इत्त्वम् । तूलनालिकायां । (पांइज)

पिट संहतौ ध्वनौ च भ्वा० पर० अक० सेट् । पेटति अपेटीत् ।

पिट(क) पु० पिट–क, । वंशपत्रादिनिर्मिते पात्रभेदे (पेटरा) विस्फोटे त्रि० । स्वार्थे कन् अतैव ।

पिठ क्लेशे, अक० वधे सक० भ्वा० पर० सेट् । पेठति अपेठीत् ।

पिठर पु० पिठ–करन् । गृहभेदे । मुस्तायां, मन्थानदण्डे च न० । स्थाल्यां पु० स्त्री० स्त्रीत्वे ङीप् ।

पिड राशीकरणे भ्वा० आत्म० सक० सेट् इदित् । पिण्डते अपिण्डिष्ट । अयं चुरादिरपि उभ० । पिण्डयति ते अपिपिण्डत्–त ।

पिण्ड त्रि० पिडि–घञ् अच् वा । संहते घने च । देहे, देहैकदेशे, गृहैकदेशे, सामगानां पितृभ्यो देये गोलाकारे अन्ने, गोले, सिह्लके, ओड्रे, इन्द्रे कवले गजकुम्भे, मदनवृक्षे च पु० । आजीवने, लौहे, यजुर्वेदिभिः पितृभ्यो देये श्राद्धे विल्लाकारेऽन्ने च न०।

पिण्डक पु० पिण्ड इव कायति कै–क । पिण्डालौ, स्वार्थे कन् । सिह्लकगन्धद्रव्ये ।

पिण्डकन्द पु० पिण्डाकारः कन्दः । पिण्डालौ ।

पिण्डखर्ज्जूर पु० स्त्री० पिण्डाख्यः खर्ज्जूरः । स्वनामख्याते वृक्षे ।

पिण्डपुष्प न० पिण्डं संहतं पुष्पम् । अशोकपुष्पे, जवापुष्पे, पद्मपुष्पे, तगरपुष्पे च ।

पिण्डपुष्पक पु० पिण्डं पुष्पमिव कायति कै–क । वास्तूकशाके ।

पिण्डफला स्त्री० पिण्डमिव फलं यस्याः । कटुतुम्ब्याम् ।

पिण्डमुस्ता स्त्री० पिण्डा संहता मुस्ता । नागरमुस्तायाम् ।

पिण्डमूल न० पिण्डमिव मूलमस्य । गर्जरे (गाजर) ।

पिण्डबीजक पु० पिण्डाकारं बीजं यस्य कप् । कर्णिकारवृक्षे ।

पिण्डाभ पु० पिण्डः संघात इवाभाति अच् । सिह्लके ।

पिण्डाभ्र न० कर्म्मस० दं अप् आभ्रं पिण्डमिवाभ्रम् । मेघजातकरकायाम् ।

पिण्डायस न० पिण्डं संहतमयः अच् समा० । तीक्ष्णायसे ।

पिण्डार पु० पिण्डं संघातमृच्छति ऋ–अण् । विकङ्कतवृक्षे, क्षपणके गोपे च । [व्याघ्र । स्वार्थे कन् अत्रैव ।

पिण्डालु पु० पिण्डाकार आलुः । (गोलआलु) कन्दभेदे, कन्दगुडू-

पिण्डि(ण्डी)(ण्डिका) स्त्री० पिडि–इन् वा ङीप् स्वार्थे कन् वा । सर्वकाष्ठासञ्जनाधारे रथचक्रमध्ये स्थाने रथनाभौ, पीठे, जानुनोऽधःस्थे मांसलप्रदेशे च ।

पिण्डित त्रि०पिण्डि–क्त । संहते, घनीभूते, गुणिते च । तुरुष्के पु०।

पिण्डिला स्त्री० पिण्डं पिण्डाकारं फलमस्त्यस्याः इलच् । गोडुम्बायां (गोमुक) ।

पिण्डीतक पु० पिण्डीं स्वल्पपिण्डं फलपुष्पद्वारा तकति अनुकरोति तक– हासे अच् । मदनवृक्षे, तगरे च ।

पिण्डीतगर पु० पिण्ड्या स्वल्पपिण्डेनोपलक्षितस्तगरः । तगरवृक्षे

पिण्डीपुष्प पु० पिण्ड्या उपलक्षितं पुष्पमस्य । अशोकवृक्षे ।

पिण्डीर पु० पिण्डं पिण्डाकारं फलमीरयति ईर–अण् । दाडिमवृक्षे । नीरसे त्रि० ।

पिण्डीशूर पु० पिण्ड्यां भोजने एव नान्यत्र शूरः । गेहेनर्द्दिनि, युद्धादावसमर्थे । [ज्योतिष्मतीलतायाम् ।

पिण्या स्त्री० पण्यते स्तूयते रोगहन्तृत्वेन यत् पृ० इत्वम् ।

पिण्याक पु० न० पण–व्यवहारे आकन् नि० । तिलकल्के (खल) हिङ्गुनि, वाह्लीके च । सिह्लके पु०स्त्री० स्त्रीत्वे ङीप् ।

पितामह पु० पितुः पिता पितृ+डामह । पितुः पितरि, पितृपित्रादयोऽप्यत्र । तत्पत्न्यां स्त्री० ङीप् ।

पितृ पु० पाति रक्षति पा–तृच् नि० । जनके । मात्रा सहोक्तौ पितृशेषः । मातापित्रोः द्विव० ।

पितृकानन न० ६त० । श्मशाने । पितृवनपितृगृहादयोऽप्यत्र ।

पितृतीर्थ न० ६त० । गयायाम् तर्ज्जन्यङ्गुष्ठयोर्मध्यभागे च ।

पितृपति पु० ६त० । यमे । पितृराजादयोऽप्यत्र ।

**पितृप्रसू** स्त्री० पितॄणां प्रसूरिवान्नदानयोग्यकालत्वात् । अपरसन्ध्या-काले, पितुर्मातरि च ।

**पितृप्रिय** पु० ६त० । भृङ्गराजे ।

**पितृभोजन** पु० पितृभिर्भुज्यते कर्मणि ल्युट् । माषे, श्राद्धे तद्दानस्य प्रशस्तत्वात् । भावे घञ् ६त० । पितृभक्षणे ।

**पितृयज्ञ** पु० ६त० पितृनुद्दिश्येन यज्ञः । पितृतर्पणे । "पितृयज्ञस्तु तर्पण"मिति मनुः ।

**पितृयाण** पु० पितृभिर्यायतेऽनेन करणे ल्युट् पूर्व्व० णत्वम् । धूम-रादिचिह्निते स्मृतैः कर्म्मिभिर्गन्तव्ये पथिभेदे । [ वाचस्पत्ये

**पितृलोक** पु० ६त० । चन्द्रलोकस्योपरिस्थे लोकभेदे विस्तरस्तु

**पितृबन्धु** पु०६त० । "पितुः पितुःस्वसुःपुत्राः पितुर्मातुःस्वसुःसुताः पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबन्धव" इत्युक्तेषु पितुः पितृ-ष्वसृपुत्रादिषु ।

**पितृव्य** पु० पितुर्भ्राता पितृ+व्यत् । ज्येष्ठे कनिष्ठे वा पितुर्भ्रातरि ।

**पितृष्व(स्व)सृ** स्त्री० ६त० वा षत्वम् । पितुर्भगिन्याम् ।

**पितृष्वस्रीय** पु० स्त्री० पितुः स्वसुरपत्यम् छ । पितृष्वसुः पुत्रे ।

**पितृसन्निभ** पु० पित्रा सन्निभा तुल्यता यस्य । पितृतुल्ये ।

**पित्त** न० अपि दो–क्त तादेशः अल्लोपः न दीर्घः । देहस्थे धातुभेदे ।

**पित्तघ्नी** स्त्री० पित्तं हन्ति हन–ठक् ङीप् । गुडूच्याम् ।

**पित्तद्राविन्** पु० पित्तं द्रावयति द्रु+णिच्–णिनि । मधुरजम्बीरे ।

**पित्तल** न० पित्तं लाति ला–क । ताम्रादिजाते धातुभेदे तोयपि-प्पल्यां स्त्री० ।

**पित्तारि** पु० ६त० । पर्पटे (क्षेतपापड़ा) लाक्षायां, वर्वरे च ।

**पित्र्य** त्रि० पितुः, इदं, प्रियं वा पितृत आगतं वा यत् । पितृसम्ब-न्धिनि । पितृतीर्थे तर्ज्जन्यङ्गुष्ठयोर्मध्यस्थाने, मधुनि, मघानक्षत्रे च । पितृप्रिये माषे पु० । अमावस्यायां तिथौ स्त्री० ।

**पित्सत्** पु० पत–सन्–शतृ । पक्षिणि । पतनेच्छावति त्रि० ।

**पिधान** न० अपि+धा–ल्युट् अल्लोपः । छादने, उद्घने च ।

**पिनद्ध** त्रि० अपि+नह–क्त अल्लोपः परिहिते वस्त्रादौ ।
**पिनाक** पु० न० पाति पा–आकन् नि० । शिवधनुषि, तच्छूलास्त्रे, पांशुवर्षणे च
**पिनाकिन्** पु० पिनाक+अस्त्यर्थे इनि । महादेवे ।
**पिपासा** स्त्री० पातुमिच्छा पा+सन्–अ । पानेच्छायाम् ।
**पिपासु** त्रि० पातुमिच्छुः पा–सन् उ । पानेच्छावति तृषिते ।
**पिपीतकी** स्त्री० वैशाखशुक्लद्वादश्याम् । विप्रभेदे पु० ।
**पिपीलक** पु० अपि–पील–ण्वुल् । अल्लोपः । (डेओपिपड़ा) ख्याते कीटे (क्षुद्रपिपड़ा) ख्याते कीटे स्त्री० टाप् ।
**पिप्पल** न० पा–अलच् द्व० । जले, वस्त्रखण्डभेदे च । अश्वत्थवृक्षे, बञ्जनपक्षिणि पचिणि च पु० । कणायां (पिपुल) स्त्री० ङीप् का ह्रस्वः पिप्पलिः पिप्पली चात्र ।
**पिप्पलीमूल** न० पिप्पल्या इव मूलमस्य । (पिपुलमूल) ख्याते वृक्षे ।
**पिप्लु** पु० अपि–प्लुप–डु अपेरल्लोपः । जटुले ।
**पियाल** पु० पी-पाने कालन् । प्रियाले (पेयासाल) (सुरगी) वृक्षभेदे ।
**पिल** प्रेरणे चु० उभ० सक० सेट् । पेलयति ते अपीपिलत्-त ।
**पिलुक** पु० पिल–कु ततः कन् । पीलुवृक्षे ।
**पिलुपर्णी** स्त्री० पिलु पर्णमस्याः ङीप् । मोरटालतायाम् ।
**पिल्ल** न० क्लिद–ल पिलादेशः । क्लिन्नचक्षुषि । तद्युक्ते त्रि० ।
**पिव** सेचने भ्वा० पर० सक० सेट् इदित् । पिन्वति अपिन्वीत् ।
**पिश** अवयवे तु० सु० पर० सक० सेट् । पिंशति अपेशीत् ।
**पिशङ्ग** पु० पिश–अङ्गच् किच्च । पद्मधूलितुल्ये पिङ्गलवर्णे तद्वति त्रि० ।
**पिशाच** पु० पिशितमश्नाति अश-अण् पृ० । देवयोनिभेदे, प्रेते च ।
**पिशाचद्रु** पु० ईत० । शाखोटवृक्षे । पिशाचवृक्षादयोऽप्यत्र ।
**पिशित** न० पिश–क्त । मांसे । जटामांस्यां स्त्री० वा ङीष् ।
**पिशुन** न० पिश–उनन् किच्च । कुङ्कुमे । नारदे, काके च पु० । सूचके, क्रूरे च त्रि० । (पिड़िङ्) शाकभेदे स्त्री० टाप् ।
**पिष** चूर्णने रु० पर० सक० अनिट् । पिनष्टि अपिषत् ।

**पिष्ट** न० पिष–क्त । सीसके, पिष्टके च । चूर्णिते त्रि० ।

**पिष्टक** पु० न० पिष्टानां, तण्डुलचूर्णानां विकारः कन् । (पिठे) खाद्यभेदे ।

**पिष्टपचन** न० पिष्टं पच्यतेऽनेन पच–करणे ल्युट् । पिष्टकपाकपात्रे कटाहादौ ।

**पिष्टप** पु० न० । पिष्यते, पिष्यते वात्र पिश–पिष–वा प नि०। भुवने

**पिष्टात** पु० पिष्टमतति अत–अण् । पटवासनार्थे चूर्णगन्धद्रव्ये ।

**पिष्टिक** न० पिष्टे भवः ठ । (पिटालि) तण्डुलचूर्णजाते दुग्धाकारे द्रवे पदार्थे । द्विदलपिष्टजाते स्त्री० टाप् ।

**पिस** गतौ भ्वा० पर० स० सेट् । पेसति अपेसीत् चङि न ह्रस्वः ।

**पिस** दीप्तौ वा चु० उभ० पक्षे भ्वा० पर० अक० सेट् इदित् । पिंसयति ते अपिपिंसत् त । पक्षे पिंसति अपिंसीत्

**पिस** वासे बले च अक० बधे दाने गतौ च सक० चु० उभ० सेट् । पेसयति–ते अपीपिसत् त ।

**पिहित** त्रि० अपि धा–क्त अल्लोपः । तिरोहिते आच्छादिते च ।

**पी** पाने दि० आत्म० अनिट् । पीयते अपेष्ट । ल्यप् निपीय ।

**पीठ** पु० न० पीयते पिबते वा अत्र पा–ठक् पिठ–क वा पृ० दीर्घः । (पीड़े) आसनभेदे व्रतिनामासने च ।

**पीठसर्पि** त्रि० पीठेन सर्पति सृप–णिनि । खञ्जे ।

**पीड** बधे विलोड़ने च चु० उभ० सक० सेट् । पीड़यति–ते अपिपीड़त्–त अपीपिड़त्–त ।

**पीडन** न० पीड–ल्युट् । परराष्ट्रस्यन्दपादिनाऽभिभवे, मलुन्धपादिना आक्रमणे, दुःखोत्पादने च ।

**पीडा** स्त्री० पीड–अ । व्यथायां, दुःखे च ।

**पीडित** त्रि० पीड़–क्त । मर्द्दिते, यन्त्रिते, दुःखिते च ।

**पीत** न० पा–क्त पाने, हरिताले च । हरिद्रावर्णे पु० । कर्मणि क्त । पानकर्मणि, पीतवर्णवति च त्रि० ।

**पीतक** न० पीत+स्वार्थे कन् । कुङ्कुमे, हरिताले च । अगुरुणि-पद्म-

काष्ठे, पित्तले, माक्षिके, श्योनाकभेदे, किरातवृक्षे, नान्दीवृक्षे, पीतशाले च पु० । अव्यक्तमानार्थे संख्याभेदे न० ।

**पीतकदली** स्त्री० कर्म० । स्वर्णकदल्याम् (चांपाकला) ।

**पीतकन्द** न० पीतः कन्दो यस्य (गर्जरे) (गाजर) ।

**पीतकावेर** न० कुत्सितं वेरं कावेरं पीतं कावेरं यस्मात् ५ब० । कुत्सिताङ्गं पीतं कुर्वति कुङ्कुमे, पित्तले च ।

**पीतकाष्ठ** न० कर्म० । पीतचन्दने पीतागुरुणि ।

**पीतघोषा** स्त्री० कर्म० पीतपुष्पवत्यां घोषातक्याम् । [स्त्री० टाप् ।

**पीततण्डुल** पु०पीतस्तण्डुलो यस्य । (काङ्गनी) धान्यभेदे । चोरिकावृक्षे

**पीततैला** स्त्री० पीतं तैलं यस्याः । ज्योतिष्मतीलतायाम् ।

**पीतदारु** न० कर्म० । सरलवृक्षे, देवदारुणि, हरिद्रुवृक्षे च ।

**पीतद्रु** पु० कर्म० । सरलवृक्षे, दारुहरिद्रायाञ्च ।

**पीतन** न० पीतं करोति पीत+णिच्—ल्यु । कुङ्कुमे, हरिताले, पीतदारुणि च । प्लक्षे, अम्रातके च पु० । स्वार्थे कन् । आम्रातके (आमड़ा) पु० ।

**पीतपर्णी** स्त्री० पीतं पर्णं यस्याः । (विछिटी) लतायाम् ।

**पीतपुष्प** पु० पीतं पुष्पं यस्य । कर्णिकारवृक्षे । आढक्याम्, इन्द्रवारुण्याञ्च स्त्री० टाप् । शङ्खपुष्प्यां, सहदेव्यां, महाकोषातक्यां, त्रपुष्यां, (शशा) च स्त्री० ङीप् वा टाप् ।

**पीतफल(क)** पु० पीतं फलं यस्य वा कप् । शाखोटवृक्षे, कर्मारवृक्षे च

**पीतवालुका** स्त्री० पीता वालुकेव चूर्णनात् । हरिद्रायाम् ।

**पीतमुद्ग** पु० कर्म० । (सोनामुग) मुद्गभेदे ।

**पीतयूथी** स्त्री० कर्म० स्वर्णयूथ्याम् ।

**पीतराग** न० पीतो रागो वर्णो यस्य । किञ्जल्के, सिक्थे च । कर्म० पीतवर्णे पु० ६ब० । तद्वति त्रि० ।

**पीतवासस्** पु० पीतं वासो यस्य । श्रीकृष्णे, पीतवस्त्रपीताम्बरादयोऽप्यत्र

**पीतवीजा** स्त्री० पीतं वीजं यस्याः । मेथिकायाम् । पीतवर्णवीजयुक्ते त्रि० ।

**पीतशाल** पु० पीतं फलं शलति याति अण्। अशनवृक्षे। (पियाशाल)

**पीतसार** न० पीतं सारं यस्य। पीतवर्णे चन्दनकाष्ठे, हरिचन्दने च। मलयजे, गोमेदमणौ, अक्षोटवृक्षे, तुरष्के, बीजके च पु०। ततः कन्। निम्बे अक्षोटवृक्षे च पु०।

**पीतसालक** पु० कर्म० स्वार्थे कन्। (पेयाशाल) प्रियालवृक्षे।

**पीताङ्ग** पु० पीतमङ्गमस्य। श्योनाकभेदे।

**पी(वी)ति** पु० पा-क्तिच् अज-क्तिच् व्यादेशः वा। घोटके। पा-भावे क्तिन्। पाने, गतौ, शुण्डायाञ्च।

**पीतिका** स्त्री० पीतयति पीत+णिच्-ण्वुल्। हरिद्रायाम्, दारु हरिद्रायाम्, स्वर्णयूथ्याञ्च।

**पीतिन्** स्त्री० पीतमनेन इष्टादित्वादिनि। घोटके।

**पीन** त्रि० प्याय-क्त सम्प्रसारणम्। स्थूले, वृद्धे, सम्पन्ने च।

**पीनस** पु० पीनं पीनतां स्यति सो-क। नासिकारोगभेदे कर्कट्यां स्त्री० ङीप्। [गवि।

**पीनोध्नी** स्त्री० पीनमूधोऽस्याः ङीप् अनङन्तादेशः। पीवरो धस्कायां

**पीय** प्रीणने सौ० पर० सक० सेट्। पीयति अपीयीत्।

**पीयूष** न० पीय-ऊषन्। देवानां पेयभेदे अमृते। दुग्धे च। नव-प्रसूतायाः गोः आसप्तरात्रभवे दुग्धे तत्र पेयूषमपि।

**पील** रोधे भ्वा० पर० सक० सेट्। पीलति अपीलीत्।

**पीलु** पु० पील-उ। परमाणौ, पीलुपाकः पिठरपाकः इति वैशेषिक-भेदः। गजे, अस्थिखण्डे, तालकाण्डे, वाणे, कृमौ, कोङ्कणदेश-ख्याते गुडफले वृक्षे, कुसुमे च।

**पीलुनी** स्त्री० पील-उन गौ० ङीष्। मूर्व्वायाम्।

**पीलुपत्र** पु० पीलुयुक्तं कृमिकलितं पत्रं यस्य। मोरटालतायाम्।

**पीलुपर्णी** स्त्री० पीलुकलितानि पर्णान्यस्याः ङीप्। मूर्व्वायाम्, बिम्बिकायाञ्च।

**पीव** स्थौल्ये भ्वा० पर० अक० सेट्। पीवति अपीवीत्।

**पीवन्** त्रि० प्यै-क्वनिप्। स्थूले, बलवति च। वायौ पु०।

पीवर त्रि० प्यै-ष्वरच् । स्थूले । स्त्रियां ङीप् । अश्वगन्धायां, शता- वर्य्याञ्च स्त्री० टाप् । तरुण्यां गवि, शतमूल्यां, शालपर्ण्याञ्च स्त्री० ङीप् । [व्याकरणोक्त संस्कारविशेषयुक्त शब्दविशेषे पु०।

पुंलिङ्ग न० ६त० । पुंसश्चिह्ने अङ्गभेदे । पुंस इव लिङ्गमस्य ब० ।

पुंश्चली स्त्री० पुंसो भर्त्तुः सकाशात् चलति पुरुषान्तरं गच्छति अच् गौरा० ङीप् । असत्यां स्त्रियाम् ।

पुंस मर्द्दे चु० उभ० सक० सेट् । पुंसयति ते अपुपुंसत् त ।

पुंसवन न० पुमान् सूयतेऽनेन सू-ल्युट् । गर्भसंस्कारभेदे, दुग्धे च ।

पुंस्त्व पु० पुंसोभावश्चिह्नं वा । पुंसश्चिह्ने अङ्गभेदे, तत्कार्य्ये शुक्रे, पुरुषत्वे व्याकरणोक्त शब्दवृत्तौ संस्कारविशेषार्हत्वे च ।

पुक्कस(श) पु० पुक् कुत्सितं कसति कस-गतौ अच् पृ० वा शः । चण्डाले । अधमे त्रि० ।

पुङ्ख पु० पुमांसं खनति खन-ड । बाणमूले, पुष्काले च ।

पुङ्गव पु० पुमान् गौः कर्म० अच् समा० । वृषे, ऋषभौषधौ च । उत्तरपदस्थः श्रेष्ठवाचकः । यथा । नरपुङ्गवः नरः पुङ्गवइव इति उपमितसमासवाक्यम् नरश्रेष्ठार्थे ।

पुच्छ प्रमादे भ्वा०प०अक०सेट् । पुच्छति अपुच्छीत् । रायमुकुटादयः

पुच्छ न० पुच्छ-अच् । पश्चाद्भागे लाङ्गूले च ।

पुच्छटि(टी) स्त्री०पुच्छ-अटि वा ङीप् । अङ्गुलिमोटने (आङुलमटकान)

पुच्छिन् पु० पुच्छ-णिनि । कुक्कुटे, अर्कवृक्षे च । पुच्छ+अस्त्यर्थे इनि । लाङ्गूलयुक्त त्रि० ।

पुञ्ज पु० उन्नत्या पुमांसं जयति जि-ड । राशौ चये ।

पुट दीप्तौ अक० चूर्णने सक० चुरा० उभ० सेट् । पोटयति-ते अपूपुटत् त ।

पुट लेषे तु० कु० पर० सक० सेट् । पुटति अपुटीत् पुपोट ।

पुट संसर्गे अद० चु० उ० सक० सेट् । पुटयति ते अपुपुटत् त ।

पुट न० पुट-क । जातीफले, उपर्य्यधोभावापन्नेन मृदादि कपालद्व- येन निर्मिते" । औषधपाकपात्रभेदे च । अश्वखुरे पु० न० ।

मिथःसम्बन्धे, आच्छादने च पु० । पत्रादिरचिते दुग्धादिपान-पात्रे त्रि० (दोना) स्त्रियां ङीप् ।

**पुटपाक** पु० पटेन पाकः । पुटपात्रेण औषधपाकभेदे ।

**पुटभेद** पु० पुटं संश्लेषं भिनत्ति अण् । नद्यादेश्चक्राकारे जलावर्त्ते, पत्तने नगरे, आतोद्ये च ।

**पुटभेदन** न० पुटानि पात्राणि भिद्यन्तेऽत्र भिद्-आधारे ल्युट् । नगरे

**पुटालु** पु० पुटः संश्लिष्ट आलुः । कोलकन्दे ।

**पुटिका** स्त्री० पुट-क स्वार्थे कन् । एलायाम् ।

**पुटित** त्रि० पुट-क्त । ग्रथिते, पाटिते, तन्त्रोक्ते, आद्यन्तयोः ओङ्का-रादिसम्बन्धाभ्यां, मन्त्रान्तराभ्याञ्च पुटयत् आवृते च ।

**पुटोदक** पु० पुटं संश्लिष्टमुदकं यस्य, पुटे कपालाकारपात्रद्वयमध्ये उदकं वा यस्य । नारिकेले ।

**पुट्ट** अनादरे चु० उ० सक० सेट् । पुट्टयति-ते अपुपुट्टत्-त ।

**पुड** मर्द्दने भ्वा० पर० सक० सेट् इदित् । पुण्डति अपुण्डीत् ।

**पुड** उत्सर्गे तु० पर० सक० सेट् । पुडति अपोडीत् ।

**पुण** धर्म्मकृत्यकरणे तु० पर० सक०सेट् । पुणति अपोणीत् ।

**पुण्डरीक** पु० पुडि-ईक नि० । अग्निकोणस्थे, दिग्गजे, व्याघ्रे च । सितपद्मे, श्वेतपद्मे, भेषजे च न० । आम्रे, राजिलसर्पे, हस्ति-ज्वरे, दमनकवृक्षे, कमण्डलौ, श्वेतवर्णे, कुष्ठभेदे च पु० । श्वेत-वर्णवति त्रि० ।

**पुण्डरीकाक्ष** पु० पुण्डरीकमिव अक्षिणी यस्य षच् समा० । विष्णौ, शालपर्णीतुल्यपर्णके नेत्रहितकारके क्षुपभेदे च न० ।

**पुण्ड्र** पु० पुडि-रक् । (पुडिया) इक्षुभेदे, माधवीलतायां, चित्रके, तिलकवृक्षे, क्षुद्रवृक्षे, दैत्यभेदे च ।

**पुण्ड्रक** पु० पुण्ड्र+कन् । माधवीलतायाम्, तिलकवृक्षे, इक्षुभेदे च ।

**पुण्य** न० पुनाति पू-डुण्य । शुभादृष्टे धर्म्मे । तद्वति त्रि० ।

**पुण्यकव्रत** न० पुण्य+स्वार्थे कन् कर्म्म० । पुराणप्रसिद्धे व्रतभेदे, शा-स्त्रबोधिते धर्म्मप्रदे उपवासादिव्रतभेदे च ।

**पुण्यगन्ध** पु० पुण्यो गन्धो यस्य । चम्पके ।

**पुण्यजन** पु० पुण्यः विरुद्धलक्षणया पापी जनः कर्म० । राक्षसे ।

**पुण्यजनेश्वर** पु० ६त० । कुबेरे ।

**पुण्यतृण** न० कर्म० । श्वेतकुशे ।

**पुण्यभूमि** स्त्री० पुण्यस्य पुण्योत्पादनार्था भूमिः । आर्य्यावर्त्तदेशे "आ समुद्रात्तु वै पूर्व्वादासमुद्रात्तु पश्चिमात् । तयोरेवान्तरं गिर्य्योरार्य्यावर्त्त"मिति मनुः तयोर्विन्ध्यहिमाचलयोः ।

**पुण्यवत्** त्रि० पुण्य+भूमार्थे मतुप् मस्य वः । बहुपुण्ययुक्ते ।

**पुण्यश्लोक** त्रि० पुण्यः पुण्यदायकः श्लोको यशश्चरित्रं वा यस्य । "पुण्यश्लोको नलोराजा पुण्यश्लोको युधिष्ठिरः । पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्द्दनः" इत्युक्तेषु नलादिषु । पुण्यचरितयुक्तमात्रे च ।

**पुण्याह** न० पुण्यमहः टच् समा० । पुण्यजनके दिने ।

**पुण्याहवाचन** न० पुण्याहस्य पुण्यजनकदिनस्य वाचनं ब्राह्मणद्वारा वादनम् वच-णिच्-ल्युट् । वैदिककर्मारम्भे तद्दिनस्य पुण्यतया ब्राह्मणद्वारा वादने ।

**पुत्तिका** स्त्री० पुत् इति शब्दं तनोति तन-ड स्वार्थे कप् इत्वः अत इत्त्वम् । क्षुद्रमक्षिकायाम् ।

**पुत्र(त्त्र)** पु० पुतस्त्रायते पुत्+त्रै-क "पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः । तस्मात् पुत्त्र इति ख्यात" इत्युक्ते तनये । पू-क्त ह्रस्वश्च । औरसादिद्वादशविधे तनये । कन्यायां ङीप् पुत्री ज्योतिषोक्ते लग्नात् पञ्चमे स्थाने पु० । एकपुत्रीशब्दयोरेकशेषे पुत्र एव शिष्यते तयोरर्थयोः द्विव० ।

**पुत्रक** पु० पुत्र+स्वार्थानुकम्पासंज्ञादौ कन् । पुत्रे, धूर्त्ते, शरभे, वृक्षभेदे, अनुकम्पान्विते च । कन्यायां टाप्, पुत्रिका ।

**पुत्रजीव** पु० पुत्रं जीवयति जीव-अण् । (जियापुता) वृक्षभेदे एवुल् । स्वार्थे । ष्ट० समम् । पुत्रञ्जीवकोऽप्यत्र ।

**पुत्रदा** स्त्री० पुत्रं ददाति सेवनात् गर्भं ददाति दा—क। वन्ध्याकर्कोट्यां, लक्ष्मणाकन्दे च। गर्भप्रदे पुत्रप्रदे च त्रि०।

**पुत्रभद्रा** स्त्री० पुत्रस्य भद्रं यस्याः ५ब०। दृहज्जीवन्त्याम्।

**पुत्रिका** स्त्री० "अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्। अस्यां यो जायते पुत्रः स मे पुत्रो भवे"दिति समयेन प्रदत्तायां कन्यायां, "पुत्रिकाधर्मशङ्कये"ति स्मृतिः।

**पुत्रिकापुत्र** पु० पुत्रिकैव पुत्रः पुत्रिकायाः पुत्रः वा। पुत्रिकाक्रमेण पुत्रत्वेनाभ्युपगतायां कन्यायां, तत्पुत्रे च।

**पुत्रेष्टि** स्त्री० पुत्रस्य पुत्रार्थी इष्टिः यज—क्तिन्। पुत्रनिमित्तके यागभेदे "गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमं चरेदि"ति।

**पुथ** हिंसे दि०पर०सक० सेट्। पुथ्यति अपोथीत्।

**पुथ** वधे सक० क्लेशे अक० भ्वा० पर० सेट् इदित्। अपुन्थति अपुन्थीत्।

**पुथ** दीप्तौ चु० उभ० सक० सेट्। पोथयति—ते अपूपुथत्—त।

**पुद्गल** पु० गलतीति गल—अच् पुत् कुत्सितं गलो यस्मात् ५ब०। उत्कृष्टाकारे, रूपादिविशिष्टे द्रव्ये, द्व्यणुकादिस्यान्तीये बौद्धाद्युक्ते पदार्थे च।

**पुनःपुनर्** अव्य० पुनर्+वीप्सायां द्वित्वम्। मुहुरित्यर्थे अभीक्ष्णे।

**पुनःपुना** पु० पुनःपुनाति पू—नक् पृ०। नदीभेदे "कीकटेषु गयापुण्या नदी पुण्या पुनः पुने"ति वायुपुराणम्।

**पुनःसंस्कार** पु० पुनर्वारः संस्कारः उपनयनविवाहादिः। सम्+कृ—घञ् सुट् च। पापादिहेतुभिः कृतस्य संस्कारस्यान्यथाभावे द्वितीयसंस्कारे "पुनर्दसौ कृतो विप्रः पुनः संस्कारमर्हती"ति ज्योतिषम् पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हतीति" मनुः।

**पुनर्** अव्य० पन अर् पृ०। अवधारणे, भेदे, अधिकारे, पक्षान्तरे द्वितीयवारे च।

**पुनरुक्तवदाभास** पु० "आपाततो यदर्थस्य पौनरुक्त्येन भासते। "पुनरुक्तवदाभास इत्युक्ते अलङ्कारभेदे।

**पुनर्नव** पु० छिन्नोऽपि पुनरपि नवः क्षुभ्नादि० न णत्वम्। नखे। स्वनामख्याते शाकभेदे स्त्री० टाप्। [ स्त्री०।

**पुनर्भव** पु० छिन्नोऽपि पुनर्भवति भू—अच्। नखे। रक्तपुनर्नवायाम्

**पुनर्भू** स्त्री० पुनर्भवति प्रथममेकस्य जाया भूत्वापरस्य पुनर्जाया भवति भू—क्विप्। "कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता। पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्मणा" इत्याद्युक्तायां द्विरूढ़ायां स्त्रियाम्। पुनर्जातमात्रे त्रि०।

**पुनर्वसु** पु० पुनर्+वस—उ। विष्णौ, शिवे च। अश्विन्यवधिके सप्तमे नक्षत्रे द्विव०।

**पुन्नाग** पु० पुमान् नाग इव श्रेष्ठः प्रधानत्वात् स इव। स्वनामख्याते पुष्पप्रधाने वृक्षभेदे, श्वेतोत्पले, जातीफले, पाण्डुवर्ण हस्तिनि, नरश्रेष्ठे च। [ पुन्नाडोऽप्यत्र।

**पुन्नाट** पु० पुमानिव नाटयति नट—अच्। चक्रमर्दे। नड—अच्।

**पुन्नामनरक** पु० पुत् इति नाम यस्य कर्म० परदाराभिगमनादिभिः पौड़शभिः पातकैः भोग्ये नरकभेदे, परदारादिकं प्रकृत्य "एतैस्तु पापैः पुरुषः पुन्नामनरके पचेदि"ति पुराणम्।

**पुंस्** पु० पाति पा—डु—मसुन्। पुरुषे, मनुष्ये च। व्याकरणोक्ते संस्कारविशेषाधारे शब्दभेदे च।

**पुर** अग्रगतौ तु० प० सक० सेट्। पुरति अपोरीत्।

**पुरःसर** त्रि० पुरोऽग्रे सरति सृ—ट। अग्रगामिनि स्त्रियां ङीप्।

**पुर** न० पुर—अग्रगमने क। गेहे देहे पाटलिपुत्रे नगरभेदे, कुसुमदलवृत्तौ, नागरमुस्तायां, चर्मणि, गृहोपरिगृहे च। बहुग्रामीणव्यवहारस्थाने बहुहट्टादियुक्ते प्रधानग्रामे न० स्त्री०। स्त्रीत्वे ङीप्। राशौ, पीतझिण्ट्याम्, गुग्गुलौ च पु०।

**पुर्** स्त्री० पिपर्त्ति पृ—दीर्घ क्विप्। नगर्य्याम्।

**पुरञ्जन** पु० पुरं देहं स्वादृष्टेन स्वसान्निध्येन वा जनयति खच्। जीवे तददृष्टेन तत्सान्निध्येन च हि देहारम्भः।

**पुरञ्जय** पु० काकुत्स्थाख्ये सूर्य्यवंश्ये नृपभेदे।

**पुरतस्** अव्य० पुर—अतसुच् । अग्रत इत्यर्थे ।

**पुरद्विष्** पु० पुराणां मयनिर्मितानां नगराणां दाहकत्वात् द्विट् द्विष—क्विप् । शिवे । पुरारिप्रभृतयोऽप्यत्र ।

**पुरन्दर** पु० पुरं दारयति दृ—खच् । इन्द्रे, चौरे, (चइ) चव्ये च ।

**पुरन्ध्रि(न्ध्री)** पुरं गेहं धारयति पालयति धृ—खच् गौरा० ङीषो० वा ह्रस्वः । बहुकुटुम्बवत्याम् पतिपुत्रवत्याञ्च स्त्रियां, "गृहेष्टदेव्यप्यपुरन्ध्रिवर्णमि"ति कुमारः ।

**पुरस्** अव्य० पूर्वस्मिन् कालादौ असि पुरादेशः । अग्रत इत्यर्थे ।

**पुरस्कार** पु० पुरस्+कृ—घञ् । अग्रकरणे, पूजने च ।

**पुरस्कृत** त्रि० पुरस्+कृ—क्त । पूजिते, अग्रकृते च । "यमुनाप्यपुरस्कृतेने"ति नैषधम् । अभिशप्ते, अरिग्रस्ते, स्वीकृते, सिक्ते च त्रि० ।

**पुरस्तात्** अव्य० पूर्व—अस्ताति पुरादेशः । दिग्देशकालवृत्तेः प्रथमापञ्चमीसप्तम्यन्तस्य पूर्वशब्दस्यार्थे, अग्रत इत्यर्थे च ।

**पुरा** अव्य० पुर—का । अविच्छेदेन क्रियाकरणे, पुराणे अतीते, भाविनि, निकटे, पुरावृत्ते च । पुर+क टाप् । पूर्वस्यां दिशि सुगन्धिद्रव्यभेदे च स्त्री० ।

**पुराण** त्रि० पुरा—भवः ट्यु नि० तुट् न, पुरा नीयते नी—ड वा पूर्व० णत्वम्, पुराभवे । सर्गश्च प्रतिसर्गश्च वंशोमन्वन्तराणि च वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम्"मित्युक्ते व्यासादिप्रणीते शास्त्रभेदे न० ।

**पुरातन** त्रि० पुरा भवं पुरा ट्यु+तुट् च । पुराभवे ।

**पुराणपुरुष** पु० पुराणैरुपस्तुत्यः पुरुषः शाक०, कर्म० वा । विष्णौ, वृद्धे पुरुषे च ।

**पुरावृत्त** न० पुरा पूर्वस्मिन् काले यत् वृत्तं भूतं लक्षणया तदाश्रितकथादि । इतिहासे, तत्प्रतिपादकग्रन्थे महाभारतादौ च ।

**पुरासिनी** स्त्री० पुरं गृहमस्यति अस णिनि । सहदेवी लतायाम् ।

**पुरीतत्** स्त्री० न० पुरीं देहं तनोति तन-क्विप् । देहात्मके (आंत) अन्त्राख्ये नाडीभेदे ।

**पुरीमोह** पुरीं देहं मोहयति मुह-णिच्-अण् । धुस्तूरे ।

**पुरीष** न० पृ-दीर्घे ईषन् किच्च । विष्ठायाम् ।

**पुरु** पु० पृ-दीर्घे कु । ययातेर्न्दपस्य कनिष्ठपुत्रे यद्वशात् कुरूणां पौरवेति संज्ञा । स्वर्गे, परागे दैत्यभेदे, नदीभेदे च । प्रचुरे त्रि० ।

**पुरुषकार** पु० पुरुषस्य कारः कृ-घञ् । पौरुषे पुरुषचेष्टिते "दैवं पुरुषकारश्चे"ति स्मृतिः ।

**पुरुषद्घ्न** त्रि० पुरुष उन्मानं यस्य दघ्नच् । पुरुषतुल्योन्माने, द्वयसच् । पुरुषद्वयसोऽप्यत्र स्त्रियां ङीप् । [नागादयोऽप्यत्र ।

**पुरुषसिंह** पु० पुरुषः सिंह इव उपमि० । नरश्रेष्ठे एवं पुरुष-

**पुरुषार्थ** पु० ६त० । धर्मार्थकाममोक्षरूपेषु पुरुषप्रयोजनेषु ।

**पुरुषोत्तम** पु० पुरुषेषु उत्तमः कर्म० वा । विष्णौ, उत्तमपुरुषे च । "अथ भुक्तिं पुरुषोत्तमादि"ति नैषधम् ।

**पुरुह** त्रि० पुरु-हन-ड । प्रचुरे । ड । पुरुहूरप्यत्र ।

**पुरुहूत** पु० पुरूणि प्रचुराणि हूतानि नामान्यस्य । इन्द्रे ।

**पुरूरवस्** पु० बुधेनेलायामुत्पादिते उर्वशीकान्ते चन्द्रवंश्ये नृपे ।

**पुरोग** त्रि० पुरोऽग्रे गच्छति गम-ड । अग्रगामिनि" प्रधाने च । अच् । पुरोगमः, णिनि । पुरोगामीतिचाप्यत्र ।

**पुरोडाश्(श)** पु० पुरोदाश्यते दाश-कर्मणि क्विप्, घञ् वा । हविषि यज्ञियद्रव्ये ।

**पुरोधस्** पु० पुरोऽग्रे धीयते धा-असि किच्च । पुरोहिते ।

**पुरोभागिन्** त्रि० पुरः पूर्वं भजते भज-घिनुण् गुणत्यागेन दोषमात्रग्राहिणि । अग्रभागवति त्रि० ।

**पुरोहित** पु० पुरोऽग्रे दृष्टादृष्टफलेषु कर्मसु धीयतेऽसौ धा-क्त । राज्ञां दृष्टादृष्टफलकेषु कर्मसु पुरस्कृते जने ।

**पुर्व** पूर्तौ भ्वा० पर० सक० सेट् । पूर्वति अपूर्वीत् ।

**पुर्व** निकेतने अक० चु० उ० सेट् । पूर्वयति ते अपुपूर्वत् त ।

**पुल** उच्छ्रितौ वा चु० उभ० पक्षे तु० प० अक० सेट्। पोलयति ते पुलति अपूपुलत् त अपोलीत्।

**पुल** महत्त्वे भ्वा० प० सक० सेट्। पोलति ते अपोलीत्।

**पुल(क)** पु० पुल-क ततः स्वार्थे कन् वा। रोमाञ्चे, कङ्कुष्ठे च पुलाके न०।

**पुलकिन्** पु० पुलकस्तदाकारं पुष्पमस्त्यस्य इनि। धाराकदम्बे।

**पुलस्ति(स्त्य)** पु० मुनिभेदे।

**पुलह** पु० मुनिभेदे।

**पुलाक** पु० पुल+अक—अण्। संक्षेपे, शस्यशून्ये (आगड़ा) धान्ये, भक्तगुलिकायां, क्षिप्रे च।

**पुलायित** न० पुल+क्यच् क्त। अश्वगतिभेदे।

**पुलिन** न० पुल—इनन् किच्च। तोयादुत्थिते तटे (चड़ा)।

**पुलिन्द** पु० पुल—किन्दच्। चाण्डालभेदे।

**पुलोमजा** स्त्री० पुलोमा असुरभेदस्तस्मात् जायते जन—ड। इन्द्राण्यां, शच्याम्। [उपयेमे।

**पुलोमन्** पु० इन्द्रस्य द्वेष्ये असुरभेदे यं जित्वा तत्कन्यां शचीमिन्द्रः

**पुलोमारि** पु० ६त०। इन्द्रे पुलोमशत्रुप्रभृतयोऽप्यत्र।

**पुष** पुष्टौ अक० पोषणे सक० दि० पर० अनिट्। पुष्यति अपुषत्।

**पुष** पुष्टौ अक० पोषणे सक० क्र्या० प० सेट्। पुष्णाति अपोषीत्।

**पुष** पुष्टौ भ्वा० पर० अक० सेट्। पोषति अपोषीत्।

**पुष** धृतौ चु० उभ० सक० सेट्। पोषयति ते अपूपुषत् त।

**पुषा** स्त्री० पुष्णाति पुष—क टाप्। लाङ्गलीवृक्षे।

**पुषित** त्रि० पुष—क्त। पुष्टे, प्रतिपालिते पक्षिमृगादौ।

**पुष्कर** न० पुष—करन् कस्य नेत्त्वम्। गजकराग्रे, वाद्यभाण्डे, मुखे, जले, आपणे, खड्गफलके, पद्मे, तीर्थभेदे कुष्ठौषधौ, पद्मकोषे, द्वीपभेदे, युद्धे च। नागभेदे, रोगभेदे, नृपभेदे, सारसपक्षिणि च पु०।

**पुष्करकर्णिका** स्त्री० पुष्करस्येव कर्णिकाऽस्याः। स्थलपद्मिन्याम्। पुष्करनाभीत्यप्यत्र।

**पुष्करिणी** स्त्री० पुष्कर+समूहार्थे सन्निकृष्टदेशार्थे च इनि। स्थलप-

द्विन्याम्, पद्मसमूहे, तद्युक्तलतायाञ्च। पुष्करमूले, शतधनुःपरिमितदीर्घविस्तारे जलाशयभेदे च।

**पुष्करिन्** पु० पुष्करं शुण्डाग्रमस्त्यस्य इनि। गजे।

**पुष्कल** त्रि० पुष-कलच् कस्य नेत्त्वम्। "अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कल"मित्युक्ते परिमाणभेदे। श्रेष्ठे, बहुउपस्थिते च त्रि०।

**पुष्टि** स्त्री० पुष-क्तिन्। पोषणे, वृद्धौ, तद्धेतुत्वात् अश्वगन्धायां, वृद्ध्यादौ पूज्यषोड़शमातृकामध्ये मातृकाभेदे च। [स्त्रियाञ्च।

**पुष्टिदा** स्त्री०पुष्टिं ददाति दा-क। अश्वगन्धायाम्, वृद्धौ, पोषणदातर्यां

**पुष्प** विकाशे दि० पर० अक० सेट्। पुष्प्यति अपुष्पीत्।

**पुष्प** न० पुष्प-अच्। कुसुमे स्त्रीरजसि, विकाशे, कुवेरस्य विमाने, नेत्ररोगभेदे च। स्वार्थे कन्। कुवेरस्य विमाने, नेत्ररोगभेदे, रत्नमयकङ्कणे, रसाञ्जने, लोहकांस्ये, मृदङ्गारयोः शकट्यां, कासीसे च।

**पुष्पकरण्डक** न० ६त०। (फुलेरसाजि) वंशादिनिर्मिते पुष्पचयनपात्रे

**पुष्पकेतु** पु० पुष्पनिर्मितः केतुरञ्जनम्। कुसुमाञ्जने।

**पुष्पचाप** पु० पुष्पमयं चापमस्य। कामदेवे पुष्पधन्वादयोऽप्यत्र।

**पुष्पचामर** पु० पुष्पं चामर इव यस्य। मदनवृक्षे।

**पुष्पदन्त** पु० वायुकोणस्थे दिग्गजे, विद्याधरभेदे च।

**पुष्पदन्तक** पु० महिम्न इत्यादिस्तवकर्त्तरि गन्धर्वभेदे।

**पुष्पपुर** न० पाटलिपुत्रनगरे कुसुमपुरे (पाटना)।

**पुष्पफल** पु० पुष्पयुक्तं फलमस्य। कपित्थे।

**पुष्पमास** पु० पुष्पप्रधानो मासः शाक०। चैत्रे, वसन्तसमये।

**पुष्परस** पु० ६त०। मकरन्दे कुसुमनिर्य्यासे।

**पुष्पराग** पु० पुष्पस्येव रागो वर्णो यस्य। मणिभेदे (पद्मराग)।

**पुष्परोचन** पु० पुष्पं रोचनेव यस्य। नागकेशरे।

**पुष्पलिह्** पु० पुष्पं लेढि लिह-क्विप्। मधुकरे। क। पुष्पलिहोऽप्यत्र

**पुष्पवती** स्त्री० पुष्पं स्त्रीरजः अस्त्यस्य मतुप् मस्य वः। ऋतुमत्यां स्त्रियाम्। पुष्पविशिष्टे त्रि० दिवाकरनिशाकरयोः मिलितयोः द्विव०।

**पुष्पवाटी** स्त्री० ६त०। पुष्पोद्याने। स्वार्थे कन्। अत्रैव। "दक्षि-

शोन पुष्पवाटिकामालाप इव श्रूयते” इति शकुन्तला ।

**पुष्पवाण** पु० पुष्पाख्येव वाणा अस्य । कामे पुष्पशरादयोऽप्यत्र ।

**पुष्पशरासन** पु० पुष्पमयं शरासनं धनुर्यस्य । कामे ।

**पुष्पशून्य** पु० ६त० । उडुम्बरे । “पुष्परहितमात्रे त्रि० ।

**पुष्पसमय** पु० ६त० । वसन्ते ऋतौ ।

**पुष्पाजीव** पु० पुष्पमाजीवति आ+जीव–अण् । मालाकारे ।

**पुष्पाञ्जन** न० ६त० । कुसुमाञ्जने (कोमकाजल) ।

**पुष्पासव** न० ६त० । रीतीपुष्पे तस्य पुष्पे ज्ञात्वात् मादकत्वाच्च तथात्वम्

**पुष्पाह्वा** स्त्री० पुष्पमित्याह्वा यस्याः । शतपुष्पायाम् ।

**पुष्पिताग्रा** स्त्री० अर्द्धसमे छन्दोभेदे ।

**पुष्य** पु०स्त्री० कार्य्यं पुष्यति पुष–कर्त्तरि यत् नि० । अश्विन्यादि (२७) नक्षत्रमध्ये अष्टमे नक्षत्रे, स्त्रीत्वे टाप् ।

**पुष्यरथ** पु० कर्म० यात्रोत्सवाद्यर्थे रथे ।

**पुष्यलक** पु० पुष–इन् पुषिः पुष्टिस्तस्यै अलति पर्य्याप्नोति अल-अच् । गन्धप्रधाने मृगभेदे । “सीम्नि पुष्यलकोहत” इति ।

**पुष्यस्नान** न० पुष्यनक्षत्रकाले स्नानम् । शास्त्रोक्तविधानेन पुष्यनक्षत्र-युक्तकालेऽभिषेकभेदे । [अपुपुस्तत् त ।

**पुस्त** बन्धे, अनादरे, आदरे च चु० उभ० सक० सेट् । पुस्तयति ते

**पुस्त** न० पुस्त–अच् । “मृदा वा दारुणा वापि वस्त्रेणाप्यथ चर्मणा लौहरत्नैः कृतं वापि पुस्तमित्यभिधीयते” इत्युक्ते लिप्यादिशिल्प-कर्मणि । स्वार्थे कन् । लिप्याधारे ग्रन्थे, पु० स्त्री० स्त्रीत्वे ङीप् ।

**पू** शोधे दि० आत्म० सक० सेट् । पूयते अपविष्ट ।

**पू** शोधे भ्वा० आ० सक० सेट् । पवते अपविष्ट ।

**पू** शोधे क्र्यादि० प्वा० उभ०सक०सेट् पुनाति पुनीते अपावीत् । अपविष्ट

**पूग** पु० पू–गन् किच्च (सुपारि) वृक्षे, समूहे छन्दसि, गात्रे कण्टकि-वृक्षे च

**पूज** पूजने चु० उभ० सक० सेट् । पूजयति ते अपूपुजत् त ।

**पूजा** स्त्री० पूज-अ । अर्चने । ल्युट् । पूजनमप्यत्र न० ।

**पूजार्ह** त्रि० पूजामर्हति अण् । पूजनयोग्ये ।

**पूज्य** पु० पूज-यत् । श्वशुरे । पूजनीयमात्रे त्रि० ।

**पूण** राशीकरणे चु० उभ० सक० सेट् । पूणयति ते अपूपुणत् त ।

**पूत** ए० पू-क्त । अपनीततुषे, (आगड़ारहित) बहुलीकृते धान्ये च । व्रतादिना शुद्धे त्रि० । सत्ये । शङ्खे, श्वेतकुशे, विकङ्कतवृक्षे च पु० । दूर्वायां स्त्री० टाप् ।

**पूतक्रतायी** स्त्री० पूतक्रतोरिन्द्रस्य पत्नी ङीप् ऐङ् च । शच्याम् ।

**पूतक्रतु** पु० क्रतुभिः पूतः, पूताः पवित्रतासम्पादकाः क्रतवो यज्ञाः यस्य वा । इन्द्रे ।

**पूतगन्ध** पु० पूतोगन्धो यस्य । वर्वरे । (वावुइतुलसी) ।

**पूतकुश** न० कर्म० । श्वेतकुशे ।

**पूतना** स्त्री० पूतं करोति पूत+णिच्-युच् । हरीतक्यां, गन्धमांस्यां, बकासुरभगिन्यां, या विषाक्तं स्तन्यं पाययन्ती कृष्णेन हता । रोगभेदे, बालकमातृकाभेदे च "पूतना जम्भकादयः" ।

**पूतनारि** पु० ६त० । श्रीकृष्णे ।

**पूतफल** पु० पूतानि फलान्यस्य । पनसे (कांटाल) ।

**पूति** न० पू-क्तिच् । रोहिषतृणे । क्तिन् । पवित्रतायाम् । पूयविशरणे दुर्गन्धे च क्तिच् । दुर्गन्धे । दुर्गन्धवति त्रि० ।

**पूतिक** न० पूत्या दुर्गन्धेन कायति कै-क । विष्ठायाम्, पूतिकरञ्जे पु० । शाकभेदे स्त्री० (पुइ) "पूतिका ब्रह्मघातिके"ति स्मृतिः ।

**पूतिकरज(ञ्ज)** पु० पूतियुक्तः करजः(ञ्जः) (नाटाकरमजा) करञ्जभेदे ।

**पूतिकाष्ठ** पु० ६त० पूतेः पावनार्थं काष्ठम् चतुर्थ्यर्थे ६त० । देवदारुणि । संज्ञायां कन् । सरलवृक्षे पु० । [दुर्गन्धे पु० ।

**पूतिगन्ध** पु० पूतिर्दुष्टो गन्धो यस्य । गन्धके, इङ्गुदीवृक्षे च कर्म० ।

**पूतिगन्धि** पु० पूतिर्दुष्टोगन्धो यस्य इत् समा० । दुर्गन्धवति ।

**पूतितैला** स्त्री० पूति दुर्गन्धं तैलं यस्याः । ज्योतिष्मत्याम् ।

**पूतिपत्र** पु० पूतीनि पत्राण्यस्य । श्योनाकभेदे ।

**पूतिपुष्पिका** स्त्री० पूतीनि पुष्पाण्यस्याः मातुलुङ्गायाम् जम्बीरभेदे ।

**पूतिफला(ली)** पूतीनि फलान्यस्याः वा ङीप् । सोमराज्याम् ।

**पूतिमयूरिका** स्त्री० पूतिर्मयूरीव ततः इवार्थे कन् । अजमोदायाम् ।

**पूतिमेद** पु० पूतिर्मेदोऽस्य । अरिमेदे विट्खदिरे ।

**पूतिवात** पु० पूत्यै पवित्रतायै वातोऽस्य । विल्ववृक्षे । कर्म० । दुष्टगन्धयुक्तवायौ पु० ।

**पूतिवृक्ष** पु० कर्म० । श्योनाकवृक्षे ।

**पूप** पु० पू—पक् । पिष्टके (पिठा) ।

**पूपाष्टका** स्त्री० अष्ट परिमाणं यस्याः कन् अष्टका अष्टमी उपचारात् तत्कर्त्तव्यं श्राद्धम् पूपद्रव्यसाधनाष्टका । कर्म० अग्रहायण्याः परतः कृष्णाष्टमीविहिते श्राद्धे । [अपूयिष्ट ।

**पूय** दुर्गन्धे अक० भेदने विशरणे च सक० दिवा० आत्म० सेट् । पूयते

**पूय** न० पूय—अच् । व्रणादिनिःसृते रक्तविकारभेदे (पूँज) ।

**पूयारि** पु० ६त० । निम्बवृक्षे पूयनाशकादयोऽप्यत्र ।

**पूर** पूर्त्तौ प्रीणने च दिवा०आत्म०सक०सेट् । पूर्य्यते अपूरि अपूरिष्ट ।

**पूर** पु० पूर—क । जलसमूहे, खाद्यभेदे, व्रणशुद्धौ च ।

**पूरक** पु० पूर—ण्वुल् । वीजपूरे, जम्बीरभेदे (टाबा लेबु) अङ्कशास्त्रप्रसिद्धे गुणके, तन्त्रादिप्रसिद्धे प्राणायामाङ्गे वायुत्कर्षणरूपे व्यापारभेदे च । पूरणकर्त्तरि त्रि० । मृतस्यातिवाहिकदेहोत्तरं प्रेतदेहनिर्वाहकेऽशौचमध्ये देये पिण्डदाने न० ।

**पूरण** न० पूर ल्युट् । अङ्कशास्त्रप्रसिद्धे गुणने, वृष्टौ, कुटन्नटे, वापतन्तुषु च । ल्यु । सेतौ, समुद्रे च पु० । सङ्ख्यापूरणे पूरयितरि च त्रि० । यथा द्वयोः पूरणः । द्वितीयः । [शाल्मलिवृक्षे च ।

**पूरणी** स्त्री० पूर्य्यतेऽनया । पूरणसङ्ख्यायां यथा द्वयोः पूरणी द्वितीया ।

**पूरित** त्रि० पूर—क्त । पूर्णे, गुणिते च ।

**पूरुष** पूर-उषन् । पुरुषे, नरे ।

**पूर्ण** त्रि० पूर—क्त नि० । पूरिते, सकले, समग्रे च ज्योतिषोक्तेषु उभयपक्षयोः पञ्चमीदशमीपञ्चदशीषु च स्त्री० ।

**पूर्णकोष्ठा** स्त्री० पूर्णं कोष्ठं यस्याः । नागरमुस्तायाम् ।

**पूर्णपात्र** न० कर्म० । हर्षकाले पुत्रजननोत्सवजहर्षात् आकृष्य वस्त्रादेर्ग्रहणे, होमान्ते ब्रह्मदक्षिणार्थतया देये "अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम्। पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते" इत्युक्तमानवति तण्डुलादौ ।

**पूर्णमास** पु० पूर्णमास्यां विहितः अण् । पूर्णिमायां कर्त्तव्ये यागभेदे "दर्शपूर्णमासाभ्यां यजेते"ति श्रुतिः ।

**पूर्णमासी** स्त्री० पूर्णोमासश्चन्द्रमा यया गौरा० ङीप् । पूर्णिमातिथौ

**पूर्णवीज** पु० पूर्णानि वीजान्यत्र । वीजपूरे । (टावालेबु) ।

**पूर्णिमा** स्त्री० पूर–क्तिन् नि० पूर्णिं पूरणं चन्द्रकलापूरणं मिमीते मा–क । चन्द्रस्य पञ्चदशकलापूरण्यां तिथौ ।

**पूर्त्त** न० पूर–क्त नि० । खातादिकर्मणि विश्वजनोद्देशेन जलाशयदानादौ । भावे क्त । पूरणे न० । काले, छन्ने, पूरिते च त्रि० ।

**पूर्ब(र्व)** निवासे अक० निमन्त्रणे सक० चुरा० उभ० सेट् पचे भ्वा० पर० । पूर्ब(र्व)यति पूर्ब(र्व)ते अपुपूर्ब(र्व)त् । अपूर्बी(र्वी)त् ।

**पूर्ब(र्व)** त्रि० पूर्ब(र्व)–अच् । प्रथमे, आदौ-दिग्देशकाले, समस्ते, ज्येष्ठे भ्रातरि च । सर्वनामताऽस्य ।

**पूर्ब(र्व)ज** पु० पूर्बे(र्वे) जायते जन–ड । ज्येष्ठभ्रातरि । ज्येष्ठभगिन्यां स्त्री० ङीप् ।

**पूर्ब(र्व)दिक्पति** पु० ६ त० । इन्द्रे ।

**पूर्ब(र्व)दिश्** स्त्री० कर्म० । प्रथमसूर्य्योदयसम्बद्धायां दिशि ।

**पूर्ब(र्व)देव** पु० पूर्बं(र्वं) देवः पश्चात् पापाचारणात् भ्रष्टः, अथ वा पूर्बः(र्वः) श्रेष्ठो देवः । असुरे ।

**पूर्ब(र्व)देश** पु० कर्म० । प्राच्यामवस्थिते जनपदे ।

**पूर्ब(र्व)पक्ष** पु० कर्म० । अष्टादशविवादरूपे व्यवहारे प्रतिज्ञारूपे प्रथमेऽवयवे, "पूर्ब(र्व)पक्षोभवेद्यस्य भवेयुस्तस्य साक्षिणः" इति स्मृतिः । "विषयो विषयश्चैव पूर्ब(र्व)पक्षस्तथोत्तरम् । निर्णयश्चेति सिद्धान्तः शास्त्रेऽधिकरणं स्मृत"मिति मीमांसोक्ते न्यायावयवभेदे सिद्धान्तविरुद्धकोटिप्रतिपादके वाक्ये ।

पूर्व(र्व)पद न० कर्म०। व्याकरणोक्ते उत्तरपदादव्यवहिते प्राग्वर्त्तिनि, समासस्य प्रथमावयवे च सुप्तिङन्तरूपे पदे।

पूर्व(र्व)पर्वत पु० कर्म०। उदयाचले। यत्र सूर्य्यस्य प्रथमदर्शनं तत्रस्थे पर्वते। स चानियतस्थितिकोऽपि यतः स्थानात् प्रथमं सूर्य्योदर्शनयोग्यो भवति तदेव स्थानं पर्वत इति व्यवह्रियते। पूर्व(र्व)शैलादयोऽप्यत्र।

पूर्व(र्व)फल्गुनी स्त्री० द्विव०। अश्विन्यवधिके एकादशे नक्षत्रे।

पूर्व(र्व)भाद्रपद पु० स्त्री०। अश्विन्यादिनक्षत्रेषु पञ्चविंशतितमे नक्षत्रे।

पूर्व(र्व)रङ्ग पु० नाट्ये आदौ नटकर्त्तव्ये सङ्गीतादौ। "पूर्वरङ्गं विधायैव सूत्रधारो निवर्त्तते" इति सा० द० प०।

पूर्व(र्व)राग पु० रन्ज–घञ् नलोपः कर्म०। नायकयोर्मिलनात् प्राग्वर्त्तिनि "श्रवणाद्दर्शनाद्वापि मिथःसंरूढरागयोः। दशाविशेषो योऽप्राप्तौ पूर्व(र्व)रागः स उच्यते" इत्युक्तलक्षणे अवस्थाभेदे।

पूर्व(र्व)रूपं न० कर्म०। वैद्यकोक्ते भाविरोगनिदानभूते चिह्नभेदे।

पूर्व(र्व)वादिन् पु० व्यवहारे पूर्वं(र्वं) प्रथमं वदति वद–णिनि। प्रथमाभियोक्तरि वादिनि (फरादि)।

पूर्वा(र्वा)षाढ़ा स्त्री० अश्विन्यादिषु नक्षत्रेषु विंशतितमे नक्षत्रे।

पूर्वा(र्वा)ह्ण पु० पूर्व(र्व)मह्नः एकदेशिस० टच् समा० अह्नादेशः णत्वम्। त्रिधा विभक्तदिवसस्य प्रथमे भागे, "पूर्वाह्णो वै देवाना" मिति श्रुतिः। प्रथमे अर्द्धदिने च "अमृतं वन्द्वेमित्यं पूर्वा(र्वा)ह्णे प्रहरद्वये" इति पुराणम्।

पूर्वे(र्वे)द्युस् अव्य० पूर्व(र्व)स्मिन् दिवसे पूर्व+(र्व)+एद्युस्। प्रथमदिवसे

पूल संहतौ वा चु० उभ० पक्षे भ्वा० पर० अक० सेट्। पूलयति–ते पूलति। अपूपुलत् त अपूलीत्।

पूष वृद्धौ अक० भ्वा० पर० सेट्। पूषति अपूषीत्।

पूष पु० पूष–क। सञ्ज्ञादारुदत्त्वे (तत) खनुल्। पूषकोऽपि अत्रैव।

पूषन् पु० पूष–कनिन्। सूर्य्ये। [व्याप्टतः।

पृ व्यापारे तु० आत्म० अक० अनिट् प्रायेणायम् व्याङ्पूर्वः। व्याप्रियते

पृ प्रीतौ स्वा० पर० सक० अनिट् । पृणोति अपार्षीत् ।

पृ पालने जुहो० पर० सक० अनिट् वा दीर्घः । पिपर्त्ति पिपृतः—
पिपूर्त्तः । अपार्षीत्—अपारीत् । पप्रतुः—पपरतुः ।

पृ पूर्त्तौ चु० उभ० सक० सेट् । पारयति—ते अपीपरत्—त ।

पृक्का स्त्री० पृच—कन् न्यङ्का० कुत्वम् । (पिड़िङ्) शाकभेदे ।

पृच सम्पर्के अदा० आत्म० अक० सेट् । पृक्ते अपर्चिष्ट । क्त । पृक्णः ।

पृच सम्पर्के रु०पर०अ०सेट् । पृणक्ति अपर्चीत् । क्त । पृक्णः ।

पृच संयमने सक० सम्पर्के अक०चु०उभ० पक्षे भ्वा० पर० सेट् ।
पर्चयति—ते पर्चति । अपीपृचत्—त अपपर्चत्—त अपर्चीत् ।

पृच्छा स्त्री० प्रच्छ—अङ् सम्प्रसारणम् । प्रश्ने ज्ञातुमिच्छयाकथनाय
प्रेरणे ।

पृज सम्पर्के, अदा० आ० सक० सेट् । पृक्ते अपर्जिष्ट । क्त पृ—ग्णः ।

पृड हर्षे तु० पर० अक० सेट् । पृडति । अपर्डिष्ट ।

पृण तर्पणे तु० पर० सक० सेट् । पृणति अपर्णीत् ।

पृतना स्त्री० पृ—तनन्—किच्च । सेनायाम्, सङ्ख्याविशेषान्वितरथगज-
स्वश्वादिसैन्यभेदे च (रथाः २४३ गजाः २४३ अश्वाः ७२९
पदातयः १२१५ ) ।

पृतनासाह पु० पृतनां साहयते सह—णिच्—क्विप् । इन्द्रे । ढत्व
प्रसङ्ग एव षत्वम् नान्यत्र ।

पृथ प्रक्षेपे चुरा०उभ०सक०सेट् । पार्थयति-ते अपीपृथत्-त अपपर्थत् त

पृथक् अव्य० पृथ-ककि । भिन्ने, नानारूपे, विनार्थे च ।

पृथक्त्व न० पृथक् इत्यस्य भावः त्व । वैशेषिकोक्ते पृथक्त्वबुद्धि-
सम्पादके गुणभेदे ।

पृथक्त्वचा स्त्री० पृथक् त्वचा यस्याः । मूर्वायाम् ।

पृथक्पर्णी स्त्री० पृथक् पर्णान्यस्याः ङीप् । (चाकुलिया) क्षुपभेदे ।

पृथगात्मता स्त्री० पृथक् आत्मा स्वरूपं यस्य तस्य भावः तल् ।
भेदे, विशेषे ।

**पृथगात्मिका** स्त्री० पृथक् भिन्न आत्मा यस्याः कप् । व्यक्तौ सामान्यधर्मस्य यथा सर्वत्र समरूपतया सत्त्वेनानुगमकत्वम् नैवं व्यक्तेस्तस्याः भिन्नभिन्नास्पदत्वात् ।

**पृथक्जन** पु० पृथक् भिन्नो जनो यस्मात् । नीचे, मूर्खे, पामरे च ।

**पृथग्विध** त्रि० पृथक् भिन्ना भिन्ना विधा यस्य । नानारूपे ।

**पृथग्बीज** पु० पृथक् बीजान्यस्य । भल्लातकवृक्षे (भेला) ।

**पृथा** स्त्री० कुन्तिभोजकन्यायाम् कुन्त्याम् ।

**पृथाज** पु० पृथाया जायते जन–ड । कुन्तीपुत्रे युधिष्ठिरादौ, अर्ज्जुनवृक्षे च । पृथाङ्गजादयोऽप्यत्र ।

**पृथि(थ)वी** स्त्री० प्रथते विस्तारमेति प्रथ–षिवन् (षवन्) वा नि० सम्प्रसारणं षित्त्वात् ङीष् । धरायाम् क्षितौ ।

**पृथिवीपति** पु० ६त० । नृपतौ भूपतौ । पृथिवीपालादयोऽप्यत्र ।

**पृथु** पु० प्रथ–कु । सूर्य्यवंश्ये वेनराजस्य दक्षिणबाहुमन्थनजाते नृपभेदे, कृष्णजीरके च । महति, स्थूले, दक्षे च त्रि० । स्त्रियां ङीष् वा ।

**पृथुक** पु० न० । पृथुवत् कायति कै–क । चिपिटके, 'हिः स्विन्नकं पृथुक"मिति स्मृतिः । बालके पु० । पृथुकार्त्तस्वरपात्र"मिति हिङ्गुपत्र्यां, बालिकायाञ्च स्त्री० ।

**पृथुकोल** पु० कर्म० राजबदरे ।

**पृथुपत्र** पु० पृथूनि पत्राण्यस्य । रक्तलशुने । [शयाम् ।

**पृथुपलाशिका** स्त्री० पृथूनि पलाशान्यस्याः गौ० ङीष् स्वार्थे कन् ।

**पृथुरोमन्** पु० पृथूनि रोमाणि रोमस्थानीयशल्कान्यस्य । मत्स्ये ।

**पृथुल** त्रि० पृथु+स्वार्थे लच्, पृथुः पृथुत्वमस्त्यस्य लच् वा । स्थूले । हिङ्गुपत्र्यां स्त्री० ।

**पृथुशिम्ब** पु० पृथ्वी शिम्बा यस्य । श्योनाकभेदे ।

**पृथूदर** पु० पृथु–उदरं यस्य । मेषे, वृहत्कुक्षौ त्रि० ।

**पृथ्वी** स्त्री० पृथुत्व गुणयुक्ता स्त्री ङीष् । भूमौ, हिङ्गुपत्र्यां, स्थूलैलायाम्, पुनर्नवायां, कृष्णजीरके च । स्वार्थे कन् । पृथ्वीका । वृहदेलायाम् हिङ्गुपत्र्यां, कृष्णजीरके च ।

पृथ्वीकुरुवक पु० पृथ्व्यां भूमौ कुरुवक इव शुभ्रत्वात् । श्वेतमन्दारके ।
पृदाकु पु० पर्द–गतौ काकु सम्प्रसारणम् । सर्पे, वृश्चिके व्याघ्रे गजे,
चित्रके वृचे च ।
पृश्नि त्रि० स्पृश–नि, प्रच्छ–नि वा पृ० । खर्वदुर्बलास्थिके, स्वल्पे च ।
रवे, देवक्यां, रश्मौ च स्त्री० । संज्ञायां कन् । कुम्भिकायां
(पाना) स्त्री० वा ङीप् ।
पृश्निगर्भ पु० ६त० । देवकीसूनौ श्रीकृष्णे ।
पृश्निपर्णी स्त्री० पृश्नि स्वल्पं पर्णमस्याः ङीप् । (चाकुलिया) विख्या-
तायां लतायाम् ।
पृष सेके भ्वा० व्या० सक० सेट् । पर्षते अपर्षिष्ट ।
पृषत् न० पृष–अति किच । विन्दौ । सेकयुक्ते त्रि० ।
पृषत पु० पृष–अतच् किच । शुभ्रविन्दुमति मृगभेदे, विन्दौ च ।
पृषताम्पति पु० ६त० अलुक् स० । वायौ ।
पृषताश्व पु० पृषतो मृगभेदोऽश्व इव गतिसाधनं यस्य । वायौ ।
पृषत्क पु० पृषत्+संज्ञायां कन् । वाणे ।
पृषदश्व पु० पृषतो विन्दोरश्व इव वाहकत्वात् । वायौ ।
पृषदाज्य न० पृषद्युक्तं दधिविन्दुयुक्तं दधिसेकयुक्तं वा आज्यम्
शा.क० । दधिमिश्रे घृते ।
पृषन्ति पु० पृष–भिच् किच्च । विन्दौ ।
पृषोदर त्रि० पृषदुदरे यस्य पृषो० नि० । विन्दुगर्भिते ।
पृष्ठ न० पृष-थक् दृढभावः । तनोः पश्चाद्भागे, वेदप्रसिद्धे स्तोत्रभेदे च ।
पृष्ठतस् अव्य० पृष्ठ+तसिल् । पश्चाद्भागे इत्यर्थ ।
पृष्ठदृष्टि पु० पृष्ठे पश्चात् दृष्टिरस्य । भल्लूके ।
पृष्ठवंश पु० ६त० । पृष्ठस्थे दण्डाकारेऽस्थ्नि ।
पृष्ठवाह् पु० पृष्ठेन वहति वह–ण्वि । पृष्ठेन शकटादिवाहके वृषादौ ।
पृष्ठ्य न० पृष्ठानां स्तोत्राणां समूहः यत् । स्तोत्रसमूहे । तद्वति याग-
भेदे, पृष्ठेन वहति यत् । पृष्ठवाहकाश्वादौ च त्रि० ।
पृश्नि स्त्री० प्रच्छ–निङ् सम्प्रसारणं सत्वम् । प्रश्निशब्दार्थे, पार्ष्णौ च ।

पॄ पालने पूर्त्तौ च क्र्या० प्वा० पर०सक० सेट् । पृणाति अपारीत् ।
पॄ पूर्त्तौ चु० उभ० सक० सेट् । पारयति—ते अपीपरत् त ।
पेचक पु० पच—वुन् इत्त्व । (पेंचा) उलूके, गजपुच्छमूलोपान्ते, पर्य्यङ्के, यूके, मेघे च ।
पेचुली स्त्री० पच—उलच् इच गौ० ङीष् । (कचु) शाकभेदे ।
पेटक पु० न० पिट—ण्वुल् । पुस्तकादीनां स्थापनार्थे वेत्रादिनिर्म्मिते पदार्थे, समूहे च । [इचे ।
पेटिका स्त्री० पेटीव कायति कै-क पृ० । (टेपारी) पेटकाकारफलयुते
पेटी स्त्री० पिट—अच् गौरा० ङीष् । स्वल्पपेटके ।
पेण गतौ पेषे च सक० क्षेपे अक० भ्वा० पर० सेट् । पेणति अपेणीत् । चङि न ह्रस्वः । [न ह्रस्वः ।
पेल कम्पे अक० गतौ सक० भ्वा०पर० सेट् । पेलति अपेलीत् चङि
पेल न० पेल—अच् । पुंसश्चिह्ने अण्डभेदे (अण्डकोष) ।
पेलव त्रि० पेल-घञ् पेलं वाति वा—क । कोमले, कृशे, विरले च ।
पेव सेवने भ्वा आत्म० सेट् । पेवते अपेविष्ट । चङि न ह्रस्वः ।
पेश(स)ल त्रि० पिश(स)—अलच् । सुन्दरे, दक्षे, कोमले च ।
पेशि(शी) स्त्री० पिश—इन् वा ङीप् । अण्डे, मांसपिण्डे, खड्गकोषे, नदीभेदे, पिशाचीभेदे राक्षसीभेदे च ।
पेष सेवने निश्चये च भ्वा०आ०सक०सेट् । पेषते अपेषिष्ट चङि न ह्रस्वः
पेषण न० पिष—ल्यु । चूर्णने । ल्युट् । खले, (तेकाटासिज) शतगुप्तायाञ्च ।
पेषणि स्त्री० पिष्यतेऽनया अनि वा ङीप् । पेषणशिलायाम् ।
पेस गतौ भ्वा० पर० सक० सेट् । पेसति अपेसीत् । चङि न ह्रस्वः ।
पै शोषे भ्वा० पर० सक० अनिट् । पायति अपासीत् ।
पैठर त्रि० पिठरे स्थाल्यां संस्कृतम् अण् । स्थालीपक्वे मांसादौ ।
पैठीनसि पु० मुनिभेदे ।
पैतृक न० पितृत आगतम् ठञ् । पितृतः प्राप्ते दाये ।
पैतृष्वसेय(स्रीय) पु० स्त्री० पितुः स्वसुरपत्यं ठक् छण् वा ढकि

टिलोपः । पितृष्वसुरपत्ये ।

**पैत्र** न० पितुरिदं पिता देवता अस्य वा अण् । तर्ज्जन्यङ्गुष्ठयोर्मध्यस्थाने पितृतीर्थे, पितृदेवताके, पितृसम्बन्धिनि च त्रि० ।

**पैल** पु० मुनिभेदे ।

**पैशाच** पु० पिशाचेन निर्वृत्तः अण् । "सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति । स पापिष्ठो विवाहानां पैशाच" इत्युक्ते विवाहभेदे । पिशाचकृते, तत्सम्बन्धिनि च त्रि० ।

**पैष्टिक** न० पिष्टानां समूहः ठक् तद्विकारो वा ठक् । पिष्टसमूहे, तद्विकारे ग्रासे, मद्ये च ।

**पैष्टी** स्त्री० पिष्टस्य विकारः अण् ङीप् । पिष्टकविकाररूपे मद्यभेदे ।

**पोगण्ड** त्रि० पवते पुनाति वा पू-विच् पौगण्डः एकदेशो यस्य । विकलाङ्गे न्यूनाधिकाङ्गे "पौगण्डः पञ्चमाद्वर्षादर्वाक् च दशमाब्दतः", इत्युक्तवयस्के बालके पु० ।

**पोटगल** पु० पोटेन संश्लेषमात्रेण गलति गल-अच् । नले, काशे च

**पोटा** स्त्री० पुट-अच् । पुरुषलक्षणयुक्तायां स्त्रियाम् ।

**पोत** पु० स्त्री० पू-तन् । बालके । नौकारूपे याने, समुद्रयाने, गृहस्थाने, वस्त्रे, दशवार्षिकहस्तिनि च पु० गौरा० ङीप् । पूतिकायाम् स्त्री० ततः स्वार्थे कन् । पोतिकाप्यत्र ।

**पोतवणिज्** पु० पोते वणिक् । नौकया वाणिज्यकारे ।

**पोतवाह** पु० पोतं नावं वहति वह-अण् । नौकावाहके (दाँडि) ।

**पोताधान** पु० पोतानां शिशूनामण्डजातमत्स्यानामाधानम् । क्षुद्रमत्स्यसङ्घे (पोनारमाक) ।

**पोत्र** न० पू-त्र । वज्रे, शूकरमुखाग्रे लाङ्गलमुखाग्रे, वहित्रे च ।

**पोत्रिन्** पु० पोत्रमस्त्यस्य इनि । शूकरे ।

**पोष्टृ** पु० पुष-तृच् । (कांटा करमजा) करञ्जभेदे । पोषके त्रि० ।

**पोष्यवर्ग** पु० पोष्याणां पाल्यानां वर्गः समुदायः । "माता पिता" गुरुः पत्नी त्वपत्यानि समाश्रिताः । अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृत" इत्युक्ते, "माता पिता गुरुर्भ्राता प्रजा दीनः समा-

श्रिताः। अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृत" इत्युक्ते च अवश्यप्रतिपाल्यगणे।

**पौगण्ड** न० पोगण्डस्य भावः अण्। कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधी"त्युक्ते शिशोरवस्थाभेदे।

**पौण्ड्र** पु० देशभेदे तद्देशवासिनि ब० व०। स्वार्थे कन् इक्षुभेदे।

**पौण्ड्रवर्द्धन** पु० देशभेदे (बेहार) तद्देशवासिनि ब० व०।

**पौत्र** पु० स्त्री० पुत्रस्यापत्यं शिवाद्यण्। एतस्य पुत्रे नप्तरि, 'पौत्रेणानन्त्यमश्नुते" इति स्मृतिः। स्त्रियां ङीप्।

**पौनःपुनिक** त्रि० पुनःपुनः भवः ठक् टिलोपः। मुहुर्भवे।

**पौनःपुन्य** न० पुनः पुनरित्यस्य भावः ष्यञ्। शश्वद्भावे।

**पौनर्भव** पु० पुनर्भुवि द्विरूढायां भवः अण्। द्वादशपुत्रमध्ये पुत्रभेदे। अयम् अण्। पुनर्भूसम्बन्धिनि त्रि०। "पौनर्भवेन भर्त्रा से"ति स्मृतिः। [त्रि०।

**पौर** न० पुरे नगरे भवः अण्। रौहिषतृणे (रामकर्पूर) पुरभवमात्रे

**पौरव** पु० पुरोर्गोत्रापत्यमण्। पुरुनामचन्द्रवंश्यन्टपस्यापत्ये।

**पौरस्त्य** त्रि० पुरोभवः त्यक्। पूर्वदेशभवे, अग्रभवे च।

**पौराणिक** त्रि० पुराणं वेत्त्यधीते वा ठण्। पुराणज्ञे।

**पौरुष** न० पुरुषस्य भावः कर्म वा अण्। पुरुषत्वे, विक्रमे, उद्यमे च। पुरुषस्येदम् अण्। ऊर्द्ध्वविस्तृतबाहुपाणिकमनुष्यपरिमाणे। "जवेऽपि मानेऽपि च पौरुषाधिक"मिति नैषधम्।

**पौरोगव** पु० पुरोऽग्रे पाच्यवस्तुषु गौर्नेत्रं यस्य पुरोगुः ततः स्वार्थे प्रज्ञाद्यण्। पाकशालाध्यक्षे।

**पौर्णमास** पु० पौर्णमास्यां विहितम् अण्। यागभेदे। तत्र कर्त्तव्यायामिष्टौ स्त्री०। "पौर्णमास्यां पौर्णमास्या यजेते"ति श्रुतिः।

**पौर्णमासी** स्त्री० पूर्णो मासोऽस्त्यस्याः प्रज्ञादित्वात् अण् ङीप्। पूर्णिमायाम्।

**पौलस्त्य** पु० स्त्री० पुलस्त्यस्यापत्यम् यञ्। कुबेरे, रावणादौ च शूर्पणखायां स्त्री० ङीप् यलोपः।

**पौलि** पु० पुल–महत्त्वे ज्वला० ण ततः इञ्। ईषत्पक्वे कणाय यवादौ।

**पौलोमी** स्त्री० पुलोम्नोऽपत्यम् स्त्री अण्। शच्याम्।

**पौष** पु० पौषी पुष्यनक्षत्रयुक्ता पौर्णमासी अस्मिन् मासे अण्। पुष्यनक्षत्रयुक्तपौर्णमासीघटिते चान्द्रे मासभेदे।

**पौषी** स्त्री० पुष्यनक्षत्रेण युक्ता पौर्णमासी अण् यलोपः। पुष्यनक्षत्रयुक्तायां पौर्णमास्याम्। [रीतिपुष्पकज्जले।

**पौष्पक** न० पुष्पेण निर्वृत्तम् अण् ततः स्वार्थे कन्। कुसुमाञ्जने

**प्याय** वृद्धौ भ्वा० आ० अक० सेट्। प्यायते, अप्यायि–अप्यायिष्ट।

**प्युष** उत्सर्गे चु० उभ० सक० सेट्। प्योषयति ते। अपुप्युषत् त।

**प्युष** विभागे दि० पर० सक० सेट्। प्युष्यते अप्युषत् अप्योषीत्।

**प्यैं** वृद्धौ भ्वा० आ० अक० अनिट्। प्यायते अप्यास्त।

**प्र** अव्य० प्रथ–ड। आरम्भे, गतौ, उत्कर्षे, प्राथम्ये, सर्वतोभावे, उत्पत्तौ, ख्यातौ, व्यवहारे च।

**प्रकट** त्रि० प्र+कट–अच्। स्पष्टे।

**प्रकटित** त्रि० प्र+कट–क्त। प्रकाशिते।

**प्रकम्पन** पु० प्र+कपि–णिच्–युच्। "वायौ प्रकम्पनेनानु चकम्पिरे" इति माघः नरकभेदे च। [प्रकीर्णे पुष्पादौ त्रि०।

**प्रकर** पु० प्र+कॄ–भावे अप्। समूहे अधिकारे च। कर्मणि अप्।

**प्रकरण** न० प्र+कृ–ल्युट्। प्रस्तावे, अभिनेयनायकादिके दृश्यकाव्यभेदे, ग्रन्थसन्धौ, एकार्थप्रतिपादकग्रन्थांशे च।

**प्रकर्ष** पु० प्र+कृष–घञ्। उत्कर्षे।

**प्रकाण्ड** पु० प्रकृष्टः काण्डः प्रा०। वृक्षस्य मूलादारभ्य शाखान्तभागे। प्रशस्ते न०। [अत्यर्थेऽनुमतौ च अव्य०।

**प्रकाम** त्रि० प्रगतः कामम् प्रा० स०। यथेष्टे। प्र+कम–णमुल्।

**प्रकार** पु० प्र+कृ–घञ्। भेदे, सादृश्ये च।

**प्रकाश** पु० प्र+काश–कर्त्तरि अच् घञ् वा। आतपे, विकाशे च। कर्त्तरि अच्। विकाशयुक्ते त्रि०।

**प्रकाशात्मन्** पु० प्रकाशः आतपः अवभासो वा आत्मा स्वरूपं यस्य । सूर्य्ये, परमेश्वरे च । व्यक्तस्वरूपे त्रि० ।

**प्रकीर्ण** न० प्र+कॄ—भावे क्त । चामरे, भिन्नजातीयानां मिश्रणे च प्रतिकारः ५ पु० कर्मणि क्त । विक्षिप्ते, विस्तृते भिन्नजातीयैः मिश्रिते च त्रि० । स्वार्थे कन् । अत्र चामरे न० अश्वे पु० ।

**प्रकीर्य्य** पु० प्रकीर्य्यतेऽसौ प्र+कॄ—क्यप् । (नाटाकरमजा) करञ्जभेदे । व्याप्ते त्रि० ।

**प्रकृत** त्रि० प्र+कृ—क्त । अधिकृते, आरब्धे, प्रकरणप्राप्ते च ।

**प्रकृति** स्त्री० प्रकरोति प्र+कृ-क्तिच् । सांख्यमतसिद्धे जगदारम्भके सत्त्वरजस्तमोरूपगुणत्रयात्मके प्रधाने, उपादानकारणे, "प्रकृतिश्च दृष्टान्तानुपरोधादि"ति शारीरकसूत्रम् । स्वभावे प्रकृतिस्त्वां नियोक्ष्यती"ति गीता । लिङ्गे, स्वामिनि, अमात्ये, सुहृदि, कोषे, राष्ट्रे, स्वम्यादौ राज्याङ्गे, पौरश्रेणौ, "नृपतिः प्रकृतीरवेक्षतु"मिति रघुः । दुर्गे, बले, शिल्पिनि, शक्तौ, योषिति, परमात्मनि, पञ्चभूतेषु, करणे, गुह्ये, जन्तौ, एकविंशत्यक्षरपादके छन्दोभेदे मातरि, व्याकरणोक्ते प्रत्ययोत्पत्तिनिमित्ते शब्दभेदे च ।

**प्रकृष्ट** त्रि० प्र+कृष—क्त । उत्कर्षयुक्ते ।

**प्रकोष्ठ** पु० प्रगतः कोष्ठं प्रा० स० । कूर्परस्याधोभागस्थे मणिबन्धपर्य्यन्ते हस्तावयवे, राजद्वारपिण्डे च ।

**प्रक्रम** पु० प्र+क्रम—घञ् न वृद्धिः । क्रमे, अवसरे, उपक्रमे च ।

**प्रक्रिया** स्त्री० प्र+कृ—श । अधिकारे, प्रकरणार्थे, राज्ञां छत्रचामरधूननादिव्यापारे च ।

**प्रक्व(क्वा)ण** पु० प्र+क्वण—अप् घञ् वा । वीणायाः शब्दे ।

**प्रक्ष्वेडन** पु० प्र+क्ष्विड-ल्यु । नाराचास्त्रे । [अश्वतरे च पु० ।

**प्रखर** त्रि० प्रकृष्टः खरः प्रा०स० । अत्यन्तोष्णे । हयसज्जायां, कुकुटे,

**प्रख्या** त्रि० प्र+ख्या—अ । सादृश्ये । ब० । उत्तरपदस्थः । तुल्यार्थे यथा पितृप्रख्यः एवं निभादयोऽप्यत्र ।

**प्रगण्ड** पु० गडि वदनैकदेशे अच् प्रकृष्टो गण्डः अवयवः । कूर्परोप-

रिक्तपर्य्यन्तभागे । वहि:प्राकारे दुर्गप्राकारभित्तौ, सैन्यानां निवेशनस्थाने च स्त्री० गौरा० ङीप् ।

प्रगल्भ त्रि० प्र+गल्भ—अच् । प्रत्युत्पन्नमतौ, प्रतिभान्विते च नायिकाभेदे स्त्री० ।

प्रगाढ़ त्रि० प्रकर्षेण गाढ़म् गाह—क्त । अत्यन्तभृशे, दृढ़े च ।

प्रगुण त्रि० प्रगतो गुण: येन प्रकृष्टो गुणो यस्य वा । ऋजुतावति, दक्षे च । प्रकृष्टगुणेऽप्यत्र ।

प्रगृह्य न० प्र+ग्रह-क्यप् । व्याकरणोक्ते स्वरसन्धिराहित्ययोग्ये पदे ।

प्रगे अव्य० प्रगीयतेऽत्र प्र+गै—के । अतिप्रातःकाले ।

प्रघण(न) न० प्र+हन—अप् नि० कुत्वणत्वे । वहिर्द्वारप्रकोष्ठके अलिन्दे । मतान्तरे न णत्वम् ।

प्रग्र(ग्रा)ह पु० प्रगृह्यते प्र+ग्रह+अप् घञ् वा । ग्रहणे अश्वादीनां रज्जौ, किरणे, तुलासूत्रे, वन्द्याम्, नियमने, भुजे, कर्णिकारवृक्षे च ।

प्रचक्र न० प्रगतचक्रं प्रा० स० । स्वचक्रात् परचक्रं प्रति चलिते,

प्रचण्ड त्रि० प्रकर्षेण चण्ड: प्रा० । दुर्द्धर्षे, दुर्वहे, दुरन्ते, प्रतापान्विते च । श्वेतकरवीरे पु० । दुर्गाया नायिकाभेदे स्त्री० ।

प्रचण्डमूर्त्ति पु० प्रचण्डा मूर्त्तिरस्य । वरुणवृक्षे । भयानकदेहे त्रि० ।

प्रचय पु० प्र+चि—अच् । समूहे, उपचये, तज्जनके शिथिलसंयोगे च ।

प्रच(चा)र पु० प्रचरत्यत्र प्र+चर—अप् घञ् वा । पथि । भावे घञ् । प्रसारे गतौ च ।

प्रचलायित त्रि० प्रचलवदाचरित: प्रचल+क्यच्—क्त । निद्रादिना [घूर्णिते ।

प्रचुर त्रि० प्र+चुर—क । बहुले ।

प्रचेतसी स्त्री० प्रकर्षेण चेतयति मूर्च्छितं चित-णिच्—असिच् ङीप् । कट्फले तच्चूर्णस्य हि मूर्च्छानाशकता वैद्यकसिद्धा ।

प्रचेतस् पु० प्र+चित—असि च । वरुणे, मुनिभेदे, प्रकृष्टहृदये त्रि० ।

प्रचोदनी स्त्री० प्रचोद्यते अपसार्य्यते रोगोऽनया चुद—णिच्—ल्युट् ङीप् । कण्टकारिकायाम् ।

प्रच्छ जिज्ञासायां तु० पर० द्विक० अनिट् । पृच्छति अप्राक्षीत् ।

प्रच्छदपट पु० प्रच्छाद्यतेऽनेन प्र+छद-णिच् घ ह्रस्वः कर्म्म० । (पाछुड़ि) प्रावरणवस्त्रे ।
प्रच्छन्न न० प्र+छद्-क्त । गुप्तद्वारे अन्तर्द्वारे । आच्छन्ने त्रि० ।
प्रच्छर्दिका स्त्री० प्रच्छर्दयति छर्द-णिच्-ण्वुल् । वमिरोगे ।
प्रच्छादन न० प्रच्छाद्यतेऽनेन छद-णिच्-ल्युट् । उत्तरीयवस्त्रे ।
प्रजन पु० प्रजायतेऽनेन प्र+जन-अप् । स्त्रीगव्यादिषु पुंगवस्य संयोजने (पालदेओया) ।
प्रजा स्त्री० प्र+जन-ड । सन्ततौ, जने च ।
प्रजाता स्त्री० प्रजातं प्रजननं गर्भमोचनमस्त्यस्याः अर्श आद्यच् । प्रसूतायां स्त्रियाम् । प्र+जन-क्त । जाते त्रि० ।
प्रजापति पु० ६त० । चतुर्मुखे ब्रह्मणि, प्रजासर्ज्जके दक्षादौ, नरपाले, जामातरि, सूर्य्ये, वह्नौ, त्वष्टरि च ।
प्रजावती स्त्री० प्रजा विद्यतेऽस्याः मतुप् मस्य वः । भ्रातृजाया याम्, "सर्वेषामेकजातानामेकश्चेत् पुत्रवान् भवेत्" सर्वांस्तांस्तेन पुत्रेण पुत्रिणः" इत्युक्ते भ्रातुष्पुत्रस्याप्यात्मनः पुत्रत्वात् भ्रातृजायायाम् आत्मपुत्रवत्त्वम् । सन्तानवत्यां स्त्रियाञ्च ।
प्रज्ञा स्त्री० प्र-ज्ञा अ । बुद्धौ, सरस्वत्याञ्च ।
प्रज्ञान न० प्र-ज्ञा भावे ल्युट् । बुद्धौ । करणे ल्युट् । चिह्ने, अर्श आद्यच् । पण्डिते त्रि० ।
प्रज्ञु त्रि० प्रगते विरले जानुनी यस्य जानुनी ज्ञुः । विरलजानुके जने
प्रडीन न० प्र+डी-क्त तस्य नः । पक्षिणां गतिभेदे ।
प्रणय पु० प्र+नी-अच् । प्रीतौ, तथा प्रार्थने, प्रसवे, स्नेहे, विश्वासे, निर्व्वाणे च ।
प्रणयिन् पु० प्रणयः प्रेम अस्त्यस्य इनि । भर्त्तरि नायके च । भार्य्यायां स्त्री० ङीप् । [शब्दभेदे ।
प्रणव पु० प्रकर्षेण नूयतेऽनेन प्र-नू-अप् । ओङ्कारे वेदादौ पाठ्ये
प्रणाद पु० प्र+नद-घञ् । अनुरागजे सीत्कृतादौ शब्दे उच्चशब्दे, कर्णरोगभेदे च ।

**प्रणाम** पु० प्र+नम—घञ् । प्रणतौ स्वापकर्षबोधकव्यापारे करशिरः-संयोगादौ, "पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा । वचसा मनसा चैव प्रणामोऽष्टाङ्ग उच्यते," इत्युक्ते अष्टाङ्गव्यापारभेदे च ।

**प्रणाय्य** त्रि० । प्र+नी ण्यत् । असम्मते द्वेष्ये, प्रीतिशून्ये, साधौ, प्रिये च ।

**प्रणाली** स्त्री० प्र+नल-घञ् गौरा०ङीष् । जलवहनमार्गे परम्परायाञ्च

**प्रणिधान** न० प्रणिधीयते प्र+नि+धा—ल्युट् । प्रयत्ने, अभिनिवेशे, योगशास्त्रोक्ते चिन्तनविशेषरूपे समाधिभेदे च ।

**प्रणिधि** पु० प्रणिधीयते प्र+नि+धा—कि । चरे, अनुचरे, याचने, अवधाने च । [गीता ।

**प्रणिपात** पु० प्र+नि+पत—घञ् । प्रणामे । "तद्विद्धि प्रणिपातेने"ति

**प्रणिहित** त्रि० प्र+नि+धा—क्त । प्राप्ते, स्थापिते, समाहिते च ।

**प्रणीत** त्रि० प्र+नी—क्त । पाकेन रूपरसान्यथाभावापन्ने पदार्थे, क्षिप्ते, निवेशिते विहिते च । यज्ञे संस्कृताग्नौ पु० । यज्ञपात्रभेदे स्त्री०

**प्रणेय** त्रि० प्र+नी—यत् । वश्ये अधीने ।

**प्रतति** स्त्री० प्र+तन—क्तिन् । विस्तारे, वल्ल्याञ्च । वल्ल्यां वा ङीप् ।

**प्रतन** पु० प्र+च्यु ल तुट् च । पुरातने पदार्थे ।

**प्रतल** न० प्रकृष्टं तलम् । पातालभेदे । प्रकृष्टं तलमस्य । विस्तृताङ्गुलिके पाणौ पु० । [लतायाम् ।

**प्रतानिनी** स्त्री० प्रतानः विस्तारोऽस्त्यस्याः इनि । विस्तारवत्यां

**प्रताप** पु० प्र+तप-घञ् । कोषदण्डजाते तेजसि, तापे, अर्कवृक्षे च ।

**प्रतापन** पु० प्रतापयति तप—णिच्—ल्यु । नरकविशेषे । तापके त्रि०

**प्रतापस** पु० तपसि साधु अण् प्रकृष्टस्तापसः । शुक्लार्कवृक्षे ।

**प्रतारण** न० प्र+तॄ—णिच्—ल्युट् । वञ्चने । युच् । प्रतारणाप्य स्त्री०

**प्रति** अव्य० प्रथ डति । व्याप्तौ, लक्षणे, कञ्चित् प्रकारमापन्नस्य कथने, भागे, प्रतिदाने, प्रतिनिधीकरणे, स्तोके, चये, निश्चये, व्यावृत्तौ, आभिमुख्ये, स्वभावे च । [क्षतिसम्भूपायाञ्च ।

**प्रतिकर्मन्** न० प्रति+कृ—मनिन् । विद्यमानस्य गुणान्तराधाने

**प्रति(ती)कार** पु० प्रति+कृ—घञ् वा दीर्घः। वैरनिर्यातने कृतस्यापकारस्य तुल्यरूपापकारकरणेन शोधने, रोगादेश्चिकित्सायाञ्च।
**प्रति(ती) काश** प्रतिरूपं काशते काश—घञ् वा दीर्घः। तुल्यरूपे।
**प्रतिकूल** त्रि० प्रतिरूपं कूलं यत्रोऽस्य। अननुकूले विरुद्धपक्षावलम्बिनि।
**प्रतिकृति** स्त्री० प्रति+कृ-क्तिन्। प्रतिमायां, सादृश्ये, प्रतिनिधौ च।
**प्रतिक्षण** अव्य० क्षणं क्षणं व्याप्य व्याप्तौ अव्ययी०। अभीक्ष्णे।
**प्रतिक्षिप्त** त्रि० प्रति+क्षिप—क्त। प्रेषिते अधिक्षिप्ते बाधिते तिरस्कृते च
**प्रतिग्रह** पु० प्रति+ग्रह—अप्। स्वीकारे, अदृष्टार्थदत्तद्रव्यस्य ग्रहणे, सैन्यपृष्ठे, पतद्ग्रहे च।
**प्रतिघ** पु० प्रति+हन—ड न्यङ्क्वा० कुत्वम्। प्रतिघाते, कोपे च।
**प्रतिघातन** न० प्रति—हन स्वार्थे णिच् ल्युट्। मारणे।
**प्रतिच्छन्दस्** न० छन्दोऽभिप्रायः प्रतिगतश्छन्दः। अभिप्रायानुरूपे, प्रतिरूपे, अनुरोधे च। [सादृश्ये च।
**प्रतिच्छाया** स्त्री० प्रतिरूपा छाया प्रा०। प्रतिमायां, प्रतिरूपतायां
**प्रतिजागर** पु० जागरस्य प्रतिनिधिः। प्रत्यवेक्षणाय गृहमवेक्षस्वेति नियोगे। [(आलजिव)।
**प्रतिजिह्वा** स्त्री० प्रतिरूपा जिह्वा। तालुमूलस्थे जिह्वाकारे मांसपिण्डे
**प्रतिज्ञा** स्त्री० प्रति+ज्ञा—अ। कर्त्तव्यतयोपदेशे, साध्यवत्त्वेन पक्षनिर्देशे, यथा पर्वतोऽग्निमान् इत्यादिवाक्यम् अनेन वह्निमत्त्वेन पर्वतस्य निर्देशः। व्यवहारे पक्षाभिधायके "इदमनेन मम गृहीतं न ददाती"ति वाक्ये च। ल्युट्। प्रतिज्ञानमप्यत्र न०।
**प्रतिज्ञात** त्रि० प्रति+ज्ञा—क्त। प्रागुक्तप्रतिज्ञाविषये "ततोऽर्थौल्लेखयेत् सद्यः प्रतिज्ञातार्थसाधन"मिति स्मृतिः।
**प्रतिदान** न० प्रतिरूपं तुल्यरूपं दानम् प्रा० स०। विनिमये तुल्यरूपदाने, न्यस्तस्य द्रव्यस्य प्रत्यर्पणे च। [विमयस्ये"ति भट्टिः।
**प्रतिध्वनि** पु० प्रतिरूपोध्वनिः। प्रतिशब्दे "प्रतिध्वनीनातनुता-
**प्रतिध्वान** पु० प्रति+ध्वन—घञ्। प्रतिशब्दे।

प्रतिनप्तृ पु० प्रतिनिहितो नप्ता पौत्रः प्रा० । प्रपौत्रे ।
प्रतिनिधि पु० प्रति+निधीयते तुल्यरूपतया स्थाप्यते प्रति+नि+धा-
कि । प्रतिरूपे, प्रतिमायां च ।
प्रतिपक्ष पु० प्रतिकूलः पक्षो यस्य । शत्रौ, व्यवहारे विरुद्धपक्षे
प्रतिवादिनि च । प्रा० स० । सादृश्ये ।
प्रतिपत्ति स्त्री० प्रति+पद-क्तिन् । प्रवृत्तौ, प्रागल्भ्ये, गौरवे प्राप्तौ
पदप्राप्तौ, कर्त्तव्यताज्ञाने च "विषादलुप्तप्रतिपत्तिविस्मितमि"ति रघुः
प्रतिपन्नफला स्त्री० प्रतिपन्नं फलं यस्याः । कुष्माण्ड्याम् । (कोंहडउस्के)
प्रतिपद् स्त्री० प्रतिपद्यते उपक्रम्यते पक्षोऽनया प्रति+पद-क्विप् ।
पक्षारम्भके तिथौ ।
प्रतिपन्न त्रि० प्रति+पद-क्त । अवगते, स्वीकृते, "प्रतिपन्नं हि
विचेतनैरपी"ति कुमारः । विक्रान्ते च ।
प्रतिपादन न० प्रति+पद-णिच्-ल्युट् । दाने, बोधने, प्रतिपत्तौ च।
प्रतिप्रसव पु० प्रति+प्र+सू-अप् । निषिद्धस्य पुनःप्राप्तिसम्भावनायाम्
प्रतिबन्ध पु०प्रति+बन्ध घञ् । कार्य्यप्रतिघाते । ण्वुल् । प्रतिरोधके त्रि०
प्रतिबन्धि(वन्दि) पु० प्रति+बन्ध-(वन्द) वा इन् । अनिष्टान्तर-
प्रसञ्जके वाक्ये ।
प्रतिबल पु० प्रतिकूलं बलं यस्य । "शत्रौ प्रतिबलजधे"रिति वेणी०।
प्रतिरूपं बलं यस्य । तुल्यबले त्रि० "यो मे प्रतिबलो लोके"
इति चण्डी ।
प्रतिभय त्रि० प्रतिगतं भयमस्मात् । भयहेतौ भयङ्करे ।
प्रतिभा स्त्री० प्रति+भा-अ । बुद्धौ, प्रत्युत्पन्नबुद्धौ च ।
प्रतिभू पु० प्रतिनिधि भवति भू-क्विप् । लग्नके (जामिन) ।
प्रतिमा स्त्री० प्रति+मा-अ । गजदन्तस्य बन्धे, सदृशीकरणे, सदृश-
मृत्तिकाशिलादिमूर्त्तौ । "प्रतिमायां शिलाबुद्धि"रिति पुराणम् ।
ब० । उत्तरपदस्थः । सदृशे त्रि० । यथा देवप्रतिमः ।
प्रतिमान न० प्रतिमीयतेऽनेन प्रति-मि-मा-वा ल्युट् । प्रतिबिम्बे,
प्रतिमायां, गजकुम्भस्याधोभागे तद्दन्तयोर्मध्यस्थाने च ।

**प्रतिमुक्त** त्रि० प्रति+मुच-क्त । परिहिते, परित्यक्ते च ।

**प्रतियत्न** पु० प्रति+यत-नङ् । वाञ्छायाम्, उपग्रहे, निग्रहादौ, सन्तां सतो गुणान्तराधानरूपे संस्कारे, ग्रहणे, प्रतिग्रहे च । प्रतिरूपो यत्नो यस्य ब० । प्रतियत्नयुक्ते त्रि० ।

**प्रतियातना** स्त्री० प्रति+यात्यतेऽनया चु० यत-युच् । प्रतिमायाम् प्रा० स० । तुल्यरूपयातनायाम् ।

**प्रतियोगिन्** त्रि० प्रतिरूपं युज्यते प्रति+युज+घिनुण् । प्रतिकूलसम्बन्धवति । यथा अभावस्य प्रतिकूलसम्बन्धवत्त्वात् घटादिस्तस्य प्रतियोगी । विरुद्धपक्षे च ।

**प्रतिरूप** न० प्रतिगतं रूपम् । प्रतिच्छायायां, प्रतिबिम्बे च प्रतिगतरूपस्य ब० । सदृशे त्रि० । स्वार्थे कन् । अत्रैव ।

**प्रतिविरोध** पु० प्रति+रुध-भावे घञ् । बाधे, प्रतिबन्धे, निरोधे, तिरस्कारे, चौर्य्ये च । कर्त्तरि अच् । चौरे । एवं लृविन्यनावप्यत ।

**प्रतिलोम** त्रि० प्रतिगतं लोम आनुकूल्यमस्मात् प्रति+लोमन् अच् समा० । वामे विपरीते ।

**प्रतिलोमज** पु० प्रतिलोमात् जातः जन-ड । उत्तमवर्णस्त्रियाम् अधमवर्णात् जाते सङ्कीर्णवर्णे ।

**प्रतिवचन** न० प्रतिरूपं वचनम् । प्रतिवाक्ये, उत्तरे, विरुद्धवाक्ये च ।

**प्रतिवात** त्रि० प्रतिगतो वातो यतः । यस्मात् प्रदेशात् वायुः प्रत्यागच्छति तस्मिन् देशे "प्रतिवातेऽनुवाते चे"ति मनुः ।

**प्रतिवादिन्** पु० त्रि० प्रतिकूलं वदति वद-णिनि । प्रतिपक्षे व्यवहारे प्रत्यर्थिनि अभियोज्ये (आसामी) "कारणे प्रतिवादिनि"तिस्मृतिः

**प्रतिवासि(वेशि)न्** त्रि० प्रत्यासन्नं वसति (विशति) प्रति+वस-(विश) वा णिनि । (पड़सि) स्वगृहासन्नवासिनि । स्त्रियां ङीप् । "दरिद्रे हि प्रतिवासि(वेशि)नि"ति भा० ह० २प० ।

**प्रतिविधान** न० प्रति+वि+धा-ल्युट् । प्रतीकारे ।

**प्रतिबिम्ब** न० प्रतिरूपं बिम्बम् । बिम्बसादृश्ये प्रतिच्छायायाम् ।

**प्रतिविषा** स्त्री० प्रतिगतं विषं यया । अतिविषायाम् (आतइच्) ।

प्रतिशासन न० प्रति+शास–ल्युट्। भृत्यादेर्निकृष्टस्य नियोगे
प्रतिश्याय पु० प्रति+श्यै–ण। पीनसरोगे। [ग्टहे, आश्रये च।
प्रतिश्रय पु० प्रतिश्रीयते प्रति+श्रि–अच्। यज्ञग्टहे, सभायां,
प्रतिश्रव पु० प्रति+श्रु–अप्। स्वीकारे।
प्रतिश्रुत् स्त्री० प्रतिरूपं श्रूयते श्रु–क्विप्। प्रतिशब्दे प्रतिध्वनौ।
प्रतिषेध पु० प्रति+सिध–घञ्। निषेधे "मा कुरु" इत्यादिना निवा-
रणे। ल्युट्। तत्रैव न०।
प्रतिष्टम्भ पु० प्रति+स्तन्भ–घञ् षत्वम्। प्रतिबन्धे।
प्रतिष्ठा स्त्री० प्रति+स्था–अच्। स्थितौ, व्रतयागादेः समाप्तौ, चतु-
रक्षरपादके छन्दोभेदे, कूपादेः संस्कारे, व्रतानां समाप्तौ कर्त्तव्ये
कर्मभेदे, आश्रये च "ब्रह्म पुच्छं प्रतिष्ठे"ति श्रुतिः।
प्रतिसर पु० प्रति–सृ+अच्। सैन्यपश्चाद्भागे, हस्तसूत्रे च।
प्रतिसर्ग पु० प्रतिरूपः प्रतिकूलो वा सर्गः। ब्रह्मणः सृष्टि–तुल्यायां
मरीच्यादिसृष्टौ प्रलये च। [निकायाम् (परदा)
प्रतिसीरा स्त्री० प्रतिसिनोति सीयते वा रक् दीर्घश्च। जव-
प्रतिसूर्य्यक पु० प्रतिरूपः सूर्य्यः स्वार्थे कन्। उपसूर्य्यकमण्डले
(सूर्य्यसभा)। तत्समवर्णे कृकलासे च।
प्रतिसृष्ट त्रि० प्रति+सृज–क्त। प्रत्याख्याते, प्रेषिते च।
प्रतिसोमा स्त्री० प्रतिनिहिता सोमा सोमवल्ली। महिषवल्लयाम्।
प्रतिहत त्रि० प्रति+हन–क्त। द्विष्टे, रुद्धे निरस्ते, प्रतिस्खलिते च।
प्रतीहार पु० प्रति+हृ–घञ् वा दीर्घः द्वारे अण्। द्वारपे,
मायाकारे च त्रि० स्त्रियां ङीप्। एवुल्। द्वारपाले त्रि०।
णिनि। प्रतीहारीत्यप्यत्र, मायाकारे च। [त्रि०।
प्रतीक पु० प्रति–कन् नि० दीर्घः। अवयवे। प्रतिरूपे, विलोमे च
प्रतीक्षा स्त्री० प्रति–ईक्ष अ। अपेक्षायाम्।
प्रतीच्य त्रि० प्रति+ईक्ष–ण्यत्। पूज्ये "प्रतीच्यं तत्प्रतीक्ष्यायैमिति-
व्यक्ते" इतिमाघः। [प्रतीच्योऽप्यत्र।
प्रतीचीन त्रि० प्रतीच्यां भवः ख। पश्चिमदिग्भवे। यत्।

प्रतीत त्रि० प्रति-इण-क्त । ख्याते, ज्ञाते, हृष्टे, सादरे च ।
प्रतीति स्त्री० प्रति-इण क्तिन् । ज्ञाने, ख्यातौ, आदरे, हर्षे च ।
प्रतीप त्रि० प्रति+अप्-कर्म्म० अच् नि० । प्रतिकूले । चन्द्रवंश्ये, नृपभेदे पु० । [ णिनि । भार्य्यायाम् ।
प्रतीपदर्शिनी स्त्री० प्रतीपं प्रतिकूलं दर्शयति दृश-णिच् ।
प्रतीर न० प्रतीर्य्यते प्र+तीर-क । तटे, तीरे ।
प्रतीवाप पु० प्रति+वप घञ् दीर्घः । गलितस्वर्णादेरन्यचूर्णने ।
प्रतोद पु० प्रतुद्यतेऽनेन तुद-घञ् । अश्वादिताड़नदण्डे (चाबुक्) ।
प्रतोली स्त्री० प्र+तुल-अच् गौ०ङीष् । रथ्यायाम्, पुराभ्यन्तरवर्त्मनि, हट्टादौ निर्मिते पथि च ।
प्रत्न त्रि० प्र+त्न । पुरातने ।
प्रत्यक्पर्णी स्त्री० प्रत्यञ्चि पर्णान्यस्याः ङीप् । अपामार्गे प्रत्यक्पुष्पी-त्यप्यत्र । [ वृक्षे, मूषिकपर्ण्याञ्च ।
प्रत्यक्श्रेणी स्त्री० प्रतीची श्रेणीव अस्याः न कप् । दन्ती-
प्रत्यक्ष अव्य० प्रतिरूपमक्षणः अव्ययी० अच् । इन्द्रियजन्ये ज्ञान-भेदे । अर्श आद्यच् । तद्विषये त्रि० ।
प्रत्यग्र त्रि० प्रतिगतमग्रमग्रत्वम् प्रा० । नूतने, शोधिते च ।
प्रत्यङ्गिरा स्त्री० देवीभेदे ।
प्रत्यच् त्रि० प्रति+अनुच-क्विन् । पश्चिमकाले, पश्चिमदेशे च पश्चिमायां दिशि स्त्री० ङीप् । प्रतीची ।
प्रत्यनीक पु० प्रतिकूलमनीकं यस्य । रिपौ, विघ्ने च ।
प्रत्यन्त पु० प्रति गतोऽन्तम् प्रा० । म्लेच्छदेशे । सन्निकृष्टदेशे त्रि० ।
प्रत्यन्तपर्व्वत पु० प्रत्यन्तः सन्निकृष्टः पर्व्वतः । वृहत्पर्व्वतसमीपस्थे पर्व्वते
प्रत्यभियोग पु०प्रतिरूपोऽभियोगः । अभियुक्तेन प्रतिवादिना स्वाभि-योगिनं प्रति अभियोगान्तरकरणे ।
प्रत्यभिवाद पु० प्रति+अभि+वद णिच्-घञ् । अभिवादस्य प्रतिरूपे आशीर्वचनादौ । ल्युट् । प्रत्यभिवादनमप्यत्र न० ।
प्रत्यय पु० प्रति+इण्-अच् । शपथे, ज्ञाने, विश्वासे, अधीने, शब्दे,

छिद्रे, आधारे, निश्चये, स्वादुनि, कारणे, "अपैत्यते प्रत्ययमुत्त-मभि"ति कुमारः व्याकरणोक्ते प्रकृतिं निमित्तीकृत्य विधीयमाने शब्दभेदे च ।

**प्रत्ययित** त्रि॰ प्रति+अय-क्त । आप्ते, विश्वस्ते, प्रतिगते च ।

**प्रत्यर्थिन्** त्रि॰ प्रत्यर्थयते प्रति-अर्थ-पीड़ने णिनि । शत्रौ, प्रतिकूल-मर्थयते णिनि । व्यवहारे प्रतिवादिनि । [पुनर्दाने ।

**प्रत्यर्पण** न॰ प्रति+ऋ-णिच्-पुक्-ल्युट् । प्रतिदाने गृहीतस्य धनादेः

**प्रत्यवसान** न॰ प्रति+अव+सो-ल्युट् । भोजने ।

**प्रत्यवसित** त्रि॰ प्रति+अव+सो-क्त । भुक्ते ।

**प्रत्यवस्कन्द** पु॰ प्रति+अव+स्कन्द्-घञ् । व्यवहारे चतुर्विधोत्तर-मध्ये उत्तरभेदे । ल्युट् । "अर्थिनाभिहितो योऽर्थः प्रत्यर्थी यदि तं तथा । प्रपद्य कारणं ब्रूयात् प्रत्यवस्कन्दनं हि तदि"ति स्मृत्युक्तलक्षणे उत्तरभेदे, औपधभेदे च न॰ ।

**प्रत्यवस्थातृ** त्रि॰ प्रत्यवतिष्ठते प्रतिपक्षतया विवदते प्रति+अव+स्था-तृच् । प्रतिपक्षवादिनि शत्रौ ।

**प्रत्यवाय** पु॰ प्रति+अव+इण् । पापे ।

**प्रत्याख्यात** त्रि॰ प्रति+आ+ख्या-क्त । निराकृते दूरीकृते ।

**प्रत्याख्यान** न॰ प्रति+आ+ख्या-ल्युट् निराकरणे ।

**प्रत्यादिष्ट** त्रि॰ प्रति+आ+दिश-क्त । निरस्ते ।

**प्रत्यादेश** पु॰ प्रति+आ+दिश-घञ् । निराकरणे ।

**प्रत्यालीढ** न॰ प्रति+आ+लिह-क्त । "आलीढं दक्षिणं पादं प्रत्या-लीढन्तु वामक"मित्युक्ते वामपादसङ्कोचेन दक्षिणपादप्रसारणरूपे धन्विनां स्थितिविशेषे । आस्वादिते त्रि॰ ।

**प्रत्यासन्न** त्रि॰ प्रति+आ+सद्-क्त । अतिनिकटस्थे ।

**प्रत्याहार** पु॰ प्रति+आ+हृ-घञ् । योगशास्त्रप्रसिद्धे इन्द्रियाणां स्वस्वविषयेभ्यो निराकरणे ।

**प्रत्युत्क्रम** पु॰ प्रति+उद्+क्रम-घञ् न वृद्धिः । युद्धार्थोद्योगे, प्रधा-नप्रयोजनोद्देशेनाप्रधानारम्भे च ।

**प्रत्युत्तर** न० प्रतिरूपमुत्तरमस्य । उत्तरस्योत्तरवाक्ये ।

**प्रत्युत्थान** प्रति+उद्+स्था-ल्युट् । अभ्युत्थाने आगतस्य सम्मानार्थमासनादुत्थितौ । [ चितमृद्रौ ।

**प्रत्युत्पन्नमति** त्रि० प्रत्युत्पन्ना तत्कालोचिता मतिर्यस्य । तत्कालो-

**प्रत्युद्गमनीय** न० प्रति+उद्+गम-अनीयर् । धौतवस्त्रयुग्मे, "गृह्णी ततस्तत्प्रत्युद्गमनीयवस्त्रे"ति कुमारः पाठान्तरं प्रत्तु वेति न गुरुत्वम् समुपस्थानयोग्ये, पूजनीये च त्रि० ।

**प्रत्यूष** पु० प्रत्यूषति रुजति कामुकान् ऊष-रुजायां क । प्रभाते, अष्टवसुमध्ये वसुभेदे च । अस्ति । प्रत्यूषस् । प्रभाते ।

**प्रत्यूह** पु० प्रति-ऊह-घञ् । विघ्ने ।

**प्रथ** ख्यातौ भ्वा० आ०सक० सेट् घटा० । प्रथते अप्रथिष्ट णिच् प्रथयति । स्त्र प्रथा । [ अपप्रथत् त ।

**प्रथ** ख्यातौ अक० विक्षेपे सक० चुरा० उभ० सेट् । प्रथयति-ते

**प्रथम** त्रि० प्रथ-अमच् । प्रधाने, आद्ये च । अस्य सर्वनामतास्य ।

**प्रथा** स्त्री० प्रथ-अङ् । ख्यातौ ।

**प्रथित** त्रि० प्रथ-क्त । ख्याते ।

**प्रथिमन्** पु० पृथोर्भावः पृथु-इमनिच् प्रथादेशः । पृथुत्वे स्थूलत्वे ।

**प्रथुक** पु० प्रथ-कुकन् । चिपिटके ।

**प्रदर** पु० प्र-दॄ-अप् । विदारणे, भङ्गे, योनिरोगभेदे च ।

**प्रदीप** पु० प्र+दीप-क । दीपे । [ विषभेदे । प्रकाशके त्रि० ।

**प्रदीपन** पु० प्रदीपयति जठराग्निम् प्र+दीप+णिच्-ल्यु । स्थावरे

**प्रदेश** पु० प्र+दिश+घञ् । एकदेशे, "पितुः प्रदेशास्तव"ति कुमारः । देशमात्रे च तर्ज्जन्यङ्गुष्ठसम्मिते माने, भित्तौ च ।

**प्रदेशन** न० प्रदिश्यते दिश-ल्युट् । नृपादेरुपहारे (भेटी) ।

**प्रदेश(शि)नी** स्त्री० प्रदिश्यतेऽनया प्र+दिश-करणे ल्युट् ङीप् । तर्जन्यां तया हि वस्तु निर्द्दिश्यते णिनि । प्रदेशिनी अत्रैव ।

**प्रद्युम्न** पु० प्रकृष्टं द्युम्नं बलं यस्य । कन्दर्पे वैष्णवागमोक्ते चतुर्व्यूहात्मकविष्णोरंशभेदे च ।

**प्रद्रव** पु० प्र+द्रु—अप् । पलायने, घञ् । प्रद्रावोऽप्यत्र ।

**प्रधन** न० प्र+धा—क्यु । युद्धे ।

**प्रधान** न० प्र+धा—ल्युट् । साङ्ख्यमतसिद्धायाम् सत्त्वरजस्तमोरूपगुणत्रयात्मिकायां प्रकृतौ, तत्कार्य्ये बुद्धितत्त्वे, परमात्मनि, प्रधस्ते, सचिवे च । सेनापत्यध्यक्षे पु० । श्रेष्ठे त्रि० ।

**प्रधि** पु० प्रधीयन्ते काष्ठान्यत्र प्र+धा—कि । चक्रावयवकाष्ठासञ्जनस्थाने रथनाभौ ।

**प्रधूपिता** स्त्री० प्र+धूप—क्त । सन्तापितायां "व्यसनप्रधूपिता"मितिकुमारः । ज्योतिषोक्तायां सूर्य्यगन्तव्यायां दिशि च ।

**प्रपञ्च** पु० प्र+पचि—विस्तारे घञ् । विस्तारे, वैपरीत्ये, सञ्चये, प्रतारणे, संसारे च ।

**प्रपथ्या** स्त्री० प्रकृष्टा पथ्या प्रा० स० । हरीतक्याम् ।

**प्रपद** न० प्रारब्धं पदम् प्रा० स० । पादस्याग्रभागे ।

**प्रपन्न** त्रि० प्र+पद-क्त । शरणागते, "प्रपन्नार्त्तिहरे ! देवी"ति चण्डी ।

**प्रपा** स्त्री० प्रपीयतेऽस्यां पा—ड । पानीयशालायां (जलसत्रघर) ।

**प्रपाठक** पु० प्रकृष्टः पाठोऽत्र कप् । वेदस्याध्यायावयवे अंशभेदे ।

**प्रपात** पु० प्रपतत्यस्मात् पत—घञ् । तटरहिते निरवलम्बे पर्वतस्थाने, निर्झरे, कूले, अवस्कन्दे च । भावे—घञ् पतने ।

**प्रपितामह** पु० प्रजातः पितामहो यस्मात् प्रकृष्टः पितामहो वा । दक्षादिप्रजापतिरूपाणां प्रजाजनकानामुत्पादके चतुर्मुखे ब्रह्मणि, पितामहपितरि च । तदपत्न्याम् स्त्री० ङीप् ।

**प्रपुन्नाड(ट)** पु० पुमांसं नाडयति नाटयति नड-भ्रंशे नट—अवस्यन्दने वा अण् प्रकृष्टः पुन्नाडः (पुन्नाटः) प्रा० । चक्रमर्द्दे ( चाकुन्दा ) वृक्षे । डस्य लत्वे प्रपुन्नालोऽप्यत्र दद्रुमर्द्दने च ।

**प्रपूरिका** स्त्री० प्रकर्षेण पूर्य्यते कण्टकैः । पूर-घञ् टाप् स्वार्थे कन् । कण्टकार्य्याम् ।

**प्रपौण्डरीक** पु० पुण्डरीक+स्वार्थेऽण् । प्रकृष्टं तदिव पुष्पं यस्य । गजमनुष्याणां चक्षुर्हितकारके शालपर्णीतुल्यपत्रके पभेदे ।

प्रपौत्र पु० प्रगतः कारणतया पौत्रम् । पौत्रस्य पुत्रे, तत्कन्यायां स्त्री० ङीप् ।

प्रफुल्ल त्रि० प्र+फुल्ल विकाशने अच् । विकाशयुक्ते । प्र+फल–क्त इड-भावे अत उत्त्वम् । प्रफुल्लतमप्यत्र । "लोध्रद्रुमं सानुमतः प्रफुल्ल (ल्लत) मिति रघुः ।

प्रबन्ध प्र+बन्ध–अच् । संदर्भे, ग्रन्थादेः रचने च ।

प्रबन्धकल्पना स्त्री० ६त० । "प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां विदु"रित्युक्तलक्षणायामल्पसत्यायां बहुमिथ्याकथायाम् ।

प्रबाल न० प्रकर्षेण बलति अवकम्पते ज्वलादित्वात् णः । नवपल्लवे "पुष्पं प्रबालोपहितं यदि स्यादि"ति कुमारः ।
रक्तवर्णे मणिभेदे, (मुगा) वीणादण्डे च ।

प्रबोध पु० प्र+बुध–घञ् । प्रकृष्टबुद्धौ, निद्राराहित्ये च ।

प्रबोधन न० प्र–बुध–णिच्–ल्युट् । कालादिहेतुभिः पूर्वगन्धस्य न्यूनतायां प्रयत्नविशेषेण तदुद्दीपने ।

प्रबोधनी स्त्री० प्र+बुध्यतेऽनया प्र+बुध–ल्युट् । दुरालभायाम् प्रबुध्यते हरिरत्र । कार्त्तिकशुक्लैकादश्याम् । प्र+बुध–णिच्–णिनि ङीप् । प्रबोधिनी तत्रैव ।

प्रभञ्जन न० प्रभञ्जति वृक्षादीन् प्र+भन्ज–युच् । वायौ ।

प्रभद्र पु० प्रकृष्टं भद्रमस्मात् ५ब० । निम्बवृक्षे ।

प्रभव पु० प्रभवत्यस्मात् प्र+भू–अप् । आद्यप्रकाशस्थाने, उत्पादके । "क्व सूर्यप्रभवो वंश" इति रघुः । ६० वर्षमध्ये वत्सरभेदे च । प्र+भू–भावे अप् । पराक्रमे जन्मनि च ।

प्रभा स्त्री० प्र–भा अङ् । दीप्तौ ।

प्रभाकर पु० प्रभां करोति कृ–अच्, सूर्ये मीमांसकभेदे च ।

प्रभाञ्जन पु० प्रभयाञ्जयति अन्ज–णिच्–ल्यु । शोभाञ्जने ।

प्रभात न प्रा+भा–भावे क्त प्रकृष्टं भातमत्र । प्रातःकाले प्रा+भा–कर्त्तरि क्त । प्रभायुक्ते त्रि० ।

प्रभाव पु० प्र+भू–घञ्। राज्ञां कोषदण्डजाते तेजसि, तेजसि, सामर्थ्ये, विक्रमे, शान्तौ, उद्भवे च।
प्रभाष पु० प्र+भाष–अच्। अष्टवसुमध्ये वसुभेदे, प्रकृष्टकथने च।
प्रभास पु० तीर्थभेदे "प्रभासः पुष्कराणि चे"ति स्नानमन्त्रः।
प्रभिन्न पु० प्र+भिद्–क्त। मत्ते मद गजे। प्रभेदवति त्रि०।
प्रभु पु० प्र+भू–डु। विष्णौ, शब्दे, पारदे च। स्वामिनि, अधिपतौ च त्रि०।
प्रभूत त्रि० प्र+भू–क्त। प्रचुरे, उद्गते, भूते उन्नते च।
प्रभृति अव्य० प्र+भृ–क्तिच्। तदारभ्येत्यर्थे। ब० उत्तरपदस्थः। तदादिके त्रि०।
प्रभेद पु० प्रभिद्यतेऽनेन प्र+भिद्-घञ्। प्रकारे। भावे घञ् भेदे।
प्रभ्रष्टक न० प्र+भ्रन्श–क्त ततः कन्। चूडातोलम्बमाने माल्ये।
प्रमथ पु० प्र+मथ–अच्। शिवानुचरभेदे, अश्वे च। हरितक्यां स्त्री०।
प्रमथन न० प्र+मथ–ल्युट्। वधे, क्षोभने, विलोड़ने च।
प्रमथाधिप पु० ६त०। शिवे, महादेवे।
प्रमद पु० प्र+मद–अप्। हर्षे। प्रमाद्यत्यनेन अप्। धुस्तूरफले न०। कर्त्तरि अच्। प्रमत्ते त्रि०।
प्रमदवन प्रमदस्य हर्षस्य वनम्। राज्ञोऽन्तःपुरस्थे वने।
प्रमदा स्त्री० प्रमाद्यत्यनया अप्। उत्तमयोषिति।
प्रमदावन न० प्रमदाया उचितं वनम्। अन्तःपुरसेवनयोग्ये वने प्रमदाकाननादयोऽप्यत्र।
प्रमनस् त्रि० प्रहृष्टं मनो यस्य हृष्टपदलोपः। प्रहृष्टचित्ते।
प्रमा स्त्री० प्र+मा–अङ्। यथार्थज्ञाने भ्रमभिन्ने ज्ञाने।
प्रमाण न० प्रमीयतेऽनेन। प्रमाज्ञानसाधने इन्द्रियादौ, मर्यादायाम्, शास्त्रे, सत्यवादिनि, हेतौ प्रमातरि च। 'न प्रमाणं यदीन्दु'रिति मुद्राराक्षसम्। भावे ल्युट्। यथार्थज्ञाने।
प्रमातामह पु० प्रारब्धो मातामहो येन। आरब्धपदलोपः मातामहपितरि। तत्पत्न्यां स्त्री० ङीप्।

**प्रमाद** पु० प्र+मद–घञ् । कर्त्तव्ये अकर्त्तव्यत्वधिया ततो निवृत्तौ, अकर्त्तव्ये कर्त्तव्यत्वधिया तत्र प्रवृत्तौ वा अनवधानतायाम् ।

**प्रमापण** न० प्र+मीञ् हिंसायां स्वार्थे णिच्–आत्वे पुक् ल्युट् । मारणे ।

**प्रमिति** स्त्री० प्र+मा–क्तिन् । प्रमायां यथार्थज्ञाने ।

**प्रमीत** त्रि० प्र+मीञ् हिंसायां क्त । मृते । "प्रमीतौ पितरौ यस्ये"ति स्मृतिः यज्ञार्थं हतपशौ च ।

**प्रमीला** स्त्री० प्र+मील अ । तन्द्रायाम् ।

**प्रमुख** न० प्रकृष्टं मुखमारम्भः । तदादित्वे । ब० उत्तरपदस्थः । तदादिके, मान्ये, प्रथमे, प्रधाने, श्रेष्ठे च त्रि० । पुन्नागवृक्षे, समूहे च पु० ।

**प्रमुद्** त्रि० प्रकृष्टा मुद् यस्य । हृष्टे हर्षयुक्ते ।

**प्रमुदित** त्रि० प्र+मुद–क्त । हृष्टे हर्षयुक्ते ।

**प्रमेह** पु० प्र+मिह–घञ् । रोगभेदे ।

**प्रमोचनी** स्त्री० प्रकर्षेण मुच्यते निस्त्वचीक्रियते भोजनार्थम् मुच–कर्मणि ल्युट् ङीप् । गोडुम्बायाम् (गोमुक) ।

**प्रमोद** पु० प्र+मुद–हर्षे घञ् । हर्षे ।

**प्रयत** त्रि० प्र+यम–क्त । पवित्रे, नियमयुक्ते च ।

**प्रयत्न** पु० प्र+यत–नङ् । कार्य्यानुकूले यत्नभेदे । "प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारण"मिति न्यायोक्ते त्रिविधयत्ने स चात्मगुण इति वैशेषिकादयः बुद्धिधर्म्म इति सांख्यादयः । प्रयासे च ।

**प्रयाग** पु० प्रकृष्टो यागो यस्मात् ५ ब० । गङ्गायमुनयोः सङ्गमजाते तीर्थभेदे, इन्द्रे शतक्रतौ च । ५ ब० । अश्वे अश्वमेधाङ्गत्वादस्य तथात्वम् । कर्म० । प्रकृष्टे यज्ञे ।

**प्रयाम** पु० प्र+यम-घञ् । महार्घ्यतावशात् धान्यादौ जनानामादरातिशये

**प्रयास** पु० प्र+यस–घञ् । प्रयत्नशब्दार्थे, श्रमे च ।

**प्रयुत** न० दशलक्षसङ्ख्यायां तत्संख्याते च "लक्षप्रयुतकोटयः" इति लीलावती ।

प्रयोक्तृ त्रि० प्र+युज–तृच् । प्रयोगकर्त्तरि ऋणदानादौ धनप्रयोगकर्त्तरि उत्तमर्णे, प्रयोजककमात्रे च ।

प्रयोग पु० प्र+युज–घञ् । अनुष्ठाने वशीकरणे, निदर्शने, अश्वे च ।

प्रयोजक त्रि० कार्य्यादौ भृत्यादीन् प्रयुङ्क्ते प्र+युज–ण्वुल् । निकृष्टस्य भृत्यादेः प्रेरके, व्याकरणोक्ते हेतुसंज्ञे कर्त्तरि च ।

प्रयोजन न० प्र+युज–ल्युट् । कार्य्ये, उद्देश्ये, हेतौ च ।

प्रयोज्य त्रि० प्रयोक्तुं शक्यते प्र+युज–शक्यार्थे यत् । नियोज्ये निकृष्टे भृत्यादौ । [प्ररोहे ।

प्ररूढ त्रि० प्र+रुह–क्त । प्रवृद्धे, बद्धमूले, जाते च । भावे क्त ।

प्ररोह पु० प्र+रुह–अच् । अङ्कुरे "मुखप्ररोह इवे"ति रघुः । आरोहे च ।

प्रलम्ब पु० दैत्यभेदे । प्र+लम्ब–अच् । प्रकर्षेण लम्बमाने त्रि० ।

प्रलम्बघ्न पु० प्रलम्बं हन्ति हन–टक् । बलदेवे प्रलम्बहादयोऽप्यत्र ।

प्रलय पु० प्रलीयतेऽस्मिन् प्र+ली–अच् । दृष्टपदार्थानां नाशाधिकरणे काले, ब्रह्मणोदिनावसाने च । भावे घञ् । नाशे, चेष्टाक्षये च "प्रलयान्तोन्मिषिते विलोचने" इति कुमारः ।

प्रलाप पु० प्र+लप-घञ् । अनर्थकवाक्ये, निष्प्रयोजने उन्मत्तादिवाक्ये च ।

प्रलापहन् पु० प्रलापं हन्ति हन–क्विप् । कुलत्थजातेऽञ्जने ।

प्रवचन न० प्र+वच–ल्युट् । वेदार्थध्याने, प्रकृष्टवाक्ये च ।

प्रव(ब)ण पु० प्र+व(ब)ण–अच् । चतुष्पथे निम्नस्थाने, उदरे च नम्रे, आयते, प्रगुणे क्षणे, नुते, स्निग्धे, आसक्ते, क्षीणे च त्रि० ।

प्रवयस् त्रि० प्रकृष्टं वयोऽस्य । प्रवृद्धे ।

प्रवर पु० प्र+वृ–अप् । सन्ततौ, गोत्रे, गोत्रप्रवर्त्तकमुनिव्यावर्त्तके मुनिगणे च । श्रेष्ठे त्रि० । अगुरुचन्दने न० ।

प्रवर्ग पु० प्र+वृज–घञ् । होमाग्निभेदे ।

प्रवर्त्तक त्रि० प्रवर्त्तयति प्र+वृत–णिच्–ण्वुल् । प्रवृत्तिजनके ।

प्रवर्त्तना स्त्री० प्र+वृत–णिच्–युच् । प्रवृत्तिजनकव्यापारे विध्यादौ "अस्ति प्रवर्त्तनारूपमनुरूपं चतुर्ष्वपी"ति भर्तृहरिः ।

प्रवर्ह त्रि० प्र+वृह–अच् । श्रेष्ठे, प्रधाने च ।
प्रवह पु० प्रवह–अच् । वायुभेदे । भावे अप् । नगराद्बहिर्गमने ।
प्रवहण न० प्र+वह–करणे ल्युट् । मनुष्यवाह्ये वस्त्राच्छादिते स्त्रीशा-
    कृने कर्णीरथे (महापाला) ।
प्रवाणी स्त्री० प्र+वे–ल्युट् ङीप् । तन्तुवायशलाकायाम् (माकु) ।
प्रवाद पु० प्र+वद–घञ् । परम्परागतवाक्ये, परस्परकथोपकथने च ।
प्रवारण न० प्र+वृ णिच् ल्युट् । काम्यदाने काम्यस्य उत्तमवस्तुनो दाने
प्रवास पु० प्र+वस–घञ् । विदेशवासे ।
प्रवासन न० प्र+वस–णिच्–ल्युट् । विदेशवासने–"सीताप्रवासन
    पटो"रित्युत्तरचरितम् । मारणे च ।
प्रवासिन् त्रि० प्र+वस–णिनि । विदेशे वासिनि, "प्रवासी सुखमाया-
    तो"ति षट्पञ्चाशिका ।
प्रवाह पु० प्र+वह–घञ् । प्रवृत्तौ, जलस्रोतसि, व्यवहारे, उत्तमाश्वे च
प्रवाहिका स्त्री० प्रवाहयति मलं ण्वुल् । ग्रहणीरोगे ।
प्रवाहु पु० प्रकृष्टो बाहुः । कूर्परस्याधोभागे ।
प्रविदारण न० प्र+वि+दृ-णिच्-ल्युट् । युद्धे, विदारणे, आकीर्णे च ।
प्रविश्लेष त्रि० प्रकर्षेण विश्लेषो यस्य । विधुरे, परमविश्लेषे च ।
प्रविषा स्त्री० प्रकृतं विषं यया । अतिविषायाम् । (आतइच्) ।
प्रवीण त्रि० वीणया प्रगायति प्र+वीणा+णिच्–अच् । निपुणे ।
प्रवृत्ति स्त्री० प्र+वृत+क्तिन् । प्रवाहे, वार्त्तायाम्, अवन्त्यादि देशे,
    हस्तिमदे, न्यायोक्ते चिकीर्षाकृतिसाध्यताज्ञानाधीने प्रयत्नभेदे च ।
प्रवृद्ध त्रि० प्र+वृध–क्त । वृद्धियुक्ते, प्रौढे च ।
प्रवेक त्रि० प्र+विच-घञ् । प्रधाने ।
प्रवे(णि)णी स्त्री० प्र+वेण–इन् वा ङीप् । गजस्कन्धस्थे चित्रकम्बले ।
प्रवेल पु० प्र+वेल–अच् । पीतमुद्गे (सोनामुग) ।
प्रवेश पु० प्र+विश-घञ् । अन्तर्गमने ।
प्रवेशन न० प्रविश्यतेऽनेन विश–करणे ल्युट् । प्रधानद्वारे, सिंह-
    द्वारे च । भावे ल्युट् । प्रवेशे ।

प्रवेष्ट पु० प्र+वेष्ट—अच् । बाहौ, बाहुनीचभागे हस्तिदन्तमांसे । गजपृष्ठस्थाने च । [ष्टा स्त्री० ।

प्रव्रजित पु० प्र+व्रज—क्त । सन्न्यासिनि । मांसी, मुण्डीर्यां, ताप—

प्रव्रज्या स्त्री० प्र+व्रज—क्यप् । सन्न्यासे, सर्वकर्मत्यागेन विधानेनाश्रमान्तरगमने । [क्त । सन्न्यासभ्रष्टे ।

प्रव्रज्यावसित पु० प्रव्रज्यातः संन्यासात् अवसितः च्युतः अव+सो—

प्रशंसा स्त्री० प्र+शन्स अ । गुणाविष्कारेण स्तुतौ ।

प्रशमन न० प्र+शम—णिच्—ल्युट् । वधे, शान्तकरणे च । "लब्धप्रशमनस्वास्थ्यमि"ति रघुः । शान्तौ च "सर्वाबाधाप्रशमनमि"ति चण्डी

प्रशस्त त्रि० प्र+शन्स—क्त । प्रशंसनीये, श्रेष्ठे, क्षेमे च ।

प्रश्न पु० प्रच्छ—नङ् । जिज्ञासायाम् ज्ञातुमिच्छया कथनाय प्रेरणे ।

प्रश्नी स्त्री० प्रच्छ+निङ् ङीप् । कुम्भिकायाम् (पाना) ।

प्रश्रय पु० प्र+श्रि—अच् । प्रणये ।

प्रश्रित त्रि० प्र—श्रि—क्त । विनीते ।

प्रष्ठ त्रि० प्र+स्था—क नि० षत्वम् । अग्रगामिनि, श्रेष्ठे च ।

प्रष्ठौही स्त्री० प्रष्ठं प्रथमगर्भं वाति वह—क्विप् । प्रथमगर्भिण्याम् ।

प्रष्ठवाह् पु० प्रष्ठं वहति ण्वि । युगपार्श्वस्थे वृषादौ, युगपार्श्वे । प्रथमयोजिते, दम्ये च । [णिच् प्रसवति ।

प्रस प्रसवे ततौ च सक० दिवा० आ० सेट् । घटा०। प्रसते अप्रसिष्ट ।

प्रसक्त त्रि० प्र+सन्ज—क्त । प्रसङ्गविषये ।

प्रसक्ति स्त्री० प्र+सन्ज—क्तिन् । प्रसङ्गे, आपत्तौ, अनुमितौ च ।

प्रसङ्ग पु० प्र+सन्ज—घञ् । आपत्तौ, सम्बन्धभेदे स्मृतस्योपेक्षानर्हत्वरूपे सङ्गतिभेदे, अन्यार्थं प्रवृत्तस्य अन्योद्देशेन कृतकर्मणान्यस्य सिद्धिरूपे अवान्तरकार्य्यनिर्वाहे, प्रसक्तौ, प्रस्तावे च ।

प्रसत्ति स्त्री० प्र+सद—क्तिन् । नैर्मल्ये प्रसन्नतायाम् ।

प्रसन्न त्रि०प्र+सद-क्त । निर्मले, सन्तुष्टे, कृतानुग्रहभेदे च सुरायां स्त्री०

प्रसन्नता स्त्री० प्रसन्नस्य भावः तल् । प्रसादे अनुग्रहभेदे ।

प्रसभ न० प्रगता सभा सभाधिकारोऽस्मात् । बलात्कारे, "प्रसभोद्धृतारि"रिति रघुः ।

प्रसर पु० प्र+सृ—अप्—अच् वा । प्रभवे, वेगे, समूहे, युद्धे, नीवारे निकटाभिगमने अम्बादेर्विसरणे सैन्यादेः सर्वतो व्याप्तौ च ।

प्रसर्पण न० प्र+सृप—ल्युट् । सैन्यानां सर्वतोव्याप्तौ, अस्य स्त्रीत्वञ्च तत्र ङीप् ।

प्रसव पु० प्र+सू—अप् । गर्भमोचने । उत्पत्तौ, कार्य्यरूपे फले च "अदश्चराचरं विश्वं प्रसवस्तस्य गीयते" इतिकुमारः ।

प्रसवबन्धन न० प्रसवस्य पुष्पस्य बन्धनम् बन्ध—करणे ल्युट् । वृन्ते (बोंटा)

प्रसविनी स्त्री० प्र+सू—इन् । जनन्याम् ।

प्रसव्य त्रि० प्रगतं सव्यं वामत्वम् । प्रतिकूले ।

प्रसहा स्त्री० प्र+सह—अच् । वृहत्याम् । [गतैरिति भावः ।

प्रसह्य अव्य० प्र+सह—ल्यप् । हठादित्यर्थे । "प्रसह्य तेजोभिरसंख्यतां

प्रसह्यचौर पु० प्रसह्य बलात्कारेण चौरः । (डाकाइत) । प्रकाशचौरे ।

प्रसाद पु० प्र+सद—घञ् । नैर्मल्ये, अनुग्रहे, काव्यगुणभेदे, स्वास्थ्ये, प्रसन्ने, देवनैवेद्ये, गुरुजनभुक्तादशिष्टे च ।

प्रसादना स्त्री० प्र+सद—णिच्—युच् । सेवायाम् ।

प्रसाधक त्रि० प्रसाधयति भूषयति प्र+सिध—णिच्—ण्वुल् । निष्पादकेऽलङ्कर्त्तरि च स्त्रियां टाप् । प्रसाधिकालम्बितमग्रपाद"मिति रघुः । नीवारे स्त्री० टाप् । [कङ्कतिकायाम् स्त्री० ङीप् ।

प्रसाधन न० प्र+सिध-णिच्-ल्युट् । कृत्रिमभूषणे वेशे । करणे ल्युट् ।

प्रसाधित त्रि० प्र+सिध—णिच्—क्त । अलङ्कृते, निष्पादिते च ।

प्रसारण न० प्र+सृ-णिच्—ल्युट् । विस्तारकरणे क्रियाभेदे च ।

प्रसारणी स्त्री०प्र+सृ-णिच्-ल्यु गौरा० ङीष् । (गन्धभादाल)लताभेदे

प्रसारिणी स्त्री० प्र+सृ—णिनि । लज्जालुलतायाम् ।

प्रसारिन् त्रि० प्र+सृ—णिनि । विस्तारकारके ।

प्रसित त्रि० प्र+सो—क्त । आसक्ते ।

प्रसिति स्त्री० प्र+सि-बन्धने करणे क्तिन् । बन्धनसाधने, निगडादौ ।

प्रसिद्ध त्रि० प्र+सिध-क्त । भूषिते, ख्याते च ।
प्रसू स्त्री० प्र+सू-क्विप् । जनन्याम्, कदल्यां, वीरुधि, घोटक्याञ्च ।
प्रसूति स्त्री० प्रसू-क्तिन् । प्रसवे, अपत्ये, उदरे, मातरि च ।
प्रसूतिका स्त्री० प्रसूतेव कन् । जातसन्तानायां स्त्रियाम् ।
प्रसूतिज न० प्रसूत्या जायते जन-ड । दुःखे, प्रसवादिजन्यं दुःखं हि सर्वलोकप्रसिद्धम् ।
प्रसून न० प्र+सू-क्त तस्य न० । पुष्पे, फले च । जातमात्रे त्रि० ।
प्रसृत पु० प्र+सृ-क्त । अर्द्धाञ्जलौ, प्रहृष्टे, प्रसादिते, विनीते, वेगिते, गते, नियुक्ते च त्रि० । जङ्घायां स्त्री० ।
प्रसेवक पु० प्र+सिव-ण्वुल् । वीणाप्रान्तवक्रे काष्ठे ।
प्रस्कन्न पु० कपिभेदे । स्कन्द्-क्त तस्य नः । अवस्कन्दयुक्ते त्रि० ।
प्रस्तर पु० प्र+स्तृ-अच् । पाषाणे, मणौ च ।
प्रस्तार पु० प्र+स्तृ-घञ् । तृणवने, पल्लवादिरचितशय्यायां, छन्दो-ग्रन्थोक्ते व्यक्तिभेदसंख्याज्ञानाय "प्रस्तारे तु लघुं न्यस्य प्रथमस्य गुरोरधः । यथोपरि तथा शेष"मित्युक्ते प्रक्रियाभेदे च ।
प्रस्ताव पु० प्र+स्तु-घञ् । अवसरे, प्रकरणे, प्रसङ्गे च ।
प्रस्तावना स्त्री० प्र+स्तु-णिच्-युच् । आरम्भे, सूत्रधारेण नट्या-दिभिः सह प्रकृताभिनेयकथाप्रसङ्गार्थं कथनीये वाक्यस्तोमे "नटी विदूषको वापीत्या"दि सा० द० ।
प्रस्तुत त्रि० प्र+स्तु-क्त । प्रकरणप्राप्ते, प्रासङ्गिके, उपस्थिते, उद्यते, प्रतिपन्ने, प्रकर्षेण स्तुते च ।
प्रस्थ पु० प्र+स्था-क । चतुःकुडवात्मके, आढकचतुर्थांशे वा धान्या-देः परिमाणभेदे, विस्तारे च । पर्वतस्य वासयोग्यभूमौ पु० न० ।
प्रस्थान न० प्र+स्था-ल्युट् । जिगीषोर्युद्धार्थगमने, गमनमात्रे च ।
प्रस्फोटन न० प्र+स्फुट-करणे ल्युट् । शूर्पे । भावे ल्युट् । ताडने, विकाशने, पाके, च । [ल्यु । माल्यवति पर्वते पु० ।
प्रस्रवण न० प्र+स्रु-ल्युट् । अविच्छेदेन स्रवज्जले, उत्से, स्वेदे च ।
प्रस्राव पु० प्रस्रु-घञ् । मूत्रे ।

**प्रहर** पु० प्रह्रियते यामिकडक्कादिरस्मिन् प्र+हृ-अप् । दिवसस्याष्टमे भागे
**प्रहरण** न० प्रह्रियतेऽनेन हृ-ल्युट् । अस्त्रे, कर्णीरथे च । आधारे ल्युट् । युद्धे । भावे ल्युट् । प्रहारे, दमे च ।
**प्रहर्षणी** स्त्री० प्रहृष्यत्यनया हृष-ल्युट् ङीप् । हरिद्रायाम् । त्रयोदशाक्षरपादके छन्दोभेदे च । तत्र प्रहर्षिणीत्यके ।
**प्रहसन** न० प्र+हस-ल्युट् । हास्ये, दृश्यकाव्यरूपकभेदे च । सा०दं५८।
**प्रहसन्ती** स्त्री० प्र+हस-शतृ ङीप् । यूथिकायां, वासन्त्याञ्च ।
**प्रहस्त** पु० प्रकृष्टो हस्तः प्रा० । विस्तृताङ्गुलिके पाणौ, रावणसेनापतिभेदे च । [रोहिण्याम् ।
**प्रहारवल्ली** स्त्री० प्रहारस्य वेदनोपशमनी वल्ली शाक० । मांस-
**प्रहि** पु० प्रह्रियतेऽत्र प्र+हृ-इन् डिच्च । कूपे ।
**प्रहित** त्रि० प्र+हि-क्त । क्षिप्ते, निरस्ते, प्रेरिते च । सूपे न० ।
**प्रहेलिका** स्त्री० दुर्बोधार्थज्ञानाय प्रश्ने (हेयालि) "तरुण्यालिङ्गितः-कण्ठे नितम्बस्थानमाश्रितः । गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहु"रित्यादिरूपे, अस्योत्तरम् ईषदपूर्णजलः कलसः ।
**प्रह्लाद** पु० प्र+ह्लद-घञ् । हिरण्यकशिपोर्दैत्यस्य पुत्रेऽसुरभेदे ।
**प्रह्व** त्रि० प्र+ह्वे-क । नम्रे विनीते, आसक्ते च ।
**प्रांशु** त्रि० प्रकृष्टा अंशवोऽस्य । उच्चे, उन्नते ।
**प्राकाम्य** न० प्रकामस्य भावः ष्यञ् । अष्टविधैश्वर्य्यमध्ये, इच्छानभिघातरूपे ऐश्वर्य्ये स्वाच्छन्द्यानुमतौ च । "प्राकाम्यं ते विभूतिष्वि"ति कुमारः । [प्राचीराढौ ।
**प्राकार** पु० प्रकीर्य्यते कृ-घञ् दीर्घः । इष्टकादिरचिते वेष्टनाकारे
**प्राकृत** त्रि० प्रकृष्टमकृतमपकार्य्यं यस्य । नीचे । प्रकृतेरयम् अण् । प्रकृतिसम्बन्धिनि । प्रकृत्या स्वभावेन निर्वृत्तः अण् । स्वभावसिद्धे । प्रकृतेः संस्कृतशब्दात् आगतः अण् । नाटकादौ प्रसिद्धे अपभ्रंशशब्दभेदे ।
**प्राकृतप्रलय** पु० कर्म० । कार्य्यब्रह्मणो नाशे तेन सह कार्य्यजातस्य प्रकृतौ लये, तत्काले च ।

**प्राकृतमित्र** कर्म० । स्वराज्यविरुद्धे मित्रे, विषयानन्तरस्य न्टपरूपात् प्राकृतशत्रोः अव्यवहितोत्तरविषयस्थे न्टपे ।

**प्राकृतशत्रु** पु० कर्म० । विषयानन्तरवर्त्तिनि न्टपे ।

**प्राक्तन** त्रि० प्राचि काले, देशे, प्राच्यां दिशि वा भवः ट्यु तुट् च । प्रागभवे । "प्रपेदिरे प्राक्तनजन्मविद्याः" इति कु० ।

**प्राग्भाव** पु० प्राग्वर्त्ती अभावः । इह कपाले घटो भविष्यतीत्यादिप्रतीतिसिद्धे अभावभेदे ।

**प्रागुदीची** स्त्री० प्राच्या उदीच्याश्चान्तराला दिक् दिङ्नामान्यन्तराले इति ब० । पूर्व्वोत्तरदिशि ईशानकोणे ।

**प्राग्ज्योतिष** न० कामरूपदेशे तद्देशस्थे व० ब० ।

**प्राग्भार** पु० प्रकृष्टो भारः । उत्कर्षे पर्भागे, "मांसमस्तिष्कपङ्क प्राग्भारः इति प्रबोधचन्द्रोदयः । पर्वताग्रभागे च ।

**प्राग्रहर** त्रि० प्रकर्षेण अग्रे ह्रियतेऽसौ अप् । श्रेष्ठे ।

**प्राग्र्य** त्रि० प्रकर्षेणाग्रे भवः यत् । श्रेष्ठे ।

**प्राग्वंश** पु० प्राक् वंशः सपत्नीकयजमानादिसमुदायोऽत्र । हविर्गेहात् पूर्वभागस्थे यजमानादिस्थित्यर्थे गृहे ।

**प्राघार** पु० प्र+घृ क्षरणे घञ् दीर्घः । यज्ञादौ वञ्जुलपरिष्ठतादेःक्षरणे

**प्राघुण** पु० प्र+आ+घुण-क । अतिथौ ।

**प्राङ्गण** न० प्रकृष्टमङ्गनं पूर्व० सत्वम् । गृहभूमौ (उठान) अजिरे, पणववाद्ये च ।

**प्राड्न्याय** पु० 'आचारेणावसन्नोऽपि पुनर्लेखयते यदि । सोऽभिधेयो जितः पूर्वं प्राड्न्यायश्च स उच्यते' इत्युक्ते व्यवहारस्य उत्तरभेदे

**प्राञ्च्** त्रि० प्र-अन्च्-क्विन् । पूर्वस्मिन् काले देशे च । स्त्रियां ङीप् प्राची । सा च पूर्वस्यां दिशि, तन्त्रोक्ते पूज्यपूजकयोर्मध्यदेशे च ।

**प्राचीन** त्रि० प्राक्+भवार्थे ख । पूर्वदिग्देशादौ भवे । (आक्नादि) वनतिक्तायाम्, रास्नायाञ्च स्त्री० टाप् ।

**प्राचीनबर्हिस्** पु० । इन्द्रे, न्टपभेदे च ।

**प्राचीनामलक** न० कर्म० । पानीयामलके ।

**प्राचीनावीत** न० 'सव्यं बाहुं समुद्धृत्य दक्षिणे तु द्विजातयः ! प्राचीनावीतमित्युक्तं पैत्रे कर्मणि योजयेत्' इत्युक्ते । श्राद्धादौ वामकरे वहिष्कृते सति दक्षिणस्कन्धार्पिते यज्ञसूत्रादौ ।

**प्राचीर** न० प्राचीयते प्र+आ–चि–क्रन् दीर्घश्च । सर्वतो वेष्टनाकारे इष्टकादिनिर्मिते आवरणे (पाँचिर) । [ च ।

**प्राचेतस** पु० वाल्मीकिमुनौ प्राचीनवर्हिषो ऽपत्ये पुत्रे, वरुणस्य पुत्रे

**प्राच्य** पु० प्राचि भवः । शरावत्या नद्याः प्रागदक्षिणे देशे ।

**प्राजक** पु० प्र+अज–ण्वुल् वीभावाभावः । सारथौ ।

**प्राजन** न० प्र+अज–ल्युट् । तोदने पश्वादेश्चालनदण्डे (पाँचनी) ।

**प्राजापत्य** पु० प्रजापतिर्देवताऽस्य यञ् । अष्टविवाहमध्ये विवाहभेदे. 'त्वरह प्रातिस्वरह साय त्वरहमद्यादयाचितम् । त्वरह परञ्च नाश्नीयात् प्राजापत्यमितिस्मृत'मिति स्मृत्युक्ते द्वादशाहःसाध्ये व्रतभेदे न० । प्रजापत्यधिदेवताके चर्व्वादौ त्रि० । मत्रज्याश्रमाङ्ग सर्वस्वदक्षिणकेऽष्टिभेदे स्त्री० ।

**प्राजितृ** पु० प्र+अज-तृच् वीभावाभावः । सारथौ ।

**प्राज्ञ** पु० प्रकर्षेण जानाति प्र-ज्ञा-क स्वार्थे अण् । पण्डिते । राजगुरौ च । प्रज्ञाऽस्त्यस्य अण् । बुद्धिमति, दक्षे च त्रि० प्रज्ञा+स्वार्थे अण् । बुद्धौ, प्राज्ञस्य पत्नी ङीप् । प्राज्ञपत्न्यां स्त्री० ।

**प्राज्य** न० प्रकृष्टमाज्यं प्र+अन्ज-क्यप् वा । प्रकृष्टघृते । प्रचुरे त्रि० ।

**प्राञ्जल** त्रि० प्र+अन्ज–अलच् । सरले, सुबोधे च ।

**प्राड्विवेक** पु० अर्थिप्रत्यर्थिनौ पृच्छति प्रच्छ-क्विप् प्राट्, तयोर्वाक्यं विरुद्धाविरुद्धतया विवेचयति वि+विच-घञ् कर्म० । राजनियुक्ते व्यवहारदर्शके, "विवादानुगतं पृष्ट्वा पूर्ववाक्यं प्रयत्नतः । विचारयति येनासौ प्राड्विवेकस्ततः स्मृत" इति स्मृतिः अत्र प्राड्विवाक इति केचित् पठन्ति ।

**प्राण** पु० प्र+अन–घञ् । हृदयस्थे नासाप्रवर्त्तिनि वायौ, काव्यजीवने रसे, वायुमात्रे, बले, च । पञ्चवृत्तिके देहस्थे वायुभेदे, इन्द्रिये च व०व० ।

**प्राणद** पु० प्राणं ददाति दा—क। जले, अन्ने च। जीवकवृक्षे पु०। हरितक्यां, ऋद्धिद्रव्ये च स्त्री०। प्राणदातरि त्रि० "प्राणदा यमदूतिके" त्युद्भटः।

**प्राणनाथ** इत०। पत्यौ।

**प्राणमयकोष** पु० रागादिकर्मेन्द्रियसहितः प्राणपञ्चकप्रचुरः कोषवदाच्छादकत्वात् कोष इव। वेदान्तोक्ते जीवस्वरूपाच्छादके, कर्मेन्द्रियसहिते प्राणपञ्चके।

**प्राणसंयम** पु० प्राणस्य प्राणरूपवृत्तिभेदस्य नासाग्रवर्त्तिनो वायोः संयमो यत्र व्यापारे। प्राणायामे तेन हि व्यापारेण प्राणवायोर्बहिर्निःसरणप्रतिरोधेन प्राणसंयम इति योगशास्त्रादिप्रसिद्धम्।

**प्राणसमा** स्त्री० प्राणैः समा तुल्या प्रियत्वात्। प्रियतमायां पत्न्याम्।

**प्राणायाम** पु० प्राणः प्राणवायुरायम्यते संयम्यते येन आ+यम-घञ्। योगादिशास्त्रप्रसिद्धे प्राणवायोर्निरोधसाधने व्यापारे। बहिःस्थप्राणवायोरुत्कर्षणरूपपूरणेन, देहस्थस्य तस्य कुम्भकात् निश्चलतया रोधेन, निरुद्धस्य तस्य क्रमेण बहिर्निःसारणरूपरेचनेन च प्राणवायोर्यथेष्टविनियोगरूपवश्यतासम्पादनमित्यसौ व्यापारसमुदायः प्राणायाम इत्युच्यते "प्राणाख्यमनिलं वश्यमभ्यासात् कुरुते तु यत्। प्राणायामः स विज्ञेयः" इत्युक्तलक्षणे प्राणायामशब्दस्य पूरण कुम्भकरेचनरूपव्यापारसमुदाये रूढिरिति बहवः प्रत्येकस्मिन्नपि रूढिरित्यन्ये विस्तरो वाचस्पत्ये।

**प्राणिद्यूत** न० प्राणिभिः मेषकुक्कुटादिभिः पणपूर्वं द्यूतं, देवनम् दिव—भावे क्त। प्राणिभिः पणपूर्वके देवने।

**प्राणिन्** पु० प्राण+अस्त्यर्थे इनि। जीवे चेतने।

**प्रातःकृत्य** न० प्रातः प्रभाते कृत्यं कर्त्तव्यम्। प्रभाते कर्त्तव्ये शौचस्नानादौ। [प्रातरुपास्ये मन्त्ररूपे देवभेदे।

**प्रातःसन्ध्या** स्त्री० प्रातरुपास्या सन्ध्या। वैदिके तान्त्रिके च।

**प्रातर्** अव्य० प्र+अत—अर । प्रभाते, "प्रातः कालो मुहूर्तां स्त्रीनि" ति स्मृत्युक्ते सूर्य्योदयावधित्रिमुहूर्त्तकाले च ।

**प्रातराश** पु० अश्यते भुज्यते अश—घञ् प्रातः प्रभाते आशोभोज्यम् । प्रातः काले भोज्ये ।

**प्रातिका** स्त्री० प्र+अत—ण्वुल् टाप् । जवापुष्पे ।

**प्रातिपदिक** पु० प्रतिपदि हूयते ठक् । अग्नौ, "इन्द्राग्नी यत्र हूयेते" इति श्रुतौ यत्र प्रतिपदीत्यर्थः । व्याकरणोक्ते "अर्थवद् अधातुरप्रत्ययः प्रातिपदिकम्" इत्याद्युक्ते प्रत्ययप्रत्ययान्तभिन्ने धातुभिन्ने कृत्तद्धितसमासनिष्पन्ने च शब्दभेदे न० ।

**प्रातिभाव्य** न० प्रतिभुवो भावः । (जामिनी) प्रतिभुवोभावे "प्रातिभाव्यागतं सुत" इति स्मृतिः । [ ग्रासाधारणे धर्मे ।

**प्रातिस्विक** न० प्रतिस्वे एकैकस्मिन् भवः ठक् । प्रत्येकपदार्थ-

**प्रातिहारिक** त्रि० प्रतिह्रियतेऽनेन प्रतिहारः कापट्यं माया सः प्रयोजनमस्य ठक् । मायाकारके ।

**प्राथमकल्पिक** त्रि० प्रथमकल्पे भवः ठक् । प्रथमारम्भोचिते वेदाध्ययनादौ ।

**प्राथमिक** त्रि० प्रथमे भवः ठञ् प्रथमकालभवे । स्त्रियां ङीप् ।

**प्रादुर्भाव** पु० प्रादुस्+भू—घञ् । प्रकाशे आविर्भावे ।

**प्रादुस्** अव्य० प्र—अद—उसि । स्फुटत्वे, प्रकाशे, नाम्नि, सम्भावनायां, इच्छौ च ।

**प्रादेश** पु० प्र+दिश-घञ् दीर्घः । तर्जनीसहितविस्तृताङ्गुष्ठे देशमात्रे च "अङ्गुष्ठस्य प्रदेशिन्या व्यासः प्रादेश उच्यते" इत्युक्ते परिमाणभेदे च ।

**प्रादेशन** न० प्र+आ+दिश—ल्युट् । दाने ।

**प्राध्व** पु० प्रगतोऽध्वानम् अच् समा० रथादौ, प्रकृष्टोऽध्वा प्रा०स० । प्रकृष्टे पथि । नम्रे, बद्धे च त्रि० । [ याद्ध ।

**प्राध्वम्** अव्य० प्र+आ+ध्वन—डम । आनुकूल्ये, बन्धने, नम्रना-

**प्रान्त** पु० प्रकृष्टोऽन्तः । शेषसीमायाम् । ।

प्रान्तर न० प्रकृष्टमन्तरं व्यवधानं यत्र । दूरगम्ये पथि । छायादिशून्यतयान्यूल्ये पथि, वने, कोटरे च ।

प्राप्तपञ्चत्व त्रि० प्राप्तं पञ्चत्वं मरणं येन । मृते ।

प्राप्तरूप त्रि० प्राप्तं रूपं येन । मनोहरे, पण्डिते च ।

प्राप्ति स्त्री० प्र+आप-क्तिन् । ऋद्धौ, लाभे, स्थानान्तरगतौ, संहतौ, अणिमाद्यैश्वर्यमध्ये ऐश्वर्यभेदे, उदये च ।

प्राप्य त्रि० प्र+आप-ण्यत् । गम्ये लभ्ये च । व्याकरणोक्ते "क्रियाकृतविशेषाणां सिद्धिर्यत्र न विद्यते दर्शनादनुमानाद्वा तत् प्राप्यमिह कथ्यते" इत्युक्ते कर्मभेदे न० ।

प्राभृत न० प्र+आ+भृ-क्त । उपढौकनद्रव्ये । स्वार्थे कन् अत्रैव

प्रामाद्य पु० प्रमादाय हितः ण्य । वासकवृक्षे ।

प्रामाणिक त्रि० प्रमाणेन निर्वृत्तः सिद्धः ठक् । प्रत्यक्षादिप्रमाणसिद्धे च स्त्रियां ङीप् ।

प्रामाण्य न० प्रमाणस्य भावः । तद्वति तत्प्रकारकत्वरूपे ज्ञानधर्मे, तच्च न्यायमते परतोग्राह्यं मीमांसकादिमते स्वतः, स्वसामग्र्या वा ग्राह्यमिति भेदः विस्तरो वाचस्पत्ये ।

प्राय पु० प्र+अय-इण्-वा घञ् अच् वा । मृत्यौ, अनशनमृत्यौ बाहुल्ये च । "प्रायेण सामग्र्यविधा"विति कुमारः ।

प्रायश्चित्त प्रायस्+चित-क्त "प्रायो नाम तपः प्रोक्तम् चित्तं निश्चय उच्यते । तपो निश्चयसंयुक्तम् प्रायश्चित्त मिति स्मृतं इत्युक्तलक्षणे पापक्षयमात्रसाधनत्वेन विधिबोधिते कर्मणि चान्द्रायणादौ ।

प्रायश्चित्तिन् त्रि० प्रायश्चित्तं कर्त्तव्यतयाऽस्त्यस्य इनि । प्रायश्चित्तकरणयोग्ये पापनिश्चयवति जने ।

प्रायस् अव्य० प्र+अय-असि । बाहुल्ये, तपसि च । "प्रायः पयोधरसङ्कुलतिरत्र चेत्"रित्यादि क्टः । [अनशनेन मरणायोद्युक्ते ।

प्रायोपविष्ट त्रि० प्रायाय अनशनमृत्यवे उपविष्टः उप+विश-क्त ।

प्रायोपवेश पु० प्रायाय अनशनमृत्यवे उपवेशः स्थितिः । सङ्कल्पपूर्वकम् सकलकार्य्यत्यागेन अनशनमरणार्थं ध्याने ।

प्रारब्ध न० आ+रभ—आरब्धो क्त प्रकृष्टमारब्धं स्वकार्यं जननाय कृता-रम्भं येन। देहाद्यारम्भके अदृष्टभेदे तस्य च भोगेनैव क्षय इति शास्त्रे प्रसिद्धम्। कृतारम्भे त्रि०।

प्रार्थना स्त्री० प्र—अर्थ—युच्। याच्ञायां, हिंसायाञ्च। ल्युट्। याचने, हिंसने च न०।

प्रार्थित त्रि० प्र+अर्थ-क्त। याचिते। अभिहिते, हते, शत्रु संयते च।

प्रालम्ब न० प्रकर्षेणालम्बते प्र+आ+लम्ब—अच्। ऋजुतया कण्ठात् लम्बमाने माल्यादौ।

प्रालेय न० प्रकर्षेण लीयते प्र+आ+ली—यत् आत्वं ऐत्त्वम्, प्रलयार्थं हितम् अण् नि० एत्वम् वा। हिमे। [रोऽचल पु०।

प्रावरण न० प्राव्रियतेऽनेन ल्युट् उत्तरीयवस्त्रे। घञ्। प्रावा-

प्रावृत त्रि० प्र+आ+वृ+क्त। प्रकर्षेणावृते वस्त्रे।

प्रावृष् षा। स्त्री० प्रकर्षेणावर्षत्यत्र वृष—क्विप् वा टाप्। वर्षाकाले।

प्रावृषायणी स्त्री० प्रावृषायामयनं यस्याः पूर्व० णत्वम्। कपि-कच्छ्वाम् (आलकुशी)

प्रावृषेण्य पु० प्रावृषि भवः एण्य। कदम्बवृक्षे, धाराकदम्बे, कुटजवृक्षे च। वर्षाकालभवे त्रि० "स प्रावृषेण्य इवे"ति भट्टिः पुनर्न-वायां, कपिकच्छ्वाञ्च स्त्री०।

प्रावृष्य प्रावृषि भवः यत्। कुटजे, कदम्बे च।

प्राश्निक त्रि० प्रश्नं करोति ठक्। कुशलादिप्रश्नकारके। सभ्ये पु०।

प्रास पु० प्रकर्षेणास्यते अस—कर्मणि घञ्। कुन्तास्त्रे।

प्रासङ्ग पु० प्रसजते प्र—सन्ज—घञ् दीर्घः। दम्यवत्सानां स्कन्धे शिक्षार्थमासज्यमाने काष्ठे।

प्रासङ्ग्य पु० प्रासङ्गं वहति यत्। हलादिकाष्ठवाहके वृषादौ।

प्रासाद पु० सीदत्यस्मिन् प्र+सद—घञ् पूर्वपद दीर्घः। देवानां राज्ञाञ्च गृहभेदे।

प्रासिक पु० प्रासः प्रहरणमस्य ठक्। कुन्तास्त्रेण योद्धरि।

प्रास्थिक त्रि० प्रस्थं तत्परिमितं धान्यादिकं स्वस्मिन् समावेशयति,

पचति वा ठञ् । प्रस्थमितधान्यपाकयोग्ये पात्रे, तन्मितधा-
न्यादिपाचके च । स्त्रियां ङीप् ।

प्राह्ण पु० प्रकृष्टं, प्रथमं वा अह्नः ठच् अह्नादेशः णत्वम् । पूर्वाह्णे ।

प्राह्णेतन त्रि० प्राह्णे पूर्वाह्णे भवः ट्युल् तुट् च निपातनादेत्वम् ।
पूर्वाह्णभवे । [अतिप्रत्यूषे ।

प्राह्णेतराम् अव्य० अतिशयेन प्राह्णे तर-आमु एत्वं नि० ।

प्रिय पु० प्रीणाति प्री—तर्पणे क । भर्त्तरि, पत्यौ, मृगभेदे, ऋद्धिना-
मौषधौ च । हृद्ये त्रि० । भार्य्यायां,एलायां, मल्लिकायां,
मदिरायां, वार्त्तायाञ्च स्त्री० ।

प्रियंवद त्रि० प्रियं प्रियकरं मधुरं वदति खच् मुम् च । प्रियवा-
दिनि खेचरे, गन्धर्वभेदे च पु० ।

प्रियक पु० प्रिय+संज्ञायां कन् । पीतसाले वृक्षे, कदम्बे,विचित्रमृगे,
प्रियङ्गौ, भ्रमरे, कुङ्कुमे, असनवृक्षे च ।

प्रियङ्कर त्रि० प्रियङ्करोति खच् मुम् च । प्रियकारिणि श्वेतकण्ट-
कार्य्यां, वृद्ध्जीवन्त्याम्, अश्वगन्धायाञ्च स्त्री० ङीप् ।

प्रियङ्गु पु० प्रिय+गम-डु नि० मुम् च । स्वनामख्याते वृक्षे "प्रि-
यङ्गुकलिकाकार"मिति वुधप्रणामतन्त्वः । राजिकायां, पिप्पल्याम्,
कङ्गौ (काङ्नी) कटुक्याञ्च ।

प्रियजीव पु० प्रियो जीवो यस्य । श्योनाकभेदे । [त्रि० ।

प्रियतम पु० अतिशयेन प्रियः तमप् । मयूरशिखावृक्षे, अतिप्रिये

प्रियता स्त्री० प्रियस्य भावः तल् । स्नेहे प्रियत्वे । [ त्रि० ।

प्रियदर्शन पु० प्रियं दर्शनमस्य । क्षीरिकावृक्षे, शुकखगे च सुदृश्ये

प्रियवर्णी स्त्री० प्रियो वर्णो यस्याः गौ०ङीप् । प्रियङ्गौ ।

प्रियव्रत पु० स्वायम्भुवमनोः ज्येष्ठे पुत्रे ।

प्रियवल्ली स्त्री० कर्म० । प्रियङ्गौ । [ संवादे ।

प्रियसन्देश पु० प्रियं सन्दिशति अण् चम्पकवृक्षे । ६त० । प्रिय-

प्रियसालक पु० कर्म० स्वार्थे कन् । असनवृक्षे (पियाशाल) ।

प्रियाम्ब पु० प्रियं पितृणां प्रियमम्बु मूले सिक्तं जलमस्य आम्रवृक्षे ।

प्रियाल पु० प्रियाय अलति पर्य्याप्नोति अल–अच् प्रियशाले (पियाशाल)। द्राक्षायां स्त्री०।
प्री तर्पणे भ्वा० उभ० सक० अनिट्। प्रियति ते अप्रैषीत् अप्रेष्ट।
प्री प्रीतौ कान्तौ दिवा० आत्म० अक० अनिट्। प्रीयते अप्रेष्ट।
प्री तर्पणे सक० क्र्या० उभ० कान्तौ अक० अनिट्। प्रीणाति प्रीणीते अप्रैषीत् अप्रेष्ट।
प्री तर्पणे सक० चु० उभ० अनिट्। प्राययति ते अपिप्रयत्-त।
प्रीणन न० प्री-णिच्–नुक्–ल्युट्। तर्पणे।
प्रीत त्रि० प्री-क्त वा नत्वाभावः। हृष्टे। तस्य नत्वे प्रीणोऽप्यत्र त्रि०।
प्रीति स्त्री० प्री-भावे क्तिच्। हर्षे, आमोदे, तृप्तौ च।
प्रु सर्पणे भ्वा० आत्म० सक० अनिट्। प्रवते अप्रोष्ट।
प्रुट मर्द्दने भ्वा० पर० सक० सेट्। प्रोटति अप्रोटीत्।
प्रुष भस्मीकरणे भ्वा० पर० सक० सेट्। प्रोषति अप्रोषीत् क्त्वा वेट्।
प्रुष सेके पूर्त्तौ च सक० स्नेहे अक० क्र्या० पर० सेट्। प्रुष्णाति अप्रोषीत्।
प्रुष्ट त्रि० प्रुष–क्त। दग्धे।
प्रेक्षा स्त्री० प्रकर्षेण प्रमाणादिना ईक्षा। पर्य्यालोचनायाम्।
प्रेक्षावत् त्रि० प्रेक्षा अस्त्यर्थे मतुप् मस्य वः। समीक्ष्यकारिणि।
प्रेङ्खा स्त्री० प्र+इखि अ। दोलायाम्, परिभ्रमणे, स्वार्थकगतौ, नृत्यभेदे, नृत्ये च।
प्रेङ्खित त्रि० प्र+इखि–क्त। कम्पिते।
प्रेङ्खोल दोलने अ० चुरा० उ० सक० सेट्। प्रेङ्खोलयति ते अपप्रेङ्खोलत् त। पस्योपसर्गत्वमपीत्यन्ये तेन प्राङ्खिखोलत् त।
प्रेत पु० प्र+इण–क्त। नरकस्थे जीवे, पिशाचभेदे, आतिवाहिकदेहोत्तरं जायमाने देहभेदे, "क्रते सपिण्डीकरणे नरः संवत्सरात् परम् प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते इति स्मृतिः, मृते च
प्रेतकर्म्मन् न० ६त०। मृतस्य दाहादिके सपिण्डाकरणान्ते कर्मणि।
प्रेतगृह न० ६त०। श्मशाने प्रेतपुरादयोऽप्यत्र।
प्रेतनदी स्त्री० प्रेतगम्या नदी। यमद्वारस्थे वैतरणीनामके नदीभेदे।

प्रेतशिला स्त्री० गयातीर्थस्थे प्रेतोद्धारणार्थे शिलाभेदे ।

प्रेत्य अव्य० प्र+इण–ल्यप् । लोकान्तरे 'प्रेत्य संज्ञा नास्ती'ति श्रुतिः ।

प्रेमन् पु० न० प्रियस्य भावः इमनिच् प्रादेशः । स्नेहे, नर्म्मणि च
 इन्द्रे, वायौ च पु० ।

प्रेयस् त्रि० अतिशयेन प्रियः ईयसुन् प्रियस्य प्रादेशः । अतिशयप्रिये ।
 स्त्रियां ङीप् प्रेयसी सा च प्रियतमायां, योषिति च ।

प्रेरण न० प्र–ईर–णिच्–ल्युट् । प्रेषणे निकटस्थ भृत्यादेः कार्यादौ
 नियोगे । णिच्–युच् । प्रेरणाऽप्यत्र स्त्री० ।

प्रेष गतौ भ्वा० पर० सक० सेट् । प्रेषति अप्रेषीत् ।

प्रे(प्रै)ष पु० प्र+इष–घञ् वा पररूपम् । प्रेषणे, पीड़ने च ।

प्रेष्ठ त्रि० अतिशयेन प्रियः इष्ठन् प्रादेशः । अतिशय प्रिये ।

प्रे(प्रै)ष्य पु० प्र–इष ण्यत् वा पररूपम् । दासे । प्रेष्यीये त्रि०
 जङ्घायां स्त्री० । [हनने च ।

प्रोक्षण न० प्र+उक्ष–ल्युट् । समन्तात् सेचने, वधे, यज्ञार्थं पशूनां

प्रोक्षित त्रि० प्र+उक्ष–क्त । सिक्ते, हिते, यज्ञार्थं संस्कृते मांसादौ च
 "भक्षयेत् प्रोक्षितं मांस"मिति श्रुतिः ।

प्रोञ्छन न० प्र+उछि–ल्युट् । मार्जने (पोंछा) ।

प्रोत त्रि० प्र–वे क्त । गुम्फिते, स्यूते, खचिते च । वस्त्रे न० ।

प्रोत्फुल्ल पु० प्रकर्षेण उत्फुल्लति प्र+उद्+फुल–अच् । सिंहलाङ्गू-
 लाकारपुष्पवति वृक्षभेदे ।

प्रोथ परिपूर्णतायाम् सामर्थ्ये च भ्वा० उभ० अक० सेट् । प्रोथति-ते
 अप्रोथीत् अप्रोथिष्ट । चङि न ह्रस्वः ।

प्रोथ पु० न० । प्रु–थन् । अश्वनासिकायाम् । कट्यां, शाटके, स्त्रीगर्भे
 गर्त्ते, भीषणे, स्फिचि, अश्वमुखे च पु० । प्राप्ये, स्थापिते,
 प्रथिते च त्रि० ।

प्रोषित त्रि० प्र+वस–क्त इट् । प्रवासं गते विदेशं गते ।

**प्रोषितभर्त्तृका** स्त्री० प्रोषितः भर्त्ता यस्याः कप्। विदेशस्थपतिकायां नायिकायाम्। [वा ङीप्। प्रोष्ठीत्यप्यत्र।

**प्रो(प्रौ)ष्ठ** पु० प्रकृष्टः ओष्ठोऽस्य वा वृद्धिः। (पुंटि) मत्स्यभेदे गवि च।

**प्रो(प्रौ)ष्ठपद** पु० प्रो(प्रौ)ष्ठो गौस्तस्येव पदं यस्य। भाद्रपदाख्ये नक्षत्रविशेषे तेन युक्ता पौर्णमासी अण्, सा यत्र मासे पुनरण् वा न वृद्धिः। चान्द्रभाद्रमासे।

**प्रो(प्रौ)ष्ठपदा** स्त्री० ब०व० प्रो(प्रौ)ष्ठस्य गोरिव पदान्यस्याः। भाद्रपद-नक्षत्रे पूर्वभाद्रपदतारायाः उत्तरभाद्रपदतारायाश्च चतुर्नक्षत्रात्म-कत्वात् बहुत्वम्। [भाद्रपौर्णमास्याम्।

**प्रो(प्रौ)ष्ठपदी** स्त्री० प्रोष्ठ(प्रौ)पदाभिर्युक्ता पौर्णमासी अण् वा न वृद्धिः।

**प्रौढ़** त्रि० प्र+वह—क्त वृद्धिः। प्रवृद्धे, प्रगल्भे, निपुणे च नायिका-भेदे "तरुणी त्रिंशता मता पञ्चपञ्चाशता प्रौढा" इत्युक्तवयस्कायां स्त्रियाम् च स्त्री० टाप्।

**प्रौढ़पाद** पु० 'आसनारूढ़पादस्तु जानुनोर्जङ्घयोस्तथा। कृतावसक्-थिको यस्तु प्रौढपादः स उच्यते" इत्युक्तलक्षणे आसनारूढ़पादे वस्त्रादिना कटिजङ्घाबन्धनेन स्थिते जने।

**प्रौढ़ि** स्त्री० प्र+वह—क्तिन् वृद्धिः। सामर्थ्ये, उद्यमे च।

**प्लक्ष** भक्षणे भ्वा० उभ० सक० सेट्। प्लक्षति अप्लक्षीत्।

**प्लक्ष** पु० प्लक्ष्यते कीटैः प्लक्ष—घञ्। (पाकुड़) वृक्षे, प्लक्षवृक्षचिह्निते द्वीपभेदे च।

**प्लव** पु० प्लु—भावे अप्। प्लवने। कर्त्तरि अच्। भेलके (भेला) भेके, मेषे, वानरे, श्वपचे, जलकाके, प्रवणे, पर्कटीवृक्षे, कारण्डवखगे, शब्दे, रिपौ, जलभेदे जलकुक्कुटे, जलचरपक्षिमात्रे सारसादौ च। कैवर्त्तीमुस्तके, गन्धतृणे च न०।

**प्लवग** पु० प्लवन् सन् गच्छति गम—ड ष्ट०। वानरे, भेके, सूर्य्यसारथौ, प्लवपक्षिणि, शिरीषवृक्षे च। [प्लक्षवृक्षे च।

**प्लवङ्ग** पु० प्लवन् सन् गच्छति गम—ड खच् ष्ट०। वानरे, मृगभेदे।

**प्लवङ्गम** पु० प्लवन् सन् गच्छति गम खच् ष्ट०। वानरे, भेके च।

प्लाक्ष न० प्लक्षस्य समूहः, तस्य विकारः, फलं वा अण् न लुप् । प्लक्षवृक्षफले, तद्विकारे, तत्समुदाये च ।

प्लावन न० प्लु—णिच्—ल्युट् । (उथ्लान) द्रवद्रव्यस्य समन्ताद्गतौ ।

प्लावित त्रि० प्लु-णिच्—क्त । जलादिना समन्तात् व्याप्ते ।

प्लिह गतौ भ्वा० पर० सक० सेट् । प्लेहति अप्लेहीत् ।

प्लि(प्ली)हन् पु० प्लिह—कनिन् पृ० वा दीर्घः । (पिला) वामकुक्षिपार्श्वस्थे मांसखण्डे, तद्वृद्धिहेतुके रोगभेदे च ।

प्ली गतौ क्र्या० पर० सक० अनिट् । प्लीनाति अप्लैषीत् ।

प्लीहघ्न पु० प्लीहानं हन्ति हन—क । (रोडा) दाड़िमतुल्यकुसुमयुक्ते वृक्षभेदे । प्लीहघ्नप्रभृतयोऽप्यत्र ।

प्लीहारि पु० ६त० । अश्वत्थवृक्षे (रोडा) वृक्षभेदे च ।

प्लु सर्पणे उत्प्लुत्य गतौ च भ्वा० आत्म० अक० अनिट् । प्लवते अप्लोष्ट ।

प्लुत न० प्लु-क्त । तिर्य्यग्गतौ, झम्पेन, गतौ, अश्वगतिभेदे च ।

प्लुष दाहे भ्वा० पर० सक० सेट् । प्लोषति अप्लोषीत् । क्त्वा वेट् ।

प्लुष दाहे दिवा० पर० सक० सेट् । प्लुष्यति अप्लुषत् ।

प्लुष सेके पूर्त्तौ च सक० अक० स्नेहे क्र्या० पर० सेट् । प्लुष्णाति अप्लोषीत्

प्लुष्ट त्रि० प्लुष—क्त । दग्धे । [अप्लोषीत् ।

प्लुस दाहे विभागे च दिवा० पर० सक० सेट् । प्लुस्यति अप्लुसत्—

प्लेव सेवने भ्वा० आ० सक० सेट् । प्लेवते अप्लेविष्ट । वकिः न लुप्तः ।

प्लोष पु० प्लुष-घञ् । दाहे ।

प्सा भक्षणे अदा० पर० सक० अनिट् । प्साति अप्सासीत् ।

प्सात त्रि० प्सा-क्त । भक्षिते ।

## फ

फ न० फक्क-ड । रूक्षकथने, निष्फलवाक्ये, फुत्कारे च । झञ्झावाते वर्द्धके, जृम्भाविस्फारे, फलभागे च पु० ।

फक्क असदाचारे, मन्दगतौ च भ्वा० पर० सक० सेट् । फक्कति अफक्कीत् ।

फक्किका स्त्री० फक्क-धातुनिर्द्देशे भावे ण्वुल्-टाप् अतइत्वम् । अस-

द्वारकारे (फाकि) तत्त्वनिर्णयार्थं पूर्वपक्षे च। "फणिभाषित-
भाष्यफक्किके"ति नैषधम्।

फञ्जिका स्त्री० भञ्जति रोगान् भनृज-मर्द्दने ण्वुल् पृ०।(वामनहाटि)हक्षे

फञ्जिपत्रिका स्त्री० भनृज-णिनि पृ० फञ्जि रोममर्द्दि पत्रं यस्याः।
आखुपर्ण्याम् (इन्दुरकानि)।

फञ्जि(ञ्जी) स्त्री० भनृज-इन् पृ० वा ङीप्। भार्ग्याम्। (वामनहाटि)

फट पु० स्त्री० स्फुट-विकाशे अच् पृ०। सर्पाणां फणायाम् स्त्रियां
टाप्। सा च दन्ते, कितवे च।

फट् अव्य० स्फुट-क्विप् पृ०। योगे, तन्त्रोक्ते अस्त्रनामके मन्त्रभेदे च।

फण अनायासेनोत्पत्तौ भ्वा० पर० सक० सेट् फणा०। फणति अ-
फाणीत्-अफणीत्। फेणतुः-पफणतुः।

फण गतौ भ्वा० पर० सक० सेट्। फणति अफाणीत्-अफणीत् या
घटादि०। णिचि फाणयति फणयति।

फण पु० स्त्री० फण-अच्। दर्व्याकारे सङ्कोचविकाशवति सर्पमस्तके।

फण(णा)धर पु० फणं(णां) धरति धृ-अच्। सर्पे। फण(णा)भृदा-
दयोऽप्यत्र। [सामान्ये च।

फणिज्झक पु० फणिनमुज्झति ण्वुल् पृ०। तुलसीभेदे, जम्बीर

फणिप्रिय पु० फणिनां प्राणप्रदत्वात् प्रियः। वायौ। सर्पाणां वायु-
भक्षकत्वेन वायोस्तत्प्रियत्वम्।

फणिफेन न० फणिनां फेनमिव। (आफिङ्) अहिफेने।

फणिवल्ली स्त्री० फणिवद्दीर्घा, फणिलोकस्था या वल्ली। नागव-
ल्लयाम् (पानलता)।

फणिहन्त्री स्त्री० फणिनं हन्ति हन-तृच् ङीप्। गन्धनाकुल्याम्।

फणिहृत् स्त्री० फणिनं हरति अपसारयति हृ-क्विप्। क्षुद्रदुरालभायाम्

फणिन् पु० फणोऽस्यस्य इनि। सर्पे। फणधरादयोऽप्यत्र।

फणीश्वर पु० ६त०। अनन्ते, वासुकौ च।

फल भेदने भ्वा० पर० सक० सेट्। फलति अफालीत् फेलतुः फा-
रभो त्त। फुल्तः। अन्यत्र फलितः।

फल निष्पत्तौ भ्वा० पर० अक० सेट्। फलति अफालीत्। क्त फलितः।

फल गतौ भ्वा० पर० सक० सेट्। फलति अफालीत्। ज्वला० कर्त्तरि या णः फलः फालः।

फल न० फल-अच्। वृक्षादीनां शस्ये, लाभे, फलके, (ढाल) कार्य्ये, उद्देश्ये, प्रयोजने, जातीफले, त्रिफलायां, कक्कोले, बाणाग्रे, फाले, दाने, मुष्के च। कुटजवृक्षे पु०। स्वार्थादौ कन्। (ढाल) इति ख्याते चर्ममये अस्त्रप्रतिघातनिवारके पदार्थे। अस्थिखण्डे, नागकेशरे, काष्ठादिपट्टके च पु०।

फलकपाणि पु० फलकः पाणौ यस्य। (ढाली) चर्मिणि।

फलकर्कशा स्त्री० फलेन कर्कशा कठोरा। वनकोलयाम्।

फलकृष्ण पु० फलेन कृष्णः। पानीयामलके।

फलकेशर पु० फले केशरा इवास्य। नारिकेलवृक्षे।

फलत्रय(त्रिक) न० द्वि०न०। वयस्यामलकीहरीतकीरूपेषु द्राक्षापरूष-काश्मीररूपेषु च त्रिषु फलेषु।

फलद पु० फलं ददाति दा-क। वृक्षमात्रे। फलदातरि त्रि०।

फलपाक पु० फलेषु पाको यस्य। करमर्द्दके, पानीयामलके च।

फलपाकिन् पु० फलपाकोऽस्त्यस्य। गर्द्दभाण्डे।

फलपुष्पा स्त्री० फलानि पुष्पाणीव यस्याः। पिण्डखर्जूर्य्याम्।

फलपूर पु० फलेन पूरः पूर्णः पूर-क। वीजपूरे। कन्। तत्रैव।

फलप्रिया स्त्री० फलं प्रियं यस्याः। प्रियङ्गौ। अनुभवे।

फलभोग पु० ६त०। फलानां कर्मफलानां सुखदुःखादीनां भोगे

फलमुख्या स्त्री० फलेन मुख्या श्रेष्ठा। अजमोदायाम्।

फलमुद्गरिका स्त्री० मुदं गिरति इन् फलं मुद्गरि यस्याः। पिण्ड-खर्जूर्य्याम्।

फलवर्त्तुल पु० फलं वर्त्तुलं यस्य। कालिङ्गे वृक्षे। तत्फले न०।

फलवृक्षक पु० फलप्रधानो वृक्षः संज्ञायां कन्। पनसवृक्षे।

फलशालिन् त्रि० फलेन शालते श्लाघते णिनि। फलयुक्ते स्त्रियां ङीप्

फलशैशिर पु० शिशिरं प्राप्तमस्य अण् फलं शैशिरं यस्य। बदरवृक्षे।

फलश्रेष्ठ पु० फलेन श्रेष्ठः प्रशस्य तरः। आम्रवृक्षे।
फलस न० फलं स्यति सो-क। पनसवृक्षे।
फलस्नेह पु० फले स्नेहो यस्य। अक्षोटवृक्षे।
फलाढ्या त्रि० फलेनाढ्या सम्पन्ना। फलयुक्ते। काष्ठकदल्याम् स्त्री०।
फलाध्यक्ष पु० फलमध्यक्षमिव यस्य। राजादने। फलदानाध्यक्षे ईश्वरे पु०। फलसाक्षीत्यादयोऽप्यत्र।
फलाम्ल न० फलमम्लं यस्य। वृक्षाम्ले। अम्लवेतसे पु०।
फलिन त्रि० फल+अस्त्यर्थे इनच्। फलयुक्ते तादृशे वृक्षे पु०।
फलिन् त्रि० फल+अस्त्यर्थे इनि। फलयुक्ते तादृशे वृक्षे पु० प्रियङ्गु-वृक्षे स्त्री० ङीप्।
फली स्त्री० फलमस्त्यस्याः अच् गौ० ङीष्। प्रियङ्गुवृक्षे।
फलेग्रहि पु० फले-ग्रह इन्। योग्यकाले फलधरे वृक्षे। "फले-ग्रहीन् हंसीति" भट्टिः। इत्। फलेग्राहिरप्यत्र।
फलेन्द्र पु० फलेन इन्द्र ऐश्वर्य्यान्वितः। राजजम्बुवृक्षे।
फलेरुहा स्त्री० फले रोहति रुह-क। पाटलिवृक्षे।
फलोत्तमा स्त्री० फलेन उत्तमा। द्राक्षाभेदे।
फलोदय पु० ६त०। फलोत्पत्तौ लाभे, स्वर्गे, हर्षे च।
फल्गु त्रि० फल-उ गुक् च। रम्ये, सारे, निरर्थके च गयातीर्थस्थ नद्यां स्त्री०। (फाल्गु) इति ख्याते धूलिरूपे पदार्थे, काको-डुम्बरिकायाम्, वसन्तसमये मिथ्यावाक्ये च पु०।
फल्गुन पु० फल्गुस्वर्णभेदो नीयतेऽस्मिन् नी-ड। फाल्गुनेमासि।
फल्गुनी स्त्री० फल-उनन् गुक् गौ०ङीष्। काकोडुम्बुरिकायाम्। अश्विन्यवधिके एकादशे, द्वादशे च नक्षत्रे च ब०व०।
फल्गुवाटिका स्त्री० फल्गूनां वाटीव इवार्थे कन्। काकोडुम्ब-रिकायाम्।
फल्गुवृन्ताक पु० फल्गु रम्यं वृन्ताकं यस्य। श्योनाकभेदे।
फल्गूत्सव पु० फल्गुनिमित्तक उत्सवः। फाल्गुनपौर्णमास्यादिषु कर्त्तव्ये (आबीर) फल्गुद्रव्यकरणे उत्सवे।

फल्य न० फलाय हितं यत् । पुष्पे ।

फाणि पु० स्फाय-णि पृ० । गुड़विकारे, करम्भे दधिमिश्रितसक्तौ च ।

फाणित न० फण—णिच् क्त । गुड़विकारभेदे (फेणी) ।

फाण्ट न० फण—क्त नि० । अनायासेन कृते । "क्षिप्तोष्णतोये मृदितः फाण्ट इत्यभिधीयते" इत्युक्ते क्काथभेदे ।

फाल न० फलाय शस्याय हितम् अण्, फल्यते विदार्य्यते भूमिरनेन वा घञ् । स्वनामख्याते लाङ्गलमुखस्थे लौहभेदे । फालमस्त्यस्य अच् । बलदेवे, महादेवे च पु० । फलस्य विकारः अण् । कार्पासवस्त्रे त्रि० । फालकरणके दिव्यपरीक्षाभेदे न० । फलेषु भवः अण् । जम्बीरवीजादौ पु० ।

फाल्गुन पु० फल-उनन् गुक् च स्वार्थे प्रज्ञाद्यण् । अर्ज्जुने मध्यमपाण्डवे, अश्विन्यवधिके एकादशे द्वादशे नक्षत्रे च स्त्री० ब०व० ङीप् । फल्गुनीभिर्युक्ता पौर्णमासी अण् । चान्द्रफाल्गुनमासपौर्णमास्यां स्त्री०ङीप् । सावनमासे अण् । चैत्राद्यवधिके द्वादशे मासे पु० । वर्षस्य हि चैत्रादित्वम् ।

फाल्गुनिक पु० फाल्गुनी फल्गुनीनक्षत्रयुक्ता पौर्णमासी अस्मिन् मासे ठक् । चैत्राद्यवधिके द्वादशे मासे ।

फु पु० फल–डु । मन्त्रोच्चारणपूर्व्वके फुत्कारे, तुच्छवाक्ये च ।

फुट त्रि० स्फुट—क पृ० । विदीर्णे, प्रस्फुटिते च ।

फु(फू)त् अव्य० फल—डुति पृ० वा दीर्घः । अनुकरणशब्दे ।

फुल्ल विकाशे भ्वा०पर०अक० सेट् । फुल्लति अफुल्लीत् ।

फुल्ल त्रि० फुल्लविकाशे अच् । विकसिते । पुष्पे ।

फेण(न) पु० स्फाय—न पृ० मतान्तरे णत्वम् । दुग्धजलादेरुपर्य्युपरिस्थे बुद्बुदाकारे पदार्थे (फेना) अस्य णान्तत्वमपि "हंसश्रेणी नदीनिनदे संप्रतीयिरे । यथा सारस्वता मन्त्रा अन्तरे फेणसङ्गता" इत्युक्तौ पक्षे अन्ते रेफेण अन्त्यस्यरकारेण संयुता इत्यर्थः । हिमे च । गुड़विकारभेदे स्त्री० ङीप् ।

फेणा(ना)ग्र न० ६त० । बुद्बुदे ।

**फेणि(नि)ल** त्रि० फेन+अस्त्यर्थे इलच् । फेनविशिष्टे । कोलिफले, मदनवृक्षफले च न० । बदरवृक्षे, अरिष्टवृक्षे च पु० ।

**फेरव** पु० फे इत्यव्यक्तो रवोऽस्य । शृगाले, राक्षसे च । तद्गुणयोगात् धूर्त्ते, हिंस्रे च त्रि० ।

**फेरु** पु० फे इत्यव्यक्तं रौति रु—डु । शृगाले ।

**फेल(ला)** न०स्त्री० फेल—अच् वा टाप् । भुक्तसमुज्झिते, उच्छिष्टे ।

**फेल** गतौ भ्वा०पर०सक० सेट् । फेलति अफेलीत् । चङि न ह्रस्वः

## ब

**ब** पु० वल—ड । सूचने, तन्तुसन्ताने, वपने, वरुणे, घटे समुद्रे, योनौ, जले च । गमने स्त्री० ।

**बंहिष्ठ** त्रि०अतिशयेन ब(व)हुः इष्ठन् बंहादेशः । अतिशयब(व)हुले ।

**बंहीयस्** त्रि०अतिशयेन बहुः ईयसु बंहादेशः । अतिशयब(व)हुले ।

**बट** हृतौ सामर्थ्ये च भ्वा० पर० अक०सेट् बटति अबटीत्‌ अबाटीत् । बेटतुः ।

**बडवा** स्त्री० बलं वाति वा—क लस्य डः । घोटक्याम्, तद्दैवताके [ अश्विनीनक्षत्रे, दास्याञ्च ।

**बडवाकृ(हृ)त** न० बडवया दास्या कृतः (हृतः) वा । दासभेदे "भक्तदासश्च विज्ञेयस्तथैव बडवाहृ(कृ)त" इति स्मृतिः ।

**बडवाग्नि** पु० बडवायाः शिवक्रूराख्याया मुखस्थोऽग्निः । समुद्रस्थिते घोटकीमुखस्थे कालानले । वडवानलादयोऽप्यत्र ।

**बडवामुख** पु० बडवाया मुखं स्थानत्वेनास्त्यस्य अर्श आदित्वादच् । समुद्रस्थे कालानले ।

**बड़वासुत** पु० द्वि० व० ६त० । अश्विनीकुमारयोः ।

**बण** शब्दे भ्वा०पर०सक०सेट् । बणति अबाणीत् अबणीत् । बेणतुः ।

**बणिक्पथ** पु० ६त० अच्समा० । हट्टे ।

**बणिग्बन्धु** पु० बणिजां बन्धुरिव पोषकत्वात् । नीलीवृक्षे ।

**बणिग्भाव** पु० ६त० । वाणिज्ये आजीवनार्थं क्रयविक्रयकरणे ।

**बणिज्(ज)** पु० पणायते व्यवहरति पण—इजि इजो वा पस्य बः ।

आजीवनार्थं क्रयविक्रयव्यवहारकर्त्तरि, ज्योतिषोक्ते ववादिषु सप्तमे करणे च ।

वणिज्य न० वणिजो भावः कर्म० वा य । वणिजेः आजीवनार्थं क्रयविक्रयादिव्यवहारे, स्त्रीत्वमपि । "बहुरेव चतुर्वर्गचिन्तामणिवणिज्ययेति मुक्ताफलम् । [ अवदीत् । वेदलः ।

वद् स्थैर्ये निश्चलभवने च भ्वा० पर० सक० सेट् । वदति अवादीत्-

वद् भाषणे वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । वादयति-ते अवीवदत् । पक्षे वदतीत्यादि ।

ब(व)दर पु० ब(व)द-अरच् । कोलिवृक्षे । देवसर्षपवृक्षे, कार्पासबीजे च न० । वराहक्रान्तायां स्त्री० टाप् ।

ब(व)दरफली स्त्री० ब(व)दरस्येव फलमस्याः । भूमिब(व)दर्याम् ।

ब(व)दरवल्ली स्त्री० ब(व)दरफलप्रधाना वल्ली शाक० । भूमिब(व)दरीतिख्याते लताभेदे ।

ब(व)दरामलक न० ब(व)दरमिवामलकम् । प्राचीनामलके ।

ब(व)दरि(री) स्त्री० ब(व)द-अरि वा ङीप् । कोलिवृक्षे, कार्पास्याम्, कपिकच्छ्वाञ्च ।

ब(व)दरिकाश्रम पु०न० । बदरी+स्वार्थे कन् तस्याः समीपे, तच्चिह्नितोवाश्रमः । तीर्थविशेषे । ब(व)दरीशैलोऽप्यत्र ।

ब(व)दरीच्छदा स्त्री० ब(व)दर्या इव च्छदो यस्याः । हस्तिकोलवृक्षे ।

ब(व)दरीपत्त्र पु० ब(व)दर्या इव पत्त्रमस्याः । नखीनामगन्धद्रव्ये । स्वार्थे कन् । तत्रैव । [याम् ।

ब(व)दरीफला स्त्री० ब(व)दर्या इव फलमस्याः । नीलशेफालिका-

बद्धफल पु० बद्धानि फलान्यस्य । करञ्जवृक्षे ।

बद्धमुष्टि त्रि० बद्ध असुक्तः दानायाप्रसारितो मुष्टिर्यस्य । कृपणे ।

बद्धशिख पु० बद्धा शिखा यस्य । शिशौ । शिखाबन्धनयुक्ते त्रि० । उच्चटायां स्त्री० ।

बध हन-घञ् बधादेशः । हनने प्राणवियोगफलके व्यापारे ।

बध संयमने चु० उ०उक० सेट् । बाधयति-ते अबीबधत्-त ।

बीभ निन्दायां बन्धने च भ्वादि० आत्म० सक० सेट् । बीभत्सते अबीभत्सिष्ट ।

बधिर त्रि० बन्ध—किरच् । श्रुतिशक्तिशून्ये श्रवणेन्द्रियरहिते ।

ब(व)धू स्त्री० बध्नाति बिद्यया बन्ध—ऊ नलोपः, उह्यते वह—ऊ धश्चान्तादेशः वा । नार्य्याम्, स्नुषायां पत्न्याम्, नवोढायाम्, भार्य्यायां, शुक्कायाञ्च ।

ब(व)धू(टि)टी स्त्री० अल्पा ब(व)धूः अल्पार्थे टि वा ङीप् । अल्पवयस्कायां नार्य्याम् "गोपब(व)धूटीदुकूलचौराये"ति भाषापरिच्छेदः ।

ब(व)धूत्सवप्रसव पु० ब(व)ध्वा उत्सव आर्त्तवम् रजः तदुत्र प्रसवः यत्रा दिर्यस्य । रक्ताम्लाने ।

बध्य त्रि० बधमर्हति बध+यत् । बधार्हे ।

बध्यभूमि स्त्री० हन—भावे यत् बधादेशः बध्यस्य भूमिः । श्मशाने बधस्थाने । बध्यस्थानादयोऽप्यत्र ।

बध्र न० बन्ध—ष्ट्रन् नलोपः । सीसके, चर्म्मभयरज्ज्वां स्त्री० ङीप् । पु० नस्य रः । बर्ध्रीत्यप्यत्र स्त्री० ।

वन याचने तना० आत्म० द्विक० सेट् । बनुते अबनिष्ट । क्षा सेट् ।

बन्ध बन्धने क्र्या० पर० सक० अनिट् । बध्नाति अबान्त्सीत् ।

बन्ध संयमने चुरा० उभ० सक० सेट् । बन्धयति, ते अबबन्धत् त ।

बन्ध पु० बन्ध—घञ् । संयमने निगडादिना गतिरोधने रत्यादिवेष्टनस्थले च । कर्म्मणि घञ् । देहे, ऋणशोधनविश्वासाय स्थापिते द्रव्ये आधौ च ।

बन्धक पु० बन्ध—ण्वुल् । विनिमये तुल्यरूपद्रव्यदानेन द्रव्यान्तरग्रहणरूपे परिवर्त्ते । आधौ न० । "अशीतिभागो वृद्धिः स्यात् मासि मासि सबन्धके" इति स्मृतिः । पुंश्चल्यामसत्यां स्त्रियाम् स्त्री० गौरा० ङीप् ।

बन्धन न० बन्ध—भावे ल्युट् । निगडादिना संयमने, बधे च । करणे ल्युट् । रज्जौ ।

बन्धनवेश्मन् न० ६त० । कारागारे बन्धागारादयोऽप्यत्र ।

बन्धनस्तम्भ पु० ६त० । हस्तिसंयमनकाष्ठे आलाने ।
बन्धु पु० बध्नाति मनः स्नेहादिना बन्ध-उ । ज्ञातौ, मातुलपुत्रादौ, बन्धुभ्यः पितृमातृसुत इति स्मृतिः बान्धवे, मित्रे, सगोत्रे, पितरि, मातरि, भ्रातरि, बन्धुजीववृक्षे च । [बाधुयालि] वृक्षभेदे च ।
बन्धुजीव पु० बन्धुरिव जीवयति अच् स्वार्थे कन् । बन्धुजीववृक्षे ।
बन्धुता स्त्री० बन्धु+समूहे तल्, भावे तल् वा । बन्धुसमूहे, तद्भावे च ।
बन्धुर न० बन्ध–उरच् । मुकुटे । स्त्रीचिह्ने, तिलकलके बन्धुजीववृक्षे, बधिरे, हंसे, विडङ्गे, ऋषभौषधे, वके विहङ्गे च पु० । रम्ये, नम्रे, उन्नतानते च त्रि० । वेश्यायां, सकुणु । स्त्री० । बन्ध उरच् । रम्ये त्रि० ।
बन्धुल पु० बन्ध–उलच् । असतीपुत्रे । सुन्दरे, रम्ये, नम्रे च त्रि० ।
बन्धूक पु० बन्ध–ऊक । (बान्धुली) वृक्षे बन्धूकपुष्पसङ्काश"मिति रविप्रणाममन्त्रः रक्तपीतादिपुष्पे मध्याह्ने प्रकाशयति पुष्पवृक्षे, पीतशालके च । [६त० । बन्धूककुसुमे न० ।
बन्धूकपुष्प पु० बन्धूकस्येव पुष्पमस्य । पीतशालके वृक्षे, जीरके च ।
बन्धूलि पु० बन्ध–ऊलि । बन्धुजीववृक्षे ।
बन्ध्य पु० त्रि० बन्ध–यत् । कालप्राप्तावपि फलशून्ये वृक्षे । निष्फले, 'अबन्ध्यकोपस्ये'ति भारविः बन्धनीये च त्रि० । अपुत्रायां स्त्रीजातौ, वालाख्ये गन्धद्रव्ये च स्त्री० ।
बन्ध्याकर्कोटी स्त्री० बन्ध्याया उपकारिणी पुत्रप्रदत्वात् कर्कोटी । तिक्तकर्कोट्याम् अस्याः पुत्रदायित्वेन बन्ध्योपकारित्वम् । स्वार्थे कन् अतएवम् । तत्रैव ।
बभ्र गतौ भ्वा० पर० सक० सेट् । बभ्रति अबभ्रीत् ।
बभ्रु पु० भृ–कु–द्वित्वम् बभ्र–उ वा । शिवे, विष्णौ, नकुले, वह्नौ, मुनिभेदे, देशभेदे, च तद्देशवासिनि ब० व० । पिङ्गलवर्णे पु० । तद्वति त्रि० । स्त्रियां ऊङ् । खलतौ बकुकरे पु० (फराश) ।
बभ्रुधातु पु० कर्म० । स्वर्णे, धुस्तूरे, गैरिके च ।
बम्ब गतौ भ्वा० पर० सक० सेट् । बम्बति अबम्बीत् ।

बर न० वृ–अप्। कुङ्कुमे। वृ–अच्। आर्द्रके। अव्य। ईषदिष्टे अव्य०। कर्म्मणि अप्। आमातरि देशादिभ्यः आयाते, जिष्णौ, जारे च पु०। भावेऽप्। वरणे। गुडूच्यां, त्रिफलायां, मेदायां, ब्राह्म्याम्, विडङ्गेषु पाठायां, हरिद्रायाञ्च स्त्री० टाप्। शता-वर्य्यां स्त्री० गौ० ङीष्।

बर्ब गतौ भ्वा० पर० सक० सेट्। बर्बति अबर्बीत्।

बर्बट पु० बर्ब–अटन्। राजमाषे (बरबटी)। गौ० ङीष्। तत्रैव व्रीहौ, वेश्यायाञ्च।

बर्ह दाने वधे स्तुतौ वाचि च भ्वा०आ०सक० सेट्। बर्हते अबर्हिष्ट।

बर्ह न० बर्ह–अच्। मयूरपिच्छे, पत्रे, परीवारे च।

बल जीवने, धान्यावरोधे च भ्वा० पर० अक० सेट्। बलति। अबालीत् बेबलः। [अबलिष्ट।

बल्ह दाने वधे निरूपणे च भ्वा०उभ०सक०सेट्। बलति-ते अबालीत्

बल जीवने चु० उ० अक० सेट् घटा०। बलयति-ते अबीबलत् त जवादि० च। बलः बालः।

बल्ह निरूपणे चु० आत्म० सक० सेट्। बालयते अबीबलत्।

बल न० बल–अच्। सैन्ये, देहजे सामर्थ्ये, स्थौल्ये, गन्धरसे, रूपे, शुक्रे, रेहे, पल्लवे, रक्ते च। बलयुक्ते त्रि०। काके, बलदेवे, वरुणवृक्षे, दैत्यभेदे च पु०।

बलक्ष पु० बलं चावल्यकात् क्षै–क। शुक्लवर्णे तद्वति त्रि०।

बलज न० बलात् जायते जन–ड। क्षेत्रे, पुरद्वारे, शस्ये, युद्धे च। बलजाते त्रि०।

बलद पु० बलं ददाति दा–क। "पौष्टिके बलदः स्मृत" इत्युक्ते पौष्टिककर्म्माङ्गे वह्निभेदे। अश्वगन्धायां स्त्री०। बलदातरि त्रि०।

बलदेव पु० बलेन दीव्यति दिव–अच्, बलोऽधिको देवो वा शाक०। बलरामे। त्रायमाणौषधौ स्त्री०।

बलभद्र पु० बल+अर्श आद्यच् बलो बलवानपि भद्रः सौम्यः। बलदेवे, गवये च। बलेषु भद्रा। त्रायमाणौषधौ स्त्री० स्वार्थे कन्। तत्रैव

बलराम पु० बलेन रमते रम–संज्ञायां कर्त्तरि घञ् । कृष्णाग्रजे रोहिणीनन्दने बलदेवे रामे ।

बलवत् अव्य० बल+अतिशये मतुप् मस्य वः । अतिशये "बलवदपि शिक्षितानाम्" इति शकुन्तला । बलविशिष्टे त्रि० । 'वीर्ये बलवती नाड़ी'ति वैद्यकम् ।

बलवर्द्धिनी स्त्री० बलं वर्द्धयति वृध–णिच्–णिनि । जीवकौषधौ ।

बलविन्यास पु० बलानां सैन्यानां विशेषेण दुर्भेद्यतायै न्यासः स्थापनम् । व्यूहे सेनासन्निवेशविशेषे ।

बलशालिन् त्रि० बलेन शालते शल–णिनि । बलविशिष्टे ।

बलसूदन पु० बलं तन्नामकमसुरं सूदयति सूद–ल्यु । इन्द्रे ।

बला स्त्री० बलं कार्य्यत्वेनास्त्यस्याः । (बालियाड़ा) क्षुपभेदे, विश्वामित्रेण रामाय दत्ते अस्त्रविद्याभेदे च ।

बलाका स्त्री० बलं कम्पनमकति गच्छति अक–अच् । बकभेदे ।

बलाट पु० बलमटति ददाति अट–अच् । मुद्गे ।

बलात् अव्य० बलं सामर्थ्यं कारणत्वेनातति अत–क्विप् । हठादित्यर्थे । पञ्चम्यन्तबलशब्देनास्य न गतार्थता बलात्कार इत्यादिसिद्धये तस्याव्ययत्वावश्यकत्वात् ।

बलात्कार पु० बलात्+कृ+घञ् । बलपूर्वककरणे, हठात्करणे च ।

बलात्मिका स्त्री० बलमेवात्मा स्वरूपं कारणत्वात् यस्याः स्वार्थे कन् अत इत्त्वम् । (हातिशुंड़ा) हस्तिशुण्डीवृक्षे ।

बलाढ्या स्त्री० बलाय आढ्या । (बेलियाड़ा) क्षुपभेदे ।

बलानुज पु० अनुजायते अनु+जन–ड ६त० । श्रीकृष्णे ।

बलामोटा स्त्री० बलमामोटयति आ+मुट–अच् । नागदमन्याम् । अजन्तत्वोक्तिः प्रामादिकी तथात्वे ङीप् स्यात् ।

बलाय पु० बलस्यायः स्थानम् अय–घञ् । वरुणवृक्षे ।

बलाराति पु० बलस्य तन्नामासुरस्यारातिः । इन्द्रे । बलशत्रुप्रभृतयोऽप्यत्र ।

बलामलक पु० बलाय सामर्थ्याय अलति पर्य्याप्नोति अल-ण्वुल्। पानीयामलके।

बलाहक पु० वलं कम्पनमाजहाति आ+हा-क्वुन्। मेघे मुस्तके, पर्वते, दैत्यभेदे, नागभेदे च।

बलाह्वकन्द पु० बलं सामर्थ्यमाह्वयति आ+ह्वे-क तादृशः कन्दः। गुलञ्चकन्दे।

बलि पु० बल-इन्। पूजोपहारे, दत्त "स्त्री बलं चैव त्रिजगामाश्रुचित"मिति चण्डी राजग्राह्ये भागे, उपप्लवे, चामरदण्डे गृहस्थकर्त्तव्यपञ्चयज्ञमध्ये भूतयज्ञे, "बलिकर्म ततः कुर्य्यादिति स्मृतिः। दैत्यभेदे विरोचनपुत्रे च 'येन बद्धो बलीराजा दानवेन्द्रो महाबलीऽति रक्षाबन्धनमन्त्रः। जरया श्लथचर्मणि स्त्री० वा ङीप्। 'गृहस्थस्तु यदा पश्येत् बलीपलितमात्मन' इति स्मृतिः। उदरावयवे। 'बलित्रयं चारु बभार बाले"ति कुमारः। गुह्यस्थे अङ्कुराकारे मांसपिण्डे, गृहदारुप्रभेदे च (पाड) स्त्री० स्वार्थे कन्। तत्र, अतिबलायाञ्च।

बलिध्वंसिन् पु० बलिं ध्वंसयति स्वस्थानात् पातयति ध्वन्स-णिच्-णिनि। विष्णौ वामनावतारेण हि तस्य तथात्वम्।

बलिन(भ) त्रि० बलि+अस्त्यर्थे-इन भ वा। जरया शिथिलचर्मवति।

बलिन् त्रि० बलमस्त्यस्य इनि। बलवति। उष्ट्रे, महिषे, वृषे, शूकरे, बलरामे कुन्दवृक्षे, कफे, माषे च पु०। (बेलिआड़ा) क्षुपे स्त्री० ङीप्।

बलिपुष्ट पु० बलिना पूजोपहारद्रव्येण पुष्टः पुष-क्त। काके।

बलिप्रिय पु० बलिनं प्रीणाति प्री-क। लोध्रद्रुमे। [काके।

बलिभुज् पु० बलिं पूजोपकरणद्रव्यं गृहस्थदत्तबलिं वा भुङ्क्ते क्विप्।

बलि(ली)मुख पु० बलि(ली)युक्तं मुखमस्य शाक०। वानरे।

बलिष्ठ त्रि० अतिशयेन बली बलिन्+इष्ठन्। अत्यन्तबलवति। उष्ट्रे पु०

बलिसद्मन् न० ६त०। पाताले बलिपुरादयोऽप्यत्र।

बलीक पु०न० बालयति आवृणोति बल ईकन् नि०। पटलप्रान्ते (छाँच)

बलीयस् त्रि० अतिशयेन बली बलिन्+ईयसु। अत्यन्तबलवति।

**बलीवर्द** पु० वृ—क्विप् वर् ई लक्ष्मीः वरं ईवरौ तौ ददाति दा—क ईवर्द्दः बली चासौ ईवर्द्दश्चेति । वृषे ।

**बल्य** न० बलाय हितं बल+यत् । प्रधानधातौ, शुक्रे, बलसाधने च । अश्वगन्धायाम्, अतिबलायां, प्रसारिण्याञ्च स्त्री० ।

**बल्ह** स्तुतौ दाने, वधे, च सक० याचने द्विक० भ्वा० आत्म० सेट् । बल्हते अबल्हिष्ट ।

**बष्क(ष्क)यि(णी)नी** स्त्री० बष्क गतौ अयन् पृ० भस्य वः वस्य वा घत्वम् बष्क(ष्क)योऽस्यास्ति इनि ङीप् षमध्यत्वे णत्वम् । चिर-प्रसूतायां गवि । बष्क(ष्क)यं नयतीति नी—ड गौ० ङीप् षम-ध्यत्वे पूर्व० णत्वम् । बष्क(ष्क)यणी(नी)त्यप्यत्र ।

**ब(व)ह** वृद्धौ भ्वा० आत्म० अक० सेट् इदित् । बं(वं)हते अबं(वं)हिष्ट । मंहिसाहचर्य्यादयमोष्ठ्यादिरितिपाणिनीयाः । दन्त्योष्ठ्या-दिरिति वोपदेवः । [स्त्रियां वा ङीप् ब(व)ह्वी ।

**ब(व)हु** त्रि० बं(व)हि—कु नलोपः । त्रिप्रभृत्यनेकसङ्ख्यान्विते, विपुले च

**ब(व)हुकण्टक** पु० ब(व)हूनि कण्टकान्यस्य । क्षुद्रगोक्षुरे (गोखुरी) क्षुपभेदे । [कायाम् ।

**ब(व)हुकण्टा** स्त्री० ब(व)हवः कण्टाः कण्टकाः यस्याः । कण्टकारि-

**ब(व)हुकन्द** पु० ६ब० । सूरणे (ओल) । कर्कट्यां स्त्री० ।

**ब(व)हुकर** त्रि० ब(व)हूनि किरति कॄ-अच् । (फराश्) मार्ज्जन-करे । सम्मार्ज्जन्यां स्त्री० गौ० ङीप् । कृ—अच् ६ब० । उष्ट्रे । अनेककार्य्यकरे त्रि० ।

**ब(व)हुकर्णिका** स्त्री० ब(व)हवःकर्णा इव पर्णान्यस्य । आखुक-र्ण्याम् । [चम्पककलिकायां, जीरके च स्त्री० ।

**ब(व)हुगन्ध** पु० ६ब० । कुन्दुरुके । त्वचे, (तेजपात) न० । यूथ्यां,

**ब(व)हुगन्धदा** स्त्री० ब(व)हुगन्धं ददाति दा—क । मृगभेदे ।

**ब(व)हुग्रन्थि** पु० ६ब० । झावुके (झाउ) ।

**ब(व)हुच्छिन्ना** स्त्री० ब(व)हु यथा स्यात् छिद्यते स्म छिद—क्त तस्य, दस्य च नः । कन्दगुडूच्याम् ।

ब(व)कुतिक्ता स्त्री० ब(व)कु यथा तथा बाकुल्येन वा तिक्ता। काकमाच्याम्।

ब(व)कुतिथ त्रि० ब(व)कूनां पूरणः ब(व)कु+डट् तिथुक् च। अनेकसंख्याते, "काले गते बकुतिथे, इत्युद्भटः।

ब(व)हुत्र अव्य० ब(व)कुषु त्रल्। अनेकेषु कालादिषु।

ब(व)हुत्वच् पु० ६ब०। भूर्ज्जपत्रवृक्षे। स्वार्थे कन् तत्रैव।

ब(व)हुदुग्ध पु० ब(ब)हूनि दुग्धानीव चूर्णानि शुभ्रवर्णत्वात् यस्य। गोधूमे। प्रचुरक्षीरवत्यां गवि, स्नुहीवृक्षे च स्त्री०। स्वार्थे कन् अत इत्त्वम्। स्नुहीवृक्षे।

ब(व)हुधा अव्य० ब(व)कु+प्रकारे—धाच्। अनेकप्रकारे।

ब(व)हुपत्त्र पु० ६ब०। पलाण्डौ अनेकपर्णयुक्ते त्रि०। लिङ्गिन्याम्, घृतकुमार्यां, तुलस्यां, दृहत्यां गोरक्षदुग्धायां, जतुकायाञ्च स्त्री० गौ० ङीष्। ततः संज्ञायां कन्। भूम्यामलक्यां, मेथिकायां, महाशतावर्य्याञ्च।

ब(व)हुपर्ण पु० ६ब०। सप्तच्छदवृक्षे तस्य प्रतिपर्णं सप्तसप्तपत्त्रवत्त्वात्। अनेकपर्णयुक्ते त्रि०। मेथिकायां स्त्री० ङीप्। ततः संज्ञायां कन्। आखुकर्ण्यां स्त्री० टाप्। [वत्त्वात्तथात्वम्।

ब(व)हुपाद्(द) पु० ६ब०। वा अन्त्यलोपः। वटवृक्षे अनेक [शिफा-

ब(व)हुपुत्त्र ब(व)हवः पुत्त्रा—इव पर्णान्यस्य। सप्तच्छदे। अनेकपुत्त्रा-इव मूलान्यस्य। शतमूल्यां स्त्री० ङीप्।

ब(व)हुपुष्प पु० ६ब०। निम्बवृक्षे। संज्ञायां कन् अत इत्त्वम्। धातक्यां स्त्री०। [तुल्यप्रचुरलक्षणवत्त्वात् सुकुलक्ष पु०।

ब(व)हुप्रज त्रि० ६ब०। बहुसन्तानवति। शूकरे पु०। प्रजा-

ब(व)हुफल पु० ६ब०। कदम्बवृक्षे, विकङ्कते, तेजःफले च। अनेकफलयुक्ते त्रि०। माषपर्ण्यां, चविकायां, काकमाच्यां, त्रिपुस्यां, (शशा) क्षुद्रकारवेल्ल्यां,, भूम्यामलक्याञ्च स्त्री०। संज्ञायां कन् अत इत्वम्। भूमिबदर्य्यां स्त्री०। आमलक्यां स्त्री० ङीप्।

ब(व)हुमञ्जरी स्त्री० ६ब० समासान्तात् न कप्। तुलस्याम्।

ब(व)हुमल पु० ६ब० । सीसके । अनेकमलयुक्ते त्रि० ।

ब(व)हुमूर्त्ति स्त्री० ६ब० । वनकार्पासे । नानाकारवति त्रि० ।

ब(व)हुमूल त्रि० ६ब० । अनेकमूलवति । शिग्रौ पु० । संज्ञायां कन् । उशीरे न० । शतावर्य्यां स्त्री० टाप् । माकन्द्यां ङीप् ।

ब(व)हुरसा स्त्री० ६ब० । महाज्योतिष्मत्याम् । नानारसवत्यां त्रि० ।

ब(व)हुरूप पु० ६ब० । सर्ज्जरसे (धुना) शिवे, विष्णौ, हिरण्यगर्भे, कामे केशे च । नानारूपवति त्रि० ।

ब(व)हुरोमन् त्रि० ६ब० अनेकरोमवति रोमशे । मेषे पु० ।

ब(व)हुल त्रि० बंहि—कुलच् नि० नलोपः । अनेकसंख्यान्विते प्रचुरे । ब(व)हूनि लाति ला—क । अग्नौ, कृष्णवर्णे च पु० तद्वति त्रि० । कृष्णपक्षे पु० "ब(व)हुलेऽपि गते निशाकर" इति कुमारः । आकाशे न० । नीलिकायां नीलवर्णायां गवि च स्त्री० । कलच् पु० । ब(व)हुलचः । प्रचुरे त्रि० । अग्निदैवतत्वात् कृत्तिकानक्षत्रे स्त्री० टाप् ब० व० ।

ब(व)हुलगन्धा स्त्री० ६ब० । एलायाम् ।

ब(व)हुलच्छद पु० ६ब० । रक्तशोभाञ्जने ।

ब(व)हुलीकृत त्रि० ब(व)हुल+च्वि—कृ—क्त । (आगड़ा) बुसस्यापनयनेन राशीकृते खलस्थे धान्ये, राशीकृतमात्रे च ।

ब(व)हुवल्क पु० ६ब० । प्रियाले (पियाशाल) ।

ब(व)हुवारक पु० ब(व)हूनि वारयति अण्, ततः कन्, ण्वुल् वा । श्लेष्मातके (लोना आता) ।

ब(व)हुविस्तीर्णा स्त्री० ब(व)हु यथा तथा विस्तीर्णा वि—स्तॄ—क्त । (कुचुड़) कुचिकावृक्षे ।

ब(व)हुवीज पु० ६ब० । (आता) आतृप्ये वृक्षे । प्रचुरवीजवति त्रि० ।

ब(व)हुवीर्य्य पु० ६ब० । विभीतके, (नयड़ा) तण्डुलीयशाके, (नटे-शाक) शाल्मलिवृक्षे, मरुवके च । भूम्यामलक्यां स्त्री० ।

ब(व)हुव्रीहि त्रि० ६ब० । अनेकधान्यादियुक्ते । व्याकरणोक्ते नानापदानाम् अन्यपदार्थप्रधाने समासभेदे पु० ।

ब(व)हुग्रस् अव्य० ब(व)हु+शस् । अनेकधारानिमर्थे "गुणवत्य ब(व)हुशो नियोजिता" इति कुमारः ।

ब(व)हुशल्य पु० ६ब० । रक्तखदिरे । अनेककीलयुक्ते त्रि० ।

ब(व)हुशाल पु० ब(व)हुभिः शालते शल-संज्ञायां कर्त्तरि घञ् । स्नुहीवृक्षे । [त्रि० ।

ब(व)हुशिखा स्त्री० ६ब० । जलपिप्पल्याम् । अनेकशिखा युक्ते

ब(व)हुसार पु० ६ब० । खदिरे । अनेकसारवति त्रि० ।

ब(व)हुसुता स्त्री० ब(व)हवः सुता इव मूलान्यस्याः । शतमूल्याम् । अनेकपुत्रवति त्रि० । [न्तानयुक्ते त्रि० ।

ब(व)हुसूति स्त्री० ६ब० । अनेकप्रसववत्यां गवि । ब(व)हुस

ब(व)हुस्रवा स्त्री०ब(व)हु यथा तथा स्रवति स्रु—अच् । शल्लकीवृक्षे । अनेकधा चरणवति त्रि० ।

ब(व)हृच पु० ६ब० अच् समा० । ऋग्वेदे । सूक्ते न० । तदभिज्ञे त्रि० । तत्पत्न्यां स्त्री० । [अव्रा(वा)ह्निष्ठ ।

बा(वा)ड आप्लावने सक०स्नाने अक० भ्वा० आ० सेट् । बा(वा)डते

बाडव न० वडवानां समूहः अण् । घोटकसमुदाये । बाड-घञ् बल-घञ् लस्य डः वा बाडो वृद्धिः तं वाति वा—क । ब्राह्मणे पु० । बडवायां जातः अण् । और्वे समुद्रस्थे कालाग्निभेदे पु० । बा-डवाग्न्यादयोऽप्यत्र पु० ।

बाडवेय पु० द्वि० बडवायाः अपत्ये—ढक् । अश्विनीकुमारयोः ।

बाड्व्य न० बाड्व+संघे—यत् । विप्रसमुदाये ।

बा(वा)ण पु० बण—शब्दे वण—गतौ वा संज्ञायां कर्त्तरि घञ् । शरे, गोस्तने, (बांट) विरोचनसुते दैत्यभेदे, केवले च । शरपुङ्खे स्त्री० । नीलझिण्ट्याम् पु०स्त्री० । मेदिन्यां दन्तोष्ठ्य वादित्वेन पठितः रायमुकुटादयः बणशब्दे इति धातुप्रकृतिकत्वमाहुरतोऽस्योभयवि-धादित्वम् ।

बा(वा)णलिङ्ग बाणदैत्येन संपूज्याविस्तृष्ट्य नर्मदायां निक्षिप्ते शिवलिङ्गभेदे । [ स्तरो वाचस्पत्ये ।

वाणिज्य न० वणिजो भावः, कर्म वा ब्राह्मणादित्वात् ष्यञ् । क्रय-
विक्रयादौ "वाणिज्येन गतस्य मे व्यष्टपत्"रिति भा० ३प० ।

वाणि(णी) वण-इ णिच्च । वस्त्रादीनां वयनक्रियायाम् । वा ङीप् ।
वस्त्रादीनां वयनक्रियायां, वाक्ये, सरस्वत्याञ्च ।

वा(व)दर पु० स्त्री० ब(व)दर+स्वार्थेऽण् । कार्पासवृक्षे, ब(व)दरस्येदं
तस्य विकारो वा अण् । कार्पासस्त्रले न० । तद्वस्त्रादौ त्रि० ।

बा(वा)दरायण पु० ब(व)दर्य्यां भवः फक् । वेदव्यासे । इञि ।
बा(वा)दरिरप्यत्र ।

बाध पु० बाध-घञ् । प्रतिरोधे । न्यायमते स्वाभाववत्पदार्थे ।
यथा वह्निर्हृदे वह्न्यभाववान् हृदो बाधः । । बाध-कर्त्तरि
अच् । प्रतिबन्धके त्रि० । भावे घञ् । बोधप्रतिबन्धे, पीड़ने, उप-
द्रवे च । [ चण्डि न ह्रस्वः ।

बाध विहतौ भ्वादि०आत्म०सक० सेट् । बाधते अबाधिष्ट ।

बाधक त्रि० बाध-ण्वुल् । प्रतिबन्धके । स्त्रीणां ऋतुकाले प्रजा जन-
नशक्तिप्रतिरोधके रोगभेदे पु० ।

बाधिर्य्य न० बधिरस्य भावः ब्राह्मणादित्वात् ष्यञ् । श्रवणशक्तिरा-
हित्ये रोगभेदे । [ अपत्ये ।

बान्धकिनेय पु० स्त्री० बन्धक्याः अपत्यं ढक् इनङ् च । असत्या

बान्धव पु० बन्धु+स्वार्थे वाऽण् । बन्धुशब्दार्थे, पितृमातृसम्बन्धिनि
मातुलादौ च ।

बाल पु० न० (बाला) गन्धद्रव्यभेदे । मूर्खे, शिशौ च त्रि० । केशे पु० ।
अर्श आदित्वादस्त्यर्थे अच् । अश्वशिशौ, अश्वबालधौ, हस्तिबा-
लधौ, नारिकेले, पशुपुच्छे च पु० ।

बालक बाल+स्वार्थे कन् । शिशौ, (बाला) गन्धद्रव्ये च अङ्गुरीयके
न० । अश्वकरिपुच्छयोः, वलये च पु० । [ लवया) कदल्याञ्च ।

बालकप्रिया स्त्री० बालकं प्रीणाति प्री-क । इन्द्रवारुण्यां (राखा-

ब(वा)ल(लि)खिल्य पु० अङ्गुष्ठपर्वमितेषु षष्टिसहस्रेषु एषु एतत्सङ्क-
न्यायां क्रतोः पुत्रेषु मुनिभेदेषु ।

**बालग्रह** पु० इत० बालानां पीडके उपग्रहभेदे "बालग्रहाभिभूतानां बालानां शान्तिकारक"मिति चण्डी ।

**बालतनय** पु० बालास्तनया इव पत्राण्यस्य । खदिरे बालदलबालि-पत्रादयोऽप्यत्र पु० ।

**बालधि** पु० बाला धीयन्तेऽत्र धा—कि । केशयुक्तलाङ्गूले ।

**बालपुष्पी** स्त्री० बालानि क्षुद्राणि पुष्पाण्यस्याः ङीप् ।

यूथिकायाम् । स्वार्थे कन् । तत्रैव ।

**बालभोज्य** पु० इत० । चणके । बालकभक्षणीये त्रि० ।

**बालमूषिका** स्त्री० कर्म० । क्षुद्रमूषिकायाम् । [इति कुमारः ।

**बालव्यजन** न० बाला एव व्यजनम् । चामरे । 'कुर्वन्ति बालव्यजनैश्चमर्यः'

**बालहस्त** पु० बालानां केशानां समूहः बाल+हस्त । केशसमूहे ।

बाला हस्तइव यत्र । पशूनां लाङ्गूले ।

**बाला** स्त्री० बालाः केशाकाराः पदार्थाः सन्त्यस्य अच् । नारिकेले, हरिद्रायां मल्लिकाभेदे, वलये, त्रुटौ एलकुमार्य्यां (बाला) गन्ध-द्रव्यभेदे, अम्बष्ठायां, नीलझिण्टायाम्, षोडशवर्षीयायां स्त्रियां, कन्यायाञ्च । स्वार्थे कन् । तत्रैव बालुकायां, कर्णभूषणे (कान-बाला) एलायाञ्च । [प्यत्र ।

**बालि** पु० बल—इञ् णिच्च । इन्द्रपुत्रे कपिराजे । णिनि । बालीत्य-

**बालिश** त्रि० बाड-इन् बाडिं वृद्धिं श्यति शो—क डस्य लः । मूर्खे, "शिशौ च बालिशमाहि ! शयान"मित्युद्भटः । बालाः सन्त्यस्य इनि बाली मूर्द्धा शेतेऽत्र शी-ड । उपधाने न० । [न्तादयोऽप्यत्र पु० ।

**बालिहन्** पु० बालिं बालिनं वा हन्ति हन—क्विप् । रामे बालिह-

**बालु** पु० बल—उण् । एलबालुकनामगन्धद्रव्ये । स्वार्थे कन् । तत्रैव न० । पानीयामलके पु० । सिकतासु स्त्री० ।

**बालुकायन्त्र** न० इत० । औषधपाकार्थे यन्त्रभेदे । [बालुकीत्यप्यत्र

**बालुकी** स्त्री० पु०बल-उक गौरा० ङीप् । कर्कटीभेदे । इ० तुका

**बालेय** पु० बलेरपत्यं, बलये हितं वा ढक् । रासभे, दैत्यभेदे, अ-ङ्गारवल्लर्य्यां च । कोमले, बलिहिते च त्रि० ।

बालेयशाक पु० बलये हितः ढक् कर्म० (वामनहाटि) शाकभेदे ।

बालिष्ट पु० बालानामिष्टः इष–क्त । ब(व)दरे । बालकाभीष्टे त्रि०।

बाल्य न० बालस्य भावः, कर्म वा वयोवचनत्वात् ष्यञ् । "आषोड़-शाद्भवेद्बाल" इत्युक्ते अवस्थाभेदे ।

बाष्प(स्प) पु० बाध–ष्ट० पत्वं सत्वं वा । नेत्रजले ऊष्मणि च ।

बा(वा)ह प्रयत्ने भ्वादि० आत्म० अक० सेट् । बाहते अबाहिष्ट । चङि न ह्रस्वः ।

बाहु पु० बाध–कु धस्य हः । भुजे कक्षावध्यङ्गुलिपर्य्यन्तेऽवयवे ।

बाहुज पु० बाहुभ्यां ब्र(ब्र)ह्मबाहुभ्यां जायते जन–ड । क्षत्रिये "बाहू राजन्याः" इति श्रुतिः ।

बाहुत्र पु० न० बाहुं त्रायते त्रै–क । अस्त्राघातवारणार्थं हस्तबद्धे लौहचर्म्मादौ ।

बाहुदा स्त्री० (करतोया) नदीभेदे । सा हि अवगाहनात् लिखितस्य मुनेः छिन्नहस्तं पुनर्ददाविति पुराणम् ।

बाहुमूल न० ६त० । कक्षे (कांक) ।

बाहुयुद्ध न० ३त० । मल्लयुद्धे ।

बाहुल पु० बहुलानां कृत्तिकानामयं (स्वामी) अण् वह्नौ । बहुला-भि-र्युक्ता पौर्णमासी अण् । कार्त्तिकपौर्णमास्यां स्त्री० । तद्युक्ते मासे पुनरण् । चान्द्रकार्त्तिकमासे पु० ।

बाहुलेय पु० ब(व)हुलानामपत्यं ढक् । कार्त्तिकेये ।

बि(वि)ट आक्रोशे भ्वा० पर० सक० सेट् । बे(वे)टति अबे(वे)टीत् ।

बिद अवयवे भ्वा० पर० सक० सेट् इदित् । बिन्दति अबिन्दीत् ।

बि(वि)न्दु पु० बिदि–उ बिद उ नि० वा । अल्पेऽंशे ।

बिल भेदने वा चुरा० उभ० पक्षे तु० पर० सक० सेट् । बेलयति ते बिलति । अबीबिलत् त अबेलीत् ।

बिस क्षेपे दि० पर० सक० सेट् । बिस्यति अबिसत्–अबेसीत् ।

बीभत्स त्रि० बध–निन्दायां स्वार्थे सन् कर्म्मणि घञ् । पापिनि, जुगुप्सिते, घृणाविषये च । नाट्यादौ प्रसिद्धे जुगुप्सास्थायिभावके

रसभेदे, अर्ज्जुने च पु० । तद्रसविषये विकृतमांसादौ त्रि० । स ।
बीभत्सुः । अर्ज्जुने पु० ।

बुक्क कुक्कुरादिशब्दे कथने च वा चु० उभ० पक्षे भ्वा० पर० सक०
सेट् । बुक्कयति ते बुक्कति अबुबुक्कत् त अबुक्कीत् ।

बुक्क न० बुक्क–अच् । हृदयस्थे मांसपिण्डे, अग्रमांसे, हृदये च
अस्य स्त्रीत्वमपि स्त्रीत्वे टाप् गौ० ङीप् वा । बुक्काधातैर्युवति-
निकटे प्रौढ़वाक्येन राधे"त्युद्भटः । छागे, (बोका) समये, च पु०।
शोणिते स्त्री० टाप् । ष्ठ० । बूक्कबूक्क अपि हृदये ।

बुक्काग्रमांस न० ६ त० । हृदयस्थे मांसपिण्डाकारे अग्रमांसे ।

बुट हिंसायां चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् । बोटयति
ते । बोटति । अबुबुटत्-त । अबोटीत् ।

बुड त्यागे सम्वरणे च तु० कुटा०सक० सेट् । बुडति अबुडीत् ।

बुद निशामने भ्वा० उ० सक० सेट् । बोदति ते । अबुदत्-अबोदीत्
अबोदिष्ट । क्ता वेट् । [जागरिते, ज्ञातवति च त्रि०।

बुद्ध पु० बुध–क्त । भगवतोऽवतारभेदे येन वेदतत्कर्मणोर्निन्दाकृता ।

बुद्धि स्त्री० बुध–क्तिन् । ज्ञाने, साङ्ख्योक्ते सुखदुःखाद्यष्टविधधर्मवति
प्रकृतिपरिणामभेदे, अन्तःकरणविशेषे, वेदान्तोक्ते निश्चयात्मकवृत्ति-
मति अन्तःकरणे च ।

बुद्धीन्द्रिय न० ६ त० । 'मनः कर्णौ तथा नेत्रे रसना त्वक् च ।
नासिके । बुद्धीन्द्रियमिति प्रोक्तमि"त्युक्तेषु इन्द्रियेषु ।

बुद्बुद न० बुद्-क० ष्ठ० द्वित्वम् । जलस्य गोलाकारे विकारभेदे ।

बुध ज्ञापने भ्वा० प० सक० अनिट् । बोधति अबौत्सात् शिष्यं गुरुः

बुध ज्ञाने भ्वा० उभ० सक० सेट् । बोधति ते । अबुधत्–अबोधीत् ।
अबोधि अबोधिष्ट । ज्वला० वा ण पक्षे क । बोधः बुधः ।

बुध ज्ञाने दि० आ० सक० अनिट् । बुध्यते अबोधि अबोधिष्ट ।

बुध पु० बुध–क । पण्डिते, बृहस्पतिभार्य्यायां तारायां चन्द्रेण जनिते
पुत्रे ग्रहभेदे, तस्य रौहिण्या प्रतिपालनात् रौहिणेयत्वम् ।

बुधरत्न न० बुधप्रियं रत्नं शाक० । मरकतमणौ ।

**बुधा** स्त्री० बोधति ज्ञापयति रोगिणं बुध-ज्ञापने क । जटामांस्याम्
**बुधाष्टमी** स्त्री० बुधवारयुताष्टमी शाक० । चैत्रपौषकरिशयनादितरत्र
काले बुधवारयुतायां शुक्लपक्षाष्टम्यां, तत्कर्त्तव्ये व्रते च ।
**बुधित** त्रि० भ्वा० उभ० बुध-क्त इट् । ज्ञाते ।
**बुध्न** न० बन्ध-नक् नलोपः बुधादेशश्च । वृक्षमूले, मूलमात्रे च पृथु-
बुध्नोदराकृतिरिति घटविशेषणं शास्त्रेयुक्तम् ।
**बुन्द** निशामने भ्वा० उभ० सक० सेट् । बुन्दति ते । अबुदत् अबु-
न्दीत् । अबुन्दिष्ट । क्त्वा वेट् । [अबुन्धीत् अबुन्धिष्ट ।
**बुन्ध** निशामने भ्वा उभ० सक० सेट् क्त्वा वेट् । बुन्धति ते अबुधत्-
**बुन्ध** बन्धे चु० उभ० सक० सेट् । बुन्धयति ते अबुबुन्धत् त ।
**बुभुक्षा** स्त्री० भुज-सन्-अ । भोजनेच्छायां क्षुधायाम् ।
**बुभुक्षित** त्रि० बुभुक्षा+तार० इतच् । क्षुधायुक्ते 'बुभुक्षितः किं
द्विकरेण भुङ्क्ते" इत्युद्भटः ।
**बुल** मज्जने चु० उभ० अक० सेट् । बोलयति ते अबूबुलत् ।
**बुष(स)** न० बुस्यते उत्सृज्यते बुस-उत्सर्गे क पु० वा सत्वम् । (आ-
गड़ा) तुच्छधान्ये फलरहितधान्ये ।
**बुस** उत्सर्गे दि० पर० सक० सेट् । बुस्यति अबुसत्-अबोसीत् ।
**बुस्त** आदरे अनादरे च चु० उभ० सक० सेट् । बुस्तयति ते अबुबु-
स्तत् त । [त्याज्ये अंशे, (भुषि) मांसपिष्टकभेदे च
**बुस्त** न० बुस्त्यते नाद्रियते आद्रियते वा बुस्त-घञ् । पनसादि फलस्य
**बृ** हत्यां भृतौ च क्र्या० प्वा० पर० सक० सेट् । बृणाति अबारीत् ।
**बे(वे)हृ** प्रयत्ने भ्वा० आत्मने सक० अनिट् । बे(वे)हते अबे(वे)हिष्ट
चङि न ह्रस्वः ।
**बोध** पु० बुध-घञ् । ज्ञाने, जागरणे च । ज्वलादि-बुध-ण । ज्ञान-
वति त्रि० । ण्वुल् । बोधकोऽप्यत्र त्रि० । णिच् ण्वुल् सूचके त्रि०
**बोधकर** पु० बोधं निशान्ते जागरणं करोति कृ-अच् । निशान्ते
प्रबोधकरे वैतालिके । ज्ञापके त्रि० ।
**बोधन** न० बुध-णिच्-ल्युट् । विज्ञापने, कालत्रयात् गन्धादेर्न्यूनतायां

तदुद्दीपने, जागरणे च । 'शयनं बोधनं हरे'रिति पुराणम् । "सायाह्ने बोधनं कुर्य्या"दिति स्मृतिः ।

**बोधनी** स्त्री० बोध्यतेऽनया, अत्र वा बुध-णिच्-ल्युट् । पिप्पल्यां तया हि मूर्च्छितो बोध्यते । कार्त्तिकैकादश्यां तत्र हि हरेर्बोधनम् ।

**बोधि** पु० बुध-इन् । अश्वत्थवृक्षे, समाधिभेदे च । ज्ञातरि त्रि० ।

**बोधितरु** पु० कर्म० । अश्वत्थवृक्षे । बोधिद्रुमादयोऽप्यत्र पु० ।

**बौद्ध** न० बुद्धेन प्रोक्तमणु । बुद्धप्रणीते निरीश्वरवादे शास्त्रे । तदधीयते इति पुराणम् । बौद्धागमाध्येतरि त्रि० ।

**ब्युष** उत्सर्गे विभागे च चु०उ०सक०सेट् । व्योषयति-ते अबुव्युषत्-त

**ब्रूण** शब्दे भ्वा० पर० सक० सेट् । ब्रणति । अब्रणीत्-अब्राणीत् ।

**ब्र(व्र)तति** स्त्री० प्रतनोति प्र+तन-क्तिच् पृ० पस्य वः लतायाम् प्रतमिव करोतीति णिच् अति । दन्त्योष्ठ्यादित्वमपि ।

**ब्र(व्र)ध्न** पु० बन्ध-नक् ब्रधादेशः । सूर्य्ये, अर्कवृक्षे, शिवे, वृक्षमूले च । मेदिनीकरेण दन्त्योष्ठ्यादित्वेन लिखनात्तथात्वमपि तन्मूलं मृग्यम् ।

**ब्र(व्र)ह्मकूर्च्च** न० "अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः । पञ्चगव्यं पिबेत् प्रातः ब्र(व्र)ह्मकूर्च्चमिति स्मृत"मित्युक्ते व्रतभेदे ।

**ब्रह्मकोशी** स्त्री० ब्र(व)ह्मणः कोशीव । अजमोदायाम् ।

**ब्र(व्र)ह्मचर्य्य** न० ब्र(व)ह्मणे वेदलाभाय चर्य्यते चर-यत् । वेदग्रहणार्थमुपनयनोत्तरमाश्रमे, मैथुनराहित्ये च ।

**ब्र(व्र)ह्मचारिणी** स्त्री० ब्र(व)ह्म चर्य्यतेऽनया चर-णिच् करणे ल्युट्-ङीप् ईत० । ब्र(व्र)ह्मयष्ट्यां भार्ग्याम् ।

**ब्र(व्र)ह्मचारिन्** ब्र(व)ह्मणे वेदाय तद्ग्रहणाय चरति चर-णिनि । उपनयनानन्तर प्रथमाश्रमयुक्तेषु विप्रादिषु त्रिषु वर्णेषु, कदम्बवृक्षे, मैथुनराहित्यादि ब्र(व)ह्मचर्य्यव्रतधारिण्यां स्त्रियां च स्त्री० ङीप् । "आसीतामरणात् क्षान्ता नियता ब्र(व्र)ह्मचारिणी"ति स्मृतिः ।

**ब्र(व्र)ह्मजटा** स्त्री० ब्र(व्र)ह्मणो जटेव संहतशाखत्वात् । दमनकवृक्षे ।

ब्र(ब्र)ह्मज्ञ त्रि० ब्र(ब्र)ह्म वेदं, तुरीयं शुद्धचैतन्यं वा जानाति वेत्ति ज्ञा-क। वेदज्ञे, तुरीयशुद्धचैतन्यज्ञे च। [विस्तरो वाचस्पत्ये।

ब्रह्मज्ञान न० ६त०। त्रिगुणावच्छिन्नातीततुरीयशुद्धचैतन्यविषयज्ञाने

ब्र(ब्र)ह्मण्य न० ब्र(ब्र)ह्मणे वेदाय प्रभवति शुद्धचैतन्यज्ञानाय वा साधु ब्र(ब्र)ह्मणोहितो वा यत्। विप्रवेदरक्षणकर्त्तरि विष्णौ, "नमो ब्रह्मण्यदेवाये"ति विष्णुप्रणाममन्त्रः। विप्रधर्मे ब्र(ब्र)ह्मदारुवृक्षे च

ब्र(ब्र)ह्मतीर्थ न० ६त०। पुष्करतीर्थे, पुष्करमूले च।

ब्र(ब्र)ह्मत्व न० ब्र(ब्र)ह्मणो भावः त्व। ऋत्विग्विशेषस्य ब्र(ब्र)ह्मणो धर्मे, शुद्धतुरीयब्र(ब्र)ह्मभावे च।

ब्र(ब्र)ह्मदण्ड पु० ६त० विप्रकृते अभिशापरूपे दण्डने ब्र(ब्र)ह्म दण्डहता नरे त्येति स्मृतिः। विप्रस्य यष्टौ च।

ब्र(ब्र)ह्मदर्भा स्त्री० ब्र(ब्र)ह्मणो दर्भो यस्याः यमान्याम्।

ब्र(ब्र)ह्मदाय पु० ब्र(ब्र)ह्म(णे) वा वेदाध्ययनसमाप्तौ, विप्राय वा दाता दीयते दा कर्मणि घञ्। समावर्त्तविप्राय देये धने "ब्र(ब्र)ह्मदायागतां भूमिं हरेयुर्ब्रा(ब्रा)ह्मणसूनवः" इति स्मृतिः।

ब्र(ब्र)ह्मदारु पु० ब्र(ब्र)ह्मणो विप्रस्य हितः दारु अश्वत्थाकारे वृक्षभेदे।

ब्र(ब्र)ह्मन् न० वृह-मनिन् वृंहेर्नोऽच्चे ति नकारस्याकारे रत्वम्। वेदे, तपसि, सत्ये, तत्त्वे, यथार्थे, तुरीये सर्वगुणातीते विशुद्धचित्स्वरूपे च। हिरण्यगर्भे विधौ ऋत्विग्विशेषे च पु०। उज्ज्वलदत्तेन दन्त्योष्ठ्यादित्वमेव साधितम् मेदिनीकरेण ओष्ठ्यादित्वेन कीर्त्तनात्तथात्वमपि किन्तु तन्मूलं मृग्यम्।

ब्र(ब्र)ह्मनाल न० काश्यां मणिकर्णिकासमीपस्थे तीर्थभेदे।

ब्र(ब्र)ह्मनिर्वाण न० ब्र(ब्र)ह्मणि निर्वाणं निर्वृतिः। ब्र(ब्र)ह्मभावलाभे सकलानर्थनिवृत्तिरूपे परमानन्दे।

ब्र(ब्र)ह्मपर्णी स्त्री० ब्र(ब्र)ह्मेव विस्तीर्णं मूलादारभ्य स्थितानि पर्णान्यस्याः ङीप्। पृश्निपर्ण्याम्।

ब(व्र)ह्मपवित्र पु० ब(व्र)ह्मेव वेदोक्तकर्मणि वा पवित्रः । कुशे ।

ब(व्र)ह्मपादप पु० ब(व्र)ह्मणः प्रियः वैदिककर्मयोग्यत्वात् विप्रब(व्र)ह्मचारिधार्य्यदण्डार्थत्वाद्वा । पलाशवृक्षे ।

ब(व्र)ह्मपुत्र पु० ब(व्र)ह्मणः पुत्र इव कपिलवर्णत्वात् । विषभेदे, उत्तरदेशप्रसिद्धे नदभेदे, क्षेत्रभेदे च । सरस्वत्यां नद्यां स्त्री० । तस्याः पितामहजातत्वं पुराणप्रसिद्धम् ।

ब(व्र)ह्मपुरी स्त्री० ६त० ब्रह्मोपासनास्थाने हृदये, तदाधारस्थाने सत्यलोके, काश्याञ्च ।

ब(व्र)ह्मबन्धु पु० ब(व्र)ह्मा विप्रो बन्धुरुत्पादको यस्य । विप्राचाररहिते निन्द्यकर्मकारिणि जात्या विप्रे, विप्रतुल्ये भट्टादौ च ।

ब(व्र)ह्मभूय न० ब्रह्मणो भावः भू-क्यप् । ब(व्र)ह्मभावे तत्सायुज्ये च ।

ब(व्र)ह्मयज्ञ पु० ब(व्र)ह्मनिमित्तकस्तदध्ययनतदध्यापनानिमित्तको यज्ञः । वेदाध्ययनाध्यापनादौ । [इज्ये ।

ब(व्र)ह्मयष्टि स्त्री० ब(व्र)ह्मणो यष्टिरियालम्बनत्वात् (वामनहाटि)

ब(व्र)ह्मरन्ध्र न० ६त० उत्तमाङ्गस्थिते ब्रह्मप्राप्तिहेतुके छिद्रस्थाने । तच्छिद्रेण निष्क्रमणे हि जीवस्य ब(व्र)ह्मप्राप्तिः श्रूयते

ब(व्र)ह्मराक्षस पु० ब(व्र)ह्मा विप्रोऽपि क्रूरकर्मभिः राक्षसः । राक्षसरूपतां प्राप्ते भूतभेदे "अपहृत्य च विप्रस्वं भवति ब(व्र)ह्मराक्षसः" इति मनुः ।

ब(व्र)ह्मर्षि पु० ब(व्र)ह्मा विप्रः चतुर्मुखतुल्यो वा ऋषिः वेदस्य स्रष्टा । वेदस्रष्टृषु वशिष्ठादिषु ऋषिषु ।

ब(व्र)ह्मर्षिदेश पु० ६त० । "कुरुक्षेत्रञ्च मत्स्याश्च पाञ्चालाः शूरसेनकाः । एष ब(व्र)ह्मर्षिदेशो वै" इति मनूक्ते, कुरुक्षेत्रादिदेशचतुष्टये ।

ब(व्र)ह्मलोक पु० ६त० । ब्रह्माधिष्ठाने भुवने सत्यलोके तुरीय ब(व्र)ह्मस्वरूपे च ।

ब(व्र)ह्मवर्चस न० ब(व्र)ह्मणा वेदाध्ययनेन तदनुष्ठानेन च कृतं वर्चः तेजः अच् समा० । वेदाध्ययनजन्ये तेजसि ब(व्र)ह्मवर्चसकामस्य कार्य्यो विप्रस्य पञ्चमे" इति मनुः ।

ब्र(ब्र)ह्मवादिन् पु० ब्र(ब्र)ह्म वेदं वदति पठति णिनि । वेदपाठके ब्र(ब्र)ह्म शुद्धं चैतन्यं सर्वात्मकतया वदति वेत्ति वा वेदान्तप्रतिपाद्य-सर्वात्मकब्र(ब्र)ह्मत्वे शुद्धचैतन्यं वदति बोधयति ब्र(ब्र)ह्मबोधके शास्त्रे

ब्र(ब्र)ह्मविद्या स्त्री० ६त० शुद्धचैतन्यात्मकस्य ब्रह्मणोऽभेदेन ज्ञाने ।

ब्र(ब्र)ह्मवि(बि)न्दु पु० ब्र(ब्र)ह्मणि वेदपाठकाले (बि)विन्दुः । वेदा-ध्ययनकाले निःसृतजल(बि)विन्दौ ।

ब्र(ब्र)ह्मवैवर्त्त न० अष्टादशमहापुराणमध्ये अष्टादशसहस्र संख्ये पुराणभेदे ।

ब्र(ब्र)ह्मशल्य पु० ब्र(ब्र)ह्मेव सूक्ष्मं शल्यं कण्टकाग्रं यस्य । (बाबला) वृक्षभेदे ।

ब्र(ब्र)ह्मसंहिता स्त्री० वैष्णवाचारसिद्धान्ते अध्यायशतात्मके ग्रन्थभेदे ।

ब्रह्मसायुज्य न० सह युनक्ति युज-क्विप् सयुक् तस्य भावः सायुज्यं न० ब्र(ब्र)ह्मभावे ।

ब्र(ब्र)ह्मसू पु० ब्र(ब्र)ह्माणं सूतवान् सू-क्विप् । चतुर्व्यूहात्मकस्य विष्णो-र्मूर्त्तिभेदे अनिरुद्धे, तस्यावतारभेदे उषापतौ च ।

ब्र(ब्र)ह्मसूत्र न० ब्र(ब्र)ह्मणि वेदग्रहणकाले उचितं सूत्रम् । यज्ञोप-वीते, ब्रह्मप्रतिपादके शारीरकसूत्रे च ।

ब्रह्महत्या स्त्री० हन-क्यप् ६त० । विप्रहनने ।

ब्र(ब्र)ह्महन् त्रि० ब्र(ब्र)ह्माणं हतवान् हन-क्विप् । विप्रहत्याकारिणि । "ब्र(ब्र)ह्महा न भवत्यन्यो ब्र(ब्र)ह्महा वृषलीपतिः । यस्तस्यामा-श्रितोगर्भः स तेन ब्रा(ब्रा)ह्मणो हत" इत्युक्ते वृषलीपतौ, "उत्पन्नतजिह्वाक जीवेतिशाङ्कुलिध्वनिः । गुरोरपि च कर्त्तव्य-मन्यथा "ब्रह्महा" भवेदित्यादिस्मृत्युक्तातिदेशिकब्र(ब्र)ह्महत्या-पापयुक्ते च पु०।

ब्र(ब्र)ह्महुत न० ब्र(ब्र)ह्मणे विप्राय अतिथये हुतं दत्तम् । नित्य-गृहस्थकर्त्तव्यपञ्चयज्ञान्तर्गतेऽतिथिपूजनरूपे यज्ञभेदे ।

ब्र(ब्र)ह्माञ्जलि पु० ब्र(ब्र)ह्मणे वेदपाठाय अञ्जलिः गुरौ विनयाञ्जलिः, स्वरविशेषज्ञापनार्थं वा अञ्जलिः संकुचितपाणिः । वेदपाठार्थं

गुरुनिकटे कार्य्ये विनयाञ्जलौ, स्वरविशेषार्थज्ञापनाय कृतसङ्कोचे पाणिद्वये च ।

ब्रह्माणी पु० ब(ब्र)ह्माणम् आनयति जीवयति अन–णिच्–अण् पूर्व० णत्वम् । ब्रह्मशक्तौ "हंसयुक्ते विमानेस्था साक्षसूत्रकमण्डलुः । आयाता ब(ब्र)ह्मणः शक्तिः ब(ब्र)ह्माणी साभिधीयते" इति चण्डी । "ब्रह्माणी ब(ब्र)ह्मजननादि"ति पुराणम् । ब्रह्मशब्दात् ङीप् आतङ् चेति त्वपाणिनीयम् ।

ब(ब्र)ह्माण्ड न० ६ त० । "तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् यज्ञे स्वयं ब(ब्र)ह्मा सर्वलोकपितामहः" इति मनूक्ते ब(ब्र)ह्मण उत्पादके अण्डाकारे भुवनकोषे "ब(ब्र)ह्माण्डभाण्डोदरभ्राम्यत्पिण्डितचण्डिमेति वीरचरितम् । तत्प्रमाणस्वरूपादिकं तु वाचस्पत्ये वक्ष्यते ।

ब(ब्र)ह्मावर्त्त पु० "सरस्वतीदृशद्वत्योर्देवनद्योर्यदन्तरम् । तं देवनिर्मितं देशं ब(ब्र)ह्मावर्त्तं प्रचक्षते" इति मनूक्ते देशभेदे ।

ब(ब्र)ह्मासन न० ब(ब्र)ह्मणोध्यानार्थमासनम् । ईश्वरध्यानार्थे आसने स्वस्तिकपद्मासनादौ ।

ब(ब्र)ह्मी स्त्री० ब्रह्मण इयम् अण् टिलोपः ङीप् पृ० न दीर्घः । (वामनहाटी) शाकभेदे ।

ब(ब्र)ह्मीघृत न० मेधास्वरबलादिकारके घृतभेदे विस्तरो वाचस्पत्ये ।

ब(ब्र)ह्मोपनेतृ पु० ब(ब्र)ह्माणं विप्रमुपनयते तद्धेतुदण्डहेतुत्वात् उप-नी–तृच् । पलाशवृक्षे विप्रस्य पालाशो दण्ड" इति स्मृतिः ।

ब्रा(ब्रा)ह्म न० ब्रह्मण इदम्, तेन प्रोक्तम् वा अण् टिलोपः । अङ्गुष्ठमूले तीर्थे, तेन हि तीर्थेन द्विजाचमनं विहितमिति तस्य तत्सम्बन्धित्वम् "प्राश्य ब्रा(ब्रा)ह्मेण तीर्थेन द्विजो नित्यमुपस्पृशे"दिति स्मृतिः । ब(ब्र)ह्मणोक्ते अष्टादशपुराणान्तर्गते पुराणभेदे च । विवाहभेदे, पारदे च पु० । सरस्वत्यां, सोमलतायां, ब्राह्मीशाके (वामनहाटी) शाकभेदे च स्त्री० "आहृत्यानां गुरुकुलात् विप्राणां पूजको भवेत् । नृपाणामक्षयो ह्येष ब्रा(ब्रा)ह्मो धर्मो विधीयते

इति मनूक्ते राज्ञां धर्मभेदे पु० । मातृभेदे स्त्री० ङीप् । ब्रा(ब्रा)ह्मी नारायणी तथेति तन्त्रम् ।

**ब्रा(ब्रा)ह्मण** पु० ब्र(ब्र)ह्म वेदं शुद्धं चैतन्यं वा वेत्त्यधीते वा अण् ब्र(ब्र)ह्मणो जाताविति न टिलोपः । ब्रह्मणो मुखजातत्वात् ब्रह्मणोऽपत्यम् अण् तेन न टिलोपः । विप्रे जातिभेदे । शूद्रायां स्त्री० । 'ब्र(ब्र)ह्म जानाति ब्राह्मण' इत्युक्ते परब्र(ब्र)ह्मज्ञे त्रि० । स्त्रियां ङीप् तत्पत्न्यां स्त्री० ङीप् ।

**ब्रा(ब्र)ह्मणब्रुव** पु० ब्रा(ब्रा)ह्मणं जातिमात्रेणात्मानं ब्रूते । 'विप्रसंस्कारयुक्तोऽपि नित्यं सन्ध्यादिकञ्च यः । नैमित्तिकं च नो कुर्य्यात् ब्रा(ब्र)ह्मणब्रुव उच्यते' इत्युक्ते कदाचारवति विप्रे ।

**ब्रा(ब्रा)ह्मणयष्टि** स्त्री० ६त०। वा ङीप् (वामनहाटी) वृक्षभेदे स्वार्थे कन् । अत्रैव विप्रदण्डे च । [ब्राह्मणधर्मे विप्रत्वे च

**ब्रा(ब्रा)ह्मण्य** न० ब्रा(ब्रा)ह्मणानां समूहः भावो वा ष्यञ् विप्रसमूहे

**ब्रा(ब्रा)ह्ममुहूर्त्त** पु० ब्र(ब्र)ह्मा देवतास्य अण् टिलोपः कर्म० । अरुणोदयात् प्राग्वर्त्तिनि 'रात्रेश्च पश्चिमे यामे मुहूर्त्तो ब्रा(ब्रा)ह्म उच्यते' इत्युक्ते दण्डद्वयात्मके काले ।

**ब्रा(ब्रा)ह्मीकन्द** पु० ६त० । ब्रा(ब्रा)ह्मा इव कन्दो यस्य । वाराहीकन्दे । अब्रोचत

**ब्रू** कथने अदा० उभ० द्विक० सेट् । ब्रवीति—आह ब्रूते । अब्रोचत्

## भ

**भ** न० भा—क । नक्षत्रे, मेषादिराशौ, ग्रहे च । शुक्राचार्य्ये पु० । भण—ड । भ्रमरे, भ्रान्तौ । छन्दोग्रन्थोक्ते आदिगुरुके अन्त्यौ यान्त्यलघुयुक्ते वर्णत्रिके च पु० ।

**भक्त** पु०न० भज-क्त । अन्ने ओदने । भक्तियुक्ते तदात्मके, विभक्ते च त्रि० ।

**भक्तदास** पु० भक्तेन अन्नमात्रलाभेन दासः स्वीकृतदासभावः । सप्तदशदासान्तर्गते दासभेदे । "भक्तदासश्च विज्ञेय" इति स्मृतिः ।

**भक्तमण्ड** पु०न० ह्रत० । भक्तस्य निस्रावे (माड) ।

**भक्ति** स्त्री० भज–क्तिन् । सेवायाम् आराधनायां तदेकाग्रचित्तवृत्तिभेदे, विभागे, गौण्यां वृत्तौ, उपचारे, अवयवे, भङ्ग्याम्, श्रद्धायाम्, रचनायाञ्च, "भवति विरलभक्ति"रिति रघुः ।

**भक्तियोग** पु० भक्तिरेव योगः एकाग्रचित्तवृत्तिभेदः । तदेकाग्रचित्तता रूपे योगे ।

**भक्तिरस** पु० भक्तिरेव रस आस्वाद्य । भक्तिरूपे ध्येयानुभवात्मके रतिभेदे ।

**भक्ष** अदने चु० उभ० सक० सेट् । भक्षयति ते अबभक्षत्-त आदित्-मपीत्येके भक्षति अभक्षीत् । [ जीविनि आपूपिके ।

**भक्ष्यकार** पु०त्रि० भक्ष्यं करोति कृ–अण् । भक्ष्यपिष्टकादिविक्रयोप-

**भक्ष्यपत्त्र** स्त्री० भक्ष्यं पत्त्रं यस्याः । ताम्बूल्याम् ।

**भक्ष्यालाबू** स्त्री० कर्म० । राजालाब्वाम् ।

**भग** पु०न० भज–घ । सूर्ये, अणिमाद्यष्टविधैश्वर्ये, वीर्ये, यशसि, श्रियां, ज्ञाने, वैराग्ये, योनौ, इच्छायाम् माहात्म्ये, यत्ने, धर्मे, मोक्षे, सौभाग्ये, कान्तौ चन्द्रे च । ज्योतिषोक्ते योनिनक्षत्रदैवते पूर्वफल्गुनीनक्षत्रे गुह्यमुष्कयोर्मध्यस्थाने च पु० ।

**भगदत्त** पु० महाभारतप्रसिद्धे कामरूपदेशाधिपे नृपभेदे ।

**भगन्दर** पु० भगं गुह्यमुष्कमध्यस्थानं दारयति दृ–खच् मुम् च । स्वनामख्याते रोगभेदे ।

**भगवत्** त्रि० भगं "ऐश्वर्यस्य समग्रस्य, वीर्यस्य, यशसः, श्रियः ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गनेत्युक्तम् ऐश्वर्यादि अस्त्यस्य मतुप् मस्य वः । ऐश्वर्यादियुक्ते परमेश्वरे, दुर्गायां स्त्री० ङीप् । "भगवत्या कृतं सर्व्वमि"ति चण्डी ।

**भगाङ्कुर** पु० भगे गुह्यस्थानेऽङ्कुर इव । अर्शोरोगे ।

**भगिनी** स्त्री० भगं यत्नः पित्रादितो द्रव्यादानेऽस्त्यस्याः इनि । सोदरायाम् स्वसरि ।

**भगीरथ** पु० सूर्य्यवंश्ये दिलीपराजपुत्रे नृपभेदे । येन गङ्गाभूमितलमवतारिता ।

**भग्न** त्रि० भन्ज–क्त। पराजिते, खण्डिते च भग्नं "भग्नं धनुर्यै-
रुपहृतमि"ति नाटकम्।

**भग्नप्रक्रम** पु० भग्नः प्रक्रमो यत्र। अलङ्कारोक्ते काव्यदोषभेदे।

**भङ्ग** पु० भन्ज+घञ्। पराजये, खण्डे, भेदे, तरङ्गे, कौटिल्ये,
भये, पत्ररचनाभेदे, गमने, जलनिर्गमे च। मातुल्याम्, शणाख्ये
शस्ये, त्रिवृत्तायां (तेउडी) विजयायाञ्च (भाङ्) स्त्री०।

**भ(ङ्गि ङ्गी)** स्त्री० भन्ज–इन् पु०कृत्वम् वा ङीप्। विच्छेदे, कौटिल्ये
विन्यासे, कल्लोले, भेदे, व्याजे च।

**भङ्गुर** त्रि० भन्ज–घुरच्। कुटिले, खय भङ्गनशीले, नदीनां वक्रे
च। प्रियङ्गौ, अतिविषायाम् च (आतइच्) स्त्री०।

**भङ्ग्य** न० भङ्गानां भवनं क्षेत्रं यत्। भङ्गाभवनयोग्ये क्षेत्रे।

**भज** भागे सेवायाञ्च भ्वा० उभ० सक० अनिट्। भजति ते अभाक्षीत्।
भेजतुः भेजे।

**भज** पाके दाने च चु०उभ०सक० सेट्। भाजयति-ते अबीभजत्-त।

**भञ्ज** दीप्तौ चु० उभ० अक० सेट् इदित्। भञ्जयति-ते अबभञ्जत्-त।

**भजमान** त्रि० भज–शानच्। न्यायागतद्रव्यादौ, विभाजके, सेवके च

**भट** पोषणे भ्वा०पर०सक०सेट् भटति। अभाटीत्–अभटीत्। भाषणे-
ऽप्य घटा०। णिचि भटयति।

**भट** पु० भट-अच्। योद्धरि, "बङ्गटधातुरीतुरी"ति नैषधम्। वीरे,
म्लेच्छभेदे, नीचभेदे, रात्रिञ्चरे च। इन्द्रवारुण्यां (राखाल-
शशा) स्त्री०।

**भटित्र** न० भट–इत्र। शूलपक्वे मांसादौ (काबाब)।

**भट्ट** पु० भट–तन्। स्तुतिपाठवृत्तिमति (भाट) जातिभेदे स्वामित्वे,
वेदाभिज्ञे पण्डिते च।

**भट्टार** पु० भट्टं स्वामित्वमृच्छति ऋ-अण्। पूज्ये। संज्ञायां कन्। सूर्ये

**भट्टारक** पु० भट भाषणे क्विप् तृ-णिच्-ण्वुल् कर्म०। नाट्योक्तौ नृपे

**भट्टिनी** स्त्री० भट्टं स्वामित्वमस्यास्ति इनि ङीप्। विप्रभार्य्यायाम्,
नाट्योक्तौ अकृताभिषेकायां राज्ञः स्त्रियां च।

**भडि** परिभाषणे भ्वा० आ० सक० सेट् इदित् । भण्डते अभण्डिष्ट ।

**भडि** कल्याणभाषणे चु० उ० सक० सेट् इदित् । भण्डयति–ते अब-भण्डत्–त ।

**भड** पु० भडि–अच् पृ० नलोपः । वर्णसङ्करभेदे ।

**भण** कथने भ्वा० पर० सक० सेट् । भणति । अभाणीत्–अभणीत् । चङि वा ह्रस्वः । अबीभणत्–त अबभाणत्–त ।

**भणिति** स्त्री० भण–क्तिन् ग्रहादित्वादिट् । कथने । "गौडोर्वीशकुल-प्रशस्तिभणिते"रिति नैषधम् ।

**भण्टाकी** स्त्री० भटि–आकन् ङीष् । वार्त्ताक्याम्, बृहत्याञ्च ।

**भण्टु(ण्टू)क** पु० भटि–उक, ऊक वा । श्योनाकवृक्षे ।

**भण्ड** पु० भडि–अच् । अश्लीलवाक्यभाषके (भांड) "त्रयोवेदस्य कर्त्तारो-भण्डधूर्त्तपिशाचकाः" इति चार्व्वाकवाक्यम् ।

**भण्डिर(ल)** पु० भडि–इरच्, इलच् वा । शिरीषवृक्षे । इन्नज-न्तस्तु । शुभे, शिल्पिनि, दूते च ।

**भण्डी** स्त्री० भडि–अच् गौरा० ङीष् । मञ्जिष्ठायाम्, शिरीषे च । स्वार्थे कन् ह्रस्वः । तत्रैवार्थे ।

**भण्डीर** पु० भडि–ईरन् । तण्डुलीयशाके, शिरीषवृक्षे च । गौरा० ङीष् । मञ्जिष्ठायाम् स्त्री० । [ मञ्जिष्ठायाम् ।

**भण्डीरलतिका** स्त्री० भडि–ईरन् क्षुद्रा लता लतिका कर्म० ।

**भदि** हर्षे, शुभकथने, प्रीतौ च भ्वा० आ० अक० सेट् इदित् । भन्दते अभन्दिष्ट । [ भन्दत्–त ।

**भदि** कल्याणकरणे चु० उ० सक० सेट् इदित् । भन्दयति–ते अब-

**भदन्त** पु० भदि–झच् नलोपः । बौद्धभेदे । पूजिते त्रि० ।

**भद्र** न० भदि–रक् नि० नलोपः । मङ्गले मुस्तके, स्वर्णे च ज्योतिषोक्ते बवादितः सप्तमे करणे स्त्री० न० । महादेवे, वृषे, खञ्जने, कदम्बे, हस्ति जातिभेदे बलदेवे रामचन्द्रे सुमेरुशैले, लघ्नोडवृक्षे च पु० । ज्योतिषोक्तासु द्वितीयासप्तमीद्वादशीतिथिषु च स्त्री० । साधौ, श्रेष्ठे च त्रि० । स्वार्थे कन् । भद्र मुस्तके न० । देवदारुणि पु० ।

**भद्रकाशी** स्त्री० भद्राय काशते अच् गौ० ङीप् । भद्रमुस्तायाम् ।
**भद्रकुम्भ** पु० भद्रकारकः कुम्भः । पूर्णकुम्भे, जलपूर्णघटे ।
**भद्रगन्धिका** स्त्री० भद्रो गन्धोऽस्याः कप् अतइत्वम् । मुस्तके ।
**भद्रचूड़** पु० भद्रा चूड़ा यस्य । (लङ्काशिज) वृक्षभेदे ।
**भद्रज** न० भद्राय जायते जन–ड । इन्द्रयवे ।
**भद्रतरुणी** स्त्री० भद्रदायिका तरुणीव । कुब्जकवृक्षे ।
**भद्रतुरग** न० भद्रास्तुरगा यत्र । जम्बुद्वीपस्य नववर्षमध्ये वर्षभेदे भद्राश्वादयोऽप्यत्र न० ।
**भद्रदन्तिका** स्त्री० कर्म० स्वार्थे कन् । दन्तीवृक्षभेदे ।
**भद्रदारु** पु० न० । कर्म० । देवदारुवृक्षे ।
**भद्रनामिका** स्त्री० भद्रं मङ्गलं नामयति प्रापयति नम-णिच् ण्वुल् । त्रायन्तीवृक्षे । [भाद्रपदासु ।
**भद्रपदा** स्त्री ब०व० भद्रस्य वृषस्येव पदं यासाम् । पूर्वोत्तर
**भद्रपर्णा** स्त्री० भद्रं पर्णमस्याः अजादि० । टाप् । कटम्भरावृक्षे । प्रसारिण्यां, गाम्भार्याञ्च ङीप् ।
**भद्रमल्लिका** स्त्री० कर्म० । मल्लिकाभेदे नवमल्लिकायाम् ।
**भद्रमुञ्ज** पु० कर्म० । शरभेदे ।
**भद्रमुस्तक** पु० कर्म० । नागरमुस्तके । भद्रमुस्ताप्यत्र स्त्री० ।
**भद्रयव** न० भद्रं यवइव । इन्द्रयवे । [गाम्भार्याम् ।
**भद्रवती** स्त्री० भद्राणि पर्णानि सन्त्यस्या मतुप् मस्य वः ङीप् ।
**भद्रवर्मन्** पु० भद्रं वृणोति वृ–मनिन् । नवमल्लिकायाम् ।
**भद्रवला** स्त्री० भद्राय वलति चलति वल+अच् । (गन्धभादाल) लताभेदे गन्धिकायां, माधवीलतायाञ्च । [गोपवल्ल्याम् ।
**भद्रवल्ली** स्त्री० कर्म०संज्ञायां कन् ह्रस्वः अतइत्वम् । (अनन्तमूल) ।
**भद्रश्रय** न० भद्राय श्रीयते श्री–अच् । चन्दनरसे ।
**भद्रश्री** पु० भद्रा श्रीर्यस्य । चन्दनवृक्षे ।
**भद्रालपत्रिका** स्त्री० भद्रायालति पर्य्याप्नोति आल–अच् तादृशं पत्रं यस्याः कन् अतइत्वम् । गन्धाल्याम् (गान्धाल) ।

**भद्राली** स्त्री० भद्रायालति पर्य्याप्नोति अच् गौरा० ङीष् । गन्धा-
ल्याम् (गान्धाल) । [दीर्घः । कट्फलवृक्षे ।
**भद्रावती** स्त्री० भद्र-अस्त्यर्थे मतुप् मस्य वः संज्ञायां पूर्वपद
**भद्राश्रम** पु० इत० । चन्दने । [ नृपासने ।
**भद्रासन** न० भद्राय लोकक्षेमायास्यतेऽत्र आस-आधारे ल्युट् ।
**भम्भराली** स्त्री० भमित्यव्यक्तशब्दस्य भरमालाति गृह्णाति आला-क
गौ० ङीष् । (डांश) मक्षिकायां । स्वार्थे कन् । तत्रैवार्थे ।
**भय** न० बिभेत्यस्मात् भी-अच् । भयहेतौ । भावेऽच् । दैन्यात्मके,
परतः स्वानिष्टसम्भावनारूपे वा चित्तवृत्तिभेदे, नाटकप्रसिद्धे
रसभेदे च । [ कुष्माण्डलतिकाहगे च पु० ।
**भयङ्कर** त्रि० भयं करोति कृ-अच मुम् च । भयजनके, रुरुभेदे,
**भयनाशिनी** स्त्री० भयं नाशयति नश-णिच्-णिनि । त्रायमाणा-
लतायाम् । [भयङ्करे त्रि० ।
**भयानक** पु० बिभेत्यस्मात् भी-आनक । व्याघ्रे, राहौ, रसभेदे च ।
**भर** पु० भृ-अप् । अतिशये । कर्त्तरि अच् । भरणकर्त्तरि त्रि० ।
**भरण** न० भृ-ल्युट् । वेतने, पोषणे, धारणे च । अश्विन्यवधिके
द्वितीये नक्षत्रे, घोषकलतायाञ्च स्त्री० ङीप् ।
**भरण्य** न० भरणाय हितम् यत् । मूल्ये, वेतने च । स्त्रीत्वमपि ।
**भरण्यभुज्** त्रि० भरण्यं वेतनं भुङ्क्ते भुज-क्विप् । वैतनिके कर्मकरे ।
**भरत** पु० भरं तनोति तन-ड । (जड़भरत) इति ख्याते मुनिभेदे,
नाट्यशास्त्रस्य, अलङ्कारशास्त्रस्य च कर्त्तरि मुनिभेदे । शबरे,
तन्तुवाये, क्षेत्रे, कैकयीसुते रामानुजे च । भरतेन प्रोक्तम् भारतं
नाट्यशास्त्रमधीयते अण् तस्य लुक् । नटेषु । दुष्मन्तेन शकुन्तला-
यामुत्पादिते नृपभेदे पु० तस्यापत्यानि इञ् तस्य बहुषु लुक् ।
भरतवंश्ये नृपे पु० ब०व० ।
**भरतखण्ड** न० भरतस्य नृपस्य चिह्नितं खण्डम् । भारतवर्षान्तर्गते
कुमारिकाख्ये खण्डे ।
**भरतवर्ष** न० इन० । भारते वर्षे ।

भरताग्रज पु० ६त० । दशरथज्येष्ठपुत्रे श्रीरामे ।
भरद्वाज पु० ज्येष्ठस्य भ्रातुरुतथ्यस्य पत्न्यां ममतायां बृहस्पतिना जनिते मुनिभेदे । [ तस्य गोत्रत्वञ्च । भरिणी ।
भरित पु० भृ—इतच् हरिद्वर्णे । तद्वति त्रि० । स्त्रियां ङीप्
भर्ग पु० भ्रस्ज—घञ् भर्ज्जादेशे कुत्वम् । शिवे, ज्योतिः पदार्थे, आदित्यान्तर्गते ऐश्वरे तेजसि, "आदित्यान्तर्गतं वर्चो भर्गाख्यं तन्मुमुक्षुभिः । जन्ममृत्युविनाशाय दुःखस्य त्रितयस्य च ध्यानेन पुरुषैर्यश्च द्रष्टव्यं सूर्य्यमण्डले" इति याज्ञवल्क्यः तस्य तेजस ऐश्वरत्वं "यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजोविद्धि मामकमि"ति गीतायामुक्तम् । भावे घञ् भर्जने च । [ भ्रातरि च त्रि० ।
भर्त्तृ पु० भृ—तृच् । स्वामिनि, अधिपतौ राजनि, च । पोषके,
भर्त्तृदारक पु० भर्त्तुरधिपस्य राज्ञः दारकः पुत्रः । नाट्योक्तौ राजकुमारे । तत्कन्यायां स्त्री० कन् । भर्तृदारिका ।
भर्त्तृहरि पु० भर्त्ता हरिरिव। स्वनामख्याते वाक्यपदीयादिग्रन्थकर्त्तरि विक्रमादित्यस्य ज्येष्ठे भ्रातरि राजभेदे ।
भर्त्स अधिक्षेपे, चुरा० उभ० सक० सेट् । भर्त्सयति ते अबभर्त्सत् त
भर्त्सन न० भर्त्स—ल्युट् । अपकारवचने अधिक्षेपे तिरस्कारायापकारार्थकवाक्योक्तौ । युच् । भर्त्सनाप्यत्र स्त्री० ।
भर्त्स्यपत्त्रिका स्त्री० भर्त्स्यं निन्दनीयं पत्त्रमस्याः कप् अत इत्त्वम् । महानीलीवृक्षे ।
भर्भ हिंसायां भ्वा० पर० सक० सेट् । भर्भति अभर्भीत् ।
भर्म(न्) न० भृ—मन्, मनिन् वा । स्वर्णे, भृतौ नाभौ, धुस्तूरे च ।
भर्व हिंसे भ्वा० पर० सक० सेट् । भर्वति अभर्वीत् ।
भल वधे दाने निरूपणे च भ्वा० आ० सक० सेट् । भलते अभलिष्ट ।
भल निरूपणे चु० आ० सक० सेट् । भालयते अबीभलत ।
भलता स्त्री० भाति+भा—क कर्म० । राजवलालतायाम् ।
भल्ल दाने, वधे, निरूपणे च भ्वा० प० स० सेट् । भल्लति अभल्लीत् ।

**भल्ल** पु० भल्ल—अच् । भल्लूके । अस्त्रभेदे पु० न० । स्वार्थे कन् भल्लूके पु० । वा गौरा० ङीप् तत्रैव । स्वार्थे कन् । भल्लकाप्यत्र ।

**भल्लपुच्छी** स्त्री० भल्लस्य पुच्छमिव पुष्पमस्याः ङीप् । (गोरचतण्डुला) क्षुपभेदे ।

**भल्लात** पु० भल्लं भल्लास्त्रमिवातति स्पर्शिनम् अत—अच् । (भेला) वृक्षभेदे स्वार्थे कन् । अत्रैव । गौ० ङीष् । भल्लातकप्यत्र ।

**भल्लु(ल्लू)क** पु० भल्ल—उ(ऊ) क । (भालूक) जन्तुभेदे ।

**भव** पु० भू—भावे अप् । जन्मनि, सत्तायाम्, प्राप्तौ च । भवत्यस्मात् अपादाने अप् । जलमूर्त्तिधरे महादेवे, जलस्य पृथिवीहेतुत्वेन तद्रूपस्य शिवस्य जन्महेतुतम् । आधारे अप् । संसारे । कर्त्तरि अच् । भव्ये, (चालता) वृक्षे, मङ्गले च ।

**भवत्** त्रि० भा—डवतु । युष्मदर्थे, सर्वनामता चास्य । भवान् भवत्याः पुत्रः भवत्पुत्रः । भू-शतृ । वर्त्तमानकालार्थे भवन कर्त्तरि च भवन् स्त्रियामुभयत्र ङीप् शतृन्तस्यनुम् ।

**भवदीय** त्रि० भवतस्तवायम् छ पदत्वम् जश्भावः । त्वत्सम्बन्धिनि ।

**भवन** न० भू—आधारे ल्युट् । गृहे । भावे ल्युट् भावे, जन्मनि, सत्तायाञ्च ।

**भवादृश(क्ष)च** त्रि० भवतस्तवेव दर्शनमस्य भवत्+दृश—क्विप् टक्, क्स वा भवत्तुल्ये जने । [दुर्गायाम् ।

**भवानी** स्त्री० भवस्य पत्नी भव+ङीप् आनुक् च शिवभार्य्यायाम्

**भवाभीष्ट** पु० भवस्य महादेवस्याभीष्टः अभि+इष-क्तः । गुग्गुलौ ।

**भविक** न० भवाय हितम् ठन् । कुशले । अर्श आद्यच् । तद्वति त्रि० ।

**भवितव्य** न०भू—भविष्यति कर्त्तरि च नि० तव्यत् । अवश्य भव्ये "भवितव्यं भवत्येव यद्विधेर्मनसि स्थितमि"ति ।

**भवितव्यता** स्त्री० भवितव्यस्य भावः तल् । अवश्यम्भावे, भाग्ये च ।

**भविष्णु** त्रि० भू—इष्णुच् । भवनशीले ।

**भविष्य(त्)** पु० भू—ऌटः सदेति शतृ—स्यट् च पृ० वा तलोपः । भाविनि काले । तत्कालवर्त्तिनि पदार्थे त्रि० । स्त्रियाम् ङीप्

तुम् च "अव्याच्चपोभविष्यन्त्या" इति रघुः। तलोप पचे क्री-
वता। उत्तरपदस्थः त्रि०। "यद्भविष्यो विनश्यती"ति मञ्च-
तन्त्रम्। भविष्यमधिकृत्य कृते पुराणभेदे न०।

भव्य त्रि० भू—कर्त्तरि नि० यत्। भाविनि "अवश्यभव्येष्वनवग्रहग्रहेति
नैषधं (चालता) फलभेदे मङ्गले च न०। शुभे, सत्ये योग्ये च
न० तद्वति त्रि०। कर्मरङ्गे, गजपिप्पल्यां च स्त्री०।

भष कुकुरशब्दे भ्वा० पर० सक० सेट्। भषति अभषीत्-अभाषीत्।

भषक पु० भष-क्वुन्। कुकुरे। [अभसीत्।

भस दीप्तौ अक० भर्त्सने सक०जु० पर० सेट्। बभस्ति। अभासीत्-

भस्त्रा स्त्री० भस-त्रन्। चर्म्मप्रसेविकायाम् अग्निसन्धुक्षणे चर्म्मनि-
र्म्मिते यन्त्रभेदे। (यांता) गौ० ङीष्। अत्रैव। स्वार्थे कन्
टाप् न इत्वम्। भस्त्रकाप्यत्रैव।

भस्मक न० भस्म करोति कृ-ड। (भस्मकीट) बहुभोजनकारके
रोगभेदे। भस्मेव इवार्थे कन्। कलधौते रूप्ये, विडङ्गे च।

भस्मगन्धा स्त्री० भस्मन इव गन्धोऽस्याः। रेणुकाख्यगन्धद्रव्ये।
स्वार्थे कन् अत इत्वम्। तत्रैव। [गन्धद्रव्ये।

भस्मगन्धिनी स्त्री० भस्मन इव गन्धोऽस्त्यस्या इनि। रेणुकाख्ये।

भस्मगर्भ पु० भस्म गर्भे यस्याः। तिनिशवृक्षे, कपिलशिंशपायां च।
रेणुकाख्यगन्धद्रव्ये स्त्री० टाप्।

भस्मन् न० भस—मनिन्। (छाइ) दग्धगोमयादिविकारे।

भस्मरोहा स्त्री० भस्मनि रोहते रुह-अच्। दग्धिकायाम्।

भस्मसात् अव्य० भस्म कार्त्स्न्येन सम्पन्नं करोति भस्मन्+साति।
साकल्येन भस्मरूपकरणे।

भा दीप्तौ अदा० पर० अक० अनिट्। भाति अभासीत्।

भा स्त्री० भा—अङ्। टाप्। दीप्तौ।

भाक्त त्रि० भक्तेः गौणीवृत्ते रागतः अण्। औपचारिके गौणीवृत्त्या
बोधितेऽर्थे। भक्तस्यान्नस्येदम् अण्। अन्नसम्बन्धिनि त्रि०।

**भाग** पु० भज-भावे घञ् । भजने । कर्मणि घञ् । अंशे, द्रव्यवस्तुनोऽर्द्धे, एकदेशे, भाग्ये, 'त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते इति ज्योतिषोक्ते राशेः त्रिंशांशके च ।

**भागधेय** न० भाग+स्वार्थे धेय अभिधानात् नपुंसकत्वम् । भाग्ये । भागेन धीयतेऽसौ धा-यत् । राजदेये करे । भागो धीयतेऽस्मै धा-सम्प्रदाने यत् । दायादे संपस्के ।

**भागवत** त्रि० भगवतः, भगवत्या वा इदम् सोऽस्यदेवता वा अण् भगवतः भगवत्या वा भक्ते, तत्सम्बन्धिनि च 'भग्नाः कुशेभागवता भवन्तीत्य" द्भटः तयोः सम्बन्धिगुणवर्णने पुराणे उपपुराणे च न० 'येन श्रुतं भागवतं पुराणमि"ति पुराणम् तत्र कस्य पुराणत्वं कस्य वोपपुराणत्वं तद्वाचस्पत्ये विस्तरेण निरूपयिष्यते । [ दानादौ ।

**भागशस्** अव्य० भागं भागं ददातीत्याद्यर्थे शसि । एकैकभागस्य

**भागहर** त्रि० भागमंशं हरति अधिकारित्वेन गृह्णाति हृ-अच् । अंशग्राहिणि ।

**भागहार** पु० भज्यते इति भागोविभाज्यस्तस्य हारो हरणम् । हृ-घञ् । अङ्कशास्त्रोक्ते भाज्यस्य विभागकरणे ।

**भागिन्** त्रि० भज-घिनुण् । अंशविशिष्टे । [ स्त्री० ङीप् ।

**भागिनेय** पु० भगिन्या अपत्यम् ढक् । स्वसृपुत्रे । तत्कन्यायां ।

**भागीरथी** स्त्री० भगीरथेन निर्वृत्ता आनीता तत्सम्बन्धिनी वा अण् । गङ्गायाम् । 'भागीरथीनिर्झरशीकराणा." मति कु० ।

**भागुरि** पु० स्मृतिव्याकरणादिकर्त्तरि मुनिभेदे ।

**भाग्य** न० भज-ण्यत् कुत्वम् । शुभाशुभसूचके कर्म्मणि । भागः प्रयोजनमस्य यत् । भागवति त्रि० ।

**भाङ्गीन** न० भङ्गायाः विजयायाः भवनं क्षेत्रं खञ् । ( भाङ ) भङ्गाभवनयोग्ये क्षेत्रे । यत् । भाङ्ग्यमप्यत्र । [ भाजत् त ।

**भाज** पृथक्करणे, अद० चु० उभ० सक० सेट् । भाजयति ते अब-

**भाजन** न० भाज्यतेऽनेन भाज-ल्युट् । पात्रे, आधारे, योग्ये च ।

**भाजी** स्त्री० भाज-कर्म्मणि घञ् नि० ङीप् । व्यञ्जनभेदे ।

**भाज्य** त्रि० भाज्यते विभज्यते भाज-कर्म्मणि यत् । विभजनीये 'भाज्यो हरः शुध्यति यद्गुणः स्यादि'ति लीलावती ।

**भाटक** न० भट-पोषणे ण्वुल् । परस्वगृहयानादेरुपभोगार्थं तत्स्वामिने दीयमाने धने । (भाड़ा)

**भाण** पु० भण-घञ् । 'भाणः स्याद्धूर्त्तचरित" इत्याद्युक्तलक्षणे दृश्यकाव्यभेदे साहि० द० ।

**भाण्ड** न० भा-अण्डच्, भण-ड-स्वार्थे अण् वा । पात्रे, तैलाधारे भाजने, (भांड़) वटुभेदे, (भाड़ार) 'ब्रह्माण्डभाण्डोदरे' ति वीरचरितम् । वणिजां मूलधने, अश्वभूषायां, नदीकूलद्वयमध्ये पात्रे च । गर्द्दभाण्डे वृक्षे पु० । भण्डस्य भावः अण् । भण्डचरित्रे न० (भाड़ामि) ।

**भाण्डारिन्** पु० भाण्डमृच्छति ऋ-णिनि । (भाण्डारी) । अर्थादि द्रव्यरक्षेषु कृताधिकारे ।

**भाण्डिवाह** पु० भाण्डिं क्षुराद्याधारं (भाड़ि) वहति अण् । नापिते । भाण्डि+अस्त्यर्थे लच् । भाण्डिलोऽप्यत्र ।

**भाण्डीर** पु० भण्ड-ईरच् पृ० । वटवृक्षे, वृन्दावनस्थे वटवनभेदे च ।

**भाति** स्त्री० भा-क्तिन् । शोभायाम् ।

**भाद्र** पु० भद्राभिर्युक्ता पौर्णमासी भाद्री सा यस्मिन् मासे । अण् चैत्रादितः षष्ठे चान्द्रे मासे । तन्मासीयपौर्णमास्यां स्त्री० ङीप् । भद्रैव स्वार्थे अण् । पूर्व्वोत्तरभाद्रपदाख्यनक्षत्रे न० । 'भद्रद्वयं भाग्यं' इति ज्योतिषम् ।

**भाद्रपदा** स्त्री० ब०व० । भद्रस्येदं अण् भाद्रं भाद्रमिव पदमासाम् । अश्विन्यवधिके पञ्चविंशषड्विंशयोर्नक्षत्रयोः । तद्युक्ता पौर्णमासी अण् ङीप् । भाद्रमासस्य पौर्णमास्याम् साऽत्र मासे अण् । चान्द्रे भाद्रे मासि । [पुंसि ।

**भाद्रमातुर** पु० भद्रायाः सत्याः मातुः अपत्यम् अण् उरच् । सती-

**भानु** पु० भा-नु । सूर्य्ये, अर्कवृक्षे, किरणे, प्रभौ, राजनि च ।

**भानुफला** स्त्री० भानुरिव दीप्तिमत् फलं प्रतती यस्याः । कदल्याम्

तस्याः मोचकस्य सूर्य्यतुल्यार्णत्वात्तथात्वम्। [ त्यप्यत्र।

**भानुमत्** पु० भानुः किरणोऽस्त्यस्य मतुप्। सूर्य्ये। भानुमाली-

**भानुमती** स्त्री० विक्रमादित्यनृपतेः पत्न्याम्।

**भाम** क्रोधे भ्वा० आत्म० अक० सेट्। भामते, अभामिष्ट।

**भाम** पु० भाम—घञ्। क्रोधे, दीप्तौ च। कर्त्तरि अच्। सूर्य्ये।

कोपवत्यां स्त्रियां स्त्री० टाप्।

**भामिनी** स्त्री० भाम—णिनि। कोपशीलायां स्त्रियां, स्त्रीमात्रे च।

**भार** पु० भृ-घञ्। गुरुत्वपरिमाणे, तद्वति द्रव्ये विंशतितुलापरि-

माणे ( अष्टसहस्रतोलकपरिमाणे ) च पु०।

**भारत** न० भरतान् भरतवंश्यानधिकृत्य कृतो ग्रन्थः अण् भारः वेदादि-

शास्त्रेभ्योऽपि सारांशः अस्त्यस्य त वा। वेदव्यासप्रणीते लक्षश्लोकात्मके

ग्रन्थभेदे। भरतेन चिह्नितं, तस्येदं वा अण्। 'हिमाह्वं दक्षिणं

वर्षं भरताय ददौ पिता। तस्माच्च भारतं वर्ष'मित्युक्ते जम्बु-

द्वीपान्तर्गते वर्षभेदे। भरतस्य गोत्रापत्यम् अण्। भरतनृपस्य

वंश्ये। भरतेन मुनिना प्रोक्तमण्। भरतमुनिकृते नाटकशास्त्रादौ

न०। तदधीयते पुनरण्। नटे, अग्नौ च।

**भारती** स्त्री० भृ-अतच् स्वार्थे प्रज्ञाद्यण्। वाक्ये तदधिदेवतायां

सरस्वत्यां, पक्षिभेदे, 'भारती संस्कृतप्रायो वाग्व्यापारो नराश्रय'

इति सा० द० उक्ते अलङ्कारोक्ते वृत्तिभेदे च।

**भारद्वाज** पु० भरद्वाजस्य गोत्रापत्यम् अण्। गोत्रप्रवर्त्तके मुनिभेदे,

द्रोणाचार्य्ये, अगस्त्यमुनौ, व्याघ्राटविहगे, वृहस्पतिग्रहे च। वन-

कार्पास्यां स्त्री० ङीप्। पु०। भारद्वाजोऽप्यत्र।

**भारयष्टि** स्त्री० भारस्य वहनार्था यष्टिः शाक०। भारवहनदण्डे (बांक)

**भारवाह(क्)** पु० भारं वहति अण्, णिच वा। भारवाहिनि।

ण्वुल्। भारवाहकोऽप्यत्र।

**भारवि** पु० किरातार्ज्जुनीयकाव्यकारके कविभेदे।

**भारवृक्ष** पु० भारीभूतो वृक्षः। काचीनामगन्धद्रव्ये।

**भारिक** पु० भारं वहति भार—ठक्। भारवाहके।

भार्गव पु० भृगोरपत्यम् तद्गोत्रापत्यं वा अण्। शुक्राचार्य्ये, परशुरामे, धन्विनि, गजे च। तेन प्रोक्ता तेनाधीता ज्ञाता वा अण्। वेद-प्रसिद्धे विद्याभेदे, पार्व्वत्यां लक्ष्म्यां दूर्व्वायां च स्त्री० ङीप्।

भार्गी स्त्री० भर्गस्येयमण्। ( वामनहाटि ) वृक्षभेदे।

भार्य्या स्त्री० भृ-ण्यत्। विधिनोढायां स्त्रियाम् भरणीये त्रि०

भाल न० भा-लच्। ललाटे भ्रुवोरूर्द्ध्वभागे।

भालदर्शन न० भाले दृश्यते कर्म्मणि ल्युट्। सिन्दूरे।

भालनेत्र पु० भाले नेत्रमस्य। शिवे। भाललोचनादयोऽप्यत्र।

भालाङ्क पु० भालस्येवाङ्को यस्य, भाले अङ्को यस्य वा। शाकभेदे, करपत्रेऽस्त्रे ( करात् ) रोहितमत्स्ये, महापुरुषचिह्नयुक्ते, पुरुष-भेदे, शिवे, कच्छपे च।

भालु(ल्लू)क पु० भल्लूक-स्वार्थे अण् वा पृ०ह्रस्वः। जन्तुभेदे भल्लूके। पृ०। भालुकोऽप्यत्र।

भाव पु० भावयति चिन्तयति पदार्थान् चु०भू-अच्। नाट्योक्ते नाना पदार्थचिन्तके पण्डिते। भावयति ज्ञापयति हृदयगतम् भू-णिच् अच्। हृद्गतावस्थावेदके मानसविकारे स्वेदकम्पादौ, व्यभिचारि-भावे। भू-घञ्। साध्यरूपे सिद्धरूपे वा क्रियारूपे धातोरर्थे, रागे आशये च। [च त्रि०।

भावक पु० भाव-स्वार्थे कन्। मानसविकारे। पदार्थचिन्तके उत्पादके

भावत्क पु० भवतोऽयं ठक्। भवत्सम्बन्धिनि। [चिन्ताभेदे च

भावन न० भू णिच्-ल्यु। ( चालता ) फलभेदे, भावे ल्युट्। युच्। चिन्तायाम्, अधिवासने, ध्याने, पर्य्यालोचनायां, वैद्यकोक्ते औषधसंस्कारभेदे स्त्री०।

भावबोधक भावस्य रत्यादेर्बोधकः अनुमापकः। रत्याद्यनुमापके भ्रू-क्षेपादिदेहचेष्टाविशेषे, सुखरागादौ च।

भावानुगा स्त्री० भावं पदार्थमाश्रयं वानुगच्छति गम-ड। छायायाम् अभिप्रायानुगन्तरि त्रि०।

भावित त्रि० भू-णिच्। वासिते, प्राप्ते, शुद्धे चिन्तिते मिश्रिते च।

**भाविनी** स्त्री० भावः हृदयचेष्टाभेदोऽस्त्यस्या इनि । स्त्रीभेदे, स्त्री-मात्रे च । भू-णिनि । भविष्यत्कालवर्त्तिनि त्रि० स्त्रियां ङीप् ।

**भावुक** न० भू-उकञ् । मङ्गले, तद्वति त्रि० 'मुहुरहो रसिकाभुवि भावुका" इति भागवतम् । [न वृद्धः ।

**भाष** वचने भ्वा० आत्म० द्विक० सेट् । भाषते अभाषिष्ट । चङि

**भाषा** स्त्री० भाष-अ । वाक्ये, संस्कृतादिवाक्ये च । अष्टादश भाषावार-विलासिनीभुजङ्गः"इति सा० द०। व्यवहारे प्रतिज्ञासूचकवाक्ये 'यदावेदयते राज्ञे तद्भाषेत्यभिधीयते"इति स्मृतिः । [प्रथमेऽंशे ।

**भाषापाद** पु० कर्म० चतुष्पाद्व्यवहारे प्रतिज्ञासूचके वाक्यरूपे

**भाषित** न० भाष-भावे-क्त । कथने । कर्म्मणि-क्त । कथिते त्रि० । "भाषितपुंस्का"दिति पाणिनिसूत्रम् ।

**भाष्य** न० "सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो जना" इत्युक्त लक्षणे सूत्रव्याख्या ग्रन्थभेदे । कथनीये त्रि० ।

**भास** दीप्तौ भ्वा० आत्म०अक० सेट् । भासते अभासिष्ट । चङि वा ह्रस्वः । अबीभसत् अबभासत् ।

**भास** स्त्री० भास-सम्पदा० क्विप् । दीप्तौ, मयूखे इच्छायाञ्च ।

**भास** पु० भास-घञ् अच् वा । दीप्तौ, गोष्ठे, कुक्कुरे शुक्रे च । "यज्ञार्थमददत् वस्तु भासः काकोऽथवा भवे"दिति स्मृतिः ।

**भासुर** त्रि० भास-घुरच् । दीप्तिशीले, स्फटिके च । वीरे पु० । कुष्ठौषधे न० ।

**भासुरपुष्पा** स्त्री० भासुराणि पुष्पाण्यस्याः । वृश्चिकाली (बिछाति) ।

**भास्कर** पु० भासं करोति भास्+कृ-टच् कस्का० । सूर्य्ये, अग्नौ वीरे, अर्कवृक्षे सिद्धान्तशिरोमणिग्रन्थकर्त्तपण्डिते । स्वर्णे न० ।

**भास्करप्रिय** पु० ६त० । पद्मरागमणौ (चुनि) ।

**भास्वर** त्रि० भास-वरच् । दीप्तियुक्ते, सूर्य्ये, दिने, अर्कवृक्षे च पु० । कुष्ठौषधे न० (कुड़) । [वीरे च । दीप्तिमति त्रि०।

**भास्वत्** पु० भास्+अस्त्यर्थे मतुप् मस्य वः । सूर्य्ये, अर्कवृक्ष

भिक्ष लोभे लाभायोक्तौ सक० याचने द्विक० क्लेशे अक० भ्वा० आत्म० सेट् । भिक्षते अभिक्षिष्ट ।

भिक्षा स्त्री० भिक्ष–अ । याच्ञायाम् ।

भिक्षाक त्रि० भिक्ष–षाकन् । भिक्षाकारके । स्त्रियां ङीष् ।

भिक्षाशिन् त्रि० भिक्षालब्धमश्नाति अश–णिनि । भिक्षालब्धोपजीविनि

भिक्षु पु० भिक्ष–उ । सन्यासिनि चतुर्थाश्रमे ।

भिक्षुक पु०स्त्री० भिक्ष–उकञ् । भिक्षोपजीविनि ।

भिण्ड पु०स्त्री० भण–ड ष्ट० । कराकृतिरक्तवर्णपर्णे वर्त्तुलाकारवीजे क्षुपभेदे । स्त्रीत्वे टाप् ।

भित्त न० भिद–क्त नि० तस्य न नः । खण्डे ।

भित्ति स्त्री० भिद–क्तिन् । घटादेः कुड्ये (देयाल) । स्वार्थे कन् । तत्र, पल्यां च ।

भिद द्विधाकरणे, विशेषकरणे च रुधा० उभ० सक० अनिट् भिनत्ति भिन्ते अभिदत् अभैत्सीत् अभित्त ।

भिद अंशकरणे भ्वा०पर०सक०सेट् इदित् । भिन्दति अभिन्दीत् ।

भिदा स्त्री० भिद–अङ् । विदारणे, द्वैधीकरणे, विशेषकरणे च ।

भिदुर पु० भिद–कुरच् । वज्रे । इरच् । भिदिरमप्यत्र न० । प्लक्षवृक्षे पु० ।

भिन्दिपाल पु० भिदि–विदारणे इन् भिन्दिं भेदनं पालयति पाल अण् । हस्तक्षेप्ये नालिकास्त्रे, हस्तप्रमाणे ऽस्त्रे च ।

भिन्न पु० भिद–क्त । विदारिते, मिश्रिते, सङ्गते, अन्ये, प्रस्फुटिते च ।

भिन्नगात्रिका स्त्री० भिन्नं विदारितं गात्रमवयवो यस्याः । कर्कट्याम्

भिन्नपरिकर्मन् न० भिन्नस्य अंशसहितस्य परिकर्म संस्कारविशेषः । अङ्कशास्त्रोक्ते सांशस्य गुणभागादिसंस्कारे ।

भिन्नभिन्नात्मन् पु० भिन्नप्रकारः प्रकारे द्वित्वम् तादृश आत्मा यस्य । चणके (छोला) ।

[ ङीप् । पाषाणभेदके वृक्षे ।

भिन्नयोजनी स्त्री० भिन्नं युज्यतेऽनया युज करणे ल्युट् ।

भिल भेदने वा चु०उ० पक्षे तु०पर०सक० सेट् । भेलयति ते भिलति

अबीभिलत् त अभेलीत् । [स्व"ति स्मृतिः ।

**भिल्ल** पु० भिल-लक् । म्लेच्छजातिभेदे । (भिल) 'कैवर्त्त मेदभिल्ला

**भिल्लतरु** पु० भिल्लप्रियः तदुपजीव्यत्वात् तरुः । लोध्रे ।

**भिल्ली** स्त्री० भिल लक् गौ० ङीप् । लोध्रे ।

**भिष** रोगप्रतीकारे सौ० पर० सक० सेट् । भेषति अभेषीत् ।

**भिषक्प्रिय** पु० ६त० । गुडूच्याम् ।

**भिषग्भद्रा** स्त्री० ६ब० । भद्रदन्तिकायाम् ।

**भिषज्** पु० भिषति चिकित्सते भिष-अजिक् । वैद्ये रोगप्रतीकारेच ।

**भिस्सटा** स्त्री० भिस्सामन्नं टीकते टीक-ड पृ० । दग्धान्ने । पृ० ।

भिष्मिटा भिस्सिटा भिष्मिष्टा भिष्मिका इत्यादयोऽप्यत्रार्थे ।

**भिस्सा** स्त्री० भिद् क्विप् सो क पृ०दस्य सः । अन्ने ।

**भी** भये जु०पर०अक०अनिट । बिभेति अभैषीत् बिभयामास बिभाय ।

**भी** भये अक० भरणे सक० क्र्यादि० वा प्वा०पर०अनिट् । भीनाति-भिनाति । अभैषीत् ।

**भी** स्त्री० भी-सम्प० क्विप् । भये ।

**भीति** स्त्री० भी-क्तिन् ] भये, कम्पे च । क्त भीतः । भययुक्ते त्रि० ।

**भीम** त्रि० बिभेत्यस्मात् भी-मक् । भयहेतौ । भयानकरसे, महादेवे, भीमसेने, अम्लवेतसे च पु० । दुर्गायां स्त्री० 'भीमा"देवीति वि ख्यातं तन्मे नाम भविष्यती"ति चण्डी ।

**भीमरथी** स्त्री० 'सप्तसप्ततिमे वर्षे, सप्तमे मासि सप्तमी । रात्रिर्भीमर-थी नामे'त्युक्तायां रात्रौ ।

**भीमसेन** पु० युधिष्ठिरानुजे मध्यमपाण्डवे, कर्पूरभेदे च । [स्याम् ।

**भीमैकादशी** स्त्री० भीमेनोपास्या एकादशी शाक० । माघशुक्लैकाद-

**भीरु** त्रि० भी-क्रु+भयशीले । शतावर्य्यां, कण्टकार्य्यां, शतपदिकायां छायायां योषिति च । स्त्री० वा ऊङ् । भययुक्तायां योषिति ।

**भीरुक** पु० भी-क्रुकन् । शृगाले । व्याघ्रे । इक्षुभेदे च । भययुक्ते त्रि० ।

**भीरुपत्री** स्त्री० भीरूणि पत्राणि यस्याः । शतमूल्याम् ।

**भीलु** त्रि० भी-क्लु भयशीले । क्लुकन् । तत्र । भल्लूके पु० ।

**भीषण** पु० भीषयते भी- णिच्-ल्यु भीषादेशः। भयानकरसे, कुन्दुरुके, ह्लिनाले, शल्लक्याञ्च। महादेवे-कपोते च पु०। गाढे दारुणे च त्रि०।

**भीष्म** पु० भी-मक् सुक् च। भयानकरसे। भयहेतौ त्रि०। गङ्गागर्भजे शान्तनुसुते स्वनामख्याते कुरुवंश्ये क्षत्रिये पु०।

**भीष्मजननी** स्त्री० ६त०। गङ्गायाम्। भीष्मसूप्रभृतयोऽप्यत्र।

**भीष्मपञ्चक** न० भीष्मेणोपदिष्टं पञ्चकम्। कार्त्तिकशुक्लैकादश्यादिषु पञ्चसु तिथिषु, तत्कर्त्तव्ये व्रतभेदे च।

**भीष्माष्टमी** स्त्री० ६त०। भीष्मस्य देहत्यागदिवसे माघशुक्लाष्टम्याम् अतस्तस्मिन् दिने सर्व्ववर्णैस्तस्य तर्पणं कार्य्यम्।

**भुक्त** त्रि० भुज-कर्म्मणि क्त। भक्षिते। भावे-क्त। भक्षणे न०।

**भुक्तसमुज्झित** त्रि० पूर्व्वं भुक्तं पश्चात् समुज्झितं त्यक्तम्। भोजनोत्तरं त्यक्ते अन्नादौ।

**भुक्ति** स्त्री० भुज-क्तिन्। भोजने भोगे, "आगमो लिखितं यत्र भुक्तिः स्तोकापि यत्र नो" इति स्मृतिः। [ भुक्तौ।

**भुक्तिप्रद** पु० भुक्तिं भोगं भोजनं वा प्रददाति स्वल्पायासलभ्यत्वात्।

**भुग्न** त्रि० भुज-मोटने क्त। रोगादिना कुटिलीकृते।

**भुज** मोटने तु० प० सक० अनिट्। भुजति अभौक्षीत्। क्त भुग्नः।

**भुज** भक्षणे आ० पालने पर० सक० रुधा० अनिट्। भुङ्क्तेऽन्नम् अभौक्षीत्। भूमिं भुनक्ति पालयति। "दिवं मरुत्वानिव भोक्ष्यते महीमिति रघुः भुक्तः।

**भुज** पु० स्त्री० भुज्यतेऽनेन भुज-घञर्थे क। बाहौ, करे, त्रिकोणचतुष्कोणादिक्षेत्रस्थरेखाविशेषे लीलावत्यादौ प्रसिद्धे "तथा यते तद्भुजकोटिघात" इति लीलावती।

**भुजग** पु० भुज-वक्रणे क भुजः कुटिलीभवन् सन् गच्छति गम-ड। सर्पे, अश्लेषानक्षत्रे च।

**भुजगान्तक** पु० ६त०। गरुडे। भुजगनाशनादयोऽप्यत्र।

**भुजगाशन** पु० भुजगान् अश्नाति अश-ल्यु। गरुडे, भुजगभक्षकादयोऽप्यत्र।

भुजङ्ग पु० भुजः सन् गच्छति गम-खच् डिच्च । सर्पे, जारे, अश्लेषानक्षत्रे च ।

भुजङ्गप्रयात न० । द्वादशाक्षरपादके छन्दोभेदे ।

भुजङ्गम पु० भुजः कुटिलीभवन् सन् गच्छति गम-खच् मुम् । सर्पे, अश्लेषानक्षत्रे च । सीसके न० । [रास्नायाम् ।

भुजङ्गाक्षी स्त्री० भुजङ्गस्येवाक्षि पुष्पं यस्याः षच् समा० । ङीष् ।

भुजङ्गाख्य पु० भुजङ्गतुल्या आख्या यस्य । नागकेशरे ।

भुजशिरस् पु० ६ त० । स्कन्धदेशे ।

भुजान्तर न० भुजयोरन्तरं मध्यम् । क्रोड़े ।

भुजिष्य पु० भुज-किष्यन् । दासे, रोगे, स्वतन्त्रे, हस्तसूत्रे च । दास्यां, वेश्यायाञ्च स्त्री० ॥ [संख्यायाञ्च ।

भुवन न० भवत्यत्र भू-क्युन् । जगति, जने, आकाशे, चतुर्दश-

भुवनकोष पु० भुवनस्य कोष इव । भूगोले ज्योतिषग्रन्थभेदे च ।

भुवर् अव्य० भू अरु-वुन् किच्च । आकाशात्मके द्वितीये लोके ।

भुवर्लोक पु० कर्म० । भूरादिसप्तलोकमध्ये द्वितीयलोके ।

भू प्राप्तौ चु० आ० सक० सेट् । भावयते अबीभवत ।

भू प्राप्तौ भ्वा० उ० सक० सेट् । भवति-ते अभूत् अभविष्ट ।

भू शुद्धौ अक० चिन्तने मिश्रणे च सक० चुरा० उभ० सेट् । भावयति-ते अबीभयत्-त ।

भू सत्तायां भ्वा० पर० अक० सेट् । भवति अभूत् । [यज्ञाग्नौ च ।

भू स्त्री० भू-संप० क्विप् । पृथिव्याम्, एकसंख्यायां, स्थानमात्रे-

भूकन्द पु० भुवः कन्द इव । ( थलकाण्ड़ ) । महाश्रावणिकाटक्षे ।

भूकदम्ब पु० भुवि कदम्ब इव । ( कोकसिमा ) अलम्बुषाक्षे ।

भूकदम्बक पु० भुवि कदम्ब इव कायति कै-क । यवान्याम् ।

भूकम्प पु० ६ त० । लोकानामनिष्टसूचके अद्भुतरूपे पृथिव्या स्वयं चलने

भूकुम्भी स्त्री० भुवि कुम्भीव । भूमिपाटल्यौ ।

भूकुष्माण्डी स्त्री० भुवि कुष्माण्डीव । वृदय्याम् ।

भूकेश पु० भुवः पृथिव्याः केश इव । वटे, शैवले च ।

भूखर्ज्जूरी स्त्री० भुवि जन्मा खर्जूरी शाक० । चुद्रखर्जूर्य्याम् भूमि-
खर्ज्जूर्य्यादयोऽप्यत्र ।

भूगोल पु० भूगोल इव । गोलाकारे भूमण्डले तत्प्रमाणस्वरूपादिकं
वाचस्पत्ये "मध्ये समन्तादण्डस्य भूगोलो व्योम्नि तिष्ठति ।
विभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिका"मिति सूर्य्यसिद्धान्तः ।

भूच्छाया स्त्री० भुवश्छाया । सूर्य्यकिरणसम्पर्कवशात् । जायमाने
राहुपच्छायाभिधाने तमसि अन्धकारे ।

भूजम्बू स्त्री० भुवो जम्बूरिव स्वादुत्वात् । गोधूमे, विकङ्कतफले च ।
( वइंचि ) इति० । चुद्रजम्ब्वाम् । भूमिजम्ब्वादयोऽप्यत्र स्त्री० ।

भूत न० भू-क्त । न्याय्ये, उचिते, पृथिवीजलतेजोवायुगगनरूपेषु
गन्धादिविशेषगुणवत्सु, द्रव्येषु, जन्तुषु सत्ये, यथार्थे, वास्तविके,
'भूतमप्यनुपन्यस्तं हीयते व्यवहारत इति स्मृतिः तत्त्वानुसन्धाने
च 'छलं निरस्य भूतेने"ति स्मृतिः । पिशाचादौ, कुमारे, योगीन्द्रे,
कृष्णपक्षे पार्ष्णिनि च पु० । अतीते वृत्ते, सदृशे, प्राप्ते, सत्ये च
त्रि० । कृष्णचतुर्द्दश्यां स्त्री० टाप् ।

भूतकेश पु० भूतानां केशइव । ( भूतकेश ) नामके तृणभेदे ।
स्त्रीत्वमपि, साच तत्र, शेफालिकायां च टाप् । नीलसिन्धुवारे ङीप्

भूतगन्धा स्त्री० भूतः प्रभूतः गन्धो यस्याः । मुरानामगन्धद्रव्ये ।

भूतघ्न पु० भूतं हन्ति हन-टक् । भूर्ज्जपत्रे तद्धारणे हि बालपक्ष-
भूतादिनिवारणम् । भूतं प्राकृतं गन्धं हन्ति अधःकरोति लशुने,
उष्ट्रे च । भूतनाशके त्रि० । तुलस्यां स्त्री० ङीप् ।

भूतचतुर्द्दशी स्त्री भूतप्रिया चतुर्द्दशी तदुद्देशेन तस्यां दीपदानात् ।
आश्विनकृष्णपक्षचतुर्द्दश्यां दीपान्वितामावास्यापूर्वतिथौ यमचतु-
र्द्दश्याम् ।

भूतजटा स्त्री० भूतस्य जटेव । जटामांस्याम् ।

भूतद्राविन् पु० भूतान् द्रावयत्यपसारयति द्रु-णिच्-णिनि । रक्त-
करवीरवृक्षे, भूताङ्कुशवृक्षे, शाखोटवृक्षे च ।

भूतद्रुम पु० भूतइव द्रुमः । श्लेष्मातकवृक्षे । भूतवृक्षादयोऽप्यत्र ।

**भूतधात्री** स्त्री० भूतानि जन्तून् धारयति धा+तृच् ङीप्। पृथिव्याम्। [वटुकस्तोत्रम्। भूतेशभूतपत्यादयोऽप्यत्र।

**भूतनाथ** पु० ६त०। शिवे, वटुकभैरवे च। "भैरवो भूतनाथश्च"ति

**भूतनाशन** न० भूतान् नाशयति नश—णिच्—ल्यु। रुद्राक्षे। सर्षपे, भल्लातके च पु०।

**भूतपत्र** पु० भूतप्रियः पत्रः अन्धकारवत्त्वात्। कृष्णपत्रे।

**भूतपत्री** स्त्री० भूत इव कृष्णं पत्रं यस्याः। कृष्णतुलस्याम्।

**भूतपुष्प** पु० भूतइव कृष्णं पुष्पं यस्य। श्योनाकवृक्षे।

**भूतभावन** पु० भूतानि पृथिव्यादीनि भावयति जनयति भू—णिच्-ल्यु, भूता सत्या यथार्थी भावना यस्य वा। विष्णौ, वटुकभैरवे च "भूतात्मा भूतभावन" इति। तयोः स्तोत्रे।

**भूतयज्ञ** पु० भूतान् प्राणिनो वायसादीन् उद्दिश्य यज्ञो बलिः। नित्यं गृहस्थकर्त्तव्यपञ्चयज्ञान्तर्गते बलिवैश्वदेव कर्मणि "भूतेभ्यो बलिहरणं भूतयज्ञ" इति स्मृतिः।

**भूतल** न० भूरेव तलम्। पृथिव्याम्। ६त०। पाताले भूमेरधोभागे

**भूतलिका** स्त्री० भूतलं पातालं मूलत्वेनास्त्यस्याः ठन्। पृक्कायाम् (पिड़िङ्शाक) बहुदूरगमूलत्वात्तस्यास्तथात्वम्।

**भूतवास** पु० ६त०। (बयड़ा) विभीतकवृक्षे। भूतावासादयोऽप्यत्र।

**भूतशुद्धि** स्त्री० भूतानां देहारम्भकपृथिव्यादीनां शुद्धिर्भावना विशेषात् शोधनम्। तन्त्रादौ प्रसिद्धे देहारम्भकचतुर्विंशति तत्त्वानां भावनाविशेषेण संस्कारेण देवरूपतासम्पादने।

**भूतसार** पु० भूतइव कृष्णः सारोऽस्य। श्योनाकवृक्षे।

**भूतहन्त्री** स्त्री० भूतान् तद्भयं हन्ति हन—तृच् ङीप्। वन्ध्याकर्कोट्यां, श्वेतदूर्वायाञ्च तद्धारणे हि स्त्रीणां प्रजाप्रतिरोधकभूतभयनाशः।

**भूतहर** पु० भूतान् हरति अपसारयति हृ—अच्। गुग्गुलौ।

**भूतहारिन्** पु० भूतान् हरति स्थानान्तरं नयति हृ—णिनि। देवदारुवृक्षे।

भूताङ्कुश पु० भूतानां पिशाचानामङ्कुश इवापसारकत्वात् । स्वनामख्याते वृक्षे ।

भूतात्मन् पु० भूतानि पृथिव्यादीनि पञ्च द्रव्याणि आत्मा स्वरूपं यस्य । देहे । भूतानि पञ्च द्रव्याणि भूताः प्राणिनश्च आत्मा स्वरूपं यस्य । परब्रह्मणि, 'सर्व्वं खल्विदं ब्रह्म तज्जलानि"ति श्रुतिः । सर्व्वभूतात्मके हिरण्यगर्भे, विष्णौ, वटुक भैरवे च 'भूतात्मा भूतभावन" इति तयोः स्तोत्रे ।

भूतारि पु० हिं० । हिङ्गौ तद्गन्धेन हि भूतापसरणम् ।

भूताली स्त्री० भूतानीव अलति पर्य्याप्नोति अल-अच् गौरा० ङीष् । भूमिपाटली, भूपल्याञ्च । [ विभीतकवृक्षे च ।

भूतावास पु० भूतानां प्राणिनामावासः अधिष्ठानत्वात् । विष्णौ,

भूति स्त्री० भू—क्तिन् । भवने, अणिमाद्यष्टविधैश्वर्य्ये, शिवाङ्गभस्मनि, भूतृणे, सम्पत्तौ, जात्यां, वृद्धिनामौषधे च ।

भूतिक पु० भूत्या सम्पत्त्या कायति कै-क । भूनिम्बे, यमान्याञ्च । चन्दने, कट्फले कत्तृणे च न० । पृ०श्रा दीर्घः । भूतीकोऽप्यत्र ।

भूतृण न० भुवः तृणं गन्धवत्त्वात् ( गन्धखड ) तृणभेदे । रोहिपतृणे पु० । [ (उन्दुरकानि )

भूदरीभवा स्त्री० भूदर्य्यां भूमिविले भवति भू-अच् । आखुकर्णीम्

भूदार पु० भुवं दृणाति खनति मुस्ताद्यर्थम् दृ-अण् । शूकरे ।

भूदेव पु० भुवि देव इव । विप्रे ।

भूधर पु० भुवं धरति धृ-अच् । पर्व्वते । [ लक्याम् ।

भूधात्री स्त्री० भुवि लग्ना धात्री आमलकी शाक० । भूम्याम-

भूनिम्ब पु० भुवि लग्नः निम्बः शाक० । ( चिराता ) क्षुपभेदे ।

भूनीप पु० भुवि लग्नो नीपः शाक० । भूमिकदम्बे ।

भूप पु० भुवं पाति पा-क । भूमिपाले भूमिपादयोऽप्यत्र ।

भूपद पु० भुवि पदं मूलं यस्य । वृक्षमात्रे । मल्लिकायां स्त्री० ङीष् ।

भूपलाश पु० भुवि पलाशं यस्य । विशल्यकारके क्षुपभेदे ।

भूपाल पु० भुवं पालयति पाल-अण् । भूपतौ ।

भूप्रेष्ठ पु० भूपस्येष्टः । राजादनीवृक्षे ( पियाशाल ) तद्बीजस्य चिरञ्जि इति ख्यातस्य राजप्रियत्वात्तथात्वम् ।

भूभुज् पु० भुवं भुङ्क्ते भुनक्ति पालयति वा भुज-क्विप् । भूपाले ।

भूभृत् पु० भुवं बिभर्त्ति धारयति, पालयति वा भृ-क्विप् । पर्व्वते, भूपाले च ।

भूमन् पु० बहोर्भावः इमनिच् नि० बहोर्भूरादेशः । बहुत्वे ।

भूमि(मी) स्त्री० भवन्त्यस्मिन् भूतानि भू-मिक् वा ङीप् । पृथिव्याम्, स्थानमात्रे, जिह्वायां, योगशास्त्रोक्ते योगिनां चित्तस्यावस्थाभेदे, एकसङ्ख्यायाञ्च ।

भूमिका स्त्री० भूमिरिव कायति कै क । रचनायां 'अन्यरूपैर्यदन्यस्य प्रवेशस्तत्र भूमिकेत्युक्ते नाट्ये-अभिनेयपात्रादिवेशान्तरग्रहणे ग्रन्थेवक्तव्यकथोद्घाते, कक्षायाञ्च 'नैयायिकादिभिरात्मा प्रथमभूमिकायामवतारित इति सांख्यप्रवचनभाष्यम् ।

भूमिचम्पक पु० भूमिलग्नः चम्पकः शाक० । ( भुइचांपा ) वृक्षभेदे

भूमिज पु० भूमेर्जायते जन-ड । मङ्गलग्रहे, नरकासुरे, भूमिकदम्बे, मनुष्ये च । भूमिजातमात्रे त्रि० ।

भूमिजगुग्गुल पु० कर्म्म० । आशापुरजाते गुग्गुलौ ।

भूमिपिशाच पु० भूमौ पिशाच इव । तालवृक्षे ।

भूमिमण्ड पु० भूमिं मण्डयति मण्ड-अण् । (हापरमालि) लताभेदे ।

भूमिमण्डपभूषण स्त्री० भूमिं मण्डप इव भूषयति भूष-ल्यु । माधवीलतायाम् ।

भूमि (मी)रुह पु० भूम्यां भूमौ वा रोहति रुह-क । वृक्षे । भूरुहादयोऽप्यत्र । [णिच्-ल्यु । शवे स्मृते ।

भूमिवर्द्धन पु० भूमिं वर्द्धयति स्वदेहस्यपार्थिवांशोपचयेन, वृध

भूमिष्ठ पु० भूमौ तिष्ठति स्था-क अम्ब० षत्वम् । भूपृष्ठस्थे ।

भूमिस्पृश पु० भूमिं स्पृशति स्पृश-क्विप् । वैश्ये, मनुष्ये, चौरभेदे खञ्जे, अन्धे च ।

भूमीन्द्र पु० भूमौ इन्द्र इव। नृपे।
भूम्यामलकी स्त्री० भूमिलग्ना आमलकी शाक०। स्वनामख्याते क्षुपे
भूम्यामली स्त्री० भूम्या सह आमलति सम्बध्नाति आ+मल अच्
गौ० ङीष्। भूम्यामलक्याम्।
भूयस् अव्य० भुवे भावाय यस्यति यस भावे क्विप्। पुनरर्थे।
भूयस् त्रि० अतिशयेन बहुः ईयसु नि० बहोर्भूादेशः।
बहुतरे। स्त्रियां ङीप्।
भूयिष्ठ त्रि० अतिशयेन बहुः इष्ठन् नि० भ्वादेशः। बहुतरे प्रचुरे च।
भूयुता स्त्री० भुवा युता संबद्धा। भूमिखर्ज्जूर्य्याम्।
भूरि पु० भू-क्रिन्। विष्णौ, शिवे, इन्द्रे च। स्वर्णे न० प्रचुरे त्रि०।
भूरिगन्धा स्त्री० भूरिः प्रचुरो गन्धो यस्याः। मुरानामगन्धद्रव्ये।
भूरिगम पु० भूरि भारयुक्तत्वेऽपि बहु गच्छति गम-अच्। गर्दभे।
भूरिदुग्धा स्त्री० भूरीणि दुग्धानि निर्यासा यस्याः। वृश्चिकाल्यां।
भूरिपुष्पा स्त्री० भूरीणि पुष्पाण्यस्याः। शतपुष्पायाम्।
भूरिफेना स्त्री० भूरीणि फेनान्यस्याः। (चामकषा) सप्तलावृक्षे।
भूरिबला स्त्री० भूरीणि बलानि यस्याः ५ब०। अतिबलायाम्।
भूरिमल्ली स्त्री० भूरि बहु यथा स्यात् तथा मलति मल-लच् गौरा०
ङीष्। अम्बष्ठायाम्।
भूरिमाय पु० भूरयः माया यस्य। शृगाले।
भूरिशस् अव्य० भूरि-शस्। बहुश इत्यर्थे।
भूरिश्रवस् पु० चन्द्रवंश्ये सोमदत्तसुते नृपभेदे।
भूरुण्डी स्त्री० भुवं रुणडति आच्छादयति रुडि आवृतौ (माधवग्रन्थे
पठितः) अण्। (हातिशुंडा) वृक्षभेदे।
भूर्ज्ज पु० ऊर्ज्ज-अच् ७त०। स्वनामख्याते वल्कप्रधाने वृक्षे।
"भूर्ज्जत्वचः स्पर्शवतीर्दधाना" इति कुमारः।
भूर्ज्जपत्र पु० भुवि-ऊर्ज्जं पत्रं यस्य। स्वनामख्याते वृक्षे
भूर्ज्जत्वचादयोऽप्यत्र।
भूर् पु० भू-रुक्। अन्तरीक्षलोकादधःस्थे चरणसञ्चारयोग्यस्थाने लोके।

भूलग्ना स्त्री० भुवि लग्ना । शङ्खपुष्प्याम् । [ दयोऽप्यत्र ।
भूवदरी स्त्री० भुवि लग्ना वदरी । क्षुद्रकोल्याम् । भूमिवदर्य्या-
भूष मण्डने वा चु० उभ० पचे भ्वा० पर० सक० सेट् । भूषयति ते
भूषति अबूभुषत्-त अभूषीत् ।
भूषण न० भूष्यतेऽनेन भूष-करणे ल्युट् । अलङ्कारे किरीटादौ ।
भावे ल्युट् । भूषायाम् ।
भूषा स्त्री० भूष-अ । मण्डनक्रियायाम् ।
भूषित त्रि० भूष-क्त । अलङ्कृते ।
भूष्णु त्रि० भू-ग्स्नु । भवनशीले ।
भूस्तृण न० भुवस्तृणम् ष० तत् । भूतृणे ।
भृ भरणे भ्वा० उभ० सक० अनिट् । भरति-ते अभार्षीत् ।
भृ धारणे, पोषणे च जु० उभ० सक० अनिट् । बिभर्त्ति बिभृते
अभार्षीत् अभृत । बिभराञ्चकार-बभार । अभृ भरणः ।
क्लि-सप् च । भृ बिभः ।
भृकुंस (श) पु० भ्रुवा कुंसा(शा) इङ्गितज्ञापनं यस्य ष० भ्रुवः
संप्रसारणम् । स्त्रीवेशधारिणि नटे ।
भृकुटि(टी) स्त्री० भ्रुवः कुटिः भङ्गिः संप्रसारणं वा ङीप् ।
भ्रुभङ्गे । 'रचितभृकुटिबन्धं नन्दिना द्वारिरुद्धे इति हरविलासः ।
भृगु पु० भ्रस्ज्-कु ष० । मुनिभेदे शिवे, शुक्रग्रहे, पर्व्वतसानौ, जम-
दग्नौ, उच्चप्रदेशे च । भृगोर्गोत्रापत्यम् अण् बहुषु लुक् ।
भृगोर्वंश्ये ब०व० । [हैहयपतितो हि तेन रक्षा कृता ।
भृगुपति पु० भृगूणां भार्गववंश्यस्य पतिः । परशुरामे, तेषां ।
भृगुसुत पु० ६ त० । परशुरामे, शुक्राचार्य्ये च ।
भृङ्ग पु० भृ-गन् कित् नुट् च । भ्रमरे कलिङ्गविहगे, भृङ्गराजे,
जारे, भृङ्गारे, भृङ्गरोले च । अभ्रके, गुडत्वचि न०।
भृङ्गजा स्त्री० भृङ्गइव जायते जन-ड । भार्ग्याम् । अगुरुचन्दने न०
भृङ्गपर्णी स्त्री० भृङ्गइव कृष्णं पर्णं यस्याः ङीप् । सूक्ष्मैलायाम् ।
स्वार्थे कन् । अत्रैव ।

**भृङ्गप्रिया** स्त्री० ६त०। माधवीलतायां प्रचुरमधुमत्त्वात् तत्प्रियत्वम्।

**भृङ्गरज** पु० भृङ्गान् रञ्जयति अन्तर्भूतण्यर्थे रन्ज–अच् पृ० नलोपः। भृङ्गराजे (केशुरिया)।

**भृङ्गरजस्** पु० भृङ्गान् रजयति अन्तर्भूतण्यर्थे रन्ज–असुन् नलोपः। भृङ्गराजे। [(केशुरिया)। क्षुपभेदे।

**भृङ्गराज** पु० भृङ्गान् रजयति रन्ज–णिच्–कनिन् नि०। ६त०।

**भृङ्गरिट(टि)** पु० भृङ्ग इव रटति अच्, इन वा पृ० अतइत्त्वम्। शिवपार्श्वचरभेदे।

**भृङ्गरोल** पु० भृङ्ग इव रौति रु–लच्। (भीमरुल) ख्याते कीटभेदे।

**भृङ्गवल्लभ** पु० ६त०। धाराकदम्बे, भूमिकदम्बे च। भृङ्ग इव वल्लभः। भूमिजम्ब्वाम् स्त्री०। [यूथिकायाम् (युइ)।

**भृङ्गानन्दा** स्त्री० भृङ्गान् आनन्दयति आ+नन्द्+णिच्–अच्।

**भृङ्गाभीष्ट** पु० अभि+इष क्त ६त०। आम्रवृक्षे।

**भृङ्गार** पु० बिभर्त्ति जलं भृ–आरक् नि०। स्वर्णमयजलपात्रे, जलपात्रभेदे च (झारी)। भृङ्ग इव ऋच्छति ऋ–अच्। भृङ्गराजे लवङ्गे, सुवर्णे च न०। झिल्लीनामकीटे स्त्री० गौरा० ङीष्। स्वार्थे कन्। तत्रैव।

**भृङ्गि** पु० भृ–गिक् नुट् च। शिवपार्श्वचरभेदे।

**भृङ्गिन्** पु० भृङ्ग अस्त्यर्थे इनि। शिवपार्श्वचरभेदे वटवृक्षे च।

**भृङ्गी** स्त्री० भृ–गन् कित् नुट् च गौरा० ङीष्। अतिविषायाम्।

**भृङ्गीफल** पु० भृङ्ग्या० अतिविषाया इव फलमस्य। आम्रातके।

**भृङ्गेष्टा** स्त्री० ६त०। घृतकुमार्य्यां, भार्ग्यां, तरुण्यां, काकजम्ब्वाञ्च

**भृज** भर्ज्जने भ्वा० आत्म० सक० सेट्। भर्ज्जते अभर्ज्जिष्ट। निष्ठायां नेट् भृक्तः। [(भाजनाखोला) भर्ज्जनपात्रभेदे।

**भृज्जन** पु० भर्ज्ज्यतेऽनेन भ्रस्ज–ल्युट् पृ० संप्रसारणम्।

**भृतक** त्रि० भृ–क्त स्वार्थे कन्। वेतनेन कर्मकरे, "भृतकाध्यापको यश्चे"ति मनुः। [भृत्ये च।

**भृति** स्त्री० भृ–क्तिन्। भरणे, पोषणे च। करणे क्तिन्। वेतने,

भृतिभुज् त्रि० भृतिं वेतनं भुङ्क्ते भुज–क्विप् । वेतनोपजीविनि कर्मकरे
भृत्य पु० भृ–क्यप् तुक् च । दासे । भरणीये त्रि० । भावे क्यप् ।
भरणे स्त्री० टाप् । 'कुमारभृत्याकुशलै'रिति रघुः ।
भृ(भ्र)मि पु० भ्रम–इन् पृ० वा संप्रसारणम् । (घूर्णी) वायुभेदे,
भ्रमणे च । "किमु चक्रभ्रमिकारिता गुणा" इति नैषधम् ।
भृश अधःपतने दि० पर० अक० सेट् । भृश्यति । अभृशत् अभ-
र्शीत् । क्त्वा वेट् ।
भृश न० भृश–क । अतिशये । तद्वति त्रि० ।
भृष्ट त्रि० भ्रस्ज–क्त । जलोपसेकं विना वालुकाग्निसंयोगेन पक्वे
भॄ भर्त्सने भर्जने भरणे च क्र्यादि० पु० पर० सक० सेट् । भृणाति
अभारीत् । [ मण्डूकपर्ण्यां स्त्री० ङीप् ।
भेक पु० भी–कन् कस्य नेत्वम् (व्याङ) जन्तुभेदे, मेघे च ।
भेकपर्णी स्त्री० भेकइव पर्णमस्याः ङीप् । मण्डूकपर्ण्याम् ।
भेड पु० भी–ड तस्य नेत्त्वम् । मेषे, (भेड़ा) ।
भेद पु० भिद–घञ् । पृथक्करणे अन्यतो विशेषे, राज्ञां विपक्ष ग्राम-
नार्थं तत्पक्षीयामात्यादिभेदने, न्यायमतोक्ते अन्योन्याभावे च
यथा घटात् पटस्य भेदः (तादात्म्याभावः) ।
भेदक त्रि० भिद–ण्वुल् । रेचके, विदारके, भेदकारके, विशेषणे च ।
भेदन त्रि० भेदयति भिद–णिच् ल्यु । विरेचने, विशेषणे च हिङ्गौ
अम्लवेतसे पु० न० । भिद–भावे ल्युट् । विदारणे ।
भेदित त्रि० भिद–णिच्–क्त । विदारिते, भिन्ने च । [यदि"त्यमरः ।
भेद्य त्रि० भिद–ण्यत् । विदार्ये विशेष्ये च । "त्रिष्वेषां भेद्यगामि
भेरि(री) स्त्री० भी–क्रि वृद्ध्या० नि० वा ङीप् । दुन्दुभ्याम्याम् पटहे
"रवः प्रगल्भाहतभेरिसम्भवः" इति कुमारः इत्युक्ते, ततः
शङ्खाश्च भेर्यश्चे"ति गीता ।
भेल पु० भी–रन् रस्य लः । नद्यादितारणार्थे प्लवे (भेला) ख्याते,
पदार्थे । स्वार्थे कन् तत्रैव । [वद्भिन्न क्लबः ।
भेष भये भ्वा० उभ० अक० सेट् भेषति ते अभेषीत् अभेषिष्ट ।

भैषज न० भेष–षञ् भेषं रोगभयं जयति जि–ड । औषधे ।

भैषजाङ्ग न० ६त० । औषधस्य अनुपेये वस्तुनि ।

भैक्ष न० भिक्षैव तत्समूहो वा अण् । भिक्षायां, भिक्षासमूहे च ।

भैक्षचर्य्या स्त्री० चर–भावे क्यप् ६त० । भिक्षाक्रियाकरणे ।

भैक्ष्य न० भिक्षाणां समूहः ष्यञ् । भिक्षासमूहे ।

भैमी स्त्री० भीमेनोपासितां तस्येदं वा अत्यण् ङीप् । माघशुक्लैकादश्याम्, भीमराजस्य पुत्र्यां दमयन्त्याञ्च । "विहाय भैमीमपदर्पथा कये"ति नैषधम् ।

भैरव न० भीरोरिदम् अण् । भये, तद्वति त्रि० । नाट्यादिप्रसिद्धे भयानके रसे । भयसाधने त्रि० स्त्रियां ङीप् । शङ्करे, तदवतारभेदे रागभेदे, नटभेदे च पु० । शिवपत्न्यां स्त्री० ङीप् ।

भैषज्य न० भेषजमेव भिषजः कर्म वा ष्यञ् । औषधे ।

भो अव्य० भा डो । सम्बोधने ।

भोग पु० भुज–कर्मादौ घञ् । सुखे, सुखादुःखाद्यनुभवे, पण्य स्त्रीणां भाटकादिरूपे वेतने, सर्पस्य फणायां, तत्काये, धने, पालने, आहारे च । अर्श आद्यच् । सर्पे । आधारे घञ् । देहे, माने च । ज्योतिषोक्ते ग्रहाणां तत्तद्राशिस्थितौ, भूम्यादिषु उत्पन्नद्रव्यविनियोगे, यथेष्टविनियोगे च "बन्धूनामविभक्तानां भोगं नैव प्रदापये"दिति स्मृतिः ।

भोगदेह पु० भुज्यते सुखदुःखादिकमत्र भुज–आधारे घञ् कर्म० । पुण्यपापफलभोगार्थे देहे, "प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते" इति स्मृतिः ।

भोगभूमि स्त्री० भोगस्यैव भूमिः स्थानम् । भारतवर्षातिरिक्ते वर्षे तत्र हि भोग एव न कर्म इति शास्त्रे स्थितम् ।

भोगवती स्त्री० भोगः सर्पशरीरं भूम्नाऽस्त्यस्याम् मतुप् मस्य वः । पातालगङ्गायाम् "भोगवती च पाताले" इति पुराणम् ।

भोगिन् स्त्री० भोग+अस्त्यर्थे इनि । सर्पे, नृपे, ग्रामाध्यक्षे, नापिते च । भोगयुक्ते त्रि० । भोगवदादयः सर्पे । भोगयुक्ते त्रि० ।

भोगिवल्लभ पु० ईत० । चन्दने ।

भोगीन्द्र पु० भोगिनामिन्द्रः स्वामित्वात्, भोगी इन्द्र इव वा, अनन्तदेवे वासुकौ च भोगीशादयोऽप्यत्र ।

भोग्य न० भुज-ण्यत् कुत्वम् । धने, धान्ये च । भोगार्हे त्रि० । भोगार्हस्त्रियां, वेश्यायाञ्च स्त्री० ।

भोज पु० भुज-अच् । स्वनामख्याते देशभेदे धारापुरस्य नृपभेदे धन्यः श्रीभोजराजस्त्रिभुवनविजयी"त्युद्भटः ।

भोजकट पु० भोजाख्ये देशे ।

भोजन न० भुज-ल्युट् । कठिनद्रव्यस्य गलविलाधः संयोजने ।

भोज्य त्रि० भुज-ण्यत् भक्षणार्थत्वान्न कुत्वम् । भक्षणीयद्रव्यमात्रे ।

भोटाङ्ग पु० (भोटान) देशभेदे ।

भोस् अव्य० भा-डोसि । सम्बोधने, प्रश्ने विषादे च ।

भौतिक त्रि० भूतानि पृथिव्यादीनि पिशाचान् वा अधिकृत्य जातानि ठक् । भूताधिकारेण जाते उपद्रवे व्याध्यादौ ।

भौम पु० भूमेरपत्यं तस्या इदं वा अण् । नरकासुरे "त्वयि भौमं गते जेतु"मिति माघः । मङ्गलग्रहे च । भूमिभवे त्रि० ।

भौमरत्न न० भौमप्रियं रत्नं शाक० । प्रवाले ।

भौमिक त्रि० भूमौ अधिकृतः ठक् । भूम्यधिकारिणि ।

भौरिक त्रि० भूरिणि स्वर्णे अधिकृतः ठन् । स्वर्णाध्यक्षे ।

भ्यस भये भ्वा० आ० अक० सेट् । भ्यसते अभ्यसिष्ट ।

भ्रण शब्दे भ्वा०पर० सक० सेट् । भ्रणति अभ्राणीत् अभ्रणीत् ।

भ्रकुं (ग)स पु० भ्रुवा कुं (गा)सा यस्य पृ० नि० । भ्रकुंसशब्दार्थे ।

भ्रकुटि(टी) स्त्री० भ्रुवः कुटिर्भङ्गः पृ० वा ङीप् । भ्रूभङ्गे ।

भ्रम चलने भ्वा० पर० सक० सेट् । भ्रमति अभ्रमत् अभ्रमीत् ।

भ्रम चलने दिवा० पर० सक० सेट् शमा० । भ्राम्यति अभ्रमीत् ।

भ्रम चलने, भ्वा० पर० अक० सेट् । भ्रमति अभ्रमीत् फणा० भ्रेमतुः बभ्रमतुः । चङि नह्रस्वः । ज्वला० भ्रमः भ्रामः ।

भ्रम पु० भ्रम-घञ् । मिथ्याज्ञाने ( अन्यथाभूतस्य वस्तुनोऽन्यथारूपेण

स्थाने ) जलनिर्गमस्थाने, कुन्दे, ( कुंद ) भ्रमणे च ।
भ्रमर पु० भ्रम-करन् । मधुकरे ।
भ्रमरक पु० भ्रमर इव कायति कै-क । ललाटलम्बिते भ्रमरतुल्ये चूर्णकुन्तले । स्वार्थे कन् । भ्रमरे, भृङ्गे, बालमधिकायाञ्च ।
भ्रमरप्रिय पु० ६त० । धाराकदम्बे ।
भ्रमरातिथि पु० भ्रमरः अतिथिर्यस्य । चम्पके ।
भ्रमरानन्द पु० भ्रमरान् आनन्दयति आ-नन्द-णिच्-अच् । वकुले ।
भ्रमरालक पु० भ्रमर इव अलति पर्य्याप्नोति अल-ण्वुल् । ललाटस्थिते भ्रमरतुल्ये चूर्णकुन्तले ।
भ्रमरी स्त्री० भ्रम-करन् गौ० ङीष् । जतुकायां भ्रमरभार्य्यायाञ्च ।
भ्रमरेष्ट पु० ६त० । श्योनाकवृक्षे । भार्य्यां भूमिजम्ब्वाञ्च स्त्री० ।
भ्रमरोत्सवा स्त्री० भ्रमराणामुत्सवो मोदोयत्र । माधवीलतायाम् ।
भ्रश अधःपतने दि० पर० सक० सेट् । भ्रश्यति अभ्राशीत् अभ्रशी-त् । क्त्वा सेट् ।
भ्रष्ट त्रि० भ्रश-क्त । च्युते अधःपतिते ।
भ्रस्ज पाके तु०उ०सक०अनिट् । भृज्जति अभ्राक्षीत् । बभर्ज-बभ्रज्ज
भ्राज दीप्तौ भ्वा० आत्म० फणा० अक० सेट् । भ्राजते अभ्राजिष्ट भ्रेजे बभ्राजे । चङि वा ह्रस्वः । अबभ्राजत् ।
भ्राजिष्णु त्रि० भ्राज-इष्णुच् । दीप्तिशीले ।
भ्रातृ पु० भ्राज-तृच् पृ० । एकपितृजाते ( भाइ ) इति ख्याते स्वसा सहोक्तौ । भ्रातृभगिन्योः द्वि०व० ।
भ्रातृज पु० भ्रातुर्जायते जन-ड । भ्रातुष्पुत्रे । तत्कन्यायां स्त्री० ।
भ्रातृव्य पु० भ्रातुः पुत्रः भ्रातृ+व्यत् भ्रातुष्पुत्रे, शत्रौ च ।
भ्रातृश्वशुर पु० भ्रातापि पत्युर्ज्येष्ठभ्रातापि श्वशुरस्थानीयत्वात् । पितृतुल्यत्वात् । (भासुर) भर्त्तुर्ज्येष्ठभ्रातरि 'भर्त्तुःश्वशुरता ज्येष्ठे' इति भारतान्तरम् ।
भ्रात्रीय पु० भ्रातुरपत्यमिदं वा छ । भ्रातुष्पुत्रे भ्रातृसम्बन्धिनि त्रि० ।
भ्रान्त न० भ्रम-भावे क्त । भ्रमणे 'जनस्थाने भ्रान्तमि'ति नाटकम् ।

कर्त्तरि क्त। मिथ्याज्ञानयुक्ते, भ्रमणयुक्ते च त्रि०। धुस्तूरे पु०।

**भ्रान्ति** स्त्री० भ्रम-क्तिन्। भ्रमणे, अयथार्थज्ञाने च।

**भ्रान्तिमत्** पु० अलङ्कारोक्ते अर्थालङ्कारभेदे।

**भ्रामक** पु० भ्रामयति भ्रम-ण्वुल्। शृगाले, धूर्त्ते, सूर्य्यावर्त्ते मणौ, अयस्कान्ते प्रस्तरे च।

**भ्रामर** न० भ्रमरेण संभृतं सम्पादितम् अस्येदं वा अण्। मधुनि। भ्रमरसम्बन्धिनि त्रि० अयस्कान्ते पु०। 'भ्रामरं रूपं कृत्वासंख्येयषट्पद'मित्युपक्रम्य 'भ्रामरीति च मां लोकाः' इति चण्ड्यामुक्ते चण्डीमूर्त्तिभेदे।

**भ्राश** भासे भ्वा० प० कण्वा० अक० सेट्। भ्राशति भ्राश्यति अभ्राशिष्ट। भ्रेशे बभ्राशे। षित्त्व न ह्रस्वः। अण् भ्राशणुः।

**भ्राष्ट्र** न० भ्रष्टस्येदं तत्पचनसाधनत्वात् (भाजनाखोला) भर्ज्जनपात्रभेदे। अष्टुरिदम् अण्। भ्राष्ट्रमित्यप्यत्र।

**भ्रास** दीप्तौ भ्राशवत् सर्वम्।

**भ्री** भये अक० भरणे सक० क्र्या० वा पा० पर० अनिट्। भ्रीणाति भ्रिणाति अभ्रैषीत्।

**भ्रुड** संवरणे सक० संघाते अक०तु०कु०पर०सेट्। भ्रुडति अभ्रुडीत्

**भ्रु(भ्रू)कुंस** पु० भ्रुवः कुंसा यस्य पृ० वा ह्रस्वः। भ्रकुंसवत्।

**भ्रु(भ्रू)कुटि** ईत०। पृ० वा ह्रस्वः। भ्रकुटिवत् सर्वम्।

**भ्रू** स्त्री० भ्रम-डू। नेत्रयोरूर्द्ध्वस्थायां रोमराजौ।

**भ्रूक्षेप** पु० ६त०। भ्रूभङ्गे सङ्केतज्ञापनाय भ्रुवोस्तिर्य्यक्चालने 'भ्रूक्षेपमात्रानुमितप्रवेशामि'ति कुमारः। [ भ्रुणत।

**भ्रूण** आशायां विशङ्कायाञ्च चु० आ०त०सक० सेट्। भ्रूणयते अबु-

**भ्रूण** पु० भ्रूण-घञ्। स्त्रीणां गर्भे, बालके च।

**भ्रूणघ्न** त्रि० भ्रूणं गर्भं हन्ति हन-क। भ्रूणहत्याकारके। क्विप् भ्रूणहाप्यत्र।

**भ्रूभङ्ग** पु० ६त०। क्रोधादिज्ञापनार्थं भ्रुवस्तिर्य्यक्चालने "भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्ये"ति कुमारः।

भ्रेज भासि भ्वा० आत्म० अक० सेट् । भ्रेजते अभ्रेजिष्ट । चङि न ह्रस्वः ।

भ्रे(भ्ले)ष पतने चलने च अक० भ्वा० उभ० सेट् । भ्रे(भ्ले)षति ते अभ्रे(भ्ले)षीत् अभ्रे(भ्ले)षिष्ट । चङि न ह्रस्वः ।

भ्रेष पु० भ्रेष–घञ् । उचितस्थानात् पतने ।

भ्लक्ष भक्षणे भ्वा० उभ०सक० सेट् । भ्लक्षति ते । अभ्लक्षीत् । अभ्लक्षिष्ट । दुर्गमते भ्लृक्षधातुरयम् ।

भ्लाश दीप्तौ वा दि० पक्षे भ्वा० आ० अक० सेट् फणा० । भ्लाश्यते भ्लाशते अभ्लाशिष्ट भ्लेशे बभ्लाशे । (अशु) भ्लाशथुः । वोपदेवमते भ्लाशधातुरयम् ।

# म

म पु० मा क । चन्द्रे, शिवे ब्रह्मणि, यमे समये, मधुसूदने च शिवे हलन्तमकारोऽपि"मकारस्तु महेश्वर"इति प्रणवान्तर्गतमकारार्थोक्तेः

मक भूषे गतौ च भ्वा० आ० सक० सेट् इदित् । मङ्कते अमङ्किष्ट ।

मकर पु० मनुष्यं क्रणाति हिनस्ति कृ–अच् पृ० । जलजन्तुभेदे । मकराकारत्वात् मेषादितो दशमे राशौ च । मकि–घञ् पृ० तं राति–रा–क । निधिभेदे । [ कर्णभूषणे ।

मकरकुण्डल पु० मकराकृति कुण्डलं कर्णभूषणम् । मकराकृतौ

मकरकेतन पु० मकरः मकरचिह्नितः केतनो ध्वजो यस्य । कन्दर्पे मकरकेतुप्रभृतयोऽप्यत्र ।

मकरन्द पु० मकरमपि द्यति कामजनकत्वात् दो–अवखण्डने क पृ० मुम् । पुष्पमधौ, कुन्दवृक्षे च । किञ्जल्के न० ।

मकरन्दवती स्त्री० मकरन्द+बाहुल्ये मतुप् मस्य वः ङीप् । पाटलायाम् । मधुविशिष्टे त्रि० । [ करञ्जभेदे ।

मकराकार पु० मकरस्येवाकारः फलस्य यस्य । ( काटाकरमचा)

मकरालय पु० ६त० । समुद्रे । मकरावासादयोऽप्यत्र ।

मकुट न० मकि+भूषणे उट पृ० । शिरोभूषणे मुकुटे ।

**मकुर** पु० मकि-उरच् पृ० दर्पणे, बकुलवृक्षे, कुलालदण्डे, कलिकायाञ्च
**मकुल** पु०न० मकि-उलच् पृ० । मुकुले, बकुलवृक्षे च ।
**मकुष्ठक** पु० मकि-भूषायां उ-पृ० मकुं भूषां स्तकति प्रतिहन्ति
स्तक-अच् सुषामा० षत्वम् । वनमुद्गे (मुगानि) ।
**मकुष्ठ** पु० कुत्सितं तिष्ठति स्था-क अम्बष्ठा० षत्वम् मीयते मा-उ
कर्म० । व्रीहिभेदे, मृदुगामिनि त्रि० । स्वार्थे कन् । वनमुद्गे ।
**मकूलक** पु० मकि-ऊलच् पृ० दन्तीवृक्षे, मुकुले च ।
**मक्क** गतौ भ्वा०आ०सक० सेट् । मक्कते अमक्किष्ट ।
**मक्कुल** न० मक्क-उलच् । शिलाजतुनि ।
**मक्ष** रोषे संघाते च भ्वा०पर०अक० सेट् । मक्षति अमक्षीत् ।
**मक्षवीर्य्य** पु० मक्षं संहतं वीर्य्यं यस्मात् ५ब०। प्रियालवृक्षे ।
**मक्षि(क्षी)का** स्त्री० मक्ष-कुन् टाप् अत इत्त्वम् पृ० वा दीर्घः ।
(माछि) कीटभेदे । [सिक्थकाधारे पदार्थे (मौचाक) ।
**मक्षिकासन** पु० ६त० मक्ष सिकन् तया आस्यतेऽत्र ल्युट् ।
**मख** सर्पणे भ्वा०पर०सक० सेट् । मखति अमाखीत् अमखीत् ।
**मखि** सर्पणे भ्वा०पर० सक० सेट् इदित् । मङ्खति अमङ्खीत् ।
**मख** पु० मख-घ । यज्ञे । [ मूलजे फलभेदे ।
**मखान्न** न० मखकाले भोज्यमन्नं मुन्यन्नत्वात् । (माखना) जलजाते
**मग** सर्पणे भ्वा०पर०सक० सेट् इदित् । मङ्गति अमङ्गीत् ।
**मगध** पु० मङ्ग्यते अधोगम्यतेऽनेन मगि-घञ् पृ० मगं दोषं पापं
वा दधाति धा-क । देशभेदे । तद्देशस्थे जने ब०व० ।
**मगधोद्भवा** स्त्री० मगधदेशे बाहुल्येनोद्भवति अच् । पिप्पल्याम्
तद्देशप्रचुरभवत्वात्तथात्वम् ।
**मघ** कैतवे, द्यूतक्रीडादौ अक० गतौ निन्दायां आरम्भे च सक०भ्वा०
आ० सेट् इदित् । मङ्घते अमङ्घिष्ट ।
**मघ** भूषणे भ्वा०पर०सक० सेट् इदित् । मङ्घति अमङ्घीत् ।
**मघवत्** पु० मह-पूजार्थे क हस्य घः मघः पूजा अस्त्यर्थे मतुप् मस्य
वः । इन्द्रे मघवन्तौ मघवतः । तत्पत्न्यां ङीप् मघवती ।

मघवन् पु० मह–कनिन् नि० । इन्द्रे मघवा मघवानौ मघोनः । तदुपपत्न्यां ङीप् मघोनी ।

मघा स्त्री० मह–घ हस्य घत्वम् । अश्विन्यादिषु दशमे नक्षत्रे तस्याश्च पञ्चतारात्मकत्वात् बहुत्वमपि "पितरः स्पृहयन्त्यन्नमष्टकासु मघासु चेति" स्मृतिः । मघां मूलञ्च वर्जयेत्"इति मघायां पिण्डदानस्येति स्मृतिस्तु सम्प्रदायस्यैकत्वाभिप्रायेण ।

मघात्रयोदशी स्त्री० मघानक्षत्रेण युक्ता त्रयोदशी । भाद्रकृष्णत्रयोदश्यां तत्रैव मघानक्षत्रसंयोगसम्भवात् "प्रोष्ठपद्यामतीतायां मघायुक्ता त्रयोदशी" इति स्मृतिः ।

मघी पु० मघानक्षत्रे भवः अण् मघौ पु० ह्रस्वः ङीप् । मघानक्षत्रस्य रविभुज्यमानयुक्ते काले पौरभाद्रमासे जायमाने (आउश)धान्ये

मङ्कुर पु० मकि–उरच् । दर्पणे ।

मङ्क्षु अव्य० मस्ज–उन् शैघ्र्ये सत्यार्थे च । पु० [illegible] स्वत्वमपि ।

मङ्गल पु० मगि–अलच् । भूमिसुते, ग्रहभेदे प्रयत्ने अभीष्टार्थसिद्धौ च । तद्वति त्रि० । दुर्गायां, हरिद्रायां, दूर्वायां, पतिव्रतायाञ्च स्त्री० ।

मङ्गलचण्डिका स्त्री० मङ्गलवारे पूज्यायां चण्डिकायां दुर्गाभेदे ।

मङ्गलच्छाय पु० मङ्गला प्रशस्ता छाया यस्य । वटवृक्षे ।

मङ्गलपाठक पु० मङ्गलार्थं स्तुतीः पठति पठ–ण्वुल् । स्तुतिपाठके "आहूयतां मङ्गलपाठक ! यैरूपायतामि"ति वेणीसंहारः ।

मङ्गलप्रदा स्त्री० मङ्गलं प्रददाति प्र+दा–क । हरिद्रायाम् ।

मङ्गल्य न० मङ्गलाय हितं यत् । चन्दने, मङ्गलागुरुणि, स्वर्णे, सिन्दूरे, दध्नि च । रुचिरे मङ्गलकारे च त्रि० । "सर्वमङ्गलमङ्गल्ये" इति चण्डी । अश्वत्थे, बिल्वे, जीरके, मसूरके, नारिकेले, कपित्थे, रीठाकरञ्जे, त्रायमाणौषधे च पु० ।

मङ्गल्यक पु० मङ्गलग्रहस्य प्रियः तद्दोषनिवारणार्थं दीयमानत्वेन शास्त्रविधानात् । मसूरे ।

मङ्गल्यकुसुमा स्त्री० मङ्गल्यं कुसुमं यस्याः । शतपुष्प्याम् ।

**मङ्गल्या** स्त्री० मङ्गलाय हिता यत् । जीवन्त्यां, मल्लिकागन्धयुक्तागुरुणि, रोचनायाम्, अवाक्पुष्प्याम्, शम्यां शुक्लवचायां, प्रियङ्गौ, माषपर्ण्यां, शतपुष्प्याम्, ऋद्धिनामौषधौ, हरिद्रायां, दूर्वायां, दुर्गायाञ्च स्त्री० ।

**मच** दम्भे शाठ्ये च अक० भ्वा० आ० सेट् इदित् । मञ्चते अमञ्चिष्ट

**मच** उच्छ्रायकरणे, धारणे, पूजायां च सक० दीप्तौ अक० भ्वा० आत्म० सेट् इदित् । मञ्चते अमञ्चिष्ट ।

**मचर्चिका** स्त्री० चर्च-धात्वर्थनिर्देशे ण्वुल् मस्य शस्तोरिव चर्चिका ख्यानम् । प्रशस्ते । अव्युत्पन्नोऽयमित्यन्ये ।

**मज्जकृत्** न० मज्जानं करोति कृ-क्विप् । देहस्थे अस्थिरूपे कोषे अन्नादिषु भुक्तेषु रसादिपरिपाकेन क्रमेण शोणितमांसत्वगस्थिमज्जशुक्राणामुत्पत्तेः अस्थ्नः मज्जाकरत्वम् ।

**मज्जन्** पु० मस्ज-कनिन् । अस्थिजाते अस्थिमध्यस्थे स्नेहाकारे पदार्थे, वृक्षादेः सारांशे च ।

**मज्जन** न० मस्ज-ल्युट् । स्नाने ।

**मज्जसमुद्भव** न० मज्जतः समुद्भवति सम्+उद्+भू-अच् ५त० । शुक्रे तस्य मज्जजातत्वम् मज्जकृच्छब्दे द्रष्टव्यम् ।

**मज्जा** स्त्री० मस्ज-अच् टाप् । अस्थिसारे वृक्षादेः सारांशे च ।

**मज्जाज** न० मज्जातो जायते जन-ड । भूमिजे गुग्गुलौ ।

**मज्जारस** पु० मज्जायाः रसः परिपाकः । शुक्रे तस्य मज्जासम्भवत्वं मज्जकृच्छब्दे उक्तम् ।

**मञ्च** पु० मचि-उच्छ्राये घञ् । खट्वायाम् (मांचा) वंशनिर्मिते उच्चासने उच्चमञ्चरूपभेदे "मञ्चस्थं रघुनन्दनमि"ति पुराणम् । स्वार्थे कन् । "तत्रैव वृद्धोऽन्धः पतिरेष मञ्चकगतः" इति सा० द० २प० ।

**मञ्जर** पु० मन्ज-अरच् । तिलकवृक्षे, मुक्तायाञ्च ।

**मञ्जरि(री)** स्त्री० मञ्जु ऋच्छति ऋ-इन्-शक० पर० वा ङीप् । अभिनवोद्गतायां सुकुमारायां पल्लवाङ्कुररूपायां वल्लर्याम् ङीबन्तस्तु तत्र, मुक्तायां, तिलकलतायां, तुलस्याञ्च ।

मञ्जरीनम्र पु० मञ्जर्य्येव तद्भरस्यायामपि नम्रः । वेतसे ।

मञ्जि(ञ्जी) स्त्री० मन्ज–इन् वा ङीप् । मञ्जर्य्याम् ।

मञ्जिफला स्त्री० मञ्जिः मञ्जरी फले यस्याः । कदल्याम् ।

मञ्जिष्ठा स्त्री० अतिशयेन मञ्जिमती इष्ठन् । स्वनामख्यातायां लतायाम्

मञ्जीर न० मन्ज–ईरन् । नूपुरे, "मञ्जुलशिञ्जितमञ्जीरे कलगम्भीरे" इति गी० १०प० । दधिमन्थनदण्डबन्धनस्तम्भे च ।

मञ्जु त्रि० मन्ज–उन् । मनोहरे ।

मञ्जुघोष पु० तन्त्रोक्ते उपास्यदेवभेदे ।

मञ्जुल त्रि० मन्ज–उलच् । मनोहरे, निकुञ्जे वेतसे च न० ।

मञ्जूषा स्त्री० मन्ज–ऊषन् । (पेटरा) पेटिकायाम् मञ्जिष्ठायाञ्च ।

मट सादे भ्वा० पर० सक० सेट् । मटति अमटीत् अमाटीत् ।

मटची स्त्री० मट–अचि ङीप् । पाषाणवृष्टौ "मटचीहतेषु कुरुष्वि"ति छान्दोग्यश्रुतिः ।

मठ वासे अक० मर्द्दने सक० भ्वा० पर० सेट् । मठति अमठीत्-अमाठीत् ।

मठ आध्याने भ्वा० सक० सेट् इदित् । मण्ठते अमण्ठिष्ट ।

मठ पु० मठत्यत्र मठ–घञर्थे क । छात्रादिनिवासे, देवागारे, गन्त्रीरथे च

मड भेदे चु० उभ० अक० सेट् इदित् । मण्डयति-ते अममण्डत्-त । विभागे भ्वा० आत्म० मण्डते ।

मड भूषणे चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् इदित् । मण्डयति ते मण्डति अममण्डत्-त अमण्डीत् ।

मण्डक पु० मडि–कुन् पृ० नलोपः । धान्यभेदे (मेडुया) ।

मड्डु पु० मज्जन्ति अन्ये यस्मात् अत मज्ज+डु पृ०। वाद्यभेदे (त्रिपुल-डमरी) । स्वार्थे मन् अत्रैव ।

मण अव्यक्तशब्दे भ्वा० प० अक० सेट् । मणति अमाणीत् अमणीत् ।

मणि(णी) पु० स्त्री० मण–इन् स्त्रीत्वपक्षे वा ङीप् । कुमारादौ रत्ने "मणिहारावलिरामणीयकमिति, स्वपनीयमणीमहस्थितमेति च" नैषधम् अजगलपालभेदे अलिञ्जरे (जाला) लिङ्गाग्रे, नागभेदे मणिबन्धे च । स्वार्थे कन् अलिञ्जरे न० ।

मणिकर्णिका स्त्री० मणिकर्णः मणिमयकर्णभूषणमस्त्यस्याम् ठन् विष्णु-
तपस्यादर्शनात् विस्मयेन शिवस्य मणिमयकुण्डलपतनस्थाने काशीस्थे
तीर्थभेदे ।

मणिकार पु० मणिमयं भूषणं करोति कृ-अण् । (ज.हरि) मणि-
मयभूषणकारके प्रत्यक्षादिचतुःखण्डात्मकतत्त्वचिन्तामणिनामक-
ग्रन्थकारे गङ्गेशोपाध्याये च ।

मणिकूट पु० मणीनां कूट इव मणिप्रचुरं कूटं शृङ्गं यस्य । उत्तर-
देशस्थे पर्वतभेदे । [भार्ङ्गीवृक्षे च ।

मणिच्छिद्रा स्त्री० मणिरिव छिद्रमस्याः । मेदानामौषधे, ऋष-

मणित न० मण-क्त । रतिकाले स्त्रीणामव्यक्तशब्दभेदे ।

मणिद्वीप पु० मणिमयः मणिप्रचुरः द्वीपः । क्षीरसमुद्रमध्यस्थे ध्येये
द्वीपभेदे ।

मणिपर्वत पु० ६त० । पर्वतभेदे ।

मणिपूर न० मणिभिरिव पूर्यते प्रचुरदीप्तिमत्त्वात् । तन्त्रोक्ते नाभि-
देशस्थे सुषुम्णानाडीमध्यगते पद्माकारे चक्रभेदे ।

मणिबन्ध पु० मणिर्बध्यतेऽत्र बन्ध-घञ् । प्रकोष्ठपाण्योर्मध्यस्थे कर-
ग्रन्थौ, सैन्धवलवणाकरे पर्वतभेदे च ।

मणिभूमि स्त्री० ६त० । मणीनामाकरे । [मण्डपे ।

मणिमण्डप पु० मणिमयः मणिप्रचुरः मण्डपः । मणिखचिते

मणिमन्थ पु० मणिर्मथ्यते निःसार्यतेऽस्मात् मन्थ-अपादाने घञ् ।
पर्वतभेदे । स कारणत्वेनास्त्यस्य अच् । सैन्धवलवणे तस्य मणिमन्थ
( सन्ध ) सिन्धुदेशान्तिकस्थपर्वतजातत्वात् ।

मणिमाला स्त्री० ६त० । मणीनां मालेव । हारभेदे दन्तक्षतविशेषे,
दीप्तौ, लक्ष्म्याञ्च । पु० ।

मणिराग न० मणेरिव रागो वर्णोऽस्य । हिङ्गुले । ६त० । मणिवर्णे

मणिबीज पु० मणय इव बीजान्यस्य । दाडिमे ।

मणिसर पु० मणीन् सरति कारणत्वेन गच्छति सृ-अच् । मणिख-
चिते हारभेदे ।

मत्तवारण पु० कर्म०। मत्तहस्तिनि। मत्तं वारयति वृ-णिच्-ल्यु। प्रासादवरण्डे न०। (वारेण्डा)।

मत्तालम्ब पु० मत्तैरालम्ब्यते आ+लबि-घञ्। (वारेण्डा) प्रासादवरण्डे।

मथ गुप्तभाषणे चु० आ० सक० सेट् इदित्। मन्थयते अममन्थत।

मत्सर पु० मद्-सर। अन्यशुभद्वेषे, परसम्पत्त्यसहने, क्रोधे च। -तद्वति, कृपणे च त्रि०। मक्षिकायां स्त्री०। [मत्सरी।

मत्स्य पु० मद्-स्यन्। जलजन्तुभेदे (माछ) जातौ स्त्रियां ङीप्।

मत्स्यकरण्डिका स्त्री० मत्स्यानां करण्डिकेवाधारः। (खालुइ) मत्स्यरक्षणाधारे पात्रभेदे। [जलपिप्पल्याञ्च।

मत्स्यगन्धा स्त्री० मत्स्यस्येव गन्धोऽस्याः। व्यासमातरि, सत्यवत्याम्,

मत्स्यण्डी स्त्री० मन्दं स्यन्दते अच् पृ०। खण्डविकारे (मिच्ारि) स्वार्थे कन्। अत्रैव।

मत्स्यधानी स्त्री० मत्स्या धीयन्तेऽस्यां धा-ल्युट् ङीप्। मत्स्यरक्षणाधारे (खालुइ) पात्रभेदे। [रुहम् (कटकी)

मत्स्यपित्ता पु० मत्स्यस्य पित्तमिव रसोऽस्याः अच्। कटुरोहि-

मत्स्यरङ्क पु० मत्स्येन रज्यति रन्ज-कर्त्तरि संज्ञायां घञ्। (माछराङ्गा) पक्षिभेदे त्रिभुवनविदितो वा मत्स्यरङ्क इत्युक्तः।

मत्स्यराज पु० इत०। रोहितमत्स्ये।

मत्स्यविन्ना स्त्री० विद-लाभे क्तः मत्स्यो मत्स्यरसो विन्नो यया तुल्य-तिक्तत्वात्। कटुक्याम्।

मत्स्यवेधन न० मत्स्यो विध्यतेऽनेन विध-ल्युट्। वडिशे स्त्रीत्वमपि ङीप्। मद्गुपक्षिणि (पानकौड़ि) पु०।

मत्स्याक्षी पु० मत्स्यस्याक्षीव पुष्पमस्याः। ब्राह्म्यां (ब्रामनहाटि) सो-मलतायां, गण्डदूर्वायां, हिलमोचिकायाञ्च।

मत्स्याङ्गी स्त्री० मत्स्यस्येव तत्पित्तमिवाङ्गं तिक्तत्वात् यस्याः। हिल-मोचिकायाम्। [पिप्पल्याम्।

मत्स्यादनी स्त्री० मत्स्यैरद्यते आस्वाद्यते अद-कर्मणि ल्युट्। जल-

मत्स्योदरी स्त्री० मत्स्यागन्धयुक्तमुदरमस्याः । व्यासमातरि, मत्स्यगन्धायां, काशीस्थे तीर्थभेदे च । [ मथः माथः ।

मथ विलोडने भ्वा०पर०सक०सेट् । मथते अमथीत् ज्वला० वा णः,

मथ वधे सक० क्रोधे अक०भ्वा०पर० सेट् इदित् । मन्थति । अमन्थीत्

मथन न० मथ-ल्युट् । वधे, क्रोधे, विलोडने च । 'क्षीरोदमथनोद्भूत' इति पुराणम् । [ कारिकावृक्षे ।

मथन पु० मथ्यतेऽग्निचयनार्थमसौ मथ-कर्मणि ल्युट् । गणि-

मथित न० मथ-क्त । निर्जलतक्रे । पीड़िते, हते च त्रि० ।

मथुरा स्त्री० मथ-उरच् । स्वनामख्यातायां नगर्याम् ।

मद हर्षे दि० पर० अक० सेट् शमा० । माद्यति अमदत् अमादीत् अमदीत् । निष्ठायामनिट् यथाहिरयं तेन अमददित्येवेति पाणिनीयाः । घटा० मदयति । [ घटा० मदयति ।

मद गर्व्वे दैन्ये च भ्वा० पर०अक० सेट् । मदति अमादीत्-अमदीत्

मद तर्पणे चु० सक० सेट् । मादयते । अमीमदत ।

मद जाड्ये, स्वप्ने मदे च । आमोदे स्तुतौ दीप्तौ यथायथं अक०सक० च भ्वा० आत्म० इदित् । मन्दते अमन्दिष्ट ।

मद पु० मद-अच् । हस्तिगण्डजले, आमोदे गर्व्वे रेतसि, मृगमदे, मत्ततायाम्, नदे, कल्याणकरे वस्तुनि च ।

मदकट पु० मदेन कटति कट-अच् । षण्डे (षाँड़) मदोत्कटे त्रि० ।

मदकल पु० मदेन कलति कल अच् । मत्तहस्तिनि-मदोत्कटे अव्यक्तमधुरकारिणि च त्रि० । [ स्त्री० टाप् ।

मदगन्ध पु० मदस्य हस्तिदानस्येव गन्धोऽस्य । सप्तच्छदवृक्षे मदिरायां

मदघ्नी स्त्री०मदं मदिराजां मत्ततां हन्ति-हन ट ङीप् । पूतिकायाम् ।

मदन पु० माद्यत्यनेन मद-करणे ल्युट् । कामदेवे, सुरायां स्त्री० ङीप् ।

मदनक पु० मदयति मद-णिच्-ल्युट् स्वार्थे कन् । दमनकवृक्षे ।

मदनचतुर्द्दशी स्त्री० मदनस्य तदुपासनार्थां चतुर्द्दशी । चैत्रशुक्लचतुर्द्दश्याम् ।

मदनत्रयोदशी स्त्री० मदनस्योपासनार्था त्रयोदशी । चैत्रशुक्लत्रयो-
दश्याम् । मदनतिथ्यादयोऽप्यत्र ।

मदनमोहन पु० मदनमपि मोहयति मुह-णिच् ल्यु । श्रीकृष्णे ।

मदनसदन न० ६त० । स्त्रीचिह्नभेदे । ज्योतिषोक्ते लग्नावधिके
सप्तमे स्थाने च । [ दशाभेदे ।

मदनावस्था स्त्री० मदनकृतावस्था । कामिनां स्मरकृते उन्मादादौ

मदनी स्त्री० माद्यत्यनया मद-ल्युट् । सुरायाम्, मृगनाभौ, अति-
मुक्तके च ।

मदभञ्जिनी स्त्री० मदं भनक्ति भञ्ज-णिनि । शतमूल्याम् ।

मदयन्ती स्त्री० मद णिच्-शतृ मो० ङीप् । वनमल्लिकायाम्
( काठमल्लिका ) स्वार्थे कन् ह्रस्वः । तत्रैवार्थे ।

मदयित्नु पु० मद णिच्-इत्नुच् । कामदेवे, मेघे, शौण्डिके, च ।
मद्ये न० । मादके त्रि० ।

मदमार पु० मदं मारयति नाशयति मृ-णिच्-अण् उप० । तूलवृक्षे ।

मदाढ्य पु० मदेन मदकारणेन ( ताड़ि ) रसेनाढ्यः । तालवृक्षे ।
रक्तभिण्ट्याम् स्त्री० ।

मदालापिन् पु० मदेनालपति आ+लप-णिनि । कोकिले ।

मदिरा स्त्री० मद-किरच् । ‘माध्वीकं पानसं द्राक्षं खार्जूरं ताल-
मैक्षवम् । मैरेयं माक्षिकं टाङ्कं मधूकं नारिकेलजम् । मुख्यमन्न-
विकारोत्थं मद्यानि द्वादशैव तु” इत्युक्ते मद्यसामान्ये, मत्तखञ्जने
च । रक्तखदिरे पु० ।

मदोत्कट पु० मदेन दानवारिणा उत्कटः उद्धृतः । मत्तगजे । मदिरायां
स्त्री० । मदोद्धते त्रि० ।

मदोदग्र पु० मदेन उदग्रः उग्रः । मत्ते ‘मदोदग्राः ककुद्मन्त” इति
रघुः । माध्व्यां स्त्री० ।

मदोद्धत त्रि० मदेन उद्धतः । मत्ते । [ पक्षिभेदे ।

मद्गु पु० मस्ज-उ-पृ० धातोर्मदादेशः गुक् च । ( पानिकौडि )

मद्गुर पु० मद-उरच् गुक् च । (मागुर) मत्स्यभेदे स्वार्थे कन् तत्रैव ।

**मद्य** न० माद्यत्यनेन करणे यत् । मदिराशब्दे उक्तमाध्वीकादिद्वादशविधे मादकद्रव्ये । [ धातकीवृक्षे ( धाइफुल ) ।

**मद्यवासिनी** स्त्री० मद्यस्येव वासो गन्धोऽस्त्यस्याः इनि ।

**मद्यवीज** न० ६त० । किण्वादौ ( बाकर ) मद्यकारणे पदार्थजाते ।

**मद्यसन्धान** न० मद्याय मद्योत्पादनाय सन्धानम् अभिषवः । मद्योत्पादनव्यापारे ।

**मद्यामोद** पु० मद्यस्येव आमोदः गन्धोऽस्य । वकुलवृक्षे ।

**मद्र** पु० मद-रक् । विराटपाण्ड्ययोर्मध्ये पूर्व्वदक्षिणमेवाच । मद्रदेशः समाख्यात” इत्युक्ते देशे, हर्षे, मङ्गले च ।

**मधु** न० मन-उ नस्य धः । मद्ये, ‘गर्ज्ज गर्ज्ज क्षणं मूढ ! मधु यावत् पिबाम्यहं” मिति चण्ड्यां । क्षौद्रे, ‘मधु वाता ऋतायते” इति मधुसूक्तम् पुष्परसे ‘मधु द्विरेफः कुसुमैकपात्रे”इति कुमारः । जले मधुररसे च । ‘मधु चरन्ति सिन्धव”इति मधुसूक्तम् । विष्णु कर्णमलजाते दैत्यभेदे । ‘विष्णु कर्णमलोद्भूतावसुरौ मधुकैटभाविति पुराणं कुम्भीनस्या भर्त्तरि दैत्यभेदे वसन्तर्त्तौ, चैत्रमासि, (मौल) वृक्षभेदे, अशोकवृक्षे, यष्टिमधौ च पु० । प्राणिनां शुभाशुभकर्मणि न० । जीवन्त्यां स्त्री० । स्वार्थे कन् । यष्टिमधौ, त्रपुणि च न० ।

**मधुकर** पु० मधूनि करोति सञ्चित्य निष्पादयति कृ-अच् । भ्रमरे, तद्योषिति स्त्री० ङीप् । कामिजने, भृङ्गराजे च पु० । मधुभटादयोऽपि भ्रमरे ।

**मधुकर्कटी** स्त्री० मधुः मधुरा कर्कटी । जम्बीरभेदे, मिष्टखर्जूरिकायाञ्च । स्वार्थे कन् ह्रस्वः टाप् । बीजपूरे ।

**मधुका** स्त्री० मधुना इवार्थे कन् । यष्टिमधौ, मधुपर्णीवृक्षे च ।

**मधुकोष** पु० मध्वर्थं कृतः कोषः । ( मौचाक ) मक्षिकाकृते कोषाकारे पदार्थे

**मधुक्षीर** पु० मधु मधुरं क्षीरमस्य । खर्जूरवृक्षे ।

**मधुखर्जुरी** स्त्री० मधुर्मधुरा खर्जूरी । अतिमिष्टखर्जूरीभेदे । स्वार्थे । कन् । तत्रैव ।

मधुज न० मधुनो जायते जन ड। सिक्थके (मोम)। मधुदैत्य
मेदोजातायां भूमौ स्त्री०।

मधुजम्बीर पु० मधुर्मधुरः जम्बीरः। अतिमिष्टजम्बीरे।(कमलालेबु)।

मधुजित् पु० मधुनामासुरं जितवान् जि भूते क्विप्। विष्णौ मधु-
भिन्मधुरिपुप्रभृतयोऽप्यत्र।

मधुतृण न० कर्म०। इक्षौ। पुंस्त्वमपि। [मधुतिक्तमप्यत्र न०।

मधुत्रय न० मधूनां मधुराणाम् त्रयम्। मधुघृतसितानां त्रये।

मधुदूत पु० मधोर्वसन्तस्य दूत इवाग्रसरत्वात्। आम्रवृक्षे। पाटलायां
स्त्री० ङीप्।

मधुद्रव पु० मधुरो द्रवोऽस्य। रक्तशिग्रौ।

मधुद्रुम पु० मध्वर्थं मद्यार्थं द्रुमः। (मौल) वृक्षभेदे, तत्पुष्पेण
हि पौष्पमधुसम्भवः। [विकारादौ।

मधुधूलि स्त्री० मधुर्मधुरा धूलिरिव। खण्डे (खांड) गुड़-

मधुधेनु स्त्री० दानार्थं कल्पितायां मधुप्रभृतिद्रव्यकृतधेनौ।

मधुप पु० मधु पिबति पा-क। भ्रमरे। मधुपायिनि त्रि०। 'प्रारब्धो
मधुपैरकारणमहो' इत्युद्भटः।

मधुपर्क न० पृच-घञ् मधुनः पर्को योगो यत्र। मधुयुते कांस्यपात्रस्थे
कांस्यपात्रान्तरेणाहृते दध्नि "दधिसर्पिर्जलं क्षौद्रं सिता चैतैश्च
पञ्चभिः प्रोच्यते मधुपर्कस्तु" इत्युक्ते दध्यादिद्रव्यपञ्चके च।

मधुपर्णी स्त्री० मधु इव हितकरं पर्णं यस्याः। गुडूच्यां, गाम्भार्य्यां,
नीलीवृक्षे, वराहक्रान्तायाम्, मधुबीजपूरे च।

मधुपालिका स्त्री० मधूनि पालयति पाल ण्वुल्। गाम्भार्य्याम्।

मधुपीलु पु० कर्म०। मधुरपीलौ।

मधुपुरी स्त्री० मधोर्दैत्यस्य पुरी। मथुरायाम्।

मधुपुष्प पु० मधुप्रचुरं पुष्पं यस्य। मधुद्रुमे, (मौल) शिरीषवृक्षे,
अशोकवृक्षे, वकुलवृक्षे च। दन्तीवृक्षे, नागदन्तीवृक्षे च स्त्री० टाप्।

मधुप्रिय पु० मधु मधुरं प्रियं यस्य। बलरामे। मधुरिव प्रियः। भूमि-
जम्बूवृक्षे। [टाप्।

**मधुफल** पु० मधुरं फलं यस्य । मधुनारिकेले । मधुखर्जूरिकायां स्त्री०

**मधुबकुला** स्त्री० मधु बकुलं यत्र । माधवीलतायाम् ।

**मधुमक्षिका** स्त्री० मधुसञ्चायिका मक्षिका ( मौमाछि ) सरघायाम् ।

**मधुमज्जन्** पु० मधुरं मज्ज सारोऽस्य । आक्षोटकवृक्षे ।

**मधुमत्** त्रि० मधुर्मधुररसोऽस्त्यस्य मतुप् । माधुर्य्यवति 'मधुमत् पार्थिवं रजः" इति मधुसूक्तम् । नदीभेदे, योगशास्त्रप्रसिद्धे योगिनां चित्तवृत्तिभेदे, वैदिकप्रसिद्धे 'मधु वाता" इत्यादौ ऋक्-त्रये, तन्त्रोक्ते देवी नायिकाभेदे च स्त्री० ङीप् ।

**मधुमर्कटी** स्त्री० मधुजाता मर्कटी शाक० । ( मिताखण्ड ) मधु-जाते खण्डे । [ मालत्याम् । स्वार्थे कन् । तत्रैव ।

**मधुमल्लि** ( ल्ली ) स्त्री० मल्ल-इन् वा ङीप् मधुप्रधाना मल्लिः ( ल्ली )

**मधुमूल** न० मधुरं मूलम् । ( मौआलु ) आलुभेदे । [ वा ङीप् ।

**मधुयष्टि** स्त्री० मधुरा यष्टिः काण्डम् । इक्षौ । यष्टिमधौ स्त्री०

**मधुयष्टिका** स्त्री० मधुरा यष्टिरिव इवार्थे कन् । यष्टिमधौ ।

**मधुर** पु० मधु माधुर्य्यं राति रा-क, अस्त्यर्थे र वा । गुडादिस्थे मिष्ट-रसे, माधुर्य्यरस ति, इत्यादौ, मनोहरे, 'मधुरयामधुबोधितमा-धवी"ति माघः प्रिये च त्रि० । रक्तशिग्रौ, राजाम्रे, रक्तेक्षौ, गुडे, शालौ, जीरके च पु० । वङ्गे, सीसे च न० स्वार्थे कन् । जीरके शतपुष्पायां यष्टिमधौ, काकोल्यां, शतावर्य्यां इक्षुजी-वन्त्यां, मधुकर्कटिकायां मधूल्यां, मेदायां पालङ्कशाके ( मौरी ) मिश्यां च स्त्री० । स्वार्थे कन् अत इत्त्वम् । मिश्यम् स्त्री० ।

**मधुरजम्बीर** पु० कर्म० । ( कमलालेबु ) जम्बीरभेदे ।

**मधुरत्वच** पु० मधुरा त्वचा यस्य । धववृक्षे ।

**मधुरफल** पु० मधुरं फलमस्य । राजबदरे ।

**मधुरवल्ली** स्त्री० कर्म० । मधुबीजपूरे, जम्बीरभेदे च ।

**मधुरस** पु० मधुन इव रसो यस्य । इक्षौ, जले च । मूर्व्वायां, द्राक्षा-यां, दुग्धिकायां, गाम्भार्य्यांञ्च स्त्री० ।

**मधुरस्रव** स्त्री० मधुरं स्रवति स्रु-अच् । पिण्डखर्ज्जूर्य्याम् ।

मधुराम्लक पु० कर्म० । आम्रातके ।

मधुलग्न पु० मधुर्मधुररसो लग्नो यत्र । रक्तशोभाञ्जने ।

मधुलिका स्त्री० मधु माधुर्य्यं लिटति गाहते लिट-क पृ० । राजिकायां ( राइसर्षा ) । [ मधुलेत्यप्यत्र ।

मधुलिह् पु० मधु लेढि आस्वादयति लिह-क्विप् । भ्रमरे खिनि ।

मधुवन न० मधुदैत्याधिष्ठितं वनम् । मथुराख्यस्थे वनभेदे किष्किन्धास्थे मधुप्रचुरे वनभेदे च ।

मधुवल्ली स्त्री० मधुप्रधाना वल्ली । यष्टिमधौ ।

मधुवार पु० मधुनो मद्यस्य वारः क्रमः । पुनःपुनर्मद्यपानक्रमे ।

मधुवीज पु० मधु मधुरं वीजं यस्य । दाड़िमे ।

मधुवीजपूर पु० कर्म० ( लेवुभेदे ) मधुकर्कटिकायाम् ।

मधुव्रत पु० मधु तत्सञ्चयो व्रतं सततानुशीलनं यस्य । भ्रमरे ।

मधुशाख पु० मधुर्मधुरा शाखाऽस्य । ( मौल ) वृक्षे ।

मधुशिग्रु पु० मधुः मधुरः शिग्रुः । रक्तशोभाञ्जनवृक्षे ।

मधुशेष पु० न० मधुनः शेषः उच्छिष्टम् । सिक्थके ( मोम ) ।

मधुश्रेणी स्त्री० मधुनः श्रेणीव । मूर्व्वायाम् ।

मधुश्वासा स्त्री० मधुन इव श्वसित्यस्मात् श्वस-अपादाने घञ् । जीवन्तीवृक्षे ।

मधुष्ठील पु० मधु ष्ठीले गर्भेऽस्य । ( मौअ ) गुडपुष्पवृक्षे ।

मधुसख पु० मधोर्वसन्तस्य सखा सहचरः अच् स०। कामदेवे । मधुसारथ्यादयोऽप्यत्र ।

मधुसूदन पु० मधुं तन्नामासुरं सूदयति, मधु, जीवानां शुभाशुभकर्म, भ्रामदानेन सूदयति वा सूद-ल्यु । श्रीकृष्णे । 'भक्तानां कर्म्मणाञ्चैव सूदनात् मधुसूदन" इति निरुक्तेः मधु माध्वीकं सूदयति भक्षयति । भ्रमरे । मधुरव सूद्यते भक्ष्यते ल्युट् ङीप् । पालङ्कीशाके ।

मधुस्रव पु० मधूनि मद्यानि स्रवन्त्यस्मात् स्रु-अप् । ( मौल वृक्षे )

मधुस्रवस् पु० मधु स्रवति अस्मात् स्रु-असुन् ।। ( मौल ) वृक्षे ।

**मधुस्वर** पु० मधुर्मधुरः स्वरोऽस्य । कोकिले । मधुरस्वरवति त्रि० ।

**मधुहन्** पु० मधुनामासुरं कर्मफलं वा ज्ञानद्वारा हन्ति हन् क्विप् । विष्णौ

**मधूक** न० मह—ऊक् हस्य धः । यष्टिमधौ । (मौल) वृक्षे पु० ।

**मधूच्छिष्ट** न० मधुन उच्छिष्टमवशिष्टम् । (मोम्) सिक्थके मधूज्झितमप्यत्र ।

**मधूपघ्न** पु० न० मधुदैत्यस्योपघ्नमाश्रयः । मथुरानगरे ।

**मधूल** पु० मधु लाति ला क पृ० । जलजगिरिजमधूकवृक्षयोः । मधुकर्कट्याम् आम्रे च स्त्री० गौरा० ङीप् । स्वार्थे कन् अत इत्त्वम् टाप् । मूर्व्वायाम् ।

**मध्य** पु० मन—यक् नस्य धः । देहस्यावयवभेदे । (माजा) "मध्येन सा वेदिविलग्नमध्ये"ति कुमारः । नृत्यादौ—मन्दत्वशीघ्रत्वभिन्ने व्यापारभेदे, पूर्वापरसीमयोरन्तराले, परार्द्ध संख्यातोऽर्वाचीनायां सङ्ख्यायां, तत्संख्याते च । "अन्त्यं मध्यं परार्द्ध"मिति लीला० ज्योतिषोक्ते ग्रहाणां गतिभेदे स्त्री० तद्वति ग्रहे पु० । न्याय्ये, अन्तर्वर्त्तिनि च त्रि० ।

**मध्यगन्ध** पु० मध्ये फलमध्ये गन्धो यस्य । आम्रवृक्षे । [ स्वार्थे ।

**मध्यतस्** अव्य० मध्य+तसिल् । प्रथमापञ्चमीसप्तम्यर्थवृत्ते मध्यशब्द-

**मध्यदेश** पु० कर्म० । "हिमवद्विन्ध्ययोर्मध्यं यत् प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः" इत्युक्ते देशभेदे ।

**मध्यन्दिन** न० मध्यं दिनस्य अलुक्समा० । मध्याह्ने ।

**मध्यपदलोपिन्** पु० मध्यपदस्य लोपोऽस्त्यस्य इनि । व्याकरणप्रसिद्धे शाकपार्थिवादिके समासभेदे ।

**मध्यम** त्रि० मध्ये भवः म । मध्यभवे । सप्तस्वरमध्ये क्रौञ्चस्वरतुल्ये पञ्चमे स्वरे पु० । [ वर्त्तित्वात् ।

**मध्यमपाण्डव** पु० कर्म० । अर्ज्जुने तस्य पूर्वापरयोर्द्वयोर्द्वयोर्मध्य-

**मध्यमभृतक** पु० कर्म० । "मध्यमस्तु कृषीवल" इत्युक्ते मध्यमे दासे कृषीवलादौ ।

**मध्यमलोक** पु० कर्म० । पृथिव्याम् तस्याः पातालस्वर्गलोकयोर्मध्य-

वर्त्तित्वात् "मध्यमलोकपाल" इति रघुः मध्यलोकोऽप्यत्र ।

**मध्यमसंग्रह** पु० कर्म० । "प्रेषणं गन्धमाल्यानां धूपभूषणवाससाम् । प्रलोभनञ्चान्नपानैर्मध्यमः संग्रहोमत" इत्युक्ते मध्यमे स्त्रीसंग्रहरूपे विवादभेदे ।

**मध्यमसाहस** कर्म० "वासः पश्वन्नपानानां गृहोपकरणस्य च । एतेनैव प्रकारेण मध्यमं साहसं स्मृत"मित्युक्ते परकीयवस्त्रादेर्भङ्गाक्षेपादिरूपे बलकरणककर्मरूपे साहसभेदे "पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः । मध्यमः पञ्च विज्ञेय" इत्युक्ते पञ्चपणात्मके दण्डभेदे पु० ।

**मध्यमा** स्त्री० मध्य+म । इष्टरजस्कायां नार्य्याम्, तर्ज्जन्यनामिकयोरन्तःस्थायामङ्गुलौ, पद्मादीनां कर्णिकायाम् हृदयोत्पन्नायां वैखर्य्यादिषु मध्ये वाणीभेदे नायिकाभेदे च ।

**मध्यमाहरण** न० वीजगणितप्रसिद्धे अव्यक्तमानज्ञापके गणनाभेदे ।

**मध्यरात्र** पु० मध्यं रात्रेः एकदेशि स० अच् समा० । निशीथे अर्द्धरात्रे ।

**मध्यवर्त्तिन्** त्रि० मध्ये वर्त्तते वृत–णिनि । वादिप्रतिवादिनोरन्ययोर्वा पक्षप्रतिपक्षयोर्वाक्यादिविषयविमर्षपूर्व्वकं तत्त्वनिर्णायके, स्वार्थाविरोधेन परार्थसम्पादके, कार्य्यसम्पादके च मध्यस्थे ।

**मध्यस्थ** पु० मध्ये तिष्ठति स्था–क । मध्यवर्त्तिनि, उदासीनेच । "माध्यस्थमिष्टेऽप्यवलम्बतेऽर्थे" इति कुमारः ।

**मध्या** स्त्री० स्त्रियां टाप् । त्र्यक्षरपादके छन्दोभेदे नायिकाभेदे मध्यमाङ्गुलौ च ।

**मध्याह्न** पु० मध्यं मह्नः एक० स० टच् समा० अह्नादेशः । त्रिधा विभक्तदिनस्य द्वितीये भागे, "प्रातः कालो मुहूर्त्तांस्त्रीन् सं गवस्तावदेव तु । मध्याह्नस्त्रिमुहूर्त्तं स्या"दित्युक्ते पञ्चधाविभक्तदिनस्य तृतीये भागे, च । [ तत्रैव ।

**मध्वालुक** पु० मधुर्मधुर आलुः । (मौ आलु) मूलभेदे । ततः कन् ।

**मध्वासव** पु० मधुना पुष्परसेन कृत आसवः । (मौल) मधुद्रुमपुष्पजाते मद्ये ।

**मन** पूजायां सक० गर्ब्बे अक० भ्वा० पर० सेट्। मनति। अमानीत् अमनीत्

**मन** गर्ब्बे अक० चु० आ० सेट्। मानयते अमीमनत।

**मन** बोधे तना० आ० सक० सेट्। मनुते अमनिष्ट।

**मन** बोधे दि० आ० सक० अनिट्। मन्यते। अमंस्त।

**मन** धृतौ अद० चु० उ० सक० सेट्। मनयति ते अममनत् त।

**मन** पु० मन–अच्। जटामांस्याम्।

**मनःशिला** स्त्री० मनः शब्दवाच्या शिला। (मन्छल) रक्तवर्णे उपधातुभेदे "मनःशिलाविच्छुरिता निषेदुरि"ति कुमारः। ह्र० वा हस्वे पुंस्त्वमपि। "टङ्कैर्मनः शिलगुहैरविदार्य्यमाणे"ति।

**मनस्** न० मन्यतेऽनेन मन–असि। सर्वेन्द्रियप्रवर्त्तके अन्तरिन्द्रिये, तच्च वेदान्तमते सङ्कल्पविकल्पात्मकवृत्तिमदन्तः करणं सुखदुःखाद्याधारः "कामः संकल्पोविचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वंमनएवे"ति श्रुतेः न्यायमते तज्ज्ञानसाधनमिति भेदः। मनः शिलायाञ्च।

**मनसा** स्त्री० मननं मनं स्यति सो–क। आस्तीकस्य मुनेर्मातरि वासुकिभगिन्याम् जरत्कारुपत्न्यां।

**मनसादेवी** स्त्री० मनसा दीव्यति दिवः करणस्य कर्म्मत्वात् कर्म्मोपपदत्वेन अण् ङीप् अलुक् स०। मनसाशब्दार्थे।

**मनसिज** पु० मनसि जायते जन–ड सप्तम्या वा अलुक्। कामदेवे। लङ्कि। मनोजोऽप्यत्र। एवं चित्तजातादयोऽप्यत्र।

**मनसिशय** पु० मनसि शेते अच् वा अलुक्। कामदेवे।

**मनस्कार** पु० कृ–घञ् मनसः कारोव्यापारभेदः। चित्तस्य सुखतत्परत्वे।

**मनस्ताप** पु० मनसस्तापः अनुतापः। अनुतापे, मनःपीडायाञ्च।

**मनस्विन्** त्रि० प्रशस्तं मनोऽस्त्यस्य विनि। प्रशस्तमनस्के। स्त्रियां ङीप्। "मनस्विनीनां प्रतिपत्तिरीदृशी"ति कुमारः।

**मनाक्** अव्य० मन–आकि। ईषदर्थे, मन्दे च "हृतहृत्क्लान्तमना मनागभूदि"ति नैषधम्।

मनाकर न० मनाक् करोति कृ–अच् । मल्लिकागन्धयुक्ते अगुरुभेदे ।
 ईषत्करे त्रि० ।

मनायी स्त्री० मनोः पत्नी वा ङीप् औङ् च । मनोः पत्न्याम् ।

मनित त्रि० ज्ञा० मन–क्त । ज्ञाते ।

मनीषा स्त्री० ईष–अङ् मनस ईषा शक० । बुद्धौ ।

मनीषिन् पु० मनीषा अस्त्यस्य इनि । पण्डिते । बुद्धियुक्ते त्रि० ।

मनु स्त्री० मन–उ । पृक्कायाम् (पिडिङ्गशाक) मनुपत्न्याञ्च । प्रजा-
 पतिभेदे, धर्म्मशास्त्रकर्त्तरि स्वायम्भुवे मुनिभेदे च पु० ।

मनुज पु० मनोः स्वायम्भुवात् जायते जन–ड । मनुष्ये स्त्रियां जातौ
 ङीप् । [ ङीप् ।

मनुष्य पु० मनोरपत्यं यत् षुक् च मानवे जातिभेदे । स्त्रियां जातौ

मनुष्यधर्म्मन् पु० मनुष्यस्येव धर्म्मो यस्य नरवाहनत्वात् अनिच् समा०।
 कुवेरे । [ शिलायाम् ।

मनोगुप्ता स्त्री० मनसा मनः शब्देन तच्छब्दवाच्यत्वात् गुप्ता । मनः

मनोजव त्रि० जु अच् मनो जवं वेगवत् गमनाय यस्मिन् । पितृ-
 तुल्ये । मनस इव जवो यस्य । अतिवेगवति त्रि० । अग्नि-
 जिह्वायां स्त्री० । [ इच्चे ।

मनोजवृद्धि पु० मनोजस्य कामस्य वृद्धिर्यस्मात् ५ब० । कामवृद्धि-

मनोज्ञ त्रि० मनो जानाति ज्ञापयति बोधनाय प्रवणीकरोति अन्तर्भू-
 तण्यर्थे ज्ञा–क । मनोहरे । मनः शिलायां, वन्ध्याकर्कोट्यां,
 कटभ्यां, जीरके, मदिरायाञ्च स्त्री० ।

मनोभव पु० मनसि भवति भू–अच् । कामदेवे मनोजमनोभूप्र-
 भृतयोऽप्यत्र । [ कत्वात् । पृक्कायाम् ।

मनोरथ पु० मनएव रथोऽत्र, मनसो रथइव वा इष्टसाधप्राप-

मनोरम त्रि० मनोरमयति रम–णिच्–अच् उप० । मनोहरे । गो-
 रोचनायां स्त्री० ।

मनोहृत त्रि० मनो हृतं यस्य । प्रतिहते, प्रतिबद्धे च ।

मनोहर त्रि० मनो हरति स्वदर्शनाय हृ–अच् । रुचिरे । कुन्दवृक्षे

पु० । जायां, स्वर्णयूथ्यां च स्त्री० । स्वर्णे न० । णिनि । मनो-
हारीति मनोहरे ।

मनोह्वा स्त्री० मनः शब्दे नाह्वयते ह्वे—घञर्थे क । मनःशिलायाम् ।

मन्ज मार्ज्जने सक०ध्वनौ अक० भ्वा०पर० सेट् । मञ्जति अमञ्जीत् ।

मन्तु पु० मन—क्तु तुट् च । अपराधे, मनुष्ये, प्रजापतौ च ।

मन्त्र पु० मन्त्रि—अच् । गुप्तभाषणे, रहसि कर्त्तव्यावधारणार्थसुक्तौ
देवादीनां साधनार्थं तन्त्राद्युक्ते शब्दभेदे, वेदविभागभेदे च ।

मन्त्रजिह्व पु० मन्त्रएव जिह्वा आस्वादनसाधनं यस्य । अग्नौ, मन्त्रेण
दत्तहविरास्वादकत्वात्तस्य तथात्वम् ।

मन्त्रदातृ पु० दा—तृच् ६त० । गुरौ ।

मन्त्रिन् पु० मन्त्रयते णिनि । धीसचिवे येन सह रहसि कर्त्तव्यम-
वधीयते तस्मिन् अमात्ये ।

मन्थ क्लेशे अक० विलोड़ने सक० भ्वा०पर० सेट् । मन्थति अमन्थीत् ।

मन्थ विलोडे क्र्या० पर० द्विक० सेट् । मथ्नाति अमन्थीत् ।

मन्थ पु० मन्थ—करणे घञ् । मन्थनकाण्डे । "सक्तुभिः सर्पिषाभ्यक्तैः
शीतवारिपरिप्लुतैः । नात्यच्छो नातिसान्द्रश्च मन्थ इत्यभिधीयते"
इत्युक्ते पेयभेदे, सूर्य्ये, अर्कवृक्षे, नेत्रमले, किरणे च । भावे
घञ् । आलोडनादौ ।

मन्थज न० मन्थात् दधिमन्थनात् जायते जन—ड । नवनीते ।

मन्थन पु० मथ्यतेऽनेन करणे ल्युट् । मन्थानदण्डे ।

मन्थर न० मन्थ—करच् । कुसुम्भाम् । कोषे, फले, बाधे मन्थान-
दण्डे च पु० वक्रे, नीचे, जड़े, मन्दे च त्रि० । "मदर्थसन्देश
मृणालमन्थर" इति नै० । कैकेय्याः दास्यां स्त्री० । [पर्वते ।

मन्थशैल पु० ६त० । समुद्रमन्थनाय मन्थनदण्डरूपेण कल्पिते मन्द-

मन्थान पु०मन्थ—आनच् । मन्थनदण्डे, आरग्बधवृक्षे च (सोन्दाल)

मन्द त्रि० मदि—अच् । मूर्खे मूढे, अभाग्ये, रोगिणि, अल्पे,
स्वतन्त्रे, खलेच । शनिग्रहे, हस्तिभेदे, यमे, प्रलये च पु० । ज्यो-
तिषोक्ते रविसंक्रान्तिभेदे स्त्री० ।

**मन्दग** त्रि० मन्दं गच्छति गम–ड । मृदुगामिनि शनि, ग्लानि, पुरुष, वृष, हंस, गज, वरस्त्रिय इत्येते स्वभावान्मन्दगतयः । णिनि मन्दगामीत्यप्यत्र त्रि० । स्त्रियां ङीप् ।

**मन्दट** पु० मन्दं टीकते टीक–ड । पारिभद्रवृक्षे । (पालदेमादार)

**मन्दता** स्त्री० मन्दस्य भावः तल् । आलस्ये, जाड्ये, मन्दभावे च । "उच्चैरस्यति मन्दतामरसता"मिति चन्द्रालोकः ।

**मन्दर** पु० मदि–अरन् । समुद्रमन्थाने पर्वतभेदे, मन्दारवृक्षे, स्वर्गे, हारभेदे, दर्पणे च । बहुले, मन्दे च त्रि० ।

**मन्दाकिनी** स्त्री० मन्दमकति अक-णिनि । स्वर्गगङ्गायां "स्वर्गे मन्दाकिनी तथे"ति पुराणम् ।

**मन्दाक्रान्ता** स्त्री० सप्तदशाक्षरपादके छन्दोभेदे ।

**मन्दाक्ष** न० मन्दं सङ्कुचितमक्षि यस्मात् षच् समा० । लज्जायाम् ।

**मन्दाग्नि** पु० मन्दः पचने अल्पशक्तिकः अग्निः अनलः स यस्माद्वा । देहस्थे अपाचनशक्तिकेऽनले तद्युतौ रोगभेदे च ।

**मन्दार** पु० मदि–आरक् । स्वर्गस्थे देववृक्षभेदे, पारिभद्रवृक्षे च ।

**मन्दिर** न० मन्द्यतेऽत्र मदि–किरच् । गृहे, पुरे च । तस्य द्विलिङ्गत्वमित्येके । समुद्रे जानुपश्चाद्भागे च पु० ।

**मन्दुरा** स्त्री० मदि–उरच् । अश्वशालायाम्, शयनीयकटे च । (मादुर)

**मन्दोदरी** स्त्री० मयदानवकन्यायां रावणमहिष्याम् ।

**मन्दोष्ण** न० मन्दमीषदुष्णम् । ईषदुष्णस्पर्शे । तद्वति त्रि० ।

**मन्द्र** पु० मदि–रक् । वाद्यभेदे, गम्भीरध्वनौ च । अर्शआद्यच् तद्वति त्रि० । [ चिन्तायां, कपित्थवृक्षे च ।

**मन्मथ** पु० मननं मत् मन–क्विप् मथति अच् ६त० । कन्दर्पे, काम-

**मन्मथालय** पु० ६त० । आम्रवृक्षे स्त्रीचिह्नभेदे च ।

**मन्या** स्त्री० सेट्–मन–क्यप् । ग्रीवायाः पश्चाद्देशस्थायां शिरायाम् ।

**मन्यु** पु० मन–युच् । शोके, दैन्ये, क्रतौ क्रोधे, अहङ्कारे च ।

**मन्वन्तर** न० मनूनामन्तरमवकाशस्तदुपलक्षितकालो वा । स्वायम्भुवादिमनूनामधिकारे तदुपलक्षिते काले च सत्ययुगमितवर्षाधिका

एकसप्ततिचतुर्युगमिता ( ३११४४८००० ) एतन्मितवर्षोपलक्षितकाल-
इति इष्टाः ।

**मभ्र** गतौ भ्वा० पर० सक० सेट् । मभ्रति अमभ्रीत् ।

**मम** अव्य० मा—डम । षष्ठ्यर्थेऽस्मदः अत्रासकृत्यार्थे तेन ममत्वमिति ।

**ममता** स्त्री० मम भावः तल् । स्नेहे अहंकारे मत्वञ्जने च । एवं मम-
त्वमप्यत्र "तथापि ममतावर्त्तं" इति "ममत्वं मकराजस्ये"ति च
सप्तशती ।

**मय** गतौ भ्वा० आ० सक०सेट् । मयते अमयिष्ट ।

**मय** पु० मय—अच् । उष्ट्रे अश्वतरे । दानवभेदे च ।

**मयष्टक** पु० मि+अच् मयं प्रक्षेपं ष्टकते प्रतिबध्नाति ष्टक+अच् पु०
षत्वम् । वनमुद्गे ।

**मयु** पु० मि—उ । किन्नरे, मृगे च ।

**मयुष्टक** पु० मिनोति मि—उ मयुः स्या क्षु ष्टक+ कर्म० । पु०षत्वम्
षत्वम् वनमुद्गे पु० । मयुष्टकोऽप्यत्र । [ यास्क ।

**मयूख** पु० माङ्—ऊख मयादेशः । त्विषि, किरणे शिखायां शोभा

**मयूर** पु० मी—ऊरन् । स्वनामख्याते खगभेदे । इवार्थे कन् । तु-
त्थाञ्जने (तुते) न० । अपामार्गे, मयूरशिखाहृक्षे च पु० ।

**मयूरग्रीवक** न० मयूरस्य ग्रीवेव कन् । तुत्थे (तुते) ।

**मयूरजङ्घ** पु० मयूरस्य जङ्घेव मूलमस्य । श्योनाकवृक्षे ।

**मयूरतुत्थ** न० मयूरस्य तद्वर्णं तुत्थम् । तुत्थे (तुते) ।

**मयूरविदला** स्त्री० मयूरैर्विदल्यते मयूर इव विशिष्टदलमस्या वा ।
अम्बष्ठायाम् । (युइ) (आमरुल) । [मयूरचूडादयोऽप्यत्र ।

**मयूरशिखा** स्त्री० मयूरस्येव शिखाऽस्याः । स्वनामख्याते क्षुपभेदे

**मयूरिका** स्त्री० मयूरो विद्यतेऽस्याः तच्चन्द्रकतुल्यदलत्वात् ठन् ।
अम्बष्ठायाम् (युइ) (आमरुल) ।

**मरक** पु० मृ—वुन् । दैविकभौतिकोपद्रवजन्ये प्राणिनामकालमरणे
(मड़क) मारिभये । [ (माया) ।

**मरकत** न० मरकं मारिभयं तरत्यनेन तॄ—ड । हरिद्वर्णे मणिभेदे

**मरकतपत्री** स्त्री० मरकतमिव हरिद्वर्णं पत्रमस्याः ङीप् । पाठायाम् । ( निसुड़ कुप )

**मरण** न० म्रियतेऽनेन मृ-करणे ल्युट् । वत्सनाभाख्ये विषे । भावे ल्युट् । देहात्मनोर्विच्छेदरूपे, प्राणवायोरुत्क्रमणरूपे वा व्यापारे । [ कुम् । मकरन्दे ।

**मरन्द** पु० मरं मरणं द्यति अमराणां जीवनहेतुत्वात् दो-क पृ०

**मराकाली** स्त्री० मरो मरणकारिकं दुःखमिवाकति याप्यनेन मराको हृश्चिकः स इवालति पर्य्याप्नोति दुःखदानाय अल-अच् गौ०ङीष् । हृश्चिकाली ( विछाति ) ।

**मराल** पु० मृ आलच् । राजहंसे, 'तलामरानयमरालमरालकेशी'ति नैषधम् । कज्जले, कारण्डवे, अश्वे, मेघे, खले, दाडिमीवने च । चिक्कणे त्रि० ।

**मरि ( री ) च** पु० मृ इच पृ० वा दीर्घः । स्वनामख्याते द्रव्ये ।

**मरि(री)चपत्रक** पु० मरिचस्येव पत्रमस्य कप् । सरलद्रुमे ।

**मरीचि** पु० मृ-ईचि । सप्तर्षिमध्ये ब्रह्मणो मानसे ज्येष्ठे पुत्रे मुनिभेदे, कृपणे च । किरणे पु० स्त्री० ।

**मरीचिका** स्त्री० मरीचौ सूर्य्यकिरणे कमिव जलमिव यत्र भ्रान्तौ । सूर्य्यकिरणे जलभ्रान्तौ, मृगतृष्णायाम् । [ च ।

**मरु** पु० मृ-उ । पर्व्वते, निर्ज्जलदेशे च कुरुवकहव ( माड़वार ) देशे

**मरुज** पु० मरुदेशे जायते जन-ड । नखीनामगन्धद्रव्ये, निर्जले जाते त्रि० । मृगकर्कोट्याम् स्त्री० ।

**मरुत्** पु० मृ-उति । वायौ, देवे च । स्वार्थे प्रज्ञाद्यण् । मारुतोऽप्यत्र । मरुवके, ग्रन्थिपर्णे च न० । पृक्कायां स्त्री० । पृ० हृस्वः । मरुतोऽपि वायौ ।

**मरुत्कर** पु० मरुतमपानवायुं करोति कृ-अच् । राजमाषे ।

**मरुत्त** पु० चन्द्रवंश्ये नृपभेदे । ततः संज्ञायां कन् । मरुवके ।

**मरुत्पथ** पु० ६त० । आकाशे । मरुद्वर्त्मादयोऽप्यत्र ।

**मरुत्पाल** पु० । मरुतो देवान् पालयति पाल-अण् । इन्द्रे ।

मरुत्वत् पु० मरुत्पाल्यत्वेनास्त्यस्य म पद्मम् मस्य वः इन्द्रे ।

मरुत्सख पु० मरुतो वायोः सखा—टच् । इन्द्रे, वह्नौ, चित्रकवृक्षे च

मरुदान्दोल न० मरुतमान्दोलयत्यनेन करणे घञ् । व्यजने ।

मरुदिष्ट पु० मरुतां देवानामिष्टः । गुग्गुलौ ।

मरुद्भवा स्त्री० मरुतो वायो र्भवति वर्द्धते भू—अच् । (तालमूली) क्षुपे (खिराइ) ।

मरुद्रुम पु० मरोर्निर्जलदेशस्य द्रुमस्तत्रजातत्वात् । विट्खदिरे ।

मरुद्वाह पु० मरुत् वाह इव यस्य धूमे, वह्नौ च ।

मरुमाला स्त्री० मरुतो मालेव । (पिडिङ्शाक) पृक्कायाम् ।

मरुभू पु० ६त० मरुभूमिर्यत्र (माड़ुआर) देशभेदे, कर्म०। निर्ज्जलभुवि

मरुरुह पु० मरुभुवि निर्जलभूमौ रोहति रुह—क । करवीरे ।

मरुव पु० मरुं निर्जलदेशं वाति कारणत्वेन वा—क । (मालदाना) (मरुया) वृक्षभेदे । स्वार्थे कन् । तत्र, वृक्षभेदे, (मयना) स्वल्पपत्रतुलस्याम्, जम्बीरभेदे, पुष्पप्रधाने वृक्षभेदे, (मरुयाफुल) व्याघ्रे, राहौ, भयानके च ।

मरुसम्भवा स्त्री० मरौ सम्भवति अच् । क्षुद्रदुरालभायाम् मरुस्थाद्यो ऽप्यत्र । [ खदिरे च ।

मरूद्भवा स्त्री० मरौ उद्भवति उद्+भू—अच् । कार्पास्यां, क्षुद्र-

मर्क गतौ भ्वा० पर० सक० सेट् । मर्कति अमर्कीत् ।

मर्कट पु० मर्क—अटन् । वानरे । ऊर्णनाभे (माकड़सा) स्थावर विष-भेदे (छाड़गिला) पक्षिभेदे च स्वार्थे कन् । तत्रैव ।

मर्कटतिन्दुक पु० मर्कटप्रियस्तिन्दुकः शाक० । कुपीलौ ।

मर्कटपिप्पली स्त्री० मर्कटप्रिया पिप्पली शाक० । अपामार्गे ।

मर्कटप्रिय पु० ६त० । क्षीरवृक्षे (खिरइ) ।

मर्कटवासस् पु० ६त० । (माकड़साजाल) लूतातन्तौ ।

मर्कटशीर्ष न० मर्कटस्य वानरस्य शीर्षमिव । हिङ्गुले ।

मर्कटास्य मर्कटस्य वानरस्यास्यमिव रक्तत्वात् । ताम्रे तद्वति त्रि० ।

मर्कटी स्त्री० मर्कटोऽस्त्यस्याः स्निग्धत्वेन अच गौ० ङीप् । अपामार्गे,

अजमोदायाम्, करञ्जभेदे (माकड़ाकरमचा) वानरयोषिति च।

**मर्कटीजाल** न० छन्दोग्रन्थोक्ते प्रस्तावे लघुगुरुस्थानविवेकज्ञानाय चक्रभेदे।

**मर्कर** पु० मर्क-अरच्। भृङ्गराजे (केशुरिया) भाण्डे सुरङ्गायां, बन्ध्यायां-स्त्रियाञ्च स्त्री० टाप्।

**मर्च** ग्रहणे चु० उभ० सक० सेट्। मर्चयति-ते अममर्चत्-त।

**मर्त्त** पु० मृ-तन्। मनुष्ये भूलोके च। तत्र भवः यत्। मर्त्त्यः। मनुष्ये।

**मर्द्दन** न० मृद-ल्युट्। गात्रपादादिसंवाहने, चूर्णने च।

**मर्द्दल** पु० मृद-घञ् मर्द्दं लाति ला-क। वाद्यभेदे (मादल)।

**मर्द्दित** त्रि० चु० मृद-क्त। चूर्णिते मन्थिते च।

**मर्व** गतौ भ्वा०पर० सक० सेट्। मर्वति अमर्वीत्।

**मर्म्मज्ञ** पु० मर्म जानाति ज्ञा-क। तत्त्वज्ञे। कर्म्मविदादयोऽप्यत्र।

**मर्म्मन्** न० मृ-मनिन्। जीवनस्थाने सन्धिस्थाने तात्पर्य्ये च "अपि धर्म्मागममर्म्मपारगैरि"ति नैषधम्।

**मर्म्मर** पु० मृ-अरन् मुट् च। वस्त्रपर्णानां शब्दे (मड़मड़) इत्यव्यक्त-शब्दे। पीतदारुणि, हरिद्रायाञ्च स्त्री०गौ० ङीप्।

**मर्म्मस्पृश्** त्रि० मर्म्म प्राणस्थानं स्पृशति स्पृश-क्विन्। अरुन्तुदे मर्म्म पीडके। [मर्म्मपीडके।

**मर्म्माविध्** त्रि० मर्म्म सन्धिस्थानं विध्यति विध-क्विप् पूर्वदीर्घश्च।

**मर्य्या०** अव्य० म्रियते-ऽवधिष्यतेऽत्र मृ-यत्। सीमायाम् स्त्रीत्वम-पि। कर्त्तरि यत्। मनुष्ये पु०। "मेषो मर्य्यो अपग्रसे' इति कौथुमन्त्रः मर्य्यामनुष्या इति सायनवेदभाष्यम्।

**मर्य्यादा** स्त्री० मर्य्यायां सीमायां दीयते दा-अच् पर्य्यादीयते वा परि+आ-दा-अङ् पृ०पस्य मः। न्याय्यपथस्थितौ, सीमायाम् कूले च।

**मर्व** पूर्त्तौ भ्वा० पर० सक० सेट्। मर्वति अमर्वीत्।

**मल** धृतौ भ्वा० आ० अक० सेट्। मलते अमलिष्ट।

**मल** पु० हज्यते शोध्यते मृज-कल-टिलोपः। पापे, पुरीषे, लौहादीनां

किट्टे कलङ्के, मण्डूरादौ, देहजाते, स्वेदस्लेष्मादौ, कर्पूरे, कृपणे, वातपित्तकफेषु च।

**मलघ्न** पु० मलं विष्ठां हन्ति रेचयति हन्-क। शाल्मलीकन्दे क्लिप्। मलहाप्यत्र। नागदमन्यां स्त्री० ङीप्।

**मलदूषित** त्रि० ३त०। मलिने। [ तत्फलस्य रेचकत्वात्।

**मलद्राविन्** पु० मलं द्रावयति रेचयति द्रु-णिच्-णिच्। जयपाले

**मलपू** स्त्री० मलं मलस्थानं पुनाति पू-क्विप्। काकोडुम्बरिकायाम्।

**मलभेदिनी** स्त्री० मलं भेदयति रेचयति भिद्-णिच्। कटुकायाम्। (कटकी)।

**मलमास** पु० मलो दुष्टो मासः। 'अमावस्याद्वयं यत्र रविसंक्रान्तिवर्ज्जितम् मलमासः स विज्ञेय' इत्युक्ते रविसंक्रान्तिशून्ये शुक्लप्रतिपदादिदर्शान्तरूपे चान्द्रे मासे।

**मलय** पु० मल-कयन्। दक्षिणस्थे पर्व्वतभेदे। यत्र चन्दनजन्म तत्पर्व्वतान्तिकस्थे देशभेदे, उपवने, नन्दनवने नवसु द्वीपेषु मध्ये द्वीपभेदे, ऋषभदेवस्य पुत्रभेदे च।

**मलयज** न० मलये पर्व्वते जायते जन-ड। चन्दने। मलयदेशजाते वायौ पु०। तद्देशजाते त्रि०। [(तेओडि)।

**मलया** स्त्री० मलयो देशोऽस्त्यस्याः कारणत्वेन अच्। त्रिवृतायां

**मलविनाशिनी** स्त्री० मलं तद्दोषं विनाशयति वि-नश-णिच्-णिनि। शङ्खपुष्प्याम्।

**मलारि** पु० मलस्य कलङ्ककिट्टादेररिः। सर्व्वक्षारद्रव्ये।

**मलिन** त्रि० मल+अस्त्यर्थे इनच्। मलयुक्ते, दूषिते, कृष्णे च इनि। मलीत्यप्यत्र, दोषे, टङ्कणे, (सोहागा)।

**मलिनमुख** पु० मलिनं मुखं यस्य। वह्नौ, तस्यादौ धूमायमानत्वेन कृष्णत्वात् वानरे च। क्रूरे, खले च त्रि०।

**मलिम्लुच** पु० मलो वैदिककर्म्मानर्हत्वेन दुष्टः सन् म्लोचति गच्छति म्लुच-क। मलमासे, वायौ, अग्नौ, चौरे च।

**मलीमस** त्रि० मल-ईमसच्। मलिने, लौहे, पुष्पकासीसे च।

**मसिजल** न० मसिमिश्रितं जलम् । ( काली ) लेखनद्रव्ये ।

**मसिधान** न० मसिर्धीयतेऽत्राधारे ल्युट् । मस्याधारे ( दोआत स्त्रीत्वमपि तत्र ङीप् ।

**मसिपण्य** पु० मसिस्तदुपलक्षितमक्षरमेव पण्यं विक्रेयं यस्य । लेखनोपजीविनि । [ लेखन्याम् ।

**मसिप्रसू** स्त्री० मस्याः प्रसूरिव । मस्याधारे । मषिः प्रसूरिव यस्याः ।

**मसीना** स्त्री० मस–ईनच् । अतस्याम् ( तिषि ) ।

**मसु** ( सू ) र पु० मस–उरच् ऊरच् वा । कलायभेदे ( मसूरी ) वेश्यायां, व्रीहिभेदे च स्त्री० टाप् । [ ओटी ।

**मसूरविदला** स्त्री० मसूरस्येव द्विदलं यस्याः । कृष्णत्रिवृति कालते–

**मसूरिका** स्त्री० मसूरेव इवार्थे कन् । वसन्तरोगे, कुट्टिन्याञ्च ।

**मसूरी** स्त्री० मस-ऊरच् गौ० ङीष् वसन्तरोगे, त्रिवृति, रक्तत्रिवृति च । [ अतस्यां स्त्री० ।

**मसृण** त्रि० मस-ऋण, मस्+ऋण-क पु० वा । स्निग्धे, अकर्कशे च ।

**मस्क** गतौ भ्वा० पर० अक० सेट् । मस्कति अमस्कीष्ट । [स्नाने च ।

**मस्कर** पु० मस्क अरच् । वंशे, रन्ध्रयुक्तवंशे च । भावे अरच् । गतौ,

**मस्करिन्** पु० मस्करो ज्ञानं गतिर्वास्त्यस्य इनि, मा कृत् कर्मनिषेद्धृ शीलमस्य मा+कृ-इनि, मस्करमस्करिणाविति नि० । परिव्राजके विधानेन स्वकर्म्मपरित्याजके भिक्षौ । 'धारयन् मस्करिव्रत'मिति भट्टिः चन्द्रे च । [ अणु मज्जाणुः

**मस्ज** स्नाने तु० पर० अक० अमिट् । मज्जति अमाङ्क्षीत् । क्त मग्नः ।

**मस्त** (क) न० मस-क्त । मस्तके । उष्णे त्रि० । संज्ञायां कन् शिरसि ।

**मस्तकस्नेह** पु० ६त० । शिरःस्थितमज्जायाम् मस्तिष्के ।

**मस्तदारु** न० मस्यति परिणमते मस्तमुच्चं कर्म्म० । देवदारुणि ।

**मस्तिष्क** न० मस-क्तिन् मस्तिं परिणतिभेदं मुष्कति मुष्क गतौ अच् पृ० । मस्तकस्थे स्नेहाकारे पदार्थे ( मगज ) "मांसमस्तिष्क पङ्क प्राग्भारे" इति प्रबधचन्द्रोदयम् । [ यमु ।

**मस्तमूलक** न० मस्तस्य मूलमिव इवार्थे कन् । शिरोधरायाम् ग्रीवा-

मह पूजायां भ्वा० पर० सक० सेट् । महति अमहीत् ।

मह दीप्तौ चु० उ० अक० सेट् इदित् । मंहयति-ते अममंहत्-त ।

मह वृद्धौ भ्वा० आ० अक० सेट् इदित् । मंहते अमंहिष्ट ।

मह पूजने अद० चु० उभ० सक० सेट् । महयति-ते अममंहत्-त ।

मह पु० मह-कर्म्मणि क । उत्सवे, सततानन्दजनकव्यापारे, तेजसि यज्ञे, महिषे च ।

महत् त्रि० मह-अति । विपुले, वृद्धे च स्त्रियां महती । राज्ये न० । सांख्योक्ते महत्तत्त्वे पु० 'प्रकृतेर्महानिति" श्रुतिः ।

महती स्त्री० मह-अति गौ० ङीप् । वीणाभेदे नारदवीणायाम् । अवेक्षमाणं महतीं मुहुर्मुहुरिति माघः । वृहत्यां, वार्त्ताक्यां, विपुलायां स्त्रियाञ्च ।

महत्तत्व न० कर्म्म० । सांख्योक्तप्रकृत्यादिचतुर्विंशतितत्त्वमध्ये प्रकृतिकार्य्ये अहङ्कारादिकारणे निश्चयात्मकबुद्धिविशिष्टे तत्त्वभेदे ।

महर् अव्य० मह-अर । ऊर्द्धस्थे लोकभेदे ।

महर्लोक पु० कर्म्म० । भूरादिषु ऊर्द्धस्थे सप्तलोकान्तर्गते चतुर्थे लोके तत्परिमाणादिकं वाचस्पत्ये दर्शयिष्यते ।

महर्षि पु० कर्म्म० । परमर्षिशब्दार्थे वेदव्यासादौ ।

महस् न० मह-असुन् । तेजसि, यज्ञे, उत्सवे च ।

महा स्त्री० मह-अच् । ( गोरक्षचाकलिया ) गोपवल्ल्याम् ।

महाकण्टकिनी स्त्री० महत् कण्टकमस्यास्ति इनि ङीप् । कण्टिमनसावृक्षभेदे ।

महाकन्द पु० कर्म० । लशुने, राजपलाण्डौ, मूलके च ।

महाकपित्थ पु० कर्म्म० । बिल्ववृक्षे ।

महाकरञ्ज पु० कर्म्म० । करञ्जभेदे ( कांटाकरमचा ) ।

महाकर्णिकार पु० कर्म० । आरग्वधे ( सोंदाल ।

महाकाय पु० ब० । शिवानुचरभेदे नन्दिनि, हस्तिनि च । विपुलदेहवति त्रि० । कर्म० स्थूलदेहे पु० ।

महाकार्त्तिकी स्त्री० कार्त्तिकीमधिकृत्य 'प्राजापत्यं यदा ऋक्षं तत्रैत-

स्यां नराधिप ! । सा महाकार्त्तिकी प्रोक्ते”त्युक्तायां रोहिणी-
नक्षत्रयुक्तायां कार्त्तिकपौर्णमास्याम् ।

**महाकाल** पु० कर्म० । अनवच्छिन्ने काले, शिवे च ‘महाकालेन च स-
मन्वि”तिकालिकाध्यानम् ( माकाल ) लताभेदे, भैरवभेदे च ‘महा-
कालं यजेद्देव्या दक्षिणे धूम्रवर्णक”मिति तन्त्रम् ।

**महाकाव्य** न० कवेः कर्म० काव्यं कर्म० । सर्गबन्धरूपे अष्टाधिक-
सर्गके ग्रन्थभेदे तल्लक्षणं साहित्यदर्पणे द्रष्टव्यम्० ।

**महाकुम्भी** स्त्री० महती कुम्भीव ( पामा ) कट्फले ।

**महाकुल** न० कर्म० । ‘देवपुरुषविख्यातं श्रोत्रियाणां महाकुल”मिति
मनुनोक्ते दशपुरुषावधिवेदाध्ययवंशे ।

**महाकुलीन** त्रि० महाकुले भवः खच् । महाकुलोद्भवे ।

**महाकोशफला** स्त्री० कर्म० । देवदालीलतायाम् ।

**महाकोषातकी** स्त्री० कर्म० । हस्तिघोषायाम् ।

**महागन्ध** न० महान् गन्धोऽस्य । हरिचन्दने, वोले च । जलवेतसे
वृक्षे पु० । नागबलायां, कविकायां, कुटजे च स्त्री० ।

**महागुरु** पु० कर्म० । ‘त्रयः पुरुषस्यातिगुरवो भवन्ति पिता माता
चाचार्य्यश्चे”ति स्मृत्युक्ते पुरुषस्य पित्रादौ ‘पतिरेकोगुरुः स्त्रीणा’
मित्युक्ते दत्तकन्यायाभर्त्तरि, अदत्तकन्यायाः पितरि, मातरि च ।
महागुरुनिपाते च ‘काम्यं किञ्चिन्नवाचरेदि”ति स्मृतिः ।

**महागुल्मा** स्त्री० महान् गुल्मोऽस्याः । सोमवल्ल्याम् ।

**महागुहा** स्त्री० महती गुहेव मूलमस्याः पृश्निपर्ण्याम् ।

**महाग्रीव** पु० महती ग्रीवास्य । उष्ट्रे । दीर्घग्रीवायुक्ते त्रि० ।

**महाघोषा** स्त्री० घुष्यते कर्म्मणि घञ् कर्म० । कर्कटशृङ्ग्याम् । ( काक-
ड़ाशिङे ) । कुन्दुरुक्याञ्च । महान् घोषोऽस्य । विपुलशब्दवति
त्रि० । [वियद्गति त्रि० । कर्म० । विपुलाङ्गे न० ।

**महाङ्ग** पु० महदङ्गमस्य । उष्ट्रे । गोक्षुरके रक्तचित्रके च । विपुला०

**महाच्छद** पु० महान् छदोऽस्य । देवदारुवृक्षे ।

**महाच्छाय** पु० महती छाया यस्य । वटवृक्षे । विपुलच्छायायुक्ते त्रि०

**महाच्छिद्रा** स्त्री० महत् छिद्रमस्याः महामेदायाम् ।

**महाजटा** स्त्री० महती जटा यस्याः । रुद्रजटावृक्षे । विपुलजटावति त्रि० । कर्म० । वृहत्यां, जटायाम् स्त्री० ।

**महाजन** पु० कर्म० । वेदवाक्येषु श्रद्धावति जने । 'महाजनो येन गतः स पन्था' इति भारतम् ।

**महाजम्बू** स्त्री० कर्म० । राजजम्ब्वाम् ।

**महाजाली** स्त्री० कर्म० । पीतवर्णघोषायाम् ।

**महाज्यैष्ठी** स्त्री० 'ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा । पूर्णिमा रविवारेण महाज्यैष्ठी प्रकीर्त्तिते"त्याद्युक्तलक्षणायां ज्यैष्ठपौर्णमास्याम् । 'महाज्यैष्ठ्यां तु यः पश्येत् पुरुषः पुरुषोत्तमम्' इति पुराणम् ।

**महाज्योतिष्मती** स्त्री० ( वडमालकाङ्गिनी ) लताभेदे ।

**महाढ्य** पु० महेन धनेनाढ्यः । कदम्बे कर्म०। महाधनवति त्रि०।

**महातरु** पु० कर्म० । स्नुहीवृक्षे विपुलवृक्षे च ।

**महातल** न० कर्म० । अधःस्थेषु पातालेषु मध्ये पञ्चमे पाताले ।

**महातारा** स्त्री० कर्म० । तन्त्रोक्ते तारिणीभेदे, जिनदेव्याञ्च ।

**महाताली** स्त्री० कर्म० । विपुलतालीभेदे राजताल्याम् ।

**महातिक्त** पु० कर्म० । निम्बवृक्षे । अतिशयतिक्तरसवति त्रि० । यवतिक्तायां स्त्री० ।

**महातीक्ष्णा** स्त्री० कर्म० । भल्लातकवृक्षे ( भेला ) अतितीक्ष्णे त्रि० ।

**महातेजस्** पु० महत् तेजोऽस्य । पारदे । अतितेजस्विनि त्रि० कार्त्तिकेये वह्नौ च पु० ।

**महात्मन्** त्रि० महान् आत्मा स्वभाव आशयो यस्य । महाशये ।

**महादान** न० कर्म० । विनायकादिग्रहजपाङ्गे तुलापुरुषादि षोडशपदार्थदाने 'अथातः संप्रवक्ष्यामि महादानस्य लक्षण"मित्युपक्रम्य 'आद्यन्तु सर्व्वदानानां तुलापुरुषसंज्ञकमित्यादिना षोड़शदानान्यभिधाय 'विनायकादिग्रहलोकपाल वस्वष्टकादित्यमरुद्गणानाम् । ब्रह्माच्युतेशार्कवनस्पतीनां स्वमन्त्रतोहोमचतुष्टयं स्यात् । जप्यानि

स्थानानि तथैव चैतान्यनुक्रमेणापि यथा स्वरूप”मित्युक्तं मात्स्ये।

विस्तरस्तु मत्कृततुलादानादिपद्धतौ ज्ञेयः।

**महादारु** न० कर्म्म० देवदारुणि।

**महादेव** पु० कर्म्म०। ‘ब्रह्मादीनां सुराणाञ्च मुनीनां ब्रह्मवादिनाम् तेषां महत्त्वात् देवोऽयं महादेवः प्रकीर्त्तितः’ इति इत्युक्ते, “महती पूजिता विश्वे मूलप्रकृतिरीश्वरी तस्याः देवः पूजितश्च महादेवस्ततः स्मृत”इत्युक्ते च शिवे। [ बृहद्वृक्षे च।

**महाद्रुम** पु० कर्म्म०। अश्वत्थवृक्षे। तस्य विष्णुरूपत्वात् महत्त्वम्

**महाधन** पु० महत् मूल्यरूपं धनमस्य। बहुमूल्ये। सुवर्णे सिह्लके, मनोरमवस्त्रे च क्षपौ पु०। अतिधनवति त्रि०।

**महाधातु** पु० कर्म०। स्वर्णे।

**महानदी** स्त्री०। ओड्रदेशस्थे नदीभेदे, समुद्रगामिन्यां नद्याञ्च।

**महानन्द** पु० महान् अतिशयितः आनन्दो यत्र। मोक्षे कर्म० अतिशयानन्दे पु० “माघमासस्य या शुक्ला नवमी लोकपूजिता। महानन्देति सा प्रोक्ते”त्युक्तायां माघशुक्लनवम्यां सुरायां नदीभेदे च स्त्री०।

**महानन्द** पु० कलौ जातान्तकरस्य महापद्मनृपभेदस्य पितरि।

**महानवमी** स्त्री० कर्म०। आश्विनशुक्लमधिकृत्य “ततोऽनु नवमी यस्मात् सा महानवमीस्मृते”त्युक्तायाम् आश्विनशुक्लनवम्याम्।

**महानस** न० महदनः संज्ञायाम् अच्। पाकस्थाने।

**महानाटक** न० हनुमत्कृतनाटकभेदे ‘एतदेव यदा सर्वाङ्काढि सा०द०

**महानाद** पु० महान्+नादोऽस्य। गजे, गर्जन्मेघे, सिंहे, उष्ट्रे च।

**महानिद्रा** कर्म०। मरणे तत्र पुनः प्रत्युत्थानाभावात्।

**महानिम्ब** पु० कर्म०। (घोड़ानिम) वृक्षभेदे।

**महानिशा** स्त्री० “महानिशा तु विज्ञेया मध्यमप्रहरद्वय”मित्युक्ते रात्रेर्मध्यमप्रहरद्वये। [ तन्त्रभेदे न०।

**महानील** पु० कर्म०। भृङ्गराजे, मानभेदे, नागभेदे, महाजम्ब्वाञ्च

**महानुभाव** पु० महान् अनुभाव आशयो यस्य। महाशये।

**महापञ्चविष** "शृङ्गी च कालकूटश्च मुस्तको वत्सनाभकः । शङ्खकर्णीति योगोऽयं महापञ्चविषाभिध" इत्युक्ते पञ्चविधे विषे ।

**महापत्त्रा** स्त्री० महत् पत्त्रमस्याः । मल्हाजम्बूहक्षे । [ च ।

**महापथ** पु० कर्म० । राजमार्गे, हिमालयोत्तरस्थे स्वर्गारोहणपथे

**महापद्म** पु० कर्म० अष्टनागमध्ये, नागभेदे, कुवेरस्य निधिभेदे, "अर्बुदमब्जं खर्वं निखर्व्वमहापद्मेति लीलावत्युक्तायाम् अयुतकोटिसंख्यायां, तत्संख्यान्विते, नृपभेदे च ।

**महापातक** न० 'ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः महान्ति पातकान्याहुस्तत्संसर्गश्च पञ्चम इत्युक्तेषु पञ्चसु पातकेषु ।

**महापिण्डीतक** पु० कर्म० । कृष्णवर्णे विपुलमदनवृक्षे ।

**महापीलु** पु० कर्म० । मधुपीलौ अतिमधुरत्वात्तस्य हि महत्त्वम् ।

**महापुराण** न० "सृष्टिश्चापि विसृष्टिश्च स्थितिस्तेषाञ्च पालनम् । कर्मणां वासना वार्त्ता मनूनाञ्च क्रमेण च । वर्णनं प्रलयानाञ्च मोक्षस्य च निरूपणम् । उत्कीर्त्तनं हरेरेव देवानाञ्च पृथक् पृथक् । महापुराणं विज्ञेयमेकादशक लक्षणमि"त्युक्ते व्यासप्रणीते पुराणभेदे ।

**महापुरुष** पु० कर्म० । पुरुषश्रेष्ठे, नारायणे च । "वन्दे महापुरुष ! ते चरणारविन्दमि"ति भागवतम् । [न्यस्य । घनमूल्याम् ।

**महापुरुषदन्ता** पु० महापुरुषस्य विष्णोः दन्ता इव महत्त्वात् मूला-

**महापुष्पा** स्त्री० महत् यन्त्रपुष्पत्वेन प्रशस्तं, पत्त्रापेक्षया स्थूलं वा पुष्पं यस्याः । अपराजितायाम् ।

**महाप्रलय** पु० कर्म० । ब्रह्मणो दिनावसाने जायमानः सर्वभूतक्षयः प्रलयः तस्यैव स्वमानेन शतवर्षावसाने जायमानस्तु महान् प्रलयः तस्मिन्, तदुपलक्षिते, जन्यद्रव्यानधिकरणीभूते काले च । जन्यभावानधिकरणीभूते काले इत्यन्ये ।

**महाप्रसाद** पु० "पादोदकञ्च निर्म्माल्यं नैवेद्यञ्च विशेषतः । महाप्रसाद इत्युक्त्वा ग्राह्यं विष्णोः प्रयत्नत" इत्युक्ते देवनैवेद्यादौ विपुलप्रसन्नतायाञ्च ।

**महाप्राण** पु० महान् बहुकालस्थायित्वात् श्रेष्ठः प्राणोऽस्य । द्रोणकाके कर्म० । वर्णोच्चारणस्य बाह्यप्रयत्नभेदे, स च वर्ग्यद्वितीयचतुर्थवर्णानां शषसहानामुच्चारणप्रयत्नः तेषामुच्चारणे हि प्राणवायोर्भूयान् प्रयास इति तेषामपि महाप्राणत्वमुपचारात् ।

**महाफल** पु० महत् पत्राद्यपेक्षया वृहत् फलमस्य । बिल्ववृक्षे । इन्द्रवारुण्यां (राखालशशा) स्त्री० ।

**महाबल** पु० महत् बलं यस्य । वायौ, बुद्धे च बलवति त्रि० महत् बलं यस्मात् ५ ब० । सीसके न० । पीतवाट्यालके स्त्री० ।

**महाभारत** पु० न० "चत्वारश्चैकतो वेदा भारतञ्चैतदेकतः । पुरा किल सुरैः सर्वैः समस्य तुलया धृतम् । चतुर्भ्यः सरहस्येभ्यो वेदेभ्योऽभ्यधिकं यदा । तदा प्रभृति लोकेऽस्मिन् महाभारतमुच्यते । महत्त्वात् भारतत्वाच्च महाभारतमुच्यते" इत्युक्तलक्षणे व्यासप्रणीते लक्षश्लोकात्मके ग्रन्थभेदे ।

**महाभीता** स्त्री० कर्म० । लज्जालुलतायाम् स्पर्शमात्रेण हि सङ्कोचेन तस्या अतिभीतत्वम् । अतिभीते त्रि० ।

**महाभूत** न० कर्म० । सर्वेषां पञ्चात्मकताप्राप्त्या स्थूलतापन्नेषु वृहत्सु पृथिव्यप्तेजोवाय्वाकाशेषु पञ्चसु भूतेषु । "तं वेधा विदधे नूनं महाभूतसमाधिने"ति रघुः ।

**महाभृङ्ग** पु० कर्म० । नीलभृङ्गराजे ।

**महामनस्** त्रि० महदुदारं मनस्तद्व्यापारोऽस्य । महाशये ।

**महामात्र** पु० "मात्रं कर्मणि भूषायाम् वित्ते माने परिच्छदे । मात्रा तु महती येषां महामात्रास्तु ते स्मृता" इत्युक्ते । प्रधानामात्ये ।

**महामाया** स्त्री० कर्म० अन्यस्मिन् अन्यधर्मावभासो हि माया सर्वजगन्मूलत्वात्तस्या महत्त्वम् । जगत्कारणभूतायाम् अविद्यायां तदधिष्ठात्र्यां दुर्गायाञ्च "महामाया हरेश्चैषा यया संमोह्यते जगदि"ति चण्डी ।

**महामाष** पु० कर्म० । राजमाषे मुद्गाद्यपेक्षया तस्य हि महत्त्वम् ।

**महामूल** पु० महत् वीर्यकारित्वात् श्रेष्ठं मूलमस्य । राजपलाण्डौ ।

**महामृग** पु० महान् मृगः पशुः। गजे, शरभे च तयोर्हि पशुषु महत्त्वात् तथात्वम्।

**महामेद** पु० स्त्री० ६ ब०। वैद्यकप्रसिद्धाष्टवर्गीके ओषधिभेदे।

**महामोह** पु० महान् मोहः आविवेकत्वको वस्तुतोऽनिष्टेष्वपि रागः। संसारतद्विषयकारणरूपेऽज्ञानभेदे "तमोऽविवेको मोहः स्यादन्तःकरणविभ्रमः। महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा" इत्युक्ते मैथुनादिसुखभोगेच्छारूपे अन्तःकरणवृत्तिभेदे च वैषयिकसुखस्य वस्तुतोऽनिष्टत्वात् तथात्वम्।

**महाम्ल** न० कर्म०। अम्लफले, तिन्तिडीफले च तद्वृक्षे पु०।

**महायज्ञ** पु० कर्म०। नित्यं गृहस्थकर्त्तव्ये वेदाध्ययनाग्निहोत्रयज्ञपितृतर्पणभूतबलिकर्मातिथिपूजनरूपेषु पञ्चसु कर्मसु।

**महारजन** न० कर्म०। काञ्चने। तस्य हि रञ्जकत्वात् महत्त्वम्, तद्वर्णे धुस्तूरे च पु०।

**महारजत** न० रजतत्वेन स्तुत्या कर्म०। कुसुम्भपुष्पे, स्वर्णे च।

**महारथ** पु० "एको दश सहस्राणि योधयेद्यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च विज्ञेयः स महारथः" इत्युक्ते योधभेदे। [न०।

**महारस** पु० ६ ब०। खर्ज्जूरे, कशेरुणि, इक्षौ, पारदे च। काञ्जिके

**महाराज(जि)क** पु० महान् सन् राजते वुन् पृ० ह्रस्वं वा। विंशत्यधिकशतद्वयसंख्याके गणदेवभेदे।

**महाराजद्रुम** पु० कर्म०। आरग्वधे (सोन्दाल)।

**महारात्रि** स्त्री० "ब्रह्मणश्च निपाते च महाकल्पो भवेन्नृप!। प्रकीर्त्तिता महारात्रि"रित्युक्ते महाकल्पात्मके महाप्रलये "अर्द्धरात्रात् परं यच्च मुहूर्त्तद्वयमुच्यते। सा महारात्रिरुद्दिष्टे"ति तन्त्रोक्ते अर्द्धरात्रोपरि मुहूर्त्तद्वयात्मके रात्रिकाले।

**महाराष्ट्र** पु० कर्म०। (महाराट्टा) देशभेदे। तद्देशः कारणत्वेन अस्त्यस्या अच् गौ ङीप्। जलपिप्पल्याम्, शाकभेदे च स्त्री०।

**महारिष्ट** पु० कर्म०। गिरिजाते निम्बभेदे। अत्यम्ले न०।

**महारोग** पु० कर्म०। "उन्मादो राजयक्ष्मा च श्वासस्त्वग्दोष एव च।

मधुमेहश्चाश्मरी च तथोदरभगन्दरौ । इत्येतेऽष्टौ महारोगा महापातकसम्भवा' इत्युक्ते महापातकजन्येषु उन्मादादिषु रोगेषु ।

महारौरव पु० रौरवम् अग् कर्म० । 'महारौरवसंज्ञस्तु जठराभ-स्ताम्रसंपुटे । धक्ष्यते खदिराङ्गारैः पच्यते कालमव्यय'मित्युक्ते नरकभेदे ।

महार्घ त्रि० महानर्घो मूल्यं यस्य । बहुमूल्ये ।

महार्णव पु० कर्म० । महासमुद्रे ।

महार्द्रक न० कर्म० । वनार्द्रके ।

महालय पु० महान् आत्यन्तिको लयो यत्र । परमात्मनि कर्म० । वृहदालये तीर्थस्थाने, विहारे, भौराश्विनकृष्णपक्षे च न० । 'तस्यां दद्यात् न चेद्दत्तं पितृणां वै महालये इति स्मृतिः ।

महालक्ष्मी स्त्री० कर्म० । चण्ड्यां द्वितीयचरितदेवताहूपे 'सेवेऽहमि-महिषमर्दिनीमिह महालक्ष्मीं सरोजस्थिता'मित्युक्तलक्षणे अष्टादशभु-जान्विते दुर्गाशक्तिभेदे, तन्त्रोक्ते लक्ष्मीभेदे च ।

महालम्ब ० कर्म० । लोध्रभेदे (पाठिया लोध) ।

महावरा स्त्री० वृणोति विस्तृणाति वृ—अच् कर्म० । दूर्वायाम् ।

महावराह पु० कर्म० । बृहद्वराहरूपधारिणि भगवदवतारभेदे ।

महावरोह पु० महान् अवरोहोऽस्य । वटवृक्षे ।

महावल्ली स्त्री० कर्म० । माधवीलतायाम् ।

महावाक्य न० कर्म० । परस्परसंबद्धार्थके वाक्यसमुदायरूपे एकवाक्ये "वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते" इति मीमांसकाः । वेदान्तोक्ते ब्रह्मविद्याप्रतिपादके "तत्त्वमस्यादयुपनिषद्वाक्ये, दा-नादौ अभिलापवाक्ये च ।

महाविद्या स्त्री० कर्म० । "काली तारा महाविद्या षोडशी भुव-नेश्वरी भैरवी, छिन्नमस्ता च विद्या धूमावती तथा । बगला सिद्ध-विद्या च मातङ्गी कमलात्मिका । एता दश महाविद्या" इत्युक्ता-सु काल्यादिषु दशसु देवीसु ।

महाविषुव न० रवेर्मेषसंक्रमणे । तत्संक्रमणस्य स्वरूपतः संक्रमणं,

प्रभापुञ्जस्य संक्रमणं वा। तत्र प्रभापुञ्जसंक्रमणमयनांशानुसारेण अष्टमांशाधिकषट्पञ्चाशत्तरेकैकांशं परित्यज्य ततः पश्चात्पश्चात्तरादौ स्थाने भवति इदानीं च पश्चादयनं, पूर्वायने तु पूर्वपूर्वतरादौ स्थाने भविष्यति। इत्यतस्तत्तुल्यनियतस्थानत्वात् स्वरूपसंक्रमस्तु स्थिरः सर्वदैकस्थाने जायमानत्वात्।

**महावीचि** पु० नास्ति वीचिः सुखं यत्र स अवीचिः कर्म्म०। सुख-रहिते, "यत्र कल्लोलेन नीयते" इत्युक्ते वा नरकभेदे।

**महावीर** पु० कर्म्म०। गरुड़े, हनुमति, सिंहे, यज्ञाग्नौ, वज्रे श्वेततुरङ्गे, कोकिले, धनुर्द्धरे, एकवीरवृक्षे, महाम्बुरे च वीरका-कोलीवृक्षे स्त्री०।

**महावीर्य्य** पु० ब्रह्म०। वाराहीकन्दे, परमात्मनि च। अतिबलवति त्रि०। वनकार्पास्यां, संज्ञायां सूर्य्यपत्न्याञ्च स्त्री०।

**महावृहती** स्त्री० कर्म्म०। वार्त्ताक्याम्।

**महावृक्ष** पु० कर्म्म० स्नुहीवृक्षे, वृहत्तरौ च।

**महाव्याधि** पु० कर्म्म०। महारोगे, कुष्ठादौ रोगे च।

**महाव्याहृति** स्त्री० कर्म्म०। वैदिके भूर्भुवःस्वरात्मके मन्त्रत्रये।

**महाव्रण** न० कर्म्म०। (नालिघा) दुष्टव्रणे।

**महाव्रत** न० कर्म्म०। अतिशयव्रते शारदीयदुर्गापूजादौ 'महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितमि"ति पुराणम्। द्वादशवार्षिके प्राय-श्चित्तात्मके व्रतभेदे च।

**महाशङ्ख** पु० कर्म्म०। तन्त्रे वीराचारप्रसिद्धे नृकपालास्थिजाते 'नृल-लाटास्थिखण्डेन रचिता जपमालिका। महाशङ्खमयी माला ताराविद्याजपे प्रिये"त्युक्ते माल्यभेदे, वृहच्छङ्खे च। 'पौण्ड्रं दध्मौ महाशङ्ख'मिति गीता।

**महाशठ** पु० कर्म्म०। राजधुस्तूरे। अतिधूर्त्ते त्रि०।

**महाशणपुष्पी** स्त्री० शणस्येव पुष्पमस्य ङीप् कर्म्म०। वृहच्छणपु-ष्प्याम्। स्वार्थे कन्। तत्रैव।

**महाशता** स्त्री० शतं मूलानि सन्त्यस्य अच् कर्म्म०। वृहच्छतावर्य्याम्

**महाशतावरी** स्त्री० कर्म्म०। वृहच्छतावर्य्याम्।

**महाशय** त्रि० महान् उदार आशयो यस्य। महानुभावे।

**महाशाखा** स्त्री० महती शाखाऽस्याः। नागबलायाम्।

**महाशालि** पु० कर्म्म०। स्थूलशालौ।                    [ शीतले त्रि०।

**महाशीता** स्त्री० महती शीता शीतलवीर्य्या। शतमूल्याम् अति-

**महाशुक्ति** स्त्री० महती मुक्ताकारणत्वेन प्राशस्त्यात् शुक्तिः। मुक्ताहेतौ शुक्तौ।

**महाशूद्र** पु० कर्म्म०। आभीरे (आहीर) जातिभेदे तत्पत्न्यां ङीप्।

**महाश्मशान** न० कर्म्म०। काश्याम् समूलकर्म्म सहितसर्व्वजीवानां पुनरनुत्पादनाय नाशाधारत्वात् तस्यास्तथात्वम्।

**महाश्यामा** स्त्री० कर्म्म०। श्यामालतायां, शिंशपभेदे च।

**महाश्रावणिका** स्त्री० कर्म्म०। ( मुलकुड़ी ) क्षुपभेदे।

**महाश्वेता** स्त्री० कर्म्म० सरस्वत्याम्, कृष्णभूमिकुष्माण्डे च।

**महाष्टमी** स्त्री० कर्म्म०। 'आश्विने शुक्लपक्षस्य भवेद्या तिथिरष्टमी। महाष्टमीति सा प्रोक्ते'त्युक्तायामाश्विनशुक्लाष्टम्याम्।

**महासर्ज्ज** पु० कर्म्म०। असनवृक्षे, पनसवृक्षे च ( काटाल )।

**महासह** पु० कर्म्म०। पुष्पप्रधाने कुब्जकवृक्षे, माषपर्ण्याम्, अम्लान-वृक्षे च स्त्री०। अतिक्षमे त्रि०।

**महासान्तपन** न०। कर्म्म०। सप्ताहसाध्ये स्मृत्युक्ते व्रतभेदे।

**महासार** पु० महान् सारोऽस्य। दुष्खदिरे।

**महासुगन्धा** स्त्री० सुष्ठु गन्धोऽस्याः कर्म्म०। गन्धनाकुल्याम्, अति-सुगन्धयुक्ते त्रि०।

**महासेन** पु० महती सेनाऽस्य। कार्त्तिकेये। वृहत्सेनाधिपतौ त्रि०।

**महास्कन्ध** पु० महान् स्कन्धोऽस्य। जम्बूवृक्षे।

**महाहास** पु० कर्म्म०। अट्टहासे, उच्चैर्हासे।

**महाहिगन्धा** पु० अहेर्गन्धो हिंसा यस्मात् अहिगन्धो नकुलः सम-[illegible] अच् कर्म्म०। गन्धनाकुल्याम्।

**महाह्रस्वा** स्त्री० कर्म्म०। कपिकच्छ्वाम् ( आलकुशी ) अतिखर्वे त्रि०।

महि ( ही ) स्त्री० मह इन् वा ङीप् । पृथिव्याम् । ङीबन्तस्तु मालवदेशस्थे नदीभेदेऽपि ।

महिका स्त्री० मह्यते मह-क्वुन् । हिमे ।

महिमन् पु० महतो भावः इमनिच् डित्त्वेन टिलोपः । महत्त्वे, ऐश्वर्य्यैश्वर्य्यभेदे च ।

म ( मि ) हिर पु० मह-( मिह-) किरच् । सूर्य्ये ।

महि(हे)ला स्त्री० मह-इलच् । योषिति, प्रियङ्गुलतायां, रेणुकागन्धद्रव्ये, मत्तायां स्त्रियाञ्च । एलच् । महेलापि, योषिति ।

महिष पु० मह-टिषच् । स्वनामख्याते पशुभेदे, महिषासुरे च । राज्ञः कृताभिषेकायां स्त्रियां, महिषजातिस्त्रियाम्, ओषधिभेदे च स्त्री० ङीप् । [ माद्योऽप्यत्र ।

महिषध्वज पु० महिषो ध्वजश्चिह्नं वाहनत्वेनास्य । यमे । महिषवाह-

महिषमर्द्दिनी स्त्री० महिषं महिषासुरं मृद्नाति, मृद-णिनि ङीप् ६त० । दुर्गाभेदे ।

महिषाक्ष पु० महिषस्याक्षीव अच् । गुग्गुलुभेदे । स्वार्थे कन् । तत्रैव ।

महिषासुर पु० रम्भासुरेण महिष्यामुत्पादिते असुरभेदे, महिषाक्षगुग्गुलौ च । [ भूमिजगुग्गुलौ ।

महिषासुरसम्भव पु० महिषासुरात्तनुमेदसः सम्भवति भू-अच् ।

महीक्षित् पु० महीं क्षयते ईष्टे क्षि-ऐश्वर्य्ये क्विप् तुक् च । नृपे ।

महीज न० मह्या जायते जन-ड । आर्द्रके । मङ्गलग्रहे, नरकासुरे च पु० ।

महीध्र पु० महीं धारयति धृ-क । पर्व्वते । अच् । महीधरोऽप्यत्र ।

महीप्राचीर न० मह्याः प्राचीरमिवावरकत्वात् । समुद्रे ।

महीभृत् पु० महीं बिभर्त्ति धारयति पालयति वा भृ-क्विप् । पर्व्वते, भूमिपाले च ।

महीयस् त्रि० अतिशयेन महान् महत्+ईयसु । अतिमहति 'महतो महीयानि"ति श्रुतिः ।

**महीयमान** त्रि० महीयते मही+कण्डु० यक्—शानच्। पूज्ये, श्रेष्ठे च 'महीयमाना भवताऽतिमात्र"मिति भट्टि:।

**महीरुह** पु० मह्यां रोहति रुह्—क। वृक्षे, शाके च।

**महीलता** स्त्री० मह्या लतेव। (केचो) किञ्चुलुके।

**महेच्छ** त्रि० महती इच्छा यस्य। महाशये।

**महेन्द्र** पु० महान् इन्द्रः इन्द्रस्यापि नियन्तृत्वात्। परमेश्वरे, महैश्वर्य्यवति इन्द्रे, जम्बुद्वीपस्यपर्व्वतभेदे च।

**महेन्द्रकदली** स्त्री० महेन्द्रप्रिया तद्वर्णा वा कदली। कदलीभेदे।

**महेन्द्रपुरी** स्त्री० ६त०। अमरावत्याम्। महेन्द्रनगर्य्यादयोऽप्यत्र।

**महेन्द्रवारुणी** स्त्री० महेन्द्रस्य वरुणस्य तयोरियं प्रियत्वात्। अण् देवताद्वन्द्वे उत्तरपदवृद्धिः। (माकाल) लताभेदे।

**महेरणा** स्त्री० महं गजोत्सवमीरयति ल्यु। शल्लकीवृक्षे।

**महेश** पु० कर्म्म०। शिवे। महेश्वरोऽप्यत्र 'महेश्वरस्त्र्यम्बक एव नापर' इति रघुः।

**महेशबन्धु** पु० ६त०। विल्ववृक्षे।

**महैला** स्त्री० कर्म०। स्थूलैलायाम् (बड़एलाची)

**महोक्ष** पु० महान् उक्षा अच् समा०। वृहद्वृषे, 'महोक्षं वा महाजं वा श्रोत्रियाय प्रकल्पयेदि"ति मनुः।

**महोटी** स्त्री० महान्ति फलापेक्षया स्थूलानि उटानि पर्णान्यस्याः ङीप्। वृहत्यां उत्पले च।

**महोत्पल** पु० कर्म्म०। पद्मे, सारसपक्षिणि च।

**महोत्सव** पु० कर्म्म०। सन्ततसुखसम्पादकव्यापारे।

**महोत्साह** त्रि० महान् उत्साहो यस्य। अत्यन्तोद्यमयुक्ते।

**महोदधि** पु० कर्म०। समुद्रे।

**महोदय** [illegible]० महान् उदयो वृद्धिराधिपत्यं वा यत्र। कान्यकुब्जदेशे। तद्देशस्थे पुरभेदे च। [illegible] [illegible]र्कोदययोगात् 'अमार्कपाते श्रवणा [illegible]'इत्यादिलक्षणात् 'त्रिभिर्दूने महोदय' इत्युक्ते किञ्चिदूने योग[illegible] [illegible]। नागवल्ल्यां स्त्री०।

**महोदरी** स्त्री० महदुदरं यस्याः । शतमूल्याम् वृहदुदरयुक्ते त्रि० ।

**महोन्नत** पु० कर्म० । तालवृक्षे । अत्यन्तोन्नतियुक्ते त्रि० ।

**महोरग** पु० कर्म० । वृहत्सर्पभेदे महोरगाकारोऽस्त्यस्य अच् । तगरमूले न० ।

**महोल्का** स्त्री० कर्म० । वृहदुल्कायाम् ।

**महौषध** न० कर्म० । शुण्ठ्याम्, लशुने, वाराहीकन्दे, वत्सनाभे विषे, पिप्पल्याम्, अतिविषायां, श्रेष्ठौषधमात्रे च ।

**महौषधि** स्त्री० कर्म० । दूर्वायां, लज्जालुक्षुपे "वृहद्देवी तथा व्याघ्री बला चातिबला तथा । शङ्खपुष्पी तथा सिंही अष्टमी च सुवर्चला । महौषध्यष्टकं प्रोक्त"मित्युक्ते देवादीनां स्नानद्रव्यभेदे । श्वेतकण्टकार्य्यां ङीप् ।

**मा** शब्दे अक० माने सक० जु० आ० अनिट् । मिमीते अमित ।

**मा** माने अदा० प० सक० अनिट् । माति अमासीत् ।

**मा** माने दि० आ० सक० अनिट् । मायते अमास्त ।

**मा** अव्य० ङिदनुबन्धात् टेवादिकात् मा-धातोः क्विप् । वारणे । धातोर्ङित्त्वेन शब्दे ङित्त्वव्यवहारात् न माङ्योगे इति पाणिनिसूत्रम् । ङिदनुबन्धशून्यधातुनिष्पन्नस्तु न ङित् तेन तद्योगे अडागमः स्यादेव मा निषाद ! प्रतिष्ठां त्वमगमः" इति रामायणम् । मा-क-टाप् । लक्ष्म्याम्, मातरि च स्त्री० माभावे क्विप् । माने स्त्री०

**मांस** न० मन-स दीर्घश्च । मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम् । इति मांसस्य मांसत्व"मित्युक्ते प्राणिदेहस्थशोणितपरिपाकजे धातुभेदे । [रोहिण्यां लतायाम् ।

**मांसच्छदा** स्त्री० मांसं छादयति छद-णिच्-अच् ह्रस्वः । मांस

**मांसज** न० मांसाज्जायते जन-ड । देहस्थे मांसजन्ये मेदसि ।

**मांसदलन** पु० मांसं मांसात्मकं मांसं दलयति दल-णिच्-ल्यु । ग्रीष्मघातकवृक्षे

**मांसद्राविन्** पु० मांसं द्रावयति णिच् णिनि । अम्लवेतसे ।

**मांसपेशि** स्त्री० ६ त० । गर्भस्यावयवभेदे । वा ङीप् तत्रैव ।

**मांसफला** स्त्री० मांसमिव कोमलं फलं यस्याः। वार्त्ताक्याम्।

**मांसमासा** स्त्री० मस-परिणामे घञ् मांसस्य परिणामो यस्याः ५ ब०। माषपर्ण्याम्। [सुगन्धिद्रव्यभेदे (चामकषा)

**मांसरोहिणी** स्त्री० मांसं रोहयति रुह-णिच् णिनि वा न पुक्।

**मांसल** त्रि० मांस+बलवत्यर्थे लच्। बलवति स्थूले, पुष्टे च।

**मांसलफला** स्त्री० मांसलं पुष्टं फलमस्याः। वार्त्ताक्याम्।

**मांससार** पु० ६त०। मेदसि। मांसस्नेहादयोऽप्यत्र।

**मांसहासा** स्त्री० मांसेन हस्यते कर्मणि घञ्। देहस्यचर्मणि।

**मांसिक** त्रि० मांसं पण्यमस्य ठक्। मांसविक्रयोपजीविनि। (कसाइ)।

**मांसिनी** स्त्री० मांसवत्तदाकारस्तद्तुल्यं वाऽस्त्यस्याः इनि। जटामांस्याम्।

**मांसी** स्त्री० मांसमस्त्यस्य अच् गौ० ङीष्। जटामांस्याम्।

**माकन्द** पु० माति मा-क्विप् माः परिमितः कन्दोऽस्य। आम्रे। आमलक्यां, पीतचन्दने, (बकुमूलो) चन्दने, नगरभेदे च स्त्री० गौरा० ङीष्।

**माकरी** स्त्री० मकरस्य तत्स्थरविकालस्य इयम् अण्। मकरस्थितरविकाले तदारब्धमाघमासस्य शुक्लसप्तम्यां 'जन्म रोगश्च शोकश्च माकरी हन्तु सप्तमी'ति स्मृतिः।

**माक्ष** स्पृहायां भ्वा० पर० सक० सेट् इदित्। माङ्क्षति अमाङ्क्षीत्।

**माक्षि(क्षी)क** न० मक्षिकाभिः सम्भृत्य कृतम् अण् पु० वा दीर्घः। उपधातुभेदे मधुनि तत्तुल्यगुणे स्वर्णमाक्षिके रौप्यमाक्षिके च।

**माक्षिकज** न० माक्षिकाज्जायते जन-ड। सिक्थके (मोम)।

**माक्षिकफल** पु० माक्षिकमिव मधुरं फलमस्य। मधुनारिकेले।

**माक्षिकशर्करा** स्त्री० ६त०। मधुजाते खण्डभेदे (मिताखण्ड)।

**मागध** पु० मगधदेशे भवः अण्। श्वेतजीरके स्तुतिपाठके (भाट) वर्णसङ्करभेदे च यूथिकायां, पिप्पल्यां, सूक्ष्मजीरायां, शर्करायां, भाषाविशेषे च स्त्री० ङीष्। मगधदेशजाते त्रि०।

**मागधखारिका** स्त्री० कोलावच्छिन्ने परिमाणभेदे।

माघ पु० मघानक्षत्रयुक्ता पौर्णमासी माघी सास्मिन् मासे ऽण्। चैत्रावधिके एकादशे चान्द्रे मासे। तत्पौर्णमास्यां स्त्री० ङीप्। शिशुपालवधकाव्ये, तत्कर्त्तरि च पु०। "तावद्भा भारवे र्भाति यावन्माघस्य नोदय" इत्युद्भटः।

माघ्य न० माघे भवं यत्। कुन्दपुष्पे।

माङ्गल्य न० मङ्गलमेव मङ्गलाय हितं वा ष्यञ्। मङ्गले, मङ्गलसाधने च। [याम्।

माङ्गल्यार्हा स्त्री० माङ्गल्यमर्हति अर्ह–अच्। त्रायमाणालता-

माचिका स्त्री० मच–ण्वुल्। अम्बष्ठायां, मक्षिकायाञ्च।

माञ्जिष्ठ न० मञ्जिष्ठया रक्तमण्। रक्तवर्णे। तद्वति त्रि०।

माठर पु० मन–अरन् ठान्तादेशः ततः स्वार्थे अण्, सूर्य्यस्य पारिपार्श्वे मठति अरण् वा। सूर्य्यस्य पारिपार्श्विके गणभेदे।

माण(न)क न० मा–अनच् णुट् नुट् वा। स्वनामख्याते कन्दभेदे "हरिद्रा माण(न)कं कचुरिति मदपत्निकाप्रमाणम्।

माणव पु० मनोरपत्यं अण् अल्पार्थे णत्वम्। अल्पवयस्के मनुष्ये। स्वार्थे कन्। तत्र, हारभेदे च।

माणवीन त्रि० माणवस्येदम् खञ्। बालकसम्बन्धिनि।

माणव्य न० माणवानां समूहः यत्। बालकसमूहे।

माणिक्य न० मणिरिव कायति कै–क स्वार्थे ष्यञ्। (माणिक) रक्तवर्णे रत्नभेदे, गृहगोधिकायाञ्च। [लवणे।

माणिबन्ध(मन्थ) न० मणिबन्ध (मन्थ) पर्वते भवः अण्। सैन्धव-

मातङ्ग पु० मतङ्गस्य मुनेरयम् अण्। गजे, किरातजातिभेदे, । अश्वत्थवृक्षे च। दशमहाविद्याभेदे स्त्री० ङीप्।

मातङ्गमकर पु० मातङ्ग इव मकरो जलजन्तुः। महामत्स्यभेदे।

मातरपितृ स्त्री० माता च पिता च द्वन्द्वे मातुर्वा मातरादेशः। मातापित्रोः। पक्षे मातरा ङङ्। तयोरर्थयोः।

मातरिश्वन् पु० मातरि आकाशे श्वयति वर्द्धते श्वि–कनिन् डिस्मलुक् स०। वायौ।

**मातलि** पु० मतं जाति ला—क मतलस्य अपत्यम् इञ्। इन्द्रसारथौ

**माता** स्त्री० मा—अतच्। जनन्याम्। "विश्वेश्वरीं विश्वमाता"मिति दुर्गास्तवः। [स्त्री० ङीप्।

**मातामह** पु० मातुः पिता मातृ+डामह। मातुः पितरि। तत्पत्न्यां

**मातुल** पु० मातुर्भ्राता मातृ—डुलच्। मातुर्भ्रातरि तत्पत्न्यां वा ङीप् वा आनुक् च। मातुलानी मातुली मातुला च। मद्—णिच्—उलच् पृ० दस्य तः। धुस्तूरे, मदनवृक्षे, सर्पभेदे च।

**मातुलपुत्रक** न० मातुलस्य धुस्तूरस्य पुत्र इव कायति कै—क। धुस्तूरे इत० कन् मातुलसुते।

**मातुलुङ्ग** पु० मातुलं गच्छति गम—खच् डिच्च पृ०। वीजपूरे, मधु—कर्कट्याञ्च। संज्ञायां कन्। वनवीजपूरे।

**मातृ** त्रि० मा—तृच्। प्रमाणकर्त्तरि परिमाणकर्त्तरि, जीवे आकाशे च स्त्री मातरौ। मा—तृ। "ब्राह्मी माहेश्वरी चण्डी वाराही वैष्णवी तथा कौमारी चैव चामुण्डा चर्चिकेत्यष्टमातर इत्युक्ते, शिवसहचरीभेदे, जनन्याम् भूमौ, विभूतौ, लक्ष्म्याम्, रेवत्याम्, आखुकर्ण्याम्, इन्द्रवारुण्याम्, (राखालशशा) जटामांस्यां, चण्डी—प्रसिद्धासु देवीशक्तिषु च "मातः कोपमयाविष्ट" इति चण्डी।

**मातृका** स्त्री० मातेव कायति कै—क। उपमातरि, ब्रह्माण्यादिषु चण्डीप्रसिद्धदेवीमूर्तिषु सर्वशब्दोत्पादकेषु अकारादिकोनपञ्चाश—द्वर्णेषु, करणे, स्वरे च। मातृ+स्वार्थे कन्। मातृशब्दार्थे।

**मातृबन्धु** पु० इत०। मातुः पितुः स्वसुः एवा मातुर्मातुः स्वसुः सुताः। मातुर्मातुलपुत्राश्च विज्ञेया मातृबन्धव, इत्युक्तेषु मातुः पितृष्वस्त्रीयादिषु। मातृबन्धुयोऽप्यत्र।

**मातृष्वसृ** स्त्री० इत०। मातुर्भगिन्याम् "अलुकस०। मातुः ष्वसाप्यत्र।

**मातृष्वस्रेय** पु० मातृष्वसुरपत्यम् ठक्। मातुर्भगिनीपुत्रे तत्कन्यायां स्त्री० ङीप्। छण्। मातृष्वस्रीयोऽप्यत्र।

**मातृसिंही** स्त्री० मातुः प्रमातुः सिंहीव। वासकवृक्षे।

**मात्र** न० मा—त्रन्। साकल्ये अवधारणे च। अविच्छेदे, अल्पे,

परिमाणे कर्णभूषायाम्, वित्ते, लघुवर्णोच्चारणकाले वर्णविषय-
भेदे, "कालेन यावता पाणिः पर्य्येति जानुमण्डलं। सा मात्रा
कविभिः प्रोक्ता" इत्युक्तेषु ह्रस्वदीर्घप्लुतादिषु च स्त्री०। मीयन्ते-
ऽनया विषयाः मा—तन्। इन्द्रियवृत्तौ। "मात्रास्पर्शास्तु कौ-
न्तेये"ति गीता। [ चक्रे।

**मात्रापताका** स्त्री० छन्दोग्रन्थोक्ते मात्राप्रस्तावानुगुणे पताकाकारे

**मात्रामर्कटी** स्त्री० छन्दोग्रन्थोक्ते मात्रावृत्तप्रस्तावानुगुणे मर्कटी-
जालचक्रभेदे।

**मात्रामेरु** पु० छन्दोग्रन्थोक्ते मात्रावृत्तप्रस्तावानुगुणे मेरुचक्रे।

**मात्रावृत्त** न० मात्रया कृतं वृत्तम्। आर्य्यादौ छन्दोभेदे।

**मात्सर्य्य** न० मत्सरस्य भावः ष्यञ्। परगुणद्वेषे "मात्सर्य्यमुत्सार्य्य
विचार्य्ये"ति साहि०।

**माथ्** वधे भ्वा० पर० सक० सेट् इदित्। मान्थति अमान्थीत्।

**माथ** पु० मथ—घञ्। पथि, मन्थने च।

**माथुर** त्रि० मथुरायां भवो मथुरायाः आगतो वा अण् मथुरानगरी-
भवे, तत आगते च।

**माद** पु० मद-घञ् हर्षे, दर्पे च।

**मादक** त्रि० मादयति मद—णिच् ण्वुल्। मत्तताकारके द्रव्ये मादयति
कर्त्तरि ण्वुल्। दात्यूहे पु०।

**मादन** न० मादयति मद—णिच्—ल्यु। लवङ्गे। कामदेवे, मदन वृक्षे
च पु०। विजयायां, माकन्द्याञ्च स्त्री० गौ० ङीष्,

**मादृश(क्ष)** त्रि० ममेव दर्शनमस्य दृश-कञ् क्विप्, वा। मम तुल्य-
दर्शने मत्सदृशे।

**माद्री** स्त्री० मद्रे भवा अण्। पाण्डुराजस्य द्वितीयपत्न्याम् अति-
विषायाञ्च।

**माधव** पु० माया धवः। नारायणे। मधु+स्वार्थे अण्। वसन्ते "स
माधवेनाभिमतेन सख्ये"ति कुमारः। मधुने पुष्परसाय मद्याय
वा हितः अण्। वैशाखे तस्य मद्यपुष्परसत्वम् तद्धितत्वम्।

मधूकपुष्पे च तत्पुष्पेण हि मद्यसम्भवः । मधु बाहुल्येनास्त्यस्याः अण् । वासन्तीलतायाम् स्त्री० ङीप् ।

**माधवीलता** स्त्री० कर्म्म० । स्वनामख्यातायां लतायाम् ।

**माधवेष्टा** स्त्री०माधवे वैशाखे माधवस्य कृष्णस्य वा इष्टा । वाराहीकन्दे

**माध्वोचित** न० माधवा उचितो यस्य । कक्कोलके ।

**माधवोद्भव** पु० माधवे वैशाखे उद्भवति फलवत्त्वेन उद्+भू—अच् । (पियाल) राजादन्याम् । [ मल्लिकापुष्पे ।

**माधुर** न० मधु—राति भ्रमरेभ्यो ददाति रा क—स्वार्थे अण् ।

**माधुरी** स्त्री० मधुरस्य भावः ष्यञ् माधुर्य्यं षित्त्वात् स्त्रीत्वपक्षे ङीष् यलोपः । "माधुर्य्ये मधुरत्वे, मद्यस्खलन्माधुरीधारे"त्युद्भटः । मधुर+स्वार्थे अण् । मदिरायाम् ।

**माध्यन्दिन** न० मध्यन्दिनमेव—अण् । मध्यमदिने तदधिकृत्य कृतो ग्रन्थः अण् शुक्लयजुर्वेदीयशाखाभेदे ।

**माध्वीक** स्त्री० मधुना मधूकपुष्पेण निर्वृत्तम् ईकक् । मधूकपुष्पजाते मद्ये । मधु एव स्वार्थे ईकक् द्राक्षाफले माध्वीं माध्वीक ! चिन्ता विजहत्यति जयदेवः ।

**माध्वीकफल** पु० माध्वीकमिव मधुरं फलमस्य । मधुनारिकेले ।

**माध्वीमधुरा** पु० माध्वीकमिव मधुरा पृ० कलोपः । मधुरखर्जूरिकायाम् । [मांसिष्ट

**मान** विचारे भ्वा० आ० सक० सेट् स्वार्थे सन् । मीमांसते अमी-

**मान** अर्चे वा चु० उभपक्षे० भ्वा० पर० सक० सेट् । मानयति ते मानति अमीमनत्—त अमानीत् ।

**मान** न० मा—ल्युट् । परिमाणे हस्ततुलाप्रस्थाद्यैर्द्रव्यपरिच्छेदे, प्रमाणे गानाङ्गे कालक्रियायां तालविरामोपलक्षिते कालव्यापारे च । मन—घञ् । आत्मनि उत्कर्षाभिमानात्मिकायां चित्तसमुन्नतौ । स्वाभीष्टस्य पत्नीत्वादिविरोधी मान उच्यते" इत्युक्तो अनुरक्तदम्पत्योः अवस्थाभेदे "मुञ्च मयि मानमनिदानमि"ति जयदेवः सम्माने च ।

मानग्रन्थि पु० मानस्य ग्रन्थिर्बन्धनं यस्मात् । अपराधे ।

मानरन्ध्रा स्त्री० मानाय कालप्रमाणज्ञानाय रन्ध्रं यस्याः । ताम्र-निर्म्मिते सच्छिद्रे कालज्ञानहेतौ घटीयन्त्रभेदे ।

मानव पु० मनोरपत्यम् अण् । मनुष्ये स्त्रियां जातौ ङीप् ।

मानस न० मन एव अण् । मनसि, कैलासान्तिकस्थे ब्रह्मणा कृते सरोवरभेदे च ।

मानसव्रत न० मनसा कृतं मानसं कर्म्म० । "अहिंसासत्यमस्तेयं ब्रह्म-चर्य्यमलुब्धता । एतानि मानसानि स्युर्व्रतानी"त्युक्तेषु अहिंसादिषु ।

मानसौकस् पु० मानसमोको यस्य । हंसे ।

मानिनी स्त्री० मान-इनि । फलीवृक्षे, मानवत्यां स्त्रियां च ।

मानुष पु० मनोरयम् अण् सुक् च । मानवे, ततोजातौ स्त्रियां ङीप् मानुषी ।

मानुष्य न० मानुषस्य भावः यत् । मनुष्यत्वे ।

मान्द्य न० मन्दस्य भावः ष्यञ् । रोगे, मन्दतायाञ्च ।

मान्धातृ पु० मामिन्द्रं धयति धे-तृच् । "मामयं धास्यतीत्यस्मात् मान्धाता सौ प्रकीर्त्तित"इति निरुक्तेः युवनाश्वराजपुत्रे नृपभेदे ।

मान्य पु० मान-अर्हायां कर्म्मणि यत् । पूज्ये ।

मामक त्रि० मम-इदम् अस्मद्+अण् ममादेशः । तस्मिन्निति खञ् । मामकीनोऽप्यत्र ।

माया स्त्री० मा-य नेत्त्वम् । बुद्धौ, कापट्ये, इन्द्रजालादौ, मिथ्या-बुद्धिहेतुज्ञानभेदे, कृपायां, दम्भे, बुद्धमातरि, ईश्वरस्यो-पाधौ, अघटनघटनशक्तिकायां शक्तौ । [ कर ) ।

मायाकृत् पु० मायामिन्द्रजालं करोति कृ-क्विप् । मायाकरे (बाजी-

मायादेवीसुत पु० ६त० । बुद्धे ।

मायावत् त्रि० माया+अस्त्यर्थे मतुप् मस्य वः । मायाविशिष्टे कंस-राजे पु० । कामपत्न्यां स्त्री० ङीप् ।

मायाविन् त्रि० माया+अस्त्यर्थे विनि । मायाकरे स्त्रियां ङीप् ।

मायिक त्रि० मायाऽस्यस्य ठन् । मायाकरे । इनि मायीत्यप्यत्र ।

**मायु** पु० मा–यु । देहस्थे पित्ते । [ तन्मिश्रिणि त्रि० ।

**मायूर** न० मयूराणां समूहः तस्येदं वा अण् । मयूरसङ्घे । मयूर-

**मायूरी** स्त्री० मयूरस्येदं प्रियत्वात् । अण् ङीप् । अजमोदायाम् ।

**मार** पु० मृ–घञ् । मरणे । मारयति मृ–णिच्–अच् । कामदेवे, विघ्ने, धुस्तूरे च । [ मारिभये । (वाज) पक्षिभेदे च ।

**मारक** पु० मृ–णिच् ण्वुल् मृ–णिच् घञ् स्वार्थे कन् वा । मारणे

**मारकस्थान** न० मारणकारणे स्थाने । "अष्टमं ह्यायुषः स्थानमष्ट-मादष्टमञ्च यत् । तयोरपि व्ययस्थानं मारकस्थानमुच्यते" इत्युक्ते जन्मलग्नात् सप्तमे द्वितीये च स्थाने ।

**मारि** स्त्री० मृ–णिच्–इन् । मारणे वा ङीप् मारीत्यप्यत्र । 'मारी-भये राजभये" इति वटुकस्तवः ।

**मारिष** पु० रिष–हिंसायाम् निषेधार्थकमाशब्देन स० । नाट्योक्तौ आर्ये, हिंसानिवारकतया तस्य तथात्वम् । तण्डुलीयशाके; दक्षमातरि च स्त्री० टाप् ।

**मारीच** पु० ताडकाराक्षसीपुत्रे रावणानुचरे राक्षसविशेषे ।

**मारुतव्रत** न० 'प्रविश्य सर्वभूतानि यथा चरति मारुतः । तथा चरैः प्रवेष्टव्यं व्रतमेतद्धि मारुतमित्युक्ते राज्ञां धर्मभेदे ।

**मारुतात्मज** पु० ६त० हनुमति, भीमे च इति । मारुतिरप्यत्र ।

**मारुतापह** पु० मारुतं वायुदोषमपहन्ति अप+हन–ड । वरुणवृक्षे । वायुनाशके त्रि० ।

**मार्कण्ड** पु० मृकण्डोरपत्यम् अण् पु० । मुनिभेदे ढक् । मार्क० मार्कण्डेयोऽप्यत्र । तत्सृष्टे लताभेदे स्त्री० ।

**मार्कव** पु० मारयति क्विप्–मारि केशक्लेशे कूयते कू अच् । भृङ्गराजे

**मार्ग** संस्कारे सर्पणे च चुरा० उभ०सक० सेट् । मार्गयति अममार्गत् त

**मार्ग** अन्वेषणे वा० चु०उभ०पक्षे भ्वा०प० सक० सेट् । मार्गयति-ते मार्गति अममार्गत् त । अमार्गीत् । 'न्यपतेरमार्गीदि"ति भट्टिः भ्वा० आ० इत्यन्ये तेन मार्गते, मार्गमाण इत्यादि सिद्धम् ।

**मार्ग** पु० मृज–शुद्धौ-मार्ग-अन्वेषणे वा घञ् । पथि-तद्विशेषे

प्रमाणम् वाचस्पत्ये वक्ष्यते । [ल्यु । याचके त्रि० शरे पु० ।

**मार्गण** न० मार्ग–ल्युट् । अन्वेषणे याचने, प्रणये च । कर्त्तरि

**मार्गशिर** पु० मृगशिरया युक्ता पौर्णमासी अण् सा यत्र मासे पुनरण् । चान्द्रे अग्रहायणे मासि तत्पौर्णमास्यां स्त्री० ङीप् ।

**मार्गशीर्ष** पु० साधनं मार्गशिरवत् । अग्रहायणे मासि । तत्पौर्णमास्यां स्त्री० ङीप् ।

**मार्गित** त्रि० मार्ग–क्त । अन्वेषिते । [असमार्ज्जत्–त ।

**मार्ज्ज** मार्ज्जने सक० ध्वनौ अक० चुरा० उभ० सेट् । मार्ज्जयति-ते

**मार्ज्जन** न० मार्ज्ज–ल्युट् । प्रोञ्छनादिना निर्मलीकरणे । युच् । तत्रैवार्थे स्त्री० सा च मुरजध्वनौ च । करणे ल्युट् । सम्मार्जन्याम् (झाटा) । स्त्री० ङीप् ।

**मार्ज्जार(ल)** पु० मृज-आरन् वा रस्य लः । विड़ाले रक्तचित्रके खटासे च । ततः संज्ञायां कन् मयूरे ।

**मार्ज्जारगन्धा** स्त्री० मार्ज्जारस्येव गन्धो यस्याः । मुद्गपर्णीभेदे । स्वार्थे कन् । तत्रैव ।

**मार्ज्जारी** स्त्री० मृज–आरक् गौ० ङीप् । कस्तूर्य्याम् खटासजन्तौ, मार्जारयोषिति च ।

**मार्ज्जारी(ली)य** पु० मार्ज्जार+(ल)स्वार्थे छ, मृज–आरीयक् रस्य लत्वम् वा । विड़ाले, शूद्रे च कायशोधने न० ।

**मार्जित** पु० मार्ज–क्त । शोधिते । दधि–खण्डमधुसर्पिर्मरिचादिकृते, कर्पूरादिवासिते भक्ष्यभेदे (रसा) ।

**मार्त्तण्ड** पु० मृते अण्डे भवः अण् शक० । सूर्य्ये । तस्य च मृताण्डजन्म 'मारितञ्च यतः प्रोक्तमेतदण्डं त्वयादितिम् तस्मान्मुने ! सुतस्तेऽयं मार्त्तण्डाख्यो भविष्यती"ति पुराणोक्तम् ।

**मार्त्तिक** न० मृत्तिकया निर्म्मितम् अण् । शरावे (शरा) मृण्मये त्रि०

**मार्द्दङ्गिक** त्रि० मृदङ्गं तद्वादनं शिल्पमस्य ठक् मृदङ्गवादके ।

**मार्द्दव** न० मृदोर्भावः । मृदुत्वे, परदुःखासहिष्णुतायाम् द्रवीभावे च 'अभितप्तमयोऽपि मार्द्दवं भजते कैव कथा शरीरिषु' ।

**मार्ष** पु० मृष-क ततः स्वार्थे अण् । तण्डुलीयशाके ।
**मार्ष्टि** स्त्री० मृज-क्तिन् । शोधने ।
**माल** पु० मल-संज्ञायां घञ् । "भिल्ला किराताश्च" इत्युक्ते जातिभेदे ।
**मालक** न० मल-ण्वुल् । स्थलपद्मे (माला) नारिकेलपात्रभेदे च ।
**मालती** स्त्री० मां लक्ष्मीं शोभां वा लतति वेष्टते लत-अण् ङीप् ।
जातीलतायां, युवत्यां, काकमाच्यां, नदीभेदे, विशल्यायां, ज्योत्स्नायां, निशायाञ्च ।
**मालतीरज** पु० मालत्या नदीभेदस्य तीरे जायते जन-ड । टङ्कणे
टङ्कणे (सोहागा) मालतीतीरभवादयोऽप्यत्र ।
**मालतीपत्री** स्त्री० मालत्यास्तन्नामकजात्याइव पत्रमस्याः । जातीपत्राम् ( जैयत्री ) । [ फले ।
**मालतीफल** न० मालत्यास्तन्नामकजात्याः फलम् । (जायफल) जाती-
**मालभारिक** त्रि० मालामं भारोऽस्यस्य ठन् पूर्वपदः ह्रस्वः मालानां भारवति ।
**मालव** पु० अवन्तिदेशे (मालकोया देश) रागभेदे च ।
**मालविका** स्त्री० मालवे भवा ठक् । त्रिवृति ( तेओड़ि ) ।
**मालसी** स्त्री० मालं मलनं जटादिना दुष्टत्वं स्यति सो-क गौ०ङीष् ।
केशपुष्टिकारके वृक्षे, रागिणीभेदे च ।
**मालाकण्ट** पु० मालाकारः कण्टः कण्टको यस्य । अपामार्गे ।
**मालाकन्द** पु० मालाकारः कन्दो यस्य । मूलभेदे ।
**मालाकार** पु० मालां करोति कृ-अण् । (माली) वर्णसङ्करभेदे ।
माल्यकारके त्रि० ।
**मालाग्रन्थि** पु० मालया ग्रन्थिरत्र । मालादूर्वायाम् ।
**मालातृण** न० मालाकारं तृणम् । भूतृणे । स्वार्थे कन् । तत्रैव ।
**मालादीपक** न० अलङ्कारोक्ते अर्थालङ्कारभेदे ।
**मालादूर्वा** स्त्री० मालाकारा दूर्वा । (गांठिदूर्वा) दूर्वाभेदे ।
**मालारिष्टा** स्त्री० मालाभूतमरिष्टं यस्याः ५ब० । पाठायाम् ।
**मालाली** स्त्री० मालामलति भूषयति अल-अण् ङीप् । पृक्कायां
(पिड़िङ्गशाके) स्वार्थे कन् । तत्रैव ।

मालिक पु० माला तन्निर्माणं शिल्पमस्य ठन् । मालाकारे जातिभेदे पक्षिभेदे, रजके च । माल्यकारके च त्रि० ।

मालिका स्त्री० मालेव कन् अत इत्वम् । नवमल्लिकायां, ग्रीवालङ्करणे, नदीभेदे सुरायां अतसाम्, । पुष्पमालायाम्, च । 'पाषाणमालिकामोजेति सप्तमीव्याख्यानम् ।

मालिन् पु० माला शिल्पमस्त्यस्य इनि । मालाकारे, माल्यवति त्रि० मालाकारपत्न्यां सप्तदशाक्षरपादके, छन्दोभेदे, गौर्य्याम्, चम्पानगर्यां, मन्दाकिन्यां, कण्वाश्रमान्तिकस्थे नदीभेदे, अग्निशिखावृक्षे, दुरालभायां च स्त्री० ङीप् ।

मालु स्त्री० मल—उण् । पत्रलतायां (पानलता) नार्य्याञ्च ।

मालुधान पु० मालुरिव पत्रलतेव धीयतेऽसौ धा—कर्म्मणि ल्युट् । (मालुयाधाप) सर्पभेदे । लताभेदे स्त्री० ङीप् ।

मालूर पु० मां लक्ष्मीं परेषां लुनाति लू—रक् । बिल्वे, कपित्थे च ।

मालेय त्रि० मालायां साधुः ढक् । मालारचनानिपुणे ।

माल्य न० मालायै हितं यत् । पुष्पे । स्वार्थे ष्यञ् । पुष्पमालायाम्, मूर्द्धिस्थायां पुष्पमालायाञ्च ।

माल्यपुष्प पु० मालायै हितं पुष्पमस्य । शणवृक्षे शणपुष्प्याम् स्त्री० ङीप् । स्वार्थे कन् । तत्रैव ।

माल्यवत् त्रि० माल्यमस्त्यस्य मतुप् मस्य वः । माल्ययुक्ते केतुमालेलावृतवर्षयोः सीमाभूते पर्वतभेदे, सुकेशराक्षस पुत्रे रावणमातामहे राक्षसभेदे च ।

माश्शब्दिक त्रि० मेति शब्दं निषेधाय करोति ठक् । निषेधकारके ।

माष पु० मष—संज्ञायां घञ् । (माषकलाइ) व्रीहिभेदे 'दशार्द्धगुञ्जं प्रवदन्ति माषमि'त्युक्ते 'गुञ्जाभिर्दशभिश्चैव' इत्युक्ते च परिमाणभेदे ।

माषकलाय पु० माषाख्यः कलायः । तन्नामख्याते व्रीहौ ।

माषपर्णी स्त्री० माषस्येव पर्णान्यस्याः ङीप् । वनमाषे ।

**माषभक्तबलि** पु० माषमिश्रितं भक्तमेव बलिः पूजोपहार द्रव्यम् । माषमिश्रिते भक्तरूपे पूजोपहारे ।

**माषवर्द्धक** पु० माषं माषपरिमितं स्वर्णं वर्द्धयति छिनत्ति अपहरति वर्द्ध-छेदने ण्वुल् । स्वर्णकारे ।

**माषीण** न० माषाणां भवनं क्षेत्रं खञ् । माषोद्भिद्भवन योग्ये क्षेत्रे । यत् । माष्यमप्यत्र ।

**मास्** पु० माति परिच्छिनत्ति स्वगत्या कालम् मा—असुन् । चन्द्रे त्रिंशद्दिनात्मककालरूपे मासि च ।

**मास** पु० मास्+अण् । चन्द्रे त्रिंशद्दिनात्मके काले च । स च सौरसावनचान्द्रनाक्षत्रभेदाच्चतुर्विधः । मासश्चन्द्रमस्यायम् अण् चान्द्रे मासे तु कुत्सः । मस्यते परिमीयते मस—परिमाणे करणे घञ् पञ्चगुञ्जात्मके ग्रव्दार्थे माष स्वार्थे कन् तत्रैव ।

**मासन** न० मासं नयति नी—ड । सोमराजीलतायाम् ।

**मासप्रमित** पु० मास प्रमातुमारब्धः । प्र+मा—क्त । कालाः इति स० । प्रतिपच्चन्द्रे । [ मधाङ्के ।

**मासर** पु० मस—परिणामे घञ् मासं परिणामं राति रा—क । भक्त-

**मासान्त** पु० मासस्य सौरस्य चान्द्रस्य वाऽन्तः अवसानम् । मासावसाने संक्रान्त्यादौ ।

**मासिक** त्रि० मासि भवः कालाट्ठञ् । मासभवे, प्रेतोद्देशेन मृततज्जातीयतिथौ, प्रतिमासम् अमावस्यायां च कर्त्तव्ये श्राद्धे न० । "मासिकानि स्वकीयेत्वि"ति स्मृतिः । "पितॄणां मासिकं श्राद्धमन्वाहार्य्यं विदुर्बुधा इति स्मृतिः ।

**मास्म** अव्य० मस—मिच् मप् । निवारणे ।

**माह** माने भ्वा० उभ० सक० सेट् माहति ते अमाहीत् अमाहिष्ट । चङ्कि न लुकः ।

**माहाकुल** त्रि० महाकुले भवः अण् । महाकुलोद्भवे । खञ् । महाकुलीनोऽप्यत्र ।

**माहात्म्य** न० महात्मनो भावः ष्यञ् । महिमनि अनुभावे ।

माहिष न० महिष्या इदम् अण् महिषीदुग्धादौ महिषसम्बन्धि अण् । तत्कृतादौ त्रि० ।

माहिष्य पु० महिष्या भवः ष्यञ् । क्षत्रियात् वैश्यायामुत्पन्ने सङ्कर-जातिभेदे ।

माहेन्द्र पु० महेन्द्रस्यायम् अण् । ज्योतिषोक्ते महेन्द्रादिदण्ड विनिदण्डभेदे । पूर्वस्यां दिशि, इन्द्रपत्न्यां, गवि च स्त्री० ङीप् ।

माहेय पु० मह्या अपत्यम् मही+ढक् । मङ्गले नरकासुरे च स्त्रीगव्यां स्त्री० ङीप् ।

माहेश्वर त्रि० महेश्वरादधिगतम् ततः आगत अण् महेश्वरतः प्राप्ते । यतिविशेषायां स्त्री० ङीप् । तस्येदम् अण् । 'माहेश्वरी वृषारूढा, इत्युक्ते मातृभेदे दुर्गामातृ स्त्री०ङीप् ।

मि क्षेपे स्वा० उभ० सक० अनिट् । मिनोति मिनुते अमासीत् अमास्त । क्ति मप् च मितिमम् ।

मिच्छ बधे भ्वा० पर० सक० सेट् । मिच्छति अमिच्छीत् ।

मित त्रि० मि मा-शा-क्त परिमिते, मर्द्दिते, अवच्छिन्ने, क्षिप्ते च ।

मितङ्गम पु० मितं परिमितं यद्-गच्छति गम-खच् डच् च । गजे परिमितगामिनि त्रि० ।

मितद्रु पु० मितं द्राति द्रवति वा कु नि० । समुद्रे । [ चले त्रि० ।]

मितम्पच पु० मितं पचति पच-खच् मुम् च । कृपणे । परिमितपा-

मिति स्त्री० मा-मि-वा क्तिन् । ज्ञाने, माने, अवच्छेदे, निक्षेपे च ।

मित्र न० मिद्यति स्निह्यति मिद्-त्र । स्नेहान्विते सुहृदि, राज्ञां विषयानन्तरित रूपादितरस्मिन् राजनि तयोर्द्वयोरपि मध्यस्थरूपस्य राज्यहरणरूपैककार्य्यकरत्वात् मित्रत्वम् । मि-क्त । सूर्य्ये ।

मित्रयु पु० मित्रं याति या-कु । मित्रवत्सले ।

मिथ बधे मेधायाञ्च सक० भ्वा० उभ० सेट् । मेथति-ते अमेथीत् अमेथिष्ट । चङि न ह्रस्वः ।

मिथस् अव्य० मिथ-असुन् । रहसि, अन्योन्यमित्यर्थे ।

मिथिला स्त्री० मिथ-किलच् । स्वनामख्यातायां राजधान्याम् ।

मिथुन न० मिथ–उनन् किच । स्त्रीपुंसयोः मेषादितस्तृतीये राशौ च।

मिथ्या अव्य० मिथ–क्यप् । अयथार्थे असत्ये ।

मिथ्यादृष्टि स्त्री मिथ्या–फलवत्त्वापि अफलत्वेन दृष्टिः । नास्तिकतायां सफलस्यापि वैदिककर्मणो निष्फलत्वज्ञाने ।

मिथ्यानिरसन न० मिथ्या निरस्यतेऽनेन निर्+अस–क्षेपे करणे ल्युट् । शपथे ।

मिथ्याभियोग पु० मिथ्याभूतेनासत्येनाभियोगः राज्ञोऽन्तिके वेदनम् अभि–युज–घञ् । मतं मे धारयतीत्यसत्यमुक्त्वा राज्ञोऽन्तिके अभियोगे ।

मिथ्याभिशंसन न० मिथ्याभूतेनासत्येनाभिशंसनम् अपवादः । 'त्वया स्वर्णमपहृतमि"त्यपवादकथने ।

मिथ्याभिशाप पु० मिथ्याभूतेनासत्येनाभिशापोऽपवादः । मिथ्यापवादे ।

मिथ्यामति स्त्री० मिथ्याभूतस्य मतिः मन–क्तिन् । भ्रान्तौ अतद्वति तद्वत्त्वेन ज्ञाने ।

मिथ्योत्तर न० कर्म० व्यवहारे 'मिथ्यैतत् नाभिजानामि तदा तत्र न सन्निधिः । अजातश्चास्मि तत्काले इति मिथ्या चतुर्विध"मित्युक्तप्रकारे, उत्तरभेदे, ( 'मिथ्योत्तरे पूर्ववादे ) इति स्मृतिः ।

मिद वधे मेधायाञ्च भ्वा० उ० सक० सेट् । मेदति–ते अमेदीत् अमेदिष्ट । चक्रिन ह्रस्वः ।

मिद स्नेहे भ्वा० आ० द्युति प० अक० सेट् । मेदते अमिदत् भावादौ क्ते भिन्नं मेदितम् ।

मिद स्नेहे वा चु० उभ० पक्षे भ्वा०प० अक० सेट् इदित् । मिन्दयति। अमिन्दत्–त । पक्षे मिन्दति अमिन्दीत् ।

मिद स्नेहे दि० पर० सक० सेट् । मेद्यति–ते अमिदत् अमेदीत् । क्त मेदितं मिन्नम् ।

मिद स्नेहे चु० उभ० सक० सेट् । मेदयति–ते अमीमिदत्–त ।

मिल सङ्गमे तु० उभ० सक० सेट् । मिलति अमेलीत् अमेलिष्ट कुटादिरयमित्येके तेन अमिलीत् ल्युटि मिलनम् ।

मिव सेके भ्वा० पर० सक० सेट् इदित् । मिन्वति अमिन्वीत् ।

मिश ध्वनौ कोपे च तु० पर० अक० सेट् । मिशति अमेशीत् ।

मिशि ( शी ) स्त्री० मिश—इन् वा ङीप् । मधुरिकायां, ( मौरी ) शतपुष्पायां, ( सुलफा ) जटामांस्याञ्च । अत्र पृ० मिषि—मिषी मिसि—मिसी इत्यादयः । उक्तार्थेषु ।

मिश्र ( स्र ) योजने अद० चु० उभ० सक० सेट् । मिश्र (स्र) यति-ते। अमिमिश्र(स्र)त् त ।

मिश्र त्रि० मिश्र—अच् । संयुते उत्तरपदस्थः श्रेष्ठार्थे । यथा आर्य्य-मिश्राः । गजजातिभेदे, ज्योतिषोक्ते कृत्तिकाविशाखा नक्षत्रगणे च पु० ।

मिश्रकावण न० मिश्रकनामकं वनं पूर्व्वदीर्घो णत्वञ्च । इन्द्रोद्याने ।

मिश्रपुष्पा स्त्री० मिश्रं पुष्पं यस्याः अजा० टाप् । मेथिकायाम् ।

मिश्रवर्ण न० मिश्रः मिलितो वर्णो यस्य । कृष्णागुरुणि । मिश्रितवर्णमा-त्रे त्रि० । [ श्यामे ।

मिश्रवर्णफला स्त्री० मिश्रवर्णं चित्ररूपान्वितं फलं यस्याः । वार्त्ता-

मिश्रव्यवहार पु० लीलावत्युक्ते गणनभेदे ।

मिश्रिता स्त्री० मिश्रा चैव विज्ञेया मिश्रितश्चैव संक्रम इत्युक्ते कृत्तिकाविशाखानक्षत्रकाले रविसंक्रमणे ।

मिश्रेया स्त्री० मिश्र अच् मिश्रा ईयते ई—गतौ यत् एव कर्म्मं० शक०। मधुरिकायां ( मौरी ) शतपुष्पायाञ्च ( सुलफा ) ।

मिष सेचने भ्वा० पर० सेट् । मेषति अमेषीत् ( क्षा वेट् ।

मिष स्पर्द्धाभिभवेच्छायाम् तु० पर० सक० सेट् । मिषति अमेषीत् ।

मिष न० मिष—क । छले, स्पर्द्धने पु० ।

मिषिका स्त्री० मिषी—कन् । जटामांस्याम् ।

मिष्ट त्रि० मिष—क्त । सिक्ते, स्पर्द्धिते च । मधुररसे पु० तद्वति त्रि० ।

मिह सेचने भ्वा० पर० सक० अनिट् । मेहति अमिक्षत् ।

मिहिका स्त्री० मिह—क्वन् अत इत्वम् । नीहारे ।

मिहिर पु० मिह–किरच्। सूर्य्ये, अर्कवृक्षे, वृद्धे, मेघे, वायौ, चन्द्रे, विक्रमादित्यसभास्थे पण्डितभेदे च।

मी वधे दि० आ० सक० अनिट्। मीयते अमेष्ट।

मी वधे क्र्या० उ० सक० सेट्। मीनाति मीनीते अमासीत्। अमास्त। क्त मीनः।

मी गत्यां मत्याञ्च वा चु० उ० पक्षे भ्वा० पर० सक० सेट्। मायय(ति)ते मयति अमीमत्–त अमैषीत्।

मीढ त्रि० मिह–क्त। मूत्रिते।

मीढुष्टम पु० मीढुष्+तम नि०। शिवे।

मीढ्वस पु० मिह–क्वसु नि०। शिवे।

मीन पु० मी-नक्। मत्स्ये, मेषादितो द्वादशे राशौ भगवदवतारभेदे च।

मीनकेतन पु० मीनः केतनो यस्य। कन्दर्पे। मीनध्वजादयोऽप्यत्र।

मीननेत्रा स्त्री० मीनस्य नेत्रमिव चक्षिरस्याः। गण्डदूर्व्वायां मीनाक्षीत्यादयोऽप्यत्र।

मीनाण्डी स्त्री० मीनस्याण्डसदृशाकारा रेणुकाऽस्त्यस्य अच् गौ० ङीष्। शर्करायाम्। [चण्डि० न लुक्षः।

मीम शब्दे अक० गतौ सक० भ्वा० पर० सेट्। मीमति अमीमीत्।

मीमांसक पु० मीमांसां वेत्त्यधीते वा वुन्। मीमांसाशास्त्रज्ञे, तदध्येतरि च। मान–स्वार्थे सन् ण्वुल्। सिद्धान्तकारके।

मीमांसा स्त्री० मान–स्वार्थे सन् अ। विचारपूर्व्वकतत्त्वनिर्णये तत्प्रतिपादकग्रन्थभेदे च स च ग्रन्थः कर्म्मब्रह्मविषय भेदेन द्विविधस्तत्र कर्म्मा(दि)[illegible]विषयसंशयनिकारक प्रतिपादको ग्रन्थो जैमिनिप्रणीतः स च पूर्व्वमीमांसात्वेन प्रसिद्धः ब्रह्मविषयसंशयनिवारकग्रन्थः स च वेदा[illegible]म प्रसिद्धः। [लुक्षः।

मील नि[illegible] भ्वा० पर० अक० सेट्। मीलति अमीलीत्। चण्डि० वा

मीलन [illegible] मील–ल्युट्। मुद्रणे, सङ्कोचने च।

मीलित [illegible]० मील–क्त। अप्रफुल्ले, सङ्कुचिते च "मीलितं यद् भिराक्रान्त[illegible]" इति काव्यप्रकाशः।

मीव स्थूलीभवने भ्वा० पर० अक० सेट्। मीवति अमीवीत्।

मु पु० मोचयति जीवान् णिच् उन्। बन्धे।

मुकन्दक पु० मुकः मुदे कन्दो यस्य कप् पृ० मुदो दलोपः। पलाण्डौ।

मुकु पु० मुच-कु पृ० चस्य कः। मोक्षे, स्वर्गे च।

मुकुट पु० मकि-उट पृ०। शिरोभूषणे।

मुकुन्द पु० मुकुं ददाति दा-क पृ० मुम्। "मुकुमव्ययमात्मज्ञ निर्वाण-मोक्षवाचकम् तद्ददाति च यो देवः मुकुन्दस्तेन कीर्त्तितः" इति निरुक्ते विष्णौ।

मुकुम् अव्य० मकि उमुन् पृ०। निर्व्वाणमोक्षे।

मुकुर पु० मकि उरच् पृ०। दर्पणे, बकुलवृक्षे कुलालदण्डे, मल्लिकावृक्षे, कोरकवृक्षे, चोरके च।

मुकुल पु० न० मकि उलच् पृ०। ईषद्विकाशितकलिकायाम् देहे, आत्मनि च।

मुकुष्टक पु० मुकुर्गलोद्गमस्तं स्तकति स्तक-अच् पृ० मलम्। वनमुद्गे (मुगानी)।

मुकूलक पु० मकि-उलच् कन्। दन्तिवृक्षे।

मुक्त त्रि० मुच-क्त। त्यक्ते, प्राप्तमोक्षे, आनन्दिते च।

मुक्तरसा स्त्री० मुक्तो रसो यस्याः। रास्नायाम्।

मुक्तसङ्ग त्रि० मुक्तः सङ्गोविषयासक्तिर्येन। त्यक्तसर्वविषयासक्ते। परिव्राजके पु०।

मुक्तहस्त त्रि० मुक्तः दानाय प्रसारितः न बद्ध इति यावत् हस्तो येन। बहुदानशीले।

मुक्ता स्त्री० मुच-क्त। रास्नायाम् (मति) शुक्तिजे रत्नभेदे च।

मुक्तापुष्प पु० मुक्तेव शुभ्रं पुष्पमस्य। कुन्दवृक्षे।

मुक्ताप्रसू स्त्री० मुक्तां प्रसूते प्र+सू-क्विप् ६त०। शुक्तौ।

मुक्ताप्रालम्ब पु० मुक्तया मुक्ताविशिष्टतया प्रालम्बते अच्। मुक्ताहारे।

मुक्ताफल न० मुक्तेव फलमिव। मौक्तिके, लवलीफले, (नोयाड़) कर्पूरे, वोपदेवकृते भक्तिप्रधाने ग्रन्थभेदे च 'वत्सरेण चतुर्वर्ग चिन्तामणि-

कपिञ्जला केनापि गोपद्देवेन मुक्ताफलमचोकरदि"ति तद्ग्रन्थान्तश्लोकः।

**मुक्तालता** स्त्री० मुक्तया लतते। मुक्ताहारे।

**मुक्तावली** स्त्री० मुक्ताया आवली हारभेदः। मुक्ताहारे। ईत०। मु-क्तामेश्णी भाषा परिच्छेदग्रन्थटीकायां सिद्धान्तमुक्तावल्यां च।

**मुक्तास्फोट** पु० स्त्री० स्फुटने विदीर्य्यते स्फोटः मुक्तायै स्फोटः। शुक्तौ।

**मुक्ति** स्त्री० मुच-क्तिन्। मोचने संसारबन्धनराहित्ये मतभेदेन आत्य-न्तिकदुःखनिवृत्तौ, ब्रह्मस्वरूपावाप्तौ च देहेन्द्रियाभ्यामात्मनो बन्ध-शून्यत्वे च।

**मुक्तिमण्डप** पु० मुक्तिप्रदो मण्डपः शाक०। काशीस्थे जगन्नाथक्षेत्र-स्थे च मण्डपभेदे तीर्थे। [मिल्लके।

**मुक्तिमुक्त** पु० मुक्तर्भावनं तेन मुक्तोरहितः संश्लिष्ट इति यावत्।

**मुख** न० खन-अच् डित् धातोर्मुट् च। 'प्रजाह्वता यतः खातं तस्मा-दाहुर्मुखं बुधाः" इत्युक्ते देहावयवभेदे। 'ओष्ठौ च दन्तमूलानि दन्तजिह्वा च तालु च। गलो गलादि सकलं सप्ताङ्गं मुखमुच्यते" इत्युक्ते गलादिसप्ताङ्गकावयववति वदने। गृहस्य निःसरणवर्त्मनि, नाट्यमण्डपादेः प्रवेशनिर्गमे, आरम्भे, उपाये, नाटकादौ सन्धिभेदे, नाटकादिशब्दभेदे, आद्ये, प्रधाने, शब्दे, नाटके बेदे च। नकुचट्टक पु० (छेचो)।

**मुखगन्धक** पु० मुखस्य गन्धो यस्य सेवनात् कप्। पलाण्डौ।

**मुखचपला** स्त्री० आर्य्यावान्तरे छन्दोभेदे।

**मुखज** प० ब्रह्मणो मुखाज्जायते जन—ड। विप्रे, ब्राह्मणोऽस्य मुख-मासीदि"ति श्रुतिः। [शाण्डौ।

**मुखदूषण** पु० मुखं दूषयति सेवनात् दुर्गन्धेन दूष-णिच् ल्यु। पला-

**मुखधौता** स्त्री० मुखं धौतं यया धाव-क्त ऊठ् पर० नि०। ब्राह्मण-यष्टौ (बामनहाटि)।

**मुखनिरीक्षक** त्रि० मुखमितरास्यं निरीक्षते ण्वुल्। अलसे स हि अन्योयदि स्व कार्य्यं कुर्य्यात् तदा नाहं करोमीत्यभिप्रायेन इतर-स्यमुखं निरीक्षमाणः स्वकार्य्ये न प्रवर्त्तते।

मुखपूरण न० मुखं पूरयति पूर—ल्यु । गण्डूषमितजलादौ । [त्रि० ।
मुखप्रिय न० मुखं प्रीणाति प्री—क उप० । नवरङ्गे मुखरोचके मात्रे
मुखभूषण न० मुखं भूषयति भूष-ल्यु । ताम्बूले । मुखमण्डने त्रि०
मुखमण्डनक पु० मुखस्य मण्डनमिव इवार्थे कन् । तिलकवृक्षे ।
 इत० । स्वार्थे कन् मुखभूषणे न० । ब० व० कप् । मुखभूषके त्रि०
मुखमोद पु० मुखं मोदयति मुद—णिच् अण् । शोभाञ्जने ।
मुखर त्रि० मुखं मुखव्यापारं कथनं राति आदत्ते करोतीति यावत्
 रा—क । अप्रियवादिनि अग्रेवादिनि "मुखरस्तत्र हन्यते इति
 हितोपदेशः । काके, शङ्खे च पु० ।
मुखरित त्रि० मुखर इवाचरति मुखर+क्विप्—क्त । शब्दायमाने ।
मुखलाङ्गल पु० मुखं लाङ्गलमिव भूमिविदारकं यस्य । शूकरे ।
मुखवल्लभ पु० इत० । दाडिमवृक्षे तत्फलस्य मुखप्रियत्वात् । मुख-
 प्रिये त्रि० ।
मुखवाचिका स्त्री० मुखं वाचयति अजडीकरोति सेवनात् वच णिच्
 ण्वुल् । अम्बष्ठायाम् ।
मुखवास पु० मुखं वासयति सुरभीकरोति अण् । गन्धतृणे, कर्पू-
 रादौ च ।
मुखवासन पु० मुखं वासयति वासि—ल्यु । मुखसौरभकारके गन्धे ।
 तद्वति त्रि० ।
मुखविष्ठा स्त्री० मुखं विष्ठेव दुर्गन्धं यस्याः । तैलपायिकायां तत्स-
 म्पर्शमात्रे हि द्रव्यान्तरे दुर्गन्धो भवति ।
मुखव्यादान न० वि+आ+दा—ल्युट् इत० । मुखप्रसारणे ।
मुखशोधन न० मुखं शोधयति शुध—णिच्—ल्यु त्वचे (दारचिनि)
 कटुरसे पु० ।
मुखशोधिन् पु० मुखं शोधयति शुध—णिच्—णिनि । जम्बीरे ।
मुखस्राव पु० स्रवति स्रु—ण इत० । लालाख्ये मुखस्यन्दिजले ।
मुखाग्नि पु० मुखमेवाग्नितुल्यं शापदानेन दाहकत्वात् यस्य । विप्रे,
 दावानले च ।

मुखा।स्र पु० मुखमेवास्रं यस्य। कर्कटे।
मुख्य त्रि० मुखे आद्ये भवः यत्। प्रथमकल्पे, श्रेष्ठे च।
मुग्ध त्रि० मुह-क्त। मूढे। मोहयति अन्तर्भूतण्यर्थे मुह-कर्त्तरि क्त।
सुन्दरे। नायिकाभेदे स्त्री०।
मुच दम्भे शाठ्ये भ्वा० आत्म० सक० सेट्। मोचते अमोचिष्ट इदित्-
त्वयम्। मुञ्चते।
मुच त्यागे चुरा० उ० सक० सेट्। मोचयति-ते अमूमुचत्-त।
मुच त्यागे तु० मुचादि० उभ० सक० अनिट्। मुञ्चति-ते अमु-
चत् अमुक्त।
कर्म्मकर्त्तरि अकर्म्मकः 'मुच्यते सर्वपापेभ्य' इति पुराणम्।
मुचकुन्द पु० मुच-कु मुचुः कुन्द इव। स्वनामख्याते पुष्पवृक्षे, नृप-
भेदे च।
मुज ध्वनौ अक० मार्ज्जने सक० वा चुरा०पक्षे भ्वा० पर० सेट्। मो-
जयति ते मोजति अमूमुजत्-त अमोजीत्। इदिदयमित्यार्थे।
मुञ्जयति ते मुञ्जति अमुमुञ्जत्-त अमुञ्जीत्।
मुञ्ज पु० मुजि-अच्। (मुज) रज्जुसाधने तृणभेदे।
मुञ्जकेशिन् पु० मुञ्ज इव केशाः अस्त्यस्य इनिः। विष्णौ।
मुञ्जर न० मुजि-अरन्। शालूके।
मुट मर्दने भ्वा० पर० सक० सेट् इदित्। मुण्टति अमुण्टीत्।
मुट चोदे वा चु०उभ० पक्षे भ्वा० पर० सक० सेट्। मोटयति ते
मोटति अमूमुटत् त अमोटीत्।
मुट चोदने आक्षेपे च तु०कु०पर०सक०सेट्। मुटति अमुटीत् मुमोट
मठ पलायने भ्वा० आ० अक० सेट् इदित्। मुण्ठते अमुण्ठिष्ट।
मुड केशादिच्छेदे मर्द्दने च भ्वा० पर० सक० सेट् इदित्। मुण्डति
अमुण्डीत्।
मड मज्जने भ्वा० आ० अक०सेट् इदित्। मुण्डते अमुण्डिष्ट।
मुण प्रतिज्ञाने तु० पर०सक० सेट् मुणति अमोणीत्।

मुण्ड पु० न० मुडि—कर्मणि घञ् । मस्तके, बोले, मुण्डायसे च दैत्यभेदे नापिते, स्थाणुवृक्षे च पु० । मुण्डिते त्रि० । महाश्रावणिकायां, मुण्डरीकायाञ्च स्त्री० टाप् ।

मुण्डक पु० मुण्डयति मुडि—णिच्—ण्वुल् नापिते ।

मुण्डचणक पु० मुण्डश्चणकइव । कलाये ।

मुण्डन न० मुडि—भावे ल्युट् । केशच्छेदे वपने ।

मुण्डफल पु० मुण्डं शिरइव फलमस्य । नारिकेले ।

मुण्डशालि पु० मुण्डः शूकशून्यः शालिः । निःशूके शालिभेदे ।

मुण्डायस न० मुण्डमयः अच् समा० । लौहभेदे ।

मुण्डितिका स्त्री० मुण्डि—इत स्वार्थे कन् अत इत्त्वम् टाप् । (मुण्डारी) वृक्षभेदे ।

मुण्डिन् पु० मुण्डयति मुडि—णिच् णिनि । नापिते ।

मुण्डीरी स्त्री० मुडि—ईरन् गौ० ङीष् । स्वनामख्याते वृक्षभेदे ।

मुद संसर्जने चु० उ०सक० सेट् । मोदयति ते अमूमुदत् त ।

मुद हर्षे भ्वा० आ० अक० सेट् । मोदते अमोदिष्ट ।

मुद्(दा) स्त्री० मुद०सम्प० क्विप् वा टाप् । हर्षे, त्रायमाणौषधौ च ।

मुदिर पु० मुद—किरच् । मेघे, भेके च । कामुके त्रि० ।

मुद्ग पु० मुद—गक् नेट् । (मुग) कलायभेदे, पक्षिभेदे, जलकाके च ।

मुद्गपर्णी स्त्री० मुद्गस्येव पर्णमस्याः । (मुगानी) वनमुद्गे ।

मुद्गर न० मुदं गिरति गृ—अच् । मल्लिकाभेदे, लोष्टभेदने, (मुगुर) पुष्पवृक्षे, कर्मारद्रव्ये, (कामराङ्गा) च पु० । स्वार्थे कन् । तत्रैव ।

मुद्गल न० मुदं गिलति गॄ—अच् रस्य लः । वनतृणे, रोहिष तृणे च । गोप्रिवर्णे प्रवरकारके मुनिभेदे, तृणभेदे च पु० ।

मुद्गष्ट पु० मुद्गं स्तकति प्रतिभाति स्तक—ड पृ० सत्वम् । वनमुद्गे । अच् । मुद्गष्टकोऽप्यत्र ।

मुद्रा स्त्री० मुद—रक् । प्रत्ययकारिण्याम्, (मोहर) अङ्गुलिस्थे । मुद्राङ्कनमुद्राङ्गुलीयके, स्वर्णरौप्यादितङ्काया अप्रकाशे, मुद्राक्षिपिः

चित्रलिपिर्लिपिर्मुद्रालिपिस्तथा । मुद्रिका मुख्यमुद्रा च लिपयः पञ्चधा मता" इत्युक्तलिपिमध्ये लिपिभेदे, "तन्त्रप्रसिद्धे योगाचारविशेषे इत्युक्तास्तत्त्वा आद्या गोधूमचणकादयः । तस्य नाम भवेन्मुद्रे" इत्युक्ते पञ्चमकारादिद्रव्यभेदे, देवविशेषाराधनयाङ्गुल्यादिसन्निवेशविशेषे "मुद्रामस्यगुर्णामि"ति तन्त्रमुक्तोक्ते च ।

मुद्रालिपि स्त्री० मुद्रया लिपिः । पञ्चधा विभक्तलिपिमध्ये लिपिभेदे (छापार अक्षर) ।

मुद्रिका स्त्री० मुद्रेव मुद्रां वा मुद्रा कन् । स्वर्णरौप्यादि निर्मिते अङ्गुलिस्थे अङ्गुनमाधनयोग्ये पदार्थे ।

मुद्रित त्रि० मुद्रा जाताऽस्य इतच् । अप्रकाशिते, अङ्किते च ॥

मुधा अव्य० मुह का पृ० हस्य धः (मिथ्याशब्दार्थे ।

मुनि पु० मन इन् पृ० उत्वम् । दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते. इत्युक्तलक्षणे स्थिरचित्ते वीतरागादौ जने । ते च मन्वत्रि विष्णुहारीतादयः। सप्तसंख्यायाञ्च ।

मुनिखर्ज्जूरी स्त्री० ६त० । खर्ज्जूरीभेदे ।

मुनिच्छद पु० मुनिसंख्याताः सप्तसंख्याः छदाः प्रतिपर्णं यस्य। सप्तच्छदे (छातिम) ।

मुनितरु पु० मुनिरगस्त्यनामकस्तरुः वकवृक्षे ।

मुनिद्रुम पु० मुनीनां प्रियो मुनिनामको वा द्रुमः । श्योनाकवृक्षे वकवृक्षे च ।

मुनिपुत्रक पु० मुनेः पुत्रः संज्ञायां कन् । दमनकवृक्षे, खञ्जने च । ६त० । ऋषिसुते ।

मुनिपुष्प न० मुनिद्रुमस्य पुष्पं कोषो भीमसेनवदुत्तरपदलोपः । वकपुष्पे ।

मुनिभेषज न० मुनीनां भेषजमिव हरीतक्यां अगस्त्ये मुनौ, भोजनाभावे च ।

मुनीन्द्र पु० मुनिः इन्द्र इव । बुद्धे । ६त० । ऋषिश्रेष्ठे ।

मुन्थ गत्यां भ्वा॰पर॰ सक॰ सेट् इरा वेट्। मुन्थति अमुन्थीत्।

मुन्था स्त्री॰ ताजकप्रसिद्धे जन्मावर्षावधि एकैकवर्षे क्रमेण एकैकराश्य-न्तरे लग्नस्य गतिभेदे। मुथहाप्यत्र।

मुन्यन्न न॰ मुनियोग्यमन्नम्। नीवारकन्दादौ।

मुमुक्षु त्रि॰ मोक्तुमिच्छुः मुच-सन्-उ। मोक्षेच्छावति। संसारबन्ध-माभावेच्छावति। यतौ पु॰।

मुमूचान पु॰ मुच-कान पू॰ दीर्घः। मेघे, मुक्तवति त्रि॰। 'द्रुप-दादिव मुमूचान इति वेदमन्त्रः।

मुमूर्षु त्रि॰ मर्त्तुमिच्छुः मृ-सन्-उ। आसन्नमरणे।

मुर वेष्टने तु॰ पर॰ सक॰ सेट्। मुरति अमोरीत्।

मुर पु॰ मुर-क। दैत्यभेदे, 'पार्थनाथ द्विषम् मुर'मिति माघः।

मुर पु॰ मुर-क। वेष्टने। स्वनामख्याते गन्धद्रव्ये स्त्री॰ टाप्।

मुरज पु॰ मुरात् वेष्टनात् जायते जन-ड। मृदङ्गे वाद्यभेदे।

मुरजफल पु॰ मुरज इव फलं यस्य। पनसवृक्षे। मृदङ्गफलादयोऽप्यत्र।

मुररिपु पु॰ ६त॰। विष्णौ। मुरारिमुरमथनादयोऽप्यत्र।

मुरला स्त्री॰ मुरं लाति ला-क। नर्मदायाम्। 'मुरलामारुतोद्धूतेति' रघुः। वंशीनाम्नि वाद्ये गौरा॰ ङीष्।

मुरलीधर मुरलीं धरति धृ-अच्। श्रीकृष्णे, मुरलीवादनादयोऽप्यत्र।

मुर्च्छ मोहे वृद्धौ च भ्वा॰पर॰सक॰सेट्। मूर्च्छति अमूर्च्छीत्। भावे क्त। मूर्तम् मूर्च्छितम्।

मुर्मुर पु॰ मुर-क। पृ॰ द्वित्वम्। तुषाग्नौ, कन्दर्पे, सूर्याश्वे च।

मुर्व बन्धे भ्वा॰ पर॰सक॰ सेट्। मूर्वति अमूर्वीत् निष्ठायामनिट्।

मुल रोपणे चु॰उभ॰सक॰सेट्। मोलयति ते अमूमुलत् त।

मुशटी स्त्री॰ मुष-अटच् गौ॰ङीष् पृ॰। सितकङ्गौ।

मुश(स)ली स्त्री॰ मुश मुस वा कलच् पृ॰ मस्य शः गौरा॰ ङीष्। तालमूल्याम् वक्षराञ्च स्वार्थे कन् पक्षराम्।

मुष वधे भ्वा॰पर॰सक॰सेट्। मोषति अमोषीत्।

मुष छेदने दिवा०पर०सक०सेट् । मुष्यति अमुषत्-अमोषीत् । पुषादिरयमित्यन्ये ।

मुष लुण्ठने क्र्या० पर० द्विक०सेट् । मुष्णाति अमोषीत् ।

मुष(स)(श)ल पु० मुष कलन् । षः मस्य वा सः (शा) वा अयोमये स्तनाभस्थाने धान्यादिकखण्डनसाधने पदार्थे ।

मुषा स्त्री० मुष-क-टाप् । धातुद्रावणे पात्रभेदे (मुर्चा) ।

मुषित त्रि० मुष-क्त । अपहृतद्रव्ये जने ।

मुष्क पु० मुष-टाप् । पुरुषचिह्नभेदे अण्डकोषे, (घण्टापारुल) वृक्षे तस्करे, मांसले, च स्वार्थे कन् तत्रैव ।

मुष्कशून्य पु० ३त० । दृषणरहिते राजान्तःपुररक्षके (खोजा) ।

मुष्टि पु० स्त्री० मुष-क्तिच् । बद्धपाणौ, पलपरिमाणे, कुञ्जरष्टभागे च । क्तिन् । मोषणे स्त्री० ।

मुष्टिक पु० मुष्ट्या कायति कै-क । कंसराजमल्लभेदे । मुष्टिर्मोषणं प्रयोजनमस्य कन् । स्वर्णकारे ।

मुष्टिकान्तक पु० ६त० । बलदेवे तस्य मुष्टिकासुरहननात्तथात्वम् ।

मुष्टिन्धय पु० मुष्टिं धयति धे-खश् मुम् च । बालके ।

मुष्टिबन्ध पु० मुष्टेर्बन्धो यत्र । संग्रहे । ६त० । मुष्टिबन्धने ।

मुस खण्डने दि०पर०सक० सेट् । मुस्यति अमुसत् अमोसीत् पुषादिरयमित्यन्ये ।

मुस(ष)(श)लिन् पु० मुस(ष)(श)ल+अस्त्यर्थे इनि । बलदेवे ।

मुस(ष)(श)ल्य त्रि० मुस(ष)(श)लेन वेध्यः यत् । मुषलवेध्ये ।

मुस्त संहतौ चु० उभ० सक० सेट् मुस्तयति ते अमुमुस्तत् त ।

मुस्त पु० स्त्री० मुस्त अच् स्त्रीत्वे टाप् । मुस्तके । (मुता) स्वार्थे कन् । अत्रैव अस्त्री० । स्थावरविषभेदे पु० ।

मुस्ताभ न० मुस्तेव भाति भा-क । (नागरमुथा) मुस्तकभेदे ।

मुह मोहे वैचित्त्ये दि० उभ० अक० सेट् । मुह्यति अमुहत् मोहिता, मोग्धा, मोढा ।

मुहिर पु० मुह किरच्। कामे, मूर्खे च।

मुहुस् अव्य० मुह-उसिक्। पौनःपुन्ये।

मुहूर्त्त स्त्री० हुर्छ-क्त धातोर्मुट् च। द्वादशक्षणमिते काले, पञ्चदशधा विभक्तस्य दिनस्य पञ्चदशभागे, किञ्चिन्न्यूनाधिकघटिकाद्वयरूपे काले च।

मूत्र्य भा० आ० सक० सेट्। मत्रते अमविष्ट।

मूक पु० मू-कक्। मत्स्ये, दैत्यभेदे, दीने, वाक्शक्तिरहिते च त्रि०

मूढ त्रि० मुह-क्त। मूर्खे, बाले, जडे, औरसे च।

मूत त्रि० मू-क्त। बद्धे, संयते च।

मूत्र स्रावे अद० चु० उभ० अक० सेट्। मूत्रयति ते अमुमूत्रत् त।

मूत्र न० मूत्र-अच् प्रस्रावे उपस्थात् क्षरितजले।

मूत्रदोष पु० मूत्रस्य दोषो यस्मात् दुष-णिच्-अच् ष०त०। प्रमेहरोगे।

मूत्रनिरोध पु० मूत्रं निरुणद्धि नि+रुध-अण्। मूत्रातिबन्धकरोगे।

मूत्रफला स्त्री० मूत्रमेव फलं यस्याः। त्रपुष्याम् (शशा) कर्कट्याञ्च।

मूत्राघात पु० मूत्रमाहन्ति आ+हन-अण्। मूत्रहननकारिणि रोगभेदे।

मूत्राशय पु० ६ त०। नाभेरधोदेशे वस्तिनामकस्थाने।

मूर्ख त्रि० मुह-ख मुडागमः। मूढे गायत्रीरहिते सार्थगायत्रीरहिते च। "क्रियाहीनश्च मूर्खश्चे"ति स्मृतिव्याख्यायां निबन्धकारैस्तथार्थकतया व्याख्यानात्।

मूर्च्छना स्त्री० मुर्छ-युच्। "स्वरः संमूर्च्छितो यत्र रागतां प्रतिपद्यते। मूर्च्छनामिति तां प्राहुः कवयो ग्रामसम्भवा"मित्युक्ते गानाङ्गभेदे "स्फुटीभवद्ग्रामविशेषमूर्च्छना"मिति माघः।

मूर्च्छा स्त्री० मुर्छ-अङ्। मोहे, अनिद्रायामपि बाह्येन्द्रिय व्यापारशून्यावस्थायां, वृद्धौ च।

मूर्च्छाल त्रि० मूर्च्छा+अस्त्यर्थे लच्। मूर्च्छाविशिष्टे।

मूर्च्छित त्रि० मूर्च्छा जातास्य इतच्। मूर्च्छायुक्ते, वृद्धे, उच्छ्रिते च।

मूर्त त्रि० मुर्छ-क्त। मूर्च्छान्विते, मूढे, कठिने च। मूर्तिरस्यास्

अच्। मूर्त्तिमति न्यायोक्तेषु अवच्छिन्नपरिमाणवत्सु क्षितिजल-पावकपवनमनःसु च।

मूर्त्ति स्त्री० मुर्च्छ-क्तिन्। देहे, काठिन्ये, आकारे, प्रतिमायाञ्च।

मूर्त्तिमत् पु० मूर्त्तिरस्त्यस्य मतुप्। देहे। आकारयुक्ते, काठिन्यवति च त्रि०।

मूर्द्धज पु० मूर्द्ध्नि जायते जन-ड। केशे। मस्तकजातमात्रे त्रि०।

मूर्द्धन्य त्रि० मूर्द्ध्नि भवः यत्। मस्तकजाते। शिक्षाग्रन्थोक्तेषु ऋकार-टवर्गषवर्णेषु पु०।

मूर्द्धन् पु० मुर्व्व-कनिन् धुट्, च। मस्तके।

मूर्द्धपुष्प पु० मूर्द्ध्नि पत्त्रशिरसि पुष्पं यस्य। शिरीषवृक्षे।

मूर्वा स्त्री० मुर्व्व-अच्। स्वनामख्याते धनुर्गुणोपयुक्ते लताभेदे। गौरा० ङीष्। मूर्वीत्यप्यत्र।

मूल प्रतिष्ठायां भ्वा० उभ० अक० सेट्। मूलति ते अमूलीत् अमूलिष्ट।

मूल रोपणे चुरा०उभ० सक० सेट्। मूलयति ते अमूमुलत् त।

मूल न० मूल-क। शिफायाम् (जड़) (शिकड़) आद्ये च निकुञ्जे, वाणिज्याद्युपयोगिनि मूलधने, अन्तिके, निजे, चरणे, भूरणे, पिप्पलीमूले, टीकादिना व्याख्येयग्रन्थे च। अश्विन्यवधिके जन-विंशे नक्षत्रे त्रि०।

मूलक न० मूल+संज्ञायां कन्। कन्दभेदे (मूला) "वर्ज्जनीयं सदा माघे मूलकं मदिरासम"मिति गौडीयस्मृतिः। विषभेदे पु०।

मूलकपर्णी स्त्री० मूलकस्येव पर्णी यस्य। शोभाञ्जने।

मूलकमूला स्त्री० मूलकस्येव मूलमस्याः। क्षीरकञ्चुकीवृक्षे।

मूलकर्म्मन् न० मूलेन मन्त्रौषधादिना यत् वशीकरणादि कर्म्म। औ-षधादिना वशीकरणकर्म्मणि।

मूलकृच्छ्र न० मूलेन क्वाथितजलमूलेन कृच्छ्रम्। व्रतभेदे। तद् यस्य। "मूलकृच्छ्रः स्मृतो मूलै"रिति स्मृत्युक्ते तद्वति त्रि० [मात्रे त्रि०।

मूलज न० मूलाज्जायते जन-ड। आर्द्रके। उत्पलादौ पु० मूलजात-

**मूलत्रिकोण** न० सिंहोवृषस्य मेषस्य कन्या धन्वी घटोघटः । अर्कादीनां त्रिकोणानी"त्युक्ते रव्यादीनां क्रमेण सिंहादिषु राशिषु ।

**मूलद्रव्य** न० कर्म० । मूलधने यदवलम्ब्य वाणिज्यादिकं क्रियते तस्मिन् (पुँजि) मूलधनादयोऽप्यत्र ।

**मूलपर्णी** स्त्री० मूलमारभ्य पर्णान्यस्याः ङीप् । मण्डूकपर्ण्याम् ।

**मूलपुष्कर** न० पुष्करस्य मूलं राज० पर० । पुष्करमूले ।

**मूलपोती** स्त्री० पू-तच् गौ० ङीष् मूलं प्रधाना पोती । पूतिकायाम्

**मूलप्रकृति** स्त्री० मूलीभूता सर्वाद्या प्रकृतिः । सांख्यमतोक्ते सर्वेषां कारणीभूते साम्यावस्थापन्ने सत्त्वरजस्तमोरूपे त्रिगुणात्मके प्रधाने "मूलप्रकृतिरविकृति"रिति सांख्यकारिका । दुर्गायाञ्च ।

**मूलफलद** पु० मूलेऽपि फलं ददाति प्रसूते दा-क । पनसवृक्षे ।

**मूलरस** पु० मूले रसो यस्याः । मोरटालतायाम् ।

**मूलशाकट** न० मूलानां क्षेत्रं शाकटच् । मूलभवनयोग्ये क्षेत्रे । शाखिन । मूलशाकिनोऽप्यत्र ।

**मूला** स्त्री० मूलानि बाहुल्येन सन्त्यस्याः अच् । शतमूल्याम् ।

**मूलाधार** पु० ६त० । नाभिलिङ्गयोर्मध्ये तस्य हि शरीरस्थसकल-नाडीनां मूलस्थानत्वात्तथात्वम् "मूलाधारे त्रिकोणाख्ये इच्छाज्ञान-क्रियात्मके, मध्ये स्वयम्भूलिङ्गन्तु कोटिसूर्य्यसमप्रभमित्युक्तलक्षणे त्रिकोणाकारे तन्त्रोक्ते चक्रभेदे च ।

**मूलिन्** पु० मूलमस्त्यस्य इनि । वृक्षे । ठन् । मूलिकोऽप्यत्र ।

**मूल्य** न० मूलाय पटादिकारणतन्त्वादये इदम् यत् । तन्त्वाद्यादानाय दीयमाने धने ।

**मूष** लुण्ठने भ्वा० पर० सक० सेट् । मूषति अमूषीत् ।

**मूष** पु० स्त्री० मूष-क । मूषिके तैजसद्रव्यद्रावणपात्रे, (मुचि) च । गवाक्षे "एकद्वित्र्यादिमूषावह्ने"ति लीला० देवताडवृक्षे च स्त्री०

**मूषक** पु० स्त्री० मूष-ण्वुल् स्त्रीत्वे टाप् अत इत्त्वम् उन्दुरौ ।

**मूषककर्णी** स्त्री० मूषककर्णाविव पुष्पाण्यस्याः । (उन्दुरकानी) ख्या० क्षुप[illegible]म् मूषाकर्ण्यादयोऽप्यत्र ।

मूषिक पु० मूष–किकन् । उन्दुरौ । मूषिकपर्णी स्त्री० ।

मूषिकपर्णी स्त्री० मूषिककर्णइव पर्णान्यस्याः जलजन्तुभेदे ।

मूषी स्त्री० मूष+गौ०ङीष् । स्वर्णादिद्रावणपात्रे (मुची) ।

मूषीक पु० स्त्री० मूष कीकन् स्त्रीत्वे टाप् । उन्दुरौ ।

मृ मृतौ तु० सार्वधातुके लुङि आशी लिङि च आ० अन्यत्र पर०अक० अनिट् । म्रियते । अमृत । ममार । मर्तासि मृषीष्ट ।

मृकण्ड पु० मुनिभेदे ।

मृक्ष संघाते भा० प० अक० सेट् । मृक्षति अमृक्षीत् ।

मृग अन्वेषणे याचने च अ० चु०आ०सक०सेट् । मृगयते अममृगत ।

मृग अन्वेषणे दिवा० पर० सक० सेट् मृग्यति अमर्गीत् ।

मृग पु० मृग–क । पशुमात्रे, हरिणे, गजभेदे, अश्विन्यवधिके पञ्चमे नक्षत्रे च० चु० मृग–भावे अच् । अन्वेषणे, याचने, यज्ञभेदे च । अच् । मृगमदे, मकरराशौ च पु० ।

मृगगामिनी स्त्री० मृग इव गच्छति गम, णिनि विडङ्गायाम् । मृगतुल्यगमनवति त्रि० स्त्रियां ङीप् ।

मृगजीवन पु० मृगैस्तन्मांसादिभिर्जीवति जीव–ल्यु । व्याधे ।

मृगणा स्त्री० मृग+युच् टाप् । नष्टद्रव्यस्यान्वेषणे ।

मृगतृष्णा स्त्री० मृगाणां तृष्णेव तृष्णाहेतुत्वात् । सूर्यकिरणे जलभ्रान्तौ, निर्जलदेशस्थं सूर्यकिरणं दूरतो वीक्ष्य मृगैर्जलभ्रान्त्या तृष्णार्त्तैः सद्भिः बम्भ्रम्यते न च जलं लभ्यते इति, ग्रीष्मे मरुदेशे सिकतादौ पतितरविकिरणेषु जलभ्रान्तिरिति च प्रसिद्धम् । स्वार्थे कन् । तत्रैव ।

मृगदंशक पु० मृगं दंशति दन्श-ण्वुल् । कुक्कुरे ।

मृगधूर्त्तक पु० मृगेषु धूर्त्तकः । शृगाले ।

मृगनाभि पु० मृगस्य नाभिः नाभिजन्यः । कस्तूर्याम् मृगभेदे ।

मृगनाभिजा स्त्री० मृगस्य नाभेर्जायते जन ड । कस्तूर्याम् ।

मृगनेत्रा स्त्री० मृगो मृगशिरो नक्षत्रं नेत्रमिव प्रकाशकं यत्र रात्रिषु ।

सौरमार्गस्य किञ्चिदधिकत्रयोविंशदिनावधिमार्गशीर्षशेषपर्य्यन्तदिवसीय राशिषु ।

मृगपति पु० ६त० । मृगाणां पशूनां पतिः स्वामी । सिंहे मृगेन्द्रादयोऽप्यत्र ।

मृगप्रिय न० ६त० । पर्वततृणे ।

मृगवधाजीव मृगवधेनाजीवति जीव-अच् । व्याधे ।

मृगबन्धनी स्त्री० मृगोबध्यतेऽनया बन्ध ल्युट् ङीप् । मृगबन्धनार्थे जाले । करणस्य कर्त्तृत्वविवक्षायां णिनि ङीप् । मृगबन्धिनीत्यप्यत्र

मृगभक्ष्या स्त्री० मृगैर्भक्ष्यते भक्ष—यत् । जटामांस्याम् ।

मृगमद पु० मृगस्य मदो गर्वो यस्मात् । कस्तूर्य्याम् ।

मृगमदवासा स्त्री० मृगमदस्येव वासः सौरभमस्याः । कस्तूरीमल्लिकायाम् ।

मृगया स्त्री० मृगं यात्यनया या घञर्थे क । (शीकार)। पशुवधफलके व्यापारे आखेटके ।

मृगयु पु० मृग—आत्मार्थ यु । ब्रह्मणि शृगालादीनां व्यापारभेदे, व्याधे च "मृगयुरिव मृगोऽयं दक्षिणेर्म्म" इति भट्टिः ।

मृगरसा पु० मृगो मृगमांसं तस्येव रसोऽस्याः । सहदेवीलतायाम् ।

मृगराज पु० मृगाणां पशूनां राजा टच् । सिंहे मृगेण राजते अच् । चन्द्रे ।

मृगराटिका स्त्री० मृगं रटति जीवत्वेन रट-अण् गौ० ङीष् स्वार्थे कन् । जीवन्त्याम् ।

मृगरिपु पु० ६त० । सिंहे मृगशत्रुप्रभृतयोऽप्यत्र ।

मृगलक्षण पु० मृगो लक्षणं यस्य । चन्द्रे मृगाङ्कादयोऽप्यत्र ।

मृगवल्लभ न० ६त० । कुन्दरतृणे ।

मृगवाहन पु० मृगो वाहनं यस्य । वायौ 'ध्यायेत् हरिणपृष्ठस्थ' इति वायुध्यानम् ।

मृगव्य न० मृगान् व्ययतेऽत्र व्यय ड । मृगयायाम् ।

मृगशिरस् न० पु० । मृगस्येव शिरोऽस्य । आश्विन्यादिके पञ्चमे

नक्षत्रे मृगशिराख्यन्न स्त्री० टाप् । मृगशीर्षम्, मृगशीर्ष,एताव-
ष्यत्र पु० न० ।

मृगा स्त्री० मृगो मृगमांसतुल्यरसोऽस्त्यस्य अच् । सहदेवीलतायाम् ।

मृगाक्षी स्त्री० मृगस्येवाक्षि पुष्पं यस्याः षच् समा० ङीष् । विश-
ल्यायां मृगतुल्यनयनवत्यां स्त्रियां च ।

मृगाण्डजा स्त्री० मृगस्याण्डाकारात् नाभिस्थितमांसपिण्डात् जायते
जन-ड । कस्तूर्य्याम् ।

मृगादन पु० मृगान् अत्ति अद-ल्यु । क्षुद्रव्याघ्रे । मृगान्तकोऽप्यत्र ।

मृगादनी स्त्री० मृग इवाद्यते अद-कर्म्मणि ल्युट् । सहदेव्याम्, इन्द्र-
वारुण्याम्, ( राखालशशा ), कर्कटीभेदे च ।

मृगाराति पु० ६त० । कुक्कुरे, मृगपतौ, सिंहे च ।

मृगारि पु० ६त० । कुक्कुरे, सिंहे, व्याघ्रे, रक्तशोभाञ्जने च । तत्से-
वने हि तस्य नाशः ।

मृगाविध् पु० मृगं विध्यति विध-क्विप् पूर्व दीर्घः । व्याधे ।

मार्गित त्रि० मृग-क्त । अन्वेषिते, याचिते च ।

मृगेन्द्र पु० मृगः इन्द्र इव । सिंहे ।

मृगेन्द्रचटक पु० मृगेन्द्रइव हिंस्रश्चटकः पक्षी । श्येनपक्षिणि ।

मृगेन्द्राशी स्त्री० मृगेन्द्रेण सिंहेनाश्यते भक्ष्यते अश-कर्म्मणि यत् ।
वासके

मृगेर्व्वारु स्त्री० मृगप्रिया इर्व्वारुः कर्कोटी । श्वेतायामिन्द्रवारुण्याम्
( सादा राखालशशा ) ।

मृगेष्ट पु० ६त० । मुद्गष्टके ।

मृगेक्षणा स्त्री० मृगस्य ईक्षणमिव पुष्पमस्याः । मृगेर्व्वारौ ।

मृज शोधने भूषणे च वा चु० उभ० पक्षे अदा० सक० वेट् । मार्जयति-ते
मार्ष्टि अमीमृजत्-त अममार्जत्-त अमार्क्षीत् अमार्जीत् अमृक्षत् ।

मृजा स्त्री० मृज-अङ् । मार्ज्जने ।

मृड तोषणे क्र्या० तु० च पर० सक० सेट् । मृड्णाति मृडति अमर्डीत् ।

मृड पु० मृड क । शिवे तत्पत्न्याम् स्त्री० ङीप् आनुक् च ।

मृण हिंसे तु॰ प॰ सक॰ सेट्। मृणति अमर्णीत्।

मृणाल न॰ मृण-कालन्। पद्मादेर्नालस्थे सूत्रे, वीरणमूले च गौरा॰ ङीष्। मृणालीत्यपि विस्तन्तौ स्त्री॰।

मृणालिन् स्त्री॰ मृणालं विद्यतेऽस्य अच् मृणालं पद्मं ततः समूहे तद्युक्तदेशे वा इनि। पद्मसमूहे, पद्मयुक्तदेशे, तद्युक्तलतायाञ्च।

मृत न॰ मृ-भावे क्त। मरणे। तत्तुल्यदुःखजनके याचितके वृत्तौ च। कर्त्तरि क्त। गतप्राणे त्रि॰। [वे'ति स्मृतिः।

मृतक न॰ मृतेन मरणेन कायति कै-क। मरणाशौचे 'सूतके मृतकेऽथ-

मृतकल्प त्रि॰ ईषदसमाप्तो मृतः मृत+कल्पप्। मृतप्राये।

मृतजीव पु॰ मृतः नष्टः सन् पुनर्जीवति जीव—अच्। तिलकवृक्षे।

मृतवत्सा स्त्री॰ मृतो वत्सो यस्याः। मृतापत्यायां-स्त्रियां स्त्री गव्याञ्च 'मृतवत्सा च या नारीति' तन्त्रम्।

मृतसञ्जीवनी स्त्री॰ मृतान् संजीवयति सम्+जीव-णिच् ल्यु गौ॰ ङीष्। गोरक्षदुग्धायामोषधौ तन्त्रोक्ते विद्याभेदे च।

मृतस्नात त्रि॰ मृतं मरणं तन्निमित्तं स्नातः स्ना-क्त। मरणनिमित्तं कृतस्नाने।

मृतालक न॰ मृतमालयति भूषयति आल-णिच्-ण्वुल्। आढक्याम्। मृत् मृत्तिका तालः प्रतिष्ठा यस्य। मृतालमयत। कन् तत्रैव।

मृतफली स्त्री॰ मृतेष्वपि फलमस्याः। कुष्ठौषधौ। ( कुड़ )

मृत्तिका स्त्री॰ मृद+तिकन् टाप्। मृदि (माटि) सा ऽस्त्यत्वेनास्त्यस्य अच् टाप्। आढक्याम्।

मृत्यु पु॰ मृ-त्युक्। यमे, देहादिभ्यः प्राणवियोगे विजातीयात्मनः-संयोगनाशे वा मरणे च।

मृत्युनाशक पु॰ मृत्युं नाशयति नाशि—ण्वुल्। पारदे तस्य हि रसायनक्रियादिना शोधयित्वा सेवने मृत्युनाशकत्वम् मृत्युनाशक-मात्रे त्रि॰।

मृत्युपुष्प पु॰ मृत्यवे स्वामिमरणाय पुष्पं यस्य। इक्षौ। तस्मिन् पुष्पिते हि तत्स्वामिनो नाशः।

**मृत्युफला** स्त्री॰ मृत्यवे स्वनाशाय फलं यस्याः । कदल्यां फलपाके हि तस्या नाशः । [वाङ्कुरादेरुद्भवः ।

**मृत्युवीज** पु॰ मृत्युः दाह एव वीजं कारणमस्य । वंशे तस्य दाहादे-

**मृत्युसूति** स्त्री॰ मृत्यवे सूतिः प्रसवोऽस्याः । कर्कटकयोषिति प्रसवादेव हि तस्या नाशः 'यथा कर्कटकी गर्भमाधत्ते मृत्यवे निजम्' इति पुराणम् । [अर्घआढ्यच् । आढक्याम् ।

**मत्स्ना** ( स्ना ) स्त्री॰ मृद्+प्रशस्तार्थे स स्न, वा । प्रशस्तमृत्तिकायाम् ।

**मृद** चोदे क्या॰ प॰ सक॰ सेट् । मृद्नाति । अमर्दीत् ।

**मृद्** ( दा ) स्त्री॰ मृद्यते क्षुद्यते मृद-सम्प॰ क्विप् । मृत्तिकायाम् ( माटी ) टाप् । मृदाप्यत्र ।

**मृदङ्ग** पु॰ मृद-अङ्गच् किच्च । वाद्यभेदे ।

**मृदङ्गफलिनी** स्त्री॰ मृदङ्गाकारं फलमस्त्यस्य इनि । घोषातक्याम् । तत्फलं सास्यादस्त्यस्य अच् । मृदङ्गाप्यत्र ।

**मृदु** त्रि॰ मृद कु । कोमले । स्त्रियां वा ङीप् मृद्वी मृदुः । चित्रानु-राधामृगरेवतीनक्षत्रेषु च । [ पलाशवृक्षे ।

**मृदुचर्म्मिन्** पु॰ मृदु कोमलं चर्म्म त्वचास्त्यस्य व्रीह्या॰ इनि । भूर्ज्ज-

**मृदुच्छद** पु॰ छाद्यतेऽनेन छदः त्वक् ६ब॰ । भूर्जवृक्षे । पर्व्वतजपीलु-वृक्षे, कुन्दुरवृक्षे, शीतालवृक्षे च ।

**मृदुताल** स्त्री॰ कर्म॰ । शीतालवृक्षे ( तेउत ) ।

**मृदुत्वच्** ( च ) पु॰ मृदुः त्वक् त्वचा वा यस्य । भूर्जत्वचवृक्षे ।

**मृदुपत्त्र** पु॰ मृदूनि पत्त्राण्यस्य । नले । कर्म॰ । कोमलपर्णे न॰ ६त॰। तद्वति त्रि॰ । चिल्लीशाके स्त्री॰ गौरा॰ ङीष् ।

**मृदुपर्व्वक** पु॰ मृदूनि पर्व्वाण्यस्य । वेत्रे । मृदुपर्व्वयुक्ते त्रि॰ ।

**मृदुपुष्प** पु॰ मृदूनि पुष्पाण्यस्य । शिरीषवृक्षे । ६ब॰ मृदुकुसुमवति त्रि॰ । कर्म॰ । कोमलपुष्पे न॰ ।

**मृदुफल** न॰ मृदूनि फलान्यस्य । विकङ्कते (वइचि) मधुनारिकेले च । ६ब॰ कोमलफलवति त्रि॰ । कर्म॰ । कोमलफले न॰ ।

**मृदुल** न॰ मृद-कुलच् । जले । कोमलमाले त्रि॰ ।

मृदुलोमक पु० इव०। शशके। कोमललोमयुक्ते त्रि०। कर्म० कोमललोम्नि न०।

मृदूत्पल न० कर्म०। नीलोत्पले, नीलपद्मे च।

मृद्वीका स्त्री० मृदु + स्वार्थे ईकन्। द्राक्षायाम् कपिलद्राक्षायाञ्च

मृध न० मृध्यतेऽत्र वज्रर्थे क। युद्धे। [अमर्द्धिष्ट।

मृध आर्द्रीभावे भ्वा० उभ० सक० सेट् क्त्वा वेट्। मर्द्धति-ते अमर्द्धीत्

मृश स्पर्शने, पर्यालोचने च तु० पर० सक० अनिट्। मृशति अम्राक्षीत् अमार्क्षीत् अमृक्षत्। मृष इत्येके।

मृष क्षमायां तु० उभ० अनिट्। मृषति ते अमृक्षत् त।

मृष क्षमायां अ० चु० उभ० सक० सेट्। मृषयति त अममृषत् त।

मृष क्षमायां अ० भ्वा० उभ० सक० सेट्। मर्षति ते अमर्षीत्।

मृष सेचने भ्वा० पर० सक० सेट्। मर्षति अमर्षीत्। क्त्वा वेट्।

मृष क्षमायां चु० उ० सक० सेट्। मर्षयति ते अमीमृषत्त अममर्षत्त।

मृष क्षमायां भ्वा० आ० सक० सेट्। मर्षति अमर्षीत्।

मृष क्षमायां दिवा० उभ० सक० सेट्। मृष्यति ते अमर्षीत् अमर्षिष्ट।

मृषा अव्य० मृष—का। मिथ्याशब्दार्थे।

मृषार्थक न० मृषा अत्यन्तासम्भूतोऽर्थो यस्य। 'कूर्म्मलोमतनुत्राणः शशशृङ्गधनुर्द्धरः' इत्यादिवाक्ये।

मृषालक पु० मृषालक इव मञ्जरी अस्य। आम्रवृक्षे।

मृषावाद पु० मृषा+वद घञ्। मिथ्यावाक्ये यथा कुदो पक्षिमानित्यादिवाक्यम्।

मृषोद्य न० मृषा+वद—क्यप्। मिथ्याकथने।

मृष्ट न० मृश-क्त। मरिचे शुद्धे शोधिते च त्रि०।

मॄ वधे क्र्या० प्वा० प० सक० सेट्। मृणाति अमारीत्।

मे परीवर्त्ते भ्वा० आत्म० सक० अनिट्। मयते अमास्त।

मेक(ख)ल पु० मि-कलच् खलच् वा नेत्त्वम्। ऋषिभेदे।

मेक(ख)लकन्यका स्त्री० इत०। नर्मदानद्याम्।

मेक(ख)लाद्रिजा स्त्री०मेक(ख)लाद्रेर्जायते जन-ड। नर्मदा नद्याम्।

**मेखला** स्त्री० मि खलच् । स्त्रीकट्याभूषणे उपनयनकाले ब्रह्मचारि-धार्य्ये कटीसूत्रे, खड्गादेर्मुष्ट्याधारयार्थे उपर्य्यधोभागेन बन्धे, शैलनितम्बे, नर्मदायां, पृश्निपर्ण्याम्, होमकुण्डोपरिस्थे सूत्रे तद्वेष्टनभेदे च ।

**मेघ** पु० मिह-घञ् कुत्वम् । धूमज्योतिःपवनसलिलसंघातजन्ये जल-धरे, मुस्तके राक्षसभेदे रागभेदे च ।

**मेघजीवन** पु० मेघो जीवनं यस्य । चातकपक्षिणि ।

**मेघज्योतिस्** न० ६त० मेघजन्यं ज्योतिः । वज्राग्नौ ।

**मेघनाद** पु० मेघस्येव नादोऽस्य । वरुणे, रावणस्य पुत्रे इन्द्रजिति । ६त० । मेघशब्दे ।

**मेघनादानुलासक** पु० मेघस्य नादेनानुलसति अनु+लस—ण्वुल् । मयूरे । णिनि । मेघनादानुलासीत्यप्यत्र ।

**मेघनामन्** पु० मेघस्य नामेव नाम यस्य । मेघवाचकशब्दवाच्ये मुस्तके ।

**मेघपुष्पक** न० मेघस्य पुष्पमिव । जले ।

**मेघयोनि** स्त्री० ६त० । धूमे ।

**मेघवर्णा** स्त्री० मेघस्येव वर्णोऽस्याः । नीलीवृक्षे ।

**मेघवर्त्मन्** न० ६त० । आकाशे । मेघवीथ्यादयोऽप्यत्र ।

**मेघवह्नि** पु० मेघजन्यो वह्निस्तद्घर्षणजातोऽग्निः । वज्राग्नौ एवं मेघानलादयोऽप्यत्र । [ वा वह-णिच्-ल्यु । इन्द्रे ।

**मेघवाहन** पु० मेघो वाहनमिव यस्य, मेघान् वाहयति चालयति

**मेघसार** पु० मेघस्य कर्पूरस्य सारः । चीनकर्पूरे ।

**मेघस्तनितोद्भव** पु० मेघस्तनितादुद्भवति भू अच् । विकण्टकवृक्षे ।

**मेघागम** पु० मेघानामागमो यत्र । वर्षाकाले वर्षर्त्तौ ।

**मेघनन्दिन्** पु० मेघेन तद्ध्वनिना नन्दति णिनि । मयूरे ।

**मेघान्त** पु० मेघानामन्तो यत्र । शरत्काले मेघात्ययादयोऽप्यत्र ।

**मेघास्थि** न० मेघानामस्थीव संहतकठिनत्वात् । करकायाम् ।

**मेचक** न० मच-वुन् पृ० । अन्धकारे, स्रोतोऽञ्जने च । मयूरचन्द्रके, मेघे, श्यामवर्णे च पु० । तद्वति त्रि० ।

मेठ(ड) उन्मादे भ्वा० पर० सक० सेट् चङि न ह्रस्वः। मेठ(ड)ति अमेठी(डी)त्॥

मेठला स्त्री० मेठ—उलच्। आमलक्याम्।

मेढ्र पु० मिह—ष्ट्रन्। मेषे, पुंसोऽसाधारणचिह्ने च।

मेढ्रशृङ्गी स्त्री० मेढ्र इव शृङ्गं यस्याः। मेषशृङ्ग्याम् (गाडरसिङ्गा)।

मेथ वधे मेधायाञ्च सक० सङ्गे अक० भ्वा० उभ० सेट्। मेथति ते अमेथीत् अमेथिष्ट। चङि न ह्रस्वः।

मेथि(धि) पु० मेथ(ध)—इन्। धान्यमर्द्दनार्थं पशुबन्धनकाष्ठे (मेड़काठ)

मेथिका स्त्री० मेथ—ण्वुल्। (मेथि) शाकभेदे। मेथिनि। अत्रैव स्त्री० ङीप्। अच् गौरा० ङीष्। अत्रैवार्थे।

मेद् वधे मेधायाञ्च सक० भ्वा० उभ० सेट्। मेदति ते अमेदीत् अमेदिष्ट। चङि न ह्रस्वः।

मेदःसारा स्त्री० मेदसः इव सारोऽस्याः। अष्टवर्गप्रसिद्धौषधिभेदे।

मेदक पु० मेद—ण्वुल्। जगले (मेया)।

मेदज पु० मेदात् महिषासुरमेदसो जायते जन—ड। भूमिजगुग्गुलौ। मेदोजातमात्रे त्रि०।

मेदस् न० मेद—असुन्। मांसजन्ये धातुभेदे (वसा) अच्। अत्रैव पु०

मेदस्कृत् न० मेदः करोति स्वपरिपाकेण जनयति क्विप्। मांसे।

मेदा स्त्री० मेदः कारणत्वेनास्त्यस्याः अच्। अष्टवर्गप्रसिद्धौषधिभेदे।

मेदिनी स्त्री० मेदः मधुकैटभमेदोऽस्त्यस्याः कारणत्वेन, इनि। वसुन्धरायाम् 'मधुकैटभयोरासीन्मेदसैव परिप्लुता। तेनेयं मेदिनी देवी प्रोच्यते' इति पुराणम्। मेदायाञ्च।

मेदुर त्रि० मिद—घुरच्। अतिशयस्निग्धे। 'मेघैर्मेदुरमम्बर'मिति जयदेवः। कर्कोट्यां स्त्री० टाप्।

मेदोज न० मेदसो वसातो जायते जन—ड। देहस्थे मज्जहेतौ अस्थिनामके धातौ।

मेदोद्भवा स्त्री० मेदादुद्भवति भू—अच्। अष्टवर्गप्रसिद्धौषधिभेदे।

मेध मेधवत् सर्व्वम् । मेधति ते अमेधीत् अमेधिष्ट ।
मेधा स्त्री० मेध–अङ् । धारणावत्यां बुद्धौ यया बुद्ध्या ज्ञातस्य न विस्मरणं तत्र । अच् । यागे पु० । (ङीप् ।
मेधाविन् पु० मेधा+अस्त्यर्थे विनि । शुकखगे । मेधावति त्रि० स्त्रियां
मेधस् पु० मेध–असुन् । स्वायम्भुवस्य मनोः पुत्रभेदे ।
मेधिर त्रि० मेधा+अस्त्यर्थे इरच् । मेधावति । [जने ।
मेधिष्ठ त्रि० अतिशयेन मेधावान् इष्ठन् मतोर्लुक् । अतिशयमेधावति
मेध्य त्रि० मेध–ण्यत् । पवित्रे, शुचौ च । मेधाय यज्ञाय हितः यत् । छागे, खदिरे, यवे च पु० । केतक्यां, शङ्खपुष्प्यां, रक्तवचायाम्, रोचनायां, शम्याम्, मण्डूक्याञ्च स्त्री० ।
मेनका स्त्री० मि–नक । स्वर्वेश्याभेदे । मेनैव कन् । हिमालयपत्न्याम्
मेनकात्मजा स्त्री० ६त० । हैमवत्यां दुर्गायाम् मेनासुतादयोऽप्यत्र ।
मेना स्त्री० मि–न । हिमालयपत्न्याम् पितृणां मानस्यां कन्यायाम् ।
मेन्धी स्त्री० मा लक्ष्मीरिव इन्धते इन्ध–घञ् गौरा० ङीष् । (मेहदी) वृक्षे तत्पत्रमर्द्दने, हि लक्ष्मीतुल्यरक्तहस्तता ।
मेप गतौ भ्वा० आ० सक० सेट् । मेपते अमेपिष्ट । चङि न ह्रस्वः ।
मेय त्रि० मा–मि–वा यत् । परिच्छेद्ये, ज्ञेये च ।
मेरु पु० मि–रु । सर्व्वपर्व्वतमध्यस्थ उत्तरस्थे पर्व्वतभेदे, जपमालोपरिस्थे, फलबीजादिके, कररूपमालायामङ्गुलिपर्व्वभेदे च ।
मेरुक पु० मेरुरिव पीतवर्णत्वात् इवार्थे कन् । यक्षधूपे (धुना) ।
मेरुसावर्ण पु० चतुर्द्दशसु मनुषु एकादशे मनौ ।
मेलक त्रि० मेलयति मिल–णिच्–ण्वुल् । विवाहे–योटकभेदे । मेल–घञ् कन् । सङ्गे । [मिलने च ।
मेला स्त्री० मिल–णिच्–अच्–टाप् । नीलीवृक्षे, मस्याम्, अञ्जने,
मेलान्धु पु० मेलाया मस्या अन्धुरिव । मस्याधारे (दोआत) ।
मेव सेवने भ्वा० आ० सक० सेट् । मेवते अमेविष्ट । चङि न ह्रस्वः ।
मेष पु० मिष–अच् । (मेडा) पशुभेदे, चक्रमर्द्दवृक्षे, ज्योतिश्चक्रस्य द्वादशांशे अश्विनीभरणीकृत्तिकापादात्मके राशिभेदे ।

**मेषकम्बल** पु० मेषेण तल्लोम्ना निर्मितः कम्बलः। मेषलोमजाते वस्त्रा-
क ऐ पदार्थे।

**मेषलोचन** पु० मेषस्य लोचनमिव पुष्पमस्य। चक्रमर्द्दे, मेषनेत्रादयोऽ-
प्यत्र। [लताभेदे।

**मेषवल्ली** स्त्री० मेषशृङ्गाकारफलयुक्ता वल्ली शाक० (गाडरशिङ्गा)

**मेषविषाणी** स्त्री० मेषस्य विषाणं शृङ्गमिव फलं यस्याः गौरा०।
ङीष्। (गाडरशिङ्गा) लताभेदे। स्वार्थे कन् तत्रैव।

**मेषशृङ्ग** पु० मेषशृङ्गमिवाकारोऽस्त्यस्य अच्। स्थावरविषभेदे (गाडर-
शिङ्गा) अजशृङ्ग्यां स्त्री० गौरा० ङीष्।

**मेषा** स्त्री० मिष—कर्म्मणि घञ्। (गुजराटी) सूक्ष्मैलायाम्।

**मेषाक्षिकुसुम** पु० मेषाक्षीव कुसुमं यस्य। चक्रमर्द्दे। मेष पुष्पादयो-
ऽप्यत्र। [मेषाण्डेन तत्करणमिति पुराणम्।

**मेषाण्ड** पु० मेषस्याण्ड एवाण्डोऽस्य। इन्द्रे तस्य हि दक्षयज्ञेऽण्डनाशे

**मेषालु** पु० मेषाणामालुरिव प्रियः। वर्व्वरीवृक्षे।

**मेषी** स्त्री० मिष—अच् गौ० ङीष्। जटामांस्यां, तिनिशवृक्षे, च।
जातौ ङीष्। मेषजातिस्त्रियाम्।

**मेह** पु० मिह—घञ्। प्रस्रावे, प्रमेहरोगभेदे च। अच्। मेघे।

**मेहघ्नी** स्त्री० मेहं हन्ति हन—टक् ङीप्। हरिद्रायाम् आर्द्र तन्मूल-
रससेवनाद्धि मेहनाश इति वैद्यकप्रसिद्धिः।

**मेहन** न० मिह्यतेऽनेन मिह—करणे ल्युट्। शिश्ने। कर्म्मणि ल्युट्।
मूत्रे। भावे ल्युट्। मूत्रोत्सर्गे।

**मैत्र** न० मित्रोदेवतास्य अण् मैत्रं पायुस्तस्येदं पुनरण्। 'विष्ठोत्सर्गे
मैत्रं कर्म समाचरेदि'ति स्मृतिः मित्रो देवताऽस्य, मित्त्रत आगतं,
तस्येदं वा अण्। अनुराधानक्षत्रे न०। तस्य हि मित्रो देवता।
मित्त्रतः प्राप्ते, 'मैत्त्रमौद्दालिकञ्चैवे'ति स्मृतिः। मुहूर्त्तसम्बन्धिनि
च त्रि०। मित्त्रएव स्वार्थे प्रज्ञाद्यण्। मित्त्रे, ब्राह्मणे च।

**मैत्रावरुण** पु० मित्रस्य वरुणस्य देवता द्वन्द्वे आनङ् मित्रावरुणयोर-

पत्यम् अण् । अगस्त्ये । इञ् । मैत्रावरुणिरप्यत्र । कल्पभेदे हि तस्य तयोः पुत्रत्वं पुराणप्रसिद्धम् । [मैत्रमप्यत्र ।

**मैत्री** न० स्त्री० मित्रस्य भावः अण् स्त्रीत्वपक्षे ङीप् । सौहार्दे ष्यञ् ।

**मैत्रेय** पु० मित्राया अपत्यम् ढक् । मुनिभेदे, बुद्धदेवे च ।

**मैथिली** स्त्री० मिथिलायां भवा अण् । सीतायाम् । मिथिलाया राजा अण् मिथिलादेशाधिपे पु० ।

**मैथुन** न० मिथुनेन स्त्रीपुंसाभ्यां निर्वृत्तम् अण् । अग्न्याधानादौ कर्मणि 'सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने' इति स्मृतिः अग्न्याधाने हि सपत्नीकस्यैवाधिकारः इति तस्य तत्साध्यत्वम् । स्त्रीपुंससङ्गमरूपे ग्राम्यधर्मे च ।

**मैनाक** पु० मेनकायां भवः अण् । पर्वतभेदे ।

**मैरेय** पु० मिरायां देशभेदे ओषधिभेदे वा भवः ढक् । मिरा देशजाते आसवे, 'मैरेयं धातकीपुष्पगुडधानाम्लसम्भव'मित्युक्ते मद्यभेदे न० । [मोक्षति अमुमोक्षत् त अमोक्षीत् ।

**मोक्ष** क्षेपे वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । मोक्षयति ते

**मोक्ष** पु० मोक्ष-घञ् । मुक्तौ मोचने 'नीतिर्मोक्षोहि मोक्ष' इति मरणे च । [पाटलीवृक्षे, विडङ्गे च स्त्री० प्राचीरे पु० ।

**मोघ** त्रि० मुह-घ अच् वा कुत्वम् । निरर्थके, हीने च । पारिभद्रवृक्षे,

**मोघपुष्पा** स्त्री० मोघं पुष्पमार्त्तवं यस्याः । वन्ध्यायां स्त्रियाम् ।

**मोच** न० मुच-अच् कदलीफले । शोभाञ्जने पु० । कदल्यां, नीलीवृक्षे, शाल्मलिवृक्षे च स्त्री० टाप् । [न० ।

**मोचक** पु० मुच-ण्वुल् । मोक्षे, कदल्यां, शोभाञ्जने च । वैराग्ययति

**मोचन** न० मुच-णिच्-वा भावे ल्युट् । मुक्तौ, मोचने, दम्भे, शाठ्ये च । मुच्यते रोगात् अनया करणे ल्युट् । कण्टकार्य्याम् ।

**मोचरस** पु० ६त० । शाल्मलिनिर्यासे स्वनामख्याते पदार्थे ।

**मोचाट** पु० मुच-णिच्-अच् मोचाय रोगमोचनाय अटति अट्-अच् । कृष्णजीरके रम्भास्थ्नि च ।

**मोटक** न० मुट-ण्वुल् । श्राद्धे पितृदानार्थं भुग्नकुशपत्रद्वये ।

मोटा स्त्री॰ मुट-अच्। बलायाम्।

मोट्टायित न॰ 'कान्तस्मरणवार्त्तादौ हृदि तद्भावभावतः प्राकट्यमभिलाषस्य मोट्टायितमि'त्युक्ते स्त्रीणामभिलाषभेदे।

मोद पु॰ मुद-घञ्। हर्षे। [जातिभेदे (मयरा)।

मोदक पु॰ मोदयति मुद-णिच्-ण्वुल्। खाद्यभेदे (मोया) वर्णसङ्कर-

मोदमोदिनी स्त्री॰ मोदइव मोदयति मुद-णिनि। जम्ब्वाम्।

मोदयन्ती स्त्री॰ मुद-णिच्-शतृ ङीप्। वनमल्लिकायाम् (काठमल्लिका)

मोदा स्त्री॰ मोदयति अजान् मुद-णिच्-अच्। अजमोदायाम्।

मोदाख्या स्त्री॰ मोदः अजमोदस्तेनाख्या। अजमोदायाम् हर्षयुक्ते त्रि॰

मोदिनी स्त्री॰ मोदयति मुद णिच् णिनि। अजमोदायाम् मल्लिकायाम्, यूथिकायां, कस्तूर्य्यां, मदिरायाञ्च।

मोरट न॰ मुर-अटन्। इक्षुमूले, अङ्कोटपुष्पे, सप्तरात्रोषित क्षीरे च। मूर्व्वालतायां स्त्री॰। क्षीरमोरटायां पु॰।

मोषक पु॰ मुष्णाति मुष—ण्वुल्। तस्करे चौरे।

मोषण न॰ मुष—ल्युट्। लुण्ठने, छेदने, वधे च।

मोह मुह—घञ्। मूर्च्छायाम् अज्ञाने, भ्रान्तिसाधने, वेदान्तोक्ते अविद्यावृत्तिभेदे, दुःखे, देहादिष्वात्माभिमाने च।

मोहन पु॰ मोहयति मुह—णिच्—ल्यु। धुस्तूरे, कन्दर्पस्य शरभेदे च। मोहकारके त्रि॰। स्त्रियां ङीप्।

मोहरात्रि स्त्री॰ ब्रह्मणो निजपरिमाणेन पञ्चाशदब्दे गते प्रलयभेदे 'कालरात्रि र्महारात्रि र्मोहरात्रिश्चे'ति चण्डी।

मौक्तिक न॰ मुक्तैव स्वार्थे ठक्। मुक्तायाम्।

मौक्तिकप्रसवा स्त्री॰ मौक्तिकं प्रसूते प्रसू अच्। शुक्तिमात्रे मुक्तास्फोटे शुक्तौ च।

मौक्तिकशुक्ति स्त्री॰ कर्म॰। मुक्तास्फोटे शुक्तौ।

मौञ्जी स्त्री॰ मुञ्जस्येयम् अण्। कटिस्थले त्रिरावृत्तमुञ्जलतायां मेखलायाम् मुञ्जएव अण्। मुञ्जतृणे (कुज) स्त्री॰।

मौञ्जीपत्री स्त्री॰ मौञ्ज्याइव पत्रमस्याः। बल्वजायाम्।

मौञ्जीबन्ध(न) पु० मौञ्ज्या मेखलाया बन्धो यत्र । उपनयनसंस्कारे 'मौञ्जीबन्धः शुभः प्रोक्तः सते मीनगते रवावि'ति स्मृतिः ६त० । तद्बन्धने न० । 'द्वितीयं मौञ्जीबन्धनमिति स्मृतिः ।

मौढ्य न० मूढस्य भावः ष्यञ् । मोहे, बाल्ये च ।

मौद्गल्य पु० मुद्गलस्य मुनेरपत्यं यञ् । गोत्रकारके मुनिभेदे ।

मौद्गीन न० मुद्गानां भवनं क्षेत्रं । खञ् । मुद्गभवनयोग्ये क्षेत्रे ।

मौन न० मुनेर्भावः । वाग्व्यापाररहित्ये 'उच्चारे मैथुने चैव प्रस्रावे दन्तधावने । स्नाने भोजनकाले च षट्सु मौनं समाचरेदि'ति स्मृतिः

मौनिन् त्रि० मौनमस्त्यस्य इनि । वाग्व्यापाररहिते । मुनौ पु० ।

मौरजिक त्रि० मुरजवादनं शिल्पमस्य ठक् । मृदङ्गवादनशीले ।

मौर्ख्य न० मूर्खस्य भावः ष्यञ् । जाड्ये. मूर्खतायाञ्च । [ङ्गयाञ्च ।

मौर्वी स्त्री० मूर्वा लता तत्तन्तुना निर्वृत्ता अण् । धनुर्गुणे, अजबद्-

मौल त्रि० मूलं वेत्ति मूलादागतो वा अण् । भूम्यादेरागमादिमूलज्ञे, 'यं परम्परया मौलाः सामन्ताः स्वामिनं विदु'रिति स्मृतिः मूलादागते च ।

मौलि पु० स्त्री० मूलस्यादूरभवः इञ् । चूडायां, किरीटे, संयतकेशेषु च । अशोकवृक्षे पु० । भूमौ स्त्री० वा ङीप् ।

मौषल न० मुषलस्येदम् सदृशमण् । मुषलतुल्यनिश्चेष्टे 'गङ्गायां मौषलं स्नानं महापातकनाशन'मिति पुराणम् । मुषलमधिकृत्य कृतो ग्रन्थः अण् । महाभारतान्तर्गते 'मुषलं कुलनाशन'मित्यादिप्रतिपादके षोडशे पर्व्वणि ।

मौहूर्त्त पु० मुहूर्तं तत्प्रतिपादकं शास्त्रं वेत्त्यधीते वा अण् । ज्योतिःशास्त्रज्ञे । ठक् । तत्रैव ।

म्ना अभ्यासे भ्वा० पर० सक० सेट् । मनति अम्नासीत् ।

म्रक्ष संयोजने म्रेक्षने च चु० उ० स० सेट् । म्रक्षयति ते अमम्रक्षत् त

म्रक्ष संघाते संयोजने च भ्वा० पर० सक० सेट् । म्रक्षति अम्रक्षीत् ।

म्रक्षण न० म्रक्ष–ल्युट् । संयोजने, राशीकरणे, तैले यत्नपाके च ।

म्रच गतौ भ्वा० पर० सक० सेट् क्त्वा वेट् । म्रचति अम्रचत् अम्राचीत्
अम्रचीत् । [अङ् म्रदा ।

म्रद चोदे भ्वा० आ० सक० सेट् घटा० । म्रदते अम्रदिष्ट । म्रदयति

म्रदिमन् पु० म्रदोर्भावः म्रदु+इमनिच् म्रदादेशः । मृदुत्वे ।

म्रदिष्ठ त्रि० अतिशयेन मृदुः इष्ठन् म्रदादेशः । अतिमृदुत्ववति । ईय-
सुन् । म्रदीयानप्यत्र त्रि० । स्त्रियां ङीप् । [चीत् ।

म्रुच गतौ भ्वा० पर० सक० सेट् क्त्वावेट् । म्रोचति अम्रुचत् अम्रो-

म्रुन्च गतौ सर्व्वं म्रुचवत् । म्रुञ्चति अम्रुचत् अम्रुञ्चीत् ।

म्रेट(ड) उन्मादे भ्वा० पर० सक० सेट् । म्रेट(ड)ति अम्रेटी(डी)त्
चङि न ह्रस्वः ।

म्लच चु० म्रचवत् सर्व्वम् । म्लचयति ते । अमम्लचत् त ।

म्लान त्रि० म्लै—क्त । मलिने, ग्लानियुक्ते च ।

म्लानि स्त्री० म्ला—क्तिन् । कान्तिक्षये ।

म्लिष्ट न० म्लेच्छ—क्त नि० । अविस्पष्टवाक्ये तद्वाक्ययुक्ते, म्लाने च त्रि०

म्लुच गतौ भ्वा० पर० सक० सेट् क्त्वा वेट् । म्लोचति । अम्लुचत्—
अम्लोचीत् ।

म्लुन्च गतौ म्लुचवत् सर्व्वम् । म्लुञ्चति अम्लुचत् अम्लुञ्चीत् ।

म्लेच्छ अपशब्दे वा० चु० उभ० पक्षे भ्वा० पर० अक० सेट् । म्लेच्छ-
यति ते म्लेच्छति अमम्लेच्छत् त अम्लेच्छीत् ।

म्लेच्छ पु० म्लेच्छ-घञ् । अपशब्दे 'म्लेच्छो ह वा यदपशब्दः' इति
श्रुतिः । कर्त्तरि अच् । पामरजातौ, नीचजातौ च पु० पापरते
त्रि० हिङ्गुले न० ।

म्लेच्छकन्द पु० म्लेच्छप्रियः कन्दः । लशुने ।

म्लेच्छजाति स्त्री० म्लेच्छाभिधा जातिः । गोमांसादिभक्षके किराता-
दिजातिभेदे ।

म्लेच्छदेश पु० म्लेच्छाधारो देशः । चातुर्वर्ण्याचाररहिते देशे ।

म्लेच्छभोजन न० म्लेच्छैर्भुज्यते कर्म्मणि ल्युट् । यावके अन्नभेदे ।

म्लेच्छमण्डल न० ६त० । म्लेच्छदेशे ।

म्लेच्छमुख न० म्लेच्छानां मुखमिव रक्तत्वात् । ताम्रे म्लेच्छाख्यमप्यत्र
म्लेच्छित न० म्लेच्छ-क्त । अपशब्दे असंस्कृतशब्दे ।
म्लेट(ड) उन्मादे भ्वा० पर० सक० सेट् । म्लेट(ड)ति अमम्लेटी(डी)त् ।
चङि न ह्रस्वः ।
म्लेव सेवने भ्वा० आ० सक० सेट् । म्लेवते अमम्लेविष्ट । चङि न ह्रस्वः
म्लै कान्तिक्षये भ्वा० पर० सक० अनिट् । म्लायति म्लासीत् ।

## य

य पु० या-ड । वायौ, यशसि, योगे, गतौ च । यम-ड । संयमे ।
या-कर्त्तरि ड । यातरि त्रि० ।
यकृत् न० यं संयमं करोति कृ-क्विप् तुक् च । कुक्षौ दक्षिणभागस्थे
मांसपिण्डे । तद्रूपके रोगे च ।
यकृदात्मिका स्त्री० यकृतद्रूपात्मा स्वरूपं यस्याः कप् । तैलपायिका-
याम् (तेलापोका) ।
यकृद्वैरिन् पु० यकृतो रोगभेदस्य वैरी हन्ता । रोहितकवृक्षे ।
यक्ष पूजायां चु० आ० सक० सेट् । यक्षयते अययक्षत । [इन्द्रे च ।
यक्ष पु० यक्ष्यते यक्ष-कर्मणि वञ् । देवयोनिभेदे, तदीश्वरे कुबेरे इन्द्र-
यक्षकर्द्दम पु० यक्षप्रियः कर्दमः । 'कुङ्कुमागुरुकस्तूरीकर्पूरं चन्दनं
तथा महासुगन्धमित्युक्तं नामतो यक्षकर्द्दम' इत्युक्ते समभागेन
मिश्रिते कुङ्कुमादौ ।
यक्षतरु पु० यक्षाणां वासयोग्यस्तरुः । वटवृक्षे यक्षवासादयोऽप्यत्र ।
यक्षधूप पु० यक्षे पूजने योग्यो धूपः । (धुना) सर्ज्जरसे ।
यक्षराज पु० यक्षाणां राजा टच् समा० । कुबेरे । यक्षेषु राजते
राज-क्विप् । यक्षराड़प्यत्र पु० ।
यक्षरात्रि स्त्रि० यक्षप्रिया रात्रिः । कार्त्तिकपूर्णिमारात्रौ ।
यक्षामलक न० यक्षाणामामलकमिव । पिण्डखर्ज्जूरफले ।
यक्षावास पु० ६त० । यक्षाणामावासः । वटवृक्षे ।
यक्षोडुम्बरक न० यक्षाणामुडुम्बरमिव इवार्थे कन् । अश्वत्थफले ।

**यक्ष्मघ्नी** स्त्री० यक्ष्माणं हन्ति हन-टक् ङीप् । द्राक्षायाम् ।

**यक्ष्मन्** पु० यक्ष-मनिन् । रोगभेदे ।

**यज** देवपूजने, दाने, सङ्गतौ च भ्वा० उभ० यजादि० अनिट् । यजति ते अयाक्षीत् अयष्ट । [श्रुतिः ।

**यजति** पु० यज-अतिच् । यागभेदे । 'यजतिषु ये यजामहे' इति

**यजन** न० यज-ल्युट् होमादिना पशुचीराज्यादिभिः मन्त्रपूर्वकं वह्नौ प्रक्षेपरूपे यागे । ल्यु । उत्तरपदस्थः समभिव्याहृतदेवादेर्य-ष्टरि त्रि० यथा देवयजन इत्यादि ।

**यजमान** पु० यज-शानच् । होमादौ नियोक्तरि प्रधानकर्मफलवति ।

**यजि** पु० यज इन् । यष्टरि, यागे, यज्धातौ च ।

**यजुर्वेद** पु० यजुषां ऋक्सामभिन्नानां मन्त्राणां प्रतिपादको वेदः । वेदभेदे स च शुक्लकृष्णभेदेन द्विधा तद्विवरणं वाचस्पत्याभिधाने ।

**यजुस्** न० यज उसि । ऋक्सामभिन्ने पादच्छेदरहिते मन्त्रभेदे ।

**यज्ञपशु** पु० इज्यते, हविर्दीयतेऽत्र वा यागार्थकयजेर्भावे आधारे वा न यज्ञः यज्ञार्थः पशुः । अश्वे, छागे च ।

**यज्ञपुरुष** पु० यज्ञरूपः पुरुषः । विष्णौ ।

**यज्ञभूषण** पु० यज्ञम् भूषयति भूष-णिच्-ल्यु । श्वेतदर्भे ।

**यज्ञयोग्य** पु० यज्ञे योग्यः । उडुम्बरवृक्षे तत्समिदादिभिर्हि यज्ञः साध्यते ।

**यज्ञवल्ली** स्त्री० यज्ञार्था वल्ली । सोमवल्ल्याम् ।

**यज्ञवराह** पु० यज्ञरूपोवराहः । आदिवराहे भगवदवतारभेदे ।

**यज्ञवाट** पु० ६त० । यज्ञस्थाने ।

**यज्ञवृक्ष** पु० यज्ञार्थः वृक्षः । वटवृक्षे ।

**यज्ञश्रेष्ठा** स्त्री० यज्ञेषु तत्साधनेषु श्रेष्ठा । सोमवल्ल्याम् ।

**यज्ञसार** पु० यज्ञेषु यज्ञसाधनेषु सारः श्रेष्ठः । यज्ञोडुम्बरवृक्षे ।

**यज्ञसूत्र** न० यज्ञार्थं योगत्रं संस्कृतं वा सूत्रं शाक० । उपवीते ।

**यज्ञाङ्ग** पु० यज्ञस्याङ्गं साधनत्वेनास्त्यस्य अच् । यज्ञोडुम्बरे, खदिरे, ब्रह्मयष्टिकायाञ्च । ते हि समिदुपकरणादिना यज्ञं सम्पादयन्ति ।

**यज्ञान्त** पु० ६त० । अवभृथे यज्ञसमाप्तौ स्नानादिक्रियाभेदे, यज्ञशेषे च

**यज्ञिक** पु० यज्ञः यज्ञाङ्गं साध्यत्वेनास्त्यस्य ठन् । पलाशे तत्समिदादिभिर्हि यज्ञो निष्पाद्यते ।

**यज्ञिय** त्रि० यज्ञाय हितः घ । यज्ञकर्मयोग्ये । द्वापरयुगे पु० ।

**यज्ञियदेश** पु० कर्म० । यज्ञकर्मयोग्यदेशे 'कृष्णसारस्तु चरति मृगो यत्र स्वभावतः । स ज्ञेयो यज्ञियोदेश'इत्युक्ते देशे । [त्रि० ।

**यज्ञीय** पु० यज्ञाय हितः तस्येदं वा छ । यज्ञोडुम्बरे । यागसम्बन्धिनि

**यज्ञीयब्रह्मपादप** पु० ६त० । विकङ्कतवृक्षे (वःचि) 'वैकङ्कतीं स्रुवमादत्ते' इति श्रुतिः ।

**यज्ञेश्वर** पु० यज्ञस्य प्रवर्त्तयिता ईश्वरः । विष्णौ ।

**यज्ञेष्ट** न० ७त० । दीर्घरोहितृणे ।

**यज्ञोडुम्बर** पु० यज्ञार्थ उडुम्बरः । स्वनामख्याते वृक्षे ।

**यज्ञोपवीत** न० यज्ञेन संस्कृतमुपवीतम् । यज्ञकृते उपनयनसंस्कारेण पवित्रीकृते तिष्ठति ऊर्द्ध्वकृते वामस्कन्धात् दक्षिणकुक्षितो लम्बमानतया धृते सूत्रभेदे ।

**यज्वन्** पु० यज—भूते क्वनिप् । विधानेन कृतयागे ।

**यत** ताड़ने उपस्कारे च चु० उ० स० सेट् । यातयति । अयीयतत् त

**यत** यत्ने भ्वा० आत्म० अक० सेट् । निष्ठायामनिट् । यतते अयतिष्ट

**यतस्** अव्य० यद्+तसिल् । यस्मादित्यर्थे ।

**यतम** त्रि० एषां मध्ये यः यद्+डतमच् । एषां मध्ये यइत्यर्थे ।

**यतर** त्रि० अनयोर्मध्ये यः यद्+डतरच् । अनयोर्मध्ये यइत्यर्थे ।

**यति** पु० यतते मोक्षाय यत—इन् । परिव्राजके संन्यासिनि । यम्यते जिह्वा अत्र यम—क्तिन् । छन्दोग्रन्थविख्याते जिह्वाया विश्रामस्थाने, उच्चारणकालविच्छेदे स्त्री० । सा च 'कचित् छन्दस्यास्ते यतिरभिहिता पूर्वकृतिभिः पदान्ते सा शोभां व्रजति पदमध्ये त्यजति चे'त्याद्युक्ता सुप्तिङन्तपदान्ते एव छन्दोग्रन्थानुसारेण जिह्वाया विश्रामरूपोच्चारणाभावरूपा । यद्—डति । यत्परिमाणे - ब० व० त्रि० ।

**यतिचान्द्रायण** न० यतिनैव कर्त्तव्यं चान्द्रायणं व्रतभेदः । 'अष्टावष्टौ समश्नीयात् पिण्डान् मध्यदिने स्थिते । नियतात्मा हविष्याशी यतिचान्द्रायणं चरन्नि'त्युक्ते व्रतभेदे ।

**यतिन्** पु० यमनं यतं यम—क्त यतमनेन इनि । संन्यासिनि परिव्राजके । विधवायां स्त्री० ङीप् ।

**यत्न** पु० यत—नङ् । आयासे, उद्योगे, वैशेषिकोक्ते प्रवृत्तिनिवृत्तिजीवनयोनिरूपत्वैविध्यापन्ने गुणभेदे च । स च आत्मगुणः इति नैयायिकादयः चित्तगुण इति सांख्यवेदान्तिकाः ।

**यत्र** अव्य० यद्+त्रल् । यस्मिन्नित्यर्थे ।

**यन्त्र** सङ्कोचने वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् इदित् । यन्त्रयति ते यन्त्रति अययन्त्रत् त अयन्त्रीत् ।

**यथा** अव्य० यद्+प्रकारे थाल् । येन प्रकारेणेत्यर्थे, सादृश्ये, योग्यतायां, आनुरूप्ये पदार्थानतिवृत्तौ च ।

**यथाकाम** अव्य० काममनतिक्रम्य अव्ययी० । स्वाच्छन्द्ये यथेष्टतायाञ्च ।

**यथाकामिन्** त्रि० यथाकामं स्वाच्छन्द्यमस्त्यस्य इनि । स्वेच्छाचारिणि जने । स्त्रियां ङीप् ।

**यथाक्रम** अव्य० क्रमस्य आनुरूप्यं तस्यानतिक्रमो वा अव्ययी० । क्रमानुरूप्ये, क्रमानतिक्रमे च ।

**यथाजात** त्रि० जातं समयविशेषमनतिक्रम्य यथाजातं तदस्यास्ति अच् । मूर्खे, नीचे च ।

**यथातथ** अव्य० तथानतिक्रम्य अनतिवृत्तौ अव्ययी० । याथार्थ्ये यस्य वस्तुनो यद्रूपं भवितुमुचितं तथारूपभावे । यथायथमप्यत्रार्थे ।

**यथार्थ** अव्य० अर्थमनतिक्रम्य अव्ययी० । सत्यतायाम् अर्थस्याव्यभिचारे सत्यस्वरूपे अर्शआद्यच् । सत्ये त्रि० ।

**यथार्ह** अव्य० अर्हं योग्यतामनतिक्रम्य अव्ययी० । यथायोग्ये ततः अर्शआद्यच् । सत्यभूते पदार्थे त्रि० ।

**यथार्हवर्ण** पु० यथार्हं यथायोग्यं वर्णयति वर्ण—अण् । चरे ।

**यथाशक्ति** अव्य० शक्तेरानुरूप्यम् आनुरूप्ये ऽव्ययी० । शक्तेरानुरूप्ये, शक्त्यनुसारे । [नुसारे ।

**यथाशास्त्र** अव्य० शास्त्रस्यानुरूप्यम् अनतिक्रमो वा अव्ययी० । शास्त्रा-

**यथास्थित** अव्य० यथा येन रूपेण स्थातुं योग्यं तथास्थितम् । योग्यतायाम् अव्ययी० । सत्यतायाम् । अर्श आद्यच् । सत्ये त्रि०

**यथास्व** अव्य० स्वस्यानतिक्रमोऽव्ययी० । याथार्थ्ये । अर्श आद्यच् । यथार्थे त्रि० ।

**यथेप्सित** अव्य० ईप्सितस्यानतिक्रमः अव्ययी० । स्वाच्छन्द्ये, अर्श आद्यच् । यथाभीष्टे त्रि० यथेष्टमप्यत्र । [उचिते त्रि० ।

**यथोचित** अव्य० उचितस्यानतिक्रमः । औचित्ये, अर्श आद्यच् ।

**यद्** त्रि० यज्—अदि डिच्च । (ये) इत्येवं बुद्धिविशेषविषये अस्य उक्तार्थे सर्वनामता । यस्मादित्यर्थे अव्य० ।

**यदा** अव्य० यद्+दाच् । यस्मिन् काले इत्यर्थे ।

**यदि** अव्य० यद्+णिच्—इन् णिलोपः । पक्षान्तरे, सम्भावनायाञ्च ।

**यदु** पु० ययातिनृपतेः ज्येष्ठपुत्रे, यस्य वंशे श्रीकृष्णावतारः तस्य गोत्रापत्यमण् । बहुषु तस्य लुक् । यदुवंश्ये दशार्हदेशे च ब० व० ।

**यदुनाथ** पु० यदूनां नाथः रक्षकत्वात् । श्रीकृष्णे, यदुपत्यादयोऽप्यत्र ।

**यदृच्छा** स्त्री० यत्+ऋच्छ—अ+टाप् । स्वातन्त्र्ये, स्वैरतायाम्, यदृच्छालाभसन्तुष्ट'इति गीता ।

**यद्युवा** अव्य० यदि च उ च वा च द्व० । यद्यर्थे पक्षान्तरद्योतने, यद्युवाल्पतरसम्भारस्तर्हि पशुनैवे'ति स्मृतिः यद्युवा उभयं चिकीर्षेदिति च तिथ्यादितत्त्वम् । [हरिकारिका ।

**यद्वा** अव्य० यच्च वा च द्व० । पक्षान्तरे 'यद्वाभ्युदययोगात्ते'ति भर्तृ०

**यन्तृ** पु० यम—तृच् । सारथौ, हस्तिपालके च । संयमयुक्ते त्रि० ।

**यन्त्र** न० यत्रि—अच् । संयमने, तन्त्रोक्ते देवाद्यधिष्ठाने चक्रभेदे पात्रभेदे, सुगमतया ज्योतिश्चक्राद्यवेक्षणसाधने पदार्थभेदे, सूत्रधारादेर्दारुवेधकादौ (तुरपिन्) (भमर) (कुन्द) पदार्थे ।

**यन्त्रक** न० यन्त्रमिव इवार्थे कन् (कुँद) दारुभ्रामकयन्त्रभेदे ।

**यन्त्रगृह** न० ६त० । तैलिकयन्त्रालये (घानिघर) ।

**यन्त्रगोल** पु० यन्त्रमिव ज्योतिषक्राकृतिर्गोलयन्त्रमिव गोलः वर्त्तुलः ।
कलायभेदे (मटर) । [याम् स्त्री० टाप् ।

**यन्त्रण** न० यन्त्र-ल्युट् । नियमने, रक्षणे, बन्धने च । युच् । पोडा॰

**यन्त्रपेषणी** स्त्री० यन्त्रेणेव पिष्यतेऽनया पिष-ल्युट् । (याता) पेषण॰
यन्त्रे ।

**यभ** मैथुने भ्वा० पर० सक० अनिट् । यभति अयाप्सीत् ।

**यम** उपरतौ भ्वा० पर० सक० अनिट् क्त्वावेट् । यच्छति अयंसीत्
यन्ता । [अयीयमत् त अययामत् त

**यम** परिवेषणे चु० उ० सक० सेट् वा घटा० । यमयति यामयति

**यम** पु० यम-वञ् । 'अहिंसा सत्यवचनं ब्रह्मचर्य्यमकल्कता । अस्तेय॰
मिति पञ्चैत यमाख्यानि व्रतानि' इत्युक्ते अहिंसादौ, इन्द्रिया॰
दीनां संयमने च । यमयति अच् । प्राणिनां शुभाशुभकर्म्मानु॰
सारेण दण्डविधायके ईश्वरानुयुक्ते दक्षिणस्थे देवभेदे तत्स्वामि॰
कत्वात् काके च । एकगर्भजायमाने यमजे त्रि० । भ्रातृत्वेन यम॰
सम्बन्धिनि शनौ, द्वित्वसंख्यायां योगे च पु० ।

**यमक** न० 'सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः क्रमेण तेनैवावृत्ति॰
र्यमकं विनिगद्यते' इत्युक्ते शब्दालङ्कारभेदे ।

**यमकोटि** पु० स्त्री० भूगोलस्य चतुर्थपादान्तरिते लङ्कातः पूर्व्वस्यां
स्थितायां देवनिर्म्मितायां पुर्य्याम् 'लङ्का कुमध्ये यमकोटिरस्याः
प्रागि'ति सिद्धान्तशिरोमणिः ।

**यमज** त्रि० द्वि० व० । यमः एकदा एकत्र गर्भे सहचरः सन् जायते
जन-ड । एकदा एकगर्भजातयोः ।

**यमदूतिका** स्त्री० यमस्य दूतीव इवार्थे कन् । तिन्तिडीवृक्षे ।

**यमद्रुम** पु० यमस्य द्रुमः । यमद्वारस्थे शाल्मलिवृक्षे तत्तुल्यलौहमय॰
कीलाकीर्णदेहेण हि नारकिपीडनात्तस्य यमद्रुमत्वम् ।

**यमद्वितीया** स्त्री० ६त०। कार्त्तिकशुक्लद्वितीयायाम् 'तथा यमद्वितीयायां यात्रायां मरण'मिति ज्योतिषम्।

**यमदग्नि** पु० मुनिभेदे।

**यमन** न० यम-ल्युट्। बन्धने, उपरमे च। यमयति ल्यु। यमे पु०।

**यमप्रिय** पु० ६त०। वटवृक्षे।

**यमराज** पु० यमानां चतुर्दशानां राजा यमनियामको राजा वा टच् समा०। प्रेतानां राजनि धर्म्मराजे। यमेषु राजते राज-क्विप्। यमराडप्यत्र।

**यमल** न० यमं योगं लाति ला क। युग्मे, वृन्दावनस्थे वृक्षभेदे च।

**यमलपत्त्र** पु० यमलानि युग्मानि पत्त्राणि यस्य। अश्मन्तकवृक्षे।

**यमवाहन** पु० यमं वाहयति स्थानात् स्थानान्तरं नयति। वह स्वार्थे णिच्-ल्यु। महिषे।

**यमानी** स्त्री० यच्छति अग्निमान्द्यमनया यम-करणे ल्युट् पृ० आत्वम्। अजमोदायाम्। स्वार्थे कन्। तत्रैव।

**यमुना** स्त्री० यम उनन्। कालिन्द्यां नद्यां यमभगिन्याम् सूर्य्यसुतायाम्, दुर्गायाञ्च।

**यमुनाभ्रातृ** पु० ६त०। यमे। [भेदे।

**ययाति** पु० यस्य वायोरिव यातिः सर्वत्र गतिरस्य। नहुषात्मजे राज-

**ययु** पु० या-कु द्वित्वञ्च। अश्वमेधीयेऽश्वे, अश्वमात्रे च।

**यव** पु० यु-अच्। स्वनामख्याते शूकधान्यभेदे, 'वसन्ते सर्वशस्यानां जायते पत्त्रशातनम् मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः' इति मीमांसा। स्वार्थे कन्। अत्रैव।

**यवक्य** न० यवानां भवनं क्षेत्रं यत् कुक् च। यवभवने क्षेत्रे।

**यवक्षार** पु० यवजातः क्षारः। यवजातक्षारभेदे लवणभेदे (शोरा) च

**यवज** पु० यवात् जायते जन-ड। यवक्षारे, यवान्याञ्च।

**यवतिक्ता** स्त्री० यवाकारं तिक्तं फलं यस्याः। राजायां शङ्खिन्याञ्च।

**यवन** पु० यु-ल्यु। देशभेदे, तद्देशस्थे जने ब० व०। वेगे, अधिकवेगव-

म्लेच्छे, गोधूमे, गर्जरदेशे, तुरुष्कजातौ, ययाति पुत्रस्य तत्पुत्रस्य तुर्वसोर्वंश्ये जातिभेदे च। वेगवति त्रि०।

**यवनद्विष्ट** पु० यवनैर्द्विष्टः द्विष-क्त। गुग्गुलौ।

**यवनप्रिय** न० ६त०। मरिचे।

**यवनाचार्य्य** पु० ताजकादिज्योतिःशास्त्रकारके पण्डितभेदे।

**यवनानी** स्त्री० यवनानां लिपिः ङीप् आनुक् च। यवनानां लिप्याम्।

**यवनारि** स्त्री० यवनस्यारिः। श्रीकृष्णे।

**यवनाल** पु० यवानामिव नाला (नाड़ा) यस्य। (देधान) धान्यभेदे।

**यवनालज** पु० यवानां नालात् काण्डात् (नाड़ा) जायते। यवक्षारे

**यवनिका** स्त्री० युवन्त्यस्यां यु—ल्युट् ङीप् कन् अत ह्रस्वम्। (कानात्) जवनिकायाम्।

**यवनी** स्त्री० यु-ल्युट् ङीप्। यवानीनामकौषधौ यवनभार्य्यायाञ्च 'यवनीमुखपद्मानां'मिति रघुः।

**यवनेष्ट** न० ६त०। सीसके। मरिचे, ग्रञ्जने लशुने राजपलाण्डौ निम्बे च पु०। खर्ज्जूर्यां स्त्री० टाप्।

**यवफल** पु० यवाकारं फलमस्य। वंशे कुटजे च यस्य फलमिन्द्रयवः प्लक्षवृक्षे, जटामांस्याञ्च।

**यवमध्य** न० यवाकृति मध्यं यस्य। चान्द्रायणभेदे प्रथमदिनादापञ्च-दशदिनमेकैकग्रासवृद्ध्या, तदुत्तरं च आपञ्चदश दिनं क्रमेणै-कैकग्रासह्रान्या माससाध्ये व्रते तस्य मध्यदिवसानां हि बहुल-ग्रासवत्त्वेन यवमध्यतुल्यत्वम्।

**यवलास** पु० यवेन लस्यते संज्ञायां कर्त्तरि घञ्। यवक्षारे।

**यवशूक** पु० यवानां शूकः कारणत्वेनास्त्यस्य अच्। यवक्षारे यव-शूकजादयोऽप्यत्र।

**यवस** न० यु-असच्। घासे, तृणे च।

**यवागू** स्त्री० यूयते मिश्र्यते यु आगू। षड्गुणजलपक्वे द्रवभेदे (याउ)

**यवाग्रज** पु० यवस्याग्रात् शूकात् जायते जन-ड। यवक्षारे, यवान्याञ्च

यवानी स्त्री० दुष्टो यवः ङीप् आनुक् च । (ओयानि) पदार्थे ।

यवापत्य न० यवस्यापत्यमिव तज्जातत्वात् । यवक्षारे ।

यवाम्लज न० यवजाताम्लाज्जायते जन-ड । सौवीरके ।

यवास पु० यु-आस । दुरालभायाम्, खदिरभेदे च । सुवर्णादित्वात् त्वे स्त्री० टाप् । स्वार्थे कन् । तत्रैव ।

यविष्ठ त्रि० अतिशयेन युवा युवन्+इष्ठन् यवादेशः अतितरुणे ।

यवीयस् त्रि० अतिशयेन युवा युवन्+ईयसु यवादेशः 'अंशमंशं यवीयांस' इति स्मृतिः । कनिष्ठे स्त्रियां ङीप् ।

यवोत्थ न० यवादुत्तिष्ठति उद्+स्था-क । सौवीरके ।

यव्य न० यवानां भवनं क्षेत्रं यत् । यवभवनयोग्ये क्षेत्रे । युतश्चन्द्रार्कावत्र यत् । चान्द्रे मासि पु० । 'यव्यद्वयं श्रावणादि सर्वा नद्योरजस्वला' इति स्मृतिः ।

यशःपटह पु० यशःख्यापकः पटहः । ढक्कायाम् वाद्यभेदे ।

यशःशेष त्रि० यश एव शेषोऽस्य । मृते । कीर्त्तिशेषादयोऽप्यत्र ।

यशस् न० अश अशुन् धातोः युट् च । शौर्यादिप्रभूते ख्यात्यपरपर्याये पदार्थे

यशस्या स्त्री० यशसे हिता यशस्+यत् । जीवन्त्याम् ऋद्धिनामौषधौ च । यशःसाधने त्रि० । 'धन्यं यशस्यमायुष्यमिति ।

यशस्वत् त्रि० यशस्+मतुप् मस्य वः । यशोविशिष्टे । विनि । यशस्वीत्यप्यत्र स्त्रियां ङीप् । ङीबन्तस्तु तत्र ज्योतिष्मत्याख्यलतायां, वनकार्पास्याञ्च ।

यशोद पु० यशो ददाति दा-क । पारदे । यशोदातरि त्रि० । नन्दगोपपत्न्यां स्त्री० । 'नन्दगोपगृहेजाता यशोदागर्भसम्भवे' इति चण्डी

यष्टृ पु० यज-तृच् । यागयोक्ते ।

यष्टि स्त्री० यज क्तिन् नि० । ध्वजादिदण्डे, भुजाद्यवलम्बने दण्डे च क्तिच् । तन्तौ, हारलतायां, भार्य्यां, मधुकायां (यष्टिमधु) वा ङीप् । मधुभेदे च ।

यष्टीक न० यष्ट्या कायति कै-क । यष्टीमधौ, लताभेदे ।

यष्टीपुष्प पु॰ यष्टीव पुष्पमस्य। जीवकवृक्षे।
यष्टीमधु पु॰ यष्ट्यां मधु अस्य। (यष्टिमधु) स्वनामख्याते लताभेदे।
यस यत्ने दिवा॰ पक्षे भ्वा॰ पर॰ अक॰ सेट्। यस्यति यसति संयस्यति संयसति अनुयस्यति अयसत् अयासीत् अयसीत्।
या गतौ अदा॰ पर॰ सक॰ अनिट्। याति अयासीत्।
याग पु॰ यज-घञ्। मन्त्रकरणके वह्न्याद्यधिकरणे हविःप्रक्षेपरूपे यज्ञे
याच याचने भ्वा॰ उभ॰ द्विक॰ सेट्। याचति ते अयाचीत् अयाचिष्ट। चङि न ह्रस्वः। अयु याचथुः। याचितम्।
याचक त्रि॰ याच-ण्वुल्। याच्ञाकारके।
याचन न॰ याच-ल्युट्। याच्ञायाम्। युच्। याचनाप्यत्र स्त्री॰।
याचनक त्रि॰ याच-ल्यु स्वार्थे कन्। याचके।
याचित न॰ याच-भावे क्त। याचनवृत्तौ याच्ञायाञ्च। कर्मणि क्त। प्रार्थिते त्रि॰। [(चाओया द्रव्य)।
याचितक न॰ याचितेनाधिगतम् कन्। याच्ञया धनस्वामिनो गृहीते
याच्ञा स्त्री॰ याच-नङ्। प्रार्थनायाम्।
याजक पु॰ याजयति यज-णिच्-ण्वुल्। धनादिलाभाय परार्थं यज्ञकर्त्तरि ऋत्विगादौ।
याज्ञवल्क्य पु॰ मुनिभेदे।
याज्ञसेनी स्त्री॰ यज्ञसेनस्य द्रुपदराजस्यापत्यं स्त्री॰ अत इञ् ङीप्। द्रौपद्यां पाण्डवभार्य्यायाम्।
याज्ञिक पु॰ यज्ञाय हितः यज्ञः प्रयोजनमस्य वा ठक्। दर्भभेदे, खदिरे, पलाशे, अश्वत्थे, याजके, ऋत्विगादौ, यजमाने च।
याज्य न॰ इज्यतेऽत्र यज-ण्यत्। यागस्थाने देवप्रतिमायाञ्च 'याज्य' चैतमलङ्कार'मिति स्मृतिव्याख्यायां दायभागे याज्यं यागस्थानं देवता वेत्युक्तम् याजनीये त्रि॰। करणे ण्यत्। ऋग्विशेषे स्त्री॰।
यातना स्त्री॰ चु॰ यत-युच्। तीव्रवेदनायाम्।
यातयाम त्रि॰ यातो गतो याम उचितसमयो यस्य। जीर्णे पर्य्युषिते 'यातयामं गतरस'मिति गीता। उच्छिष्टे, परिभुक्ते च।

यातव्य पु॰ यायतेऽसौ या-तव्य। नृपाणां युद्धार्थमभिगम्ये शत्रौ गन्तव्ये त्रि॰।

यातायात न॰ यातञ्चायातञ्च या-भावे क्त आ+या-भावे क्त समाहार द्व॰। गमनागमनयोः।

यातु पु॰ या-तु। राक्षसे। गन्तरि त्रि॰। [हन्तरि त्रि॰।

यातुघ्न पु॰ यातुं राक्षसं गन्धेन हन्ति हन-ठक्। गुग्गुलौ, राक्षस-

यातुधान पु॰ यातु इति धीयतेऽभिधीयते धा-ल्युट्। राक्षसे।

यातृ स्त्री॰ या-तृच्। देवरपत्न्याम् (या) यातरौ। तृन्। गन्तरि त्रि॰ यातारौ।

यात्रा स्त्री॰ या-ष्ट्रन्। जिगीषया राज्ञां गमने, गमनमात्रे, देवोद्देशे-नोत्सवभेदे रथयात्रादौ च।

यात्रिक त्रि॰ यात्रायै हितम्। उत्सवे, उपाये, गमनहितेऽन्नपानादौ च

याथातथ्य न॰ तथा तद्रूपमनतिक्रम्य अव्ययी॰ तस्य भावः ष्यञ्। यद्वस्तु यथा भवितुं युक्तं तस्य तथाभावे।

याथार्थ्य न॰ यथार्थस्य भावः। सत्यत्वे वास्तविकत्वे।

यादःपति पु॰ यादसां जलजन्तूनां पतिः। वरुणे, समुद्रे च।

यादव पु॰ यदोर्गोत्रापत्यमण्। यदुवंश्ये स्त्रियां ङीप्। तत्प्रधाने श्रीकृष्णे पु॰। यदूनामिदम् अण्, गोमहिष्यादिके धने न॰ दुर्गायां स्त्री॰ ङीप्।

यादस् न॰ या-असुन् दुक् च। जलजन्तुमात्रे। [पत्यादयोऽप्यत्र।

यादसांनाथ पु॰ ६त॰। अलुक् समा॰। वरुणे, समुद्रे च। यादसां-

यादृक्ष(श)(श्) त्रि॰ यस्येव दर्शनमस्य यद्+दृश-क्स, (ट) क्विप् वा। यत्सदृशे यथाविधे। टान्तात् स्त्रियां ङीप्।

यादृच्छिक त्रि॰ यदृच्छया आगतः ठक्। यथेच्छया प्राप्ते।

यान न॰ या-भावे ल्युट्। गमने, उपचितशक्तेः राज्ञः मूलरक्षादिरक्षां कृत्वा रिपोराक्रान्तये गमने च। करणे ल्युट्। गमनसाधने रथादौ।

यापन न॰ या-णिच्-ल्युट्। कालादौ क्षेपणे, निरसने च

**याप्य** त्रि॰ या-णिच्-ण्यत् । निन्द्ये अधमे, गोपनीये निःशेषप्रति-कार्ये उपशमनीये रोगभेदे च ।

**याप्ययान** पु॰ याप्यं गोप्यं कुत्सितं वा पदशून्यत्वात् इतरवाह्यत्वाद्वा यानम् (महापाला) शिविकायाम् । [शा॰ ।

**याम** पु॰ यम-घञ् । समये प्रहरे च 'यामोयातस्तथापि नायात' इति

**यामघोष** पु॰ यामे घोषोऽस्य । कुक्कुटे । घटियन्त्रभेदे स्त्री॰ ।

**यामल** न॰ यमल+स्वार्थेऽण् । युगले, तन्त्रशास्त्रभेदे च ।

**यामवती** स्त्री॰ यामाः बहवः त्रित्वसंख्यायुताः सन्त्यस्याः भूम्नि मतुप् मस्य वः । रात्रौ, हरिद्रायाञ्च ।

**यामातृ** पु॰ जायां माति तृच् पृ॰ । जामातृशब्दार्थे । [मनुः ।

**यामि** स्त्री॰ यम-इन् । कुलस्त्रियां भगिन्यां 'यामयोयानि गेहानीति

**यामित्र** न॰ ज्योतिषोक्ते लग्नराशिभ्यां सप्तमे स्थाने ।

**यामित्रवेध:** पु॰ यामित्रे सप्तमस्थाने वेधः पापग्रहसंयोगः विवाहादौ वर्ज्ये पापात् सप्तमगशशीत्याद्युक्ते योगभेदे ।

**यामिनी** स्त्री॰ यामाः त्रिसंख्याताः सन्त्यस्य बाहुल्ये इनि । रात्रौ, हरिद्रायाञ्च ।

**यामिनीपति** पु॰ ६त॰ । चन्द्रे, कर्पूरे च । रजनीशादयोऽप्यत्र ।

**यामी** स्त्री॰ यमस्येयम् यमो देवतास्या वा अण् । दक्षिणस्यां दिशि यमसम्बन्धिन्यां यातनायां च । यामि+वा ङीप् । यामिशब्दार्थे

**यामुनेष्टक** न॰ यमुनायां भवं तद्विष्टकम् । सीसके तस्य हि कृष्ण-त्वात् यामुनजलतुल्यत्वम् ।

**याम्य** पु॰ यामी दिक् निवासोऽस्य यत् । अगस्त्ये, चन्दनवृक्षे च यमोदेवतास्य । यमसम्बन्धिनि त्रि॰ । दक्षिणदेशस्थे त्रि॰ ।

**याम्यायन** न॰ याम्यायाम् अयनं सूर्यस्य गतिः । दक्षिणायने रवेः मृगसंक्रान्तितः परेषु षट्सु मासेषु ।

**याम्योद्भूत** पु॰ याम्ये दक्षिणदेशे उद्भूतः । शीतालवृक्षे ।

**यायजूक** पु॰ यज यङ्-ऊक । पुनःपुनर्यागशीले ।

**यायावर** पु० देशाद्देशान्तरं याति या-यङ्-वरच् । अश्वमेधीयाश्वे जरत्कारुमुनौ च । अयनक्रमगमनशीले त्रि० ।

**याव** पु० यु-अप् स्वार्थे अण् । अलक्ते । स्वार्थे कन् । तत्र याव इव कन् (कुलत्थीकलाइ) ब्रीहिभेदे ।

**यावत्** त्रि० यत् परिमाणमस्य मतुप् । यत्परिमाणे । यावति । साकल्ये, व्याप्तौ, सीमायाञ्च अव्य० ।

**यावत्तावत्** अव्य० यावच्च तावच्च द्व० । बीजगणितप्रसिद्धे अव्यक्तमानानयनाय कल्प्ये प्रथमे राशौ ।

**यावतिथ** त्रि० यावतां पूरणः यावत्+डट् इथुक् च । यावत् परिमाणपूरणे ।

**यावन** पु० यु-णिच्-ल्यु । सिल्हाख्यगन्धद्रव्ये ।

**यावनाल** पु० यवनालएव स्वार्थे अण् । धान्यभेदे ।

**यावनालशर** पु० यावनालइव शरभेदे ।

**यावनाली** स्त्री० यावनालस्य विकारः अण् ङीप् । यावनाल भवायां शर्करायाम् ।

**यावशूक** पु० यवशूकस्य विकारः अण् । यवक्षारे ।

**याष्टीक** पु० यष्टिः प्रहरणमस्य ईकक् । यष्ट्या योद्धरि ।

**यास** पु० यस-कर्त्तरि संज्ञायां घञ् । दुरालभायाम् ।

**यु** मिश्रणे अमिश्रणे च अ० पर० सक० सेट् । यौति अयावीत् ।

**यु** बन्धे क्र्या० उ० सक० अनिट् । युनाति युनीते अयौषीत् अयोष्ट

**यु** निन्दने चु० आत्म० सक० सेट् । यावयते अयीयवत ।

**युक्त** त्रि० युज-क्त । मिलिते । अभ्यस्तयोगे योगिनि पु० । उचिते, न्यायागतद्रव्यादौ च न० ।

**युक्तरसा** स्त्री० युक्तो रसो यस्याः । रास्नायां (काटाचामरली) ।

**युक्ति** स्त्री० युज-क्तिन् । न्याये, व्यवहारे, अनुमाने तत्साधकलिङ्गज्ञानादौ, 'युक्तिरर्थावधारणमि'त्युक्ते नाटकाङ्गविशेषे च

**युग** वर्ज्जने भ्वा० पर० सक० सेट् इदित् । युङ्गति अयुङ्गीत् ।

**युग** न० युजि-अच् पृ० गलोपः । युग्मे, द्वित्वसंख्यान्विते, सत्यत्रेता-

द्वापरकलिरूपे कालविशेषे तत्प्रमाणं वा वत्सत्याभिधाने । ऋद्धि-
नामौषधे, हस्तचतुष्कपरिमाणे च। रथहलादेरङ्गभेदे पु०
(जोयाल)। [भेदे।

**युगकीलक** पु० ६त०। रथाद्यङ्गयुगधारणार्थे कीलकाकारे काष्ठखण्ड-

**युगन्धर** पु० युगं रथस्य युगकाष्ठं धरति धृ-खच्। रथस्य युगकाष्ठा-
ढ्ञने कुवराख्ये काष्ठभेदे, पर्वतभेदे च।

**युगपद्** अव्य० युगमिव पद्यते पद-क्विप्। एककाले इत्यर्थे।

**युगपत्र** पु० युगमिव संहतं पत्त्रमस्य। कोविदारवृक्षे स्वार्थे कन्।
तत्रैव। शिंशपावृक्षे स्त्री० टाप्। अत इत्त्वम्। [बद्धे वृषे।

**युगपार्श्वग** पु० युगपार्श्वे गच्छति गम ड। अभ्यासार्थं लाङ्गलपार्श्वे

**युगल** न० युगं द्वित्वं विद्यतेऽस्यस्य लच्। युग्मे, द्वित्वसंख्यान्विते च।

**युगलाख्य** पु० युगलेन वररूपेण व्यञ्जनवर्णद्वयेनाख्यायते आ+ख्या-क।
वर्वरवृक्षे। [च।

**युगान्त** पु० युगानां सत्यादीनामन्तस्तदुपलक्षितः कालः। प्रलये, तत्काले

**युग्म** न० युज गक् पृ० जस्य गः। द्वित्वसंख्यान्विते (जोडा) युगले।
'युग्माग्निकृतभूतानि षण्मुन्योर्वसुरन्ध्रयोः। रुद्रेण द्वादशी युक्ता
चतुर्दश्याथ पूर्णिमा। प्रतिपदाप्यमावस्या तिथ्योर्युग्मं महाफल-
मि'त्युक्ते तिथिविशेषयोगे समराशिषु च।

**युग्मपत्र** पु० युग्मानि पत्त्राण्यस्य। रक्तकाञ्चनवृक्षे। युग्मपर्णादयो-
ऽप्यत्र। संज्ञायां कन्। शिंशपावृक्षे स्त्री० टाप् अत इत्त्वम्।

**युग्मफला** स्त्री० युग्मानि फलानि यस्याः। इन्द्रचिर्भट्यां, वृश्चिकाल्यां च

**युग्य** न० युगमर्हति यत्। वाहने याने। युगं वहति यत्। युग-
वाहकेऽश्वादौ त्रि०।

**युच्छ** प्रमादे भ्वा० पर० सक० सेट्। युच्छति अयुच्छीत्।

**युज** संगमे युतौ च वा चु० उभ० पक्षे भ्वा० पर० सक० सेट्। योज-
यति ते योजति अयूयुजत् त अयोजीत्।

**युज** युतौ रु० उ० सक० अनिट्। युनक्ति युङ्क्ते उद्युङ्क्ते प्रयुङ्क्ते
नियुनक्ति। अयुजत् अयौक्षीत् अयुक्त।

**युज** योगे समाधौ दिवा० आ० अक० अनिट् । युज्यते अयुक्त ।

**युज** निन्दायां चु० आ० सक० सेट् । योजयते अयूयुजत ।

**युज्** पु० दि० युज–क्विप् । समाधिमति । युक् युजौ । रु० युज-क्विप् । संयोगवति त्रि० युङ् युञ्जौ युञ्जः ।

**युञ्जान** पु० युज शानच् । योगविशेषवति भावनासहकारेण सर्व्वपदार्थानां ज्ञातरि, रथसारथौ, विप्रे च ।

**युत** दीप्तौ भ्वा० आ० अक० सेट् । योतते । अयोतिष्ट ।

**युत** त्रि० यु-क्त । संयुक्ते, मिलिते, अमिलिते च ।

**युतक** न० यु क्त युत-क वा ततः स्वार्थे कन् । संशये, युगे, स्त्रीवसनाञ्चले, चरणार्धे, यौतुके धने, मैत्रीकरणे, संश्रवे, शूर्पाग्रे च । संयुक्ते त्रि० ।

**युतवेध** पु० विवाहादौ वर्ज्ये चन्द्रेण सह पापग्रहयोगे ।

**युद्ध** न० युध क्त । शस्त्रादिक्षेपणव्यापारे, योधने, तदाधारे संग्रामे ज्योतिषोक्ते ग्रहाणां गतिभेदकृते, योधनरूपे परस्परमिलनविशेषे च ।

**युध** युद्धे दिवा० आ० सक० अनिट् । युध्यते । अयुद्ध ।

**युध्(धा)** स्त्री० युध सम्प० क्विप् वा टाप् । युद्धे ।

**युधान** पु० यु-कानच् । क्षत्रिये ।

**युधिष्ठिर** पु० युधि युद्धे स्थिरः गवियुधिभ्यां स्थिरः इति षत्वम् । पाण्डुश्रेष्ठे ।

**युप** विमोहे दिवा० पर० अक० सेट् । युप्यति अयुपत् अयोपीत् ।

**युयुधान** पु० युध-कानच् द्वित्वम् । इन्द्रे, सात्यकिनामनि यादवे क्षत्रियभेदे, क्षत्रियमात्रे च ।

**युवखलति** स्त्री० युवतिरेव खलतिः । (टाक्) रोगवत्याम् युवत्यां युवजरतीत्यप्यत्र ।

**युवति(ती)** स्त्री० युवन्+ति ङीप् वा । यौवनवत्यां स्त्रियाम् । युवन्–ङीप् । यूनीत्यप्यत्र ।

*युतीठा स्त्री० युतीनामिष्टा । स्वर्णयूथिकायाम् ।

युवन् त्रि० यु कनिन् । श्रेष्ठे निसर्गबलवति । 'आषोडशाद्भवेद्बालस्तरुणस्तत उच्यते' इत्युक्तवयस्के तरुणे च ।

युवनाश्व पु० सूर्य्यवंश्ये, मान्धातृपितरि नृपभेदे । [राजपुत्रे ।

युवराज पु० युवैव राजा टच् समा० । राजयोग्यक्रियत्कार्य्यकरे

युष भजने सौ० पर० सक० सेट् । योषति अयोषीत् ।

युष्मद् त्रि० युष मदिक् । संबोध्यचेतने भवच्छब्दार्थे तस्य चोक्तार्थे सर्वनामता, त्रिषु लिङ्गेषु समरूपता च ।

यूक पु० स्त्री० यू-क्विप् कन् । मत्कुणे, (उकुण) स्त्रीत्वे टाप् ।

यूति स्त्री यु-क्तिन् नि० दीर्घः । मिश्रीकरणे ।

यूथ न० यु-थक् पृ० दीर्घः । सजातीयसमुदाये ।

यूथनाथ पु० ६त० । वन्यगजादीनां प्रधाने । यूथपादयोऽप्यत्र ।

यूथिका स्त्री० यु-थक् पृ० दीर्घः स्वार्थे कन् अत इत्त्वम् टाप् । अम्लानके, पाठायां, यूथ्याञ्च (युइफुल) ।

यूथी स्त्री० यु थक् पृ० दीर्घः गौ० ङीप् । (युइफुल) पुष्पप्रधाने वृक्षे ।

यूप पु० न० यु-पक् पृ० दीर्घः । यज्ञीयपशुबन्धनकाष्ठभेदे, यागसमाप्तिचिह्नार्थे स्तम्भे च । जयस्तम्भे पु० ।

यूपकटक पु० ६त० । यज्ञसमाप्तिसूचककाष्ठस्य शिरःस्थे वलयाकारे काष्ठमये पदार्थे ।

यूपद्रु पु० यूपाय द्रुः प्रकृतिविकृतिभावात् ४त० । खदिरवृक्षे यूपद्रुमादयोऽप्यत्र ।

यूष वधे भ्वा० पर० सक० सेट् । यूषति अयूषीत् ।

यूष पु० न० यूष क पृ० षस्य यः । कल्कादिक्वाथे । ब्रह्मदारुवृक्षे पु० ।

येष यत्ने भ्वा० आ० अक० सेट् । येषते अयेषिष्ट । चङि न ह्रस्वः ।

योक्त्र न० युज्यतेऽनेन युज-ष्ट्रन् । ईषादण्डादौ युगबन्धनार्थे दामनि (योत) ।

योग पु० युज-भावादौ घञ् । संयोगे, मेलने, उपाये, वर्म्मादिधारणे, ध्याने 'योगश्चित्तवृत्तिनिरोध' इति पातञ्जलोक्ते सर्वविषयेभ्योऽन्तःकरणवृत्तेर्निरोधे, 'संयोग योगमित्याहुर्जीवात्मपरमात्मनो'रित्युक्ते

जीवात्मपरमात्मनोरैक्ये, युक्तौ, छले, अलभ्यार्थलाभचिन्तायाम्, देहस्थैर्यं शब्दादीनां प्रयोगे, समुदायशब्दस्यावयवार्थसम्बन्धे, योम-बलं समाख्ये'ति मीमांसकाः। 'योगः कर्मसु कौशल'मित्युक्ते यथास्थितवस्तुनोऽन्यथारूपप्रतिपादने, यथा संसारबन्धहेतोरपि कर्मणोऽबन्धमोक्षहेतुत्वम्। ज्योतिषोक्तेषु रविचन्द्रयोगाधीनेषु विष्कुम्भादिषु, सप्तविंशतौ पदार्थेषु तिथिवारनक्षत्राणाम् अन्य-तरान्यतमानां योगविशेषे, अमृतयोगः अर्द्धोदययोग इत्यादि उपायौ च योगाधमनविक्रीतमिति स्मृतिः।

**योगक्षेम** न० योगश्च क्षेमश्च समाहारः द्व०। अलभ्यलाभचिन्तासहिते लब्धपरिरक्षणे 'योगक्षेमं वहाम्यह'मिति पुरा०।

**योगज** न० योगात् जायते जन ड अगुरुचन्दने। योगजातमात्रे त्रि०। न्यायादुक्ते प्रत्यक्षादिसाधने अलौकिकसन्निकर्षभेदे पु०।

**योगदान** न० योगेन छलेन उपाधिना वा दानम्। 'योगदानप्रतिग्रह' मिति स्मृत्युक्ते सोपाधिके दाने।

**योगनिद्रा** स्त्री० योगरूपा निद्रा। प्रलये परमेश्वरस्य सर्वजीवसंहारे-च्छया योगरूपे व्यापारे 'योगनिद्रामुपेयुष' इति चण्डी तदधि-ष्ठात्र्यां दुर्गायाञ्च।

**योगपट्ट** न० योगाभ्यासार्थं पट्टम्। योगिधार्य्ये पट्टसूत्रभेदे।

**योगपीठ** पु० न० योगश्रेष्ठ्यं पीठमासनम्। देवादीनामासनभेदे।

**योगमाया** स्त्री० योगएव माया। भगवतो जगत्सर्ज्जनार्थायां शक्तौ, 'योगमायामुपाश्रित' इति भागवतम्। तदधिष्ठात्र्यां दुर्गायाञ्च।

**योगरङ्ग** पु० योगेन रङ्गोऽत्र। (नारङ्ग) जम्बीरभेदे योगरङ्गाप्यत्र स्त्री०।

**योगरूढ़** पु० योगोऽवयवशक्तिः रूढ़िः समुदायशक्तिः एते स्तोऽस्य अच्। अवयवशक्त्या समुदायशक्त्या च अर्थबोधके पङ्कजशब्दादौ अत्र हि उभयशक्त्या पङ्कजन्मकर्त्तृत्वरूपावयवार्थविशिष्टपद्मत्वविशिष्टस्य बोधः। उभयार्थबोधनाच्च पङ्कजाते-कुमुदादौ, स्थलजाते-पद्मे च न तत्पदप्रयोगप्रसङ्गः।

योगवाहिन् पु॰ योगेन वहति वह—णिनि। पारदे, क्षारभेदे च।
योगाचार पु॰ योगेनाचरति आ+चर—अच्। बौद्धभेदे तन्मताचार-विवरणं वाचस्पत्याभिधाने।
योगाधमन न॰ योगेन छलेनोपाधिना वाधमनम्। सोपाधिके छलहेतुके च बन्धकदाने। 'योगाधमनविक्रीत'मिति स्मृतिः।
योगारूढ पु॰ योगमारूढः आ+रुह—क्त। 'यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते। सर्वसंकल्पसन्न्यासी योगारूढस्तदोच्यते' इत्युक्ते योगिभेदे 'योगारूढस्य तस्यैव शमः कारणमुच्यते' इति गीता।
योगासन न॰ योगार्थमासनम्। योगशास्त्रोक्ते स्वस्तिकादौ आसनभेदे।
योगिन् त्रि॰ युज—घिनुण्। 'आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन! सुखं वा यदि वा दुःखं स योगी परमोमत' इत्यादि-गीताद्युक्तयोगयुक्ते संयोगवति च त्रि॰ स्त्रियां ङीप्। सा च तत्र, दुर्गायां तत्शक्तिभेदेषु नारायण्यादिषु चतुःषष्टिप्रकारेषु प्रतिपन्नवमी इत्युक्ते पूर्वादिदिग्भेदाद् तिथिभेदेषु च।
योगीश्वर पु॰ ६त॰। याज्ञवल्क्यमुनौ योगिनां श्रेष्ठे च। दुर्गायां स्त्री॰ ङीप्।
योगेश्वर पु॰ ६त॰। श्रीकृष्णे, 'योगेश्वर! ततो मे त्वं दर्शयात्मान'मिति गीता। दुर्गायां वन्ध्याकर्कोट्यां च स्त्री॰ ङीप्।
योगेष्ट न॰ योगाय योजनार्थमिष्टम्। सीसके।
योग्य त्रि॰ योगमर्हति यत् युज—ण्यत् वा। योगार्हे, उचिते, निपुणे, शक्ते च। पुष्यनक्षत्रे पु॰। ऋद्धिनामौषधे न॰।
योग्यता स्त्री॰ योग्यस्य भावः तल्। सामर्थ्ये, शाब्दबोधसाधने 'पदार्थे तत्र तद्वत्ता योग्यता परिकीर्त्तिते'त्युक्ते तत्पदार्थे तत्पदार्थ-वत्तारूपे, परस्परान्वये बाधाभावरूपे वार्थे च।
योग्या स्त्री॰ योगमर्हति यत् युज—कृत्यम् ण्यत् वा। अभ्यासे शास्त्राभ्यासे, सूर्य्यस्त्रियाञ्च।
योग्यानुपलब्धि स्त्री॰ योग्यस्य प्रत्यक्षादिना उपलब्धुमर्हस्यानुपल-

भिरसनम् । न्यायाद्युक्ते अभावग्राहके साधनभेदे । तथाहि घटादिसत्त्वे तत्र घटाभावो नानुपलभ्यते तस्य प्रति योगिनो घटादेः सत्त्वेऽपि तत्प्रत्यक्षकारणसामग्र्याः सत्त्वेन तत्प्रत्यक्षस्याभावात् किन्तु घटाद्यभावो गृह्यते पिशाचाद्यभावस्य तु न प्रत्यक्षता तत्प्रति-योगिपिशाचादेर्दर्शनायोग्यत्वात् ।

योजन न॰ युज–भावादौ ल्युट् । संयोगे । णिच्–ल्युट् । संयोग-करणे । चतुर्षु क्रोशेषु । प्रथमनगमदत्ता योजने' इति लीलावती

योजनगन्धा स्त्री॰ योजनं व्याप्य गन्धो यस्याः । कस्तूर्य्याम्, सीतायां, व्यासमातरि–सत्यवत्याञ्च । स्वार्थे कन् अत इत्त्वम् । तत्रैव ।

योजनपर्णी स्त्री॰ योजनं व्याप्य पर्णान्यस्याः विस्तीर्णपर्णत्वात् । मञ्जिष्ठायाम् । [अत इत्त्वम् । तत्रैव ।

योजनवल्ली स्त्री॰ योजनं व्याप्य वल्लीव । मञ्जिष्ठायाम् । स्वार्थे कन्

योत्र न॰ यु–ष्ट्रन् । योक्त्रे (योत) ।

योद्धृ पु॰ युध–तृच् । युद्धकर्त्तरि ।

योध पु॰ युध–अच् । युद्धकारके । भावे घञ् युद्धे ।

योधन न॰ युध भावे ल्युट् । युद्धे । करणे ल्युट् । अस्त्राद्यायुधे । कर्त्तरि ल्यु । युद्धकर्त्तरि पु॰ । [परस्पराह्वाने ।

योधसंराव पु॰ योधाय युद्धाय संरावः आह्वानम् । योधानां युद्धार्थे

योनल पु॰ यवस्य नल इव काण्डोऽस्य पृ॰ उत्त्वम् । (देधान) शस्यभेदे

योनि पु॰ स्त्री॰ यु–नि । मण्यादीनामुत्पत्तिस्थाने–आकरे, कारणे, जले, स्त्रीणामसाधारणचिह्ने, तद्दैवतके पूर्वफल्गुनीनक्षत्रे च । स्त्रीत्वे वा ङीप् । [च देहे ।

योनिज न॰ योनिस्थानात् जायते जन ड । देहभेदे जरायुजेऽण्डजे

योनिमुद्रा स्त्री॰ योन्याकारा मुद्रा । तन्त्रोक्ते देवताविशेषपूजाङ्गे प्रदर्शनीये अङ्गुलीसन्निवेशविशेषे तल्लक्षणन्तु वाचस्पत्याभिधाने ।

योषा स्त्री॰ युष अच् टाप् । स्त्रियाम् नार्य्याम् ।

योषित् स्त्री॰ युष–इति । नार्य्याम् हलन्ताद्वा टाप् । योषितापत्र ।

योषित्प्रिया स्त्री॰ ६त॰ । हरिद्रायाम् ।

यौक्तिक त्रि० युक्तित आगतः ठक्। युक्तिसिद्धे, योग्ये च। युक्तौ चरितः ठक्। नर्मसचिवे पु०।

यौगिक त्रि० योगात् प्रकृतिप्रत्ययार्थसम्बन्धात् अधिगतः ठक्। प्रकृति-प्रत्ययलभ्यार्थवाचके शब्दे यथा पाचकादिशब्दः पाककर्तृवाचकः। योगे योग्यः ठक्। योगयोग्ये। [कुस्तः।

यौट संबन्धे भ्वा० पर० सक० सेट्। यौटति अयौटीत्। चडि न

यौड यौटवत् सर्वम्। यौडति अयौडीत्। [धने।

यौतक न० युतकाले विवाहकालेऽधिगतम् कण्। विवाहकाले लब्धे

यौतव न० युतु तस्य भावः अण्। परिमाणे।

यौतुक न० योतुर्योगकालस्तत्र लब्धं कण्। विवाहकाले लब्धे धने।

यौधेय पु० योध एव ढक्। योद्धरि। ढ। योधेयोऽपत्यम्।

यौन त्रि० योनितः योनिसम्बन्धात् आगतम् अण्। पापे, योनेरयं-अण्। वैवाहिकसम्बन्धे पु०।

यौवत न० युवतीनां समूहः अण्। युवतिसमुदाये।

यौवन न० यूनो भावः अण्। तारुण्ये अवस्थाभेदे। 'आ षोड़शाद् भवेद्बाल स्तरुणस्तत उच्यते। वृद्धः स्यात् सप्ततेरूर्द्ध्वमित्युक्तोऽ-वस्थाभेदे। [व्रणभेदे।

यौवनकण्टक पु० न० यौवनस्य कण्टक इव चिह्नम्। (वयस् फोड़ा)

यौवनदशा स्त्री० कर्म०। तारुण्ये अवस्थाभेदे।

यौवनलक्षण न० ६त०। स्तने, लावण्ये च।

यौष्माक त्रि० युष्माकमिदम् युष्मद् अण् युष्माकादेशः। युष्मत् सम्ब-न्धिनि। खञ्। यौष्माकीणोऽप्यत्र त्रि०।

# र

र पु० रा—ड। वह्नौ, उग्रे, कामानले च।

रंहस् न० रहि—असुन्। वेगे।

रक स्वादे प्राप्तौ च चु० उ० सक० सेट्। राकयति-ते अरीरकत् त।

रक्त न० रन्ज—करणे क्त। कुङ्कुमे, ताम्रे, सिन्दूरे, हिङ्गुले च।

शरीरस्थे रसपाकजन्ये मांसहेतौ रुधिराख्ये धातुभेदे च । भावे क्त । रागे । कुसुम्भे हिङ्गुले रोहितवर्णे च पु० तद्वति त्रि० । कर्त्तरि-क्त । अनुरक्ते क्रीडारते च त्रि० । कर्म्मणि-क्त । नील्यादिभिरञ्जिते त्रि० । करणे क्त । मञ्जिष्ठायां, लाक्षायां, गुञ्जायाञ्च स्त्री० टाप् ।

**रक्तक** पु० रक्तं रुधिरमिव कायति कै-क, स्वार्थे कन् वा । अम्लानवृक्षे, बन्धूकवृक्षे, रक्तशोभाञ्जने, रक्तैरण्डे च । रुधिरे रक्तवस्त्रे च न० । अनुरागिणि विनोदिनि च त्रि० ।

**रक्तकन्द** पु० रक्तवर्णः कन्दोऽस्य । विद्रुमे प्रवाले । [न० ।

**रक्तकमल** न० रक्तं कमलमिव । रक्तवर्णोत्पले । पु० । रक्तकम्बलमप्यत्र

**रक्तकरवीर** पु० कर्म्म० । रक्तवर्णपुष्पककरवीरवृक्षे ।

**रक्तकाञ्चन** पु० कर्म्म० । रक्तवर्णपुष्पककाञ्चनवृक्षे ।

**रक्तकाण्डा** स्त्री० रक्तः काण्डोऽस्याः । रक्तपुनर्नवायाम् ।

**रक्तकुमुद** न० कर्म्म० । रक्तवर्णपुष्पककैरवे । कर्म्म० । रक्तकैरवरक्तकोकनदे अप्यत्र न० ।

**रक्तकुसुम** पु० रक्तानि कुसुमान्यस्य । पारिभद्रे (पालदामादार) ।

**रक्तकेशर** पु० रक्ता केशरा अस्य । पारिभद्रे, पुन्नागवृक्षे च ।

**रक्तखदिर** पु० सारतो रक्तवर्णः खदिरः । रक्तवर्णसारके खदिरवृक्षे ।

**रक्तगन्धक** न० रक्तेन गन्धकमिव । बोले (गन्धरस) ।

**रक्तघ्न** पु० रक्तं हन्ति हन-टक् । रोहितकवृक्षे । दूर्वायां स्त्री० ।

**रक्तचन्दन** न० कर्म्म० । स्वनामख्याते चन्दनभेदे ।

**रक्तचित्रक** न० कर्म्म० । (लालचिता) क्षुपभेदे ।

**रक्तचूर्ण** न० कर्म्म० । सिन्दूरे ।

**रक्तझण्टी** स्त्री० कर्म्म० । (नालझांटि) पुष्पप्रधानकवृक्षभेदे ।

**रक्ततुण्ड** पु० रक्तं तुण्डमस्य । शुकपक्षिणि ।

**रक्ततृणा** स्त्री० रक्तं तृणं यस्याः । गोमूत्रिकायाम् ।

**रक्तत्रिवृत्(ता)** स्त्री० कर्म्म० । (नालतेओड़) वृक्षभेदे ।

**रक्तदन्तिका** स्त्री० रक्ता दन्ता अस्याः ङीप् संज्ञायां कन् अत

इत्यन्। दाडिमीरूपे दुर्गाशक्तिभेदे 'भक्षयन्त्याश्च तानुग्रान् वैप्रचित्तान् महासुरान्। रक्ता दन्ता भविष्यन्तीत्युपक्रम्य ततो मां देवताः सर्वे मर्त्यलोके च मानवाः। स्तुवन्तो व्याहरिष्यन्ति सततं रक्तदन्तिका'मिति चण्डी।

रक्तदला स्त्री० रक्तानि दलान्यस्याः। नालिकायाम् (नालते)।

रक्तदृश् पु० रक्ता दृक् नेत्रमस्य। कपोते। रक्तनेत्रादयोऽप्यत्र।

रक्तधातु पु० कर्म्म०। गैरिके, ताम्रे च। देहस्थे रुधिररूपे रसधातुजाते मांसधातुहेतौ धातुभेदे च।

रक्तनाल पु० रक्तो नालोऽस्य। जीवशाके।

रक्तप पु० रक्तं पिबति पा–क। राक्षसे। रक्तपानकर्त्तरि त्रि०। जलौकायां, डाकिन्याञ्च स्त्री०। [पुष्पजवायाम्, राक्षसाञ्च।

रक्तपल्लिका स्त्री० रक्तानि पुष्पपत्राण्यस्याः कप् अत इत्वम्। रक्त-

रक्तपल्लव पु० इत०। अशोकवृक्षे।

रक्तपाकी स्त्री० रक्तः पाकः फलं यस्याः ङीप्। वृहत्याम्।

रक्तपाद पु० इत०। शुकपक्षिणि। लज्जालौ लतायां, हंसपद्याञ्च स्त्री० ङीप्। [(जोंक)।

रक्तपायिनी स्त्री० रक्तं पातुं शीलमस्याः पा+णिनि। जलौकायाम्।

रक्तपारद पु० न० कर्म०। हिङ्गुले। [काश' इति वैद्यकम्।

रक्तपित्त न० रक्ताय दुष्टं पित्तम् यस्मात्। रोगभेदे 'रक्तपित्तात् प्रकोप

रक्तपुष्प पु० रक्तं पुष्पमस्य। करवीरे, रोहितकवृक्षे, रक्तकाञ्चनवृक्षे, दाडिमवृक्षे, रक्तकवृक्षे, बन्धूकवृक्षे, पुन्नागवृक्षे च स्वार्थे कन्। पलाशे। कर्म०। रक्तवर्णकुसुमे न०। पर्पटे, शाल्मलिवृक्षे, जवावृक्षे च स्त्री० टाप्।

रक्तपुष्पिका स्त्री० रक्तानि पुष्पाणि यस्याः ङीप् अत इत्वम्। लज्जालुलतायाम्, रक्तपुनर्नवायाम्, भूमिपाटल्यां च।

रक्तपुष्पी स्त्री० रक्तानि पुष्पाण्यस्याः ङीप्। पाटलिवृक्षे (पारुल) जवायाम्, आवर्त्तकीलतायाम्, नागदमन्याम् करुणीवृक्षे च।

रक्तपूरक न० रक्तं रुधिरं पूरयति सेवनात् पूर–ण्वुल्। वृक्षाम्ले।

रक्तप्रसव पु० रक्तवर्णः प्रसवः पुष्पमस्य। करवीरे रक्ताम्लाने च।

रक्तफल पु० रक्तानि फलान्यस्य। वटवृक्षे। शिम्बिकायां स्त्री० टाप् (तेलाकुचा)।

रक्तवालुक न० कर्म्म०। सिन्दूरे रक्तवालुकाप्यत्र स्त्री०।

रक्तमञ्जर पु० रक्तवर्णा मञ्जरी अस्त्यस्य अच्। निचुलवृक्षे।

रक्तमूला स्त्री० ६त०। लज्जालुलतायाम्।

रक्तमेह पु० कर्म्म०। रोगभेदे।

रक्तमोक्षण न० ६त०। रुधिरस्रावणे।

रक्तयष्टि स्त्री० रक्तवर्णा यष्टिरस्याः। मञ्जिष्ठायाम्। स्वार्थे कन् तत्रैव

रक्तरेणु पु० रक्ता रेणवोऽस्य। पलाशकलिकायाम्।

रक्तलशुन न० कर्म्म०। (नालरशुन) मूलभेदे।

रक्तला स्त्री० रक्तं रुधिरं हेतुत्वेनास्त्यस्याः लच् तत् लाति सेवनात् ला-क वा। काकतुण्ड्याम्।

रक्तवटी स्त्री० रक्तवर्णा वटीव। मसूरिकायाम्।

रक्तवर्ग पु० रक्तानां वर्गः समुदायः। दाड़िमकिंशुकलाक्षाबन्धूक-हरिद्राजवाकुसुम्भपुष्पमञ्जिष्ठालक्तकरूपे समूहे। [पु०]

रक्तवर्ण पु० रक्तो वर्णोऽस्य। इन्द्रगोपकीटभेदे। कर्म०। रोहितरूपे

रक्तवर्द्धन पु० रक्तं रुधिरं वर्द्धयति वृध-णिच्-ल्यु। वार्त्ताकौ।

रक्तवर्षाभू पु० वर्षायां भवति भू क्विप् कर्म्म०। रक्तपुनर्नवायाम्।

रक्तवीज पु० रक्तवर्णानि वीजान्यस्य। दाड़िमे। रक्तं रुधिरमेव वीजमुत्पत्तिः कारणं यस्य। 'रक्तविन्दुर्यदा भूमौ पतत्यस्य शरीरतः। समुत्पतति मेदिन्यास्तत्प्रमाणास्तदा सुरं' इति चण्डीप्रतिपादितेऽसुरभेदे।

रक्तवृन्ता स्त्री० रक्तवर्णं वृन्तं यस्याः। शेफालिकायाम्।

रक्तवृष्टि स्त्री० ६त०। दैवकृतोपद्रवभेदे रुधिरवर्षणे।

रक्तशालि पु० कर्म्म०। (लालधान) धान्यभेदे।

रक्तशिग्रु पु० कर्म्म०। (नालसजना) वृक्षभेदे।

रक्तशीर्षक पु० रक्तं शीर्षमस्य कप्। सरलद्रुमे।

रक्तशृङ्गिक न० रक्तं शृङ्गमिवास्त्यस्य ठन् । विषभेदे ।
रक्तसन्ध्यक न० रक्ता सन्ध्येव कन् । रक्तवर्णे कह्लारे, पद्मे च ।
रक्तसरोरुह न० कर्म्म० । रक्तपद्मे ।
रक्तसर्षप पु० कर्म्म० । (राइसर्षा) राजिकायाम् ।
रक्तसहा स्त्री० रक्तं सहते सह-अच् । रक्ताम्लाने ।
रक्तसार न० रक्तः सारोऽस्य । रक्तचन्दने । अम्लवेतसे पु० ।
रक्तसौगन्धिक न० कर्म्म० । (नालसुदि) रक्तवर्णकह्लारे ।
रक्ताकार पु० रक्तवर्ण आकारो मूर्त्तिर्यस्य । प्रवाले ।
रक्ताक्ष पु० रक्ते अक्षिणी यस्य षच् समा० । पारावते, महिषे, चकोरे, सारसे च । रक्तनेत्रवति, क्रूरे, जने च त्रि० स्त्रियां ङीष् ।
रक्ताङ्ग न० रक्तमङ्गं यस्य यस्माद्वा । कुङ्कुमे । मङ्गलग्रहे कम्पिल्ले (ङ रकरमचा) च पु० । प्रवाले पु० न० । जीवन्त्याम्, मञ्जिष्ठायाञ्च स्त्री० ङीप् । [रोगभेदे ।
रक्ताति(ती)सार पु० रक्तमिश्रितोऽति(ती)सारः । वैद्यकप्रसिद्धे
रक्ताधार पु० ६त० । देहावरके चर्म्मणि ।
रक्तापह न० रक्तं रुधिरमपहन्ति अप+हन ड । गन्धरसे बोले ।
रक्तापामार्ग पु० कर्म्म० । (लाल आपाङ) । [illegible]पभेदे ।
रक्ताम्लान पु० कर्म्म० । रक्तमहासहालतायाम् ।
रक्तालु पु० कर्म्म० । (गकरकन्द) आलुभेदे । [मापभेदे च ।
रक्तिका स्त्री० रक्तेव कन् अत इत्त्वम् । गुञ्जायां, राजिकायां, परि-
रक्तेक्षु पु० कर्म० (काजला) इक्षुभेदे ।
रक्तैरण्ड पु० कर्म्म० । (लालभेरण्डा) वृक्षभेदे ।
रक्तोत्पल न० कर्म्म० । कोकनदे लोहितवर्ण–पद्मे । रक्तोत्पलमिव पुष्पमस्त्यस्य अच् । शाल्मलिवृक्षे (शिमुल) पु० रक्तमुत्पलमिव । गैरिके न० । [त्रि० ।
रक्तोत्पलाभ पु० रक्तोत्पलस्य कोकनदस्येवाभा यस्य । रक्तरूपे तद्वति
रक्ष पालने भ्वा० पर० सक० सेट् । रक्षति अरक्षीत् ।
रक्षःसभ न० रक्षसां राक्षसानां सभा । राक्षससमूहे ।

**रक्षक** त्रि० रक्ष-ण्वुल्। रक्षाकर्त्तरि स्त्रियां टाप् अत इत्त्वम्।

**रक्षणि(णी)** स्त्री० रक्ष-अनि वा ङीप्। त्रायमाणालतायाम्।

**रक्षस्** न० रक्ष्यते हविरस्मात् रक्ष-अपादानेऽसुन्। राक्षसे।

**रक्षा** स्त्री० रक्ष-अ टाप्। रक्षणे। रक्षति अच् टाप्। जतुनि, भस्मनि च स्त्री०। रक्ष-अच्। रक्षके त्रि०।

**रक्षापत्र** पु० रक्षार्थं पत्त्रमस्य। भूर्जपत्त्रवृक्षे।

**रक्षित** त्रि० रक्ष्यतेऽत्र रक्ष-क्त। भाण्डे। उपाधिभेदे तदुपाधिविशिष्ट-जनकृते वैद्यकग्रन्थभेदे च।

**रक्षिवर्ग** पु० रक्षिणां वर्गः। सैन्यादिरक्षके (प्रकृतिगण)।

**रक्षोघ्न** न० रक्षो हन्ति हन-टक्। काञ्जिके, हिङ्गुनि च। तद्गन्धाघ्राणसम्बन्धाद्धि रक्षसामपसरणम्। भल्लातकवृक्षे श्वेतसर्षपे च पु०। ऋग्वेदादिप्रसिद्धे 'कृणुष्वपाज' इत्यादिके सूक्तभेदे न०। वचायां स्त्री०। राक्षसघातकद्रव्यमात्रे त्रि०।

**रक्षोहन्** पु० रक्षो हन्ति हन-क्विप्। गुग्गुलौ तद्गन्धघ्राणाद्धि राक्षसानामपसरणम्। श्वेतसर्षपे च। राक्षसहन्तरि त्रि० 'रक्षोहा वलगहन' इति यजुर्वेदः।

**रक्ष्ण** पु० रक्ष-नङ्। त्राणे।

**रख** सर्पणे भ्वा० पर० अक० सेट् इदित्। रङ्खति अरङ्खीत्।

**रख** सर्पणे भ्वा० पर० सक० सेट्। रखति अरखीत् अराखीत्।

**रग** शङ्कायाम् भ्वा० प० सक० सेट् घटा० एदित्। रगति अरगीत्। रगयति।

**रग** गतौ भ्वा० पर० सक० सेट् इदित्। रङ्गति अरङ्गीत्।

**रग** स्वादे आप्तौ च चु० उभ० सक० सेट्। रागयति अरीरगत् त।

**रघ** दीप्तौ चु० उभ० सक० सेट् इदित्। रङ्घयति ते अररङ्घत्।

**रघ** गतौ भ्वा० आ० सक० सेट् इदित्। रङ्घते अरङ्घिष्ट।

**रघु** पु० लघ-उ लस्य रत्वम्। सूर्यवंश्ये दिलीपसूनौ नृपतिभेदे रघो-रपत्यम् अण् बहुषु लुक्। रघुवंश्ये अजप्रभृतौ क्षत्रिये ब० व०। तान् अधिकृत्य कृतो ग्रन्थः अण् आख्यायिकायां तस्य लुक्

कालिदासप्रणीते ऊनविंशतिसर्गात्मके महाकाव्यभेदे पु० ।

रघुनन्दन पु० रघून् नन्दयति नन्द णिच् ल्यु । दशरथज्येष्ठपुत्रे श्रीरामे । [दयोऽप्यत्र ।

रघुनाथ पु० रघूणां नाथः रक्षकत्वात् श्रेष्ठत्वाद्वा । श्रीरामे रघुपत्या-

रघुवंश पु० ६त० । रघुकुले । तमधिकृत्य कृतो ग्रन्थः आख्यायिकायां तस्य लुक् । कालिदासप्रणीते ऊनविंशतिसर्गात्मके महाकाव्यभेदे ।

रघुवंशतिलक पु० रघुवंशे तिलक इव । दशरथज्येष्ठपुत्रे श्रीरामे ।

रघुवर पु० रघुषु वरः श्रेष्ठः । श्रीरामे । [ज्येष्ठपुत्रे श्रीरामे ।

रघूद्वह पु० रघुषु उद्वहः रक्षादिभारधारकः उद्+वह-अच् । दशरथ-

रङ्क त्रि० रकि-अच् । कृपणे, मन्दे च ।

रङ्कु पु० रकि-उ । मृगविशेषे ।

रङ्ग पु० रगि-अच् । धातुभेदे, (राङ) रन्‌ज भावे घञ् । रागे आधारे घञ् । रणभूमौ, नाट्यस्थाने च । करणे घञ् । नृत्ये, टङ्कणे, (सोहागा) खादिरसारे च ।

रङ्गज न० रङ्गात् रङ्गधातोर्जायते जन-ड । सिन्दूरे ।

रङ्गजीवक पु० रङ्गेण रञ्जनेन जीवति जीव-ण्वुल् । (रङ्गरेज) शिल्पिभेदे, चित्रकरे, नाट्यजीविनि च ।

रङ्गद पु० रङ्गं रञ्जनं रागं ददाति दा-क । टङ्कणे, खदिरसारे च

रङ्गदायक पु० रङ्गं ददाति दा-ण्वुल् । कङ्कुष्ठे, (काङ्गनी) धान्य-भेदे । [हि नीलरागसम्भवः ।

रङ्गपत्री स्त्री० रङ्गाय पत्रमस्याः ङीप् । नीलीवृक्षे तत्पत्ररसादिना

रङ्गपुष्पी स्त्री० रङ्गाय पुष्प्यति अण् ङीप् । नीलीवृक्षे ।

रङ्गभूमि स्त्री० रज्यतेऽत्र रन्‌ज-घञ् कर्म्म० । नाट्यभूमौ 'रङ्गभूमिं समासाद्येति' सा० द० । मल्लभूमौ च ।

रङ्गमातृ स्त्री० रङ्गस्य रागस्य मातेवोत्पादिका । लाक्षायाम् कुट्टिन्याञ्च सा हि नायकयोर्वार्त्ताद्वारा रागं वर्द्धयति ।

रङ्गलासिनी स्त्री० रङ्गं रागं लासयत्युल्लासयति हृन्तरसेन लस णिच् णिनि । शेफालिकायाम् ।

रङ्गवीज न० रङ्ग इव बीजमुत्पत्तिसाधनं यस्य । रूप्ये, रजते ।

रङ्गशाला स्त्री० रज्यतेऽत्र कर्म्म० । (नाचघर) नाट्यगृहे ।

रङ्गाजीव पु० रङ्ग रञ्जनं नाट्यस्थानं वा आजीवति आ+जीव-अण् । (रङ्रेज) शिल्पिभेदे, चित्रकरे, नटे च । [जीर्णता ।

रङ्गारि पु० रङ्गस्यारिरिव जारकत्वात् । करवीरे तद्रसंबन्धाद्धि रङ्गस्य

रङ्गावतारक पु० रङ्गे नाट्यस्थानेऽवतरति वेशान्तरपरिग्रहेण अव+तॄ-ण्वुल् । नटे, शैलूषे । णिनि । उक्तार्थे ।

रङ्गिणी स्त्री० रङ्गमिव शुभ्राणि मूलानि सन्त्यस्याः इनि । शतमूल्याम्, कैवर्त्तिकासुस्तके च । रङ्गयुक्ते त्रि० ।

रङ्हस् न० रंघ-असुन् । वेगे । [तत्रैव न० ।

रचना स्त्री० रच-युच् । रचने, पुष्पपत्त्रादेर्विन्यासे । भावे ल्युट् ।

रच रचनायां अद० चु० उभ० सक० सेट् । रचयति ते अररचत् त ।

रज न० रन्ज क । स्त्रीकुसुमे । परागे, रेणौ गुणभेदे च पु० ।

रजक पु० रजति रन्ज-ण्वुल् नलोपः । वस्त्रादेः रागकारके जातिभेदे (धोपा) ।

रजत न० रन्ज-अतच् नलोपः । रूप्ये, गजदन्ते, रुधिरे, हारे, शैले, स्वर्णे, धवले च । शुक्लगुणवति त्रि० ।

रजताचल पु० रजतकल्पितोऽचलः । दानार्थं कल्पिते, रजतमये पर्व्वते । रजतमिव शुभ्रोऽचलः । कैलासपर्व्वते रजतगिर्य्यादयोऽप्यत्र पु० ।

रजन न० रन्ज-ल्यु । रागे । [जतुकायाञ्च ।

रजनि(नी) स्त्री० रज्यतेऽत्र रन्ज-कनि वा ङीप् । रात्रौ, हरिद्रायां,

रजनीकर पु० रजनीं सततं करोति कृ-ट । चन्द्रे । [कुष्ठे ।

रजनीगन्धा स्त्री० रजन्यां गन्धो यस्याः । स्वनामख्याते पुष्पप्रधाने

रजनीचर पु० रजन्यां चरति चर-ट । राक्षसे, चौरे, यामिकभटे च

रजनीजल न० रजन्या जलमिव । नीहारे । [करञ्जभेदे ।

रजनीपुष्प पु० रजन्या हरिद्राया इव पुष्पमस्य । (पूतिकरमचा)

रजनीमुख न० तत्पु० । प्रदोषे सूर्यास्तकालात् चतुर्दण्डात्मके, मुहूर्त्तात्मके वा काले ।

रजनीहासा स्त्री० रजन्यां हासो विकाशो यस्याः । शेफालिकायाम्

रजस् न० रन्ज-असुन् नलोपः । पुष्परेणौ, परागे, धूलौ, शास्त्रोक्ते चेष्टादिकारके प्रकृतिगुणभेदे च । [ऋतुमत्यां स्त्रियां स्त्री० ।

रजस्वल त्रि० रजोऽस्त्यस्य वलच् । रजोयुक्ते । महिषे पु० आर्त्त-

रज्जु स्त्री० सृज-उ नि० । बन्धनसाधने दामनि (दड़ि) वेण्याञ्च ।

रञ्जक न० रञ्जयति रन्ज-णिच्-ण्वुल् । हिङ्गुले प्रीतिकारके त्रि० । काम्पिल्लवृक्षे पु० (डहरकरमचा) ।

रञ्जन न० रज्यतेऽनेन रन्ज-करणे ल्युट् । रक्तचन्दने, मञ्जिष्ठायां, नील्यां, गुण्डारोचनिकायां, (कमलागुड) शेफालिकायां, हरिद्रायां, पर्पटयाञ्च स्त्री० ङीप् । भावे ल्युट् । रागे । ल्यु । रागजनके त्रि० । मुञ्जतृणे न० । संज्ञायां कन् । कट्फले पु० ।

रट भाषणे भ्वा० पर० सक० सेट् । रटति अराटीत् अरटीत् 'माघे मासि रटन्त्याप' इति श्रुतिः ।

रटन्ती स्त्री० रट-शतृ ङीप् । 'माघे मास्यसिते पक्षे रटन्त्याख्या चतुर्दशी । तस्यां प्रदोषसमये पूजयेत् मुण्डमालिनी'मित्युक्तायां माघकृष्णचतुर्द्दश्याम् ।

रठ भाषणे भ्वा० पर० सक० सेट् । रठति अराठीत् अरठीत् ।

रण गतौ भ्वा० पर० सक० सेट् । रणति अराणीत् अरणीत् घटादि० । रणयति ।

रण रवे भ्वा० पर० अक० सेट् । रणति अराणीत् अरणीत् ।

रण न० रण्यते शब्द्यतेऽत्र रण-घञर्थे क । युद्धे, भावे क । शब्दे, क्वणे, गतौ च पु० । [उद्वेगे अतिशये च ।

रणरणक पु० रणः शब्दस्तत्प्रकारः द्वित्वम् ततः संज्ञायां कन् ।

रणसङ्कुल न० रणमेव सङ्कुलम् । तुमुलयुद्धे ।

रण्ड पु० रण-ड तस्य नेत्त्वम् । धूर्त्ते, विफले अशाङ्कविषयितया

छिन्नाग्रयवे त्रि० मूषिकपर्ण्यां विधवायाञ्च स्त्री० । स्वार्थे कन् । अफलदृक्षादौ ।

रण्डाश्रमिन् पु० रण्डः विफलः प्रजाहीनत्वात् आश्रमः अस्य इति । 'चत्वारिंशद्वत्सराणां साष्टानाञ्च परे यदि । स्त्रिया वियुज्यते कश्चित् स तु रण्डाश्रमी मत' इत्युक्तवयसि स्त्रीवियुक्ते । पुरुषे । [कर्त्तरि क्त । अनुरक्ते त्रि० ।

रत न० रम–भावे क्त । रमणे स्त्रीपुंसयोः सङ्गमे, मैथुने, गुह्ये च ।

रति स्त्री० रम–क्तिन् । रागे, गुह्ये, रमणे तदधिष्ठात्र्यां कामदेवपत्न्यां च [साध्ये मैथुने ।

रतिक्रिया स्त्री० रतये रतिरूपो वा क्रिया व्यापारः । स्त्रीपुंसङ्गम-

रतिपति पु० ६त० । कन्दर्पे रतिकान्तादयोऽप्यत्र ।

रतिप्रिय पु० ६त० । कामदेवे । ६ब० । रमणप्रिये त्रि० ।

रतिमन्दिर न० ६त० । रतिगृहे स्त्रीणामसाधारणचिह्ने च ।

रतिरमण पु० रतिं रमयति रम-णिच्-ल्यु । कामदेवे ।

रतिलक्ष न० रतेर्लक्षं पदम् । मैथुने । [(पिड्डिङ्ग) शाके ।

रतिसत्वरा स्त्री० रतिं सत्वरयति सत्वरा+करोत्यर्थे णिच्-अण् ।

रत्न न० रमतेऽत्र रम-न तान्तादेशः । माणिक्यादिप्रस्तरे, स्वस्वजातिषु श्रेष्ठे, माणिक्ये, हीरके च ।

रत्नकन्दल पु० रत्नेषु कन्दल इव रक्तत्वात् । प्रवाले ।

रत्नकूट पु० रत्नमयकूटः शृङ्गमस्य । पर्व्वतभेदे ।

रत्नगर्भ पु० रत्नयुक्तं गर्भं मध्यं यस्य । समुद्रे, कुबेरे च । पृथिव्यां सत्पुत्रायां नार्याञ्च स्त्री० । [ध्येये रत्नमयेऽन्तरीपे ।

रत्नद्वीप पु० न० । रत्नमयो द्वीपः । तन्त्रोक्ते सुधासमुद्रमध्यस्थिततया

रत्नधेनु स्त्री० रत्नकल्पिता धेनुः । दानार्थं कल्पितायां रत्ननिर्मितायां धेन्वाम् । [धारे 'रत्नपारायणं नाम्ना लङ्के'ति भट्टिः ।

रत्नपारायण न० रत्नानां पारायणं साकल्येन स्थानम् । सर्वरत्ना-

रत्नमुख्य न० रत्नेषु मुख्यम् । हीरके । [युक्ते त्रि० ।

रत्नवती स्त्री० रत्नानि सन्त्यस्याः मतुप् मस्य वः । पृथिव्याम्, रत्न-

रत्नसानु पु० रत्नानि सानावस्य । सुमेरुपर्व्वते ।

रत्नसू स्त्री० रत्नानि सूते सू-क्विप् । पृथिव्याम् ।

रत्नाकर पु० ६त० । समुद्रे रत्नोत्पत्तिस्थाने, मणिखनौ च । [पर्व्वते ।

रत्नाचल पु० रत्ननिर्म्मितः अचलः । दानार्थं कल्पिते रत्ननिर्म्मिते

रत्नाभरण न० रत्नघटितमाभरणम् शाक० । (जड़ाओ) भूषणभेदे ।

रत्नावली स्त्री० ६त० । रत्नसमूहे, तद्घटितहारे, वत्सराजपत्नीभेदे
च रत्नावलीमधिकृत्य कृतः ग्रन्थोऽण् आख्यायिकायां तस्य लुक् ।
श्रीहर्षकृते चतुरङ्कात्मके नाटिकाभेदे ।

रत्नि पु० स्त्री० ऋ-क्तिच् । बद्धमुष्टिहस्तपरिमाणे । स्त्रीत्वे वा ङीप् ।

रथ पु० रम्यतेऽनेन अत्र वा रम-क्थन् । स्वनामख्याते यानभेदे, देहे
च 'आत्मानं रथिनं विद्धि शरीरं रथमेव चे'ति गीता । पादे,
वेतसवृक्षे, तिनिशवृक्षे च ।

रथकड्या स्त्री० रथानां समूहः रथ+कड्यच् । रथसमूहे ।

रथक(का)र पु० रथं करोति कृ+अच्-अण् वा । रथनिर्माणकारके
.(सूत्रधार) वर्णसङ्करभेदे ।

रथकुटुम्बिन् पु० रथस्य कुटुम्बीव पालकत्वात् । सारथौ ।

रथगर्भक पु० रथस्य गर्भमिव इवार्थे कन् । कर्णीरथे, स्कन्धवाह्ययाने
(पालकी) । [नम् । रथस्य शस्त्रवारणार्थे गुप्तस्थाने ।

रथगुप्ति स्त्री० रथस्य गुप्तिः शस्त्रवारणार्थं रक्षा उपचारात् तत्स्था-

रथचरण पु० रथस्य चरण इव गतिहेतुत्वात् । रथचक्रे, तन्नामनामके
चक्रवाकविहगे रथपादादयोऽप्यत्र ।

रथद्रु पु० रथनिर्माणाय द्रुः रथनामको वा द्रुः । तिनिशवृक्षे ।

रथन्तर त्रि० रथेन तरति तॄ-खच् मुम् च । रथनेतरि । 'अभित्वा
शूर' इत्यस्यामृचि गीते सामभेदे न० ।

रथयात्रा स्त्री० रथस्य यात्रा । आषाढशुक्लद्वितीयायां कर्त्तव्ये उत्सव-
भेदे । [शब्दः वाचकत्वेनास्त्यस्य अच् । चक्रवाके पु० ।

रथाङ्ग न० अङ्ग्यते गम्यतेऽनेन अगि-करणे घञ् ६त० । चक्रे रथाङ्ग-

रथाङ्गपाणि पु॰ रथाङ्गं चक्रं पाणौ यस्य । चक्रधरे विष्णौ ।
रथाभ्र पु॰ रथ इवाभ्रियतेऽसौ आ+भृ मूल॰ क । वेतसवृक्षे ।
रथाभ्रपुष्प पु॰ अभ्रमिव पुष्पमस्य रथनामकोऽभ्रपुष्पः कर्म॰ । वेतस-
वृक्षे । [युद्धकारके च ।
रथारोहिन् पु॰ रथमारोहति आ+रुह णिनि । रथिनि रथेन
रथिक पु॰ रथो युद्धसाधनाधारत्वेनास्त्यस्य ठन् । रथिनि । इर
रथिरः । इन । रथिनः । इनि । रथी एतेऽप्यत्र ।
रथोपस्थ न॰ रथस्य उपस्थ इव । रथमध्ये ।
रथ्य पु॰ रथं वहति यत् । रथवाहके घोटके । रथस्येदं यत् ।
रथसम्बन्धिनि त्रि॰ रथाय तद्गमनस्य योग्या सरणिः । प्रशस्तपथे,
अभ्यन्तरमार्गे, रथानां समूहः यत् । रथसमूहे च स्त्री॰ ।
रद उत्खाते भ्वा॰ प॰ सक॰ सेट् । रदति अरादीत् अरदीत् ।
रद पु॰ रदति उत्खनति रद अच् । दन्ते । भावे अप् । उत्खनने ।
रदच्छद पु॰ रदान् छादयति छद-णिच् घ ह्रस्वः । ओष्ठयोः रदना-
दिच्छदादयोऽप्यत्र ।
रदन पु॰ रद-ल्यु । दन्ते, भावे-ल्युट् । विदारणे ।
रध हिंसने पाके च दि॰ पर॰ सक॰ वेट् । रध्यति अरधत् रधिता-रद्धा
रन्ज रागे, (वर्णान्तराधाने) सक॰ आसक्तौ अक॰ भ्वा॰ उभ॰ अनिट् ।
रजति ते अराङ्क्षीत् अरङ्क्त । घटा॰ रञ्जयति मृगमारणे तु
रजयति ।
रन्ज रागे आसक्तौ दिवा॰ उभ॰ सक॰ अनिट् । रज्यति रज्यते
अराङ्क्षीत् अरङ्क्त । घटा॰ रञ्जयति । रजयति । [च ।
रन्तिदेव पु॰ रम संज्ञायां तिच् कर्म॰ । चन्द्रवंश्ये नृपभेदे कुक्कुरे
रन्धन न॰ रध पाके ल्युट् नुमागमः । 'पाके मुरहर ! रन्धनसमये'
इत्युद्भटः । [लग्नतोऽष्टमस्थाने च ।
रन्ध्र न॰ रध-क्विप् रु-मूल॰ कर्म॰ । छिद्रे, दूषणे, ज्योतिषोक्ते
रन्ध्रकण्टक पु॰ रन्ध्रे रन्ध्रे कण्टकः कण्टकोऽस्य । जातवर्बुरकवृक्षे ।
रन्ध्रवंश पु॰ रन्ध्रसङ्कुलो वंशः शाक॰ । (नलतावाश) वंशभेदे ।

रप व्यक्तवाचे भ्वा० प० सक० सेट् । रपति अरापीत् अरपीत् ।

रफ गतौ हिंसे च भ्वा० प० सक० सेट् । रफति । अरफीत्-अरा-
फीत् । इदित्त्ययम् । रम्फति अरम्फीत् ।

रब गतौ सक० प० शब्दे अक० आ० भ्वा० सेट् इदित् । रम्बति-ते
अरम्बीत् अरम्बिष्ट ।

रभ औत्सुक्ये भ्वा० आ० अक० अनिट् । रभते अरब्ध ।

रभ शब्दे भ्वा० आ० अक० सेट् इदित् । रम्भते अरम्भिष्ट ।

रभस पु० रभ-असच् । वेगे, हर्षे, औत्सुक्ये, पौर्वापर्याविचारे च ।

रम क्रीड़ायां भ्वा० आ० अक० अनिट् । रमते विरमति उपर-
मति अरंस्त उपारंसीत् क्त्वा वेट् । घञ रामः ।

रम पु० रम-अच् । कान्ते, अशोकवृक्षे, कामदेवे च ।

रमठ न० रम-अठन् । हिङ्गुनि । स्वार्थेऽण् । अत्रैव न० ।

रमठध्वनि पु० रमठ इति शब्देन ध्वनति ध्वन-इन् । हिङ्गुनि ।

रमण पु० रमयति-रम-णिच् ल्यु । कामदेवे, गर्द्दभे, वृषणे, महा-
दिव्ये (निम) पत्नी । 'रमण ! त्वामनुयामो'ति कुमारः । जम्बु-
द्वीपान्तर्गते रम्यकनाम्नि वर्षे च । रम-भावे ल्युट् । सुरते ।
करणे ल्युट् । पटोलमूले, कन् । जघने च न० । रम्यतेऽनया ल्युट्
ङीप् । नार्य्याम्, उत्तमनार्य्यां, बालाख्यवृक्षे च स्त्री० ।

रमणीय त्रि० रम्यतेऽत्र रम-आधारे-ल्युट् । सुन्दरे ।

रमल न० ज्योतिःशास्त्रभेदे ।

रमा स्त्री० रमयति रम-अच । लक्ष्म्याम् ।

रमापति पु० ६त० । नारायणे रमानायतत्कान्तादयोऽप्यत्र ।

रमाप्रिय न० ६त० । पद्मे । विष्णौ पु० ।

रम्भ पु० रभि-अच् । रेणौ, महिषासुरजनकेऽसुरभेदे च । कदल्याम्,
अप्सरोभेदे, वेश्यायां, गवां ध्वनौ, गौर्य्यां च स्त्री० ।

रम्भातृतीया स्त्री० मार्गशीर्षे शुक्लतृतीयायाम्, उपचारात्, तत्र
कर्त्तव्ये व्रतभेदे च ।

रम्य त्रि० रम्यतेऽत्र यत् । सुन्दरे, बलकरे च । चम्पके, बकवृक्षे च,

पु० । पटोलमूले न० । संज्ञायां कन् । जम्बुद्वीपस्य नवसु वर्षेषु मध्ये 'दक्षिणेन सुमेरोस्तु श्वेतस्य चोत्तरेण च वायव्यं रम्यकं नामे'त्युक्ते वर्षभेदे ।

**रम्यपुष्प** पु० रम्याणि पुष्पाण्यस्य । शाल्मलिवृक्षे ।

**रम्या** स्त्री० रम्यतेऽत्र यत् । स्थलपद्मिन्याम्, रात्रौ च ।

**रय** गतौ भ्वा० आ० सक० सेट् । रयते अरयिष्ट ।

**रय** पु० रय-अच् । वेगे, प्रवाहे च ।

**रल्लक** पु० रम-क्विप् मलोपे तुक् ला-क कर्म्म० । मृगभेदे ।

**रव** गतौ भ्वा० आ० सक० सेट् इदित् । रण्वते अरण्विष्ट ।

**रव** पु० रु-ध्वनौ अप् । शब्दे । [तीक्ष्णे च त्रि० ।

**रवण** पु० रु-युच् । कोकिले, उष्ट्रे च । कांस्ये न० । शब्दकारके,

**रवि** पु० रु-इन् । सूर्य्ये, अर्कवृक्षे च ।

**रविज** पु० रवेर्जायते जन-ड । शनौ, सावर्णिमनौ, वैवस्वते मनौ, सुग्रीवे, वानरे, यमे च यमुनायां स्त्री० रवितनयादयोऽप्यत्र ।

**रविनाथ** न० रविर्नाथः प्रकाशकत्वात् यस्य । पद्मे, बन्धूके च ।

**रविनेत्र** पु० रविर्नेत्रं यस्य । विष्णौ । रविलोचनादयोऽप्यत्र

**रविप्रिय** न० ६त० । रक्तकमले । करवीरे पु० ।

**रविरत्न** न० रवेः प्रियं रत्नम् । माणिक्ये, ताम्रे च ।

**रविलौह** न० रवेः प्रियं लौहं धातुः । ताम्रे ।

**रश** स्वने सौ० पर० अक० सेट् । रशति । अराशीत्-अरशीत् ।

**रशना** स्त्री० रश-ल्यु । काञ्चाम्, जिह्वायाञ्च । [च पद्मे न० ।

**रश्मि** पु० अश-मि धातोरुट् रश-मि वा । किरणे, अश्वादि दामनि

**रस** स्वने भ्वा० प० सक० सेट् । रसति । अरासीत्-अरसीत् ।

**रस** आस्वादे अ० चु० उ० सक० सेट् । रसयति-ते अररसत्-त ।

**रस** पु० रस्यते रस-अच् । आस्वाद्ये, रसनेन्द्रियग्राह्ये माधुर्य्यादिगुणभेदे, देहस्थे भुक्ताचादेः प्रथमपरिणामे, 'सम्यक् पक्वस्य भुक्तस्य सारोनिगदितोरस इत्युक्ते' धातुभेदे माधुर्य्यादिरसवति, गुड़ादौ, पुष्पस्य मधुनि, अलङ्कारोक्ते सञ्चारिव्यभिचारिसहकारिव्यञ्ज्ये

रत्यादिस्थायिभावके शृङ्गारादौ रसे, वीर्य्ये, माधुर्य्यादिगुणे, रागे, द्रवे, पारदे, जले च गन्धरसे पु० न० ।

**रसकपूर** न० रसेन कर्पूरमिव । (रसकर्पूर) गन्धद्रव्यभेदे ।

**रसकेशर** न० रसेन केशरमिव नागकेशरसुगन्धित्वात् । कर्पूरे ।

**रसगन्ध** पु०न० रसे गन्धोऽस्य । बोले गन्धरसे स्वार्थे कन् तत्रैव ।

**रसगर्भ** न० रसो गर्भे यस्य । पित्तलधातुद्रावे रसाञ्जने, हिङ्गुले च ।

**रसघ्न** पु० रसं पारदं हन्ति हन-ठक् । टङ्कणे (सोहागा)

**रसज** न० रसात् भुक्तान्नसारात् प्रथमधातोर्जायते जन-ड । रुधिरे । रसात् इक्षुप्रभृतेः द्रवात् जायते जन-ड । गुडे, मद्यकीटे च पु० । रसभवादयोऽप्यत्र । [साधने जिह्वास्थानस्थेन्द्रिये ।

**रसज्ञा** स्त्री० रसं जानाति अनया ज्ञा-ड । जिह्वायाम् रसज्ञान-

**रसज्येष्ठ** पु० रसेषु ज्येष्ठः श्रेष्ठः । मधुररसे शृङ्गाररसे च ।

**रसतेजस्** न० रसस्य भुक्तान्नसारस्य तेजः सारः । रुधिरे ।

**रसदालिका** स्त्री० रसार्थं दल्यते दल-कर्म्मणि घञ् गौ० ङीष् कन् । पुण्ड्रेक्षौ (पुंडि आख) ।

**रसधातु** पु० रसाख्यो द्रवरूपो, वा धातुः । पारदे ।

**रसधेनु** स्त्री० दानार्थं कल्पितायाम् इक्षुरसनिर्मितायां धेनौ ।

**रसन** न० रस-ल्युट् । स्वादे ध्वनौ च करणे ल्युट् जिह्वायां "पित्तेन दूने रसने सितापी"ति नैषधम् ।

**रसना** स्त्री० रस्यतेऽनया । रस-करणे ल्युट् अजा० टाप् । जिह्वायां, रास्नायां, काञ्च्यां, रज्जौ च ।

**रसनेत्रिका** स्त्री० रसो नेत्रमिव अस्यस्या ठन् । मनःशिलायाम् ।

**रसपाकज** पु० रसपाकेन जायते जन-ड । गुडे ।

**रसफल** पु० रसो जलं फले यस्याः । नारिकेलवृक्षे ।

**रसमाणिक्य** न० रसेन पारदेन माणिक्यमिव तत् पाकजत्वात् । स्वनामख्याते पदार्थे । [पारदे रसनाथादयोऽप्यत्र ।

**रसराज** पु० रसेषु रसोपरसेषु श्रेष्ठत्वात् रसः इन्द्र इव राजते वा

**रसवती** स्त्री० रस आस्वाद्यद्रव्यनलादि अस्त्यस्याम् मतुप् मस्य वः। पाकस्थाने। [णिच-ल्यु। टङ्कणे (सोहागा)।

**रसशोधन** न० रसं पारदं द्रवीभूतं द्रव्यं स्वर्णादि वा शोधयति शुध-

**रसस्थान** न० रसस्य पारदस्य स्थानम्। हिङ्गुले।

**रसा** स्त्री० पाकजः रसो माधुर्यादिरूपोऽस्त्यस्याः अच्। पृथिव्याम्।

**रसाग्रज** न० रसस्य पित्तलधातुद्रवस्याग्रात् जायते जन-ड। रसाञ्जने

**रसाञ्जन** न० रसजातं पित्तलधातुजमञ्जनम्। स्वनामख्याते 'रीत्यान्तु ध्मायमानायां तत्किट्टन्तु रसाञ्जनमि'त्युक्ते पदार्थे।

**रसाढ्य** पु० रसेन मधुररसेनाढ्यः। आम्रातके। रसयुते त्रि०।

**रसातल** न० रसायास्तलम्। पातालभेदे सप्तमे भूमेरधोभागे।

**रसाधिक** पु० रसाय द्रवाय स्वर्णादिद्रावणाय अधिकः आदीयमानत्वात्। टङ्कणे। रसेनाधिका। काकोडुम्बरिकायां स्त्री०।

**रसान्तर** न० अन्योरसः मयूर० नि०। प्रकृतरसादन्यस्मिन् रसे।

**रसाभास** पु० रस इव आभासते आ+भास-अच्। अलङ्कारोक्ते 'अनौचित्यप्रवृत्तत्वे आभासो रसभावयोरित्युक्ते पश्वादिपरनायकगतशृङ्गारादौ रसे। [पु०।

**रसाम्ल** न० रसेनाम्लम्। वृक्षाम्ले, चुक्रे च (चुकपालङ्क) अम्लवेतसे

**रसायन** न० रसस्यायनमिव। तक्रे काञ्चाम्, विषभेदे वैद्यक प्रसिद्धे औषधभेदे च गरुडे, विडङ्गे च पु०।

**रसायनफला** स्त्री० रसायनमौषधविशेष इव फलं व्याधि घातकं यस्याः। हरितक्याम्।

**रसायनश्रेष्ठ** पु० रसायनेषु औषधभेदेषु श्रेष्ठः। पारदे।

**रसायनी** स्त्री० रसायनं रसस्थानमस्त्यस्या अच् गौ० ङीष्। गुडुच्याम्, काकमाच्यां, महाकरञ्जे, गोरक्षदुग्धायाञ्च।

**रसाल** न० रसमालाति आ+ला-क। सिह्लके, गन्धरसे, शिखरिण्याम्, (मेयभेदे) रसनायां, दूर्व्वायां, विदार्य्यां, द्राक्षायाञ्च स्त्री०। रसां भूमिमालयति आ+ली-ड। आम्रे, रसालः सालः समदृश्यतामुने'ति नैषधम् इक्षौ, पनसे, गोधूमे, पुण्ड्रकेक्षौ च पु०।

**रसालिहा** स्त्री० रसां भूमिं लेढि स्पृशति लिह-क। (चाकलिया) क्षुपभेदे। [इक्षुभेदे।

**रसाली** स्त्री० रसमालाति आ+ला-क गौरा० ङीप्। (पुंडिआख)

**रसाश्वसा** स्त्री० रसां भूमिमाश्वसिति दलैः आ-श्वस-णिच्-अच्। पलाशीलतायाम्।

**रसास्वादिन्** पु० रसं पुष्परसमास्वदते आ+स्वद-णिनि। भ्रमरे, मधुरशृङ्गारादिरसास्वादके त्रि० स्त्रियां ङीप्।

**रसिक** पु० रसं वेत्ति अनुभवति ठन्। सारसपक्षिणि, अश्वे, गजे च। रसज्ञे, रसोऽस्त्यस्य ठन्। रसवति च त्रि०।

**रसित** न० चु० रस आस्वादे क्त। मेघादिशब्दे विहगादिशब्दे कर्त्तरि क्त। शब्दयति, कर्म्मणि-क्त। आस्वादिते च त्रि०।

**रसुन** पु० रस-उनन्। लशुने। श्रोनन् रसोनः। तत्रैव। स्वार्थे कन्। तत्रार्थे।

**रसेन्द्र** पु० रसः द्रवीभूतः इन्द्र इव श्रेष्ठत्वात्। पारदे।

**रसोत्तम** पु० रस उत्तमो यस्य। मुद्गे।

**रसोद्भव** न० रसः पारदम् उद्भवो यस्मात् उद्+भू-अच्। हिङ्गुले।

**रसोपल** न० रसः पारदमिव उपलीयते उप+ली-ड शुभ्रत्वात् मौक्तिके

**रस्य** न० रसाद्भुक्तान्नपरिणामादागतः यत्। रुधिरे। रस्यते आस्वाद्यते रस यत्। आस्वाद्ये त्रि०। रस्याः, 'स्निग्धाः स्थिरा हृद्या' इति गीता। पाठायां, रास्नायाञ्च स्त्री०।

**रंह** गतौ अ० चु० उभ० सक० सेट्। रंहयति-ते अररंहत्-त।

**रंहस्** न० रंह-असुन्। वेगे।

**रह** गतौ भ्वा० प० सक० सेट् इदित्। रंहति अरंहीत् 'तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः' इति शारीरकसूत्रम्।

**रह** त्यागे भ्वा० प० सक० सेट्। रहति अरहीत्।

**रह** त्यागे अद० चु० उभ० सक० सेट्। रहयति-ते अररहत्-त।

**रहस्** न० रह-असुन्। निर्जने, गोप्ये, याथार्थ्ये, रमणे च। निर्जने अव्य०।

**रहस्य** त्रि॰ रहसि भवः यत्। गोप्ये, रहस्यमस्याः स महदिति नैषधम्। निर्ज्जनभवे च। पाठायां, रास्नायाञ्च स्त्री॰ टाप्।

**रहित** त्रि॰ रह-त्यागे कर्म्मणि क्त। वर्ज्जिते।

**रा** दाने ग्रहणे च अदा॰ पर॰ सक॰ अनिट्। राति अरासीत्।

**रा** स्त्री॰ रा-सम्प॰ क्विप्। काञ्चने, रमसे, दाने च।

**राका** स्त्री॰ रा-क। प्रतिपद्युक्तायां पूर्णमास्यां सम्पूर्णेन्दु तिथौ, नदीभेदे नवजातरजस्कायां नार्य्याञ्च।

**राक्षस** पु॰ रक्ष एव स्वार्थे अण् 'क्वचित् स्वार्थिका अपि प्रत्ययाः प्रकृततो लिङ्गवचनान्यतिवर्त्तन्ते' इति भाष्योक्तेः पुंस्त्वम्। स्वनामख्याते निकषात्मजे जातिभेदे। जातौ ङीप्। राक्षसजातिस्त्रियाम् स्त्री॰। रक्षस इदम् अण्। राक्षससम्बन्धिनि त्रि॰ स्त्रियां ङीप्। 'राक्षसी रात्रिरन्यत्रे'ति स्मृतिः। दंष्ट्रायां, चण्डिकायां चोरनामगन्धद्रव्ये च स्त्री॰ ङीप्।

**राक्षसेन्द्र** पु॰ राक्षस इन्द्र इव श्रेष्ठत्वात्। विश्रवसः ज्येष्ठपुत्रे निकषात्मजे रावणे। [लाक्षायाम्।

**राक्षा** स्त्री॰ लक्ष्यतेऽनया रक्ष-कर्म्मणि घञ् पृ॰ वृद्धिः। लस्य रत्वं।

**राख** शोषने भूषणे निवारणे च सक॰ सामर्थ्ये अक॰ भ्वा॰ पर॰ सेट्। राखति अराखीत्। चङि न ह्रस्वः।

**राग** पु॰ रन्ज-भावे घञ् नि॰ नलोपकुत्वे। रञ्जने, वर्णने, प्रीतौ, अनुरागे, नृपे, चन्द्रे च। करणे घञ्। करणे घञ्। लोहितवर्णे तद्विशिष्टलाक्षादौ च 'तेन रक्तं रागादि'ति पाणिनिसूत्रम् आधारे घञ्। वसन्तादिनामभिः प्रसिद्धे स्वरविशेषे।

**रागचूर्ण** पु॰ रागस्य रतेश्चूर्ण इव। कामे। रागाय चूर्ण्यतेऽसौ चूर्ण-घञ्। खदिरे, लाक्षायां च। रागयुक्तचूर्णे पु॰।

**रागदालि** पु॰ दल्यतेऽसौ दल-णिच् इन् पृ॰ वृद्धिः रागेण रक्ततया युक्तो दालिः। मसूरे। [ङीप्।

**रागपुष्प** पु॰ रागयुक्तं रक्तवर्णं पुष्पमस्य। बन्धूके। जवायां स्त्री॰

**रागप्रसव** पु॰ रागयुक्तो रक्तवर्णः प्रसवोऽस्य। बन्धूके, रक्ताम्लाने च।

**रागयुज्** पु॰ रागेण रक्तवर्णेन युज्यते युज-कर्म्मणि क्विप्। माणिक्ये। रक्तवर्णयुक्ते त्रि॰।

**रागसूत्र** न॰ रागयुक्तं सूत्रम्। पट्टसूत्रे।

**रागाङ्गी** स्त्री॰ रागयुक्तमङ्गं यस्याः ङीप्। मञ्जिष्ठायाम्। श॰। रागाख्याप्यत्र स्त्री॰।

**रागिणी** स्त्री॰ रागोऽस्त्यस्या इनि। गीताङ्गे स्वरभेदे। रागवति, अनुरक्ते, कामुके, रतियुक्ते च त्रि॰।

**राघ** शक्तौ भ्वा॰ आ॰ सक॰ सेट्। राघते अराघिष्ट। चङि न ह्रस्वः

**राघव** पु॰ रघोर्गोत्रापत्यम् अण्। रघोर्वंश्ये, तत्प्रधाने श्रीरामे च।

**राङ्कव** न॰ रङ्कोरयं, विकारो वा तल्लोमजातत्वात् अण्। मृगविशेषलोमजाते वस्त्रभेदे।

**राज** दीप्तौ भ्वा॰ उभ॰ अक॰ सेट् फणादि॰। राजति ते अराजीत् अराजिष्ट रेजतुः—रराजतुः। चङि न ह्रस्वः।

**राजक** न॰ राज्ञां समूहः कन्। नृपसमुदाये। राजैव कन्। नृपे पु॰। राज—ण्वुल्। दीप्तिमति त्रि॰।

**राजकल्प** पु॰ ईषदसमाप्तो राजा राजन्+कल्पप्। राजतुल्ये।

**राजकदम्ब** पु॰ कदम्बानां राजा राजद॰ पर॰। कदम्बभेदे।

**राजकर्कटी** स्त्री॰ राजते राज—अच् कर्म्म॰। चीनाकर्कट्याम्।

**राजकशेरु** पु॰ कशेरूणाम् राजा राजद॰। भद्रमुस्तायाम्।

**राजकीय** त्रि॰ राज्ञ इदम् छ कुक् च। राजसम्बन्धिकार्य्यादौ।

**राजकुमार** पु॰ राज्ञः कुमारः। अप्राप्तवयस्के युवराजकार्य्यानारूढे राजपुत्रे।

**राजकुष्माण्ड** पु॰ राज्ञः कुष्माण्ड इव प्रियत्वात्। वार्त्ताक्याम्।

**राजकोषातकी** स्त्री॰ राजप्रिया कोषातकी। (घियाझिङ्गा) लताभेदे। [राजसर्षपे (राइसर्षा)।

**राजक्षवक** पु॰ क्षवत्यनेन क्षु-अप् राजते राज—अच् कर्म्म॰ कन्।

**राजखर्ज्जूरी** स्त्री॰ राजप्रिया खर्ज्जूरी। खर्ज्जूरीभेदे।

**राजगिरि** पु॰ राजाश्रमो गिरिः। मगधस्थे पर्व्वतभेदे।

**राजघ** त्रि॰ राजानं हन्ति हन–क नि॰। राजहन्तरि, तीक्ष्णे च
'रराज नीरजनया स राजघ'इति नैषधम्।

**राजजम्बु** स्त्री॰ राज्ञः जम्बूरिव। पिण्डखर्ज्जूरे राजते अच्
कर्म॰। महाजम्ब्वाम्।

**राजज(य)क्ष्मन्** पु॰ राज्ञः चन्द्रस्य क्षयकारको ज(य)क्ष्मा। रोगभेदे
'राजज(य)क्ष्मेव रोगाणामि'ति माघः।

**राजतरु** पु॰ तरूणां राजा राजद॰ नि॰। कर्णिकारवृक्षे।

**राजताल** पु॰ राज्ञस्ताल इव प्रियः 'गुवाकवृक्षे। स्त्रीत्वमपि ङीप्।
'राजतालीवनध्वनि'रिति रघुः। [दन्तद्वये।

**राजदन्त** पु॰ दन्तानां राजा पर॰ नि॰। ऊर्द्ध्वपङ्क्तिस्थे मध्यवर्त्ति-

**राजदेशीय** पु॰ ईषदसमाप्तो राजा राजन्+देशीयर्। राजतुल्ये राज-
कल्पे। [राजधुस्तूरकोऽप्यत्र पु॰।

**राजधुस्तूरक** पु॰ धुस्तूराणां राजा राज॰ पर॰ कन्। वृहद्धुस्तूरे

**राजधर्म्म** पु॰ राज्ञो धर्म्मः। राज्ञामवश्यकर्त्तव्ये प्रजापालनादौ
कर्म्मणि [स्थाने महानगर्य्याम्।

**राजधानी** स्त्री॰ राजा धीयतेऽस्यां धा–आधारे ल्युट् ङीप्। राजा-

**राजधान्य** न॰ धान्येषु राजा पर॰। (श्यामा) श्यामाकधान्ये।

**राजन्** पु॰ राज–कनिन्। नृपे, चन्द्रे, शुचौ, क्षत्रिये, यक्षे, इन्द्रे,
च। पूर्वपदस्थः उत्तरपदस्थश्च समभिव्याहृतपदार्थश्रेष्ठ वाचकः।
यथा राजमाषः मुनिराज इत्यादि।

**राजनीति** स्त्री॰ राज्ञां नीतिः। राजनये सामाद्युपाये, तत्प्रति-
पादके शास्त्रे च। [अग्नौ, क्षीरिकावृक्षे च।

**राजन्य** पु॰ राज्ञोऽयम् यत्, राज–अन्य वा। क्षत्रिये राजन्ये,

**राजन्यक** न॰ राजन्यानां क्षत्रियाणां समूहः कन्। क्षत्रियसमूहे।

**राजवत्** त्रि॰ प्रशस्तो राजाऽस्त्यस्य प्राशस्त्ये मतुप् मस्य वः। सुन्दर-
राजवति देशे। [ङीप्।

**राजपटोल** पु॰ राजप्रियः पटोलः। पटोले। मधुरपटोल्यां स्त्री॰।

**राजपट्ट** पु॰ राज्ञः पट्ट इव। मणिभेदे।

राजपथ पु० पथां राजा राजगमनयोग्यो वा पन्थाः अच् । 'धनुर्विंशतिविस्तारे श्रीमान् राजपथः स्मृतः । रथाजिरथनागानामसंबाधसुसञ्चरं' इत्युक्ते राजमार्गे । [पलाण्डौ ।

राजपलाण्डु पु० पलाण्डूनां राजा श्रेष्ठत्वात् पर० । रक्तवर्ण-

राजपीलु पु० राज प्रियः पीलुः । महापीलुवृक्षे ।

राजपुत्र पु० रामचन्द्रस्य, नृपस्य वा पुत्रः । बुधग्रहे, नृपकुमारे वर्णसङ्करभेदे (रजपुत) वैश्यादम्बष्ठकन्यायां राजपुत्रस्य सम्भव' इति पराशरः ।

राजपुत्री स्त्री० रामचन्द्रस्य पुत्रीव । कटुतुम्ब्याम् रेणुकायां नृपरीतौ, मालत्याञ्च । इत० । नृपकन्यायाम् ।

राजपुष्प पु० राजा चन्द्र इव शुभ्रत्वात् पुष्पमस्य । नागकेशरवृक्षे । कर्णिकारवृक्षे । स्त्री० ङीप् ।

राजफणिज्झक पु० राज—अच् कर्म० । नागरङ्गवृक्षे ।

राजफल न० राजप्रियं फलम् । पटोले । राजप्रियं फलमस्याः । जम्ब्वाम् स्त्री० टाप् । [राजद० प० । उत्तमकोलौ पु० ।

राजबदर न० राज्ञो बदरमिव प्रियत्वात् । रक्तामलके बदराणां राजा

राजभद्रक पु० राज्ञो भद्रं यस्मात् कप् । कृष्णे, (कड) निम्बे, पारिभद्रवृक्षे च । [राजत्वे ।

राजभूय न० राज्ञो भावः राजन् + भू—क्यप् । राज्ञोऽसाधारण धर्मे

राजभोग्य न० राज्ञा भोक्तुं योग्यम् भुज—ण्यत् कुत्वम् । जातीकोषे, प्रियालवृक्षे पु० । नृपभोग्यवस्तुमात्रे त्रि० ।

राजमार्ग राजयोग्यः मार्गः । राजपथे । [भेदे ।

राजमाष पु० माषेषु कलायेषु राजा श्रेष्ठत्वात् । (बरवटी) व्रीहि-

राजमुद्ग पु० मुद्गेषु राजा प० नि० । (मुगानि) मुद्गभेदे ।

राजरङ्ग न० राजयोग्यं रङ्गम् । रजते ।

राजराज पु० राज्ञामपि राजा प्रभूतधनत्वात् टच् समा० । कुबेरे, सार्वभौमनृपे, चन्द्रे च । [यताक्मनि नृपे च ।

राजर्षि पु० राजा ऋषिरिव श्रेष्ठत्वात् संयतत्वाच्च । राजश्रेष्ठे,

राजवंश्य त्रि० राजवंशे भवः यत् । राजवंशोद्भवे । जातिभेदे पु० ।
राजवर्त्मन् न० राजयोग्यं वर्त्म । प्रागुक्तलक्षणे राजपथे । ६त०
राज्ञः कर्त्तव्य कर्मणि च । [लताभेदे ।
राजबला स्त्री० राज–अच् राजं बलं यस्याः ५ब० । (गन्धभादाल)
राजवल्लभ पु० ६त० । पियाले, राजबदरे, राजाम्रे, द्रव्यगुणप्रति-
पादके तन्नामविद्वत्कृते ग्रन्थभेदे च । राज्ञः प्रिये त्रि० ।
राजपत्नी स्त्री० राजते राज–अच् राजा पत्नी कर्म्म० पृ० । (उच्छा)
लताभेदे । [वति देशे ।
राजवत् त्रि० राजा राजमात्रं विद्यतेऽस्य मतुप् मस्य वः । राजमात्र
राजबीजिन् त्रि० राजा बीजी कारणं यस्य । राजवंश्ये ।
राजवृक्ष पु० वृक्षाणां राजा पर० नि० । आरग्वधे (सोन्दाल) राज-
प्रियो वृक्षस्तत्फलबीजजातलड्डुकाया राजप्रियत्वात् । प्रियाले ।
राजशण पु० राज–अच् राजः शणः कर्म० । पट्टे (पाट) ।
राजशाक पु० शाकानां राजा पर० नि० । वास्तूकशाके ।
राजशृङ्ग न० राज्ञां शृङ्गमिव ऊर्द्ध्वस्थितत्वात् । राजचिह्नच्छत्रे ।
राजस त्रि० रजसा निर्म्मितः अण् । रजसोगुणात् जाते कर्मेन्द्रियादौ
'येनास्मिन् कर्मणा लोके ख्यातिमाप्नोति पुष्कलाम् । न च शोच-
त्यसम्पत्तौ तद्विज्ञेयन्तु राजस'मित्युक्ते ख्यात्यै क्रियमाणे कर्मणि
च । रजःप्रधानमस्य अण् । रजःप्रधाने, सर्वेषां वस्तूनां त्रिगुणा-
त्मकत्वेऽपि 'भूयस्त्वात्तद् व्यपदेशः, इत्युक्तेः क्वचित् तत्प्रधानत्वेन
व्यपदेशः ।
राजसभा न० स्त्री० राज्ञां नृपाणां सभा । नृपसमाजे ।
राजसर्षप पु० सर्षपाणां राजा श्रेष्ठत्वात् पर० । (राइसर्षा) सर्षपभेदे
राजसूय पु० राज्ञा सूयते सू-क्यप् । राजमात्रकर्त्तव्ये यज्ञभेदे ।
राजस्व न० राज्ञे देयं स्वं कररूपम् धनम् । राजदेये करे ६त० ।
राजधने ।
राजस्वर्ण पु० स्वर्णानां धुस्तूराणां राजा पर० । राजधुस्तूरे ।
राजहंस पु० हंसानां राजा श्रेष्ठत्वात् पर० । रक्तवर्णचञ्चुचरण-

शुक्ले श्वेतवर्णे हंसभेदे, कलहंसे च। राजा हंस इव सार-
ग्राहकत्वात् नृपश्रेष्ठे।

राजहर्षण न० राज्ञः नृपान् हर्षयति हृष-णिच्-ल्यु। तगरपुष्पे।

राजातन पु० राजार्हमातनोति फलबीजम् आ+तन-अच्। चीर-
श्रीतिख्यातबीजहेतुफलवति पियाले।

राजादन न० राज्ञा अद्यते तत्फलबीजजातखड्डुका अद-कर्मणि
ल्युट्। पियालवृक्षे यस्य फलबीजं (चिरञ्जि) तेन हि खड्डुका
कृत्वा राज्ञा भुज्यते। क्षीरिकायां (क्षीरद) किंशुके च।
क्षीरिण्यां स्त्री० ङीप्।

राजाम्र पु० आम्राणां राजा श्रेष्ठत्वात् पर० नि०। आम्रभेदे।

राजाम्ल पु० अम्लानां राजा श्रेष्ठत्वात् पर० नि०। अम्लवेतसे।

राजार्क पु० अर्काणां राजा श्रेष्ठत्वात् पर० नि०। श्वेतार्कवृक्षे।
(सादा आकन्द)। [नि०। जम्ब्वां स्त्री०।

राजार्ह न० राजानमर्हति अर्ह-अण्। अगुरुचन्दने राजयोग्ये

राजालाबू स्त्री० राजते राजा अलाबूः कर्म०। मिष्टालाबाम्।

राजावर्त्त पु० राजानमावर्त्तयति अनुकूलयति आ-वृत-णिच् अण्।
उपरत्नभेदे।

राजि(जी) स्त्री० राज-इन् वा ङीप्। श्रेण्याम्, पङ्क्तौ, रेखा-
यां च। स्वार्थे कन्। रेखायाम्। राजते राज-ण्वुल्। राजसर्षपे
स्त्री०।

राजिकाफल पु० राजिकाया इव फलमस्य। श्वेतसर्षपे।

राजि(जी)फला स्त्री० राजिभूतानि श्रेणिभूतानि फलानि यस्याः।
चीनाकर्कट्याम्।

राजिल पु० राज-इलच्। तुण्डुभसर्पे (ढोंड़ासाप)।

राजीव न० राजी दलराजी अस्त्यस्य व। पद्मे 'राजीवराजीवशतो-
लेति माघः। हरिणभेदे, मत्स्यभेदे, राजीवपिंडतश्चाबेति
मनुः। गजे, सारसपक्षिणि च पु०।

**राजेन्द्र** पु॰ राजा इन्द्रइव श्रेष्ठत्वात् । चतुर्योजनपर्य्यन्तमधिकारी नृपो भवेत् । यो राजा तच्छतगुणः स एव मण्डलेश्वरः । तस्मात् दशगुणो राजा राजेन्द्र इत्यधिकारयति भूपतिभेदे ।

**राज्ञी** स्त्री॰ राज्ञः पत्नी ङीप् स्वयं वा राजते राज—कनिन् ङीप् वा । (राणी) राजपत्न्याम् स्वयं राजकर्मकर्त्र्याञ्च ।

**राज्य** न॰ राज्ञो भावः कर्म वा राजन्+यत् । राजकर्म्मणि, राजभावे च । [नादौ ।

**राज्यधुरा** स्त्री॰ ६त॰ अच् समा॰ । राज्यभारे तत्कर्त्तव्ये प्रजापाल-

**राज्याङ्ग** न॰ ६त॰ । स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलप्रकृतिरूपेषु अष्टसु राज्यस्योपायेषु ।

**राटि** पु॰ रट—इञ् । (लड़ाइ) विग्रहे, युद्धे स्त्री॰ वा ङीप् । पृ॰ टस्य डत्वम् । राड़िरप्यत्रार्थे ।

**राढ़** पु॰ रढ़-घञ् पृ॰ ढत्वम् । देशभेदे (राढ़) स्वार्थे कन् तत्रैव

**राढ़ा** स्त्री॰ रढ़-घञ् ढत्वम् । पुरीभेदे गौड़ं राष्ट्रमनुत्तमं निरुपमा तत्रापि राढा पुरीति प्रबोधचन्द्रोदयः ।

**राढ़ीय** त्रि॰ राढो निवासोऽस्य वृद्धाच्छ इति छ । राढदेशोद्भवे ।

**रात्रि(त्री)** स्त्री॰ रा-त्रिप् वा ङीप् । रजन्यां स्वस्वदेशस्य सूर्य्यमण्डलस्य अदर्शनयोग्ये काले, हरिद्रायाञ्च ।

**रात्रिकर** पु॰ रात्रिं करोति कृ-अच्, रात्रौ करः किरणोऽस्य वा । चन्द्रे, कर्पूरे च ।

**रात्रि(त्रं)चर** पु॰ रात्रौ चरति चर-अच् वा लुक् । राक्षसे, तज्जातिस्त्रियां स्त्री॰ ङीप् ।

**रात्रिपुष्प** न॰ रात्रौ पुष्पाति पुष्प-अच् ७त॰ । उत्पले ।

**रात्रिमणि** पु॰ रात्रौ मणिरिव दीप्तिमत्त्वात् । चन्द्रे ।

**रात्रिवासस्** न॰ रात्रेर्वास इवाच्छादकम् । अन्धकारे । रात्रौ परिधेयं वासः शाक॰ । रात्रौ परिधेये वस्त्रे ।

**रात्रिविगम** पु॰ ६त॰ । रजन्यवसाने तदुपलक्षिते प्रभातकाले च ।

**रात्रिहास** पु॰ रात्रेर्हास इव शुभ्रत्वात् । श्वेतोत्पले ।

**रात्रान्ध** त्रि० रात्रावन्धः दृष्टिक्षययुक्तः। निशादृष्टिशून्ये काकादौ।
रात्रौ रोगकृतदृष्टिशून्ये (रातकाणा) च।

**राद्ध** त्रि० राध-कर्त्तरि कर्म्मणि वा क्त। सिद्धे, पक्वे च।

**राद्धान्त** पु० राद्धः सिद्धः अन्तो निर्णयो यस्मात् ५ब०। सिद्धान्ते
संशय्य वादिदर्शितपक्षनिराकरणपूर्व्वकयथार्थपक्षप्रतिपादके वाक्ये।

**राध** सिद्धौ अक० निष्पादने, पाके च सक० स्वादि० दिवा० च पर०
अनिट्। राध्नोति राध्यति अरात्सीत् अराद्ध।

**राध** पु० राधा विशाखा तद्युक्ता पौर्णमासी अण् ङीप् राधी सा
यत्र मासे पुनरण्। चान्द्रे वैशाखमासि। तत्पूर्णिमायां स्त्री०
ङीप्। [पूजने स्त्री० टाप्।

**राधन** न० राध-ल्युट्। साधने, प्राप्तौ, तोषे च। राध-णिच्-युच्।

**राधा** स्त्री० राध-अच्। विशाखानक्षत्रे रिरंसया रमणीरूपत्वेनावि-
र्भूते गोलोकस्थे परमेश्वराद्धाङ्गस्वरूपे शक्तिभेदे, तत्रैव श्रीदा-
मशापात् वृन्दावने जातायां वृषभानुसुतायां प्रधानगोपिकायाम्,
कर्णस्य पालयित्र्यां मातरि च।

**राधाकान्त** पु० राधायाः कान्तः। श्रीकृष्णे राधावल्लभादयोऽप्यत्र।

**राधातनय** पु० राधायास्तनयः। कर्णे स हि कन्यावस्थायां सूर्य्यात्
कुन्तीगर्भजातस्तया च त्यक्तः राधया सूतपत्न्या पालित इति
भारतम्। [ढक्। कर्णे।

**राधेय** पु० राधाया अपत्यम् पुत्त्रत्वेन परिग्रहणेन तत्पालितत्वात्

**राम** पु० रम-कर्त्तरि घञ् ण वा। परशुरामे दशरथज्येष्ठपुत्रे श्रीरामे,
बलरामे च। मनोहरे, शुभे च त्रि० वास्तूके, कुष्ठे (कुड़)
तमालपत्रे न०। [ख्याते तृणभेदे च।

**रामकर्पूरक** पु० रामं मनोहरं कर्पूरमिव कन्। मौक्तिके, स्वनाम-

**रामगिरि** पु० रामाश्रितः गिरिः। चित्रकूटपर्व्वते स हि रामेण
वनवासगमनकाले प्रथममाश्रितः।

**रामचन्द्र** पु० रामश्चन्द्र इवाह्लादकत्वात्। दशरथज्येष्ठपुत्रे श्रीरामे।

**रामच्छर्दनक** पु० राममभिरामं छर्दयति छृद-णिच्-ण्वुल्। मदनवृक्षे (मयनागाछ)।

**रामजननी** स्त्री० ६त०। वसुदेवपत्न्यां रोहिण्यां, जमदग्निपत्न्यां रेणुकायां, दशरथपत्न्यां कौशल्यायाञ्च। [च (तेद)।

**रामण** न० रमयति रम-णिच् ल्यु-पृ० वृद्धिः। गिरिनिम्बे, तिन्दुके

**रामणीयक** न० रमणीयस्य भावः रमणीयमेव वा रमणीय+वुञ्। रमणीयत्वे 'मणिहारावलिरामणीयकमिति नैषधम् रमणीये च।

**रामतरुणी** स्त्री० रामा अभिरामा तरुणीव। (सेओती)पुष्पे ६त०। सीतायां, रेवत्याञ्च। [लङ्कायां सीताया आजहार।

**रामदूत** पु० रामस्य दूतः वार्त्ताहरः। हनूमति, स हि रामवार्त्तां

**रामदूती** स्त्री० रामा अभिरामा दूतीव गन्धद्वारा प्रचारात्। तुलसीभेदे। (रामतुलसी)।

**रामनवमी** स्त्री० रामस्य जन्माधारो नवमी। चैत्रशुक्लनवम्याम्। चैत्रेमासि नवम्यान्तु जातो रामः स्वयं हरि'रित्यगस्त्यसंहिता।

**रामपूग** पु० रामः अभिरामः पूगः। गुवाकभेदे।

**रामभद्र** पु० राम एव भद्रः मङ्गलदायकत्वात्। श्रीरामे 'रामेति रामचन्द्रेति रामभद्रेति वा स्मरन्निति' पुराणम्।

**रामलवण** न० कर्म०। शाकम्भरिलवणे।

**रामवल्लभ** न० रामस्य वल्लभं प्रियम्। भूर्ज्जपत्रे तद्धि रामेण वनवासाश्रमे प्रियतया धृतम्। [मनोहरः।

**रामशर** पु० कर्म०। शरदण्डभेदे स हि काण्डद्वारा वाणहेतुत्वात्

**रामसख** पु० ६त० टच्। सुग्रीवे वानरराजे।

**रामा** स्त्री० रम-णिच् कर्त्तरि घञ्। गीतादिकलाभिज्ञायां नार्य्यां नारीमात्रे, नद्याम् हिङ्गुनि, हिङ्गुले, श्वेतकण्टकार्य्यां, स्वल्पकन्यायां, अशोके, गोरोचनायां, वलायां, गैरिके च।

**रामायण** न० रामस्यायनं चरितमधिकृत्य कृतो ग्रन्थोऽण्। रामचरितप्रतिपादके वाल्मीकिकृते महाकाव्यभेदे। [रक्ताम्लाने।

**रामालिङ्गनकाम** पु० रामाणाम् स्त्रीणामालिङ्गनस्य कामोऽत्र।

**राभ्भ** पु० रम्भोवेणुस्तस्य विकारोऽण् । अनभेदे-भाण्डे-वंशभवे दण्डभेदे
**राल** पु० रा-अलच् । शालवृक्षनिर्य्यासे (धुना) ।
**रालकार्य्य** पु० रालः कार्य्यो यस्य । शालवृक्षे ।
**राव** पु० रु-घञ् । शब्दे । [वा, लङ्काधिपतौ राक्षसे ।
**रावण** पु० रवणस्यापत्यम् विश्रवा० अण् रावयति शत्रून् णिच्-ल्यु
**रास** शब्दे भ्वा० आ० अक० सेट् । रासते अरासिष्ट चङि न ह्रस्वः
**रावणगङ्गा** स्त्री० रावणनिर्म्मिता गङ्गा नदी । सिंहलदेशस्थे नदी-भेदे ।
**रावणारि** पु० ६त० । श्रीरामे रावणान्तकादयोऽप्यत्र ।
**रावणि** पु० रावणस्यापत्यम् अत इञ् । मेघनादाख्ये रावणज्येष्ठपुत्रे ।
**राश** शब्दे भ्वा० आ० अक० सेट् । राशते अराशिष्ट चङि न ह्रस्वः ।
**राशि** पु० अश्नुते व्याप्नोति अश्-इन् धातोरुडागमश्च । धान्यादीनां पुञ्जे, ज्योतिश्चक्रस्य द्वादशांशे मेषादौ, इष्टे राशिप्रसिद्धये' इति लीला.तोप्रसिद्धे व्यक्ताव्यक्तगणभेदे ।
**राशिचक्र** न० राशिघटितं चक्रं इत्यम् । मेषादिद्वादशराशि युक्ते गोलाकारे वायुवशेन पूर्व्वतः पश्चात् अनिशं भ्रमणस्वभावे ज्योति-र्मये 'सप्तविंशतिभिर्ज्योतिश्चक्रं स्तिमितवायुग'मित्युक्ते ज्योतिश्चक्रे
**राशिभोग** पु० राशीनां स्वस्वगत्या ग्रहैर्भोगः भुज-घञ् कुत्वम् । रव्यादीनां स्वस्वगत्यनुसारेण राशिषु गतिभेदे ।
**राशीकृत** पु० अराशिः राशिः कृतः राशि+अभूततद्भावे च्वि, तदर्थे समासो वा (ढेरी) पुञ्जीकृते एकत्रस्थीकृते ।
**राष्ट्र** न० राज-ष्ट्रन् । जनपदे 'गौडं राष्ट्रमनुत्तममिति' प्रबोधचन्द्रो-दयः । उपद्रवे च । [याम् ।
**राष्ट्रिका** स्त्री० राज-ष्ट्रन् षित्वात् ङीष् स्वार्थे कन् । कण्टकारिका-
**राष्ट्रिय** पु० राष्ट्रे भवः घ । नाट्योक्तौ राजश्याले । कृतलार्थे । उभा-वपि राष्ट्रभवे त्रि० ।
**रास** पु० रस-घञ् रास-घञ् वा । शब्दे, ध्वनौ, भवले स्त्रक्कुलावस्थयो-र्द्वयोर्द्वयोर्मध्यस्थित्या क्रीडाभेदे, कोलाहले च ।

रासभ पु० रास-अभच्। गर्द्दभे।

रासभवन्दिनी स्त्री० रासभस्य वन्दिनीव। मल्लिकायाम्।

रासमण्डल न० रासार्थं शृङ्खलाबन्धवत् द्वयोर्द्वयोर्मध्यस्थितया क्रीड़ा-भेदेन मण्डलं मण्डलाकारेण भ्रमणं यत्र। रासक्रीड़ाधारस्थाने, श्रीकृष्णस्य तदुत्सवाङ्गे मण्डपभेदे च।

रासेश्वरी स्त्री० ६त०। राधिकायाम्।

रास्ना स्त्री० रस-नण्। स्वनामख्यातायां लतायाम् (काटा श्रामरूल)

राहु पु० रह-उण्। त्यागे, त्यक्तरि, ज्योतिश्चक्रस्थे सूर्य्यकिरणसंप-र्काभावेण जायमानपृथिवीच्छायाभिधातरि ग्रहभेदे सिंहिकासुते दानवे च।

राहुच्छत्र न० राहोर्मर्द्दस्य छत्रमिव। आर्द्रके।

राहुदर्शन न० राहोर्दर्शनं यत्र। चन्द्रसूर्य्ययोरुपरागरूपे ग्रहणे 'स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने' इति स्मृतिः तेन उप-रक्ते एव चन्द्रे सूर्य्ये च तस्य दृश्यता नान्यदा।

राहुमूर्द्धभिद् पु० राहोः सिंहिकासुतस्य मूर्द्धानं भिनत्ति भिद क्विप्। विष्णौ अमृतपानकाले देवपङ्क्तौ देवरूपेण स्थित्वाऽमृतं पिबन्तं दृष्ट्वा विष्णुस्तस्य शिरश्चिच्छेदेति पुरा०।

राहुरत्न न० राहोः प्रियं रत्नम्। गोमेदमणौ।

राहुस्पर्श पु० राहोः स्पर्शः स्वाधिष्ठितभूच्छायाद्वारा यत्र। चन्द्र-सूर्य्ययोः उपरागरूपे ग्रहणे।

राहूच्छिष्ट पु० ६त०। लशुने।

राहूत्सृष्ट पु० ६त०। लशुने।

रि गतौ तु० पर० सक० अनिट्। रियति अरैषीत्। [त्रि०]

रिक्त त्रि० न० रिच-क्त। शून्ये, वने, निरर्थके च। स्वार्थे कन्। तत्रैव

रिक्ता स्त्री० रिच-क्त। उभयपक्षयोश्चतुर्थीनवमीचतुर्द्दशीतिथिषु।

रिक्तभाण्ड न० रिक्तं भाण्डम्। तैलादिशून्ये भाण्डे।

रिक्तहस्त त्रि० रिक्तो धनादिशून्यो हस्तो यस्य। निर्धने, भूरिदानाऽ-दिना व्ययितधने च।

**रिक्थ** न० रिच थक्। धने। मिताक्षरादुक्ते अप्रतिबन्धे दाये च 'स्वामी रिक्थक्रयसंविभागेत्यादि' स्मृतिः।

**रिक्थहारिन्** त्रि० रिक्थं दायं हरति गृह्णाति। दायग्राहिणि पुत्रादौ। अण्। रिक्थग्राहोऽप्यत्र।

**रिक्थिन्** त्रि० रिक्थं ग्राह्यत्वेनास्त्यस्य इनि। दायहारिणि दायादे 'उभयोरप्यसौ रिक्थी'ति स्मृतिः।

**रिख** सर्पणे भ्वा० पर० अक० सेट् इदित्। रिङ्खति अरिङ्खीत्। अनिदित्पक्षयमित्येके रेखति अरेखीत्।

**रिग** गतौ भ्वा० पर० सक० सेट् इदित्। रिङ्गति अरिङ्गीत्।

**रिङ्गण** न० रिगि-ल्युट्। स्खलने। रिखि ल्युट्। रिङ्खणमप्यत्र।

**रिच** सम्पर्के वियोगे च वा चु० उभ० पक्षे भ्वा० पर० सक० सेट्। रेचयति ते रेचति। अरीरिचत् त अरेचीत्।

**रिच** विरेके (अतिशय पुरीषोत्सर्गे) रुधा० उभ० सक० अनिट्। रिणक्ति रिङ्क्ते अरिचत् अरैक्षीत् अरिक्त।

**रिज** भर्जने भ्वा० आ० सक० सेट्। रेजते अरेजिष्ट।

**रिपु** पु० रप-उ-पृ०। शत्रौ, चोरनामगन्धद्रव्ये, ज्योतिषोक्ते लग्नापेक्षया षष्ठस्थाने च। [जातके त्रि०।

**रिपुघातिनी** स्त्री० रिपुं हन्ति हन णिनि। (कुडुक) लताभेदे शत्रु-

**रिपुञ्जय** त्रि० रिपुञ्जयति जि-खच्। शत्रुजयिनि, नृपभेदे पु०।

**रिम्फ** वधे तु० प० सक० सेट्। रिम्फति अरिम्फीत्।

**रिप्फ** पु० रिफ-ग्रच् पृ०। लग्नापेक्षया द्वादशे स्थाने।

**रिफ** कत्थने सौ० पर० सक० सेट्। रेफति अरेफीत्।

**रिफ** हिंसायां निन्दायां बोधने च सक० श्लाघायाम् अक० तु० पर० सेट्। रिफति अरेफीत्।

**रिवि** गत्यां भ्वा० पर० सक० सेट् इदित्। रिण्वति अरिण्वीत्।

**रिभ** रवे भ्वा० पर० सक० सेट्। रेभति अरेभीत्।

**रिरंसा** पु० रम-सन्-अ। रमणेच्छायाम्।

**रिव** गतौ भ्वा० पर० सक० सेट् इदित्। रिण्वति अरिण्वीत्।

रिश हिंसायां तु० पर० सक० अनिट् । रिशति अरिक्षत् ।

रिश्य पु० रिश्यते रिश–क्यप् । मृगभेदे ।

रिष बधे भ्वा० पर० सक० सेट् । रेषति अरेषीत् ।

रिष्ट न० रिष-क्त । मङ्गले, अशुभे च । भावे क्त । नाशे, पापे च । अशुभादिमति त्रि० । खड्गे, रक्तशिग्रौ च पु० । स्वार्थे कन् । तेषु

रिष्टि स्त्री० रिष-रिश-वा क्तिन् । अशुभे, शस्त्रभेदे च । क्तिच् रम्भे पु० ।

रिह बधे भ्वा० पर० सक० सेट् । रेहति अरेहीत् ।

री क्षरणे दि० आ० अक० अनिट् । रीयते अरेष्ट निष्ठातस्य न रीणः

री गतौ बधे च सक० रवे अक० क्र्या० प्वा० अनिट् । रिणाति अरैषीत्

रीठा स्त्री० री-ठक ठस्य नेत्त्वम् । रीठाकरञ्जे ।

रीठाकरञ्ज पु० कर्म० । स्वनामख्याते वृक्षे ।

रीढा स्त्री० रिह-क्त ढ्रलोपे दीर्घः । अवज्ञायाम् ।

रीण त्रि० री-क्त । क्षरिते स्रुते ।

रीति स्त्री० री-क्तिन् । पित्तले, प्रस्रावे, क्षरणे, लौहकिट्टे, सीमायां, गतौ, स्वभावे, अलङ्कारोक्ते गौडादिरचनाभेदे च ।

रीतिक न० रीतिरिव कायति कै-क । पुष्पाञ्जने स्त्रीत्वमपि स्वार्थे कन् । पित्तले न० ।

रीतिपुष्प न० रीतेः पुष्पमिव । कुसुमाञ्जने ।

रीव ग्रहणे, संवरणे च भ्वा० उ० सक० सेट् । रीवति ते अरीवीत् अरीविष्ट । चङि न ह्रस्वः ।

रु ध्वनौ अदा० प० अक० वेट् । रौति रवीति अरावीत् अरौषीत् ।

रु बधे गतौ च भ्वा० आ० सक० अनिट् । रवते अरोष्ट ।

रुक्प्रतिक्रिया स्त्री० रुजः प्रतिक्रिया प्रतिकारः प्रति+कृ-भावे श । चिकित्सायाम् ।

रुक्म न० रुच्-मन् नि० कुत्वम् । काञ्चने, धत्तूरे, लौहे, नागकेशरे च

रुक्मकारक पु० रुक्मं तन्निर्मित भूषणं करोति कृ० ण्वुल् । स्वर्ण-कारे जातिभेदे ।

रुक्मिन् पु० रुक्मं विद्यतेऽस्य इनि । राजभेदे । स्वर्णस्वामिनि त्रि० ।
रुक्मिराजकन्यायां श्रीकृष्णपत्न्यां स्त्री० ङीप् ।

रु(रू)क्ष त्रि० रुह-क्स पु० वा दीर्घः । अचिक्कणे, निःस्नेहे, कठोरे च

रुग्ण त्रि० रुज-क्त । रोगान्विते, भग्ने च । [चत् अरोचिष्ट ।

रुच प्रीतौ प्रकाशे च भ्वा० आ० अक० सेट् । रोचते लुङि उ० अरु-

रुचक न० रुच क्वुन् । सर्जिकाक्षारे, माङ्गल्ये द्रव्ये, उत्कटे, कण्ठभूषणे,
माल्ये, सौवर्चले आस्वाद्यरसे, रोचनायाम्, विडङ्गे, लवणे च ।
बीजपूरे, दन्ते, निष्के, कपोते च पु० । [च ।

रुच(चा) स्त्री० रुच सम्प० क्विप् वा टाप् । दीप्तौ, शोभायां, प्रकाशे

रुचि(ची) स्त्री० रुच-कि वा ङीप् । अनुरागे, आसक्तौ, स्पृहायाम्,
अभिलाषे, किरणे, शोभायां, बुभुक्षायां, गोरोचनायां च । प्रजा-
पतिभेदे पु० ।

रुचिर त्रि० रुचिं राति ददाति रा-क । मनोहरे, सुन्दरे, मधुरे च ।
मूलके, कुङ्कुमे लवङ्गे च न० । गोरोचनायाम् स्त्री० ।

रुचिराञ्जन पु० अज्यतेऽनेन अन्ज करणे ल्युट् रुचिरशोभायुक्तो-
ऽञ्जनः । शोभाञ्जने ।

रुच्य त्रि० रुचये हितः यत् । सुन्दरे, रुचिकरे च । सौवर्चले न० ।
पत्यौ, कतकवृक्षे, शालिधान्ये च पु० ।

रुच्यकन्द पु० रुच्यः रुचिकरः कन्दो मूलमस्य सूरणे (ओल) ।

रुज भञ्जने तु० प० सक० अनिट् । रुजति अरौक्षीत् निष्ठातस्य नः ।
रुग्णः ।

रुज हिंसायां चु० उभ० सक० सेट् । रोजयति ते अरूरुजत् ।

रुज्(जा) स्त्री० रुज-सम्प० क्विप् वा टाप् रुज अङ् वा । रोगे,
भङ्गे, मेषां, कुष्ठे च (कुड़) । [रोगकारके त्रि० ।

रुजाकर न० रुजां रोगं करोति कृ-अच् । कर्मरङ्गफले (कामराङ्गा)

रुट चौर्ये भ्वा० पर० सक० सेट् इदित् । रुण्टति अरुण्टीत् ।

रुट रोधे सक० दीप्तौ अक० चु० उ० सेट् । रोटयति ते अरूरुटत् त ।

**रुट** दीप्तौ प्रतिघाते च भ्वा० आ० अक० सेट्। रोटते लुङि उभ० अरुटत् अरोटिष्ट।

**रुठ** उपघाते भ्वा० पर० सक० सेट्। रोठति अरोठीत्। [ठिष्ट।

**रुठ** प्रतीघाते भ्वा० आ० सक० सेट्। रोठते लुङि उ० अरुठत्। अरो-

**रुठ** गतौ चौर्य्ये सक० मन्दीभावे खञ्जीभावे च अक० भ्वा० पर० सेट् इदित्। रुण्ठति अरुण्ठीत्।

**रुण्ड** पु० रुटि अच् पृ० ठस्य डः। मूर्द्धशून्ये देहे कबन्धे।

**रुत** न० रु क्त। रवे पशुपक्ष्यादीनां शब्दे।

**रुद** रोदने अदा० पर० रुदा० अक० सेट्। रोदिति अरुदत् अरोदीत्

**रुदित** न० रुद भावे क्त। क्रन्दने। कर्त्तरि क्त। कृतरोदने त्रि०।

**रुद्ध** त्रि० रुध क्त। आवरणादिना वेष्टिते कृतगतिरोधे च।

**रुद्र** पु० रोदिति रुद रक्। शिवमूर्त्तिभेदे 'सोऽरोदीत् यदरोदीत् तत् रुद्रस्य रुद्रत्वमि'ति श्रुतिः। अजैकपादहिर्बुध्नो विरूपाक्षः सुरेश्वरः। जयन्तो बहुरूपश्च त्र्यम्बकोऽप्यपराजितः। वैवस्वतश्च सावित्रो हरो रुद्रा इति' स्मृता इत्युक्तेषु एकादशसु शिवमूर्त्तिभेदेषु।

**रुद्रज** पु० रुद्राज्जायते जन ड। शिववीर्य्यजाते पारदे।

**रुद्रजटा** स्त्री० रुद्रस्य जटेव पिङ्गत्वात् जटिलत्वात्। स्वनामख्याते लताभेदे।

**रुद्रपत्नी** स्त्री० ६त०। दुर्गायाम् अतस्याञ्च (मसिना)।

**रुद्रप्रिया** स्त्री० ६त०। हरितक्याम् दुर्गायाञ्च।

**रुद्रविंशति** स्त्री० रुद्रस्वामिका विंशतिः। प्रभवादिषु षष्टिवत्सरेषु अन्तिमेषु विंशतिवर्षेषु।

**रुद्रसावर्णि** पु० चतुर्दशसु मनुषु मध्ये, द्वादश मनौ।

**रुद्राक्रीड** न० रुद्रस्य क्रीडा यत्र। श्मशाने।

**रुद्राक्ष** पु० रुद्रस्याक्षीव यस्य। स्वनामख्याते वृक्षे।

**रुद्राणी** स्त्री० रुद्रस्य पत्नी रुद्र+ङीप् आनुक् च। शिवपत्न्याम्।

**रुद्रारि** पु० रुद्रः अरिर्यस्य। कामदेवे।

**रुद्रावास** पु० ६त०। कैलासे, काश्याम्, श्मशाने च

रुध कामे दि० आ० सक० अनिट् प्रायेणानुपूर्व्वः । अनुरुध्यते अन्वरुद्ध
रुध आवरणे रु० उभ० सक० अनिट् । रुणद्धि रुन्धे अरुधत् अरौत्सीत्
रुधिर न० रुध-किरच् । 'शरीरस्थे रसपाकजन्ये धातुभेदे । मङ्गल-
ग्रहे' रक्तवर्णे च पु० तद्वर्णवति त्रि० ।
रुप आकुलीकरणे दि० पर० सक० सेट् । रुप्यति-अरुपत् । अरोपीत्
रुमा स्त्री० रु मक् । सुग्रीववानरभार्य्यायाम् लवणस्थाने देशभेदे च ।
रुरु पु० रु-क्रु । मृगभेदे । [रुरूकोऽप्यत्र ।
रुवु न० रु कु । एरण्डवृक्षे । कन् । तत्र, रक्तैरण्डे च पु० । रु-वुक् ।
रुश हिंसायां तु० पर० सक० अनिट् । रुशति अरुक्षत् ।
रुष वधे भ्वा० पर० सक० सेट् । रोषति अरोषीत् ।
रुष क्रोधे दि० पर० अक० सेट् । रुष्यति अरुषत् अरोषीत् ।
रुष क्रोधे चु० उभ० अक० सेट् । रोषयति ते अरूरुषत् त ।
रुष्(षा) स्त्री० रुष संप० क्विप् वा टाप् । क्रोधे ।
रुषित त्रि० रुष-क्त वा इट् । क्रोधयुक्ते इडभावपक्षे रुष्टोऽप्यत्र ।
रुह उद्भवे भ्वा० पर० अक० अनिट् । रोहति अरुक्षत् । ज्वला० ।
रुह त्रि० रुह-क । जाते । दूर्वायां स्त्री० उत्तरपदस्थः तत्प्रादुर्भूते
त्रि० यथा भूरुहः वारिरुहम् ।
रूक्ष पारुष्ये कठोरतायाम् निःस्नेहे च । चु० आ० अक० सेट् ।
रूक्षयति ते अरुरूक्षत् त । [वृक्षे स्त्री० ।
रूक्ष त्रि० रूक्ष-अच् । अचिक्कणे, स्नेहशून्ये च । वृक्षे पु० । दन्ती-
रूक्षगन्ध पु० रूक्षो गन्धो यस्य । गुग्गुलौ ।
रूक्षदर्भ पु० कर्म० । हरिदर्भे कुशभेदे ।
रूक्षपत्र पु० रूक्षं पत्रमस्य । शाखोटवृक्षे ।
रूक्षप्रिय पु० रूक्षं प्रियं यस्य । ऋषभौषधे ।
रूढ त्रि० रुह—क्त । जाते, प्रसिद्धे च 'रूढिरस्यास्ति अच् । प्रकृति
प्रत्ययार्थमनपेक्ष्य समुदायशक्त्यार्थबोधके शब्दे यथा घटः गौरि-
त्यादि । शब्देन समुदायशक्त्यार्थस्यबोधने च ।
रूढि स्त्री० रुह—क्तिन् । जन्मनि, प्रसिद्धौ, प्रकृतिप्रत्ययार्थमनपेक्ष्य

रूप रूपान्वितकरणे अद० चुरा० उभ० सक० सेट् । रूपयति ते अरुरूपत् त ।

रूप न० रूप—क भावे अच् वा । स्वभावे, सौन्दर्य्ये, पशौ, नाम्नि, शब्दे, ग्रन्थावृत्तौ, दृश्यकाव्ये नाटकादौ, श्लोके, शब्दधातूनां विभक्तियोगेन निष्पन्नशब्दे, शुक्लादिवर्णे च इति त्रि० । उत्तरपदस्थः सदृशार्थे त्रि० यथा पितृरूपस्तनयः मातृरूपा कन्या । एकसंख्यान्विते न० 'रूपं भजेत् स्यात् परिपूर्त्तिकाल' इति लीलावती । एकाव्यक्तं शोधयेदन्यपक्षात् रूपाण्यन्यस्येतरस्माच्च पक्षादिति बीजगणितोक्ते अव्यक्तराशिसहचरितव्यक्तसंख्यान्विते च ।

रूपक न० रूपयत्यनेन रूप—अच् कन् । अभिनयप्रदर्शके दृश्यकाव्यप्रभेदे, रूपमस्त्यस्य वुन् । मूर्त्ते त्रि० रूप+स्वार्थे कन् । शुक्लादिवर्णे, आकारे च रूपकं रूपितारोपादित्युक्तालङ्कारोक्ते अर्थालङ्कारभेदे, गुञ्जात्रयपरिमाणे, रजते च ।

रूपधारिन् त्रि० रूपं धारयति धारि—णिनि । रूपवति, सौन्दर्य्यान्विते, वेशान्तरधारिणि नटे च ।

रूपवत् त्रि० रूप+मतुप् मस्य वः । शुक्लादिरूपविशिष्टे, सौन्दर्य्ययुक्ते, आकारविशिष्टे च । [याम् ।

रूपाजीवा स्त्री० रूपं सौन्दर्य्यमाजीवति आ+जीव—अच् । वेश्या-

रूपिका स्त्री० रूपमस्त्यस्य ठन् । श्वेतार्कवृक्षे ।

रूप्य न० रूपाय आहन्यते स्वर्णादि यत् । अलङ्कारादिनिर्म्माणाय आहन्यमाने स्वर्णे रजते च स्वार्थे यत् । रजतमात्रे । सुन्दरे त्रि० ।

रूप्याध्यक्ष पु० रूप्येषु अध्यक्षः । कोषाध्यक्षे ।

रूष धूल्यादिना मिश्रीकरणे अद० चु० उभ० सक० सेट् । रूषयति ते अरुरूषत् त ।

रूषक पु० रूष—ण्वुल् । वासके वृक्षे ।

रूषित त्रि० रूष—क्त । धूल्यादिभिर्म्मिश्रिते, अचिक्कणीकृते च ।

रे अव्य० रा—के डिच्च । नीचादेः सम्बोधने ।

रेक शङ्कायां भ्वा० आ० स० सेट् । रेकते अरेकिष्ट । चङि न ह्रस्वः ।

रेक पु० रिच—घञ् । विरेचने । रेक—अच् । शङ्कायां, नीचे, भेके च ।
रेक—अ । सन्देहे स्त्री० टाप् ।
रेखा स्त्री० लिख—अच् लस्य रः । अल्पे, छद्मे, आभोगे, बिन्दुपुञ्जजाते दण्डाकारेण चिह्नभेदे, पङ्क्तौ च ।
रेचक न० रेचयति रिच—णिच्—ण्वुल् । कङ्कुष्ठे, यवक्षारे, जयपाले, तिलकवृक्षे च । पुरीषनिःसारणकारके त्रि० ।
रेचन न० रिच्—ल्युट् । मलभेदनेन तन्निःसारणे ।
रेचनक पु० रिच्यतेऽनेन ल्युट् संज्ञायां कन् । कम्पिल्लवृक्षे । कनभावे वा ङीप् । रेचनी रेचनाऽप्यत्र स्त्री० ।
रेची स्त्री० रेचयति अच् गौ० ङीष् । कम्पिल्लवृक्षे, अङ्कोठे च ।
रेज दीप्तौ भ्वा० आत्म० अक० सेट् । रेजते अरेजिष्ट । चङि न ह्रस्वः
रेट याचने वाचि च द्वि० भ्वा० उभ० सेट् । रेटति ते अरेटीत् अरेटिष्ट । चङि न ह्रस्वः ।
रेणु पु० स्त्री० रि—नु । परागे, धूलौ, पांशौ च । पर्पटे पु० ।
रेणुका स्त्री० रेणुना कायति कै-क । मरिचाकृतौ सुगन्धिद्रव्ये, जमदग्निपत्न्यां परशुराममातरि च ।
रेणुकासुत पु० ६त० । परशुरामे रेणुकात्मजादयोऽप्यत्र ।
रेणुरूषित पु० रेणुभिः रूषितः । गर्द्दभे । धूलिधूसरे त्रि० ।
रेणुसार पु० रेणुरिव सारोऽस्य । कर्पूरे । स्वार्थे कन् । तत्रैव ।
रेतस् न० री—असुन् तुट् च । पुंसो रक्तादिपरिपाकजन्ये देहस्थे मज्जहेतुके चरमधातौ शुक्रे, शिवबीर्य्ये पारदे च । [न ह्रस्वः ।
रेप शब्दे अक० गतौ सक० भ्वा० आत्म० सेट् । रेपते अरेपिष्ट चङि
रेप त्रि० रेप—अच् । निन्दिते, क्रूरे, कृपणे च ।
रेफ पु० र+इफ । रकारात्मके वर्णे । रिफ—अच् । कुत्सिते त्रि० असुन् रेफस् । क्रूरे, अधमे, दुष्टे कृपणे च त्रि० ।
रेव(व) गतौ० सक० प्लुतौ अक० भ्वा० आ० सेट् । रेव(व)ते अरे वि(वि)ष्ट चङि न ह्रस्वः ।

रेभ शब्दे भ्वा० आत्म० अक० सेट् । रेभते अरेभिष्ट । चङि न ह्रस्वः
रेवत पु० रेव-अतच् । जम्बीरे आरग्वधे बलरामश्वशुरे राजभेदे ।
रेवती स्त्री० रेवतस्यापत्यमण् पु० । रेवतराजकन्यायां बलदेवपत्न्याम् ।
रेव-अतच् गौ० ङीष् । अश्विन्यवधितः सप्तविंशतिसंख्याते नक्षत्रे, गव्याख्यायां, मातृकाभेदे स्त्रीमव्याम्, नदीभेदे, दुर्गायाञ्च ।
रेवतीरमण पु० रेवतीं रमयति रम-णिच्-ल्यु । बलरामे । ६त० । रेवतीशादयोऽप्यत्र ।
रेवन्त पु० रेव-झच् । गुह्यकाधिपतौ सूर्य्यपुत्रभेदे ।
रेवा स्त्री० रेव-अच् । नर्म्मदाख्यनद्याम् ।
रेष ह्रेषायां (घोटकशब्दे) भ्वा० आत्म० अक० सेट् । रेषते अरेषिष्ट । चङि न ह्रस्वः ।
रै शब्दे भ्वा० पर० अक० अनिट् । रायति अरासीत् ।
रै पु० रा-डै । धने, स्वर्णे च ।
रैत्य त्रि० रीतेः पित्तलस्य विकारः रीति+ष्यञ् । पित्तलमये पात्रादौ ।
रैवत पु० रेवत्या नद्या अदूरो देशः अञ् । द्वारिकासमीपस्थे पर्व्वतभेदे स्वर्णालुक्षे, शिवे, दैत्यभेदे च । रेवत्यां भवः अण् । चतुर्द्दशसु मनुषु मनुभेदे ।
रैवतक पु० रैवतएव कन् । रैवतपर्व्वते ।
रोक न० रु-कन् तस्य नेत्त्वम् । छिद्रे, 'तस्मै रोकं च शोकञ्चेति' श्रुतिः नौकायाम् च । रुच-घञ् नि० कुत्वम् । क्रयभेदे, दीप्तौ च पु० ।
रोग पु० रुज-घञ् । धातुवैषम्यजाते व्याधौ, कुष्ठौषधे च (कुड़) ।
रोगघ्न न० रोगं हन्ति हन-क । औषधे, वैद्यकशास्त्रे च रोगनाशके त्रि० ।
रोगराज पु० ६त० टच् समा० । राजयक्ष्मव्याधौ ।
रोगलक्षण न० रोगो लक्ष्यते ज्ञायतेऽनेन लक्ष-ल्युट् । रोगानुमापके धातुवैषम्यहेतुके चिह्नभेदे ।
रोगशिला स्त्री० रोगाय तन्निवृत्तये शिला । मनःशिलायाम् ।

रोगहन् न० रोगं हन्ति हन-ड । औषधे, हन-क्विप् रोगहन् । रोगहन्तरि—वैद्यादौ त्रि० ।

रोगहर त्रि० रोगं हरति हृ-अच् । व्याधिनाशके द्रव्यादौ ।

रोगहारिन् पु० रोगं हरति हृ-णिनि । चिकित्सके वैद्ये ।

रोगितरु पु० रोगिप्रियस्तरुः शाक० । अशोकवृक्षे ।

रोगिन् त्रि० रोग+अस्त्यर्थे इनि । व्याधियुक्ते स्त्रियां ङीप् ।

रोचन पु० रुच ल्यु रोचयति वा ल्यु । कूटशाल्मलिवृक्षे श्वेतशोभाञ्जने, पलाण्डौ, करञ्जे, अङ्कोटे, आरग्वधे दाडिमे च । उत्तमायां नार्य्यां, रक्तकह्लारे गोपित्ते, गोरोचनायाञ्च स्त्री० टाप् । रुचिकारके त्रि० ।

रोचनक पु० रोचनाय रुचिजननाय कायति कै-क । जम्बीरे ।

रोचनफल पु० रोचनं रुचिकरं फलमस्य । बीजपूरके जम्बीरभेदे, चिर्भट्यां स्त्री० ।

रोचना स्त्री० रोचयतीति कर्त्तरि संज्ञायां ल्युट् अजा० टाप् मनः-शिलायाम्, गोरोचनायां, आमलक्याम्, श्वेतत्रिवृति, गन्धद्रव्यभेदे (गुडारोचना) च ।

रोचमान पु० रुच—शानच् । अश्वग्रीवास्थरोमावर्त्ते । रुचियुक्ते त्रि० ।

रोचिष्णु त्रि० रुच-इष्णुच् । दीप्तिशीले ।

रोचिस् न० रुच-इसुन् । प्रभायाम् ।

रोची स्त्री० रोचयति रुच-णिच् अच् गौ० ङीष् । हिलमोचिकायाम्

रोटिका स्त्री० रुट-ण्वुल् । गोधूमादिचूर्णनिर्मिते पिष्टकभेदे (रुटी) ।

रोड अनादरे भ्वा० पर० सक० सेट् । रोडति अरोडीत् चङि न ह्रस्वः

रोदन न० रुद—ल्युट् । क्रन्दने, करणे ल्युट् ङीप् । दुरालभायां संज्ञायां कन् । यवासायाम् । [द्यावाभूम्योः स्त्री० द्वि० व० ।

रोदस् न० रुद—असुन् । स्वर्गे, भूमौ च गौरा० ङीष् रोदसीत्यप्यत्र

रोध पु० रुध—घञ् । रोधने, आवरणे च । [न० ।

रोधन त्रि० रुणद्धि रुध—ल्यु । रोधकर्त्तरि, भावे ल्युट् । प्रतिबन्धे

रोधस् न० रुध—असुन् । नद्यादिकूले ।

रोध्र न० रुध-रन् । पापे, अपराधे लोध्रवृक्षे च ।
रोध्रपुष्प पु० रोध्रस्य लोध्रस्येव पुष्पमस्य । मधूकवृक्षे (मौल) ।
रोध्रपुष्पिणी स्त्री० रोध्रइव पुष्प्यति पुष्पविकाशे णिनि । धातकीवृक्षे (धाइफूल) ।
रोप पु० रुह-णिच्-ह्रस्य पः कर्म्मणि अच् । वाणे । भावे अच् । रोपणे, धान्यादेर्जननाय अङ्कुरादेरारोपणे च । छिद्रे न० ।
रोपण न० रुह-णिच्-ह्रस्य पः ल्युट् । जनने, अञ्जनभेदे, रुप-ल्युट् । विमोहने, अन्यथाभूतस्य वस्तुनोऽन्यथा स्थापने । [पणे ।
रोपित त्रि० रुह-णिच्-ह्रस्य पः क्त । वृक्षादेर्जननाय कृताङ्कुरारो-
रोमक न० रोमेव निविडं कायति कै-क । (रुम) नगरे, पांशुलवणे च
रोमकन्द पु० रोमणा युक्तः कन्दो मूलमस्य । पिण्डालौ ।
रोमकपत्तन न० कर्म्म० । (रुम) नगरभेदे ।
रोमकूप पु० रोम्णां कूपइव । रोमाधारे विवरे 'न रोमकूपौघमिषा-दिति नैषधम् ।
रोमकेशर न० रोमभिः केशरः सिंहसटेव । चामरे ।
रोमगुच्छ न० रोमभिर्गुच्छं स्तवकमिव । रोमसमुदायात्मके चामरे । कन् । अत्रैवार्थे । [रोँया ।
रोमन् न० रु-मनिन् । देहजाते अङ्कुराकारे केशतुल्ये पदार्थे
रोमन्थ पु० रोमं मथ्नाति मन्थ-अण् पृ० नलोपः । भुक्तस्य घासादेः पशुभिरुद्गीर्य्य चर्व्वणे 'रोमन्थमभ्यस्यतीति' ।
रोमभूमि स्त्री० ६त० । चर्म्मणि ।
रोमलता स्त्री० रोमाणि लतेव । रोमराजौ ।
रोमविकार पु० ६त० । रोमोद्गमे ।
रोमश त्रि० रोमाणि सन्त्यस्य श । प्रचुररोमयुक्ते । मेषे, पिण्डालौ, शूकरे, कुम्भराशौ पु० (पाना) ।
रोमहर्ष पु० रोम्णः हर्षइव तद्व्यञ्जकत्वात् । रोमाञ्चे, हर्षौत्सुक्या-दिभिः रोमकूपे जायमाने कण्टकाकारे पदार्थे । ल्युट् । रोम-रोमहर्षणमप्यत्र न० ।

रोमहर्षण पु० रोमाणि हर्षयति हृष–णिच्–ल्यु। विभीतकवृक्षे, मुनिभेदे च।

रोमाञ्च पु० रोम्णामञ्चः उद्गमः अन्च–अच्। रोमहर्षे।

रोमाञ्चित त्रि० रोमाञ्च जातोऽस्य तार० इतच्। जातपुलके।

रोमाली स्त्री० ६त०। रोमावल्यां तदुद्भवसाधने तारुण्यावस्थायाञ्च।

रोमालु पु० रोमयुक्त आलुः शाक०। पिण्डालौ। रोम+आलुच्। रोमःति त्रि०।

रोमालुविटपिन् स्त्री० रोमालुः रोमयुक्तः विटपी। कुम्भीवृक्षे।

रोमवलि(ली) स्त्री० ६त०। रोमश्रेण्यां नाभेरूर्द्ध्वस्थरोमपङ्क्तौ, तदुपलक्षिते तारुण्यावस्थायाञ्च। [योऽस्यत।

रोमोद्गम पु० रोम्णामुद्गमः उद्–गम–अप्। रोमहर्षे। रोमोद्भेदाद-

रोरुद्या स्त्री० रुद्–यङ्–अ टाप्। अतिशयरोदने।

रोल पु० रु–लच्। पानीयामलके।

रोलम्ब पु० रौति रु क्विप् रौः सन् लम्बते गच्छति लम्ब-अच् कर्म०। रोड–अम्बच् डस्य लो वा। भ्रमरे।

रोष पु० रुष घञ्। क्रोधे। [त्रि०।

रोषण पु० रुष-युच्। पारदे, निकषप्रस्तरे, उषरभूमौ च क्रोधयुक्ते

रोह पु० रुह-अच्। अङ्कुरे। रोहणकर्त्तरि त्रि०।

रोहण पु० रुह्यतेऽसौ रुह-ल्युट्। पर्व्वतभेदे।

रोहन्त पु० रुह झच्। वृक्षभेदे, वृक्षमात्रे च। लताभेदे, लतायाञ्च स्त्री० गौ० ङीप्।

रोहि पु० रुह-इन्। बीजे, वृक्षे च। धार्म्मिके त्रि०।

रोहिण न० रुह–इनन्। पञ्चदशधा विभक्तदिनस्य नवमे भागे 'कार्य्यादारोहिणं बुध' इति स्मृतिः रोहिणी देवताऽस्य अण्। रौहिणमप्यत्र। वटवृक्षे, रोहितकवृक्षे च पु०।

रोहिणी स्त्री० रुह इनन् गौ० ङीष्। स्त्रीगव्याम्, अश्विन्यवधिके चतुर्थ नक्षत्रे, वसुदेवपत्न्यां बलभद्रमातरि, विद्युति, कटुरम्भ्यां लतायां, सोमवल्के च। रोहित+स्त्रियां ङीप तस्य नत्वे

चन्दनम्। रक्तवर्णायां स्त्रियाम्। सा च हरितक्याम्, काश्म-
र्य्याम्, मञ्जिष्ठायाञ्च।

रोहिणीपति पु० ६त०। चन्द्रे वसुदेवे च रोहिणीनाथादयोऽप्यत्र।

रोहिणीव्रत न० रोहिणीयुक्ताष्टम्यां व्रतम्। रोहिण्युपलक्षितायां
भाद्रकष्टाष्टम्यां कर्त्तव्ये उपवासरूपे व्रते।

रोहित् पु० रुह-इति। सूर्य्ये, वर्णभेदे च। लताभेदे, मृग्याञ्च स्त्री०

रोहित न० रुह-इतच्। रुधिरे, सरले, इन्द्रचापे, स्वनामख्याते
मत्स्यभेदे, रोहितकवृक्षे च। रक्तवर्णे पु० तद्वति त्रि० कन्।
उक्तार्थे, मत्स्यभेदे स्वनामख्याते वृक्षे च।

रोहिताश्व पु० रोहितवर्णाः अश्वा यस्य। वह्नौ।

रोहितेय पु० रोहित एव स्वार्थे ढ। रोहितकवृक्षे।

रोहिन् पु० रोहति पुनश्छिन्नोऽपि प्रादुर्भवति रुह, णिनि। रोहित-
कवृक्षे। रोहणवति त्रि०। स्त्रियां ङीप्।

रोहिष पु० रुह-इषन्। स्वनामख्याते वृक्षे।

रौक्ष्य न० रूक्षस्य भावः ष्यञ्। पारुष्ये अचिक्कणतायाञ्च।

रौचनिक त्रि० रोचनया रक्तः अण्। रोचनया रक्ते। [न ठञ्।

रौट(ड) अनादरे भ्वा० पर० सक० सेट्। रौटति अरौटीत्। चङि

रौद्र न० रुद्रो देवतास्य अण्। सूर्य्यतापे, उग्ररसे च। तद्वति,
भीषणे च त्रि०। दुर्गायां रुद्रजटावृक्षे च स्त्री० ङीप्।

रौप्य न० रूप्यमेव अण्। रजते। [तत्रैवार्थे।

रौम न० रुमायां नद्यां भवः अण्। शाम्भरिलवणे। स्वार्थे कन्

रौरव पु० रोरूयतेऽत्र रु-यङ्-क्विप् तेन प्राप्यं तस्येदं वा अण्।
नरकभेदे लवणं शाचसत्याभिधाने। चञ्चले, धूर्त्ते, घोरे च पु०।

रौहिण पु० रुह-इनन् स्वार्थे अण्। चन्दनवृक्षे।

रौहिणेय पु० रोहिण्यां भवः ढक्। बुधग्रहे, बलरामे च। मरकत-
मणौ न०। गोवत्से त्रि०। [रोहिषमृग्याञ्च स्त्री० ङीप्।

रौहिष न० रुह-इषन् स्वार्थेऽण्। मृगभेदे रोहितमत्स्ये च दूर्वायाँ,

## ल

ल पु० ला—क। इन्द्रे, तन्त्रोक्ते भूमिदेवताके मन्त्रभेदे न०
लक आस्वादे प्राप्तौ च चु०उ०स०सेट्। लाकयति ते अलीलकत् त
लकच पु० लक—अचन्। लिकुचवृक्षे (मादार)।
लकुच पु० लक—उचन्। (मादार) वृक्षभेदे।
लक्तक पु० लक—क्त नि० संज्ञायां कन्। अलक्तके (आलता)
लक्तकर्म्मन् पु० लक्तं करोति कृ—मनिन्। रक्तवर्णलोध्रे।
लक्ष दर्शने, अङ्कने च चु०उभ०स०सेट्। लक्षयति ते अललक्षत् त
लक्ष न० लक्ष अच्। पदे, चिह्ने, व्याजे, शरव्ये च। दशायुतसंख्या-
• यां स्त्री०न० [शब्दे।
लक्षक त्रि० लक्षयति लक्षणयार्थम् लक्ष—ण्वुल्। लक्षणयार्थं बोधके
लक्षण न० लक्ष्यतेऽनेन लक्ष—करणे ल्युट्। इतरभेदानुमापके चिह्ने,
यथा पृथिव्या गन्धोलक्षणं स हि पृथिवीं परस्मात् भिन्नतया अनु-
मापयति। 'स्वरूपं तटस्थं द्विधा लक्षणं स्यात् स्वरूपे प्रविष्टं
स्वरूपाद्विभिन्न" मित्युक्ते स्वरूपलक्षणे तटस्थलक्षणे च यथा आ-
काशो विलम् सच्चिदानन्दो ब्रह्मेति। काकवत् गृहम्, जगज्ज-
न्मादिकर्त्तृ ब्रह्मेति। स्वरूपे, यथा घटस्वरूपं वस्तु। नाम्नि,
व्यवहारोपयोगिनि चिह्ने च। कर्त्तरि ल्यु। स्वरूपप्रतिपादके
चोदनालक्षणार्थो धर्म्म, इति जैमिनिसूत्रम् चोदना विधिवाक्यमेव
लक्षणं स्वरूपज्ञापिका यस्य तादृशोऽर्थः धर्मः इति तदर्थः।
शब्दसाधुताप्रतिपादके व्याकरणादिसूत्रे च न० 'लक्षणं स्वनभि-
धानमि'ति। कर्म्मणि ल्युट्। प्रतिपाद्ये यथा 'इत्थं द्वादश-
लक्षणीति माधवीयन्यायमाला द्वादशानां लक्षणानां प्रतिपाद्यवि-
षयाणां समाहारः इति तदर्थः। लक्ष—युच्। शब्दनिष्ठवाच्यार्थ-
संबद्धार्थबोधकतारूपे 'मुख्यार्थबाधे तद्योगे यतान्योऽर्थः प्रतीयते
रूढेः प्रयोजनाद्वापि लक्षणा शक्तिरर्पितेत्युक्ते" वृत्तिभेदे स्त्री०।
यथा गङ्गायां घोषः प्रतिवसती यादौ गङ्गापदस्य जलप्रवाहरूपे

स्वार्थेऽन्यथासम्भवात् तत्सम्बद्धतीरादिबोधकता। सा च बहुधा
विस्तारो वाचस्पत्ये। लक्ष्मणे, सारसपक्षिणि च पु० तत्स्त्रियां स्त्री०

**लक्षित** त्रि० लक्ष-कर्म्मणि क्त। लक्षणया बोधितेऽर्थे, ज्ञाते, अनुमिते
च कर्त्तरि क्त। लक्षणाश्रये लक्षकशब्दे च।

**लक्ष्मन्** न० लक्ष-मनिन्। चिह्ने, प्रधाने च। स्वार्थे अण् पु०।
सारसपक्षिणि दशरथपत्न्याः सुमित्रायाः ज्येष्ठात्मजे च पु०। श्वे-
तकण्टकार्य्यां सारसपक्षिस्त्रियाम्, औषधभेदे च स्त्री०

**लक्ष्मी** स्त्री० लक्ष-ई-मुट् च। शोभायां कान्तौ, विष्णोः पत्न्याम्, सम्प-
त्तौ, ऋद्ध्यौषधे, वृद्धिनामौषधे, फलिनीवृक्षे, स्थलपद्मिन्याम्, हरि-
द्रायां, शम्यां, मुक्तायां, द्रव्ये च।

**लक्ष्मीकान्त** पु० ६त०। विष्णौ राजनि च लक्ष्मीपत्यादयोऽप्यत्र।
"विहाय लक्ष्मीपतिलक्ष्मकेति" भारविः।

**लक्ष्मीपुत्र** पु० ६त०। कामदेवे, गन्धर्व्वदे, अश्वे, कुशे च।

**लक्ष्मीवत्** पु० लक्ष्मीः शोभास्त्यस्य मतुप् मस्य वः। पनसे श्रीयुक्ते
त्रि० स्त्रियां ङीप्। [ उच्चैःश्रवसि च

**लक्ष्मीसहज** पु० लक्ष्म्या सह क्षीराब्धौ जायते जन-ड। चन्द्रे,

**लक्ष्य** न० लक्ष-यत्। वेधार्थमुद्दिश्यमाने शरव्ये। लक्षणया बोध्येऽर्थे
उद्देश्ये, ज्ञेये, अनुमेये च त्रि०। [ इदिदयम् लङ्खति अलङ्खीत्।

**लख** गतौ भ्वा० पर० सक० सेट्। लखति। अलखीत्—अलाखीत्

**लग** खञ्जभावे अक० गतौ भ्वा० सक० प० सेट्। लङ्गति अलङ्गीत्।

**लग** सङ्गे भ्वा० पर० सक० सेट् घटादि। लगति अलगीत् घटा० लग-
यति। "कालेव तस्या लगति स्मे'ति नैषधम्।

**लग** स्वादे प्राप्तौ च सक० चु० उभ० सेट्। लागयति ते अलीलगत् त

**लगित** त्रि० लग-क्त। संसक्ते। [ ते पदार्थे (लाठी)।

**लगुड(ल)(र)** पु० लग-उलच् लस्य डत्वं वा। दण्डाकारे काष्ठनिर्मि-

**लग्न** न० लस्ज-क्त तस्य नः। मेषादिराशीनामुदये लज्जिते त्रि०।
लग-क्त पु०। संसक्ते त्रि०। स्तुतिपाठके पु०। लग्न इव इवार्थे

कन् । प्रतिभुवि । (जामिन) "खादको वित्तहीनः स्यात् लग्नको वित्तवान् यदी"ति स्मृतिः ।

लग्निका स्त्री० नग्नेव कन् पृ० । अदृष्टरजस्कायां स्त्रियाम् ।

लघ अभोजने सीमातिक्रमगतौ च भ्वा० आ० स० सेट् इदित् । लङ्घते अलङ्घिष्ट । 'कल्लोलिनीवल्लभलङ्घलङ्घे' इति नाटकम् ।

लघ शोषणे भ्वा०पर०सक०सेट् इदित् । लङ्घति अलङ्घीत् ।

लघ प्रकाशे चु०उ०स०सेट् इदित् । लङ्घयति-ते अललङ्घत् त ।

लघ आस्वादने चु०उभ०सक०सेट् । लाघयति-ते अलीलघत्-त ।

लघिमन् पु० लघोर्भावः इमनिच् डिच्च । लघुत्वे लाघवे, येनोर्द्ध्वगतिसम्भवः । ईश्वरस्य ऐश्वर्य्यभेदे च ।

लघिष्ठ त्रि० अतिशयेन लघुः इष्ठन् डिद्वद्भावः । अतिशयलघुत्वयुक्ते । ईयसुन् । लघीयानप्यत्र स्त्रियां ङीप् ।

लघु त्रि० लघि-कु नि० नलोपः । शीघ्रे कृष्णागुरुणि, वीरणमूले च । पृक्कानामौषधौ स्त्री० । निःसारे, लाघवगुणान्विते, ह्रस्वे, मनोहरे च त्रि० । व्याकरणोक्ते ह्रस्वसंज्ञके अकारादौ वर्णे, ज्योतिषोक्तेषु 'पुष्याश्विहस्ता लघु'रित्युक्ते पुष्यादिनक्षत्रेषु च पु० । लघुतायत्यां स्त्रियां स्त्री० वा ङीप् ।

लघुकाश्मर्य्य पु० कर्म० । कट्फले वृक्षे ।

लघुचिर्भटा स्त्री० कर्म० । मृगेर्वारौ कर्कटीभेदे ।

लघुदन्ती स्त्री० कर्म० । क्षुद्रदन्तीवृक्षे ।

लघुद्राक्षा स्त्री० कर्म० । काकलीद्राक्षायाम् ।

लघुनामन् पु० लघुवर्णयुक्तं नाम वाचकशब्दो यस्य । अगुरुचन्दने ।

लघुपत्त्रक पु० लघूनि ह्रस्वानि पत्त्राण्यस्य कप् । (गुड़ारोचना) लताभेदे ।

लघुपुष्प पु० लघु पुष्पं यस्य । भूमिकदम्बे ।

लघुबदर पु० कर्म० । क्षुद्रकोलौ । भूबदर्य्याम् स्त्री० ङीप् ।

लघुब्राह्मी स्त्री० कर्म० । क्षुद्रब्राह्म्याम् ।

लघुमन्थ पु० । अग्निमन्थः मन्थः पूर्वपदलोपः कर्म० । क्षुद्राग्निमन्थे ।

लघुलय न० लघु शीघ्रं लीयते ली-अच्। वीरणमूले।

लघुसदाफला स्त्री० सदा फलं यस्याः कर्म०। क्षुद्रोदुम्बरिकायाम् (छोट डुमुर)।

लघुहेमदुग्धा स्त्री० कर्म०। क्षुद्रोडुम्बरे (छोट डुमुर)।

लघ्दुम्बरिका स्त्री० कर्म्म०। (छोट डुमुर) उदुम्बरभेदे।

लङ्का स्त्री० लक-अच् नुम् च। स्वनामख्यातायां पुर्य्याम्।

लङ्काधिप पु० ६त०। रावणे लङ्कामात्रादयोऽप्यत्र।

लङ्कायि (पि) का, स्त्री० लङ्कामयते आप्नोति वा ण्वुल्। पृक्कायां (पिडिङ्) शाकभेदे।

लङ्कास्थायिन् पु० लङ्कायां तिष्ठति स्था-णिनि। (लङ्कासिज) वृक्षभेदे। लङ्कावासिनि त्रि०। [ ङ्खाक)।

लङ्कोपिका स्त्री० लङ्कायामुप्यते वप-ण्वुल् पृ०। पृक्कायाम्। (पिडि-

लङ्घन न० लघि-ल्युट्। अभोजने, अतिक्रम्य गमने, क्रमणे, प्लवने च।

लछ चिह्नकरणे भ्वा० पर० सक० सेट्। लच्छति अलच्छीत्।

लज व्रीडायाम् भ्वा० आ० सक० सेट्। लजते अलजिष्ट।

लज तिरस्कारे भ्वा० पर० सक० सेट् इदित्। लञ्जति अलञ्जीत्।

लज अन्तर्द्धाने चुरा० उ० सक० सेट्। लाजयति-ते अलीलजत् त।

लज भाषणे हिंसायां दाने च सक० सामर्थ्ये वासे च अक० चुरा० सेट् इदित्। लञ्जयति-ते अललञ्जत् त।

लज भासने अद० चु० उभ० सक० सेट्। लजयति-ते अललजत् त।

लजकारिका स्त्री० लजं लज्जां करोति क-ण्वुल् अत इत्वम्। लज्जालुलतायाम्। [ निवृत्तिसाधने चित्तवृत्तिभेदे।

लज्जा स्त्री० लस्ज-अ। अकार्य्यप्रवृत्तौ परदर्शने दृष्टत्वधिया ततो

लज्जालु स्त्री० लस्ज-आलुच्। लताभेदे। लज्जावति त्रि०।

लज्जाशील त्रि० लज्जां शीलयति शील-अण्। लज्जाविशिष्टे।

लज्जित पु० लज्जा जाताऽस्य तार० इतच्। जातलज्जे व्रीडिते।

लज्जिरी स्त्री० लज्जा अस्त्यर्थे इरच् गौ० ङीष्। लज्जालुलताभेदे।

लञ्ज भासने अद० चु० उभ० अक० सेट्। लञ्जयति ते अललञ्जत् त।

**लट** बालभावे अक० उक्तौ द्वि० भ्वा० पर० सेट्। लटति। अलाटीत् अलटीत्।

**लटपर्ण** न० लटं दुष्टं पर्णमस्य। त्वचे (दारचिनि)।

**लट्वा** स्त्री० लट–व। (नाटाकरमचा) करञ्जभेदे, वाद्यभेदे, ग्रामचटके, कुसुम्भे, भ्रमरके च।

**लड** विलासे भ्वा० पर० अक० सेट्। लडति। अलाडीत्–अलडीत्।

**लड** उत्पीडने जिह्वाचालने च भ्वा० पर० सक० सेट्। लडति अला-डीत्–अलडीत् घटा०। लडयति।

**लड** उपक्षेपे चु० उभ० सक० सेट्। लाडयति–ते अलीलडत् त।

**लड** व्याप्तौ चु० उभ० सक० सेट्। लाडयति–ते अलीलडत्।

**लड** भाषणे द्वि० वा चु० पक्षे भ्वा० पर० सेट् इदित्। लण्डयति ते लण्डति। अललण्डत् त अलण्डीत्।

**लड** उत्क्षेपणे वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् इदित्। ल-ण्डयति–ते लण्डति। अललण्डत्–त अलण्डीत्।

**लड** क्षेपणे अद० चु० उभ० सक० सेट्। लडयति ते अललडत् त।

**लड्डुक** पु० लड–डु तस्य नेत्त्वम् स्वार्थे कन्। गोधूमादिचूर्णनिर्म्मिते (लाड्डु) मिष्टान्नभेदे "इक्षुलड्डुकस्तनीति" नैषधम् स्त्रीत्वमपि।

**लण्ड** पु० लडि–अन्। (लण्डन) इति ख्याते नगरभेदे।

**लत** आघाते भ्वा० पर० सक० सेट्। लतति अलातीत् अलतीत्।

**लता** स्त्री० लत–अच्। शाखारहिते गुडूच्यादौ।

**लताकरञ्ज** पु० लतारूपः करञ्जः। करञ्जभेदे।

**लताकस्तूरिका** स्त्री० लतायां कस्तूर्या इव सुगन्धो यस्याः। कस्तू-रीगन्धफलपत्रवत्याम् लतायाम्। [लताद्रुमादयोऽप्यत्र।

**लतातरु** पु० लतेव दीर्घतरुः। तालवृक्षे, शालवृक्षे नागरङ्गवृक्षे च।

**लतापनस** पु० लतायां पनसमिव स्थूलं फलमस्य। (तरमुज) लताभेदे।

**लताटङ्का** स्त्री० लतेव विस्तीर्णा टङ्का। (पिडिङ्ग) शाकभेदे।

**लताफल** न० लतायां फलमस्य। पटोले।

**लतामरुत्** स्त्री० लतायां मरुत् वायुरस्याः। टङ्कायां तल्लतासेवने हि वायुवृद्धिरिति वैद्यकम्।

**लतायष्टि** स्त्री॰ लतापि यष्टिरिव। मञ्जिष्ठायाम्।

**लतायावक** न॰ लतायां यावकमिव। प्रवाले।

**लतार्क** पु॰ लतयाऽर्क इव। हरित्पलाण्डौ।

**लप** कथने भ्वा॰ पर द्विक॰ सेट्। लपति। अलापीत्-अलपीत्। चङि न ह्रस्वः। [कथने।

**लपन** न॰ लप्यते उच्यतेऽनेन लप-करणे ल्युट्। मुखे। भावे ल्युट्।

**लपित** त्रि॰ लप-कर्मणि-क्त। कथिते। भावे क्त। कथने न॰।

**लब** आलम्बने सक॰ शब्दे अक॰भ्वा॰आत्म॰सेट् इदित्। लम्बते अलम्बिष्ट

**लब्ध** त्रि॰ लभ-कर्मणि क्त। प्राप्ते।

**लब्धवर्ण** पु॰ लब्धो वर्णो वर्णनं प्रशंसा ज्ञानयत्त्वेन येन। पण्डिते।

**लभ** शब्दे अक॰ भ्वा॰ आत्म॰ सेट् इदित्। लम्भते अलम्भिष्ट।

**लभ** प्राप्तौ सक॰ भ्वा॰ आत्म॰ अनिट्। लभते। अलब्ध। लब्धिमः।

**लमक** पु॰ रम वुन् रस्य लः। पिङ्गे जारे। [त्रि॰

**लम्पट** पु॰ रम अटन् पुक् च रस्य लः। परस्त्रीषु लोलुपे, आसक्ते

**लम्ब** पु॰ लबि-अच्। नर्त्तके, कान्ते, उत्कोचे, अङ्गशास्त्रोक्ते त्रिभुजादिक्षेत्रे भुजकर्णयोर्मध्यस्थे लम्बमाने सूत्रे च "लम्बगुणं भूम्यर्द्धं स्पष्टं त्रिभुजे फलं भवती"ति लीलावती टीर्घे, लम्बमाने च त्रि॰।

**लम्बकर्ण** पु॰ लम्बः कर्णो यस्य। छागे, हस्तिनि, राक्षसे, श्येनपक्षिणि, अङ्कोटवृक्षे च। लम्बश्रोतर्यात त्रि॰। कर्म॰। लम्बमाने श्रोत्रे पु॰।

**लम्बकेश** त्रि॰ लम्बः दीर्घः केशः यस्य। दीर्घकेशाढ्ये। कुशमये विष्टरे। दीर्घकेशयुक्ते त्रि॰। कर्म्म॰। दीर्घे केशे।

**लम्बदन्ता** स्त्री॰ लम्बो दीर्घः दन्त इव वीजकणट्को यस्य सिंहलद्वीपभवपिप्पल्याम्। दीर्घदन्तवति त्रि॰ कर्म्म॰ दीर्घे दन्ते पु॰।

**लम्बन** न॰ लम्बते ल्यु। नाभिदेशपर्य्यन्तं लम्बमाने माल्यादौ भावे ल्युट्। आलम्बने न॰।

**लम्बवीजा** स्त्री॰ लम्बं दीर्घं वीजं यस्याः। सिंहलदेशजातपिप्पल्याम्।

**लम्बा** स्त्री॰ लम्बते लबि-अच्। तिक्ततुम्ब्यां (तितलाउ)।

**लम्बोदर** पु० लम्बं दीर्घमुदरं यस्य । गणेशे, तारानाम्न्यां देव्यां स्त्री० ङीप् । वृहदुदरवति त्रि० ।

**लय** गतौ भ्वा०आत्म०सक० सेट् । लयते । अलयिष्ट ।

**लय** पु०ली-अच् । संश्लेषे, विनाशे, नृत्यगीतवाद्यानामेकतानतारूपे साम्ये च । लीयतेऽत्र । सर्वभूतलयकरे प्रलयकाले, ईश्वरे च ।

**लर्ब** गतौ भ्वा०पर०सक० सेट् । लर्बति अलर्बीत् ।

**लल** इच्छायां चु०उभ०सक० सेट् । लालयति ते अलीललत् त

**लल** इच्छायां अद०चु०उभ०सक० सेट् । ललयति ते अललत् त

**ललज्जिह्व** पु० ललन्ती आस्वाद्यास्वादनाय चलन्ती जिह्वा यस्य । कुक्कुरे, उष्ट्रे, हिंस्रजन्तौ च । चलद्रसनायुक्ते त्रि० ।

**ललन** न०लड वुन् डस्य लः । चालने । केलौ, ताले,सालवृक्षे, पियालवृक्षे च पु० । लल-ल्यु । जिह्वायां, नार्य्यांञ्च स्त्री० ।

**ललनाप्रिय** पु० कर्म० । कदम्बे । ह्रीवेरे न० । जिह्वाप्रिये, रमणीवल्लभे च त्रि० ।

**ललन्तिका** स्त्री० लड-झच् स्वार्थे कन् अत इत्त्वम् डस्य लः नाभिदेशपर्य्यन्तं लम्बमाने माल्यादौ ।

**ललाट** न० लड-अच् डस्य लः ललमटति अट-अण् । अलकाधःस्थेऽङ्गभेदे (कपाल)

**ललाटन्तप** पु० ललाटं तापयति तप-णिच् खच् ह्रस्वः । सूर्य्ये ललाटतापके त्रि० 'शिथिलललाटन्तपनिष्ठुरें'ति नैषधम् ।

**ललाटपट्ट** न० ललाटं पट्टमिव विस्तीर्णम् । प्रशस्तललाटे ललाटफलकादयोऽप्यत्र । [चिह्ने च ।

**ललाटिका** स्त्री० ललाटे आबध्यते ठन् । ललाटभूषणे । ललाटस्थे

**ललाम** न० लल-अच् तमस्यति अन अण्, प्रधाने, ध्वजे, शृङ्गे, वालधौ, चिह्ने, भूषायां च घोटके पु० । नान्तमपि ।

**ललामक** न० ललाम तिलकमिव इवार्थे कन् । ललाटपर्य्यन्तं सम्यग् बध्यस्ते माल्यभेदे ।

**ललित** न० लल-क्त । शृङ्गारानुगुणे चेष्टाभेदे, स्वरभेदे पु० । सुन्दरे,

ईप्सिते त्रि० लड-क्त डस्य लः। चालने न० कस्तूर्य्यां नदीभेदे स्त्री०।
ललितासप्तमी स्त्री० भाद्रशुक्लसप्तम्याम्, तद्दिनकर्तव्ये व्रतभेदे च।
लव पु० लू अप्। लेशे, विनाशे, छेदने, श्रीरामपुत्रे, कालपरिमाणभेदे, गोलाङ्गूललोम्नि, वाले च।
लवङ्ग न० लू-अङ्गच्। लवङ्गनामख्याते वृक्षे। स्वार्थे कन् तत्रैव
लवङ्गकलिका स्त्री० लवङ्गं कलिकेव। लवङ्गे।
लवण न० लू-ल्युट् पृ० णत्वम्। रसभेदे, तत्प्रधाने-सैन्धवसौवर्चलविडादिरूपे पदार्थे च। तदुत्पत्तिस्थाने-सिन्धुभेदे, समुद्रे, मधुदैत्यसुते असुरभेदे च पु०। लवणरसयुक्ते, लावण्यवति च त्रि०। नदीभेदे महाज्योतिष्मत्यां, दीप्तौ च स्त्री०।
लवणकिंशुका स्त्री० लवणरसान्वितः किंशुकः तन्नामकं फलं यस्याः। महाज्योतिष्मत्याम्।
लवणक्षार पु० लवणमयः क्षारः। लवणरसयुक्ते क्षारे।
लवणखनि स्त्री० ६त०। शाकम्भरीलवणोत्पत्तिस्थाने।
लवणधेनु स्त्री० दानार्थं कल्पितायां लवणनिर्मितायां धेनौ।
लवणाचल पु० दानार्थं कल्पिते अचलाकारे लवणस्तूपे। [योऽप्यत्र।
लवणाब्धि पु० लवणमयोऽब्धिः। लवणमधुरसमुद्रे। लवणसमुद्राद-
लवणाब्धिज न० लवणाब्धेर्जायते जन-ड। सामुद्रलवणे(करकचलवण)
लवणोत्तम न० लवणेषु उत्तमम्। सैन्धवलवणे।
लवणोद पु० लवणमयमुदकं यस्य उदादेशः। लवणसमुद्रे।
लवन न० लू ल्युट्। छेदने (लोना आता) वृक्षे स्त्री० ङीप्।
लवली स्त्री० लवं लेशं लाति-ला-क गौ० ङीप्। (नोयाड़) वृक्षे।
लवित्र न० लूयतेऽनेन लू-इत्र। दात्रे। [(ष)(स)नात
लश (ष) (स) शिल्पयोगे चु० उ० अक० सेट्। लाश(ष)यति ते अलीलश
लशु (शू)न न० लश-ऊनन् उनन् वा। रसुने।
लष स्पृहायां दिवा० भ्वा० च उभ० सक० सेट्। लष्यति-ते लषति ते अलषीत्। अलाषीत् अलषि ष्ट। [अलषीत्।
लस श्लेषे क्रीडायां दीप्तौ च अक०भ्वा०पर० सेट्। लसति-अलासीत्

लसा स्त्री० लसति लस-अच् । हरिद्रायाम् ।

लसीका स्त्री० लस-ईकक् । इक्षुरसे ।   [अनिट् तस्य नश्च । लग्नः ।

लस्ज व्रीडायां भ्वा०आ०अक०सेट् । लज्जते अलज्जिष्ट । निष्ठाया-

लस्त त्रि० लस-क्त नि० इडभावः । श्लिष्टे, क्रीडिते, शिल्पयुक्ते च ।

संज्ञायां कन् । धनुर्मध्यभागे पु० ।   [वा ङीप् । महातरङ्गे ।

लहरि (री) स्त्री० लेन-इन्द्रेणेव ह्रियते ऊर्ध्वगमनाय हृ-कर्मणि इन्

ला आदाने अदा० पर०सक०अनिट् । लाति अलासीत् ।

लाक्षणिक त्रि०लक्षणया बोधयति ठक् । लक्षणया अर्थबोधके शब्दे ।
अस्त्यर्थे ठन् स्वार्थे अण् । लक्षणयुक्ते ।

लाक्षण्य त्रि० लक्षणं वेत्ति अञ् । शुभाशुभलक्षणज्ञे । अस्त्यर्थे ष्यञ्
यत् वा । लक्षणयुक्ते 'ल(ला)क्षण्यां स्त्रियमुद्वहे'दिति स्मृतिः ।

लाक्षा स्त्री० लक्ष्यतेऽनया लक्ष-अ पृ० वृद्धिः । (ला) ख्याते पदार्थे ।

लाक्षातरु पु० लाक्षयोनिस्तरुः । (ला)द्रव्यसाधने द्रु लाक्षावृक्षादयोऽप्यत्र ।

लाक्षातैल न० लाक्षया पक्वं तैलम् । वैद्यकप्रसिद्धे तैलभेदे ।

लाक्षाप्रसाद पु० लाक्षायां प्रसादो यस्य । पट्टिकालोध्रे ।

लाक्षाप्रसाधन न० प्रसाध्यते भूष्यतेऽनेन ल्युट् लाक्षा तद्रस एव
प्रसाधनम् । अलक्तके ।

लाक्षारस पु० लाक्षानिःसृतो रसः द्रवः । अलक्तकरसे ।

लाख शोषे, भूषणे, दाने वारणे च सक० सामर्थ्ये अक० भ्वा० पर०
सेट् । लाखति अलाखीत् चङि न ह्रस्वः ।

लाघ सामर्थ्ये भ्वा०आ०अक०सेट् । लाघते अलाघिष्ट चङि न ह्रस्वः ।

लाघव न० लघोर्भावः अण् । लघुत्वे, आरोग्ये च ।

लाङ्गल न० लगि-कलच् पृ० वृद्धिः । स्वनामख्याते भूमिकर्षके पदार्थे ।

लाङ्गलदण्ड पु० ६त० । लाङ्गलमध्यस्थे काष्ठमये दण्डे (ईश)

लाङ्गलपद्धति स्त्री० लाङ्गलजाता पद्धतिः रेखा । सीतायाम् लाङ्गल
जातक्षेत्रस्थभूमिरेखायाम् ।

लाङ्गलिकी स्त्री० लाङ्गलमिवाकारोऽस्त्यस्याः ठन् गौ० ङीष् । (विष-
लाङ्गला) वृक्षभेदे । तत्र भवः अण् । विषभेदे पु० ।

लाङ्गलिन् पु० लाङ्गलं प्रहरणसाधनत्वे नास्त्यस्य इनि। बलरामे लाङ्गलदण्ड इव दीर्घः आकारोऽस्त्यस्य इनि। नारिकेलवृक्षे।

लाङ्गली स्त्री० लाङ्गलाकारः पुष्पमस्त्यस्याः अच् गौरा०ङीष्। (कांचड़ा) शाकभेदे।

लाङ्गूल न० लगि ऊलच् वृ०। पशूनां पश्चाद्वर्त्तिनि रोमगुच्छे।

लाङ्गूलिका स्त्री० लाङ्गूलाकारोऽस्त्यस्याः ठन्। पृश्निपर्ण्याम्

लाङ्गूलिन् पु० लाङ्गूलमस्त्यस्य इनि। वानरे तदाकारपुष्पवति ऋषभौषधे च।

लाछ अङ्कने भ्वा० पर० सक०सेट् इदित्। लाञ्छति अलाञ्छीत्।

लाज भर्त्सने भ्वा०पर० सक०सेट्। लाजति अलाजीत्। इदित्त्वपक्षे यम्। लाञ्जति अलाञ्जीत्।

लाज न० लाज-अच् घञ् वा। उशीरे। आर्द्रतण्डुले पु०। भृष्टधान्ये (खई) पु० ब० व०स्त्रीत्वमप्यत्र। [ भावे ल्युट्। अङ्कने।

लाञ्छन न० लाञ्छ्यते लाछि-कर्म्मणि ल्युट्। चिह्ने, नामनि च

लाट पु०लट-संज्ञायां घञ्। देशभेदे, वस्त्रे, जीर्णालङ्कारे,विदग्धपुरुषे च

लाटानुप्रास पु० लाटस्य विदग्धस्य प्रियः कर्म०। अलङ्कारोक्ते शब्दालङ्कारभेदे

लाड क्षेपे अद० चु०उभ० सक०सेट्। लाडयति ते अललाडत् त

लाभ पु०लभ्यते लभ-कर्मणि घञ्। मूलधनादितोऽधिके लभ्यमाने धने। भावे घञ्। प्राप्तौ। [ कप्। वीरणमूले

लामज्जक न० लायते ला-क्विप् लाः आदीयमानः मज्जा सारोऽस्य

लालन न०पु० लल-ल्युट्। स्नेहपूर्वकपालने।

लालसा स्त्री०लस स्पृहायां यङ् अ। अतिशयेच्छाम् गर्भिणीदोहदे च

लाला स्त्री० पु० लल-अ टाप्। मुखजजललवे।

लालाटिक पु० ललाटं प्रभोर्भाग्यं पश्यति ठञ्। प्रभुभाग्योपजीविनि-कार्य्याक्षमर्थे। ललाटात् ललाटस्थभाग्यात् आगतः तच्छेदं वा ठण्। भाग्याधीने त्रि० प्राप्तिस्तु लालाटिकीत्युक्तः ललाटदर्शिनि त्रि०।

लालाविष पु० लालायां विषमस्य । लूतादौ कीटे ।

लालाद्राव लालां द्रावयति द्रु-णिच्-अण् । लूताकीटे ।

लालित्य न० ललितस्य भावः ष्यञ् । सौन्दर्य्ये, मनोहरत्वे "नैषधे पद-लालित्यम्" इत्युद्भटः ।

लाव पु० लू-कर्त्तरि घञ् । पक्षिभेदे । स्वार्थे कन् । तत्रैव भावे घञ् । छेदने

लावण न० लवणेन संस्कृतम् अण् । लवणसंस्कृते ओषधादौ ।

लावणिक न० लवणेन संस्कृतम् ठण् । लवणेन संस्कृतौषधादौ, लवणं पण्यमस्य ठण् । लवणविक्रयोपजीविनि वणिग्भेदे

लावण्य न० लवणस्य भावः ष्यञ् । लवणत्वे, 'मुक्ताफलेषु च्छायायास्त-रलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते,' इत्युक्ते देहसौन्दर्य्यभेदे च ।

लासिका स्त्री० लस-ण्वुल् । नर्त्तक्याम् पु० । लासकोऽप्यत्र ।

लास्य न० लस-ण्यत् । नृत्ये, वाद्यनृत्यगीतत्रिके । 'स्त्रीनृत्यं लास्यमुच्यते,' इत्युक्ते स्त्रीनृत्ये च । स्वार्थे कन् तत्रैव ।

लिकुच पु० लकुच+पृ० इत्वम् (मान्दार) वृक्षे ।

लिक्षा (क्षा) स्त्री० लक्ष-अ पृ० वा इत्वम् वा कस । यूकाण्डे, "जाला-न्तरगते भानौ यच्चाणुदृश्यते रजः । तैश्चतुर्भिर्भवेल्लिक्षेत्युक्ते परि-माणभेदे ।

लिख लेखने तुदा० पर० सक० सेट् । लिखति अलेखीत् । कुटादिरप्ययम्

लिख गतौ भ्वा० पर० सक० सेट् इदित् । लिङ्खति अलिङ्खीत् ।

लिखन न० क्ष लिख—ल्युट् । लेखने लिपौ च,

लिखित न० लिख-भावे क्त । लेखने । आधारे क्त । लिपौ, विवादे अर्थसाधके पत्रादौ च 'प्रमाणं लिखितम्' इति स्मृतिः

लिग गतौ भ्वा० पर० सक० सेट्-इदित् । लिङ्गति अलिङ्गीत् ।

लिग चित्रीकरणे चुरा० उभ० सक० सेट् इदित् लिङ्गयति ते । अलि-लिङ्गत् त ।

लिङ्ग पु० लिगि—अच् । चिह्ने, पुंसोऽसाधारणचिह्ने, अनुमानसाधने हेतौ, सांख्योक्ते प्रधाने, शिवमूर्त्तिभेदे, ज्ञाप्ये, व्यक्ते, शब्दनिष्ठे

पदवाच्यताप्रयोजके धर्म्मभेदे, अर्थप्रकाशनसामर्थ्ये च 'शक्तता च लिङ्गमिति' मीमांसकाः ।

लिङ्गक पु० लिङ्गेन कायति कै-क । कपित्थवृक्षे ।

लिङ्गवर्द्धिनी स्त्री० लिङ्गं पुरुषचिह्नभेदं वर्द्धयति वृध णिच् णिनि । अपामार्गे ।

लिङ्गवृत्ति पु० लिङ्गं संन्यासादिवेशधारणमेव वृत्तिः जीविका यस्य । जीविकार्थसन्यासचिह्नादिधारिणि कपटपरिव्राजके [लताभेदे ।

लिङ्गिनी स्त्री० लिङ्गमिवाकारोऽस्त्यस्याः इनि ङीप् । (पंचगुरिया)

लिङ्गिन् त्रि० लिङ्गमस्त्यस्य इनि । चिह्नवति, जीविकार्थसंन्यासादिचिह्नवति, प्रशस्तलिङ्गवति गजे च पु० । [पत अलिप्त ।

लिप लेपने, तुदा०उभ०मुचा०सक०अनिट् । लिम्पति ते अलिपत् अलि-

लिपि (पी) स्त्री० लिप-इक् वा ङीप् । लिखिताक्षरके पत्रे, लेखने च ।

लिपिकर (का) र पु० लिपिं करोति कृ-अच् अण् वा । लेखके ।

लिप्त त्रि० लिप-क्त । भुक्ते, कृतचन्दनादिलेपे, मिलिते, विषदिग्धे च । ज्योतिषोक्ते राशेः षष्टिभागात्मके कलारूपे भागे । 'लिप्तार्द्धहीनं यदि पूर्वमेतदि'ति ताजकम् दण्डात्मककाले पु० । स्वार्थे कन् । अत इत्त्वम् । तत्रैव ।

लिप्तक पु० कुत्सितं लिप्तम् कन् विषाक्तबाणे ।

लिप्सा स्त्री० लभ-सन्-अ । लाभेच्छायाम् ।

लिम्पाक पु० लिप-आकन् पु० । जम्बीरभेदे (पातिलेवु) खरे च ।

लिवि (वी) स्त्री० लिप-इक् पृ० पस्य व० वा ङीप् । लिपिशब्दार्थे लिबिकरादयोपि लिपिकराद्यर्थे ।

लिश्न अल्पीभावे च दि० आ० अक० अनिट् । लिश्यते अलिक्षत ।

लिश गतौ तु०पर०सक०अनिट् । लिशति अलिक्षत ।

लिह आस्वादने अदा० उभ० स० अनिट् । लेढि लीढे । अलिक्षत् त ।

ली श्लेषे दिवा०आ० अक० अनिट् । लीयते अलेष्ट । निष्ठातस्य नः । लीनः ।

ली श्लेषे क्र्या०प्वा०पर०सक०अनिट् । लिनाति अलैषीत् ।

**ली** द्रावणे वा चु०उभ०सक०पक्षे भ्वा०प०अनिट्। लाययति ते लापयति ते लयति अलीलयत् त अलीलपत् त अलैषीत्।

**लीढ** त्रि० लिह-आस्वादे क्त। आस्वादिते, स्पृष्टे च।

**लीला** स्त्री० ली-क्विप् लियं लाति अच्। केलौ, विलासे, शृङ्गारादि-चेष्टायाम् क्रीड़ायाञ्च।

**लीलावती** स्त्री० लीला+अस्त्यर्थे मतुप् मस्य वः। विलासवत्यां स्त्रियां, भास्कराचार्य्यस्य पुत्र्यां, तत्कृते अङ्कग्रन्थभेदे, न्यायशास्त्रप्रसिद्धे "नाद्यः सृजतीत्यादिके' पदार्थप्रतिपादके ग्रन्थभेदे पुराणप्रसिद्धे वेश्याभेदे च।

**लीलोद्यान** न० लीलार्थमुद्यानम्। क्रीड़ार्थे आरामे, देववने च।

**लुक्कायित** त्रि० लुच्यते लुन्च-अपनयने क्विप् लुक् कायो यस्य तादृश-इवाचरति लुक्काय+क्विप्-क्त। अन्तर्हितदेहे। गुप्तदेहे।

**लुज** कथने अद्दधातोरर्थे च चुरा०उभ०सक०सेट् इदित्। लुञ्जयति ते अलुलुञ्जत् त।

**लुञ्चित** त्रि० लुन्च णिच्-क्त। अपसारिते दूरीकृते।

**लुट** दीप्तौ अक० प्रतिघाते सक०भ्वा० आत्म०सेट्। लोटते लुङि उभ० अलुटत् अलोटिष्ट।

**लुट** हरणे भ्वा०पर०सक०सेट् इदित्। लुण्टति अलुण्टीत्।

**लुट** दीप्तौ चु०उभ०सक०सेट्। लोटयति ते अलूलुटत् त।

**लुठ** विलोड़ने, हरणे च सक० पर०सेट्। लुठति अलुठत्। चङि वा ह्रस्वः।

**लुठ** विलोड़ने, विमोटने च भ्वा०पर०सक०सेट् लोठति अलोठीत्।

**लुठ** गतौ चौर्य्ये च सक० खञ्जीभावे आलस्ये च अक०भ्वा०पर० सेट् इदित् लुण्ठति अलुण्ठीत्।

**लुठ** प्रतीघाते भ्वा०आ-लुङि उ०सक०सेट्। लोठते। अलुठत् अलोठिष्ट।

**लुठ** उपघाते भ्वा०पर०सक०सेट्। लोठति अलोठीत्।

**लुठ** लोटे तु०कु०प०अक०सेट्। लुठति अलुठीत्।

लुठ चौर्य्ये चु०उभ०सक०सेट् । लोठयति ते अलूलुठत् त ।
लुठन न० पु० लुठ-ल्युट् । अश्वादेर्भूम्यादौ श्रमापनयनार्थं पुनः पुनरङ्गचालने (लोटा)
लुठित त्रि०लुठ-क्त । भूरिलताङ्गपरावर्त्तने ।
लुड मन्थने भ्वा०पर०सक०सेट् । लोडति अलोडीत् ।
लुड संवृतौ सक० लेषे अक०तु०कु०पर०सेट् । लुडति अलुडीत् ।
लुण्ट अपमायां चौर्य्ये च वा चु०उ०पक्षे भ्वा०प०सक०सेट् । लुण्टयति ते लुण्टति अलुलुण्टत् त अलुण्टीत् ।
लुण्टक पु० लुण्ट-ण्वुल् । (नटिया) शाकभेदे ।
लुण्टाक त्रि० लुण्टि-काकन् । चौरे स्त्रियां गौ० ङीष् ।
लुण्ठक त्रि० लुण्ठि-ण्वुल् । चौरे ।
लुण्ड चौर्य्ये चु०उ०सक० सेट् । लुण्डयति ते अलुलुण्डत् त ।
लुन्थ वधे सक०क्लेशे अक०भ्वा० पर०सेट् इदित् । लुन्थति अलुन्थीत्
लुन्च अपनयने भ्वा०पर०सक०सेट् । लुञ्चति अलुञ्चीत् ।
लुप् छेदने विनाशने च तु० मु० उ० स० अनिट् । लुम्पति ते अलुपत् अलुप्त । चङि० वा लृदन्तः । अलूलुपत् अलुलोपत् ।
लुप आकुलीभावे दिवा० पर०अक० सेट् । लुप्यति अलुपत् अलोपीत् नित्यमङ् इत्यन्ये ।
लुप्त न० लुप-क्त । अपहृतधने नष्टे । छिन्ने त्रि० ।
लुब अर्द्दने वा चु० उ०पक्षे भ्वा० पर० सक० सेट् इदित् । लुम्बयति ते लुम्बति ; अलुलुम्बत् त अलुम्बीत् ।
लुब्ध पु० लुभ-क्त । व्याधे । स्वार्थे कन् तत्रैव ; लम्पटे लोलुपे च त्रि०
लुभ विमोहने तु० पर० अक० सेट् । लुभति अलोभीत् ।
लुभ आकाङ्क्षायां दि० प० स० सेट् । लुभ्यति । अलुभत्-अलोभीत्
लुल विमर्द्दने भ्वा०पर० सक० सेट् । लोलति । अलोलीत् ।
लुलाप पु० लुल-घञर्थे क तमाप्नोति आप् । महिषे ।
लुलित त्रि०लुल-क्त । आन्दोलिते, चालिते च "अथ लुलितपतत्रिमालाम" इति भट्टिः ।

लुष चौर्य्ये भ्वा०पर०सक० सेट् । लोषति अलोषीत् ।

लुष हिंसायां चौ० पर०सक०सेट् । लोषति अलोषीत् ।

लुह आकाङ्क्षायां भ्वा० पर०सक० अनिट् । लोहति अलुचत् ।

लू छेदने क्र्या० प्वा० उभ०सक० सेट् । लुनाति लुनीते अलावीत्

लूता स्त्री० लू-तक् । कीटभेदे (माकड़सा)। स्वार्थे कन् अतइत्वम् । तत्रैव ।

लून त्रि० लू-क्त निष्ठातस्य नः । छिन्ने ।

लूम न० लू-मक् । लाङ्गूले ।

लूष बधे स्तेये च चु० उभ० सक० सेट् । लूषयति ते अलूलुषत्

लेख पु० लिख्यते चित्रादि पटेऽसौ लिख-कर्म्मणि घञ् । देवे भावे घञ् लेखने । कर्म्मणि घञ् । लेख्ये त्रि० । आधारे घञ् । पत्रे लिपौ च निर्द्धारितेऽर्थे लेखेनेति माघः ।

लेखक पु० लिख-ण्वुल् । लिपिकरे ।

लेखन न० लिख०ल्युट् । पत्त्रादौ वर्णादिविन्यासे, छर्दने च । आधारे ल्युट् । भूर्ज्जपत्रे लिख्यतेऽनया ल्युट् । लेखनसाधने स्त्री० ङीप् । मस्याधारं लेखनीञ्चे'ति स्मृतिः ।

लेखनिक पु० लेखनं शिल्पं यस्य ठन् । लिपिकरे ।

लेखर्षभ पु० लेख ऋषभ इव श्रेष्ठत्वात् । इन्द्रे ।

लेखहार पु० लेखं हरति हृ-अण् । पत्त्रवाहके । ण्वुल् । लेखहारकोऽप्यत्र । [ घञ् टाप् । लिपौ ।

लेखा स्त्री० लिख-अ टाप् । रेखायां, पङ्क्तौ च । आधारे संज्ञायां

लेख्य त्रि० लिख-ण्यत् । लेखनीये । व्यवहारे स्वत्वाद्यावेदके पत्त्रभेदे न० ।

लेख्यपत्त्र पु० लिख्यतेऽत्र ण्यत् लेख्यं पत्त्रं यस्य । तालवृक्षे ।

लेप गमने भ्वा० आत्म० सक० सेट् चङि न ह्रस्वः । लेपते अलेपिष्ट

लेप पु० लिप लेप-वा घञ् । भोजने लेपने च । कर्म्मणि घञ् । सुधायाम् ( कलिचुन )।

लेपक पु० लिम्पति लिप ण्वुल् । लेपनकरे जातिभेदे । पलगण्डे ।

लेपन न० लिप-ल्युट् । (लेपा) इति ख्याते व्यापारे । कर्मणि ल्युट् । तुरुष्कनामगन्धद्रव्ये ।

लेलिहान पु० लिह-यङ् कानच् पृ० यलोपः । सर्पे, पुनः पुनः लेहनकरे तारादिदेवताप्रजाङ्गे अङ्गुल्यादिदर्शनविशेषविशेषरूपे मुद्राभेदे स्त्री० । तल्लक्षणं वाचस्पत्ये ।

लेश पु० लिश-अल्पीभावे घञ् । अल्पे, लवे च ।

लेष्टु पु० लेष-तुन् । लोष्टे ।

लेष्टुघ्न पु० लेष्टुं हन्ति हन क । लोष्टभेदके मुद्गरे । लेष्टुभेदनोऽप्यत्र ।

लेह पु० लिह-घञ् । आहारे, आस्वादे (चाटा) वप्रापारभेदे च । भावे ल्युट् । लेहनमप्यत्र न० ।

लेहिन पु० लिह-इनन् । टङ्कणे (सोहागा) ।

लेह्य त्रि० लिह-ण्यत् । जिह्वया आस्वाद्ये । अमृते न० ।

लैङ्ग न० लिङ्गमधिकृत्य कृतो ग्रन्थः अण् । अष्टादशसु, महापुराणेषु तृतीये पुराणे, लिङ्गं तदाकारः कन्दस्थो फलेषु यस्याः अण् ङीप् । लिङ्गिनीवृक्षे । तस्येदमण् । लिङ्गसम्बन्धे त्रि० ।

लैङ्गिक त्रि० लिङ्गेनानुमापकचिह्नादिना आपादितस्तत आगतो वा ठण् । लिङ्गादिभिः कल्पिते ।

लोक दीप्तौ चु० उ० सक० सेट् । लोकयति ते अलुलोकत् त ।

लोक दर्शने भ्वा० आ० सक० सेट् । लोकते अलोकिष्ट । चङि न ह्रस्वः । अलुलोकत ।

लोक पु० लोक्यतेऽसौ लोक-घञ् । भुवनेषु, जने च ।

लोकपाल पु० लोकान् पालयति पा-णिच् अण् । लोकपालके नृपे, इन्द्रादिदिक्पाले, विनायकादिषु पञ्चसु । लोकरक्षकमात्रे त्रि० । लोकनाथादयोऽप्यत्र ।

लोकबान्धव पु० लोकानां बान्धवः सर्वकर्मप्रवर्त्तकत्वात् । सूर्य्ये ।

लोकमातृ स्त्री० लोकानां मातेव रक्षिका । लक्ष्म्याम् ।

लोकलोचन पु० लोकैर्लोच्यतेऽनेन लुच-ल्युट् । सूर्य्ये । द्विन० । सूर्य्ये न० । लोकनेत्रादयोऽप्यत्र न० ।

लोकबाह्य त्रि॰ बहिश्चरति वहिस्+अञ् टिलोपश्च ५त॰। लोकबहिर्भूते

लोकायत न॰ लोकेषु आयतम् विस्तीर्णम् अनायाससाध्यत्वात्।
चार्वाकमते।

लोकायतिक पु॰ लोकायतं तन्मतम् अस्त्यस्य ठन्। चार्वाके।

लोकालोक पु॰ लोक्यतेऽसौ लोकः न लोक्यतेऽसौ कर्म्म॰ स्वनामख्याते
सूर्य्यकिरणसम्पर्कसीमापर्वते। तस्य च पार्श्वयोरातपानातपसम्ब-
न्धात्तथात्वम्।

लोकेश पु॰ ६त॰। ब्रह्मणि, नृपतौ, पारदे च।

लोच दीप्तौ चु॰उ॰ अ॰सेट्। लोचयति ते अलुलोचत् त चङि न ह्रस्वः।

लोच दर्शने भ्वा॰ आ॰ स॰ सेट्। चङि न ह्रस्वः। लोचते अलोचिष्ट

लोचक न॰ लोच-ण्वुल्। मांसपिण्डे, अक्षितारके, कज्जले, स्त्रीणां
ललाटाभरणे, नीलवस्त्रे, कर्णपूरे, कदल्यां, मूर्वायां सर्पकञ्चुके च।

लोचन न॰ लोच्यतेऽनेन करणे ल्युट्। नेत्रे। भावे ल्युट्। दर्शन-
क्रियायाम्। युच्। दर्शने आलोचने च स्त्री॰ टाप्।

लोचनहिता स्त्री॰ ६त॰। तुत्थाञ्जने। (तुँते)।

लोचमस्तक पु॰ लोचयते इति लोचं मस्तकं यस्य। मयूरशिखायाम्।

लोट(ड) उन्मादे भ्वा॰ पर॰सक॰सेट् चङि न ह्रस्वः। लोट(ड)ति।
अलोटी(डी)त्। [लोणाम्लाम्लत्र स्त्री॰।

लोणा स्त्री॰ लवणमपेक्षते भक्षणसमये अण् ष्ट॰। क्षुद्राम्लिकायाम्,

लोणार न॰ लवणमृच्छति कारणत्वेन ऋ-अण् उप॰। ष्ट। लवणजे
क्षारभेदे। [लवणे च पु॰।

लोत न॰ लू तन्। चौरधने, लोम्नि, (चमाल) चिह्ने च। नेत्राम्बुनि,

लोत्र न॰ लू-ष्ट्रन्। चक्षुर्जले, चोरितधने च।

लोध्र पु॰ रुध-अच् रस्य लः। स्वनामख्याते वृक्षे।

लोध्र पु॰ रुध-रन् रस्य लः। (लोध) ख्याते वृक्षे।

लोप पु॰ लुप-घञ्। विनाशे, छेदने, आकुलीभावे, व्याकरणोक्ते अद-
र्शनरूपे नाशे च। लोपयति स्त्रीणां रूपगर्भम् अच्। अगस्त्य-
पत्न्यां स्त्री॰।

लोपामुद्रा स्त्री० मुदं राति रा—क कर्म्म० । अगस्त्यमुनिपत्न्याम् ।
लोप्तृ न० लुप-तृन् । स्तेयधने स्त्रीत्वमपोच्यते तत्पक्षे ङीप् ।
लोभ पु० लुभ—आकाङ्क्षायाम् घञ् । परद्रव्येषु अतिशयिताभिलाषे ।
लोभिन् त्रि० लुभ—णिनि । परद्रव्येषु अतितृष्णावति ।
लोभ्य पु० लुभ—यत् । मुद्गे । लोभनीयपदार्थे त्रि० । [कूले च ।
लोम न० लू—मन् । देहजाते केशाकारे रोमाख्ये द्रव्ये, तद्वति ला-
लोमकर्ण पु० लोमबहुल: कर्णो यस्य शाक० । शशके ।
लोमकूप पु० लोम्नां कूप इव । रोमाधारे बिन्दाकारे, गर्त्ते
लोमघ्न न० लोमानि हन्ति हन—टक् (टाक) रोगभेदे ।
लोमन् लू—मनिन् । देहस्थे केशतुल्ये (रोया) पदार्थे ।
लोमपाद पु० लोमयुक्तौ पादावस्य । अङ्गदेशस्थनृपभेदे ।
लोमश पु० लोमानि बाहुल्येन सन्त्यस्य श । मुनिभेदे । लोमयुक्ते त्रि०
काकजङ्घायां, जटामांस्यां, वचायाम्, शुकशिम्ब्याम् सहामेदायां,
बलायां च स्त्री० ।
लोमशकाण्डा स्त्री० लोमश इव काण्डोऽस्याः । कर्कट्याम् ।
लोमशपर्णिका स्त्री०लोमशानीव पर्णानि सन्त्यस्याः ठन् । माषपर्ण्याम्
लोमशपुष्पक पु० लोमशमिव पुष्पमस्य । शिरीषवृक्षे ।
लोमहर्षण न० लोम्नां हर्षणं हर्षजनकव्यापारइव उद्भेद इति
यावत् । रोमाञ्चे । लोमानि हर्षयति उत्तमकथया हृष-णिच्-ल्यु
व्यासशिष्ये सूतवंश्ये स्वनामख्याते पौराणिके ।
लोमहृत् पु० लोमानि हरति हृ-क्विप् तुक् च । हरिताले
लोल त्रि० लोड अच् डस्य लः । सतृष्णे, चञ्चले च जिह्वायां
लक्ष्म्याञ्च स्त्री० । [(चुकोपालङ्ग) ।
लोलिका स्त्री० लोडयति सेवने दन्तान् लोड-ण्वुल् । चाङ्गेर्याम्
लोलित त्रि० लल-विमर्दे णिच् क्त । चालिते ।
लोलुप (भ) त्रि० लुभ-यङ् अच् पृ० भस्य वा पः । अतिलोभयुक्ते ।
लोष्ट संहतौ भ्वा०आ०स०सेट् । लोष्टते अलोष्टिष्ट ।
लोष्ट पु०न०लोष्ट-घञ् अच् वा । मृत्पिण्डे (ढेला) लौहमले च

लोष्टघ्न पु० लोष्टं हन्ति मर्द्दयति हन-क । लोष्टभेदने मुद्गरादौ ।

लोष्टभेदन पु० लोष्टं भिनत्ति विमर्द्दयति भिद ल्यु । लोष्टभेदनसाधके मुद्गरादौ ।

लोह पु० न० लू-विच् लौस्तं जहाति हा-क । धातुभेदे, धातुमात्र सीसे च । अगुरुचन्दने न० ।

लोहकण्टक पु० लोहमिव कण्टको यस्य । मदनवृक्षे ।

लोहकार पु० लोहं तन्मयं शस्त्रादि करोति कृ-अण् । कर्मकारे ण्वुल् । लोहकारकोऽप्यत्र ।

लोहकिट्ट न० ६त० । लौहमले । (लोहार म्) ।

लोहचूर्ण न० ६त० (लोहाचुर) ख्याते पदार्थे । [हयजे कांस्ये च ।

लोहज न० लोहात् लोहास्थां वा जायते जन-ड । लोहमले, धातु-

लोहद्राविन् पु० लोहानि धातुद्रव्याणि द्रावयति द्रु-णिच् णिनि । टङ्कणे (सोहागा) । धातुद्रावके त्रि० ।

लोहपृष्ठ पु० लोहमिव कठिनं पृष्ठमस्य । कङ्कपक्षिणि । [मशाके ।

लोहमारक पु० लोहं मारयति जारयति मृ-णिच्-ण्वुल् । शालि-

लोहल पु० लोहमिव लाति ला-क । अव्यक्तवचने, लोहप्राहके त्रि०

लोहवर न० लोहेषु सर्वधातुषु मध्ये वरम् । स्वर्णे ।

लोहश्लेषण न० लोहानि स्वर्णादीनि श्लेषयति योजयति श्लिष-णिच् ल्यु । टङ्कणे (सोहागा) । [ रौप्यादौ ।

लोहसङ्कर न० लोहानां धातुद्रव्याणां सङ्करो यत्र । मिश्रित धातौ

लोहाभिसा (हा)र पु० लोहेन अभिसि (ह्रि)यतेऽत्र सृ(हृ)-वा घञ् । राज्ञां युद्धयात्रादौ शस्त्रनीराजनाविधौ ।

लोहित न० रुह-इतच् रस्य लः । कुङ्कुमे, रक्तचन्दने, दरणकुङ्कुमे, रुधिरे च । रक्तशोभाञ्जने, रक्तवर्णे च पु० तद्वति त्रि० ।

लोहितक न लोहितमिव कायति कै-क । पित्तले । लोहित+इवार्थे कन् । पद्मरागमणौ, मङ्गलग्रहे च पु० ।

लोहितचन्दन न० कर्म० । कुङ्कुमे रक्तचन्दने च ।

लोहितपुष्पक पु० लोहितानि रक्तानि पुष्पाण्यस्य कप् । दाडिमवृक्षे ।

लोहितमृत्तिका स्त्री० कर्म० । गैरिके (गेरिमाटी) ।

लोहिता स्त्री० लोहित+अर्श आद्यच् । वराहक्रान्तायां, रक्त पुनर्नवायाञ्च । [ च । रक्तेनेवर्त्तति त्रि० ।

लोहिताक्ष पु० लोहिते अक्षिणी यस्य षच् समा० । विष्णौ, कोकिले

लोहिताङ्ग पु० लोहितमङ्गमस्य । मङ्गलग्रहे, काम्पिल्लवृक्षे च ।

लोहितायस् न० लोहितवर्णमेति इण् असुन् । ताम्रे ।

लोहितायस न० लोहितमयः अच् स० । ताम्रे, रक्तवर्णायो जातिभेदे च । [ स्त्रियाम्

लोहिनी स्त्री० लोहितवर्णा स्त्री ङीप् तस्य नश्च । रक्तवर्णयुक्तायां

लोहोत्तम न० लोहेषु धातुषूत्तमम् । स्वर्णे ।

लौकायतिक न० लोकायतं चार्वाकशास्त्रं वेत्त्यधीते वा ठण् । चार्वाकमताभिज्ञे । [ प्रसिद्धे च ।

लौकिक त्रि० लोके विदितः प्रसिद्धो वा ठण् । लोकविदिते लोक-

लौकिकाग्नि पु० कर्म० । विधानेनासंस्कृते वह्नौ ।

लौड उन्मादे भ्वा०पर०सक० सेट् चङि न ह्रस्वः । लौडति अलौडीत् ।

लौह पु० लोहमेव स्वार्थे अण् । (लोया) धातुभेदे ।

लौहज न० लौहाज्जायते जन ड । मण्डूरे । [भवे पात्रभेदे ।

लौहभाण्ड पु० लोहस्य विकारः अण् कर्म० । (हामानदिस्ता) लौह-

लौहमल न० लोहस्य यमण् कर्म० । लोहकिट्टे ।

लौहित्य न० लोहितस्य भावः ष्यञ् स्वार्थे ष्यञ् वा । रक्तवर्णे, नदीभेदे स्त्री० । 'तीर्णलौहित्ये' इति रघुः ।

ल्पी श्लेषे क्र्या०प्वा०पर०सक०अनिट् । ल्पिनाति अल्पैषीत् ।

ल्वी गतौ क्र्या०प्वा०प०सक० अनिट् । ल्विनाति अल्वैषीत् ।

# व

व पु० वा-ड । वायौ, राहौ, मन्त्रणे, सान्त्वने, कल्याणे वलयति, वसतौ, समुद्रे, व्याघ्रे, वसने, शालूके, वन्दने च वरुणे पु०न० । सादृश्ये कव्य० 'मणी वोष्ट्रस्य लम्बेते' इति

वंश पु० वश-घ नि० नुम् । पुत्रपौत्राद्यपत्यवर्गे तृणजातिभेदे (बांश) पृष्ठावयवे, वर्गे, इक्षौ सालवृक्षे च । वाद्यभेदे स्त्री० गौ० ङीष् । 'वंशीकलेन वडिशेने'ति वृन्दावनचम्पूः । [नायाम् ।

वंशकर्पूररोचना स्त्री० कर्पूरमिव रोचते रुच-ल्यु ६त० । वंशरोच-

वंशक्षीरी स्त्री० वंशस्य क्षीरमिवास्त्यस्य अच् गौरा० ङीष् । वंशरोच-नायाम् ।

वंशज पु० वंशात् जायते जन-ड । वंशवृक्षजाते यवाकारे द्रव्ये । सत्कु-लजाते त्रि० । वंशरोचनायां स्त्री० टाप् ।

वंशतण्डुल पु० ६त० । वेणुजाते तण्डुलाकारे पदार्थे ।

वंशधर त्रि० वंशं धरति । कुलाविच्छेदकारके वंशवर्त्तिनोऽपत्ये ।

वंशनेत्र न० वंशस्येव नेत्रमस्य । इक्षुमूले ।

वंशपत्र पु० वंशस्य पत्रमिव पत्रमस्य । नलनामके तृणे ६त० वंशदले न० । नाडीहिङ्गौ स्त्री०गौ०ङीष् । स्वार्थे कन् तत्रैव

वंशपत्रक न० । वंशपत्रमिव कन् । हरिताले ।

वंशपत्रपतित न० सप्तदशाक्षरपादके छन्दोभेदे ।

वंशपीत पु० वंशस्तत्पत्रमिव पीतः । कणगुग्गुलौ

वंशपुष्पा स्त्री० वंशस्य पुष्पमिव पुष्पमस्याः । सहदेवीलतायाम्

वंशपूरक न० वंशस्येव पूरकं यस्य । इक्षुमूले ।

वंशरो(लो)चना स्त्री० वंशेषु रोचते रुच-ल्यु वा रस्य लः । वंशपर्व-स्थिते श्वेतवर्णे कर्पूराकारे द्रव्ये । (वंशलोचन) ।

वंशशर्करा स्त्री० वंशस्य शर्करेव । (वंशलोचन) पदार्थे ।

वंशस्तनित न० । द्वादशाक्षरपादके छन्दोभेदे ।

वंशस्थविल न० । द्वादशाक्षरपादके छन्दोभेदे ।

वंशाग्र क० वंशस्य अग्रं मूलम् । वंशाङ्कुरे ।

वंशाङ्कुर पु० ६त० । (कोंड़) इति ख्याते पदार्थे ।

वंशिक न० वंशोऽस्त्यस्य ठन् वंश इव वा कन् । अगुरुचन्दने

वंशीधर पु० वंशीं वंशजवाद्यं धरति धृ-अच् । श्रीकृष्णे ।

वंश्य त्रि० वंशे सत्कुले जातः यत् । सत्कुलजाते ।

**वक** कौटिल्ये अक० गतौ सक०भ्वा०आ०सेट् इदित्। वङ्कते अवङ्किष्ट

**वक** पु० वकि-अच् पृ० नलोपः। स्वनामख्याते विहगे, स्वनामख्याते पुष्पवृक्षे, कुबेरे, राक्षसभेदे, यो भीमेन हतः। औषधादिपाचनयन्त्रभेदे, श्रीकृष्णेन हते दैत्यभेदे च।

**वकजित्** पु० वकं जितवान् जि-क्विप् उप०स०। श्रीकृष्णे भीमसेने च वकान्तकादयोऽप्यत्र।

**वकधूप** पु० वक इव शुभ्रो धूपः। वृकधूपे।

**वकपञ्चक** न०। कार्त्तिकशुक्लपक्षस्यैकादश्यादितिथिपञ्चके।

**वकपुष्प** पु० वक इव कुटिलं पुष्पमस्य। स्वनामख्याते पुष्पवृक्षे

**वकवृत्ति** पु० वकस्येव स्वार्थपरा वृत्तिर्यस्य। "अधोदृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः। शठो मिथ्याविनीतश्च वकवृत्तिरुदाहृत" इत्युक्तलक्षणे परवञ्चके जने।

**वकव्रतधर** पु० वक इव व्रतं धारयति धृ-अच्। "अधोदृष्टि नैकृतिकः स्वार्थसाधनतत्परः। शठो मिथ्याविनीतश्च वकव्रतधरो द्विज" इत्युक्ते स्वार्थसाधनतत्परे वञ्चके विप्रादौ।

**वकव्रतिन्** (क) पु०वकव्रत+अस्त्यर्थे इनि ठन् वा। वकव्रतधरे।

**वकुल** पु०वकि-कुलच् नलोपः स्वनामख्याते पुष्पवृक्षे। कटुकायां स्त्री०टाप्। काकोल्यां ङीप्। पृ०। वकूलोऽपि वकुले पु०

**वक्क** गतौ भ्वा० आत्म०सक०सेट्। वक्कते अवक्किष्ट।

**वक्तव्य** न० वच-तव्य। कुत्सिते, हीने, दुष्टे च 'दिशा वक्तव्यता पाले, इति स्मृतिः। कथनीये त्रि०। भावे क्त। कथने न०

**वक्तृ** त्रि० उचितं वक्तु वक्ति वच-तृच्। उचितवक्तृवादिनि

**वक्त्र** न० वक्त्यनेन ष्ट्रन्। मुखे, तगरमूले, वसनभेदे, छन्दोभेदे च

**वक्त्रभेदिन्** पु०वक्त्रं भिनत्ति भिद् णिनि। तिक्तरसे। मुखविदारके त्रि०

**वक्त्रवास** पु० वक्त्रं वासयति सुरभीकरोति वासि-अण्। नागरङ्गे वृक्ष०। सुखगन्धे।

**वक्त्रशोधिन्** पु० वक्त्रं शोधयति शुध-णिच् णिनि। जम्बीरे मुखशोधके ताम्बूलादौ त्रि०। स्त्रियां ङीप्।

वक्त्रासव पु० वक्त्रस्यासव इव । अधररसे ।

वक्र न० वकि-रन् पृ०नलोपः । नदीवक्रे । शनैश्चरे, मङ्गलग्रहे रुद्रे, त्रिपुरासुरे, पर्वते, कुटिलगतौ च पु० । तद्वति त्रि० 'राहुकेतू सदा वक्रा'विति ज्योतिषम् । [स्त्रियां कन् । खदिरवृक्षे ।

वक्रकण्टक पु० वक्रः कुटिलः कण्टकः कण्टकोऽस्य । बदरवृक्षे ततः सं-

वक्रखङ्ग पु० कर्म० । करवाले ।

वक्रग्रीव पु०वक्रा ग्रीवा यस्य । उष्ट्रे । कुटिलग्रीवावति त्रि०

वक्रपुच्छ पु० वक्रं पुच्छं यस्य । कुक्कुरे वक्रलाङ्गूलादयोऽप्यत्र ।

वक्रपुष्प न० वक्राणि पुष्पाण्यस्य । वकवृक्षे, पलाशवृक्षे च ।

वक्रशल्या स्त्री० वक्रं शल्यमिव पत्रादि यस्याः । कुटुम्बिनीवृक्षे

वक्राङ्ग पु० वक्राण्यङ्गान्यस्य । हंसे । कुटिलावयववति त्रि० कर्म० कुटिलदेहे न० ।

वक्रिम न० वक्रस्य भावः इमनिच् । कौटिल्ये 'वशितवक्रिम प्रेक्षित'मिति मालतीमाधवम् पृ० अदन्तोऽप्यत्र ।

वक्रोक्ति स्त्री० कर्म० । कुटिलोक्तौ, वक्रोक्तिः, वाक्यजीवितमिञलङ्का-रोक्तौ काव्याङ्गे, काकुवचने च ।

वक्ष रोषे भ्वा०पर०सक० सेट् । वक्षति अवक्षीत् च ।

वक्षस् न० वह०असुन् सुट् च । हृदये उरसि ।

वक्षः(स)स्थल न०वक्षःस्थलमिव वा विसर्गलोपः । प्रशस्तवक्षसि

वक्षोज पु० वक्षसि जायते जन-ड । स्तने "वक्षोजपानकृदि"त्युद्भटः ।

वक्षोरुह पु० वक्षसि रोहति रुह—क । स्तने ।

वख गतौ भ्वा०पर०सक० सेट् इदित् । वङ्खति अवङ्खीत् अनिदप्ययम् वखति । अवखीत् अवाखीत् ।

वग गतौ भ्वा० पर० सक० सेट् इदित् । वङ्गति अवङ्गीत् ।

वग खञ्जे भ्वा० पर० अक० सेट् इदित् । वङ्गति अवङ्गीत् ।

वगाह पु० अव+गाह—घञ् अवातो लोपः । अवगाहने ।

वघ गतौ, निन्दायाम् आरम्भे च सक० अर्थे अक० भ्वा० आ० सेट् इदित् । वङ्घते अवङ्घिष्ट ।

वङ्क पु० वकि वञ् । नदीवक्रे । पल्ययने (पालान) स्त्री० टाप् ।

वङ्ग न० वगि अच् । धातुभेदे (राङ्) 'रत्नाकरं समारभ्य ब्रह्मपुत्रान्तगं प्रिये ! वङ्गदेश इति प्रोक्त' इत्युक्ते देशभेदे पु० ब० व० । चन्द्रवंश्ये नृपभेदे पु० ।

वङ्गज न० वङ्गात् जायते जन–ड । सिन्दूरे, वङ्गदेशजाते त्रि०

वङ्गशुल्वज न० वङ्गशुल्वाभ्यां रङ्गताम्राभ्यां जायते जन–ड । रङ्गताम्रमिश्रितेकांस्ये धातौ ।

वङ्गसेन पु० वङ्गमिव शुभ्रा सेना पुष्पमस्य । बकवृक्षे ।

वङ्गारि पु० ६त० । हरिताले तस्य वङ्गधातुजारणात्तथात्वम् ।

वङ्क्षण पु० वच–ल्युट् पृ० नुम् । जरुसन्धौ (कुचकी)

वच सन्देशे चु० उभ०सक०सेट् । वाचयति ते अवीवचत् त ।

वच कथने अदा०द्विक०पर०अनिट् । वक्ति । अवोचत् । वक्ता ।

वचन न० वच–ल्युट् । कथने, वाक्ये, शुण्ठ्याम्, व्याकरणोक्ते, संख्यार्थके सुप्तिङ्रूपे प्रत्यये च । [वचनेस्थिते वशीभूते ।

वचनग्राहिन् त्रि० वचनं गृह्णाति तदनुसारेणाचरति ग्रह–णिनि ।

वचनीय त्रि० वच-अनीयर् । कथनीये, निन्दनीये लोकापवादे च "वचनीयमिदं व्यवस्थितमिति" कुमारः ।

वचनेस्थित त्रि० वचने वाक्ये तदुपदिष्टाचारे तिष्ठति स्था क्त अलुक्स० । वाक्यप्रतिपालके वशीभूते ।

वचस् न० वच–असुन् । वाक्ये ।

वचसांपति पु० ६त० अलुक्स० । बृहस्पतौ ।

वचस्कर त्रि० वचः करोति कृ-अच् कस्कादि० । वाक्यप्रतिपालके वश्ये ।

वचा स्त्री० वच-अच् । (वच) इति ख्याते द्रव्ये ।

वज गतौ भ्वा०पर०सक०सेट् । वजति । अवाजीत्-अवजीत् ।

व्रज मार्गसंस्कारे गतौ च चुरा० उभ० सक० सेट् । वाजयति ते अवीवजत् त ।

वज्र पु० न० वज-रन् । हीरके, इन्द्रास्त्रभेदे च तच्च दधीचि मुनेरस्थितो जातम् । बालके, धातकीद्रुमे, काञ्जिके, वज्रपुष्पे, लौहभेदे

स्रग्भेदे. ज्योतिषोक्ते विष्कुम्भादिषु सप्तविंशतौ योगेषु मध्ये
योगभेदे च न०। कोकिलाक्षवृक्षे, श्वेतकुशे श्रीकृष्णस्य प्रपौत्रे
यदुवंश्ये, नृपभेदे च पु०।
वज्रचर्म्मन् वज्रमिव कठिनं चर्म्म यस्य। गण्डके खड्गिनि।
वज्रतुण्ड पु० वज्राकारं तुण्डमस्य। गरुडे, गवर्ड़े, मशके, गृध्रे च।
वज्रदन्त पु० वज्रमिव कठिनो दन्तोऽस्य। शूकरे, मूषिके च वज्रदशना-
दयोऽप्यत्र
वज्रद्रु पु० वज्राकारो द्रुः। स्नुहीवृक्षे, वज्रद्रुमादयोऽप्यत्र।
वज्रधर पु० वज्रं धरति धृ अच्। इन्द्रे वज्रभृदादयोऽप्यत्र।
वज्रनिर्घोष पु० ६त०। वज्रस्तनितशब्दादौ, वज्रनिष्पेषोऽप्यत्र।
वज्रपाणि पु० वज्रं पाणौ यस्य। इन्द्रे, वज्रहस्तादयोऽप्यत्र।
वज्रपुट न० वज्रमिव कठिनं पुटमस्य। औषधपाचनपात्रभेदे
वज्रपुष्प न० वज्राकारं पुष्पम्। तिलपुष्पे।
वज्रपुष्पा स्त्री० वज्राकृति पुष्पं यस्याः। शतपुष्पायाम्।
वज्रमय त्रि० वज्रात्मकम् मयट्। अतिकठिने।
वज्रमूली स्त्री० वज्रमिव कठिनं मूलमस्याः ङीप्। माषपर्ण्याम्।
वज्रवल्ली स्त्री० वज्रमिव कठिना वल्ली।(हाड़जोड़ा)अस्थिसंहारलतायाम्।
वज्रबीजक पु० वज्रमिव कठिनं बीजमस्य। लताकरञ्जे।
वज्रवृक्ष पु० वज्रमिव कठिनो वृक्षः। सेहुण्डवृक्षे (सेओड़ा)
वज्रा स्त्री० वज-रक्। गुडूच्याम्, स्नुह्याम्, स्नुह्यां ङीषन्तोऽपि
वज्राङ्गा स्त्री० वज्रमिवाङ्गं यस्याः। गवेधुका (गड़गड़े) धान्यभेदे
(हाड़जोड़ा) लताभेदे च। (कोकिलाक्षवृक्षे)।
वज्रास्थिशृङ्खला स्त्री० वज्रजनकमस्थीव शृङ्खला बन्धनं यस्याः।
वज्रिन् पु० वज्रमस्त्यस्य इनि। इन्द्रे। [रके च त्रि०
वञ्चक पु० वन्च-णिच्-ण्वुल्। शृगाले गृहनकुले च। खले, प्रता
वञ्चन न० वन्च-ल्युट्। प्रतारणे अन्यथास्थितस्य वस्तुनोऽन्यथा रूपेण
कथनादिनाऽन्यनो(?)त्पादने। युच्। वञ्चनाप्यत्र स्त्री०

वञ्चक त्रि० वञ्च-ण्वुल् । वञ्चनाशीले खलु । अयतार्थे ।

वञ्जुल पु० वञ्च-उलच् पृ० चस्य जः । तिनिशवृक्षे, अशोकवृक्षे, वेतसवृक्षे, स्थलपद्मवृक्षे पक्षिभेदे च । वक्रे त्रि० ।

वञ्जुलद्रुम पु० वञ्जुलाख्यः द्रुमः । अशोकवृक्षे ।

वञ्जुलप्रिय पु० वञ्जुलं वक्रं प्रीणाति प्री-क । वेतसे ।

वट वेष्टने भागे च अद०चु०उभ०सक० सेट् । वटयति ते । अववटत् त

वट वेष्टने भ्वा०पर०सक०सेट् । वटति । अवटीत्-अवाटीत् ।

वट विभाजने वा चु० उभ० पक्षे भ्वा०पर०सक०सेट् । इदित् । वण्टयति ते वण्टति । अववण्टत् त अवण्टीत् ।

वट कथने भ्वा०पर०द्विक०सेट् घटा० । वटयति । अवाटीत्-अवटीत्

वट स्तेये चौ०पर०सक०सेट् इदित् । वण्टति अवण्टीत् ।

वट पु०वट-अच् । स्वनामख्याते वृक्षे गवानिर्मिततन्तौ च । (वेटे)

वटक पु० वट-क्वुन् । पिष्टकभेदे (वड़ा)

वटपत्र पु० वटस्येव पत्रमस्य । सितार्कवृक्षे, पाषाणभेदीलतायां स्त्री० ङीप् ।

वटी स्त्री० वट-अच् गौरा ङीप् । गोलाकारे (वड़ी) पदार्थे स्वार्थे कन् ह्रस्वः । वटिकाप्यत्र स्त्री० ।

वटु पु० वट-उ माणवके, ब्रह्मचारिणि च ।

वटुक पु० वट-उक । बालके, भैरवभेदे च ।

वठ असहायकरणे भ्वा०आत्म०सक०सेट् इदित् । वण्ठते अवण्ठिष्ट

वठ सामर्थ्ये भ्वा० पर० अक० सेट् । वठति । अवाठीत्-अवठीत् ।

वठर पु० वठ-अरन् । मूर्खे, अम्बष्ठे च । शठे, मन्दे च त्रि० ।

वड विभजने चु०उभ०सक०सेट् इदित् । वण्डयति ते । अववण्डत् त

वड वेष्टने विभागे च भ्वा०आ०सक०सेट् इदित् । वण्डते अवण्डिष्ट

वड आरोहणे सौ०पर०सक०सेट् । वडति । अवाडीत्-अवडीत्

वडभि(भी) स्त्री० वड्यते आरुह्यतेऽत्र वड-अभि वा ङीप् (मुदगि) गृहचूडायाम् प्रासादाग्रस्थगृहे च (चिलेधर) ।

वडा स्त्री० वड-अच । स्वनामख्याते पिष्टकभेदे ।

घण्डिश न० वंड इन् वडिं श्यति शो-क । मत्स्यधारणार्थे वक्रलौह कण्टकयुक्ते पदार्थे, "वडिशेन भषीरिवामि"ति इन्द्रावमचम्पूः

वड्र त्रि० वल-रक् लस्य डः । वृहति । [ वा सुखः ।

वण शब्दे भ्वा०पर०सक०सेट् । वणति अवाणीत्-अवणीत् । वडि

वण्ट विभाजने अद०चु०उभ०सक०सेट् । वण्टयति ते अववण्टत् त

वण्ट पु० वण्ट अच् । भागे, दात्रादेः धारकस्थाने (बाँट) अक्षतोद्वाहे त्रि० । (डेङ्गो) ।

वण्टक पु० वण्ट-घञ् । स्वार्थे कन् । भागे ण्वुल् । विभाजके ।

वण्ट त्रि० वण-क्त तस्य नेत्त्वम् । खर्व्वे (बेँटे)

वण्ड त्रि० वडि-अच् । अक्षतोद्वाहे, हस्ताद्यङ्गविकले (वेँडे) च

वत् अव्य० वा-डति । सादृश्ये वतिप्रत्ययान्तोऽयमर्थे अव्य० ।

वत अव्य० वन-क्त । खेदे. अनुकम्पायाम्, हर्षे, विस्मये, आमन्त्रणे च

वतंस पु०अव+तनस-घञ् अवाल्लोपः । कर्णभूषणभेदे, शेखरे, शिरोभूषणे, भूषणमात्रे च ।

वतण्ड पु० अव+तडि अच् अवाल्लोपः । मुनिभेदे । [ स्त्रियाम् ।

वतोका स्त्री० अवगतं तोकं यस्याः अवाल्लोपः । अपत्यहीनायां

वत्स न० वस-स । वक्षःस्थले । गवादिशिशौ द्वि० । वत्सरे पु०

वत्सक न० वत्स इव इवार्थे कन् । पुष्पकासीसे । कुटजे, इन्द्रयवे च

वत्सकवीज न० वत्सस्य कुटजस्य वीजम् । इन्द्रयवे ।

वत्सतर पु०स्त्री० क्षुद्रः वत्सः तरप् । क्षुद्रवत्से, अप्राप्तदमनकाले गवादौ । स्त्रियां ङीप् । वत्सतरी ।

वत्सनाभ पु०वत्सान् पशुशिशून् नभ्यति हिनस्ति नभ-अण् । विषभेदे ।

वत्सपत्तन न० वत्सस्य वत्सराजस्य पत्तनम् । उत्तरदेशस्थायां कौशाम्ब्यां नगर्य्याम् ।

वत्सपाल पु० वत्सान् पालयति पाल-अण् । श्रीकृष्णे ।

वत्सर पु० वस-सरन् । द्वादशमासात्मके काले ।

वत्सराज पु० चन्द्रवंश्ये नृपभेदे । "वत्सराजचरितमि"ति रत्नावली

वत्सरान्तक पु० वत्सरस्यान्तं करोति अन्त+णिच्-ण्वुल् । फाल्गुने

माघे वत्सरस्य चैत्रादिकत्वात् फाल्गुनस्य तदन्तकालत्वम् ।

वत्सल त्रि० वत्सं लाति ला-क स्नेहयुक्ते वात्सल्ये रसे पु० । तद्वति त्रि०। [(गोमक) ।

वत्साक्षी स्त्री० वत्सस्याक्षीवाक्षि अस्य षच्समा० । गोडुम्बायाम् ।

वत्सादनी स्त्री० वत्सैरद्यते प्रियत्वेन अद ल्युट् ङीष् । गुडूच्याम् ।

वद स्तुत्ये अक० अभिवादने सक० भ्वा० आ० सेट् इदित् ।

वन्दते अवन्दिष्ट ।

वद वाक्ये सन्देशे च भ्वा०उभ०सक०सेट् । वदति ते अवादीत् अवदिष्ट

वद वाचि भ्वा० पर० सक०सेट् यजा० । वदति अवादीत् उवाद ।

वद वाक्ये सन्देशे च सक०चुरा०उभ०सेट् । वादयति ते अवीवदत् ।

वद त्रि० वदति वद-अच् । वक्तरि ।

वदन न० उद्यतेऽनेन वद-करणे ल्युट् । मुखे । भावे ल्युट् कथने न०

वदा(द)न्य पु० वद-अन्य पृ० वा दीर्घः । भूरिदानशीले ।

वदाम न० वद-आमन् (बदाम) फलभेदे ।

वदाल पु० वद-आल । पाठीनमत्स्ये (बोयाल) स्वार्थे कन् तत्र

वदावद पु० अत्यन्तं वदति वद-अच् नि० बहुवक्तरि ।

वधू स्त्री० उह्यते पितृगेहात् पतिगृहं वह-ऊ धुकच् । भार्य्यायाम् नवोढ़ायां पुत्रजायायाम् पृक्कायां शठ्याञ्च ।

वधूजन पु० कर्म० नारीजने । [ले''ति भाषापरि० ।

वधूटी स्त्री० अल्पा वधूः टी अल्पवयस्कायाम् भार्य्यां "गोपवधूटी दुकू

वन सेवने सक० शब्दे अक०भ्वा०पर०सेट् । वनति अवानीत्-अवनीत् ।

वन व्यापारे भ्वा०पर०सक०सेट् ज्व०घटा० । वनति अवानीत्-अवनीत् ।

वनः वानः । वनयति ।

वन याचने द्विक०तना०आ०सेट् क्त्वा वेट् । वनुते अवनिष्ट ।

वन उपकारे उपतापे च सक० शब्दे अक० वा चु० उ०पक्षे भ्वा० प० सेट् । वानयति ते वनति । अवीवनत् त । अवनीत् अवानीत् ।

वन न०स्त्री० वन-अच् । वृक्षसमुदायात्मके अरण्ये । स्त्रीत्वे ङीष् । "सुवनी समभवदत् पिकापिके"ति नैषधम् जले, निवासे, आलये च ।

**वनकदली** स्त्री० ७त० । काष्ठकदल्याम् ।

**वनकन्द** पु० वनजातः कन्दः । अरण्यजाते शूरणे ।

**वनकार्पासी** स्त्री० वनोद्भवा कार्पासी । (वनकापास) क्षुपभेदे

**वनकोलि** पु० वनोद्भवः कोलिः । (वनकुल) वृक्षे ।

**वनचन्दन** न० वनस्थं चन्दनम् । अगुरुचन्दने ।

**वनचन्द्रिका** स्त्री० वने चन्द्रिकेव प्रकाशकत्वात् शुभ्रत्वाच्च । मल्लिकायाम् ।

**वनचम्पक** पु० ७त० (वनचांपा) चम्पकभेदे ।

**वनज** न० वने जले अरण्ये वा जायते जन-ड । पद्मे । मुस्तकभेदे, वनशूरणे च पु० । अश्वगन्धायां, गन्धपत्रायां वनकार्पास्यां, मुद्गपर्ण्यां च स्त्री० । वनजातमात्रे त्रि० ।

**वनतिक्त** पु० वनेषु वनजातेषु मध्ये तिक्तः । हरीतक्याम्, पाठायां (आकनादि) च स्त्री० । स्वार्थे कन् तत्रैव ।

**वनदीप** पु० वनस्य दीप इव । वनचम्पके ।

**वनपल्लव** पु० वनमिव निबिडः पल्लवोऽस्य । शोभाञ्जने ।

**वनपुष्पा** स्त्री० वनमिव संहतं पुष्पं यस्याः । शतपुष्पायाम् ।

**वनपूरक** पु० पूरकः बीजपूरकः पूर्वपदलोपः वनोद्भवः पूरकः । वनबीजपूरे । [ त्रि० । त्वचं न० ।

**वनप्रिय** पु० वनं वनस्थं प्रीणाति प्री-क । कोकिले, अरण्यप्रियमात्रे

**वनभुज्** पु० वनं भुङ्क्ते भुज-क्विप् । ऋषभे, तद्ग्रामीणे च ।

**वनमक्षिका** स्त्री० वनोद्भवा मक्षिका । दंशे, कीटभेदे (डांश)

**वनमल्ली** स्त्री० वनोद्भवा मल्ली । अरण्यमल्लिकायाम् ।

**वनमाला** स्त्री० 'आजानुलम्बिनी माला सर्वर्त्तुकुसुमोज्ज्वला मध्ये स्थूलकदम्बाढ्या वनमालेति कीर्तिते'त्युक्तायां मालायाम् [स्त्री० ङीप् ।

**वनमालिन्** पु० वनमालाऽस्त्यस्य इनि । श्रीकृष्णे, वाराहीकन्दतायां

**वनमुद्ग** पु० वनोद्भवः मुद्गः । मुद्गभेदे ( मुगानि ) मुद्गपर्ण्यां स्त्री० गौरा० ङीप् । [ कर्कटशृङ्ग्याम् ।

**वनमूर्द्धजा** स्त्री० वनस्य मूर्द्धजं शृङ्गमिव स्त्यस्याः अच् काकड़ाशिङ्गा)

**वनमोचा** स्त्री वनोद्भवा मोचा । काष्ठकदल्याम् ।

**वनलक्ष्मी** स्त्री० वनस्य लक्ष्मीरिव तदधिष्ठानत्वात्। कदल्याम्
**वनवर्वर** पु० वनोद्भवः वर्वरः। कृष्णार्जके। (वनवावुइ) इत्यं
**वनवासिन्** पु० वनं वासयति सुरभीकरोति वासि णिनि। मुष्कक-
वृक्षे, वाराहीकन्दे, शाल्मलीकन्दे, नीलमहिषकन्दे, ऋषभना-
मौषधे च। वने वसति वस-णिनि। वनवासकर्तरि त्रि०।
**वनवीज** पु० वीजो वीजपूरकः उत्तरपदलोपः ६त०। वनवीजपूरे।
**वनवृन्ताकी** स्त्री० वनस्य वृन्ताकी वार्त्ताकी। वृहत्याम्।
**वनव्रीहि** पु० वनस्य व्रीहिः। नीवारे (उड़िधान)।
**वनशूकरी** स्त्री० वनस्य शूकरीव रोमशत्वात्। कपिकच्छाम्। ६त०।
वनशूकरयोषिति। वनवराहे पु०। [ कन्। तत्रैवार्थे।
**वनशृङ्गाट** पु० वनस्य शृङ्गाट इव कण्टकावृतः। गोक्षुरे। स्वार्थे
**वनशोभन** न० वनं जलं शोभयति शुभ-णिच ल्यु। पद्मे।
**वनसङ्कट** पु० सम्+कट-अच् ६त०। मसूरे। [ वनकार्पास्याम्।
**वनसरोजिनी** स्त्री० वनस्य सरोजिनी पद्मिनीव शोभाकरत्वात्।
**वनस्पति** पु० वनस्य पतिः नि० सुट्। पुष्पं विना जायमानफले अश्व-
त्थादौ वृक्षे। [ तत्रैव
**वनहास** पु० वनस्य हास इव प्रकाशकत्वात्। काशतृणे स्वार्थे कन
**वनाखाक** पु० अव+नख-उकञ् अवाल्लोपः। कुशे।
**वनामल** पु० वनस्यामल इव। करमर्द्दे।
**वनाम्र** पु० वनस्य आम्र इव। कोशाम्रे।
**वनायु** पु० वन-आयुच्। प्रशस्तघोटकोद्भवदेशभेदे (आरव)।
**वनायुज** पु० वनायुदेशे जायते जन-ड। प्रशस्तघोटके। (आरवि)
**वनारिष्टा** स्त्री० वनस्य न रिष्टं यस्याः। वनहरिद्रायाम्।
**वनालिका** स्त्री० वनमलति भूषयति अल-ण्वुल्। हस्तिशुण्डी लतायाम्।
**वनिता** स्त्री० वन-क्त नि-इट्। योषिति, अनुरक्तायां स्त्रियाञ्च
**वनिन्** पु० वनम् आश्रयतयाऽस्त्यस्य इनि। वानप्रस्थाश्रमयुक्ते
**वनीयक** स्त्री० वन-इन्। आत्मनो वनिं याचनमिच्छति क्यच् ण्वुल्।
याचके। पु० यलोपः। वनीकोऽप्यत्र।

**वनेतुद्रा** स्त्री॰ ७त॰ अलुक्स॰ । करञ्जे ।
**वनेचर** पु॰ वने चरति चर-अच् अलुक्स॰ । अरण्यचारिणि व्याघ्रादौ
**वनेसर्ज्ज** पु॰ सृजति-सृज-अच् ७त॰ अलुक्स॰ । असनवृक्षे ।
**वनोद्भवा** स्त्री॰ वन एव उद्भवति उद्+भू अच् । वनकार्पास्याम् ।
वनजाते त्रि॰ ।
**वनौकस्** पु॰ वनमेव ओकः स्थानं यस्य । वानरे । वनवासिनि त्रि॰
**वन्च** प्रतारणे भ्वा॰ पर॰ सक॰ सेट् क्त्वा वेट् । वञ्चति अवञ्चीत्
**वन्दन** न॰ वदि-ल्युट् । स्तवने प्रणामे च । युच् । वन्दनाप्यत्र स्त्री॰
**वन्दनीय** त्रि॰ वदि-अनीयर् । नमनीये, स्तवनीये च पीतभृङ्गराजे
पु॰ । गोरोचनायां स्त्री॰ ।
**वन्दा** स्त्री॰ वदि-कर्म्मणि घञ् । (परगाछा) लताभेदे ।
**वन्दाका** स्त्री॰वदि-आकन् वन्दायाम् । गौ॰ ङीप् वन्दाकीत्यप्यत्र
**वन्दारु** त्रि॰ वदि आरु । वन्दनशीले । [वन्दने च ।
**वन्दि** (न्दी) स्त्री॰ वदि-इन् वा ङीप् । कारावद्धमनुष्यादौ (कयदी)
**वन्दिपाठ** पु॰ वन्दिं स्तुतिं पठति पठ-अण् । स्तुतिपाठके ।
**वन्दिन्** पु॰ वन्दते स्तौति णिनि । राजादेः स्तुतिपाठके ।
**वन्द्य** त्रि॰ वदि-यत् । वन्दनीये । गोरोचनायाम् स्त्री॰ ।
**वन्य** न॰ वने भवः यत् । त्वचे (दारचिनि) । वनशूरणे वाराही-
कन्दे, देवनले च पु॰ । वनजातमात्रे त्रि॰ । वनानां अत्रानां
समूहः यत् । जलसमूहे स्त्री॰ ।
**वप** वीजवपने, तन्तुवपने मुण्डने च सक॰भ्वा॰ उभ॰ अनिट् यजा॰ ।
वपति-ते अवाप्सीत् अवप्त । उप्तिमः ।
**वपन** न॰ वप-ल्युट् । केशमुण्डने, तन्त्वाधाने च
**वपनी** स्त्री॰ उप्यतेऽनया अत्र वा वप ल्युट् ङीप् । नापितास्त्रे,
तन्तुशालायां, (तान्तघर) यन्त्रभेदे (माकु) च । [ इति श्रुतिः ।
**वपा** स्त्री॰ वप-अच् । मेदसि (चर्वि) छिद्रे च । 'वपाया हविष'
**वपुस्** न॰ उप्यन्ते देहान्तरभोगसाधनवीजीभूतानि कर्म्माण्यत्र
वप-उसि । शरीरे, प्रशस्ताकारे च ।

**वपुष्टमा** स्त्री॰ अतिशयेन वपुः प्रशस्ताकृतिः तमप् प्रत्ययम्। पद्मचारिण्याम् लतायाम्।

**वप्तृ** पु॰ वप-तृच्। जनके, कवीन्द्रे च। बीजादिवापके त्रि॰।

**वप्र** पु॰न॰ उप्यतेऽत्र रन्। दुर्गनगरादौ परिखाया उद्धृतमृत्तिकारूपे। क्षेत्रे, रेणौ, तटे, सीसके च न॰। जनके, प्राचीरे, प्रजापतौ च पु॰। मञ्जिष्ठायाम् स्त्री॰।

**वभ्र** गतौ भ्वा॰ पर॰ सक॰ सेट्। वभ्रति अवभ्रीत्।

**वम** उद्गारे भ्वा॰ पर॰ सक॰ सेट् फणा॰ ज्वला॰। वमति अवमीत्। ट्वमथुः। ण वामः।

**वमथु** पु॰ वम अथुच्। वमने।

**वमन** न॰ वम-ल्युट्। मर्द्दने, अर्द्दने, आहुतौ, अधिकनिस्सारणे च 'स्वर्गाभिस्यन्दवमन'मिति कुमारः। शणे पु॰। जलौकायां स्त्री॰ गौ॰ ङीष्।

**वमि** स्त्री॰ वम-इन् छर्द्दने। अग्नौ पु॰। धूर्त्ते त्रि॰।

**वमित** पु॰ वम-णिच् क्त। कृतोद्गारे।

**वय** गतौ भ्वा॰ आ॰ सक॰ सेट्। वयते अवायष्ट।

**वयस्** न॰ अज-असुन् वीभावः। विहगे, बाल्याद्यवस्थायाम् 'वयोतिपातोद्गतवाते'ति नैषधम् यौवने च।

**वय** (यः) स्थ पु॰स्त्री॰। 'वयस्था नागराङ्गा'दिति वैद्यकम्।

**वयस्य** पु॰ वयसा तुल्यः यत्। समानवयस्के। सख्यां स्त्री॰।

**वयुन** न॰ वय-उनन्। ज्ञाने देवतागारे पु॰।

**वयोधस्** पु॰ वयो यौवनं धत्ते धा-असुन्। तरुणे।

**वर** ईप्से अद॰चु॰उ॰सक॰सेट्। वरयति ते अववरत् त।

**वर** न॰ व्रियते वृ-अप् वर-घञ् वा। कुङ्कुमे, मनागभीष्टे "वरं प्राणान् परित्यक्ष्ये" इति तन्त्रम्। भावे अप् वर-घञ् वा। इच्छायाम् याचने, आवरणे,वेष्टने च। कर्मणि अप्। अभीष्टे, श्रेष्ठे च त्रि॰। जारे, गुग्गुलौ, जामातरि, पत्यौ च पु॰।

**वरक** पु॰ वृ-वुन्। वनमुद्गे, पर्पटे, तृणधान्यभेदे (चीना) वस्त्रभेदे च।

**वरचन्दन** न० कर्म० । कालीये, देवदारुणि कुङ्कुमबीजे च ।
**वरट** न०वृ-अटन् । कुन्दपुष्पे । कीटभेदे (बोलता) हंसे च पु०स्त्री०
**वरण** न० वृ-ल्युट् । कन्यादिदानाय जामात्रादेरभ्यर्थनानुकूले व्यापारभेदे (बेटने) ऋत्विगादेः क्रियासु नियोगाय पूजनादौ, उष्ट्रे, प्राकारे, वरुणवृक्षे च । काशीस्थे नदीभेदे (सांको) ख्याते पदार्थे च स्त्री० । [ मध्यवेदी च ।
**वरण्ड** पु० वृ-अण्डच् (वयसफोड़ा) मुखरोगभेदे मातङ्गयुद्धार्थे
**वरण्डक** पु०न० वृ-अण्डच् । स्वार्थे कन् । वरण्डशब्दार्थे वर्तुले, भित्तौ च । विशाले, कृपणे, भीते च त्रि० ।
**वरण्डालु** पु० वरण्ड + आलु । एरण्डवृक्षे ।
**वरतिक्त** पु० वरः श्रेष्ठस्तिक्तो रसो यस्य । कटजवृक्षे । पाठायां (आकनादि) स्त्री० । स्वार्थे कन् तत्रैव ।
**वरता** स्त्री० वृ-अतच् । हस्तिकच्यस्यरज्जौ ।
**वरत्वच** पु० वरा त्वचा यस्य । निम्बवृक्षे ।
**वरद** त्रि० वरं ददाति दा-क । अभीष्टदातरि, प्रसन्ने च । तच्चिह्नसूचके हस्तादिविन्यासरूपे मुद्राभेदे न० अभयं वरदञ्चैव दक्षिणे' इति तन्त्रम् । कन्यायाम्, अश्वगन्धायाम्, आदित्यभक्तायां, दुर्गायाञ्च स्त्री० ।
**वरदाचतुर्थी** स्त्री०माघशुक्लचतुर्थ्याम् । तामधिकृत्य 'चतुर्थी वरदा नाम तस्यां गौरी सुपूजिते' ति स्मृतिः ।
**वरफल** पु० वरं फलमस्य । नारिकेले वृक्षे । कर्म० । श्रेष्ठे फले न०
**वरमुखी** स्त्री० वरं मुखं यस्याः ङीप् । रेणुकानामगन्धद्रव्ये ।
**वरम्** अव्य० वृ-अम् । ईषदभीष्टे । [पतिम्बरायां कन्यायाञ्च
**वरम्बरा** स्त्री० वरं वृणोति खच् । (चाकुलिया) चक्रमर्दाम् ।
**वररुचि** त्रि० वरा रुचिर्यस्य । श्रेष्ठप्रीतिमति । पाणिनिसूत्र वार्त्तिककारे कात्यायनमुनौ, विक्रमादित्यसभास्थे पण्डित भेदे च,
**वरलब्ध** पु० वरः उत्कर्षः पुष्पेषु लब्धो येन परनि० । चम्पके प्राप्तवरे त्रि० ।

**वरला** स्त्री० वरटा+पृ० टस्य लः। हंसां (बोलता) कीटभेदे च गौरा० ङीष्। हंसाम्। [हंसियाम्।

**वरवर्णिनी** स्त्री०वरः श्रेष्ठोवर्णः प्रशंसाऽस्यस्याः इनि। उत्त-

**वरवाह्लीक** न० कर्म०। कुङ्कुमे।

**वरा** स्त्री०३ अच्। हरितक्यामलकीविभीतकरूपे फलत्रिके। रेणुका-नामगन्धद्रव्ये, गुडूच्याम्, मेदाया, ब्राह्म्याम्, विडङ्गे, पाठा-याम्, हरिद्रायाञ्च।

**वराक** पु० वृ-षाकन्। शिवे। युद्धे न०। अवरे, शोचनीये च त्रि०

**वराङ्ग** न०कर्म०। मस्तके। व्रियते आव्रियते गुप्यते वृ-अच्, कर्म०। गुह्ये योनौ, गुडत्वचि च। इभ०। गजे विष्णौ कामदेवे च पु०। श्रेष्ठावयवयुक्ते त्रि०। संज्ञायां कन्। गुडत्वचि (दारचिनि) न० हरिद्रायाम् स्त्री० गौ०ङीष्।

**वराङ्गिन्** पु०वराङ्गमस्त्यस्य इनि। अम्लवेतसे। श्रेष्ठाङ्गयति त्रि०

**वराट** पु० वरमल्पमटति अट-अण्। कपर्द्दे। क्षुद्रो वराटः ङीप्। क्षुद्रकपर्द्दे, स्वार्थे कन्। तत्रार्थे 'वराटकानां दशकद्वयं यदि,लि लीलावती अट— ण्वुल्। पद्मबीजकारे कोषे, रज्जौ च पु०।

**वराटकरजस्** पु० वराटके इव रजोऽस्य। नागकेशरे वृक्षे

**वरादन** न० वरैः श्रेष्ठैरद्यते अद ल्युट्। राजादने (पयासाल)

**वराम्र** पु० वरः आम्र इव। करमर्द्दे।

**वरारोह** पु० वर आरोहो मध्यं यस्य। हस्तिनि। प्रशस्तनितम्ब-वत्यां स्त्रियां च स्त्री०।

**वराशि** पु० वरमावरणम अश्नुते अश-इन्। स्थूलवस्त्रे।

**वरासन** न० वराय वरणीयायास्यते क्षिप्यते अस-ल्युट्। जवापुष्पे। कर्म०। उत्तमे आसने न०। वं पयिमस्यति अस ल्यु। पिङ्ग, जारे पु०। वरान् श्रेष्ठानपि अस्यति दुरीकरोति ल्यु। द्वारपाले पु०।

**वरासि** पु० वरायावरणायास्यते अस-इन्। स्थूलवस्त्रे।

**वराह** पु० वराय अभीष्टाय मुस्तादिलाभाय आहन्ति खनति भूमिम्

आ+हन-ड। सूकरे, वराहाख्ये मानभेदे भगवतोऽवतारभेदे च।
पर्वतभेदे, मुस्तके, शिशुमारे, वाराहीकन्दे, द्वीपभेदे च।

वराहकन्द पु० वराहस्य कं सुखं ददाति। स्वनामख्याते वृक्षभेदे।

वराहकान्ता स्त्री० वराहाणां कान्ताऽभीष्टा। वराहकन्दे।

वराहक्रान्ता स्त्री० वराहेण क्रान्तेव। लज्जालुलतायाम्।

वराहिका स्त्री०वराहो भक्षकत्वेनास्त्यस्याः ठन्। कपिकच्छ्वाम् [याम्।

वराही स्त्री० वराहो भक्षकत्वेनास्त्यस्या अच् गौरा०ङीष्। भद्रमुस्ता-

वरिवस् न० वृ-असुन् नि० इट् च। पूजने। [पूजिते।

वरिवसित (स्ति)त त्रि० वरिवः पूजनं करोति क्यच्-क्त वा यलोपः।

वरिवस्या स्त्री० वरिवस्+स्वार्थे क्यच् अ। पूजने शुश्रूषायाम्

वरिष्ठ त्रि० अतिशयेन उरुः इष्ठन् वरादेशः। उरुतमे। तित्तिरि-
विहगे पु०। आदित्यभक्तायां स्त्री०।

वरी स्त्री० वरी शतावरी पूर्वपदलोपः। शतावर्य्याम्, सूर्य्यपत्न्याञ्च

वरीयस् त्रि० अतिशयेन उरुः अयं ईयसु वरादेशः। उरुतरे।
विष्कम्भादिषु मध्ये योगभेदे पु०।

वरी (ली)वर्द्द पु० वृध-यङ्-लुक् अच् पृ० रस्य वा लः। वृषभे।

वरुड पु० वृ-उडन्। अन्त्यजजातिभेदे 'रजकश्चर्म्मकारश्च नटोवरुड
एव चे'ति स्मृतिः। [जले, सूर्य्ये च।

वरुण पु० वृ-उनन्। पश्चिमाशापतौ जलेशे स्वनामख्याते, देवभेदे,

वरुणात्मजा स्त्री० वरुणस्य जलस्यात्मजेव जन्यत्वात्। जलभवे मद्ये।

वरुणानी स्त्री० वरुणस्य पत्नी ङीप् आनुक् च। वरुणपत्न्याम्

वरूथ न० वृ-ऊथन्। तनुत्राणे वर्म्मणि। रथगुप्तिस्थाने परप्रहार-
रक्षार्थमावृते स्थाने पु०।

वरूथिनी स्त्री० वरूथोऽस्त्यस्याः इनि। सेनायाम्।

वरेण्य न० वृ-एन्य। कुङ्कुमे। प्रधाने, प्रार्थनीये च त्रि०।

वरोट न० वराण्युटानि दलान्यस्य। मरुवकपुष्पे।

वर्कर पु० वृक-अरन्। तरुणपशौ, मेषशावके, छागमात्रे च।

वर्ग पु०वृज-घञ्। सजातीयसमूहे यथा मनुष्यवर्गः पशुवर्गः। समान-

वर्णैभिः प्रागल्पाक्षिभिः कृते संघे च यथा कवर्गः चवर्गः । ग्रन्थपरिच्छेदे यथा स्वर्गवर्गः पातालवर्गः । अङ्कशास्त्रोक्ते समानाङ्कद्वयस्य परस्परगुणने, यथा द्विकस्य चत्वारि, त्रिकस्य नव, चतुष्कस्य षोडश, इत्यादि । "वर्गं मूलं पदं कृति"मिति लीलावती । त्यागे च ।

वर्गमूल न० वर्गस्य समद्विघातात्मककृतेः मूलम् । अङ्कशास्त्रप्रसिद्धं समाङ्कयोः कृताङ्कसङ्ख्यायाः यन्मूलं घातसाधनं तत्र । यथा षोडशानां चत्वारि, नवानां त्रयः चतुर्णां द्वौ इत्यादि ।

वर्गोत्तम पु०वर्गेषु षट्सु क्षेत्रादिषु उत्तमः नवांशः । 'चराणां प्रथमे चांशे स्थिराणां पञ्चमे तथा द्व्यात्मकानाञ्च नवमे वर्गोत्तम इति स्मृत, इति ज्योतिषोक्ते त्रिंशांशकात्मकराशेर्नवांशभेदे ।

वर्च दीप्तौ भ्वा०आ०अक० सेट् । वर्चते अवर्चिष्ट । [विष्ठायाम् ।

वर्चस् न०वर्च-असुन् । रूपे, शुक्रे, तेजसि, विष्ठायाञ्च, संज्ञायां कन्

वर्चस्विन् त्रि० वर्चस्+अस्त्यर्थे विनि । तेजस्विनि ।

वर्जन न० वृज-ल्युट् । त्यागे, मारणे, हिंसायां च ।

वर्ण स्तुतौ विस्तारे शुक्लादिवर्णकरणे उद्योगे दीपने च अद० चु० उभ० स० सेट् । वर्णयति ते वर्णयति ते अववर्णत् त

वर्ण वर्णने चु०उभ०सक०सेट् । वर्णयति ते अववर्णत् त ।

वर्ण न० वर्ण-घञ् । कुङ्कुमे । ब्राह्मणादिजातौ, शुक्लादिरूपे, भेदे, अकाराद्यक्षरे च पु० । करणादौ घञ् । यशसि, गुणे, अङ्गरागे च । स्वर्णे, व्रतभेदे, विलेपनद्रव्ये च । भावे घञ् । विलेपने, स्तुतौ, गीतक्रमे, चित्रे च ।

वर्णक न० वर्णयति वर्ण-ण्वुल् । हरिताले, अनुलेपनयोग्ये पिष्टे द्रव्ये वा चन्दनादौ द्रव्ये च । हिङ्गुलादौ पु० स्त्री० मण्डने न० । एकस्यैव सूत्रादेः पञ्चान्तरव्याख्यानरूपे ग्रन्थभेदे न० 'त्रिपञ्चाशत्तमे तृतीयवर्णके, इति मिताक्षरा । [ कन् । मस्याधारे ।

वर्णकूपिका स्त्री० वर्णानामक्षराणां लेखनाय कूपः कूपी सेव

वर्णचारक पु० वर्णं शुक्लादिरूपं चारयति चर णिच्-ण्वुल चित्रकरे ।

वर्णज्येष्ठ पु० वर्णेषु ज्येष्ठः प्रथमसृष्टत्वात् । अग्रजे, विप्रे । स्त्रियाम्-
अपेक्षया श्रेष्ठवर्णे त्रि० 'वर्णज्येष्ठा च या नारी' ति स्मृतिः

वर्णतूलि(ली) स्त्री० वर्णानां लेखनसाधनं तूलिः । लेखन्याम् स्वार्थे
कन् । अत्रैव ।

वर्णद न०वर्णं ददाति दा—क । कालीयके गन्धद्रव्ये । वर्णप्रदे त्रि०

वर्णदात्री स्त्री०वर्णं रूपं ददाति दा-तृच् ङीप् । हरिद्रायाम्
वर्णदातरि त्रि० ।

वर्णदूत पु० वर्णा एव दूतो यत्र । लिपौ

वर्णधर्म्म पु०न०६त० । विप्रादीनामसाधारणे धर्मे यथा विप्रस्य
याजनाध्यापनप्रतिग्रहादि, क्षत्रियस्य प्रजापालनादि ।

वर्णसङ्कर पु० संकीर्यते सम्+ कृ-अप् वर्णतः सङ्करः । विप्रादिभ्यो
वर्णेभ्योऽनुलोमप्रतिलोमजाते मूर्द्धाभिषिक्तादौ जातिभेदे 'जायते
वर्णसङ्करः, इति गीता ।

वर्णा स्त्री०प्रशस्तवर्णोऽस्त्यस्याः फलपुष्पादौ अच् । आढक्याम् ।

वर्णाङ्का स्त्री० वर्णा अक्षराणि अङ्क्यन्तेऽनया अङ्क-अच् । लेखन्याम् ।

वर्णात्मन् पु० वर्ण आत्मा स्वरूपं यस्य । ध्वन्यात्मकादिलक्षणे अकारा-
द्यक्षरे शब्दभेदे

वर्णार्ह पु० वर्णं स्तुतिमर्हति अर्ह- -अण् । मुद्गे ।

वर्णिका स्त्री०वर्णा अक्षराणि लेख्यत्वेन सन्त्यस्याः ठन् । लेखन्याम्

वर्णित त्रि० वर्ण-क्त । स्तुते, कृतवर्णने, रूपान्तरमापादिते च

वर्णिनी स्त्री०प्रशस्तवर्णः अस्त्यस्याः इनि ङीप् ।हरिद्रायाम्

वर्णिन् पु०वर्णोऽस्त्यस्य इनि । चित्रकरे, लेखके ब्रह्मचारिणि च
'अथाह वर्णी विदितो महेश्वर' इति कुमारः विप्रादि जातौ च
'वर्णिनां हि वधो यत्रे' ति स्मृतिः ।

वर्त्तक पु०वृत-ण्वुल् । (भाटइ) पक्षिभेदे । वर्त्तकाख्यत्व अश्वस्य
खुरे च ।

वर्त्तन न०वृत-ल्युट् । वृत्तौ स्थितौ । णिच्-भावे ल्युट । स्थापने ।

णिच्-करणे—ल्युट् । जीवनोपाये न० । तर्कुपीठे स्त्री० ङीप् । ल्यु । वृत्तिमति, वर्त्तिष्णौ च त्रि० । वार्त्ती पु० ।

**वर्त्तनी** स्त्री० वर्त्यते पादाभ्याम् । वृत-णिच्-आधारे ल्युट् । पथि

**वर्त्तमान** पु० वृत—शानच् । कालभेदे शब्दप्रयोगाधारे आरब्धापरिसमाप्ते काले । तत्कालवर्त्तौ त्रि० ।

**वर्त्तलोह** न० वर्त्त्यते वृत-णिच्-अच् कर्म० । आवर्त्तनयोग्ये लौहभेदे

**वर्त्ति** (र्त्ती) स्त्री० वृत-इन् व ङीप् । लेखे, नयनाञ्जने, गात्रानुलेपने, दीपदशायाञ्च ।

**वर्त्तिक** पु० वृत-तिकन् । (वटेर) विहङ्गभेदे । वर्त्मनि वर्त्तते वृत, अच् वर्त्तः तत्र साधुः हितो वा ठन् । भारे ।

**वर्त्तिन्** त्रि० वृत, णिनि । वर्त्तनशीले ।

**वर्त्तिष्णु** त्रि० वृत-इष्णुच् । वर्त्तनशीले । [ तद्वर्त्ती त्रि० ।

**वर्त्तिष्यमाण** पु० वृत शानच् लृटः सद्वेति स्यट् । भविष्यत्काले ।

**वर्त्तुल** त्रि० वृत-उलच् । गोलाकारे पदार्थे । रञ्जने न० । कलायभेदे पु० । तर्कुपीठ्याम् स्त्री० गजपिप्पल्याम् स्त्री० ङीप् ।

**वर्त्मन्** न० वृत-मनिन् । पथि, आचारे, 'आ मनोर्वर्त्मनः' इति रघुः । नेत्रच्छदे च ।

**वर्त्मनि** स्त्री० वृत-अनि मुट् च । पथि ।

**वर्द्ध** छेदने, पूरणे च चु०उ०स०सेट् । वर्द्धयति ते अववर्द्धत् त ।

**वर्द्ध** पु० वृध-अच् । आम्रातम् (वामनहाटि) वज्र । पूरणे, छेदे च ।

**वर्द्धक** पु० वृध-ण्वुल् । आम्रातयष्टौ (वामनहाटी) पूरके, छेदके च ।

**वर्द्धकि** पु० वृध-अच् कप इ कर्म० । त्वष्टरि (छुतार) ।

**वर्द्धकिन्** पु० वर्द्धकः वर्द्धोऽस्त्यस्य इनि । त्वष्टरि (छुतार) जातिभेदे ।

**वर्द्धन** न० वृध-ल्युट् । छेदने, पूरणे च । वृध-णिच्-ल्यु । वृद्धिकारके त्रि० । 'करोमि क्षितिवर्द्धनमिति भट्टिः । वृध-ल्यु । वृद्धियुक्ते त्रि० ।

**वर्द्धनी** स्त्री० वर्द्ध्यतेऽनया वृध-णिच्-ल्युट् । संमार्ज्जन्याम्, सनालपात्रभेदे च (बदना)

**वर्द्धमान** पु० वृध—शानच् । एरण्डवृक्षे । वृद्धिशीले त्रि० । शरावे

(कल्याणभेदे) विष्णौ, धनिनां, गन्धद्रव्यभेदे, देशभेदे, नगरभेदे च
वृद्धियुक्ते त्रि० ।

वर्द्धापन न० वर्द्धं छेदं करोति वर्द्ध+णिच्-आप् च ततोभावे ल्युट् ।
नाडीच्छेदनकर्माङ्गे संस्कारभेदे ।

वर्द्धित न० वृध-णिच्-क्त । छेदिते, पूरिते, प्रस्तुते, च ।

वर्द्धिष्णु त्रि० वृध-इष्णुच् । वृद्धिशीले ।

वर्ध्र न० वृध-ष्ट्रन् । चर्म्मणि । चर्मरज्जौ स्त्री० ङीप् ।

वर्फ गतौ वधे च भ्वा०पर०सक०सेट् । वर्फति अवर्फीत् ।

वर्म्मकण्ठक पु० वर्म्म इव कण्टकोऽस्य । वर्बुरे ।

वर्म्मकषा स्त्री० वर्म कषति अच् । (चामकषा) सप्तलायाम्

वर्म्मन् न० वृ-मनिन् । कवचे सन्नाहे । क्षत्रियोपाधौ पु० ।

वर्म्महर पु० वर्म्म हरति हृ-अच् । सन्नाहधारणयोग्ये अवस्थाभेदे
तरुणे ।

वर्म्मित त्रि० वर्म करोति णिच्-क्त । कृतसन्नाहे, कवचयुक्ते च ।

वर्य्य त्रि० वृ-यत् । प्रधाने, श्रेष्ठे च । कामदेवे पु० । पीताम्बरायां
कन्यायां, कन्यामात्रे च स्त्री०

वर्वणा स्त्री० वर्विति वणति शब्दायते अच् । (भणभणे) मक्षिकाभेदे ।

वर्व(र्ब)र न० वर्व(र्ब)-अरच् । हिङ्गुले, पीतचन्दने, गन्धरसे च । पा-
मरे, मूर्खे च त्रि० 'गात्वमिच्छन्ति वर्वराः' इत्युक्तेः । केशभेदे(वा-
वरी) देशभेदे तज्जातके । (कालतुलसी) वृक्षे च पु० । संज्ञायां-
कन् । चन्दनभेदे, शाकभेदे च पु० । पुष्पभेदे, मक्षिकाभेदे च स्त्री०
(वावुइ) वृक्षे स्त्री० टाप् ङीप् वा ।

वर्वी(र्बी) स्त्री० वर्व(र्ब) अच् । (वावुइ) वृक्षभेदे ।

वर्वुर पु० वर्व-उरच् । (वावला) वृक्षभेदे ।

वर्ष पु० न० वृष-अच् । वृष्टौ जम्बुद्वीपांशभेदे जम्बुद्वीपे च । कर्त्तरि
अच् । मेघे, द्वादशमासात्मके काले च । प्रभवादिषु षष्टिवत्सरेषु पु०।

वर्षकेतु पु० वर्षस्य केतुरिव । रक्तपुनर्नवायाम् ।

वर्षपर्व्वत पु० वर्षाणां चिह्नभूतः सीमाभूतो वा पर्वतः । 'हिमवान्

हेमकूटश्च निषधो मेरुरेव च । चैत्रः कर्णी च शृङ्गी च सप्तैते वर्षपर्वताः' इत्युक्तेषु पर्वतेषु ।

**वर्षप्राकिन्** पु० वर्षेण पाकोऽस्त्यस्य इनि । आम्रातकवृक्षे । तस्य हि मुकुलोद्गमात् प्रायेण वत्सरानन्तरं फलपाकः ।

**वर्षपुष्पा** स्त्री० वर्षकाले पुष्पमस्याः । सहदेवीलतायाम् ।

**वर्षप्रिय** पु० वर्षं प्रियोऽस्य । चातकपक्षिणि ।

**वर्षवर** पु० वर्षं रेतोवर्षणं वृणोति आवृणोति वृ—अच् । 'ये त्वल्पसत्त्वाः प्रथममात्मीयाः स्त्रीस्वभाविनः । जात्या न दुष्टाः कार्येषु ते वै वर्षवराः स्मृताः' इत्युक्तलक्षणे राज्ञामन्तःपुरचरके षण्ढे (खोजा) 'नष्टं वर्षवरैरि'ति रत्नावली ।

**वर्षवृद्धि** पु० वर्षस्य वृद्धिरधिकता यस्मिन् । जन्मतिथौ, तद्दिनकर्त्तव्ये पूजादौ च । 'युगाद्या वर्षवृद्धिश्चे'ति स्मृतिः ।

**वर्षा** स्त्री० ब०व० । वर्षन्ति मेघा अत्र । श्रावणभाद्रात्मके मासद्वये ऋतौ 'वर्षासु च मघासु चे'ति स्मृतिः ।

**वर्षाङ्गी** स्त्री० वर्षासु अङ्गमस्याः । पुनर्नवायाम् ।

**वर्षापगम** पु० वर्षाणामपगमो यत्र । शरत्काले ऋतौ । वर्षावसाने

**वर्षाभव** पु० वर्षासु भवति भू—अच् । रक्तपुनर्नवायाम् ।

**वर्षाभू** पु० वर्षासु भवति भू—क्विप् । भेके, इन्द्रगोपे, महीलतायाञ्च । पुनर्नवायां, भेक्याञ्च स्त्री० । वर्षाभवमात्रे त्रि० । शोथे पुनर्नवायाम् स्त्री० ङीप् ।

**वर्षामद** पु० वर्षासु माद्यति मद्—अच् । मयूरे ।

**वर्षिष्ठ** त्रि० अतिशयेन वृद्धः इष्ठन् वर्षादेशः । अतिशयवृद्धे

**वर्षीयस्** त्रि० अतिशयेन वृद्धः । वृद्ध+ईयसु वर्षादेशः । अतिवृद्धे स्त्रियां ङीप् ।

**वर्षुक** त्रि० वृष—उकञ् । वर्षणशीले ।

**वर्षोपल** पु० वर्षस्य दृष्टेरुपलः प्रस्तर इव । करकेषु । (शिल)

**वर्ष्मन्** न० वृष्—मनिन् । देहे ।

**बर्ह** बधे सक० दीप्तौ अक० चु० उभ० सेट् । बर्हयति—ते अबबर्हत् त

**वर्ह** उत्कर्षे भ्वा० आ० सक० सेट् । वर्हते अवर्हिष्ट ।

**वर्ह** न० वर्ह—अच् । मयूरपिच्छे, ग्रन्थिपर्णे वृक्षे, अग्नौ, दीप्तौ, यज्ञे च

**व र्ह(र्हिः)कुसुम** न० वर्हिरिव कुसुममस्य पृ० सलोपः । ग्रन्थिपर्णे ।
वर्हिः पुष्पादयोऽप्यत्र ।

**वर्हिपुष्प** न० वर्हिः वह्निरिव पुष्पमस्य । ग्रन्थिपर्णे ।

**वर्हिशुष्मन्** पु० वर्हिःकुशः शुष्म बलमस्य । वह्नौ कुशेन हि वह्निरुद्दी-
प्यते । [ह्रीवेरे ।

**वर्हि(र्हिः)ष्ठ** न० वर्हिरिव तिष्ठति स्था—क वा विसर्गलोपः षत्वम् ।

**वर्हिण** पु० वर्हमस्त्यस्य इन । मयूरे । इनि । 'वर्ही' त्यप्यत्र

**वर्हिर्ज्योतिस्** पु० वर्हिषा कुशेन ज्योतिरस्य । वह्नौ ।

**वर्हिर्मुख** पु० वर्हिर्वह्निर्मुखं यस्य । देवे तद्द्वारैव हि देवा हविरश्नन्ति।

**वर्हिषद्** पु० ब० व० वर्हिषि विप्रपाणिस्थेऽग्नौ सदन्ति वर्हिस् सद्—
क्विप् ष० । पितृगणभेदे 'अग्निष्वात्ता वर्हिषदऽऽष्मपा आज्यपास्त-
थे' ति स्मृतिः ।

**वर्हिष्केश** पु० वर्ह—दीप्तौ इसुन् वर्हिः दीप्तिमान् केशो यस्य । वह्नौ

**वर्हिस्** स्त्री० वृहि इसुन् नि० नलोपश्च । वह्नौ वर्हिषि रजतं न देय'
मिति श्रुतिः । ग्रन्थिपर्णे, चित्रके च (चिते) कुशे पु० न० । 'व-
र्हिर्दैवसदन'मिति श्रुतिः वर्ह—इसुन् । दीप्तियुक्ते त्रि०

**वल** संवरणे भ्वा० आ० सक० सेट् वा घटा० । वलते अवलिष्ट

**वल** न० वल्यतेऽनेन वल—क सैन्ये, वलशब्दार्थे च ।

**वलच्च** पु० वल-क्विप अच्च—अच् कर्म० । धवले वर्णे तद्वति त्रि०

**वलभि(भी)** स्त्री० वल्यते आच्छाद्यते वल—अभि वा ङीप् । वलभी-
शब्दार्थे गोपालस्याम् ।

**वलय** पु० न० वल—अयन् । हस्तपादकटकादौ । उत्तरपदस्थः तदा-
कारवेष्टने यथा भूवलयम् । वेष्टनभूमौ, मोले च ।

**वलयित** त्रि० वलयमिव आचरितम् वलय—क्विप्—क्त । वेष्टिते ।

**वला** स्त्री० वल—अच् । (वेड़ाला) ओषधिभेदे ।

**वलाक** पुंस्त्री० वल—आकन् । वकपंक्तिपि स्त्रियां टाप् ।

वलाहक पु० वारि वहति पृ० । बलाहकशब्दस्यार्थे मेघादौ
वलिर त्रि० वल—अच् वलं संवरणमस्यास्य इरन् । केकरे ।
वलिश न० वलिना उपहारद्रव्येण श्यति मत्स्यान् । बडिशशब्दार्थे
वलीक न० वल्यते संव्रियतेऽनेन ईकन् । वनीकशब्दार्थे पटले
वलन त्रि० वलं देहोत्थापनमस्त्यस्य अनच् । बलविशिष्टे ।
वल्क भाषणे चु० उ० द्वि० सेट् । वल्कयति ते अववल्कत् त ।
वल्क न० वल-संवरणे कच् कस्य नेत्वम् । इत्वादीनां त्वचि, वल्कले,
मत्स्यानां त्वचि शल्के (आंइस) खण्डे च ।
वल्कतरु पु० वल्काय तरुः । पट्टिकालोध्रे, गुवाकवृक्षे च ।
वल्कद्रुम पु० वल्कप्रधानोद्रुमः । भूर्जपत्रवृक्षे । [(काल) पुंन०
वल्कल न० वल-कलन् कस्य नेत्वम् । त्वचे । (दारचिनि) इत्य त्वचि
वल्कलोध्र पु० वल्कभवो लोध्रः । पट्टिकालोध्रे ।
वल्ग गतौ प्लुतगतौ च भ्वा० पर० सक० सेट् । वल्गति अवल्गीत्
वल्गा स्त्री० वल्ग-अ । (लागाम) अश्वमुखस्थे रज्जुभेदे ।
वल्गित न० वल्ग-क्त । अश्वस्य गतिभेदे, गमने, बहुभाषणे च ।
वल्गु पु० वल-संवरणे उ-गुक् च । छागे । मनोहरे लि० । संज्ञायां
कन् । चन्दने, वने, पणे च न० । चारुणि सुन्दरे च त्रि० ।
वल्गुपत्र पु० वल्गूनि पत्राणि यस्य । वनमुद्गे ।
वल्भ भक्षणे भ्वा० आत्म० सक० सेट् । वल्भते अवल्भिष्ट ।
वल्मिक पु० वल-इकि मुट् च । } कीटविशेषकृते मृत्तिका स्तूपे
वल्मीक पु० वल-ईक मुट् च । } (उयेर ढिपि,।)
वल्यु(ल्य)ल छेदने परिक्रमाकरणे च अद० चुरा० उभ० सक० सेट् ।
वल्यु(ल्य)लयति ते अववल्यु(ल्यू)लत् त ।
वल्ल संवरणे भ्वा० आ० सक० सेट् । वल्लते अवल्लिष्ट ।
वल्ल पु० वल्ल—घञ् । गुञ्जात्रयपरिमाणे 'वल्लस्त्रिगुञ्जं' इति लीला०
वल्लकी स्त्री० वल्ल—क्वुन् गौ० ङीष् । वीणायाम् सल्लकीवृक्षे च ।
वल्लभ पु० वल्ल—अभच् । दयिते, अध्यक्षे, उत्तमाश्वे च ।
वल्लभपाल पु० वल्लभं पालयति पाल—अण् । अश्वपाले ।

वल्लर न० वल्ल—अरन् । कृष्णागुरुणि, गहने कुञ्जे च ।

वल्लरि(री) स्त्री० वल्ल अरिन् वा ङीप् । मञ्जर्य्यां, मेथिकायां च ।

वल्लव पु० वल्ल अच् तं वाति वा-क । गोपे, पाचके, भीमसेने च ।

वल्लि(ल्ली) स्त्री० वल्ल-इन् वा ङीप् । लतायाम् पृथिव्याञ्च दीर्घातस्तु ।
अजमोदायां, कैवर्त्तिकायाम्, चव्ये च ।

वल्लीज न० वल्ल्या जायते जन-ड । मरिचे ।

वल्लीदूर्वा स्त्री० वल्लिरूपा दूर्व्वा । मालादूर्वायाम् ।

वल्लीवदरी स्त्री० वल्लीरूपा वदरी । भूमिवदर्य्याम् ।

वल्लीमुद्ग पु० वल्लीप्रधानः मुद्गः । वनमुद्गे (मुगानि)

वल्लीवृक्ष पु० वल्लीव दीर्घो वृक्षः । सालवृक्षे ।

वल्लुर न० वल्ल-उरन् । कुञ्जे, मञ्जर्य्यां, क्षेत्रे, निर्जनस्थाने शाद्वले,
गहने च ।

वल्लूर त्रि० वल्ल-ऊरन् । आतपादिना शुष्कमांसे, शूकरमांसे, वनक्षेत्रे,
वाहने, ऊषरभूमौ च ।

वल्ल्या स्त्री० वल्ल-यत् । धात्रीवृक्षे ।

वल्वज पु० वलते भुवं वेष्टयति वल-क्विप् तादृशः सन् वजति गच्छति
वज-अच् । उलपे तृणभेदे । (वावुइ) तृणभेदे स्त्री० ।

वल्ह दीप्तौ चु०उ०अक०सेट् । वल्हयति ते अववल्हत्—त ।

वल्ह उत्कर्षे भ्वा० आ०अक०सेट् । वल्हते अवल्हिष्ट ।

वव पु० वा-ड वकारे द्वित्वम् । ज्योतिषोक्ते तिथ्यर्द्धात्मके प्रथमे करणे ।

वश स्पृहायाम् अदा०पर०सक०सेट् स्वपा० । वष्टि अवाशीत् अवशीत् ।

वश पु० न० वश-अच् । आयत्तत्वे, प्रभुत्वे च आयत्ते त्रि० ।

वशंवद त्रि० वशं वशकरं मधुरं, वशोऽहमिति वा वदति वद-अच्
मुम् च । प्रियवाक्यवादिनि, मधुरवादिनि, 'तवाहं वशं' इति
वादिनि च ।

वशक्रिया स्त्री० वशस्य क्रिया करणम् कृ-श । वशीकरणे ।

वशग त्रि० वशं गच्छति गम—ड । वशीभूते ।

वशवर्त्तिन् त्रि० वशे वर्त्तते वृत—णिनि । वशीभूते ।

वशा(सा) स्त्री० वश–(वस)-अच् । वन्ध्यायां योषायां, वन्ध्यायां, करिण्यां, स्त्रीगव्याञ्च ।
वशिक त्रि० वशोऽस्त्यस्य ठन् । शून्ये आयत्ते च अगुरुचन्दने स्त्री० ।
वशित्व न० वशिनो भावः त्व । स्वातन्त्र्ये, ईश्वरस्य ऐश्वर्य्यभेदे च । तल् । वशिताऽप्यत्र स्त्री० ।
वशिन् त्रि० वशोऽस्त्यस्य इनि । जितेन्द्रिये, स्वाधीने, स्वतन्त्रे च ।
वशिर न० वश–इरन् । सामुद्रलवणे गजपिप्पल्याम्, चव्ये च । पु०
वशि(सि)ष्ठ पु० अतिशयेन वशी इष्ठन् इनेर्लुक् पु० वा शस्य सः । अतिशयजितेन्द्रियतायुक्ते मुनिभेदे ।
वशीकरण न० अवशः वशः क्रियतेऽनेन वश–च्वि–कृ–ल्युट् । तन्त्रादुक्ते वशतासम्पादके मणिमन्त्रादौ ।
वशीर पु० वश-ईरन् । गजपिप्पल्याम् ।
वश्य न० वश-यत् । लवङ्गे । आयत्ते त्रि० ।
वष वधे भ्वा०पर०सक०सेट् । वषति अवषीत् अवाषीत् ।
वषट् अव्य० वह-डषटि । देवोद्देश्यकहविस्त्यागे ।
वषट्कार पु० वषट् +कृ घञ् । देवोद्देशकत्यागरूपे यज्ञे ।
वषट्कृत त्रि० वषट् इति कृतम् कृ क्त । हुते ।
वष्क गतौ भ्वा०आ०सक०सेट् । वष्कते । अवष्किष्ट ।
वष्कय पु० वष्क-अयन् । एकहायने वत्से ।
वष्कयणी स्त्री० वष्कयमेकहायनवत्सं नयति स्थानान्तरं नी-ड गौ० ङीष् णत्वम् । चिरप्रसूतायां गवि ।
वष्कयिणी स्त्री० वष्कय एकहायनो वत्सोऽस्त्यस्या इनि । चिरप्रसूतायां गवि ।
वस स्नेहच्छेदापहरणेषु ? — वस स्नेहतायां अक० वधे सक० चु० उभ० सेट् । वासयति ते अवीवसत् त ।
वस स्तम्भे दिवा० पर०सक० सेट् । वस्यति अवसत् अवासीत् क्त्वा वेट् ।
वस निवासे भ्वा० पर० सक० अनिट् यजा० । वसति अवात्सीत्
वस आच्छादने अदा० आ० सक० सेट् यजा० । वस्ते अवसिष्ट ।
वस वासने अद०चु० उभ० सक० सेट् । वसयति ते अववसत् त ।
वसति ( ती ) स्त्री० वस-अति वा ङीप् । वासे यामिन्याम्, वसतौ-

श्चिमत्वे'ति रघुः, निकेतने, स्थाने च।

**वसन** न० वस-ल्युट्। वस्त्रे, छादने निवासे, वस्त्रभूषणे च

**वसन्त** पु० वस-झ। मधुमाधवात्मके ऋतुभेदे, रागभेदे च।

**वसन्तक** पु० वसन्ते कायति कै-क। श्योनाकवृक्षे।

**वसन्तकुसुमाकर** पु० प्रमेहरोगनाशके औषधभेदे।

**वसन्तजा** स्त्री० वसन्ते जायते जन-ड। माधवीलतायाम्।

**वसन्ततिलक** न० चतुर्दशाक्षरपादके छन्दोभेदे।

**वसन्तदूत** पु० वसन्तस्य दूत इव। कोकिले, आम्रवृक्षे, पञ्चमस्वरे च माधवीलतायाम्, पाटलीवृक्षे, गणिकारिकायाञ्च स्त्री० ङीप्।

**वसन्तद्रु** पु० वसन्तस्य प्रधानः द्रुः। आम्रवृक्षे। वसन्तवृक्षादयोऽप्यत्र

**वसन्तसख** पु० वसन्तस्य सखा अच् समा०। कामदेवे।

**वसा** स्त्री० वस, अङ्। मांसजाते, देहस्थे, धातुभेदे मेदसि, मांसरोहिण्यां लतायाञ्च।

**वसु** न० वस उ। धने, रत्ने, वृद्ध्यौषधे, श्यामे, स्वर्णे, जले च। वकवृक्षे सूर्ये, वह्नौ, रश्मौ, गणदेवताभेदे, अष्टसङ्ख्यायाञ्च पु०। मधुरे, शुष्के च त्रि०। दीप्तौ, वृद्ध्यौषधौ च स्त्री०। वसुदेवताके धनिष्ठानक्षत्रे पु०।

**वसुक** पु० वसु इव कायति कै-क। अर्कवृक्षे वकवृक्षे च।

**वसुच्छिद्रा** स्त्री-वसुसङ्ख्यानि छिद्राण्यस्याः। महामेदायाम्

**वसुदेव** पु० वसुना दीव्यति दिव-अच्। श्रीकृष्णजनके यादवे क्षत्रियभेदे।

**वसुदेवभू** पु० वसुदेवात् भवति भू-क्विप्। श्रीकृष्णे वसुदेवसुतादयोऽप्यत्र

**वसुधा** स्त्री० वसूनि धीयन्तेऽस्यां धा-क। पृथिव्याम्

**वसुधारा** स्त्री० वसोर्वह्नेरिन्द्रस्य प्रियार्थं धारा घृतादिस्रवसन्ततिः। माङ्गल्येषु चेदिराजवसूद्देशेन दीयमानायां घृतादिधारायाम्।

**वसुन्धरा** स्त्री० वसूनि धारयति धृ-खच् मुम् च। पृथिव्याम्

**वसुमती** स्त्री० वसूनि सन्त्यस्यां मतुप्। पृथिव्याम्।

**वसुहट्ट** पु० वसूनां हट्ट इव। वकवृक्षे। [ अयवस्तद् त

**वस्त** वधे गतौ च सक०याचने द्वि०चु० उभ० सेट्। वस्तयति ते

वस्त पु० वस्यते बध्यते वस्त घञ् । छागे ।
वस्तक न० वस्त इव कायति कै-क । कृत्रिमलवणे ।
वस्तकर्ण पु० वस्तस्य कर्ण इव पत्त्रमस्य । शालवृक्षे ।
वस्तगन्धा स्त्री० वस्तस्येव गन्धोऽस्याः । अजगन्धायाम् ।
वस्तमोदा स्त्री० वस्तस्येव मोदो यस्याः । अजमोदायाम् ।
वस्ति पु० वस्ते आच्छादयति मूत्रम् वस-तिच् । नाभेरधोभागे मूत्राधारे स्थाने, वासे च वसनदशायां स्त्री० ब० व० ।
वस्तिकर्माढ्य पु० वस्तिकर्मणा तत्क्रियमव्यापारेणाढ्यः । अम्लवृक्षे ।
वस्तिमल न० ६ त० । मूत्रे
वस्तु न० वस-तुन् । द्रव्ये । पदार्थे, वाच्यपदार्थे च ।
वस्तुक न० वस्तु+इवार्थे कन् । वास्तुके शाकभेदे, श्वेतयष्टीशाके च
वस्त्य न० वस्तौ साधु यत् । गृहे ।
वस्त्र न० वस-ष्ट्रन् । परिधानाद्युपयुक्ते कार्पासादौ वसने ।
वस्त्रकुट्टिम न० वस्त्रनिर्मितं कुट्टिमं यत्र । वस्त्रगृहे ( ताँबु ) ।
वस्त्रगृह न० वस्त्रनिर्मितं गृहम् शाक० । (ताँबु) वस्त्रनिर्मिते गृहे ।
वस्त्रग्रन्थि पु० ६ त० नीव्याम् ।
वस्त्रपुत्रिका स्त्री० वस्त्रनिर्मिता पुत्रिका । वस्त्रनिर्मितपुत्तलिकायाम् ।
वस्त्रभूषणा स्त्री० वस्त्रस्य भूषणं यस्याः ५ ब० । मञ्जिष्ठायाम् । साकरण्ड वृक्षे पु० ।
वस्त्ररञ्जन पु० वस्त्रं रञ्जयति रन्ज-णिच्-ल्यु । कुसुम्भे ।
वस्न न० वस-नन् । वेतने, द्रव्ये च । धने, त्वचि मृत्यौ च मूल्ये पु०
वस्नसा स्त्री० वस्नं स्यति षो-क । स्नायौ । [ द्यां कुबेरपुर्यां च ।
वस्वौकसारा स्त्री० वसूनामोकसः सारो यत्र । इन्द्रनगर्याम् इन्द्र-
वह दीप्तौ चु० उ० अक० सेट् इदित् । वंहयति ते अववंहत् ।
वह प्रापणे भ्वा० उ० द्विक० यजा०अनिट् । वहति ते अवाक्षीत् उवाह ।
वह पु० उह्यतेऽनेन वह-अच् । वृषस्कन्धदेशे, घोटके, वायौ, पथि, नदे च ।
वहल पु० वह-अलन् । पोते, दृढे त्रि० ।

बहलगन्ध न० बहलो दृढो गन्धो यस्य । शम्बरचन्दने । [डरविकूला ।
बहलचक्षुस् पु० बहलानि चक्षुंषीव पुष्पाण्यस्य । मेषशृङ्ग्यां (गा-
बहलत्वच पु० बहला कठिना त्वचा यस्य । श्वेतलोध्रे ।
बहला स्त्री० बहलानि पुष्पादीनि सन्त्यस्य अर्श आद्यच् । शतपुष्पा-
याम् स्थूलैलायाञ्च ।
बहित्र न० वह-इत्र । पोते जलयाने । स्वार्थे कन् । अत्रैवार्थे
बहिरङ्ग न० बहिः प्रकृतेर्वहिरङ्गं यस्य । व्याकरणोक्ते प्रत्ययादिनि-
मित्तके प्रकृत्युत्तरावयवादिकार्य्ये ।
बहिरिन्द्रिय न० बहिर्देशाद्वाह्यस्य पदार्थस्य ग्राहकमिन्द्रियम् । ग-
न्धादिवाह्यविषयग्राहकेषु श्रोत्रादिषु ।
बहिर्मुख त्रि० बहिः वाह्यविषये मुखं प्रवणता यस्य । वाह्यविषया-
सक्तमनस्के विषयासक्ते जने, विमुखे च ।
बहिस् अव्य० वह-इसुन् । वाह्ये ।
बहेडुक पु० वह-अच् वहः एडुक इव स्कन्धः काण्डो यस्य विभीतकवृक्षे ।
बह्नि पु० वह-नि । अग्नौ, चित्रकवृक्षे, भल्लातके, निम्बूके तन्त्रो-
क्ते रकारे च । "यगोष्ठं वह्निसंस्थमिति श्यामास्तोत्रम् ।
बह्निकरी स्त्री० वह्निं देहस्थवह्निं करोति उद्दीपयति कृ ट ङीप् ।
धातकी वृक्षे (धाइफुल) वह्न्युद्दीपके त्रि० ।
बह्निकाष्ठ न० वह्नेर्दीप्यदाहानुकूलं काष्ठम् । दाहागुरुणि ।
बह्निगन्ध पु० वह्नौ दाहकाले गन्धो यस्य । यक्षधूपे (धुना)
बह्निगर्भ पु० वह्निर्गर्भे यस्य । वंशे, शमीवृक्षे स्त्री० ।
बह्निज्वाला स्त्री० वह्नेर्ज्वालेव पीडाकारकत्वात् । धातकीवृक्षे
बह्निदीपक पु० वह्निं देहस्थवह्निं सेवनाद्दीपयति दीप णिच् ण्वुल्
वह्निरिव दीप्यते दीप-ण्वुल् वा । कुसुम्भे अग्न्युद्दीपके त्रि०
अजमोदायाम् स्त्री०
बह्निनी स्त्री० वह्निं नयति नी-ड गौ०ङीष् । जटामांस्याम्
बह्निपुष्प स्त्री० वह्निरिव तापकं पुष्पं यस्य । धातकीवृक्षे ।
बह्निभोग्य न० ६त० । घृते ।

वह्निमन्थ पु० वह्नये वह्निजननाय मथ्यतेऽसौ मन्थ-घञ् । गणिकारीवृक्षे ।
वह्निमित्र पु० वह्निर्मित्रं यस्य । वायौ ६त० । तन्मैत्र न०
वह्निरेतस् पु० वह्नौ निषिक्तं रेतो येन । शिवे । वह्नौ हि निषिक्तात् शिववीर्य्यात् गङ्गादिसंक्रमेण कार्त्तिकेयोत्पत्तिः ।
वह्निलोहक न० वह्नेः प्रियं लोहं धातुः स्वार्थे कन् । कांस्ये
वह्निवधू स्त्री० ६त० । अग्निभार्य्यायां स्वाहायाम् तदात्मके मन्त्रे च । वह्निजायादयोऽप्यत्र ।
वह्निवर्ण न० वह्नेरिव वर्णोऽस्य रक्तोत्पले ।
वह्निवल्लभ पु० वह्नेर्वल्लभ उद्दीपकत्वात् । सर्ज्जरसे, ( धुना )
वह्निवीज न० वह्नेर्देहस्थवह्नेर्वीजमिव उद्दीपकत्वात् । जीरके, वह्निदेवताके तन्त्रोक्ते रकारे च । [धातक्याञ्च स्त्री० ।
वह्निशिख न० वह्नेरिव रक्ता शिखाऽस्य । कुसुम्भे । फलिन्यां,
वह्निसख पु० ६त० । वायौ । देहस्थवह्नेरुद्दीपके जीरके ।
वह्य न० वह यत् । शकटे, वाहनमात्रे च । [ते अवीवपत् त ।
वा सुखाप्तौ अक० गतौ सेवने च सक० चुरा० उभ० सेट् । वापयति
वा गमने हिंसने च अदा० पर० सक० अनिट् वाति अवासीत् ।
वा अव्य० वा-का विकल्पे सादृश्ये, अवधारणे, समुच्चये, वितर्के, पादपूरणे च ।
वांशिक पु० वंशी तद्वादनं शिल्पमस्य ठक् । वंशीवादनशीले
वांशी स्त्री० वंशे भवः अण् ङीप् । वंशरोचनायाम् ।
वाक पु० वच-घञ् । वचने 'नमोवाकं प्रशास्महे' इत्युत्तरचरितम् ग्रन्थभेदे च "वाकोवाक्यं तिहासेत्यादि' छान्दोग्यम् । वकस्येदम् अण् । वकसम्बन्धिनि त्रि० । [ वाकुच ) औषधिभेदे ।
वाकुचा स्त्री० वाति क्विप् वाः कुच-सङ्कोचे क गौ०ङीप् कर्म० ।
वाक्पति पु०६त० । वृहस्पतौ, वाचः पतिरिव । निर्दोषोद्धतवचनयुक्ते ।
वाक्पथ पु० वाचः पन्थाः विषयः अच् समा० । वाक्यविषये
वाक्पारुष्य न० वाचा पारुष्यम् । 'देशजातिकुलादीनामाक्रोशोत्थ-

रुष संयुतम्। यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते' इत्युक्तलक्षणे अष्टादशविवादान्तर्गते विवादभेदे।

वाक्य न० वच-ण्यत् चस्य कः। वाक्यं स्याद्योग्यताकाङ्क्षासत्ति युक्तः पदोच्चय' इत्युक्ते स्वार्थबोधसमाप्ते पदसमुदाये।

वाक्ष स्पृहायां भ्वा० पर० सक० सेट् इदित्। वाक्षति अवाक्षीत्

वागीश पु० वाचामीशः। वृहस्पतौ "वागीशाद्याः सुमनस इति न्यायमाला। सरस्वत्यां स्त्री० 'वागीशा हृदये यस्ये'ति श्रीधरः।

वागीश्वर पु० इत०। वृहस्पतौ गुरौ च तत्पत्न्यां सरस्वत्यां स्त्री० ङीप् 'वागीश्वरी स्मृतस्नातां फुल्लेन्दीवरलोचनाम्। वागीश्वरेण संयुक्ता'मिति तन्त्रम्।

वागुजी स्त्री० वाचा गुज्यते ध्वन्यते गुज क गौरा० ङीप्। सोमराज्याम्।

वागुरा स्त्री० वा हिंसने उर गन् च। मृगयार्थं मृगबन्धनपाशादौ।

वागुरावृत्ति पु० वागुरा मृगबन्धनपाशादिरेव वृत्तिर्जीविका यस्य। व्याधे।

वागुरिक पु० वागुरा प्रहरणं यस्य वागुरयाचरति वा ठक्। व्याधे

वाग्डम्बर पु० इत०। वाक्यस्तोमे बहुलवाक्ये च।

वाग्दण्ड पु० वाचो वागिन्द्रियस्य दण्डः संयमनम्। मितभाषणे वाक्यसंयमे च। [दातुं कन्यायाम्

वाग्दत्ता स्त्री० वाचा दत्ता। विधिना वाक्यमात्रेण दातुं कृतसङ्कल्पा-

वाग्दुष्ट त्रि० वाचा दुर्वचनेन दुष्टः। शुद्धेऽपि वस्तुन्यशुद्धरूप तया कथनेन दूषिते। 'वाग्दुष्टं भावदुष्टं च वर्जयेदि'तिस्मृतिः

वाग्देवता स्त्री० वाचां देवता। सरस्वत्यां वाग्देवता चरितचित्रितचित्तसद्मे'ति जयदेवः। वाग्देव्यादयोऽप्यत्र।

वाग्मिन् त्रि० वाच्+अस्त्यर्थे ग्मिनि चस्य कः तस्य लोपः। प्रशस्तवाक्यवक्तरि। वृहस्पतौ पु०। [ यवनं चरेदि'ति स्मृतिः

वाग्यत त्रि० वाचि वागिन्द्रियव्यापारो यतो येन। मौने 'वाग्यतस्त्रि-

वाङ्मय त्रि० वाक्स्वरूपम् मयट् चस्य कः। वाक्यस्वरूपे शास्त्रे।

वाङ्मती स्त्री० 'हिमाद्रेस्तुङ्गशिखरात् प्रोद्भूता वाङ्मती नदी'त्युक्ते नदीभेदे। या च मिथिलादेशसन्निकृष्टतया वर्त्तते।

**वाचंयम** त्रि० वाचां यच्छति वाचा+यम-खच् मुम् मुमश्च । मितभाषिणि । मौनावलम्बिनि मुनौ पु० ।

**वाचक** पु० वक्ति अभिधाशक्त्या बोधयति ण्वुल् । 'साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचकः' इत्युक्ते शब्दभेदे । कथके त्रि० । वाचयति वच-णिच्-ण्वुल् । पुराणादिपाठके त्रि० 'वाचकः पूजितो येनेति पुराणम् ।                    [पठने स्त्री० ।

**वाचन** न० वच-णिच् स्वार्थे वा णिच्-ल्युट् । पठने कथने च युच् ।

**वाचनिक** त्रि० वचनेन निर्वृत्तम् ठक् । वाक्य निष्पादिते पापादौ ।

**वाचस्पति** पु० ६त० अलुक् समा० । वृहस्पतौ ।

**वाच् (चा)** स्त्री० उच्यतेऽसौ अनया वा वच-क्विप् नि० वा टाप् । वाक्ये, वागिन्द्रिये च ।

**वाचाट** त्रि० वाक्+कुत्सायां बाहुल्येऽर्थे आटच् भत्वात् न कः । कुत्सितवक्तृभाषिणि । आलच् । वाचालोऽप्यत्र ।                    [पापादौ ।

**वाचिक** त्रि० वाचा कृतम् वाच्+ठक् भत्वात् न कः । वाक्यनिष्पादिते

**वाचोयुक्ति** स्त्री० ६त० अलुक् स० ; वाचाद्र्यितयुक्तौ वाक्य नैर्मल्ये च

**वाच्य** न० वच-भावे ण्यत् न कः । दूषणे, प्रतिपादने, कथने च । कर्म्मणि ण्यत् । दूष्ये, प्रतिपाद्ये, अभिधया बोध्यार्थे च ।

**वाञ्छ** कामे भ्वा०पर०सक०सेट् इदित् । वाञ्छति अवाञ्छीत् ।

**वाज** न०वज--घञ् । अन्ने, घृते, जले, यज्ञे च । शरपक्षे, वेगे च पु० ।

**वाजपेय** पु० न० वाजमन्नं घृतं वा पेयमत्र । यागभेदे ।

**वाजपेयिन्** पु० वाजपेय+अस्त्यर्थे इनि । वाजपेययागकर्त्तरि उपचारात् तद्वंश्ये च ।

**वाजसनेयिन्** पु० वाजसनेयः अध्येयत्वेनास्त्यस्य इनि । यजुर्वेद शाखाभेदाध्यायिनि विप्रादौ । तदुक्तरीत्या कर्मार्हे शूद्रे च 'शूद्रा वाजसनेयिनः इति स्मृतिः ।

**वाजिदन्त** पु० वाजिनां दन्त इव पुष्पमस्य । वासके । स्वार्थे कन् तत्रैव

**वाजिन्** पु० वाजः वेगः पक्षो वा अस्त्यस्य इनि । घोटके, वाणे, वासके च अगवति त्रि० । स्त्रियां ङीप् । सा च अश्वगन्धायाम् ।

**वाजिन** न० वाजिभ्योदेयम् अण् । आमिक्षानिःसृतजले 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमि'ति श्रुतिः ।

**वाजिपृष्ठ** पु० वाजिन इव पृष्ठमस्य । अम्लानवृक्षे ।

**वाजिभक्ष** पु० भक्ष्यते भक्ष–कर्म्मणि घञ् इत० । चणके ।

**वाजिभोजन** पु० वाजिभिर्भुज्यते भुज–कर्म्मणि ल्युट् । मुद्गे ।

**वाजीकरण** न० अवाजी वाजीव क्रियतेऽनेन वाजिन्+च्वि कृ–ल्युट् । 'यद्द्रव्यं पुरुषं कुर्य्यात् वाजिवत् सुरतक्षमम् । तद्वाजीकरणं ख्यातमि'त्युक्ते वीर्य्यवृद्धिकारके औषधभेदे ।

**वाञ्छा** स्त्री० वाछि–अ । । इच्छायाम् इष्टसाधनताधीजन्येऽभीष्टविषये चित्तवृत्तिभेदे ।

**वाट** वट–घञ् । पथि, स्थाने,वृतिस्थाने च । गौ०ङीप् । वास्तुभूमौ स्त्री० ।

**वाटिका** स्त्री० वट–ण्वुल् । वास्तुभूमौ (बेड़ियाला) क्षुपे, हिङ्गुपत्र्यां च ।

**वाट्या** स्त्री० वाट्यै हिता तत्र साधुर्वा यत् । (बेड़ियाला) क्षुपभेदे ।

**वाट्याल** पु० वाटीमलति भूषयति अल–अण् ।. (बेड़ियाला) क्षुपभेदे गौरा० ङीप् तत्रैव स्त्री० । ण्वुल् । तत्रैवार्थे पु० ।

**वाड** आप्लावे भ्वा०आ०अ०सेट् घटि न ह्रस्वः । वाडते अवाडिष्ट ।

**वाड़वेय** पु० वड़वायां भवः ढक् । समुद्रस्थे अश्वीमुखजेऽनले ।

**वाढ़** न० वह–क्त नि० अतिशये, तद्युक्ते त्रि० । पु० भानत्वक् । प्रतिज्ञायां, स्वीकारे च अव्य० ।

**वाण** पु० वण–घञ् । शरे, गवांस्तने, दैत्यभेदे, केवले, वह्नौ, काण्डावयवे, भद्रमुञ्जे, कादम्बरीग्रन्थकारके–कविभेदे च 'पञ्च वाणस्तु वाण' इति प्रसन्नराघवम् । नीलझिण्ट्यां पु० स्त्री० ।

**वाणपुर** न० इत० । शोणितपुरे कोट्टरीपुराख्ये पुरभेदे ।

**वाणवार** पु० वाणं परक्षिप्तशरं वारयति चु० वृ–अण् । योधादेश्चोलाकारे सन्नाहे कवचे । [जिदादयोऽप्यत्र ।

**वाणहन्** पु० वाणं हतवान् हन–ताड़ने भूते क्विप् । श्रीकृष्णे वाण-

**वाणि** स्त्री० वण–इण् वा ङीप् । वयने, वापदण्डे, मेघे, ङीप् ।
वाक्ये, तद्देवतायाञ्च ।    [ ते अववानत् त ।

**वात** गतौ सेवायां सुखीकरणे च सक० अद०चु०उभ०सेट् । वातयति

**वात** पु० वा–क्त । स्पर्शमात्रविशेषगुणके भूतभेदे पवने, देहस्थे धातुभेदे
च । गन्तरि त्रि० । जारे, दुष्टनायके च'प्रभातवाताहतीति भट्टिः ।

**वातक** पु० वात इव चञ्चलः इवार्थे कन् । असनपर्ण्याम् जारे च ।

**वातकिन्** त्रि० वातोऽस्त्यस्य इनि कुक् च । वातरोगयुक्ते ।

**वातकेतु** पु० ६त० । धूलौ रजसि ।

**वातघ्नी** स्त्री० वातं रोगभेदं हन्ति हन–टक् ङीप् । शालपर्ण्याम्
(शालपानि) अश्वगन्धायां, शिमुड़ीक्षुपे च ।

**वातध्वज** पु० ६त० । मेघे ।

**वातपोथ** पु० वातं रोगभेदं पुथ्यति हिनस्ति पुथ–अण् । पलाशवृक्षे ।

**वातप्रमी** स्त्री० वातं प्रमिणोति प्र+मा–ई किच्च । शीघ्रगे मृगे ।

**वातमज** पु० वातमनुलक्ष्य अजति अज–अच् व्यभावः । मृगभेदे ।

**वातमृग** पु० वातानुगो मृगः शाक० । शीघ्रगे मृगभेदे ।

**वातरक्त** न० वातजं दुष्टं रक्तम् रुधिरं यत्र । रोगभेदे । [रक्तोड्डा) ।

**वातरक्तघ्न** पु० वातजरक्तं रोगभेदं हन्ति टक् । कुक्कुरदृक्षे (कुकु-

**वातरक्तारि** पु० ६त० । (गुलञ्च) ख्यातायां लतायाम् ।

**वातरङ्ग** पु० वातस्येव सततं रङ्गश्चलनमस्य । चलदले अश्वत्थवृक्षे ।

**वातरायण** पु० वा–क्त ततस्तरप् वातरमयनं यस्य णत्वम् । उन्मत्ते,
प्रयोजनशून्ये पुरुषे, काण्डे, करपात्रे, कूटे, सरलद्रुमे च ।

**वातरूष** पु० वातेन रूष्यते रूष–घञ् । वातूले, उत्कोचे, इन्द्रचापे च ।

**वातल** पु० वातं रोगभेदं लाति ला–क । चणके । वायुकारके
द्रव्ये त्रि० ।    [वातरोगे ।

**वातव्याधि** पु० वातेन कायस्थधातुभेदेन जनितो व्याधिः शाक० ।

**वाताद** पु० वाताय वातनिवृत्तयेऽद्यतेऽसौ अद–घञ् (वादाम) फलवृक्षे ।

**वातापि** पु० अगस्त्यनाशितेऽसुरभेदे । 'वातापिर्भक्षितो येन वातापिश्च

महाबलः। समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु इति भोज-
नान्ते पाठ्यमन्त्रः।

वातापिसूदन पु० वातापिं सूदयति हिनस्ति सूद-ल्यु। अगस्त्ये मुनौ

वातामोदा स्त्री० वातेनामोदो यस्याः। कस्तूर्य्याम्।

वातायन न० वातस्यायनं गतिर्येन। गवाक्षे वातस्येव शीघ्रमयनं
गतिरस्य। अश्वे पु०।

वातायु पु० वातमयते अय-उण्। हरिणे।

वातारि पु० वातस्य रोगभेदस्यारिः। एरण्डवृक्षे, शतमूल्यां, सेफा-
लिकायां, यवान्यां, भार्ग्यां, स्नुह्यां, विडङ्गे, सूरणे, भल्लातके,
जतुकायाञ्च।

वाताश्व पु० वात इव शीघ्रगोऽश्वः। आज्यनेये अश्वोत्तमे।

वाति पु० वा क्तिच्। वायौ।

वातिक पु० वातादागतः ठक्। देहस्थवायुधातुजन्ये रोगभेदे।

वातिग पु० वातिं वायुं गच्छति गम ड। वार्त्ताकौ गम-अच् वाति-
गमोऽप्यत्र। [वार्त्ताकौ।

वातिङ्गण पु० वातिं देहस्थवातं सेवनात् गणयति गण खच। मुम् च

वातीय न० वाताय वातनिवृत्तये हितः छ। काञ्जिके।

वातुल पु० वातानां समूहः उलच्। वातसमूहे।

वातूल त्रि० वात+अस्त्यर्थे ऊलच्। वातरोगयुक्ते उन्मत्ते समूहार्थे
ऊलच् वातसमूहे पु०। [वातुलोने त्रि०।

वातोना स्त्री० वातमूनयति ऊन अण्। गोजिह्वाक्षुपे वातोनोनः।

वात्या स्त्री० वातानां समूहः यत्। वातसमूहे 'वितत्य वात्यामय-
चक्र'ति नैषधम्।

वात्सक न० वत्सानां समूहः वुञ्। वत्ससंघे।

वात्सल्य न० वत्सलस्य भावः ष्यञ्। पुत्रादिस्नेहात्मके रसभेदे।

वात्स्य पु० वत्सस्यापत्यं यञ्। गोत्रप्रवर्त्तके मुनिभेदे।

वात्स्यायन पु० वत्सस्य गोत्रापत्यं युवा वत्स+यञ् ततोयूनि फक्।
वत्सगोत्रोत्पन्ने न्यायसूत्रभाष्यकारके पक्षिलाख्ये मुनौ।

**वाद** पु० वद-घञ् । तत्त्वबुभुत्सया कथने, 'प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वाद' इति गौतमोक्ते विचारात्मके वाक्यभेदे च ।

**वादन** न० वद-णिच्-कर्मणि ल्युट् । मृदङ्गादिवाद्ये । भावे ल्युट् । मृदङ्गादिताडनरूपे व्यापारे ।

**वादर** न० वदरायाः कार्पास्याः विकारः अण् । कार्पाससूत्रनिर्मिते वस्त्रादौ । [लिङ्ग । अस्त्रभेदे ।

**वादरङ्ग** पु० वादरं वदरासंबन्धिपत्रादिवाहल्यं गच्छति गम खच्

**वादरत** त्रि० वादे विवादे रतः रम-क्त । अनुदिनविवादशीले ।

**वादरा** स्त्री० वातं वायुं राति ददाति रा-क पृ० तस्य दः । कार्पास्याम् ।

**वादरायण** पु० वदरीप्रधानं स्थानं वादरं तदयनं स्थानं यस्य । नित्यं वदरिकाश्रमवासिनि वेदव्यासे । स्वार्थे इञ् । वादरायणिरप्यत्र । अपत्ये इञ् । व्यासपुत्रे शुकदेवे ।

**वादल** न० वातं लाति म्लानाति ला क पृ० तस्य दः । मधुयष्टौ ।

**वादाम** न० वातमभति हिनस्ति अम-अण् पृ० तस्य मः । स्वनामख्याते फलभेदे ।

**वादित्र** न० वद-णिच्-इत्र । मृदङ्गादिवाद्ये ।

**वादिन्** त्रि० वदति वद-णिनि । वक्तरि-अर्थिनि, विवादकर्त्तरि, विचारस्थले प्रथमपक्षप्रतिपादके च ।

**वाद्य** न० वद-णिच्-यत् । वादनीये मृदङ्गादौ ।

**वाद्यभाण्ड** न० कर्म० । वादनीयपात्रे । [चकि न लुप्तः ।

**वा(बा)ध** विघाते भ्वा०आत्म०सक०सेट् । वा(बा)धते अवा(बा)धिष्ट ।

**वा(बा)ध** पु० वा(बा)ध-घञ् । प्रतिरोधे, प्रतिबन्धे न्यायोक्ते स्वभाववत्त्वेन ज्ञाने, अवा(बा)धाप्यत्र, पीडायाञ्च स्त्री० । ल्युट् । वा(बा)धनमप्यत्रार्थे न० ।

**वान** न० वन-घञ् । शुष्कफले, शुष्के त्रि० । वनस्येदं समूहो वा अण् । वनसम्बन्धिनि त्रि० तत्सङ्घे न० ।

**वानप्रस्थ** पु० वाने वनसमूहे प्रतिष्ठति स्था-क । मधूकवृक्षे, पलाशवृक्षे, मधप्रस्थएव स्वार्थे अण् । गृहस्थस्तु यदा पश्येत् वलिपलितमात्मनः । पुत्रेषु दारान् निक्षिप्य वनं गच्छेत् सहैव वे'त्युक्ते आश्रमभेदे ।

**वानर** पु० वानं वनसम्बन्धि फलादिकं राति गृह्णाति रा-क स्वना- [ख्याते पशुभेदे

**वानरप्रिय** पु० ६त० । क्षीरिवृक्षे ।

**वानराघात** पु० वानराणामाघातो यत्र । लोध्रवृक्षे ।

**वानरी** स्त्री० वानरस्य प्रियम् भक्ष्यत्वात् अण् ङीप् । शूकशिम्बायाम् । वानर+स्त्रियां ङीप् । वानरयोषिति ।

**वानरेन्द्र** पु० वानर इन्द्र इव । सुग्रीवे । ६त० । वानरनाथादयोऽप्यत्र

**वानल** पु०वानं वनभावं निविडतां लाति ला-क । (वाबुइ) तृणभेदे ।

**वानस्पत्य** पु० वनस्पतेरयम् प्रतिरूपः पुष्पाज्जातफलत्वात् । पुष्पजातफलके आम्रादौ वृक्षे ।

**वानायु** पु० वनायुदेशे ( आरव) ।

**वानायुज** पु० वानायुदेशे जायते जन-ड । घोटकभेदे । ( आरवी )

**वानीर** पु० वन-ईरन् स्वार्थेऽण् । वेतसे, वञ्जुलवृक्षे च ।

**वानीरक** पु० वानीर इव इवार्थे कन् । मुञ्जतृणे ।

**वानेय** न० वने जले भवः ढक् । कैवर्तीमुस्तके ।

**वान्त** त्रि० वम-क्त । उद्गीर्णे, वान्ताशीत्युच्यते बुधैरित्युद्भटः

**वान्तिहृत्** पु० वान्तिं वमनरोगं हरति हृ-क्विप् । (मयना)ख्याते वृक्षे ।

**वान्तिदा** स्त्री० वान्तिं छर्दिं ददाति दा-क । कटुकीवृक्षे ।

**वाप** पु० वप-घञ् । तन्त्वादेर्बीजादेश्च वपने मुण्डने च ।

**वापदण्ड** पु०उप्यतेऽनेन वप-करणे घञ् कर्म० । वेमनि तन्तुवपन दण्डे

**वापि (पी)** स्त्री० वप-इञ् वा ङीप् । 'द्रोणात् दशगुणा वापी' त्युक्तलक्षणे जलाशयभेदे, जलाशयमात्रे च 'वापीं स्नातुमितो गतासी'ति काव्यप्रकाशः ।

**वापीह** पु० वाप्यां तत्रस्थजलं जहाति हा-क । चातके विहगे

**वाप्य** न०वाप्यां भवः यत् । कुष्ठौषधे । वापीभवे, वप-ण्यत् । वपनीये च त्रि०

**वाम** न० वा-मन्। धने, वास्तूके च। मनोहरे, प्रतिकूले, सव्यभागस्थे अधमे च त्रि॰सव्यदेहे न०। कामदेवे, महादेवे, तन्त्रोक्ते वेदाचारविरुद्धे मद्यादिपानरूपाचारे च पु०।

**वामदेव** पु०कर्म०। महादेवे।

**वामन** त्रि० वम-णिच् ल्युट्-ल्यु वा। दक्षिणदिग्गजे, अङ्कोटवृक्षे, बलिवञ्चनार्थे प्रादुर्भूते हरेरवतारभेदे, पाणिनि सूत्रस्य काशिकावृत्तिकारके पण्डितभेदे च। ह्रस्वे त्रि० स्त्रियां ङीप्। वामनीं मूर्त्तिमादद इति।

**वामलूर** पु० वामं लुनाति लू-रक्। वल्मीके।

**वामलोचना** स्त्री० वामे सुन्दरे लोचने यस्याः। स्त्रीभेदे।

**वामवेध** पु० वामः प्रतिकूलो वेधः। ज्योतिषोक्ते गोचरस्य ग्रहाणां स्वस्वराश्यवधिकस्थानविशेषस्थग्रहभेदकृते योगभेदे 'वामवेधविधिना त्वशोभना अधमो' इति ज्योतिषम्। [सेवनरूपे आचरणे।

**वामाचार** पु० वामः वेदादिविरुद्धं आचारः। तन्त्रोक्ते मद्यमांसादि-

**वामापीडन** पु० वामं यथा तथा आपीड्यते भूष्यतेऽनेन आ+पीड-ल्युट्। पीलुवृक्षे।

**वामावर्त्त** त्रि० वामेनावर्त्तते आ+वृत-अच्। वाममार्गेण वृत्तिमति पदार्थे। भावे घञ्। वाममार्गेणावृत्तौ।

**वामी** स्त्री० वाम-गौरा० ङीष्। अश्वायाम् 'अथोष्ट्रवामीशतवाहितार्थं इति रघुः। शृगाल्यां रासभ्यां करभ्याञ्च। [नार्याम्।

**वामोरू** स्त्री० वामौ सुन्दरौ ऊरू यस्याः ऊङ्। प्रशस्तोरुमत्यां

**वाय** पु० वे-घञ्। वपने।

**वायदण्ड** पु० वायतेऽनेन वे-करणे घञ् कर्म०। वेमनि वायदण्डे।

**वायवी** स्त्री० वायोरियं यत् स्त्रियां ङीप् यलोपः। वायुसम्बन्धिन्यां, स्त्रियां तत्कृतौ, उत्तरपश्चिमायां दिशि च।

**वायव्य** त्रि० वायुर्देवताऽस्य वायु+यत्। वायुदेवताके पश्वादौ 'वायव्यं श्वेतं छागमालभेते'ति श्रुतिः।

**वायस** त्रि० वयएव अण्। काके, वायं वपनं स्यति सो-क। अगुरुवृ-

पे, श्रीवासे च

वायसाराति पु० ६त० । पेचके । [महाज्योतिष्मत्याञ्च ।

वायसादनी स्त्री० वायसैः काकैरद्यते अद-ल्युट् ङीप् । काकतुण्ड्यां

वायसी स्त्री० वायसस्येवमस्य प्रियत्वात् । काकोडुम्बरिकायाम् ।

वायसेक्षु पु० वायसानामिक्षुरिव प्रियः । काशतृणे ।

वायसोली स्त्री० वायसमोडते ओड उत्क्षेपे अच् डस्य लः गौरा० ।

काकमाच्यायाम् । स्वार्थे कन् । अत्रैव ।

वायु पु० वा-उण् । स्पर्शगुणके पञ्चभूतमध्ये भूतभेदे, उत्तरपश्चिमविदि-

शाधिपतौ देवभेदे" देहस्थधातुभेदे च ।

वायुपुत्र पु० ६त० । हनुमति, भीमे च वायुसुतादयोऽप्यत्र ।

वायुभक्ष पु० वायुं भक्षति भक्ष-अण् । सर्पे । त्यु । वायुभक्षणोऽप्यत्र

वायुवर्त्मन् न० । वायोर्वर्त्म सञ्चारमार्गोऽत्र । आकाशे ।

वायुवाह पु० वायुना उह्यते वह-घञ् । धूमे ।

वायुवाहिनी स्त्री० वायुं देहस्थ वायुं वाहयति सञ्चारयति वह-णिच्

णिनि । वायुसञ्चारिण्यां देहस्थ शिरायाम् ।

वायुसख पु० वायोः सखा सहचरः अच् समा० । अग्नौ ।

वायुसखि पु० वायुः सखा यस्य । अग्नौ

वाय्वास्पद न० ६त० । वायुसञ्चारस्थाने आकाशे।

वार् न० पु० वृ-क्विप् । जले ।

वार पु० वृ-घञ्। सङ्घे अवसरे स्वयोग्यकाले (पाला) 'वारोऽङ्करा-

जस्ववुरि'ति सा० द्य० द्वारे, शिवे, कुब्जवृक्षे, वाणे, सूर्य्यादय-

हाणां अधिकृते दिने, यथा रविवारः रविस्वामिकं दिनम् इत्या-

दि । यत्नपाले च । [अस्त्रविषे च पु० ।

वारक त्रि० वारयति वृ णिच्-ल्युट् । प्रवृत्तिनिरोधके । अश्वगतिभेदे,

वारण न० वृ णिच् ल्युट् । प्रवृत्तिप्रतिरोधे, निषेधे हस्त्यादिधारणे च ।

गजे पु० । वाणवारे कवचे पु० न० । वाणवारे कवचे पु० न० ।

वारणबुषा (सा) स्त्री० वारणं पुष्णाति पुष-क पृ० । कदल्याम्

वारणवल्लभा स्त्री० ६त० । कदल्याम् ।

वारवृषा स्त्री० वारं जलं वर्षयत्र वृष-क । धान्ये ।
वारमुख्या स्त्री० वारे वेश्यावृन्देमुख्या । बहुजनसत्कृतायां वेश्यायाम्
वारंवारम् अव्य० वृ-णमुल् द्वित्वम् । पौनः पुन्ये ।
वारलीक पु० वार्जलं अलीकं यत्र । (वायुइ तुलसी) क्षुपे ।
वारयितृ पु० वृ० वृ तृच् । पत्यौ । वारणकर्त्तरि त्रि० ।
वारयोषा स्त्री० वारस्य जनसमूहस्य योषा साधारणत्वात् । वेश्यायाम् ।
इत० । वारवध्वादयोऽप्यत्र ।
वारवाण पु० न० वार्य्यते वृ-घञ् वारोवार्य्यो बाणो यस्य । कवचे
वारवाणि स्त्री० वारं समूहं वणते वण-इण् वा ङीप् । वेश्यायाम्
वारांनिधि स्त्री० वारांजलराशीनां निधिराधारः नि+धा-कि अलुक्
समा० । समुद्रे ।
वाराणसी स्त्री० वरणा च असी च सीमात्वेनास्त्यस्या अण् पृ० ।
काशीनगरे वराणस्यप्यत्र । [वराहसम्बन्धिनि त्रि० ।
वाराह पु० वराहस्येदं प्रियत्वात् अण् । मत्स्यपक्षीनक वृक्षे
वाराहकर्णी स्त्री० वराहस्यायं वाराहइव कर्णः पत्रमस्याः ङीप् ।
अश्वगन्धायाम् । [कन्दयाम् ।
वाराहपत्री स्त्री० वाराहस्तत्कर्णइव पत्रमस्याः ङीप् । अश्व-
वाराहाङ्गी स्त्री० वाराहमिवाङ्गमस्याः ङीप् । दन्तीवृक्षे ।
वाराही स्त्री० वराहस्येयमण् ङीप् । अष्टमातृकामध्ये वराहशक्तौ,
'वाराही नारसिंही चेति ख्यामास्तवः । वराहक्रान्तायाम् वरा-
हयोर्षिति च ।
वारि न० वृ-इन् । जले, ह्रीवेरे च । वार्य्यतेऽमया वृ-णिच् इन् वा
ङीप् । गजबन्धन्याम् 'वार्य्यर्गलाभङ्गइव प्रवृत्त' इति रघुः ।
वाचि० सरस्वत्याम् च स्त्री० ।
वारिकण्टक पु० न० वारिणः कण्टकइव । शृङ्गाटके ।
वारिकर्णी स्त्री०वारिणि कर्णइव पत्रमस्याः ङीप् । कुम्भ्याम् (पाना)
स्वार्थे कन् । तत्रैव । [तत्रैव ।
वारिकुब्ज पु० वारिणि कुब्ज इव वक्राकृतित्वात् । शृङ्गाटके स्वार्थे कन्

**वारिचत्वर** पु० वार्य्येव चत्वरमूपमस्याधारत्वात् । कुम्भिकायाम्

**वारिचर** पु० वारिषु चरति चर-अच् । मत्स्ये जलचरजन्तुमात्रे त्रि० ।

**वारिचामर** न० वारिणश्चामरमिव शोभाहेतुपुञ्जाकारितत्वात् शैवाले

**वारिज** न० वारिणि जायते जन-ड । पद्मे, लवङ्गे, गौरसुवर्णे, श-

 वणभेदे च । शङ्खे, शम्बूके च पु० ।

**वारितस्कर** । पु० वारिणस्तस्करइवापहारकत्वात् । सूर्य्ये, मेघे च

**वारित्रा** स्त्री० वारिणस्त्रायते त्रै-क । छत्रे ।

**वारिद** न० वारि ददाति दा-क । मेघे, मुस्तके च । जलदातरि त्रि०

**वारिधि** पु० वारीणि धीयन्तेऽस्मिन् धा-कि इत० । समुद्रे वारिनि-

 ध्यादयोऽप्यत्र ।

**वारिपर्णी** स्त्री० वारिणि पर्णान्यस्याः ङीप् । कुम्भिकायाम् (पाना)

**वारिपालिका** स्त्री० वारीणि पालयति आस्तृणाति पालण्वुल् ।

 कुम्भिकायाम् (पाना ) ।

**वारिपृश्नी** स्त्री०वारिणि पृश्निः पर्णमस्याः ङीप् । कुम्भिकायाम्(पाना)।

**वारिबदरा** स्त्री० वारिसमीपभवा बदरेव । प्राचीनामलके ।

**वारिबालक** न० वारिणो बालक इव । ह्रीवेरे

**वारिभव** न० वारिणो भवति प्रभवति भू-अच् । स्रोतोञ्जने ।

**वारिमसि** पु० वारि जलं मसिरिव नीलतापादकं यस्य । मेघे

**वारिमूली** स्त्री० वारिणि मूलमस्याः ङीप् । कुम्भ्याम् (पाना)

**वारिरथ** पु० वारिणि रथ इव गमनसाधनम् । भेलके ।

**वारिराशि** पु० वारीणां राशयोऽत्र । समुद्रे ।

**वारिरुह** न० वारिणि रोहति रुह क । पद्मे, जलजातमात्रे त्रि०

**वारिवदन** न० वारियुतं वदनं यस्मात् । प्राचीनामलके तत्सेवने हि

 मुखे वारिनिस्रावः ।

**वारिवर** न० वारि वृणोति वृ अच् । करमर्दके ।

**वारिवल्लभा** स्त्री० वारि वल्लभमस्याः उत्पत्तिहेतुत्वात् । बदर्य्याम् ।

**वारिवाह** पु० वारीणि वहति वह-अण् । मेघे ।

**वारिश** पु० वारिणि समुद्रजले शेते शी ड । विष्णौ ।

वारीश पु० ६त० । समुद्रे, वरुणे च । वारिनाथादयोऽप्यत्र ।

वारुण न० वरुणस्येदमण् । जले, वरुणसम्बन्धिनि त्रि० ।

वारुणि पु० वरुणस्यापत्यम् इञ् । अगस्त्यमुनौ कुम्भजातत्वात् तस्य वरुणस्यापत्यत्वात् तथात्वम् ।

वारुणी स्त्री० वरुणोदेवतास्य वरुणस्येदं वा अण् ङीप् । पश्चिमदिशि, मदिरायाम्, शतभिषानक्षत्रे, दूर्वायां, गण्डदूर्वायाम्, इन्द्रवारुण्यां, शतभिषानक्षत्रयुक्तचैत्रकृष्णत्रयोदश्यां, वरुणस्त्रियाञ्च ।

वारेन्द्री स्त्री० देशभेदे, (वारेन्द्रभूमि) (राजशाही) वङ्गदेशप्रदेशे

वार्त्त न० वृत्ति+अण् । आरोग्ये । निरामये, वृत्तिशीले च त्रि० । दुर्गायां, कृषिकर्म्मणि, वृत्तौ, जनश्रुतौ, वृत्तान्ते, काककर्कटे भूतनाशने च स्त्री० 'अस्मिन् महामोहमये कटाहे सूर्य्याग्निना रात्रिदिनेन्धनेन । मासर्तुदर्व्वीपरिघट्टनेन भूतानि कालः पचतीति वार्त्ता' इति भारतम् ।

वार्त्ताक पु० वार्त्तमारोग्यमाकर्यति गमयति आक-णिच्-अण् । वार्त्ताकौ । स्त्रियामपि तत्पक्षे ङीप् । पु० उत्त्वम् वार्त्ताकुरप्यत्र स्त्री० 'वार्त्ताकुरेषा गुणसम्प्रयुक्ते'ति वैद्यकम् ।

वार्त्तावह पु० वार्त्तामावहति आ+वह अण् । कृषिवाणिज्या जीविनि वणिग्भेदे । वृत्तान्तवाहके त्रि० ।

वार्त्तिक न० वृत्तिरूपेण कृतो ग्रन्थः ठक् । 'उक्तानुक्तदुरुक्तार्थव्यक्तकारि तु वार्त्तिक'मित्युक्ते सूत्रानुक्ताद्यर्थविस्तारके ग्रन्थभेदे ।

वार्द्दर न० वारे जलाय दीर्य्यते दृ-अप् । दक्षिणावर्त्तशङ्खे, काकचिञ्चायाम् कृष्णजीरके, कृमिजे, आम्रबीजे च । वारेव दरम् । जले ।

वार्द्धक न० वृद्धानां समूहः तस्य भावः कर्म्म वा वुञ् । वृद्ध समूहे वृद्धस्य भावे कर्म्मणि च ।

वार्द्धक्य न० वृद्धस्य भावः कर्म वा ष्यञ् वुक् च । वृद्धत्वे ।

वार्द्धि पु० वारि जलानि धीयन्तेऽत्र धा-कि उप० । समुद्रे ।

वार्द्धिभव न० वार्द्धौ समुद्रे भवति भू-अच् । सामुद्रलवणे ।

वार्ड्धुषि पु० वृद्ध्या जीवति इण् वृद्धेर्वृधुषिभावः । वृद्ध्याजीवे । स्वार्थे कन् । तत्रैव । [जीविनि

वार्द्धुषिन् त्रि०वृद्धि+अस्त्यर्थे इनि प्रकृतेः नि० वार्द्धुषि भावः । वृद्ध्या-

वार्द्धुष्य न० वार्द्धुषेर्भावः ष्यञ् । धान्यादेर्वृद्ध्योपाये (वाडिदेया )

वार्ध्रीणस पु० वारि जलानि घर्यति घा-क्विप् वार्ध्रीः नसा नासिका यस्य णत्वम् पृ०। गण्डके। पृ० वाध्रीणसः । 'त्रिपिवं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् । वार्ध्रीणसः । प्रोच्यते ऽसौ" इत्युक्ते पशुभेदे 'वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी"ति मनुः ।

वार्मण न० वर्मणां समूहः अण् न टिलोपः । कवचसमूहे ।

वार्म्मिण न० वर्मिणां समूहः अण् न टिलोपः । कवचिसमूहे ।

वार्मुच् पु० वारि जलानि मुञ्चति मुच-क्विप् । मेघे ।

वार्षिक त्रि० वर्षे वर्षासु वा भवः ठञ् । वत्सरभवे, वर्षाकालभवे च । त्रायमाणालतायां न० स्त्री० स्त्रीत्वे ङीप् । वर्षकर्त्तव्यायां पूजायां स्त्री० ङीप् । 'शरत्काले महापूजा क्रियते या च वार्षिकी'ति चण्डी ।

वार्हत न० वृहत्याः फलम् अण् तस्य न लुप् । वृहतीफले ।

वार्हद्रथ (थि) पु० वृहद्रथस्यापत्यमण्, इञ् वा । वृहद्रथराजपुत्रे जरासन्धे नृपे ।

वार्हस्पत्य न० वृहस्पतिना प्रोक्तमधीते अण् । चार्वाके । तेन प्रोक्तं तस्येदं वा अण् । नीतिशास्त्रे बौद्धागमे च वृहस्पति सम्बन्धिनि त्रि०।

वालय पु०वल-भञ् वलनमस्यास्ति व । तिथ्यर्द्धात्मके द्वितीये करणे

वाल्क न० वल्केन निर्वृत्तमण् । वल्कजाते वस्त्रे ।

वाल्मिकि पु० वल्मिकौ भवः इञ् । रामायणग्रन्थकर्त्तरि मुनिभेदे

वाल्मीक (कि) पु० वल्मीके भवः घण् इञ् वा । मुनिभेदे ।

वावदूक त्रि० वद-यङ् लुक्-ऊकञ् । बहुवदनशीले वक्तरि

वावय पु०वय-यङ्लुक्-अच् । (वावुइ)तुलसीभेदे ।

वावृत स०भक्तौ दि० आत्म० सक० सेट् ह्यावेट् । वावृत्यते अवावर्त्तिष्ट ।

'ततो वाहृत्यमाना से'ति भट्टिः ।

**वावृत्त** त्रि० वावृत-क्त । कृतवरणे ।

**वाश** तिरश्चां शब्दे अक० आह्वाने सक० दि० आत्म० सेट् चङि न ह्रस्वः ।
वाश्यते अवाशिष्ट । 'उद्वाश्यमानः पितर'मिति भट्टिः

**वाशा** स्त्री० वां गतिं श्यति शो-क । वासके । स्वार्थे कन् तत्रैव

**वाशित** न० वाश-भावे क्त । तिरश्चां शब्दे, आह्वाने च ।

**वाशिता** स्त्री० वाश-क्त । करिण्याम्, स्त्रीमात्रे च ।

**वाशि(सि)ष्ठ** न० वशि (सि)ष्ठस्येदम् अण् तेन प्रोक्तं वा अण् । वशि-
ष्ठप्रणीते उपपुराणभेदे, योगशास्त्रभेदे च । वशि (सि) ष्ठसंबन्धिनि
त्रि० । गोमत्यां नद्यां स्त्री० ङीप् ।

**वाश्र** न० वाश-रक् । गृहे, चतुष्पथे च । दिवसे पु० ।

**वाष्प (स्प)** पु० वा-प पु(सु) क् च । ऊष्मणि, लोहे, चक्षुर्जले च संज्ञा-
यां कन् । मारिषशाके ( नटिया ) हिङ्गुपत्र्यां स्त्री० वा गौ०
ङीप् । वाष्पी (स्पी)+कन् । वाष्पि(स्पि) काप्यत्र ।

**वास** सुरभीकरणे अ० चु० उ०सक० सेट् । वासयति ते अववासत् त

**वास** पु०वस-घञ् । गृहे वस्त्रे अवस्थाने, वास-अच् । वासके, सुगन्धे च।

**वासक** पु० वास-ण्वुल् । स्वनामख्याते वृक्षे' येन तेन प्रकारेण वासकः
कासनाशकः इति वैद्यकम् ।

**वासकसज्जा** स्त्री०'कुरुते मण्डनं या तु सज्जिते वासवेश्मनि । सा तु
वासकसज्जा स्यादि,त्युक्तलक्षणे नायिकाभेदे वाससज्जाप्यत्र ।

**वासगृह** न० वासयोग्यं गृहम् । मध्यगृहे ।

**वासतेयी** स्त्री० वसतये हिता ढक् । रात्रौ । वसतियोग्ये त्रि० 'व-
नेषु वासतेयेष्वि'ति भट्टिः ।

**वासन** न० वास-ल्युट् । सुरभीकरणे धूपने,वारिधान्याम्, वस्त्रे, वास-
स्थाने, ज्ञाने च वस-णिच्-ल्युट् । निक्षेपाधारे, निक्षेपार्थे-मुद्रा-
ङ्किते च । [ भीकरणे च

**वासना** स्त्री० वास-युच् प्रत्याशायां ज्ञाने, स्मृतिहेतौ, संस्कारे, सुर-

**वासन्त** पु० वसन्तस्येदम् वसन्तेभवः वा अण् । वसन्तप्रिये उष्ट्रे, कोकिले

च। वसन्तभवे-मलयवायौ-कुङ्गे, कुण्डमुक्ते मदनवृक्षे च। तत्-कालभवे त्रि०। यूथ्यां माधवीलतायां, पाटलायां नवमल्लिकायां, तत्काले पृक्कायां-दुर्गायाञ्च स्त्री०।

**वासयोग** पु० वासेन गन्धेन योगो यत्र। (आविर) चूर्णभेदे

**वासर** पु०न०। वस-अरन्। दिवसे। नागभेदे पु०।

**वासव** पु० वसुरेव स्वार्थेऽण् वसूनि सन्त्यस्य वा अण्। इन्द्रे वसोर-पत्य' स्त्री० अण् ङीप्। व्यासमातरि मत्स्यगन्धायाम् स्त्री०।

**वासवदत्ता** स्त्री० वासवदत्तामधिकृत्य कृतो ग्रन्थः अण् आख्यायि-कायां तस्य लुक्। वासवदत्ताचरिताख्यापके ग्रन्थभेदे। ३त० इन्द्र-दत्ते त्रि०।

**वासस्** न० वस-असि। वस्त्रे।

**वासागार** न० वासयोग्यमगारम्। वासयोग्ये गृहे गृहमध्ये

**वासि(सी)** स्त्री० वस-इञ् वा ङीप्। कुठारभेदे (वाइस)

**वासित** त्रि० वास-क्त। सुरभीकृते।

**वासिनी** स्त्री० वासोऽस्त्यस्याः इनि। शुक्लझिण्टिकायाम्।

**वासु** पु० वस उण्। विष्णौ।

**वासुकि** पु० वसुना रत्नेन कायति कै-क सएव इञ्। सर्पराजे 'भगिनी वासुकेस्तथे'ति मनसास्तोत्रम्।

**वासुदेव** पु० वसुदेवस्यापत्यम् अण्। विष्णौ।

**वासुदेवप्रियङ्करी** स्त्री० ६त०। शतावर्य्याम्, श्रीकृष्णप्रियकारिण्यां स्त्रियाञ्च।

**वासू** स्त्री० वास-ऊ। नाट्योक्तौ बालायाम्।

**वास्तव** न० वस्त्वेव अण्। सत्यभूते पदार्थे।

**वास्तविक** त्रि० वस्तुतो निर्वृत्तम् ठक्। स्वतःसिद्धे सत्यभूते पदार्थे।

**वास्तव्य** त्रि० वसति वस तव्य नि०। वासकर्त्तरि, वासयोग्ये स्थाने, वसतौ च पु०। [ कन्। शाकभेदे।

**वास्तु** पु० वस-तुण्। वासयोग्यभूमौ, खन.मख्याते शाके च। स्वार्थे

वास्तुक न० वास्तु-कन् पृ० दीर्घः। वास्तुशाके चिल्लीशाके स्त्री० गौरा० ङीष्।

वास्तेय त्रि० वस्तेरिदम् वस्तये हितं वा ढक्। वस्तिसम्बन्धिनि वासयोग्ये च।

वास्तोष्पति पु० ६त० अलुक्समा०। इन्द्रे, वास्तुभूमिपतौ च।

वास्त्र पु० वस्त्रेणाहतो रथः अण्। वस्त्रेण सम्यगावृते रथे।

वास्पेय पु० वास्पाय हितं ढक्। नागकेशरे।

वाह यत्ने भ्वा०आ०अक०सेट् चङि न ह्रस्वः। वाहते अववाहिष्ट

वाह पु० उह्यतेऽनेन असौवा गवादिना वा वह-घञ्। अश्वे 'वाहो भारचतुष्टयमि'त्युक्ते परिमाणभेदे च।

वाहद्विषत् पु०वाहं द्वेष्टि द्विष-शतृ ६त०। महिषे वाहरिपुदयोऽप्यत्र

वाहन न० वाह्यतऽनेन वह-णिच्-ल्युट्। रथादौ याने। [शाके च]

वाहस पु० वाहं गतिं स्यति षो-क। अजगरे, सुनिषण्णके (सुषनि)

वाहित्थ न० वहतीति णिनि वाही-तस्मिन् तिष्ठति स्था-क पृ०। गजकुम्भस्याधोभागे।

वाहिनी स्त्री० वाहोऽस्त्यस्याः इनि ङीप्। सेनायां, वहति वह-णिनि। नद्याम् 'वाहिन्यः पार्श्वमेता न जहतीति काव्यप्रकाशः।

वाहिनीपति पु० ६त०। सेनापतौ, समुद्रे च।

वाहीक पु० वह-ईकण्। जातिभेदे (जाट)। गौर्वाहीक इति अलङ्कारः। देशभेदे च।

वाहु पु० वह-उण्। भुजे अवयवभेदे, अङ्कशास्त्रोक्ते क्षेत्रव्यवहारे भुजाकारे रेखाभेदे च।

वाहुमूल न० ६त०। भुजद्वयस्य मूले कक्षरूपे अङ्गे।

वाहुवार पु० वाहुं वारयति ह णिच्-अण्। श्लेष्मातकवृक्षे

वाह्य न० वाहं चालनमर्हति यत्, वह-ण्यत् वा। अश्वादौ याने, वाहरे च। वहिर्भवः ष्यञ् टिलोपः। वहिर्भवे त्रि०।

वाह्येन्द्रिय न० बाह्यपदार्थानां शब्दादीनां ग्रहणयोग्यमिन्द्रियम्। शब्दादिग्राहके श्रोत्रादौ इन्द्रिये।

वाह्लि (ह्ली) क पु०। वह-क्रिण् स्वार्थे कन्। देशभेदे। तद्देशजाते-कुङ्कुमे, हिङ्गुनि न०।

वि अव्य० वा-क्रि। नियोगे, विशेषे-निश्चये, असहने, निग्रहे, हेतौ, अव्याप्तौ, ईषदर्थे, परिभवे, शुद्धौ, अवलम्बने, ज्ञाने, गतौ, आलस्ये, पालने, च। विहगे पु०। [तस्मिन्

विंश त्रि० त्रिंशतेः पूरणः विंशति+डट्। येन विंशतिसङ्ख्या पूर्य्यते

विंशक न० विंशतेरवयवः ड्वुन। विंशतिसंख्यायाम्। विंशतिरधिका दीयते ऽस्मिन् शते आयो लाभो वृद्धि र्वाड्वुन्। प्रतिशतं विंशत्यधिकलाभादौ सामुद्रा विंशकं शतमिति स्मृतिः।

विंशति स्त्री०द्वे दशती नि०द्विदशकसंख्यायां, तत्सङ्ख्याते च। एक व०। सङ्ख्याविशेषार्थे तु सर्व्व व०। द्वे विंशती तिस्रः विंशतय इति।

विंशतिक त्रि० विंशतेर्योग्यः। विंशतियोग्ये।

विंशतितम त्रि० विंशतेः पूरणः तमट्। विंशशब्दार्थे स्त्रियां ङीप्।

विकङ्कट पु० वि+ककि-अटन्। गोक्षुरे।

विकङ्कत पु० वि+ककि-अतच्। (वइँची) वृक्षे, अतिवलायाञ्च।

विकच पु० विगतः कचो यस्य। क्षपणे बुद्धसंन्यासिनि, विशिष्टः कचो यत्र। ध्वजे केतौ। वि+कच-अच्। विकसिते इत्य० केशशून्ये त्रि०। महाश्रावणिकायाम् स्त्री०।

विकट पु० वि+कट-अच्। विस्फोटके, साकरुण्डवृक्षे च। वि+कटच्। विशाले, विकृते, सुन्दरे, दन्तुरे, च त्रि०।

विकण्टक पु० विगतः कण्टकोऽस्य। यवासे। शत्रुहीने त्रि०।

विकत्थन न० वि+कत्थ-ल्युट्। आत्मश्लाघायाम्। युच्, तत्कर्त्तरि त्रि०

विकर्त्तन पु० वि+कृत-ल्यु। सूर्य्ये, अर्कवृक्षे च।

विकर्म्मस्थ पु० त्रि० विकर्म्मणि निन्दिताचारे तिष्ठति स्था क कुत्सिताचाररते।

**विकल** त्रि॰ विगता कला यस्य । विह्वले, स्वभावहीने, कलाहीने च ।

**विकलाङ्ग** त्रि॰ स्वभावहीनमङ्गमस्य । स्वभावतो न्यूनाधिकाङ्गे ।

**विकल्प** पु॰ विभिन्नः कल्पः । भ्रान्तिहेतौ कल्पने, विविधकल्पने, संसर्गारोपणे, पक्षतः प्राप्तौ च ।

**विकश्व(स्व)र** त्रि॰ वि+कश(स)-वरच् । प्रकाशशीले रक्तपुनर्नवायाञ्च ।

**विकषा** स्त्री॰ विशेषेण कष्यतेऽसौ कष-घञर्थे क । मञ्जिष्ठायाम् ।

**विक(शि)सित** त्रि॰ वि+कश(स) क्त । प्रकाशयुक्ते ।

**विकार** पु॰ वि+कृ घञ् । प्रकृतेरन्यरूपे परिणामे ।

**विकाल** पु॰ विरुद्धः दैवपैत्रादिकर्मानर्हः कालः । राक्षसीनामकवेलायाम्, दिवसान्त्यकाले ।

**विकाश** न॰ विरुद्धः काशः । रहसि, विशिष्टे काशे प्रकाशे च ।

**विकाशिन्** त्रि॰ वि+काश-णिनि । प्रकाशशीले विकस्वरे ।

**विकिर** पु॰ वि+कॄ-क । विहगे, कूपे च । विकीर्य्यते घञर्थे क । विघ्नोपशान्तये भूतक्षिप्ते श्वेतसर्षपादौ ।

**विकिरण** न॰ वि+कॄ-ल्युट् नि॰ इत्वम् रपरत्वम् । क्षेपणे हिंसने, ज्ञाने च । अर्कवृक्षे पु॰ । ब॰व॰ किरणशून्ये त्रि॰ ।

**विकीर्ण** त्रि॰ वि-कॄ-क्त । विक्षिप्ते । [ प्राप्ते च ।

**विकुर्वाण** त्रि॰ वि+कृ-शानच् । हर्षहेतुना जातरोमाञ्चादौ विकृति-

**विकुक्षि** पु॰ सूर्य्यवंश्ये इक्ष्वाकुराजपुत्रे नृपभेदे ।

**विकृत** त्रि॰ वि+कृ-क्त । बीभत्से मलिनीकृते, रोगयुक्ते च ।

**विकृति** स्त्री॰ वि+कृ+क्तिन् । विकारशब्दार्थे ।

**विकृति** पु॰ वि+कृ-क्तिच् ङीप् । रोगे, डिम्बे च ।

**विक्रम** पु॰ विशेषेण क्रामति वि-क्रम-घञ् अच् वा । त्रिविक्रमे, विष्णौ, विक्रमादित्यनृपे "रत्नानि वै वररुचिर्नव विक्रमस्ये"ति ज्योतिर्विदाभरणम् । भावे घञ् । क्रमणे करणे घञ् । चरणे, शौर्य्यातिशये, सामर्थ्ये च षष्टिवर्षमध्ये 'लवणं मधु गव्यञ्च महार्घं विक्रमे प्रिये !' इत्युक्तलक्षणे वत्सरभेदे च । [illegible]

**विक्रमादित्य** पु॰ विक्रमेणादित्य इव । स्वनामख्याते नृपभेदे विक्र-

**विक्रमिन्** पु० वि+क्रम-णिनि । सिंहे, विष्णौ च विक्रमयुक्ते त्रि० ।

**विक्रय** पु० वि+क्री-अच् । मूल्यग्रहणेन परस्वत्वापादके व्यापारे

**विक्रयानुशय** पु० विक्रयस्यानुशयः पश्चात्तापः । विक्रीतपदार्थस्य परा-
वृत्तिफलके अनुतापे ।

**विक्रयिक** पु० विक्रयः अस्त्यस्य ठन् । विक्रेतरि ।

**विक्रयिन्** त्रि० वि+क्री-णिनि विक्रयकर्त्तरि ।

**विक्रान्त** पु० वि+क्रम-क्त । सिंहे, शूरे च । भावे क्त । विक्रमे ।

**विक्रिया** स्त्री० वि+कृ-श । विकारे अन्यथास्थितस्य वस्तुनोऽन्यथा-
परिणामे ।

**विक्रेय** त्रि० वि+क्री-यत् । विक्रययोग्ये पदार्थे ।

**विक्लव** त्रि० वि+क्लु-अच् । व्याकुलीभावे ।

**विक्लिन्न** त्रि० वि+क्लिद-क्त । आर्द्रे, शीर्णे, जीर्णे च ।

**विक्षाव** पु० वि+क्षु-घञ् । शब्दे कासादिरोगजातशब्दे च ।

**विक्षीर** पु० विशिष्टं क्षीरमस्य । अर्कवृक्षे विगतक्षीरे त्रि० ।

**विक्षेप** पु० वि+क्षिप-घञ् । त्यागे, प्रेरणे, दूरीकरणे च ।

**विक्षेपशक्ति** स्त्री० विक्षेपस्य दूरीकरणस्य जनिका शक्तिः । वेदान्तोक्ते
अविद्याशक्तिभेदे ।

**विख** त्रि० विगता नासिका यस्य खादेशः । गतनासिके । ख्यादेशः ।
विख्योऽप्यत्र त्रि० ।

**विख्यात** त्रि० विशेषेण ख्यातः प्रसिद्धः वि+ख्या-क्त । प्रसिद्धे ।

**विगणन** न० विशेषेण गणनम् गण-ल्युट् । ऋणशोधनार्थे सङ्ख्यागणने

**विगत** त्रि० वि+गम-क्त । प्रभादरहिते विशेषगते अपगते च ।

**विगतार्त्तवा** स्त्री० विगतमार्त्तवं रजो यस्याः । गतरजस्कायां
स्त्रियाम् ।

**विगन्धक** पु० विरुद्धः गन्धोऽस्य कप् । इङ्गुदीवृक्षे । वपुषायां
(शशा) स्त्री० गौ० ङीष् । स्वार्थे कन् तत्रैव ।

**विगम** पु० वि+गम-घञ् । नाशे, अपाये च ।

विगर्हण न० वि+गर्ह ल्युट् । निन्दने । [निन्दायाम् ।
विगर्हित त्रि० वि+गर्ह-क्त । निन्दिते निषिद्धे च । भावे क्त ।
विगाढ त्रि० वि+गाह-क्त । स्नाते, कृतावगाहने च ।
विगान न० वि+गै ल्युट् । निन्दायाम् ।
विगीत त्रि० वि+गै-क्त । निन्दिते ।
विगीति स्त्री० वि+गै-क्तिन् । निन्दायाम् ।
विगुण त्रि० विरुद्धो गुणोऽस्य । गुणरहिते ।
विगूढ त्रि० वि+गुह-क्त । गर्हिते, गुप्ते च ।
विगृहीत त्रि० वि+ग्रह-क्त । गृहीते, व्याकरणोक्ते विग्रहवाक्यस्थे पदे च ।
विग्र त्रि० विगता नासिकाऽस्य ग्रादेशः । विगतनासिके ।
विग्रह पु० वि+ग्रह-अच् । देहे, विभागे, युद्धे, समासादिवृत्ति समानार्थकवाक्यभेदे, विशेषज्ञाने च ।
विघटिका स्त्री० विभागः घटिकायाः । घटिकाषष्ठिभागे पलात्मके काले
विघटित त्रि० वि+घट-क्त । वियोजिते विशेषेण रचिते च ।
विघट्टित त्रि० वि+घट्ट-क्त । चालिते, वियोजिते च ।
विघस पु० वि+अद-घञ् । भोजनशेषे आहारे च सिक्थके न० ।
विघसाशिन् त्रि० विघसं देवतादिदत्तावशेषमश्नाति अश-णिनि । दैवपैत्रकार्यानन्तरं तदशिष्टभोजिनि ।
विघात पु० वि+हन-क्त । व्याघाते, आघाते च ।
विघातिन् त्रि० वि+हन-णिनुण् । निवारके । नाशके, नष्टे च 'नित्यशब्दं बल निमित्तो विघाती'ति व्याकरणम् । ण्वुल् । विघातकोऽप्यत्र ।
विघ्न पु० वि+हन-क । व्याघाते अन्तराये, कृष्णपाकफलायाञ्च ।
विघ्ननाशक पु० ६त० । गणेशे विघ्नविनाशनादयोऽप्यत्र ।
विघ्नराज पु० विघ्ने राजते क्वच् । गणेशे । विघ्नेशादयोऽप्यत्र ।
विघ्नहारिन् पु० विघ्नं हरति हृ-णिनि । गणेशे ।
विघ्नित त्रि० विघ्नो जातोऽस्य इतच् । जातविघ्ने ।

विघ्नेशानकान्ता स्त्री० ६त० श्वेतदूर्व्वायाम् ।
विच पृथक्करणे रु०जु०च उ०अक०अनिट् । विनक्ति विवेक्ति विवक्ति विविक्ते । अविचत् अवैक्षीत् ।
विचकिल पु० विच+क किल-क कर्म्म० । मदनवृक्षे ।
विचक्षण पु० वि+चक्ष ल्यु । पण्डिते नागदन्त्यां, स्त्री० टाप् ।
विचयन न० वि-चि-ल्युट् । अन्वेषणे, पुष्पादिचयने च ।
विचर्चिका स्त्री० वि+चर्च ण्वुल् । पामनि रोगभेदे ।
विचार पु० वि+चर-घञ् । तत्त्वनिर्णये, तदनुगुणे वाक्यस्तोमे च ।
विचारण न० वि+चर-णिच्-ल्युट् । मीमांसायाम् । युच् । तत्रैव स्त्री०
विचि (ची) पु० स्त्री० विच-इक् । तरङ्गे स्त्रीत्वपक्षे वा ङीप् ।
विचिकित्सा स्त्री० वि+कित-स्वार्थे सन् अ । सन्देहे ।
विचित्र न० विशेषेण चित्रम् । कर्बूरवर्णे । तद्वति, आश्चर्य्ये च । त्रि० । स्वार्थे कन् । भुर्जपत्रवृक्षे पु० ।
विचित्रवीर्य्य पु० शान्तनुसत्यात्मजे नृपभेदे ।
विचित्राङ्ग पु० विचित्रमङ्गं यस्य । (चिते)व्याघ्रभेदे, आश्चर्य्यदेहे त्रि०
विचेतस् त्रि० विरुद्धं दुष्टं विशिष्टं वा चेतो यस्य । दुष्टचित्ते विशिष्टचित्ते च । [पेण चेष्टायाम् न० ।
विचेष्टित त्रि० विगतं चेष्टितमस्य । चेष्टाशून्ये,वि+चेष्ट भावे क्त । विशे-
विच्छ दीप्तौ चु० उभ० सक० सेट् । विच्छयति ते अविविच्छत् त
विच्छ गतौ तु० पर० आयपक्षे उ० सक० सेट् । विच्छायति विच्छायते विच्छति । अविच्छायीत् अविच्छायिष्ट अविच्छीत् ।
विच्छन्दक पु० विशिष्टः छन्दो यत्र कप् । ईश्वरगृहभेदे ।
विच्छाय न० वीनां पक्षिणां छाया नपुंसकत्वम् । पक्षिसमूहच्छायायाम् । विगता छाया यस्य। छायारहिते त्रि० ।
विच्छित्ति स्त्री० वि+छिद-क्तिन् । अङ्गरागे हारभेदे, छेदे, विनाशे, विच्छेदे, स्त्रीणां चेष्टाभेदे च । [छेदने न०
विच्छिन्न त्रि० वि+छिद-क्त । विभक्ते, समालब्धे च भावे-क्त ।
विच्छेद पु० वि+छिद-घञ् । वियोगे, सन्ततिराहित्ये, विभागे च

विज पृथक्करणे जु० उभ० सक० अनिट् । वेवेक्ति वेविक्ते अविजत् अविक्षीत् अविक्त ।

विज भये कम्पे च रु० प० अक० वेट् । विनक्ति अविजीत् ।

विज भये कम्पे च तु० आ०अ० अनिट् । विजते अविजिष्ट । क्त विग्नः

विजन त्रि० विगतो जनो यस्मात् । निर्जने ।

विजनन न० वि+जन—ल्युट् । गर्भमोचने, प्रसवे, उद्भवे च ।

विजय पु० वि+जि—कर्त्तरि अच् । अर्ज्जुने, विमाने यमे च । भावे अच् । जये, परिभवपूर्व्वकग्रहणे च ।

विजयकुञ्जर पु० विजयाय कुञ्जरः । राजवाहनगजे ।

विजया स्त्री० आश्विनशुक्लपक्षीयदशम्याम्, उमायाः सखीभेदे, 'कथयतु विजये'ति मुद्राराक्षसम् । दुर्गायां, जयन्त्यां, शेफालिकायां, मञ्जिष्ठायां, शमीभेदे, अग्निमन्थे, भङ्गायाम्, (सिद्धि) अष्टद्वादशीमध्ये,'यदा तु शुक्लद्वादश्यां नक्षत्रं श्रवणं भवेत् । तदा सा तु महापुण्या द्वादशी विजया स्मृते'त्युक्ते द्वादशीभेदे, शुक्लपक्षस्य सप्तम्यां सूर्य्यवारो यदा भवेत् । सप्तमी विजया नामे'त्युक्ते सप्तमीभेदे च ।

विजातीय त्रि० विभिन्नां जातिं धर्मम्अर्हति छ । विभिन्नधर्म्मावलम्बिनि ।

विजिगीषा स्त्री० विजेतुमिच्छा वि+जि—सन् अ । स्वोदरपूरणेच्छया निन्दनीयकर्म्मादौ प्रवृत्तौ तच्छन्दाऽगणने, विजयेच्छायाञ्च । उ । विजिगीषुः । जयेच्छावति त्रि० ।

विजिन न० विज—इन किच्च । वने वृक्षसमूहे ।

विजुल पु० विज—उलच् किच्च । शाल्मलीकन्दे ।

विजृम्भण न० वि—जृभि—ल्युट् । विकाशे, सुखविकाशहेतुभूते वायुव्यापारभेदे (हाइतोला ।

विजृम्भित त्रि० वि+जृभि—क्त । विकशिते भावे क्त । प्रकाशे

विज्जुल न० विज उलच् जुट् च । त्वचे (दारचिनि) ।

विज्ञ पु० विशेषेण जानाति ज्ञा—क । प्रवीणे, पण्डिते च ।

विज्ञात त्रि० वि+ज्ञा—क्त । ख्याते, ज्ञाते च ।

विज्ञान न० वि+ज्ञा-ल्युट् । ज्ञाने, कर्मणि, शिल्पादिज्ञाने, वेदान्तोक्ते अविद्यावृत्तिभेदे च ।

विज्ञानमयकोष पु० विज्ञानात्मकः कोष इवावरकत्वात् । ज्ञानेन्द्रिय-सहिते बुद्धिवृत्तिभेदे ।

विज्ञानिक त्रि० विज्ञानमस्त्यस्य ठन् । विज्ञानयुक्ते ।

विट आक्रोशे सक० स्वने अक०भ्वा०पर०सेट् । वेटति अवेटीत् ।

विट पु० विट-क । षिड्गे, जारे, शृङ्गाररसनायकानुचरे धूर्त्ते,"विट ! विटपम"सुमिति माघः । पर्व्वतभेदे,लवणभेदे, खदिरभेदे, नारङ्ग-वृक्षे, मूषिके च ।

विटङ्क न० वि-टकि-अच् । कपोतपालिकायां प्रासादाग्रस्थे काष्ठ-निर्म्मिते कपोतावासस्थाने । (पायराखोप)

विटप पु०न० । विटं विस्तारं पाति पा-क । शाखायां, पल्लवविस्तारे, स्तम्बे, पल्लवे च विटपालके त्रि०'विट ! विटपममुन्ददस्व'ति माघः ।

विटपिन् पु० विटप+अस्त्यर्थे इनि । वृक्षे, वटवृक्षे च ।

विट्लवण न० विडिव लवणम् पु० । विड्लवणे ।

विटि(टी) स्त्री० विट कि वा ङीप् । पीतचन्दने ।

विट्खदिर पु० विडिव दुर्गन्धः खदिरः । (गुयेबावला) वृक्षे

विट्चर पु० विषि-विष्ठायां चरति चर-अच् । ग्राम्यशूकरे

विट्पति पु० विश्यते विश-क्विप् विशः कन्यायाः पतिः । जामातरि ।

विट्सारिका स्त्री० विड्रिव दुर्गन्धः सारिका । (गुयेसालिक) पक्षिभेदे ।

विड आक्रोशे भ्वा० पर० सक० सेट् । वेडति अवेडीत् ।

विड न० विड क । लवणभेदे ।

विडङ्ग पु० न० विड- अङ्गच् । स्वनामख्याते औषधभेदे । अभिज्ञे त्रि०

विडम्बन न० वि-डबि-ल्युट् । तिरस्करणे अनुकरणे च । युच् । विडम्बनाप्यत्र स्त्री० । 'इयञ्च तेऽन्या पुरतो विडम्बनेति कु०

विडाल पु० विड कालन् । स्वनामख्याते पशुभेदे, नेत्रपिण्डे, नयनौ-षधिभेदे च । विडाल्यां स्त्री० ङीप् । संज्ञायां कन् । हरितालके न० । स्वार्थे कन् विडाले पशौ पु० ।

**विडीन** न० वि+डी-क्त । पक्षिणां गतिभेदे ।
**विडुल** पु० विड-कुलच् । वेतसवृक्षे ।                    इन्द्रे ।
**वि(डो)डौजस्** पु० विष-क्विप् विट् व्यापकमोजो यस्य पृ० वा औत्व
**विड्गन्ध** न० विष इव गन्धोऽस्य । विड्लवणे ।
**विड्लवण** न० विड्विव दुर्गन्धं लवणम् । स्वनामख्याते लवणभेदे ।
**विड्वराह** पु० विट्प्रियो वराहः शाक० । ग्राम्यशूकरे 'लशुनं विड्-
वराहञ्चे'ति मनुः ।
**वितंस** पु० वि+तनुस-अच् । पक्षिणां बन्धनसाधने रज्ज्वादौ ।
**वितण्डा** स्त्री० वि तडि-अ । स्वपक्षाप्रयस्थापनेन परपक्षमात्र निरा-
करणे कथाभेदे, कलम्बीशाके च ।
**वितथ** त्रि० वि+तन-क्थन् । मिथ्याभूते पदार्थे, स्वार्थे यत् । तत्रैव
**वितस्ता** स्त्री० वि+तस-क्त इट् च । पञ्चावदेशस्थे नदीभेदे ।
**वितरण** न० वि+तृ ल्युट् । दाने ।
**वितर्क** पु० वि+तर्क-घञ् । सन्देहे, ऊहे च ।
**वितर्दि** स्त्री० वि+तृद इन् वा ङीप् । वेदिकायाम् । पृ० । वितर्द्धि-
रप्यत्र स्त्री० वा ङीप् ।
**वितल** न० विशेषेण तलम् । पातालभेदे ।
**वितस्ति** पु०स्त्री वि+तस-क्तिच् । द्वादशाङ्गुलपरिमाणे विस्तृत कनि-
ष्ठात्रध्यङ्गुष्ठान्तपरिमाणे ।                    [चन्द्रातपे पु०न०
**वितान** न० वि+तन-घञ् । वृत्तिभेदे, अवसरे, यज्ञे, विस्तारे च ।
**वितानमूलक** न० वितानं विस्तीर्णं मूलमस्य कप् । उशीरे ।
**वितुन्न** न० वि तुद क्त । सुनिषण्णके संज्ञायां कन् । धान्ये ।
**वित्त** त्यागे अद०चु०उभ०स०सेट् । वित्तयति ते अविवित्तत् त
**वित्त** न० वित्यते त्यज्यते वित्त-घञ् । धने । विद-क्त । ख्याते, विचा-
रिते, ज्ञाते, लब्धे, च त्रि० ।
**वित्ति** स्त्री० विद-क्तिन् । ज्ञाने, लाभे, विचारे च ।
**वित्तेश** पु०६त० । कुबेरे ।
**विथ** याचने भ्वा० आ०द्विक०सेट् इदित् न लुप्तः । वेथते अवेथिष्ट

विद सुखाद्यनुभवे आख्याने, वादे च सक० वासे अक० चु० उभ० सेट् ।
वेदयति ते अवीविदत् त ।

विद लाभे तु० उभ० सक० अनिट् । विन्दति ते । अविदत् अवित्त ।

विद मीमांसे रुधा० आ० सक० अनिट् । विन्ते अवित्त ।

विद भावे, दिवा० आ० अक० अनिट् । विद्यते अवित्त ।

विद ज्ञाने अदा० पर० सक० सेट् । वेत्ति-वेद । अवेदीत् ।

विदग्ध त्रि० वि+दह-क्त । नागरे, निपुणे, पण्डिते च । नायिका-
भेदे स्त्री० । विशेषेण दग्धे त्रि० ।

विद् पु० विद क्विप् । पण्डिते, बुधग्रहे च ।

विद पु० विद-क । पण्डिते, बुधग्रहे च ।

विदथ पु० विद-कथच् । योगिनि, कृतिनि च ।

विदर न० वि+दृ अप् । (फणिमनसा) वृक्षे विदलीकरणे पु० ।

विदर्भ पु० स्त्री० विगताः दर्भाः कुशा यतः । कुण्डिननगरे (नागपुर)

विदल न० विशेषेण दल्यते दल-घञर्थे क । द्विधाभूते दाडिम कलके,
वंशादिपात्रे च । कलायादौ, रक्तकाञ्चने पिष्टके च पु० विदलि
(तेओड़ि) स्त्री० । दल-शून्ये त्रि० ।

विदा स्त्री० विद-अङ् । ज्ञाने बुद्धौ च ।

विदार पु० वि+दृ-घञ् । विदारणे जलोच्छ्वासे च ।

विदारक पु० वि+दृ-ण्वुल् । जलमध्यस्थवृक्षशिलादौ विदारणकर्त्तरि
त्रि० शुष्कनदादेर्जलधारणयोग्ये गर्त्ते न० ।

विदारण न० वि+दृ णिच् ल्युट् । भेदने, मारणे, विडम्बे च । युद्धे
पु० स्त्री० । कर्णिकारवृक्षे पु० ।

विदारी स्त्री० । विदारोऽस्त्यस्याः अच् गौ० ङीष् । शालपर्ण्याम् ।
(शालपान) भूमिकुष्माण्डे च । [ पर्ण्याम् (शालपान) ।

विदारीगन्धा स्त्री० विदार्य्याः भूमिकुष्माण्डस्येव गन्धो यस्याः । शाल-

विदाहिन् न० वि+दह-णिनि । दाहजनकद्रव्ये ।

विदित त्रि० विद-क्त । ज्ञाते, [illegible] च । भावे क्त । विख्यातौ

उपगमे, ज्ञाने च । तद्वाति अच् । ज्ञातरि । 'विदितः प्रणय-यावितिति भारविः ।

**विदिश्** स्त्री० विगता दिशम् । दिशोर्मध्ये (कोण) ।

**विदु** पु० विद-कु । हस्तिकुम्भमध्यभागे ।

**विदुर** त्रि० विद-कुरच् । नागरे, धीरे, ज्ञातरि च । कौरवाणां मन्त्रिणि दासीगर्भजाते धर्मावतारभेदे च पु० ।

**विदुल** पु० विद-कुलच् । वेतसे, जलवेतसे, गन्धतृणे च ।

**विदूर** न० विशिष्टं दूरम् । अतिदूरे तद्वति पदार्थे त्रि० 'विदूरे कौयूरे, कुरु, इति साहि०३परि० । वैदूर्यमणिजन्मस्थाने पु० 'विदूरभूमिर्नवमेघशब्दा'दिति कुमारः ।

**विदूरज** न० विदूरे देशभेदे जायते जन-ड । वैदूर्यमणौ ।

**विदूरथ** पु० । सूर्यवंश्ये नृपभेदे ।

**विदूराद्रि** पु० विदूरे देशेऽद्रिः पर्व्वतः । पर्व्वतभेदे । यत्र वैदूर्यमणिरुत्पद्यते । [परनिन्दके त्रि० ।

**विदूषक** पु० विदूषयति वि+दूष-णिच्-ण्वुल् । शृङ्गाररससहायभेदे ।

**विदेश** पु० विभिन्नो देशः । देशान्तरे, 'सत्याभावे भवति मरणं सज्जनानां विदेशे' इत्युद्भटः ।

**विदेह** पु० विगतो देहः देहसम्बन्धो यस्य । जनकाख्ये नृपे, तद्वंश्ये च कैवल्यमुक्तियुते, देहसम्बन्धशून्ये च त्रि० मिथिलायां स्त्री० ।

**विदेहकैवल्य** न० कर्म० । 'न तस्य प्राणा ह्युत्क्रामन्ति इहैव समवलीयन्ते, इत्याद्युक्ते जीवन्मुक्तस्य देहपातनान्तरं निर्वाणमोक्षे ।

**विद्ध** त्रि० व्यध-क्त । छिद्रिते, क्षिप्ते, दुर्गे, बाधिते ताडिते च ।

**विद्धकर्णी** पु० विद्धः कर्ण इव पत्त्रमस्य । (आकनादि) पाठायाम् स्त्रीत्वमपि तत्रैव ङीप् ।

**विद्यमान** पु० विद-शानच् । वर्त्तमानकाले, तद्वति पदार्थे त्रि० ।

**विद्या** स्त्री० विद-क्यप् । ज्ञाने । तत्त्वसाक्षात्कारे 'विद्यया मृतमश्नुते' इति श्रुतिः । दुर्गायां, गणिकारिकावृक्षे, तन्त्रोक्ते देवीमन्त्रे च । 'तस्य विद्या न सिध्यती'ति श्यामारहस्यम् ।

विद्याचन(ण) त्रि० विद्यया ख्याते चन(ण)विद्यया विख्याते ।
विद्याचुञ्चु पु० विद्यया विख्यातः चुञ्चु । विद्यया ख्याते ।
विद्यादल पु० विद्यायै स्थानाय दल्यतेऽसौ । भूर्जवृक्षे ।
विद्यादान न० ६त० । अध्यापने, पुस्तकदाने च ।
विद्याधन न० विद्यया लब्धं धनम् । विद्याया लब्धे 'उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्व्वकम् । विद्याधनन्तु तद्विद्यादि'ति 'विद्यादाविति अतः प्राप्तं सन्दिग्धप्रश्ननिर्णयात् ख्यापनसंशयोच्छेदाल्लब्धं प्राध्ययनात्तु यत् । विद्याधनन्तु तत् प्राहुरि'ति 'शिल्पिष्वपि हि धर्मोऽयमित्युपक्रम्य परं निरस्य वादेन विद्याया द्यूतपूर्व्वकम् । विद्याधनं तु तद्विद्यादित्युक्ते धने ।
विद्याधर पु० विद्यां मन्त्रादिकं धरति धृ अच् । देवयोनिभेदे
विद्युत् स्त्री० विद्योतते वि+द्युत-क्विप् । तडिति, सन्ध्यायाञ्च
विद्युत्प्रिय न० ६त० । विद्युदाकर्षके कांस्ये, धातौ ।
विद्युन्माला स्त्री० अष्टाक्षरपादके छन्दोभेदे ।
विद्रधि पु० वेत्तृत्वेन विद् हृदयं दधाति धृ-कि पृ० हृदयरोगभेदे
विद्रधिनाशन पु० विद्रधिं नाशयति नश णिच्-ल्यु । शोभाञ्जने
विद्र(द्रा)व पु०+द्रु-अप् घञ् वा । पलायने, क्षरणे, युद्धे च
विद्रुत त्रि० वि+द्रु-क्त । प्राप्तद्रवे, पलायिते च ।
विद्रुम पु० विशिष्टो द्रुमः । प्रवालरत्नवृक्षे विशिष्टो द्रुमो यतः किसलये
विद्रुमलता स्त्री० विद्रुमस्य लतेव । नलीनामगन्धद्रव्ये स्वार्थे कन् तत्रैव ।
विद्वत्कल्प त्रि० ईषदसमाप्तो विद्वान् विद्वस्+कल्पप् । ईषदूने विदुषि ।
विद्वत्तम पु० अतिशयेन विद्वान् विद्वस्+तमप् । अतिपण्डिते तरप् विद्वत्तरोऽप्यत्र । [ देश्य । तत्रैव ।
विद्वद्देशीय त्रि० ईषदसमाप्तो विद्वान् विद्वस्+देशीयर् । विद्वत्कल्पे ।
विद्वस् त्रि० विद-क्वसु । प्राज्ञे, पण्डिते, आत्मज्ञानयुक्ते च ।
विद्विष् पु० विशेषेण द्वेष्टि द्विष-क्विप् । शत्रौ कविद्विषोऽप्यत्र ।
विद्वेष पु० वि+द्विष-घञ् । वैरिभावे शत्रुतायाम् ।

**विद्वेषण** न० वि+द्विष–णिच्–ल्युट् । तन्त्रोक्ते अभिचारकर्म्मभेदे येन शत्रूणां परस्परविद्वेषो भवति तस्मिन् व्यापारे । वि+द्विष–ल्युट् । विद्वेषे ।

**विध** विधाने, तु०पर०सक०सेट । विधति अवेधीत् ।

**विध** पु० स्त्री० विध-क अच् वा । विधाने, गजभक्ष्यान्ने, प्रकारे, वेधे, ऋद्धौ च । वेतने, कर्म्मणि च स्त्री० ।

**विधवा** स्त्री० विगतो धवो यस्याः । मृतपतिकायां स्त्रियाम् ।

**विधातृ** पु० वि+धा-तृच् । प्रजापतौ, ब्रह्मणि, कामदेवे, मदिरायां, भृगुमुनिपुत्रभेदे । विधानकर्त्तरि त्रि० । स्त्रियां ङीप् सा च पिप्पल्याञ्च ।

**विधान** न० वि+धा-ल्युट् । करणे, विधौ, गजभक्ष्यान्ने च ।

**विधानज्ञ** पु० विधानं जानाति ज्ञा-क । पण्डिते । विधिज्ञे त्रि० ।

**विधायक** त्रि० वि+धा-ण्वुल् । विधानकर्त्तरि ।

**विधि** पु० वि+धा-कि । जगत्स्रष्टरि ब्रह्मणि, भाग्ये, क्रमे, 'चिकीर्षा-कृतिसाध्यत्वहेतुधीविषयो विधिरि'त्युक्ते प्रवर्त्तनारूपे नियोगे, तज्जनके वाक्ये, विष्णौ, कर्म्मणि, गजभक्ष्यान्ने, वैद्ये, अप्राप्त-प्रापकरूपे वाक्यभेदे. संज्ञा च परिभाषा च विधिर्नियम एव च 'अतिदेशोऽधिकारश्चे'ति व्याकरणोक्ते सूत्रभेदे ।

**विधिज्ञ** त्रि० विधिं क्रमं जानाति ज्ञा-क । विधानक्रमज्ञे ।

**विधित्सा** स्त्री० विधातुमिच्छा वि+धा-सन् अ । विधानेच्छायाम् ।

**विधिदेशक** पु० विधिं विधानं दिशति दिश+ल्युट् । विधिदर्शिनि सदस्ये, गुरौ च ।

**विधिवत्** अव्य० विधिमर्हति विधि+वति । विध्यनुसारे ।

**विधु** पु० व्यध-कु । चन्द्रे, कर्पूरे, विष्णौ, ब्रह्मणि, शङ्करे, वायौ च ।

**विधुत** त्रि० वि+धु-क्त । कम्पिते, त्यक्ते च ।

**विधुनन** न० वि+धु-णिच्-नुक्च । चालने ।

**विधुन्तुद** पु० विधुं तुदति तुद-खश् मुम्च् । राहौ ।

**विधुर** त्रि० विगता धूर्यस्य अच् समा०। विश्लिष्टे, विकले च विश्लेषे भूः। वैकल्ये, विश्लेषे च न०।

**विधुवन** न० वि+धु-ल्युट्। कम्पने। [स्मृतिः।

**विधूत** त्रि० वि+धू क्त। कम्पिते त्यक्ते च। 'विधूतपाप्मा स्थान्नी'ति

**विधेय** त्रि० वि+धा-यत्। विधातुं योग्ये, वचनस्थे आयत्ते विधिना बोधिते च।

**विध्वंस** पु० वि+ध्वंस-घञ्। नाशे।

**विनत** त्रि० वि+नम-क्त। प्रणते, भुग्ने, शिक्षिते च। गरुडमातरि कश्यपपत्नीभेदे, पिठकीभेदे च स्त्री०।

**विनतासूनु** पु० ६त०। अरुणे, गरुडे च। विनतात्मजादयोऽप्युभयत्र।

**विनद** पु० विशेषेण नदति नद अच। (ब्रातियान) इति।

**विनम्रक** न० विशेषेण नम्रमिव इवार्थे कन्। तगरपुष्पे।

**विनय** पु० वि+नी-अच्। शिक्षायां, प्रणामे, अनुनये च। वि+नी-कर्त्तरि अच्। विनययुक्ते, जने, निभृते, क्षिप्ते, जितेन्द्रिये च।

**विनयग्राहिन्** त्रि० विनयं शिक्षां गृह्णाति ग्रह-णिनि। वचनस्थिते आयत्ते।

**विनयस्थ** त्रि० विनये तिष्ठति स्था-क। वचनग्राहिणि आयत्ते।

**विनशन** न० वि+नश-ल्युट्। विनाशे, कुरुक्षेत्रस्थे तीर्थभेदे।

**विना** अव्य० वि+ना। वर्ज्जने, अन्तरेणेत्यर्थे।

**विनाकृत** त्रि० विनेति कृतम् विना+कृ-क्त। त्यक्ते, रहिते च।

**विनायक** पु० वि+नी-ण्वुल्। गणेशे, गरुडे, विघ्ने, गुरौ च विनययुक्ते त्रि०।

**विनाश** पु० वि+नश-घञ्। ध्वंसे, अदर्शने च।

**विनाशोन्मुख** त्रि० विनाशाय उन्मुख उद्यतः। नष्टप्राये।

**वि(वी)नाह** पु० वि+नह-घञ् वा उपसर्गदीर्घः। कूपमुखपिधाने।

**विनिद्र** त्रि० विगता निद्रा यस्य। प्रकाशिते, निद्राहीने च।

**विनिपात** पु० वि+नि+पत-घञ्। निपाते दैवादिकृते व्यसने, अपमाने च

**विनिमय** पु० वि+नि+मि-अच्। परिवर्त्ते तुल्यद्रव्यदानेन द्रव्यान्तर-ग्रहणे, बन्धके च।

**विनियोग** पु० वि+नि+युज-घञ्। क्रियासु प्रवर्त्तने 'अनेनेदन्तु कर्त्तव्यं विनियोगः प्रकीर्त्तित' इत्युक्ते अनुष्ठानक्रमविधाने च 'आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव चे'ति स्मृतिः।

**विनीत** त्रि० वि+नी-क्त। विनययुक्ते, कृत-दण्डे, क्षिप्ते, अपनीते, निभृते च। सुशिक्षिताश्वे, दमनवृक्षे च पु०।

**विनीय** पु० वि+नी क्यप्। कल्के, पापे च।

**विनेतृ** त्रि० वि+नी-तृच्। शिक्षके। नृपे पु०।

**विनेय** त्रि० वि+नी यत्। शिक्षणीये, प्राप्ये च।

**विनोक्ति** स्त्री० अलङ्कारोक्ते अर्थालङ्कारभेदे।

**विनोद** पु० वि+नुद-घञ्। कौतूहले, क्रीड़ायां, खण्डने च।

**विन्दु** पु० विद-उ नि०। जलकणे भ्रुवोर्मध्ये, रेखागणितोक्ते विभागानर्हे चिह्नभेदे, अनुस्वारे च। ज्ञातरि, दातरि, वेदितव्ये च त्रि०।

**विन्दुजाल** न० ६त०। हस्तिशुण्डास्थिते विन्दुसङ्घे चिह्नभेदे स्वार्थे कन्। तत्रैव।

**विन्दुपत्र** पु० विन्दवः पत्रे यस्य। भूर्जपत्रे।

**विन्दुसरस्** न० विन्दुभिः कृतं सरः। सरोवरभेदे।

**विम्बपत्री** स्त्री० विध-क पृ० मुम् च। विम्बं पत्रमस्याः ङीप्। (तेलाकुचा) क्षुपभेदे। [लीवृक्षे च (गोयाड़) स्त्री०

**विन्ध्य** पु० विध-यत् पृ० मुम् च। पर्व्वतभेदे, व्याधे च। एलायां लव-

**विन्ध्यवासिनी** स्त्री० विन्ध्येऽचले वसति वस-णिनि ङीप्। यशोदा-गर्भजातायां दुर्गायाम्।

**विन्ध्याचल** पु० कर्म०। विन्ध्यपर्व्वते।

**विन्ध्याटवी** स्त्री० विन्ध्यस्या अटवी। विन्ध्यपर्व्वतस्थे वनभेदे।

**विन्न** त्रि० विद-क्त। विचारिते, प्राप्ते, ज्ञाते, स्थिते च।

**विन्यास** पु० वि+नि+अस-घञ्। (आतियान) इत्थे।

**विन्यास** पु० वि+नि+अस घञ् । स्थापने, रचने, तन्त्रोक्ते मन्त्राद्युच्चारणपूर्व्वकं हृदयादिषु अङ्गुल्यादीनामर्पणे च ।

**विप** क्षेपे चु० उभ०सक०सेट् । वेपयति-ते अवीविपत् त ।

**विपक्त्रिम** त्रि० विपाकेन निर्वृत्तः । वि+पच-क्त्र मपच् । विपाकाधीन-जाते 'विपक्त्रिमज्ञानगतिरिति' भट्टिः ।

**विपक्ष** त्रि० विरुद्धः पक्षो यस्य । शत्रौ, प्रतिकूलपक्षावलम्बिनि च । विरुद्धः पक्षः कर्म०स० । प्रतिकूले पक्षे । [अत द्वन्द्वम् । तत्रैव ।

**विपञ्ची** स्त्री० वि+पचि-अच् गौरा० ङीष् । वीणायाम् स्वार्थे कन् ।

**विपण** पु० वि+पण-घञर्थे क । विक्रये ।

**विपणि** पु० स्त्री० वि+पण-इन् स्त्रीत्वपक्षे वा ङीप् । पण्यविक्रयशाला-याम् (हाटचाला) हट्टे च ।

**विपत्ति** स्त्री० वि+पद-क्तिन् । आपदि, नाशे, यातनायाञ्च ।

**विपथ** पु० विरुद्धः पन्थाः अच् समा० । निन्दितमार्गे ।

**विपद्(दा)** स्त्री० वि+पद-सम्प० क्विप् वा टाप् । विपत्तौ ।

**विपन्न** त्रि० वि+पद-क्त । विपद्युक्ते, नष्टे च । सर्पे पु० ।

**विपरीत** त्रि० वि+परि+इण्-क्त । प्रतिकूले ।

**विपर्णक** पु० विगतानि पर्णान्यस्य कप् । पलाशवृक्षे ।

**विपर्य्यय** पु० वि+परि+इण्-अच् । व्यतिक्रमे ।

**विपर्य्यस्त** त्रि० वि+परि+अस-क्त । व्यतिक्रान्ते पराहते च ।

**विपर्य्यास** पु० वि+परि+अस-घञ् । वैपरीत्ये, व्यतिक्रमे उत्क्षेपे च ।

**विपल** पु० विभागः पलस्य । पलषष्टिभागे कालभेदे ।

**विपश्चित्** पु० विप्रकृष्टं चेतति वि+प्र+चित-क्विप् पृ० ।

**विपाक** पु० वि+पच-भावे घञ् । पाके, स्वेदे च । कर्म्मणि घञ् । कर्मफलपरिणामे जात्यायुर्भोगरूपे पदार्थे ।

**विपाश्(शा)** स्त्री० विगतः पाशो यस्याः । ख्यनामख्याते नदीभेदे ।

**विपिन** न० वप इनन् पृ० । वने ।

**विपुल** त्रि० वि+पुल-विस्तारे क । विस्तीर्णे, अगाधे, मेरुपश्चिमस्थे भूधरे, मेरौ, हिमाचले च । आर्य्याच्छन्दोभेदे स्त्री० ।

विपुलास्रव स्त्री० विपुलं रसं स्रवति अण्। घृतकुमारी वृक्षे।

विप्र पु० वप-रन् पृ० अत इत्त्वम् वि+प्रा-क वा। ब्राह्मणे।

विप्रकार पु० वि+प्र+कृ-घञ्। अपकारे, तिरस्कारे।

विप्रकाष्ठ न० विशेषेण प्राति प्रा-क विप्रं काष्ठं यस्य। तूलवृक्षे।

विप्रकर्ष पु० वि+प्र+कृष घञ्। दूरत्वे।

विप्रकृत त्रि० वि+प्र+कृ-क्त। उपद्रुते, तिरस्कृते च 'तस्मिन् विप्रकृताः काले' इति कुमारः।

विप्रकृष्ट त्रि० वि+प्र+कृष-क्त। दूरस्थे। स्वार्थे कन् तत्रैवार्थे।

विप्रचित्ति पु० वि+प्र+चित क्तिच्। दानवभेदे।

विप्रतिपत्ति स्त्री० वि+प्रति+पद-क्तिन्। विरोधे, 'परस्परं मनुष्याणां स्वार्थे विप्रतिपत्तिषु' इति' स्मृतिः संशये, विकारे च।

विप्रतिपन्न त्रि० वि+प्रति+पद-क्त। सन्देहयुक्ते कृतविरोधे च।

विप्रति(ती)सार पु० वि+प्रति+सृ घञ् वा दीर्घः। अनुतापे, अनुशये, रोषे च।

विप्रयुक्त त्रि० विप्र+युज-क्त। वियुक्ते, विरहिते च।

विप्रयोग पु० वि+प्र+युज घञ्। विप्रलम्भे, विरोधे विसंवादे वियोगे च।

विप्रलब्ध त्रि० वि+प्र+लभ क्त। वञ्चिते, 'प्रियः कृत्वा तु सङ्केतं यस्या नायाति सन्निधिम् विप्रलब्धेति सा ज्ञेये'त्युक्तलक्षणे नायिकाभेदे स्त्री०।

विप्रलम्भ पु० वि+प्र+लभ-घञ् नुम् च। विसंवादे, वञ्चने, विरहे च 'युक्तायुक्तयोर्भावो युक्तयोर्वाथवा मिथः अभीष्टालिङ्गनादीनामनवाप्तौ प्रहृष्यते। स विप्रलम्भो विज्ञेय' इत्युक्ते शृङ्गारावस्थाभेदे।

विप्रलाप पु० वि+प्र+लप-घञ्। विरोधोक्तौ परस्परविरुद्धार्थककथने

विप्रलोभिन् पु० विप्रलोभयति लुभ+णिच्-णिनि। किरातवृक्षे, अशोकवृक्षे। [स्त्रियां ङीप्]

विप्रश्निका स्त्री० विशेषेण प्रश्नो यस्याः ५.ब० कप् अत इत्त्वम्। दैव

**विप्रसात्** अव्य० विप्रस्याधीनं करोति विप्र + साति । विप्रस्याधीनतायाम् ।

**विप्रस्व** न० ६त० । विप्रस्वाम्निके धने ।

**विप्रिय** पु० विरुद्धं प्रियं प्री—क । अपराधे, अप्रिये च 'कृतवानसि विप्रियं न मे' इति कुमारः ६ब० विगतप्रिये त्रि० ।

**विप्रुष्** स्त्री० वि + प्रुष—क्किप् । विन्दौ, वेदपाठकाले मुखनिर्गतजलविन्दौ च ।

**विप्रोषित** त्रि० वि + प्र + वस—क्त । गतप्रवासे ।

**विप्लव** पु० वि + प्लु—अप् । परचक्रपतिराष्ट्रादितो भये राष्ट्रोपद्रवे च ।

**विप्लाव** पु० वि + प्लु घञ् । अश्वस्य गतिभेदे समन्तात् जलप्लावे च ।

**विप्लुत** त्रि० वि + प्लु—क्त । व्यसनयुक्ते, उपद्रुते च 'अविप्लुतब्रह्मचर्य्यः' इति स्मृतिः ।

**विफल** त्रि० विगतं फलमस्य । निरर्थके । केतक्यां स्त्री० ।

**विबध** पु० विगतो बधो हननं गतिर्यस्मात् । संगृहीतधान्यतण्डुलादौ 'निरुद्धविबधासारे'ति माघः पृ० दीर्घः भारे च ।

**विबन्ध** पु० विबध्नाति मलम् वि + बन्ध-घञ् । रोगभेदे । [चन्द्रे च ।

**विबुध** पु० वि+बुध-क । पण्डिते, देवे, 'विबुधसख' इति भट्टिः ।

**विभक्त** त्रि० वि+भज-क्त । पृथक्कृते, विभिन्ने, कृतविभागे च 'अविभक्ता विभक्ता वा सपिण्डाः स्थावरे समा, इति स्मृतिः । भावे क्त । विभागे न० ।

**विभक्ति** स्त्री० वि+भज क्तिन् । विभागे 'संख्याकारकबोधयित्री शक्तिमान् प्रत्ययस्तु यः । सा विभक्तिर्द्विधा प्रोक्ते'त्युक्तलक्षणे प्रत्ययभेदे च ।

**विभव** पु० वि+भू—अच् । धने, मोक्षे, सर्वमूर्त्तसंयोगरूपे, ऐश्वर्य्ये षष्टिसंवत्सरमध्ये 'हृष्टाः पुष्टाः जनाः सर्वे विभवेऽब्दे वरानने !' इत्युक्ते वर्षभेदे च ।

**विभा** स्त्री० वि+भा-अच् । किरणे, शोभायां, प्रकाशे च ।

**विभाकर** पु० विभां प्रकाशं करोति कृ अच् । सूर्य्ये, अर्कवृक्षे च ।

**विभाग** पु० वि+भज-भावे घञ्। भागे। कर्म्मणि घञ्। अंशे, स्वत्वे पूर्व्वस्वामिस्वत्वनाशोत्तरं तत्सम्बन्धाधीनजातस्वत्वव्यञ्जकव्यापारभेदे।

**विभाज्य** त्रि० विभक्तुमर्हति वि+भज-अर्हार्थे ण्यत्। विभागयोग्ये, भजनीये धनादौ।

**विभाण्डक** पु० मुनिभेदे।

**विभात** न० वि+भा-क्त। प्रभाते।

**विभाव** पु० वि+भू घञ्। परिचये, अलङ्कारोक्ते रसस्योद्दीपके आलम्बनादौ 'विभावेनानुभावेन व्यक्तः सञ्चारिणा तथे'ति सा०द०।

**विभावना** स्त्री० 'प्रसिद्धकारणाभावात् कार्य्योत्पत्तिर्विभावने' त्युक्तलक्षणे अलङ्कारभेदे।

**विभावरी** स्त्री० वि+भा-क्वनिप् ङीप् वनोर च। रात्रौ, हरिद्रायां, कुट्टिन्याम्, अनुरक्तयोषिति, मुखरस्त्रियाम्, मेदोवृक्षे च।

**विभावसु** पु० विभायुक्ता वसवोऽस्य। सूर्य्ये, अर्कवृक्षे, वह्नौ, चित्रकवृक्षे, हारभेदे च।

**विभाषा** स्त्री० विरुद्धा भाषा वि+भाष अ। व्याकरणोक्ते पाक्षिकप्राप्तिफलके 'नवेति विभाषे'त्युक्तलक्षणे विकल्पविधाने।

**विभिन्न** त्रि० वि+भिद्-क्त। प्रकाशिते, विदलिते, विभक्ते च।

**विभीतक** पु० विशेषेण भीत इव स्वार्थे कन्। (बयड़ा) वृक्षे।

**विभीषण** पु० विशेषेण भीषयते शत्रून् भी णिच् षुक् च ल्यु। रावणभ्रातरि राक्षसे, नलतृणे च। [प्रदर्शने।

**विभीषिका** स्त्री० वि+भी णिच् षुक् च धात्वर्थनिर्द्देशे ण्वुल्। भय-

**विभु** पु० वि+भू डु। सर्व्वमूर्त्तसंयुक्ते, प्रभौ, महादेवे ब्रह्मणि च।

**विभूति** स्त्री० वि+भू-क्तिन्। भस्मनि 'अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा। ईशित्वं च वशित्वञ्च तथा कामावसायिते'त्युक्ते ऐश्वर्य्ये च।

**विभूषा** स्त्री० वि+भूष अ। शोभायां, भूषणे च।

**विभ्रम** पु० वि+भ्रम-घञ्। स्त्रीणां शृङ्गाराङ्गे चेष्टभेदे 'विभ्रमस्त्वरयाऽकाले भूषास्थानविपर्य्यय' इत्युक्ते त्वरया भूषास्थानवैपरीत्ये च

'यथाप्रचारो विभ्रममण्डनानामि'ति कुमारः। विशेषे च, भ्रान्तौ, शोभायां, सन्देहे, भ्रमणे च।

**विभ्राज्** त्रि० वि+भ्राज-क्विप्। भूषणादिना दीप्ते।

**विमत** त्रि० वि+मन-क्त। विरुद्धमतयुक्ते। [सचिन्ते]।

**विमनस्** (स्क) त्रि० विक्षिप्तं मनो यस्य वा कप्। चिन्तादिना व्याकु-

**विमर्द्द** पु० विमृद्यतेऽसौ वि+मृद-घञ्। (कालकासुन्दिया) वृक्षे। चक्रमर्द्दके च। भावे घञ्। मर्द्दने।

**विमर्शन** न० वि+मृश ल्युट्। परामर्शे, न्यायोक्ते साध्यव्याप्यहेतुमत्त्वेन पक्षनिश्चये वितर्के च। घञ् तत्रैव पु०।

**विमर्ष** पु० वि+मृष-घञ्। विचारे, नाटकाङ्गभेदे च।

**विमल** त्रि० विगतो मलो यस्मात्। स्वच्छे, निर्मले, विगतो मलो यस्याः ५ ब०। (चामारकषा) सप्तलायाम् जगन्नाथक्षेत्रस्थे देवीभेदे च स्त्री०।

**विमातृ** स्त्री० विरुद्धा माता। मातृसपत्न्याम्।

**विमातृज** पु० विमातुर्जायते जन ड। सापत्ने भ्रातरि।

**विमान** पु० न० वि+मन-घञ् वि+मा ल्युट् वा। देवयाने, रथे, सार्वभौमगृहभेदे च। अश्वे पु० यानमात्रे परिमाणे च न०।

**विमार्ग** पु० विरुद्धो मार्गः। कुपथे, निन्दिताचारे।

**विमुख** त्रि० विरुद्धमननुकूलं मुखमस्य। बहिर्मुखे, निवृत्ते च।

**विमुद्र** त्रि० विगता मुद्रा मुकुलीभावो यस्य। विकसिते, मुद्रारहिते च।

**विम्ब** पु० न०। वी+वन्-मुमन्तश्च। दर्पणादौ भासमानप्रतिविम्बाश्रये, कमण्डलौ च। सूर्यादिमण्डले च कृकलासे पु०। विम्बायाः फलम् अण् तस्य लुप्। विम्बिकाफले। [(तेलाकुचा)।

**विम्बजा** स्त्री० विम्बं फलं जायतेऽस्याः जन-ड। विम्बिकायाम्

**विम्बट** पु० विम्बमटति अट- अच् शक०। सर्षपे।

**विम्बा** (म्बी) स्त्री० विम्बमस्त्यस्याः अच् वा गौ० ङीष्। (तेलाकुचा) लताभेदे स्वार्थे कन्। तत्र, सूर्यादिमण्डले च।

**वियत्** न० वि+यम-क्विप् मलोपे तुक्। आकाशे।

**वियद्गङ्गा** स्त्री० वियत्स्था गङ्गा। स्वर्गङ्गायां मन्दाकिन्याम्।

वियात त्रि० वि+या क्त । धृष्टे, निर्लज्जे च ।

वियोग पु० वि+युज-घञ् । विच्छेदे । ६त० । पक्षियोगे ।

वियोगिन् पु० वि+युज-घिनुण् । चक्रवाके, पक्षिणि च, विच्छेदवति त्रि०

विरक्त त्रि० वि+रन्ज-क्त । विच्छिन्ने, विरते च ।

विरङ्ग पु० वि+रन्ज-घञ् । कङ्कुष्ठे ।

विरचित त्रि० वि + रच-क्त । कृते, निर्मिते च ।

विरजस्तमस् त्रि० विगते रजस्तमसी यतः । सत्वगुणप्रधाने ।

विरजस् विगतं रजो यस्याः । गतार्त्तवायां स्त्रियाम् । रजोगुण-
हीने त्रि० ।

विरजा स्त्री० विशेषेण रज्यते रन्ज-अ । दुर्गायां, गोलोकस्थे राधा-
सखीभेदे तच्छापाज्जायमाने नदीभेदे च ।

विर(ञ्चि)ञ्चि पु० वि + रच अच् इन् वा नुम् च । जगत्स्रष्टरि ।

विरण न० विशिष्टो रणो मूलमस्य । उशीरे (वेणारमूल) ।

विरत त्रि० वि+रम क्त । निवृत्ते । [हित्ये च ।

विरति स्त्री० वि + रम-क्तिन् । निवृत्तौ, विषयसेवायां-व्यापारस-

विरल त्रि० वि + रा-कलन् । अवकाशे, विच्छिन्ने, अनिविडे च ।

विरह पु० वि + रह-घञ् । विच्छेदे, अभावे, शृङ्गाररसस्य विप्रल-
म्भाख्ये अवस्थाभेदे च ।

विरहित त्रि० वि + रह-क्त । त्यक्ते, हीने च । [शून्ये त्रि० ।

विराग पु० वि + रन्ज-घञ् । रागाभावे, विगतो रागो यस्य । राग-

विराज् पु० विशेषेण राजते क्विप् । व्यष्टिरूपे ब्रह्माण्डात्मकस्थूलदेहा-
भिमानिनि आदिपुरुषे, छन्दोभेदे च ।

विराट पु० विशेषो राटो यत्र । देशभेदे, तद्देशाधिपे नृपे च ।

विराध पु० राक्षसभेदे ।

विराधन न० वि + राध ल्युट् । पीडायाम् ।

विराम पु० वि + रम-घञ् । अवसाने, विरतौ, निवृत्तौ च ।

विराल पु० वि + डल-घञ् लस्य रः । विडाले पशुभेदे ।

विराव पु० वि + रु-घञ् । शब्दे ६त० । विगतरवे त्रि० ।

विरिञ्च पु० वि+रिच-अच् नुम् च। ब्रह्मणि जगत्सृष्टिकारके वेधसि, विष्णौ च। हरे। तत्रार्थे।

विरूढ त्रि० विशेषेण रोहति वि+रुह-क्त। जाते, अङ्कुरिते च।

विरूप त्रि० विकृतं रूपमस्य। कुत्सितरूपयुक्ते, निन्दिते च पिप्पलीमूले न०। अतिविषायां दुरालभायाञ्च स्त्री०। [विरूपनेत्र त्रि०।

विरूपाक्ष पु० विरूपे विकटे अक्षिणी यस्य अच् समा०। महादेवे।

विरेक पु० वि+रिच-घञ्। मलादेरधोनिःसरणे, अतिरेके च।

विरेचन वि+रिच-णिच् ल्युट्। मलादेर्निःसारणे, ज्वरमध्ये विरेचनं नेति वैद्यकम्। विरेचयति वि+रिच-णिच्-ल्यु। पीलुवृक्षे पु०। भेदकमात्रे त्रि०।

विरोक पु० न० वि+रुच-घञ् चस्य कः। छिद्रे, सूर्यकिरणे पु०।

विरोचन पु० वि+रुच-युच्। सूर्ये अर्कवृक्षे, बलिपितरि प्रह्लादतनयेऽसुरभेदे, चन्द्रे च रोचयति रुच-णिच्-ल्यु। रोहितकवृक्षे, श्योनाकवृक्षे, पूतकरञ्जे च पु०। रुचिकरे त्रि०।

विरोध पु० वि+रुध-घञ्। वैरे, विरुद्धतायाम् न्यायोक्ते साध्येनासामानाधिकरण्यरूपे हेतुदोषे, यथा वह्निमान् जलादित्यत्र जलरूपहेतोर्वह्निना सामानाधिकरण्यं नास्ति।

विरोधन न० वि+रुध-ल्युट्। वैरे।

विरोधिन् पु० वि+रुध-णिनि। रिपौ, षष्टिसंवत्सरमध्ये "जायते मानुषे कष्टं विरोधिनि न-संशयं इत्युक्तलक्षणे वत्सरभेदे च।

विरोधोक्ति स्त्री० अर्थालङ्कारभेदे, परवचनविरोधिवचने च।

विल भेदे तुदा०पर०सक०सेट्। विलति अवेत्सीत्।

विल न० विल-क। छिद्रे, गुहायाञ्च। विलमस्त्यस्य कारणत्वेनास्त्यस्य अच्। 'घोटकोत्तमे, वाजिनो विलयोनयः' इति कुमारः। वेतसे च पु०।

विलक्ष पु० विलक्ष-अच् विस्मययुक्ते।

विलक्षण त्रि० विशिष्टं लक्षणमस्य। विभिन्ने, विशेषणयुक्ते च।

निष्प्रयोजनस्थितौ च न० । दानार्थं कान्नमपुरुषमूर्त्तिकुतपद्याभेदे स्त्री० । 'अधीपानात् द्वितीयेऽह्नि यद्या दद्यात् विलग्नयामिति स्मृतिः ।

विलग्न त्रि० विशेषेण लग्नं अलग-क्त नस्य नः तस्य नः । संलग्ने । मध्यभागे, कटौ, उदितमेषादिराशौ च न० । 'गोचरे वा विलग्ने वे'ति ज्योतिषम् ।

विलम्ब पु० वि + लबि–घञ् । विलम्बने अशीघ्रत्वे प्रतीक्षणीयकाले ।

विलम्बित त्रि० वि + लबि–क्त । अशीघ्रे, मन्दे च मध्यन्दृत्ये न०

विलय पु० वि+ली–अच् प्रलये, नाशे च ।

विलसा स्त्री० वि+लस–अच् । श्वेतवलायाम् । [गोधायां च ।

विल(ले)शय पु० विले शेते–शी अच् वा अलुकस० सर्पे, मूषिके,

विलाप पु० वि+लप–घञ् परिदेवनोक्तौ ।

विलास पु० वि+लस घञ् । 'तात्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु' इत्युक्ते स्त्रीणां शृङ्गारचेष्टाभेदे, चेष्टाविशेषे, दीप्तौ च ।

विलासिनी स्त्री० विलासोऽस्त्यस्य इनि ङीप् । नार्य्यां, वेश्यायाञ्च ।

भोगवति त्रि० सर्पे, कृष्णे, वह्नौ, स्मरे, महादेवे चन्द्रे च पु० ।

विलीन त्रि० वि-ली-क्त । मान्द्रत्वभावे घृतादौ, विरते, नष्टे च 'विलीनाशेषपातके'ति भागवतम् ।

विलेपन न० विलिप्यतेऽनेन करणे ल्युट् । गात्रानुलेपनद्रव्ये पिष्टे घृष्टे वा चन्दनकुङ्कुमादौ । कर्मणि ल्युट् ङीप् । यवान्नां, सुवेशादौ स्त्रियाञ्च स्त्री० ।

विलेप्य पु० वि+लिप-यत् । यवाग्वाम् विलेपनीये त्रि० ।

विलोचन न० वि+लुच-करणे ल्युट् । नेत्रे, भावे ल्युट् । दर्शने

विलोडित न० वि+लोड–क्त । तक्रे । आलोडिते त्रि० ।

विलोम त्रि० विगतं लोम यत्र अच् समा० । विपरीते, अरघट्टके न० सर्पे, कुक्कुरे वरुणे च पु० ।

विलोमजिह्व पु० विलोमा विपरीता जिह्वा यस्य । गजे ।

विलोमवर्ण पु० विलोमतः व्युत्क्रमतया व्युत्क्रमजो वर्णः । उत्त-

मल्लिकयामनवमवर्णेन जनिते सङ्कीर्णे वर्णे । [आमलक्यास् ।

विलोमी स्त्री० विशिष्टं लोम केशो यस्याः पूब० अच् गौरा० ङीष् ।

विलोल त्रि० वि+लुल-अच् । चञ्चले, विशेषचञ्चले च ।

विल्ल न० विल-ल किञ्च तस्य नेत्वम् । आलवाले ।

विल्लमूला स्त्री० विल्लमालवालमिव वेष्टितं मूलमस्याः वाराहीकन्दे ।

विल्व पु० विल-वन् किञ्च । श्रीफलवृक्षे, तत्फलादौ, परिमाणे च न० ।

विल्वपेषिका स्त्री० विल्वस्य पेषोऽस्त्यस्य ठन् । (बेलशुंठा) पदार्थे शुष्क-
विल्वोत्पन्ने

वि (वी)वध पु० वि+वध-अच् वा दीर्घः । भ्राम्यतञ्च्वादेराहरणे भारे
स्कन्धवहनयोग्ये (बाँक) काष्ठभेदे च ।

विवर न० वि+वृ-अप् । छिद्रे, दोषे च ।

विवरण न० वि+वृ-ल्युट् । व्याख्याने, तत्कारके ग्रन्थभेदे च ।

विवरनालिका स्त्री० विवरयुक्तं नालमस्त्यस्याः ठन् । वेणौ (वांश)

विवर्ण त्रि० विरुद्धो वर्णोऽस्य । अधमे, नीचे च ।

विवर्त्त पु० वि+वृत-घञ् । नृत्ये, समुदाये, अपवर्त्तने वेदान्तोक्ते का-
रणात् विषमसत्ताकतया उत्पद्यमाने कार्ये च । यथा रज्जात् र-
जतम् ब्रह्मणो जगत् ।

विवश त्रि० विगतो वश आयत्तता यस्य । अस्वतन्त्रे, व्याकुले च विवशा
कामवधूरिति कुमारः कृतरोषे च ।

विवस्वत् पु० वि+वस-क्विप् अस्त्यर्थे मतुप् मस्य वः । सूर्ये, अर्कवृक्षे
अरुणे, देवे च ।

विवाद पु० विरुद्धोवादः । 'ऋणादिदायकलहे द्वयो र्बहुतरस्य वा ।
विवादो व्यवहारश्चे'त्युक्तलक्षणे व्यवहारे, कलहे, च ।

विवाह पु० वि+वह-घञ् दारपरिग्रहे, तज्जनके व्यापारे च ।

विवाहित पु० विवाहो जातोऽस्य तार० इतच् । जातविवाहे ।

विवाह्य त्रि० वि+वह-ण्यत् । विवाहयोग्ये, विशेषेण वाह्ये च

विविक्त त्रि० वि+विच-क्त । निर्जने पवित्रे, असंयुक्ते च । कर्त्तरि-
क्त । विवेकिनि त्रि० । दुर्भगायां स्त्रियां स्त्री० ।

विविध त्रि० विभिन्ना विधा यस्य । नानाप्रकारे । [ युक्ते देशे ।
विवीत पु० विशिष्टं वीतं गवादिप्रचारस्थानं यत्र । प्रचुरतृणकाष्ठादि-
विवृत त्रि० वि+वृ-क्त । विस्तृते व्याख्याते च ।
विवृति स्त्री० वि+वृ-क्तिन् । विस्तारे व्याख्याने च ।
विवेक पु० वि+विच-घञ् । याथार्थ्येन वस्तुस्वरूपावधारणे, प्रकृति-
पुरुषयोर्भेदज्ञाने च ।
विवोढ़ृ पु० वि+वह-तृच् जामातरि ।
विव्वोक पु० वि+वा-क्त तस्य ओकः स्थानम् । 'गर्वाभिमानादिष्टेऽपि वि-
व्वोकोऽनादरक्रिया"इत्युक्तलक्षणे स्त्रीणां शृङ्गारचेष्टाभेदे ।
विश् प्रवेशे तु० पर०सक० अनिट् । विशति अविक्षत् ।
विश् पु० विश-क्विप् । मनुजे, वैश्ये च ।
विशङ्कट त्रि० वि+शङ्कटच् । विशाले ।
विशद पु० वि+शद-अच् । शुभ्रवर्णे । तद्वति विमले, व्यक्ते च त्रि०
विशय पु० वि+शी-अच् । संशये 'विषयोविशयश्चेति' मीमांसा
विशर पु० वि+शॄ-अप् । बधे । [ (ज्ञापरमालो) इत्ये ]
विशल्यकृत् पु० विशल्यं तत्प्रहारवेदनानिवृत्तिं करोति कृ-क्विप् ।
विशल्या स्त्री० विगतं शल्यं तत्प्रहारवेदना यस्याः ५ब० । अग्निशि-
खवृक्षे, दन्तीवृक्षे, गुडूच्याम्, त्रिपुटायां अजमोदायाञ्च । विग-
तशल्ये त्रि० ।
विशसन न० वि+शस-हिंसने ल्युट् । मारणे । [खड्गकोलम् ।
विशसन पु० विशस्यतेऽनेन ल्युट् । खड्गे, 'असिर्विशसनः खड्ग इति
विशस्त त्रि० वि+शस-क्त । मारिते अतीते च । वा इट् । तत्र, मारिते
विशाख पु० विशाखानक्षत्रे भवः अण् । कार्त्तिकेये धन्विनां वित-
स्त्यन्तरालपादावस्थाने, पुनर्नवायां, याचने च ।
विशाखज पु० विशिष्टा शाखा यस्य तथा सन् जायते जन-ड । नारङ्गे
विशाखानक्षत्रजाते त्रि० ।
विशाखा स्त्री० विशिष्टा शाखा प्रकारो यस्याः । सप्तदशनक्षत्रेऽ-
श्विन्यादिके, शोढ़शे नक्षत्रे कठिल्लके च ।

विशरण न० वि+शॄ-स्वार्थे णिच्-ल्युट् । मारणे ।
विशारद पु० विशालं ददाति दा-क लस्य रः । बकुलवृक्षे धुरन्धरालम्भायां स्त्री० पण्डिते, प्रगल्भे, श्रेष्ठे च त्रि० ।
विशाल त्रि० वि+शालच् । विस्तीर्णे, वृहति च । मृगभेदे, नृपभेदे च पु० । इन्द्रवारुण्याम् माहेन्द्रवारुण्यां नदीभेदे च स्त्री० 'विशालां विरजां तथे'ति पुराणम् ।
विशालता स्त्री० विशालस्य भावः तल् । पार्श्वविस्तारे । [ वृक्षे
विशालतलगर्भ पु० विशालं विस्तीर्णं तैलं गर्भे फलमध्ये यस्य अङ्को
विशालत्वच् पु० विशाला त्वक् यस्य । सप्तच्छदे वृक्षे ।
विशालपत्र पु० विशालं पत्रमस्य । कामालौ, तालवृक्षे च ।
विशालाक्ष पु० विशाले अक्षिणी यस्य षच्समा० । महादेवे, गरुडे, विष्णौ च वृहन्नेत्रे, त्रि० पार्वत्यां नागदन्त्यां च स्त्री० ङीप्
विशाली स्त्री० वि + शालच् गौरा० ङीप् । अजमोदायाम् ।
विशिख पु० विशिष्टा विगता वा शिखा यस्य । शरवृक्षे, वाणे, तोमरे च वृ० शिखारहिते त्रि० । नालिकायाम् रथ्यायाञ्च स्त्री० ।
विशिष्ट त्रि० वि+शिष-क्त । युक्ते, विलक्षणे, विशेषयुक्ते च ।
विशिष्टाद्वैत न० रामानुजाद्युक्ते प्रकृतिविशिष्टस्य ब्रह्मणोऽद्वयत्वे
विशीर्ण त्रि० वि+शॄ-क्त । शुष्के, जरावस्थापन्ने च ।
विशीर्णपर्ण पु० विशीर्णं पर्णमस्य । निम्बवृक्षे ।
विशुद्ध त्रि० वि+शुध-क्त । दोषरहिते, विशदे च ।
विशुद्धि स्त्री० वि-शुध-क्तिन् । शोधने, दोषराहित्ये च ।
विशृङ्खल त्रि० विगता शृङ्खला पद्धति यस्याः । परिपाटीशून्ये
विशेष पु० वि+शिष-घञ् । प्रभेदे, प्रकारे, व्यक्तौ, तिलके, 'अन्त्ये नित्यद्रव्यवृत्तिर्विशेषः परिकीर्त्तित' इति वैशेषिकोक्ते पदार्थभेदे, अर्थालङ्कारभेदे च ।
विशेषक पु० न० विशेष्यति वि+शिष-णिच्-ण्वुल् । ललाटकृते तिलके । विशेषकर्त्तरि त्रि० "त्रिभिर्श्लोकैर्विशेषकमि"त्युक्ते एकवाक्यतापन्ने श्लोकत्रये न० ।

विशेषगुण पुं० कर्म० । वैशेषिकोक्ते 'बुद्ध्यादिषट्क' स्पर्शादिचतुष्क' च इ-
भावने । स्वाभाविकद्रवत्वस्य अदृष्ट संस्कार चेत्युक्तेषु गुणभेदेषु ।

विशेषण न० विशिष्यतेऽनेन वि+शिष-ल्युट् । भेदकधर्मे गुणक्रियादौ
यथा नीलम् उत्पलं चलो गौरित्यादौ गुण क्रियादिर्भेदकधर्मः ।

विशेषविधि पु० विशेषे विधिः । सामान्यविशेषयोर्मध्ये विशेषगोचरे
विधाने यथा ब्राह्मणेभ्यो दधि दीयतां माठराय तक्रमित्यत्र
माठरस्य ब्राह्मणविशेषत्वेन तद्विषये दधिदानापवादेन तक्रदा-
नविधिः ।

विशेषित त्रि० वि+शिष-णिच्-क्त भेदिते विशेषणयुक्तीकृते च ।

विशेषोक्ति स्त्री० अर्थालङ्कारभेदे ।

विशेष्य त्रि० विशिष्यते भेद्यते गुणादिभिरसौ वि+शिष यत् । गुणा-
दिभिर्भेद्ये, व्यवच्छेद्ये, पदार्थे धर्मिणि च ।

विशोक पु० विगतः शोकः यस्मात् यस्य वा । अशोकवृक्षे शोकरहिते
त्रि० योगशास्त्रोक्ते चित्तवृत्तिभेदे स्त्री०

विशोधनी स्त्री० विशुध्यतेऽनया शुध-ल्युट् ङीप् । दन्तीवृक्षे
भावे ल्युट् । शोधने न० वि+शुध-ल्यु । शोधनकारके त्रि० ।

विशोधिन् त्रि० वि+शुध-णिच् णिनि । शोधनकारके त्रि० । नाग-
दन्त्यां स्त्री० ङीप् ।

विश्र(श्रा)णन न० वि+श्रण-णिच्-ल्युट् वा वृद्धिः । दाने ।

विश्रब्ध त्रि० वि+श्रम्भ-क्त । विश्वस्ते 'विश्रब्धं परिचुम्ब्य'इति सा० ।
शान्ते, अनुद्धते, गाढे च । [स्यावसाने च ।

विश्र(श्रा)म पु० वि+श्रम-घञ् वा वृद्धिः । विरामे प्रवृत्त व्यापार-

विश्रम्भ पु० वि+श्रम्भ-घञ् । विश्वासे, प्रत्यये, केलिकलहे वधे च ।

विश्राव पु० वि+श्रु-घञ् । प्रसिद्धौ ख्यातौ च ।

विश्रुत पु० वि+श्रु-क्त । विख्याते ।

विश्लिष्ट त्रि० वि+श्लिष-क्त । वियुक्ते शिथिले च ।

विश्लेष पु० वि+श्लिष-घञ् । वियोगे शैथिल्ये च ।

**विश्व** न० विश–व । जगति संसारे । तदभिमानिनि जीवे पु० । श्राद्ध-देवविशेषे पु० ब०व० । सकले त्रि० तदर्थेऽस्य सर्व्वनामता ।

**विश्वकर्म्मन्** पु० विश्वेषु कर्म्म व्यापारो यस्य । सूर्य्ये, देवशिल्पिनि, मुनिभेदे, परमेश्वरे च ।

**विश्वकृत्** पु० विश्वं करोति कृ–क्विप् । विश्वकर्म्मणि, परमेश्वरे च ।

**विश्वकेतु** पु० विश्वे केतवोऽस्य । अनिरुद्धे ।

**विश्व(ष्व)क्सेन** पि०पु(पु)श्वी सेनायस्य । विष्णौ, प्रियङ्गुवृक्षे स्त्री० ।

**विश्वगन्ध** पु० विश्वतो गन्धोऽस्य । बोले गन्धरसे, पलाण्डौ च ।

**विश्वगन्धा** स्त्री० विश्वे सकला गन्धा यस्याः । पृथिव्याम् ।

**विश्वग्रन्थि** स्त्री० विश्वतो ग्रन्थिर्यस्याः । हंसपदीलतायाम् ।

**विश्व(ष्व)च्** अव्य० विश्वमञ्चति क्विप् विषु(षु) आदेशः । सर्व्वत इत्यर्थे विश्वगामिनि त्रि० अद्र्यागमे विश्व(ष्व)द्र्यङप्यत्र ।

**विश्वधारिणी** स्त्री० विश्वं धारयति धृ-णिनि । पृथिव्याम् ।

**विश्वपर्णी** स्त्री० विश्वतः पर्णान्यस्याः । भूम्यामलक्याम् ।

**विश्वप्सन्** पु० विश्वं प्साति भक्षति प्सा-कनिन् । अग्नौ, चन्द्रे देवे, विश्वकर्म्मणि, भूमौ च ।

**विश्वभेषज** न० विश्वेषां भेषजम् । शुण्ठ्याम् । [ पृथिव्यां स्त्री० ]

**विश्वम्भर** पु० विश्वं बिभर्त्ति भृ-अच् मुम् च । इन्द्रे, विष्णौ च ।

**विश्वरूपक** न० विश्वं रूपमस्य कप् । कृष्णागुरुणि ।

**विश्वरेतस** पु० विश्वं रेतोजन्यं यस्य । चतुर्मुखे ब्रह्मणि ।

**विश्वरोचन** पु० विश्वान् रोचयति रुच-णिच्-ल्यु । नाडीच शाके ।

**विश्ववेदस्** पु० विश्वं वेत्ति विद असुन् । इन्द्रादौ देवे, मुनौ च ।

**विश्वसार** न० विश्वेषां सारम् । तन्त्रभेदे । संज्ञायां कन् । (फणि-मनसा) वृक्षे पु० ।

**विश्वसृज्** पु० विश्वं सृजति सृज–क्विप् । चतुर्मुखे ब्रह्मणि ।

**विश्वस्त** त्रि० वि + श्वस–क्त । जातविश्वासे, विश्वसितोऽप्यत्र त्रि० वा इट् । विधवायां स्त्रियां स्त्री० ।

**विश्वस्था** स्त्री० विश्वतः तिष्ठति स्था–क । शतावर्य्याम्

विश्वाची स्त्री० विश्वमञ्चति अन्‌च क्विप् । अप्सरोभेदे ।

विश्वात्मन् पु० विश्वमात्मा यस्य । विष्णौ । [ न्पे ।

विश्वामित्र पु० विश्वं मित्रमस्य पूर्व्वपददीर्घः । महर्षिभेदे गाधिसुते

विश्वामित्रप्रिय पु० ६त० । नारिकेले स्वीरामे च ।

विश्वाराज् पु० विश्वेषु राजते राज-क्विन् । विश्वेषां राजनि, परमेश्वरे च

विश्वावसु पु० विश्वेषां वसु यस्मात् पृ० दीर्घः । गन्धर्वभेदे । रात्रौ स्त्री०

विश्वास पु० वि+श्वस-घञ् । इदमित्थमेवेत्याकारे चित्तवृत्तिभेदे, प्रत्यये, श्रद्धायाञ्च ।

विश्वेदेव पु० ब०, य० कर्म्म० अलुक्स० । 'क्रतुर्दक्षो वसुः सत्यः कालः कामस्तथा ध्वनिः । रोचकश्चाद्रवाश्चैव तथा चान्यः पुरूरवाः । विश्वेदेवा भवन्त्येते दश श्राद्धेषु पूजिता' इत्युक्ते श्राद्धदेवभेदे । विश्वदेवस्तु वह्नौ पु० ।

विश्वेश पु० ६त० । शिवे, विश्वेश्वरादोऽप्यत्र ।

विश्वौषध न० विश्वेषु रोगेषु औषधम् । शुण्ठ्याम् ।

विष व्याप्तौ जु० उभ० सक० अनिट् । वेवेष्टि वेविष्टे । अविषत् अविक्षत् त ।

विष विप्रयोगे क्र्या० पर० अक० अनिट् । विष्णाति अविक्षत्

विष सेचने भ्वा० पर० सक० अनिट् । वेषति अविक्षत् ।

विष् स्त्री० विष-क्विप् । विष्ठायाम् ।

विष न० विष-क । जले, पद्मकेसरे, मृणाले, गन्धरसे, वत्सनाभे-विषे च गरलमात्रे पु०न० । [ क्याम् ।

विषकण्टकिनी स्त्री० विषयुक्तं कण्टकमस्या अस्ति इनि । वन्ध्याकर्को-

विषकण्ठ पु० विषं कण्ठे यस्य । शिवे ।

विषघ्ना स्त्री० विषं हन्ति हन-ड नि० । कुलत्थ्यां । गुडूच्याम् ।

विषघातिन् पु० विषं हन्ति हन-णिनि । शिरीषवृक्षे । विषनाशके त्रि०

विषघ्न पु० विषं हन्ति हन-क । शिरीषवृक्षे, यवासे, विभीतके, चम्पक-वृक्षे च हिलमोचिकायां (हेलेञ्चा) इन्द्रवारुण्याम्, वर्वरायाम्, भूम्यामलक्याम्, रक्तपुनर्नवायाम् हरिद्रायाम्, दुस्थिकाल्याम्, महाकरञ्जे च स्त्री० ङीप् । विषनाशके त्रि० ।

विषजिह्व पु० विषयुक्ता जिह्वेव पत्रमस्याः । देवताड़वृक्षे ।
विषज्वर पु० विषमिव प्राणहन्ता ज्वरो यस्य । महिषे ।
विषण्ड न० विशेषेण षण्डम् । मृणाले ।
विषतिन्दु पु० विषयुक्तस्तिन्दुः । कुचीले ।
विषद न० वि+षद—अच् । पुष्पकासीसे शुक्लवर्णे पु० । तद्वति त्रि०
विषदन्तक पु० विषं दन्ते यस्य कप् । सर्पे ।
विषधर पु० विषं धरति धृ-अच् । सर्पे, 'विषधरविषमपि'त्युद्भटः ।
विषधर्म्मन् पु० विषस्येव धर्म्मोऽस्य अनिच् समा० । (आलकुषी) कपिकच्छ्वाम् ।
विषनाशन पु० विषं नाशयति नश-णिच्-ल्यु । शिरीषवृक्षे
विषनुद् पु० विषं नुदति नुद क्विप् । श्योनाकवृक्षे ।
विषपुष्प न० विषमिव नीलं पुष्पमस्य । नीलपद्मे । कप् । मदनवृक्षे । कर्म्म० । नीलपुष्पे न० ।
विषम त्रि० विगतो विरुद्धो वा समः । असमे, अयुग्मे उन्नतानते, दारुणे, सङ्कटे च 'भिन्नचित्रपदत्वाद् विषमं परिकीर्त्तितमि'-त्युक्ते पद्यभेदे न० ।
विषमच्छद पु० विषमाः अयुग्मानि सप्त छदाः यस्य । सप्तच्छदे ।
विषमज्वर पु० विषम उग्रो ज्वरः । ज्वरभेदे ।
विषमनयन पु० विषमाणि अयुग्मानि त्रीणि नयनान्यस्य । शिवे । विषमनेत्रादयोऽप्यत्र । [स्त्राम् । स्वार्थे कन् । तत्रैव ।
विषमर्द्दनी स्त्री० विषं मृद्यतेऽनया मृद-ल्युट् ङीप् । गन्धनाकु-
विषमस्थ त्रि० विषमे उन्नतानते सङ्कटे वा तिष्ठति स्था-क । उपद्रव-प्राप्ते, सङ्कटस्थे, उन्नतानतदेशस्थे च ।
विषमशिष्ट न० विषमं शिष्टं शासनम् । अनुचितशासने ।
विषमायुध पु० विषमाणि अयुग्मानि पञ्च आयुधानि वाणा यस्य । कामे । विषमेष्वादयोऽप्यत्र ।
विषय पु० विषिण्वन्ति स्वात्मकतया विषयिणं निरूपयन्ति सम्बध्नन्ति वा वि+षि-अच् । इन्द्रियगोचरे-शब्दादौ, देशे च ।

विषयिन् न० विषयोऽस्त्यस्य इनि । ज्ञाने, इन्द्रिये च । विषयासक्ते त्रि० । राजि, कामदेवे, ध्वनौ च पु० । [विषायाम् (आतइच) ।

विषरूपा स्त्री० विषं मूर्च्छाविषं रूपयति अतिक्रामति रूप-क । अति-

विषलता स्त्री० विषव्याप्तेव लता । इन्द्रवारुण्याम् ।

विषविद्या स्त्री० विषाय तच्छित्तये विद्या । विषघ्नमन्त्रज्ञाने ।

विषवैद्य पु० विषे विषापहारे वैद्यश्चिकित्सकः । विषमन्त्रविद्यावति

विषशालूक पु० विषस्य जलस्य शालूकः । पद्मकन्दे ।

विषहन्त्री स्त्री० विषं हन्ति हन-तृच् ङीप् । अपराजितायाम्,
विषहारके त्रि० । [हारके त्रि० ।

विषहरी स्त्री० विषं हरति हृ—अच् गौ० ङीष् । मनसादेव्याम् विष-

विषहा स्त्री० विषं हन्ति हन—ड । देवदालीलतायाम् ।

विषा स्त्री० विषं नाशकत्वेनास्त्यस्याः अच् । (आतइच) अतिविषया-
याम्, बुद्धौ च । [क्षीरकाकोल्याञ्च ।

विषाण न० विष+कानच् । पशुशृङ्गे, हस्तिदन्ते वराहदन्ते, कुष्ठौषधे

विषाणिका स्त्री० विषाणमस्त्यस्याः ठन् । शृङ्ग्याम् (गाडरशिङा)
कर्कटशृङ्ग्याम्, आमकव्याञ्च । [टके, ऋषभौषधे च पु० ।

विषाणिन् पु० विषाणमस्त्यस्य इनि । शृङ्गिणि, हस्तिनि च । शृङ्गा-

विषाद पु० वि+षद—घञ् । अवसादे, जडतायाञ्च । [तायाम् ।

विषादनी स्त्री० विषाय तच्छित्तये अद्यतेऽसौ अद—ल्युट् । पलाशील-

विषान्तक पु० विषस्यान्तक इव । शिवे, विषहरे त्रि० ।

विषापह स्त्री० विषमपहन्ति अप+हन—ड । इन्द्रवारुण्याम्, नागद-
मन्याम्, अर्कमूलायाञ्च (इसेरमूल) ।

विषाराति पु० ६त० । कृष्णधुस्तूरे ।

विषारि पु० ६त० । घृतकरञ्जे, महाचञ्चुशाके च ।

विषास्य पु० विषमास्ये यस्य । सर्पे विषाक्तमियास्यमस्य । भल्लातके ।

विषु अव्य० विष—कु । साम्ये, नानारूपे च ।

विषुव न० विषु दिनरात्रयोः साम्यं वाति वा—क । समरात्रिं दिन-
कालके अयनांशक्रमेण रवेः तुलामेषराशिसंक्रान्तिभेदे ।

विषुवत् न० विषु साम्यमस्त्यस्मिन् मतुप् यवादि० मस्य वः। विषुवसङ्क्रान्तौ ।

विषौषधी स्त्री० कर्म०। नागदन्त्याम् ।

विष्क हिंसायां चु० आ० सक० सेट्। विष्कयते अविविष्कत। दर्शने उभ० विष्कयति ते अविविष्कत् ।

विष्कम्भ पु० वि+स्कन्भ–अच्। सूर्य्यचन्द्रयोगजातयोगमध्ये प्रथमे योगे, विस्तारे, प्रतिबन्धे, रूपकाङ्गनाट्याङ्गभेदे, योगिनां बन्धभेदे, वृक्षे, अर्गलस्तम्भ-कीलकादौ च ।

विष्किर पु० विकिरति वि+कॄ–क सुट् च। विहगे ।

विष्टप न० विश–कपन् तुट् च। भुवने ।

विष्टब्ध त्रि० वि+स्तन्भ–क्त। प्रतिबद्धे अवरुद्धे ।

विष्टम्भ पु० वि+स्तन्भ घञ्। प्रतिबन्धे रोगभेदे च ।

विष्टम्भिन् त्रि० वि+स्तन्भ–णिनि। प्रतिबन्धके रोगविशेषजनके च ।

विष्टर पु० वि+स्तॄ–अप् षत्वम्। "ऊर्द्धकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टर' इति 'मासावर्त्तस्तु विष्टर' इति चोक्ते दर्भकृते आसनभेदे, आसनमात्रे, वृक्षे च ।

विष्टरश्रवस् पु० विष्टरः कुशमुष्टिरिव श्रवसी कर्णौ यस्य। विष्णौ ।

विष्टरुहा स्त्री० विष्टा भूमौ प्रविष्टा सती रोहति रुह-क। स्वर्णकेतक्याम् ।

विष्टार पु० वि+स्तॄ-घञ् षत्वम्। पङ्क्तिच्छन्दोभेदे ।

विष्टि स्त्री० विश क्तिन् क्तिच् वा। वेतनं विना भारादिवहनजन्ये क्लेशे, वेतने, कर्मणि, वर्षणे, प्रेषणे, तिथ्यर्द्धात्मककरणमध्ये सप्तमे करणे कर्मकरे भृत्ये, वेतनं विना कर्मकरे च पु० ।

विष्ठा स्त्री० विविधं तिष्ठति स्था-क षत्वम्। पुरीषे

विष्णु पु० विष-व्यापने नुक्। व्यापके, परमेश्वरे, वह्नौ शुद्धे, धर्मशास्त्रकारके मुनिभेदे च 'मन्वत्रिविष्णुहारीते'ति स्मृतिः। 'यस्माद्विश्वमिदं सर्वं तस्य शक्त्या महात्मनः। तस्मादेवोच्यते विष्णुर्विशधातोः प्रवेशनादि'त्युक्ते, वासुदेवेऽपि । [त्वात्तथात्वम् ।

विष्णुक्रान्ता स्त्री० कर्म०। अपराजितायाम् तस्याः विष्णुपरित्यक्त-

विष्णुगुप्त पु० चाणक्ये पक्षिलस्वामिनि अयमेव वात्स्यायनपक्षिलत्वेन प्रसिद्धः न्यायभाष्यकर्त्ता ।

विष्णुतैल न० वैद्यकप्रसिद्धे तैलभेदे ।

विष्णुधर्म्म पु० विष्णूपासनायोग्यो धर्मः शाक० । विष्णूपासनोचिते नियमभेदे उपचारात् तत्प्रतिपादके ग्रन्थे च । [संहिताभेदे ।

विष्णुधर्म्मोत्तर न० विष्णु धर्मे उत्तरः प्रधानः कर्तृत्वेन यस्य ।

विष्णुपद न० विष्णोः पदमिव व्यापकत्वात् । आकाशे ।

विष्णुपदी स्त्री० विष्णुपदं आस्पदत्वेनास्त्यस्याः अच् गौरा० ङीप् । गङ्गायाम् दर्शवृद्धिसंक्रमसरासौ रवेः संक्रान्तौ च ।

विष्णुमाया स्त्री० ६त० । विष्णोः परमेश्वरस्य माया । अघटनघटन-पटीयस्याम् अविद्यायाम्, तदभिमानिन्यां दुर्गायाम् ।

विष्णुरथ पु० विष्णोः रथ इव गतिहेतुत्वात् । गरुडे ।

विष्णुरात पु० विष्णुना रातः विष्णुर्वा रायाज्जीवनमस्मै रा-क्त वा । परीक्षिदाख्ये नृपे सहि गर्भस्थएव अश्वत्थाम्नास्त्रेण दग्धः सन् ततः प्रसवानन्तरस्य विष्णुना पुनर्जीवित इति भारतम् ।

विष्णुवल्लभा स्त्री० ६त० । तुलस्याम्, अग्निशिखावृक्षे च ।

विष्णुवाहन पु० विष्णुं वाहयति स्थानान्तरं नयति वह-णिच् ल्यु । गरुडे ।

विष्णुवाह्य पु० विष्णुर्वाह्योऽस्य । गरुडे । [गर्दे टङ्कारे ।

विष्फार पु० वि+स्फुर णिच् अच् आत् अत् षत्वम् । धनुर्गुणाकर्षण-

विष्य त्रि० विशेषेण वध्यः विष+यत् । विशेषेण वध्ये ।

विष्वक्सेन पु० विषूची सेना यस्य । विष्णौ विष्णु निर्माल्य भक्षके, तद्रूपभेदे च । विष्वक्सेनी स्त्री० ।

विष्वक्सेनप्रिया स्त्री० ६त० । वाराह्याम् (चामर आलु) भेदे च

विष्वाण न० वि+ष्वन-ल्युट् भक्षणार्थे । भोजने ।

विष्वाण पु० वि+ष्वन-घञ् भक्षणार्थे । भोजने ।

विस न० वि+सो-क । मृणाले ।

विसकण्ठिका स्त्री० विसं मृणालमिव कण्ठोऽस्त्यस्याः ठन् बलाकायाम्

विस उत्सर्गे दि० पर० सक० सेट् । विस्यति अवेसीत् ।

विसंवाद पु० वि+सम्+वद-घञ् । विप्रलम्भे, वञ्चने, अन्यथा स्थितस्य वस्तुनोऽन्यथा कथनादौ च ।

विसकुसुम न० विसयुक्तं कुसुमम् । पद्मे ।

विसङ्कट पु० विशिष्टो सङ्कटो यस्मात् । सिंहे इङ्गुदीवृक्षे च ।

विसनाभि स्त्री० विसं नाभौ यस्य । पद्मिन्याम् पद्मसमूहे च

विसर पु० वि+सृ अप् । समूहे, विस्तारे च ।

विसर्ग पु० वि+सृज घञ् । दाने, त्यागे, जलत्यागे, विसर्जनीयाख्ये वर्णभेदे, मोक्षे, प्रलये च भूतसर्गविसर्गादि नवलक्षणलक्षितमिति श्रीधरः । [लुयट् । प्रेरणे ।

विसर्ज्जन न० वि+सृज-ल्युट् । दाने, त्यागे च । वि+सृज-णिच्

विसर्प पु० वि+सृप-अच् । रोगभेदे ।

विसर्पण न० वि+सृप-ल्युट् । प्रसारे ।

विसार पु० विसरति सर्पति वि+सृ-घञ् । मत्स्ये ।

विसारिन् त्रि० वि+सृ णिनि । प्रसरणशीले । मत्स्ये पु० माषपर्ण्यां स्त्री० ङीप् । [पद्मलतायाञ्च ।

विसिनी स्त्री० विसानां समूहः तद्युक्तो देशो वा इनि । पद्मसमूहे

विसूचिका स्त्री० विशिष्टा सूचीव इवार्थे कन् । रोगभेदे ।

विसृत त्रि० वि+सृ क्त । विस्तीर्णे ।

विसृत्वर त्रि० वि+सृ-क्वरप् । प्रसरणशीले । स्त्रियां ङीप् ।

विसृमर त्रि० वि+सृ क्मरच् । विसरणशीले ।

विसृष्ट त्रि० वि+सृज-क्त । प्रेरिते रथे विसृष्ट, इति रघुः क्षिप्ते त्यक्ते च । [कापरिमाणे च ।

विस्त पु० न० विस-उत्सर्गे क्त नि० नइट् । सुवर्णकर्षे, अशीति रक्ति-

विस्तर पु० वि+स्तॄ अप् । शब्दसमूहे वाक्यसङ्घे, विस्तारे, प्रणये, समूहे च । आधारे अप् । पीठे ।

विस्तार पु० वि+स्तॄ-संज्ञायां कर्त्तरि घञ् । विटपे भावे घञ् । विस्तीर्णतायाम् समासवाक्यस्थे पदसमूहे च ।
विस्तीर्णं त्रि० वि+स्तॄ-क्त । विपुले विस्तारयुक्ते विशाले च ।
विस्तीर्णपर्णं न० विस्तीर्णानि पर्णान्यस्य । मानके ।
विस्तृत त्रि० वि+स्तॄ-क्त । विस्तारयुक्ते । [कर्णे विषभेदे च ।
विस्फुलिङ्ग पु० विस्फुरति वि+स्फुर-ड वायः तद्द लिङ्गमस्य । वह्नि-
विस्फोट पु० विस्फुटति वि+स्फुट-अच् । (विषफोड़ा) पदार्थे, स्वार्थे कन् । स्फोटकभेदे विस्फोटकभया भेषपङ्क्तेति शीतला स्तोत्रम् ।
विस्मय पु० वि+स्मि अच् । आश्चर्ये, अद्भुते, रसभेदे च ।
विस्मयान्वित त्रि० ३त० । विस्मययुक्ते, आश्चर्ययुक्ते च ।
विस्मापन पु० वि+स्मि-णिच् अच-आत् ल्युट् । कुहके, कामदेवे च । गन्धर्व्वपुरे न० । विस्मायनमप्यत्र ।
विस्मित पु० वि+स्मि-क्त । विस्मययुक्ते ।
विस्मृत त्रि० विस्मृ-क्त । स्मरणाविषये ।
विस्मृति स्त्री० वि+स्मृ-क्तिन् । स्मरणाभावे ।
विस्र न० विस-रक् । आमगन्धौ ।
विस्रंस पु० वि+स्रन्स-घञ् । पतने, क्षरणे च ।
विस्रगन्धा स्त्री० विस्रो गन्धोऽस्याः । हपुषायाम् ।
विस्रगन्धि पु० विस्रस्येव गन्धोऽस्य इत्समा० । हरिताले ।
विस्रम्भ पु० वि+स्रन्भ घञ् । विश्वासे, प्रणये, परिचये च ।
विस्रम्भिन् त्रि० वि+स्रन्भ-णिनि । विश्वासयुक्ते, प्रणयिनि च
विस्रसा स्त्री० वि+स्रन्स-क । जरायाम् ।
विस्रमा स्त्री० वि+स्रः आमगन्धोऽस्त्यस्याः अच् । तरुणायाम् ।
विहग पु० विहायसा गच्छति गम-ड नि० । पक्षिणि पु० विहङ्गोऽप्यत्र
विहङ्गम पु० विहायसा गच्छति गम-खच् नि० पक्षिणि ।
विहङ्गराज पु० ६त० अच् समा० । गरुडे "विहङ्गराजाङ्गरुहै"रिति माघः । [याच्ञ ।
विहनन न० विहन्यते वि+हन-ल्युट् । तूलपिञ्जुले, विघ्ने, हिंसा-

**विहर** पु॰ वि+हृ-अप्। वियोगे। ल्युट्। तत्रैव न॰।
**विहसित** न॰ वि+हस क्त। मध्यमहासे।
**विहस्त** त्रि॰ विगतो हस्तो हस्तावलम्बनं यस्य। व्याकुले। पण्डिते, षण्ढे च पु॰।
**विहापित** न॰ वि+हा-णिच् क्त। दाने।
**विहायस्** पु॰ न॰ वि+हय असुन् नि॰ वृद्धिः। आकाशे पक्षिणि च स्वार्थे अच्। विहायसमप्याकाशे न॰।
**विहार** पु॰ वि+हृ-घञ्। क्रीडार्थं पादाभ्यां गमने, भ्रमणे, स्कन्धे, लीलायां, बौद्धदेवालये, वैजयन्ते च।
**विहित** त्रि॰ वि+धा-क्त। कृते, विधिना बोधिते च।
**विहीन** त्रि॰ वि+हा-क्त। त्यक्ते, वर्जिते च।
**विहृत** न॰ वि+हृ-भावे क्त। विहारे, स्त्रीणां चेष्टाभेदे च।
**विह्वल** त्रि॰ वि+ह्वल-अच्। भयादिना व्याकुले, विलीने च।
**वी** कान्तौ जनने च अक॰ गतौ-व्याप्तौ क्षेपे भोजने च सक॰ अदा॰ उभ॰ अनिट्। वेति अवैषीत्।
**वी (वि)काश** पु॰ वि+काश-घञ् वा दीर्घः। रहसि, प्रकाशे च।
**वीक्षण** न॰ वि+ईक्ष-करणे ल्युट्। नेत्रे। भावे ल्युट्। दर्शने।
**वीङ्खा** स्त्री॰ वि+इखि अच्। न्यङ्कादित्वात् कुत्वम्। अ। गतिभेदे, नृत्ये, अश्वगतिभेदे, सख्यौ च। [सुखे अल्पे, किरणे च।
**वीचि (ची)** पुं॰स्त्री॰ वे-डीचि स्त्रीत्वे वा ङीप्। तरङ्गे, अवकाशे,
**वीचितरङ्ग** पु॰ वीचेरिव तरङ्गो यत्र। वीचितो यथा उत्तरोत्तरं तरङ्गजननमेवं स्वजन्यजन्यादिरूपे न्यायभेदे यथा शब्दस्य ढक्कादिदेशे उद्भवस्तज्जन्यशब्दपरम्परया श्रोत्रेण सह सम्बन्धात् श्रवणम्।
**वीचिमालिन्** पु॰ वीचिनां मालाऽस्त्यस्य इनि। समुद्रे।
**वीज** व्यजने अद॰ चुरा॰ उभय॰ सक॰ सेट्। वीजयति ते अविवीजत्-त। "वीज्यते स हि संसुप्त" इति कुमारः।
**वीज** न॰ वी-क्विप् जन ड कर्म॰। कारणे, शुक्रे, अङ्कुरे, तत्त्वावधाने, मज्जनि, अव्यक्तगणितभेदे, मन्त्रभेदे, धान्यादेः फलादौ च।

वीजक पु० वीजेन कायति कै-क । मातुलुङ्गे ।
वीजकोश पु० वीजानां कोष इवाधारः । पद्मवीजाधारे वराटके ।
वीजगर्भ पु० वीजानि गर्भे यस्य । पटोले ।
वीजगुप्ति स्त्री० वीजानां गुप्तिर्यस्याम् । शिम्ब्याम् ।
वीजन न० वीज-लुग्रट् । व्यजने । करणे लुग्रट् । चामरादौ । वस्तुनि, चक्रवाके, जीवञ्जीवविहगे च पु० ।
वीजपादप पु० वीजप्रधानः पादपः । भल्लातकवृक्षे ।
वीजपुष्प न० वीजात् पुष्पं यस्य । मरुवके । [वीजपूर्णोऽप्यत्र
वीजपूर पु० पूर्य्यते पूर-घञ् ३त० । (टावा लेवु) जम्बीरभेदे ।
वीजफलक पु० वीजानि फले यस्य कप् । वीजपूरे जम्बीरे ।
वीजमातृका स्त्री० वीजानां मातेव इवार्थे कन् । पद्मवीजे ।
वीजरुह पु० वीजेन रोहति रुह-क । वीजमात्रजाते धान्यादौ ।
वीजरेचन न० वीजं रेचयति रिच-लुग्र । वीजेषु मध्ये रेचके जय-पालवीजे । [तृपादनार्थं क्षेत्रे ।
वीजवपन न० वीजानि उप्यन्तेऽत्र वप-आधारे लुग्रट् । वीजस्य उ-
वीजरत्न न० वीजं रत्नमिवास्य । माषकलाये ।
वीजवृक्ष पु० वीजमात्राज्जातो वृक्षः । असनवृक्षे ।
वीजसञ्चय पु० वीजानां वपनयोग्यधान्यादीनां सञ्चयः संग्रहः सम्+चि-अच् । वपनयोग्यधान्यादिसंग्रहे ।
वीजसू पु० वीजं सूते सू-क्विप् । पृथिव्याम् । [क्षेत्रे ।
वीजाकृत त्रि० वीजेन सह कृष्टम् डाच् कृ-क्त । वीजेन सह कृष्टे
वीजाम्ल न० वीजेनाम्लमिव । वृक्षाम्ले ।
वीजिन् पु० वीजमस्त्यस्य इनि । उत्पादके पितरि । वीजविशिष्टे त्रि० ।
वीज्य त्रि० विशेषेण इज्यः वि+यज-क्यप् । कुलीने ।
वीटि (टी) स्त्री० वि+इट-इन् वा ङीप् । (पानेर वीड़ा) सज्जित-ताम्बूले । स्वार्थे कन् । तत्रैव ।
वीणा स्त्री० अज-न वीभावः ष० णत्वम् । स्वनामख्याते वाद्यभेदे ।
वीणादण्ड पु० ६त० । वीणावाद्यस्थितालावूपरिस्थे काष्ठदण्डे ।

वीणावाद त्रि० वीणां वादयति वद णिच् अण् । वीणावादके ।

वीत न० वि-इण्-क्त । युद्धासमर्थे हस्त्यश्वादिसैन्ये, अङ्कुशकर्मणि न्यायाद्युक्ते अनुमानभेदे च । शान्ते, गते च त्रि० ।

वीतंस पु० वि-तनुस-घञ् वा दीर्घः । मृगपक्षिणां बन्धनोपकरणे दाम-प्रभृतौ, विश्वासहेतुप्रावरणे च । [शोकहीने त्रि० ।

वीतशोक पु० वीतः विगतः शोको यस्मात् यस्य वा । अशोकवृक्षे

वीति स्त्री० वी क्तिन् । गतौ, दीप्तौ, भोजने, याचने च । क्तिच् । घोटके पु० । [ यज्ञे ।

वीतिहोत्र पु० वीतये पुराडाशादिभक्षणाय हूयन्ते देवा अत्र हु त्र । वीथि(थी) स्त्री० विथ इन् पृ० वा ङीप् । पङ्क्तौ, श्रेण्यौ, गृहाङ्गे, वर्त्मनि, दृश्यकाव्यनाटकाङ्गभेदे च ।

वीथ्यङ्ग पु० वीथ्या अङ्गमस्य । दृश्यकाव्यभेदे ।

वीध्र त्रि० वि-इन्ध-रक् । निर्मले । नभसि, वायौ च पु० ।

वीनाह पु० वि नह-घञ् । कूपादिमुखबन्धनसाधने (पाट) ख्याते पदार्थे ।

वीप्सा स्त्री० वि+आप-सन् अच ईत् अ अभ्यासलोपश्च । व्याप्तौ ।

वीव गत०चु०आ०अक० सेट् । वीवयते अविवीवत् ।

वीभ शौर्य्यहेतुके उद्यो विकत्थने च भ्वा०अक०सेट् । घटि न ह्रस्वः वीभते अवीभिष्ट ।

वीर न० अज-रक् वीभावः वीर-अच् वा । मरिचे, पद्मकाले, काञ्जिके, उशीरे च । संज्ञायां कन् । करवीरे, वेगवति शौर्य्ययुक्ते च त्रि० तन्त्रोक्ते कुलाचारे न० तद्वति त्रि० मद्यपात्रे स्त्री० ।

वीरक पु० वि+ईर-ण्वुल् । करवीरे ।

वीरण न० वि+ईर-ल्यु । उशीरे (वेणारमूल) ।

वीरतर न० वि+ईर-अच् तरप् । वीरणे, शूरतरे त्रि० ।

वीरतरु पु० वि+ईर-अच् कर्म० । अर्जुनवृक्षे कोकिलाक्षे, भल्लातके. (भेला) विल्वभेदे च वीरवृक्षादयोऽप्यत्र ।

वीरपत्नी स्त्री० वीरः पतिर्यस्याः नुक् ङीप् च । वीरभार्य्यायाम् ।

वीरपत्ना स्त्री० वीरयति वीर-अच् तथाभूतं पत्त्रं यस्याः । विजया याम् भङ्गे । [शा सुरापानादौ ।

वीरपान(णा) न० वीराणां पानम् वा णत्वम् । युद्धाय युद्धखेदापनुत्तये

वीरभद्र पु० वीरो भद्रोऽस्य । अश्वमेधीयेऽश्वे वीरेषु भद्रम् । वीरणे न०।

वीररजस् न० वीर इव रजः रक्तत्वात् । सिन्दूरे ।

वीरसू स्त्री० वीरं सूते सू+क्विप् । वीरमातरि ।

वीरसेन पु० वीरा सेना यस्य । नलराजजनके नृपभेदे ।

वीरहन् पु० वीरयति शौर्यान्वितं करोति वीर-णिच् अच् । वीरो यस्याग्निस्तं हतवान् हन—क्विप् । नष्टाग्नौ विप्रे ।

वीरा स्त्री० वि+ईर-अच्, वीर+अच् वा । मुरानामगन्धद्रव्ये, क्षीर-काकोल्याम्, आमलक्याम्, एलवालुकायां, पतिपुत्रवत्यां स्त्रियां, रम्भायां, विदार्य्याम्, दुग्धिकायाम्, क्षीरविदार्य्यां, काकोल्यां, महाशतावर्य्यां, घृतकुमार्य्याम्, अतिविषायां, ब्राह्म्याम्, शिंशपा-वृक्षे च (शिशु) । [अम्लवेतसे ।

वीराम्ल पु० वीरयति शौर्यान्वितं करोति वीर-णिच्-अच कर्म्म० ।

वीराशंसन न० वीरैराशस्यतेऽत्र आ+शन्स-ल्युट् । भयङ्करे युद्धक्षेत्रे ।

वीरासन न० वीरस्येवासनम् । 'एकपादमथैकस्मिन् विन्यसेदुरुसंस्थितम् इतरस्मिन् तथा पश्चात् वीरासनमिति स्मृत'मित्युक्ते आसनभेदे ।

वीरुध(धा) स्त्री० वि+रुध—क्विप् दीर्घः वा टाप् । विस्तृतायां लतायाम् ।

वीरेश्वर त्रि० ६त० । वीरपतौ । काशीस्थे शिवलिङ्गभेदे पु० ।

वीर्य्य न० वीर—यत्, वीरस्य भावो यत् वा । देहस्थे चरमधातौ शुक्रे, पराक्रमे, बले, प्रभावे, तेजसि, दीप्तौ च ।

वीर्य्यवत् त्रि० वीर्य्यमस्त्यस्य मतुप् मस्य वः । बलवति, वीर्य्ययुक्ते च ।

वीवध पु० विशेषेण वध्यतेऽत्र वध—घञ् न वृद्धिः । तण्डुलादिसंग्रहे, मार्गे, भारे च ।

वीवधिक पु० वीवधः भारवहनं शिल्पमस्य ठन् । भारवाहके ।

**वीहार** पु० विह्रियतेऽत्र वि+हृ–घञ् दीर्घः। बुद्धमन्दिरभेदे। भावे घञ्। विहारे।
**वुग** योगे भ्वा०पर०सक०सेट् इदित्। वुङ्गति अवुङ्गीत्।
**वुट** हिंसायां चुरा०उभ०सक०सेट्। वोटयति ते अवूवुटत् त इदित्त्वे वुण्टयति ते अवुवुण्टत् त।
**वुध** हिंसायां चुरा० उभ०सक०सेट् इदित्। वुन्धयति ते अवुवुन्धत् त।
**वुश(स)** विभागे, पृथक्करणे च दि०पर०सक०सेट्। वुश्य(स्य) ति अवोशी(सी)त्। [(वू)षत् त।
**वु(वू)ष** हिंसायां चुरा० उभ० सक० सेट्। वू(वू)षयति ते अवु(वु)वू
**वृ** आवरणे चु० उ० सक० सेट्। वारयति ते अवीवरत् त।
**वृ** सेवायां क्र्या०आ०सक०सेट्। वृणीते 'वृणते हि विमृश्यकारिण'-मिति भारविः। अवरीष्ट-अवरिष्ट-अवृत। [अवृत।
**वृ** वरणे भ्वा० उभ० सक० सेट्। वरति ते अवारीत् अवरिष्ट अवरीष्ट
**वृ** वरणे स्वादि० क्र्या० च उभ० सक० सेट्। वृणोति वृणुते वृणाति वृणीते अवारीत् अवरिष्ट अवरीष्ट अवृत।
**वृंहित** न० वृंहि–क्त। करिगर्जने।
**वृक** आदाने भ्वा०आत्म०सक० सेट्। वर्कते अवर्किष्ट।
**वृक** पु० वृक-क। कुक्कुराकारे हरिणघातके व्याघ्रभेदे। काके, वकवृक्षे, क्षत्रिये, अनेकद्रव्यजन्ये धूपे, सरलद्रवे, उदरस्थे वह्निभेदे च अम्बष्ठायां स्त्री० वा गौरा० ङीष्। वृकस्त्रियां स्त्री० ङीष्।
**वृकदंश** पु० वृकं दशति दन्श-अच्। कुक्कुरे। [धूपे।
**वृकधूप** पु० वृक्यते वृक-घञर्थे क कर्म०। नानाद्रव्यमिश्रिते दशाङ्गादौ
**वृकधूर्त्त** पु० वृक इव धूर्त्तः। शृगाले।
**वृकाक्षी** पु०वृकस्येवाक्षि पुष्पमस्य षच् समा० ङीष्। निवृत्ति (तेओड़ि)
**वृकाराति** पु० ६त०। कुक्कुरे वृकरिपादयोऽप्यत्र।
**वृकोदर** पु० वृकनामाग्निरुदरे यस्य। 'यस्य तीक्ष्णो वृको नाम जठरे हव्यवाहनः। मया दत्तः स धर्मात्मा तेन चासौ वृकोदर' इत्युक्ते भीमे 'न्यपसूचे वचनं वृकोदर' इति भारविः।

वृक्ण त्रि० व्रश्च क्त । छिन्ने ।
वृच वरणे भ्वा० आ० सक० सेट् । वृचते अवृचिष्ट ।
वृज पु० व्रश्च कन् । अग्नेऽपि जायमाने द्रुमे । स्वार्थे कन् कुटजवृक्षे ।
वृक्षचर पु० वृक्षे चरति चर-अच् । वानरे ।
वृक्षच्छाय न० ६त० । बहूनां वृक्षाणां छायायाम् ।
वृक्षधूप पु० वृक्षोऽपि धूपस्तत् साधनम् । सरलद्रुमे ।
वृक्षनाथ पु० ६त० । वटवृक्षे ।
वृक्षपाक पु० वृक्षस्य पाकः शिशुरिव जटिलत्वात् । वटवृक्षे ।
वृक्षभवन न० ७त० । वृक्षस्थे कोटरे । [(परगाछा) ।
वृक्षभक्षा स्त्री० वृक्षो भक्षो वेष्टकत्वात् भोजनीय इव यस्याः वन्दायाम्
वृक्षभेदिन् पु० वृक्षं भिनत्ति भिद णिनि । वृक्षभेदके अस्त्रभेदे ।
वृक्षमूज पु० वृक्षस्य स्वदि भूमौ भवति भू-क्विप् । जलवेतसे ।
वृक्षरुहा स्त्री० वृक्षे रोहति रुह-क । वन्दायाम्, अमृतस्रवायाञ्च ।
वृक्षवाटिका स्त्री० वृक्षाणामिव संहतत्वात् इवार्थे कन् । अमात्यगणि
कोपसेव्ये गृहसमीपस्थे उपवने ।
वृक्षादन पु० वृक्षमत्ति भिनत्ति अद ल्यु । कुठारास्त्रे (बेङ्गालि) वृक्षा-
न्तरमत्ति भिनत्ति । अश्वत्थवृक्षे, मधुच्छत्रे, पियाले विदारके च ।
वन्दायां स्त्री० गौरा० ङीष् । [वृक्षाम्ले च ।
वृक्षाम्ल न० वृक्षजातमम्लम् । (तेतुल) वृक्षजातमम्लप्रधाने वृक्षे,
वृक्षोत्पल पु० वृक्षमारोहयति उत्पलं येन । कर्णिकार वृक्षे ।
वृक्ष वृतौ क० पर० सक० सेट् । वृणक्ति । अवर्चीत् । निष्ठा अनिट् ।
वृज त्यागे अदा० आत्म० सक० सेट् इदित् । वृङ्क्ते अवृजिष्ट मेदिट्य-
यम् । वृक्ते अवर्जिष्ट । निष्ठा अनिट् ।
वृज त्यागे वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । वर्जयति ते
वर्जति । अववर्जत्-अवीवृजत् । अवर्जीत् । निष्ठा अनिट् ।
वृज वृतौ, त्यागे च रु० पर० सक० सेट् । वृणक्ति अवर्जीत् । निष्ठा
अनिट् । वृक्तः । [त्रि० ।
वृजन न० वृज्यतेऽत्र वृज क्यु । पापे, आकाशे च केशे पु० कुटिले

वृजिन न० वृज इनच् किच्च । पापे, भुग्ने त्रि० । केशे पु० ।

वृण प्रीणने, तु०पर०सक०सेट् । वृणति अवर्णीत् ।

वृण भक्षणे तना०उभ०सक०सेट् । वृणोति वर्णोति वृणुते अवर्णीत् अवर्णिष्ट । क्त्वा वेट् ।

वृत दीप्तौ चु०उभ०सक०सेट् । वर्त्तयति ते अवीवृतत् त अववर्त्तत् त ।

वृत वर्त्तने भ्वा० आ० लुङि लृटि लृङि च उभ०अक०सेट् । वर्त्तते । अवृतत् अवर्त्तिष्ट वर्त्स्यति वर्त्तिष्यते । क्त्वा वेट् ।

वृत संभक्तौ, वरणे च दि०आ०सक०सेट् । वृत्यते अवर्त्तिष्ट । क्त्वा वेट् ।

वृत त्रि० वृ-क्त । प्रार्थिते, कर्म्मादौ प्रार्थनादिना कृतनियोगे च ।

वृति स्त्री० वृ-क्तिन् । वेष्टने (बेड़ा) 'वृतिञ्च तत्र कुर्व्वीते'ति स्मृ० ।

वृतिङ्कर पु० वृतिङ्करोति कृ-खच् । विकङ्कते (वइँचि) ।

वृत्त न० वृत-भावे क्त । 'गुरुपूजा घृणा शौचं सत्यमिन्द्रियनिग्रहः प्रवर्त्तनं हितानाञ्च तत्सर्व्वं वृत्तमुच्यते' इत्युक्ते चरित्रे, पद्यभेदे, वृत्तौ च । वृत-कर्त्तरि क्त । अतीते दृढे, वर्त्तुले अधीते मृते जाते च त्रि० कूर्म्मे पु० ।

वृत्तगन्धि न० वृत्तस्य पद्यभेदस्य एव गन्धो लेशोऽत्र इत् समा० । 'भवत्युत्कलिकाप्रायं समासाढ्यं दृढाक्षरम् । वृत्तैकदेशसम्बन्धात् वृत्तगन्धि पुनः स्मृत'मित्युक्ते गद्यभेदे ।

वृत्ततण्डुल पु० वृत्तो वर्त्तुलस्तण्डुलोऽस्य । यावनाले ।

वृत्तनिष्पाविका स्त्री० वृत्ता वर्त्तुला निष्पाविका नखनिष्पाव्याम् ।

वृत्तपर्णी स्त्री० वृत्तानि पर्णान्यस्याः ङीप् । महाशणपुष्पिकायाम्, पाठायाञ्च (आकनादि) ।

वृत्तपुष्प पु० वृत्तानि वर्त्तुलानि पुष्पाण्यस्य । शिरीषवृक्षे ।

वृत्तफल न० वृत्तं फलमस्य । मरीचे, दाड़िमे, वदरे च । वार्त्ताक्याम्, आमलक्याञ्च स्त्री० टाप् ।

वृत्तमल्लिका स्त्री० वृत्ता मल्लिकेव । श्वेतार्के ।

वृत्तबीज पु० वृत्तानि बीजान्यस्य । शिम्बायाम् । आढक्याम् स्त्री० ।

वृत्तस्थ पु॰ त्रि॰ वृत्ते गुरुपूजादौ चरित्रे तिष्ठति स्था-क। गुरुपूजादिचरित्ररते।

वृत्तान्त पु॰ वृत्तो जातोऽन्तो निर्णयो यस्मात्। संवादे, वाचिकसन्देशे च

वृत्ति स्त्री॰ वृत्त-क्तिन्। वर्त्तने, स्थितौ, विवरणे च करणे क्तिन् जीविकायाम्। कौशिकीसात्वतीभारत्यारभट्याख्ये रचनाभेदे, वेदान्तोक्ते अन्तःकरणादेः परिणामभेदे च। 'बुद्धिवृत्तिचिदाभासाविति ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरिति च वे॰।

वृत्तिकर्षित त्रि॰ वृत्त्या कर्षितः। विषमस्थे, अल्पमात्रवृत्तिके च।

वृत्र पु॰ वृत-रक्। अन्धकारे, रिपौ, त्वष्टृपुत्रे दानवभेदे, मेघे पर्वतभेदे, मन्त्रे शब्दे च।

वृत्रद्विष् पु॰ ६त॰। इन्द्रे। वृत्ररिपादयोऽप्यत्र।

वृत्रहन् पु॰ वृत्रं हतवान् हन-क्विप्। इन्द्रे।

वृथा अव्य॰ वृ-थाल् कित्च। निरर्थके। [कार्य्ये—दानभेदे।

वृथादान न॰ कर्म॰। निष्फलदाने स्मृतिप्रदर्शिते देवपित्राद्यर्थभिन्न

वृथामांस न॰ वृथा भूतं मांसम्। देवाद्यनुद्देशेन हतपशूनां मांसे।

वृद्ध न॰ वृध-क्त। शैलजनामगन्धद्रव्ये। वृद्धदारके वृक्षे पु॰। वृद्धियुक्ते पण्डिते च त्रि॰।

वृद्धकाक पु॰ कर्म॰। द्रोणकाके।

वृद्धगङ्गा स्त्री॰ कर्म॰। नदीभेदे।

वृद्धदारक पु॰ वृद्धं दारयति दृ-णिच्-ण्वुल्। वीरताडवृक्षे।

वृद्धफल पु॰ वृद्धं फलमस्य। वृद्धदारके वृक्षे।

वृद्धनाभि त्रि॰ वृद्धा नाभिरस्य। (गोड) वृहन्नाभियुक्ते।

वृद्धप्रपितामह पु॰ वृद्धः प्रपितामहात् राज॰। प्रपितामहजनके।

वृद्धप्रमातामह पु॰ वृद्धः प्रमातामहात् राज॰। प्रमातामहस्य पितरि।

वृद्धबला स्त्री॰ कर्म॰। महासमङ्गायाम् वृद्धबलकरत्वात्तथात्वम्।

वृद्धराज पु॰ वृद्धेषु राजते राज-अच्। अम्लवेतसे।

वृद्धविभीतक पु॰ वृद्धः विभीतक इव। आम्रातके।

वृद्धश्रवस् पु० वृद्धेभ्यः शृणोति श्रु-असुन्, वृद्धेषु श्रवो यशो यस्येति वा । इन्द्रे ।

वृद्धा स्त्री० वृध-क्त । गतयौवनायां स्त्रियाम् ।

वृद्धि स्त्री० वृध-क्तिन् । समृद्धौ अभ्युदये, सम्पत्तौ, समूहे च । वृध-कर्त्तरि क्तिच् । औषधिविशेषे, कलान्तरे, (सूद) 'वृद्धेरपि पुत्र-वृद्धिरि'ति स्मृतिः । शैलेयगन्धद्रव्ये पु० ।

वृद्धिका स्त्री० वृद्धि+स्वार्थे कन् । वृद्धिनामकौषधे ।

वृद्धिजीविका स्त्री० वृद्धिरूपा जीविका । ऋणदानादिषु प्रयुक्तधनेभ्यो लाभरूपजीविकायाम् । [ विधिके नान्दीश्राद्धे ।

वृद्धिश्राद्ध वृद्धौ अभ्युदयाय श्राद्धम् । पुत्रादीनां संस्काराङ्गे पार्वण-

वृद्ध्याजीव त्रि० वृद्धिम् अधमर्णतः प्रयुक्तद्रव्याधिकलाभमाजीवति आ+जीव-अण् । वार्द्धुषिके ।

वृध दीप्तौ चु०उभ०अक०सेट् । वर्द्धयति ते अवीवृधत् त अववर्द्धत् त ।

वृध वृद्धौ भ्वा०आत्म० लुङि लृटि लृङि च उभ०अक०वृता०सेट् । वर्द्धते अवृधत् अवर्द्धिष्ट वर्त्स्यति वर्द्धिष्यते । क्त्वा वेट् ।

वृन्त न० वृ क्त नि० मुम् च । (बोंटा) फलपत्रादिबन्धने ।

वृन्ताक पु० स्त्री० वृन्तमकति अक-अण् । वार्त्ताकौ स्त्रीत्वे गौ० ङीष् ।

वृन्तिता स्त्री० वृन्तं जातमस्याः तार० इतच् । कटुकायाम् ।

वृन्द न० वृन्यते वृणुते वा वृण-वृत वा दन् नि० । समूहे दशार्बुदसंख्यायाञ्च, तुलस्यां, राधिकायां स्त्री० ।

वृन्दार त्रि० वृन्दमृच्छति ऋ-अण् । मनोहरे ।

वृन्दारक पु० वृन्द+आर कन् । देवे । मुख्ये, मनोहरे च त्रि० ।

वृन्दावन स्त्री० वृन्दाया विहारस्थानम् वनम् । मथुरासन्निकृष्टे वैष्णवे तीर्थभेदे । 'वृन्दावनं परित्यज्य पादमेकं न गच्छती'ति पुराणम् ।

वृन्दिष्ठ त्रि० अतिशयेन वृन्दारको मुख्यः इष्ठन् वृन्दादेशः । अतिशयमुख्ये 'वृन्दिष्ठमाख्यत् बहुधाभिमानामि'ति भट्टिः ईयसुन् वृन्दीयान् यत्र त्रि० स्त्रियां ङीप् । [मित्येके तेन अवृणदित्येव ।

वृश वृतौ दिवा०पर०सक०सेट् । वृश्यति अवृशत् अवशीत् पुषादित्व-

वृश पु० वृश-क । वासकवृक्षे, उन्दूरे च ओषधिभेदे स्त्री० ।
वृश्चिक पु० व्रश्च-किकन् । (बिछा) कीटभेदे, शूककीटे, (शुयापोका) मेषादितः अष्टमे राशौ, ओषधिभेदे, मदनवृक्षे, कर्कटे, गोमय-कीटे च ।
वृश्चिकप्रिया स्त्री० वृश्चिकस्य शूककीटस्य प्रिया । पूतिकायाम् ।
वृश्चिककर्णी स्त्री० वृश्चिक इव कर्णौ यस्याः । आखुकर्णाम् ।
वृश्चिका स्त्री० वृश्चिकः तद्विषमस्त्यस्य अच् । (बिछाती) क्षुपभेदे ।
वृश्चिकाली स्त्री० वृश्चिक इवालति पर्य्याप्नोति वेदनायै अच् गौरा० ङीष् । (बिछाती) क्षुपभेदे । [वृश्चिकाल्याम् ।
वृश्चिपत्त्री स्त्री० वृश्चिक इव पत्त्रं विषाक्तमस्य पृ० कलोपः ङीप् ।
वृश्चीर पु० व्रश्च-ईरच् । श्वेतपुनर्नवायाम् ।
वृष सेचने सक०भ्वा०पर० प्रजननसामर्थ्ये अक० सेट् । वर्षति अव-र्षीत् । क्त्वा वेट् ।
वृष प्रजननसामर्थ्ये चुरा०आत्म०अक०सेट् । वर्षयते- अवीवृषत-अववर्षत
वृष पु० वृष-क । वृषभे पुङ्गवे, मेषादितो द्वितीये राशौ, पुरुषभेदे, एकादशमनुकालिके इन्द्रे, धर्मे, शृङ्गिमात्रे, मूषिके, शुक्रयुक्ते, वासकवृक्षे, वास्तुस्थानभेदे, शत्रौ, कामे, बलयुक्ते ऋषभनाम्नौषधे, मयूरपिच्छे च ।
वृषण पु० वृष क्यु । अण्डकोषे ।
वृषदंशक पु० वृषान् मूषिकान् दशति दन्श-ण्वुल् । बिडाले
वृषध्वज पु० वृषो ध्वजो यस्य । शिवे वृषकेतनादयोऽप्यत्र ।
वृषध्वाङ्क्षी स्त्री० वृषो बलवान् ध्वाङ्क्षः काको यस्याः ५ ब० । गौरा० ङीष् । नागरङ्गस्तायाम् ।
वृषन् पु० वृष—कनिन् । इन्द्रे, कर्णे, वृषे, अश्वे, दुःखे च ।
वृषनाशन पु० वृषान् मूषिकान् नाशयति नश—णिच् + ल्यु । विडाले ।
वृषपर्णी स्त्री० वृषस्य मूषिकस्य कर्ण इव पर्णमस्याः । (उन्दूरकाणी) आखुकर्णीम् । [पर्व यस्य । भृङ्गारवृक्षे, कशेरौ च ।
वृषपर्व्वन् पु०वृषे पर्व उत्सवो यस्य । शिवे, दैत्यभेदे च । वृषं बलवद्

वृषभ पुं० वृष–अभच् किच्च । वृषे, श्रेष्ठे, जिनभेदे, कर्णच्छिद्रे, ऋषभाश्विद्धे च ।

वृषभगति पुं० वृषभेण गतिरस्य । शिवे वृषभयानादयोऽप्यत्र ।

वृषभध्वज पुं० वृषभो ध्वजोऽस्य । शिवे वृषभकेतनादयोऽप्यत्र ।

वृषभाक्षी स्त्री० वृषभस्य अक्षीव पुष्पाण्यस्याः । इन्द्रवारुण्याम् ।

वृषभानु पुं० । राधिकायाः पितरि ।

वृषभानुसुता स्त्री० ६ त० । राधिकायाम् । [ऋषभे च

वृषल पुं० वृष–कलच् । शूद्रे, लशुने, घोटके, अधार्म्मिके, चन्द्रगुप्ते,

वृषली स्त्री० 'पितुर्गेहे च या नारी रजः पश्यत्यसंस्कृता । भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृते'त्युक्तायां पितृगेहे दृष्टरजस्कायामनूढायां कन्यायाम् । वृषल+भार्य्यायां जातौ वा ङीप् । वृषलजातिस्त्रियां, तद्भार्य्यायाञ्च, 'मद्यपा वृषलीपति'रिति' वृषलीफेनपीतस्ये'ति च स्मृतिः । [६ष० । वृषलनेत्रे न०।

वृषलोचन पुं० वृषस्येव लोचनं यस्य । मूषिके । ६त० । वृषनेत्रे न० ।

वृषवाहन पुं० वृषो वाहनमस्य । शिवे वृषभवाहनादयोऽप्यत्र

वृषस्यन्ती स्त्री० वृषेण जन्मनमिच्छति वृष+आभावे क्यच् सुक् च । कामुक्यां 'लज्जमर्या वा वृषस्यन्ती'ति भट्टिः ।

वृषा स्त्री० वृषः मूषिकस्तदाकाराः पर्णमस्याः । मूषिकपर्ण्याम् ।

वृषाकपायी स्त्री० वृषाकपेः पत्नी ङीप् ऐङ् च । लक्ष्म्यां, गौर्य्याम्, स्वाहायां, शच्यां, जीवन्त्याञ्च । [विष्णौ, अग्नौ, इन्द्रे च ।

वृषाकपि पुं० वृषं धर्म्मं न कम्पयति न+कपि–इन् नलोपः । महादेवे,

वृषाकर पुं० वृषस्य सामर्थ्यस्य करः कृ–अच् । माषे ।

वृषाङ्क पुं० वृषः अङ्कोऽस्य । शिवे, भल्लातके, षण्डे च

वृषि(षी) स्त्री० वृष–कि वा ङीप् । व्रतिनां कुशमयासनभेदे ।

वृषोत्सर्ग पुं० उत्+सृज–घञ् ६त० । स्वताद्युद्देशेन तत्तन्मादिभिः क्रियमाणे विधानेन वृषस्य त्यागे 'वृषोत्सर्गश्च कर्त्तव्य' इति स्मृतिः

वृष्टि स्त्री० वृष–क्तिन् । वर्षणे । कर्म्मणि क्तिन् । मेघादिभिः वृष्ट-

माघो अले ।  [प्रसारणाम् ।

वृष्टिघ्नी स्त्री० वृष्टिं हन्ति वारयत्वेन अश्नाति हन-क ङीप् ।

वृष्टिजीवन त्रि० वृष्टिः वृष्टिजलमेव जीवनं यालनोपायो यस्य । वृष्टि-
जलमात्राजीविनि चातके ।

वृष्टिभू पु० वृष्टौ तदुपलक्षिते काले भवति—भू-क्विप् । भेके । वृष्टिभवे त्रि० ।

वृष्णि पु० वृष—नि किच्च । यादवे वंशे, श्रीकृष्णे, मेघे च ।

वृष्णिगर्भ पु० वृष्णिः यादवकुलं गर्भे यस्य । श्रीकृष्णे ।

वृष्य पु० वृषाय हितो यत्, वृष—क्यप् वा । माषे । शुक्रवृद्धिकारके त्रि०
वाजीकरणे न० आमलक्यां शतावर्यां, ऋषभनामौषधे च स्त्री० ।

वृष्यकन्दा स्त्री० वृष्यः शुक्रवर्द्धकः कन्दो यस्याः । विदार्य्याम् ।

वृष्यगन्धिका स्त्री०वृष्यः शुक्रवर्द्धको गन्धो यस्याः कप् अत इत्वम् ।
अतिबलायाम् ।

वृष्यवल्ली स्त्री० कर्म० । विदार्य्याम् । कन् अत इत्वम् । तत्रैव ।

वृह दीप्तौ वा चु० उभ० सक० पक्षे भ्वा० पर० इदित् । वृंहयति ते
अववृंहत् त । वृंहति अवृंहीत् ।

वृह वृद्धौ शब्दे च अक० भ्वा० पर० सेट् । वर्हति अवृहत् अवर्हीत्

वृह ध्वनौ वृद्धौ च भ्वा० पर० सक० सेट् इदित् । वृंहति अवृंहीत्

वृह वृद्धौ भ्वा० पर० सक० सेट् । वर्हति अवर्हीत् ।

वृह उद्यमे तु० पर० अक० वेट् । वृहति । अवर्हीत्—अवृक्षत् ।

वृह वृद्धौ भ्वा० आत्म० सक० सेट् इदित् । वृंहते अवृंहिष्ट

वृहच्चञ्चु पु० वृहती चञ्चुरिव मञ्जरी यस्य । महाचञ्चुशाके ।

वृहच्चित्त पु० वृहत् उदारं चित्तं यस्मात् ५ब० । फलपूरे

वृहत् त्रि० तु० वृह—अति । महति । स्त्रियां ङीप् ।

वृहती स्त्री० वृहत्+गौ० ङीप् । महत्यां स्त्रियां, क्षुद्रवार्त्ताक्याम्,
वारिधान्यां, वाचि, कण्टकारिकायाम्, नवाक्षरपादके छन्दोभेदे,
उत्तरीयवस्त्रे च । स्वार्थे कन् । उत्तरीयवस्त्रे स्त्री०

वृहतीपति पु० वृहतीनां वाचां पतिः वृहस्पतौ ।

वृहत्कन्द पु० वृहत् कन्दो यस्य । गृञ्जने, विष्णुकन्दे च ।

वृहत्कान्द पु० कर्म० । (खागड़ा) तृणभेदे ।
वृहत्कालशाक पु० कर्म० । (बड़ कालकासुन्दे) शाकभेदे ।
वृहत्कुक्षि पु० वृहत् कुक्षिर्यस्य । तुन्दिले ।
वृहत्ताल पु० कर्म० । हिन्ताले ।
वृहत्तिक्ता स्त्री० कर्म० । पाठायाम् (आकनादि) ।
वृहत्तृण पु० वृहत्तृणं यत्र । वंशे ।
वृहत्त्वच् पु० वृहती त्वक् यस्य । (छातियान) वृक्षे ।
वृहत्पत्र पु० वृहत् पत्रमस्य । हस्तिकन्दे । (छातिकान्दा)
वृहत्पाटलि पु० चु० पट-अलि कर्म० । धुस्तूरवृक्षे ।
वृहत्पाद पु० वृहत् पादोमूलमस्य । वटवृक्षे ।
वृहत्पालिन् पु० वृहतः पालयति पाल-णिनि । वनजीरके
वृहत्पीलु पु० कर्म० । महापीलौ ।
वृहत्फला स्त्री० वृहत् फलं यस्याः । कटुतुम्ब्याम् ।
वृहत्साम न० कर्म० । "त्वामिद्धि हवामहे" इत्यस्यामृचि गीयमाने साम्नि ।
वृहद्गल पु० कर्म० । (कामराङ्गा) वृक्षे ।
वृहदेला स्त्री० कर्म० । स्थूलैलायाम् ।
वृहद्गोल न० कर्म० । (तरमुज) लताफले ।
वृहद्दल न० वृहत् दलमस्य । पट्टिकालोध्रे, हिन्ताले च ।
वृहद्बल न० कर्म० । महालाङ्गले ।
वृहद्भानु पु० वृहद्भानुः किरणो यस्य । सूर्ये, चित्रकवृक्षे च
वृहद्रथ पु० वृहत् रथोऽस्य । इन्द्रे, यज्ञपात्रभेदे, सामावयवभेदे च
वृहद्वल्क पु० वृहत् वल्कमस्य । पट्टिकालोध्रे ।
वृहद्वात पु० वृहत् वातो वातभेदो यस्मात् ५व० । (देधान) वृक्षे
वृहद्वारुणी स्त्री० कर्म० । महेन्द्रवारुण्याम् ।
वृहद्बीज पु० वृहत् बीजमस्य । आम्रातके ।
वृहन्नल पु० वृहत् नलो यस्य । महापोटगले ।
वृहन्नला(डा) पु० स्त्री० वृहत् नलो यस्य वा लस्य डः । अर्जुने

वृहस्पति पु० वृहत्याः वाचः पतिः पृ० नि० । जीवे देवाचार्य्ये

वृ वरणे क्र्या० प्रा० उभ० सक० सेट् । वृणाति वृणीते अवारीत् अव-
रिष्ट-अवरीष्ट-अवृत ।

वि स्त तौ भ्वा० उभ० यजा० सक० अनिट् । वयति ते अवासीत् अवास्त

वेग पु० विज घञ् । प्रवाहे, जवे, रेतसि, मूत्रविष्ठादिनिःसारणयत्ने
न्यायोक्ते संस्कारभेदे, महाकाले च । [ङीप्

वेगिन् पु० वेग+अस्त्यर्थे इनि । श्येनविहगे, वेगवति त्रि० । स्त्रियां

वेजानी स्त्री० विज-अच् तमानयति आ-नी-ड । सोमराज्याम्

वेण वाद्यादाने, गतौ, ज्ञाने चिन्तायाञ्च भ्वा० उभ०सक० सेट् । वेणति
ते । अवेणीत् अवेणिष्ट । घटि न ह्रस्वः । [नृपभेदे च ।

वेण पु० वेण-अच् । वर्णसङ्करजातिभेदे, वर्णसङ्करकारके पृथुराजपितरि

वेणि(णी) स्त्री० वेण-इन् वा ङीप् । केशरचनाभेदे, जलसमूहे, तत्-
प्रवाहे देवदारुवृक्षे, नदीभेदे, गङ्गायमुनासरस्वतीमेलनस्थाने च ।

वेणीर पु० वेण-ईरन् । अरिष्टवृक्षे (निम) ।

वेणु पु०वेण-उण् । वंशे तद्विकारे वंशीवाद्ये च 'मा पूरय वेणु मित्युक्तः'

वेणुक न० वेणुरिव वेणोर्विकारः वा कन् । तोत्त्रे (पाँचनवाडि)

वेणुकर्कर पु० वेणुरिव कर्करः । करवीरवृक्षे ।

वेणुज पु० वेणुतो जायते जन-ड । वेणुजाते यवाकारे तण्डुले

वेणुध्म पु० वेणुं वंशीं धमति ध्मा-क । वेणुवादके ।

वेणुन न० वेण-उनन् । मरिचे ।

वेणुपत्री स्त्री० वेणोरिव पत्रमस्याः । वंशपत्रीवृक्षे ।

वेणुयव पु० वेणुजातोयव इव । वंशजाते तण्डुलाकारे पदार्थे ।

वेणुवाद त्रि० वेणुं वादयति वद-णिच्-अण् । वेणुवादके पुस् ।
तत्रैव त्रि० ।

वेणुबीज न० ६त० । वेणुजाते यवाकारे पदार्थे ।

वेतन न० अज-तनन् वीभावः । कृतकर्म्मणो भृतौ ।

वेतनादान न० ६त० । व्यवहारभेदे । [तत्र ङीप् ।

वेतस पु० अज-असुन् तुक् च वीभावः । (वेत) वृक्षभेदे स्त्रीत्वमपि

वेतसाम्ल पु० वेतस एव अम्लः । अम्ल वेतसे ।
वेतस्वत् त्रि० वेतसोऽस्त्यस्य ड्मतुप् । बहुवेतसयुक्ते देशे ।
वेताल पु० अज-विच् वीभावः तल-घञ् कर्म० । मन्त्रविशेषे, भूताधिष्ठित-
शवभेदे, शिवानुचरभेदे, द्वारपाले च ।
वेत्तृ त्रि० विद्-तृच् । ज्ञातरि, बोद्धरि, लब्धरि च ।
वेत्र पु० अज-त्रल् वीभावः । (वेत) वेतसदृशे ।
वेत्रधर पु० वेत्रं धरति धृ-अच् । द्वारपाले । वेत्रयष्टिधारके त्रि०
वेत्र (त्रा) वती स्त्री० वेत्रो बाहुल्येनास्त्यस्याः मतुप् मस्य वः वा
दीर्घः । मालवदेशस्थे नदीभेदे 'शरावती वेत्रवती'ति पुराणम् ।
वेत्रासन न० वेत्रनिर्मितमासनम् । वेत्रनिर्मिते आसने (मोडा)
वेथ याचने भ्वा० आ० द्वि० सेट् चर्ङि न ह्रस्वः । वेथते अवेथिष्ट
वेद पु० विद् अच् घञ् वा विष्णौ, ज्ञाने शास्त्रज्ञाने तत्साधने धर्म-
ब्रह्मप्रतिपादके संहिताब्राह्मणात्मके ग्रन्थभेदे, शास्त्रोक्ते चरित्रे च ।
वेदगर्भ पु० वेदो गर्भे यस्य । सर्ववेदकर्त्तरि हिरण्यगर्भे ।
वेदन न० विद्-ल्युट् ज्ञाने सुखदुःखाद्यनुभवे, विवाहे च 'वसनस्य दशा
ग्राह्या शूद्रयोत्कृष्टवेदने इति मनुः । युच् वेदनापि उक्तार्थेषु स्त्री० ।
वेदपारग पु० वेदानां पारमन्तं सीमां गच्छति गम-ड । समस्तवे-
दाभिज्ञे ।
वेदमातृ स्त्री० ६त० । गायत्र्यां मन्त्रभेदे तस्या वेदरक्षकत्वात्तथात्वम् ।
वेदवास पु० ६त० । ब्राह्मणे तस्य तत्पाठतदुक्ताचाराश्रयत्वात् तथा-
त्वम् वेदावासादयोऽप्यत्र ।
वेदविद् पु० वेदं वेत्ति विद्-क्विप् । विष्णौ । वेदज्ञे त्रि० ।
वेदव्यास पु० वेदान् व्यस्यति विभिन्नशाखात्वेन पृथक् करोति वि+अस-
अण् । पराशरपुत्रे सत्यवतीगर्भजे मुनिभेदे ।
वेदस् पु० विद्-असुन् । वेत्तरि ।
वेदाङ्ग न० वेदस्याङ्गमिव । 'शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां
चयः । ज्योतिषामयनञ्चैव वेदाङ्गानि षडेव तु' इत्युक्तेषु शिक्षा-
दिषु षट्सु शास्त्रेषु । [ओङ्कारे ।

**वेदादि** पु० वेदस्यादिरिव तत्पाठे प्रथमोच्चार्यत्वात् । प्रणवे

**वेदान्त** पु० ६त० । वेदशिरोभागे ब्रह्मप्रतिपादके उपनिषद्भागे ग्रन्थभेदे तदुपकारके शारीरकसूत्रभाष्यादौ च ।

**वेदाधिप** पु० ६त० । 'ऋग्वेदाधिपतिर्जीवो यजुर्वेदाधिपो भृगुः । सामवेदाधिपो भौमः शशिजोऽथर्ववेदप' इत्युक्तेषु वृहस्पत्यादिषु, विष्णौ च ।

**वेदान्तिन्** त्रि० वेदान्तो ज्ञेयत्वेनास्त्यस्य इनि । वेदान्तशास्त्रज्ञे

**वेदाभ्यास** पु० ६त० । 'वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः । तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासोहि पञ्चधे'त्युक्तेषु वेदपाठविचारानुशीलनतज्जपपाठनेषु ।

**वेदि** न० विद-इन् । अङ्गुलायाम् (आकनादि) परिष्कृतायां भूमौ स्त्री० वा ङीप् । 'मध्येन सा वेदिविलग्नमध्ये'ति कुमारः । वेदिश्च हस्तकाकारपरिच्छिन्नकावती पशुबन्धनार्थं होमीयद्रव्यासादनार्थं वा कृतसंस्कारा परिष्कृता चतुरस्रादिरूपा भूमिः । पण्डिते पु० ।

**वेदिका** स्त्री० वेदिरिव इवार्थे कन् । मङ्गलकर्मार्थं गृहद्वारादौ चतुरस्रादिमृत्तिकास्तूपाकारेण निर्म्मिते भूखण्डे ।

**वेदिजा** स्त्री० वेद्या होमवेदितो जायते जन-ड । द्रौपद्याम् ।

**वेदितृ** त्रि० विद-तृच् इट् च । ज्ञातरि ।

**वेदिन्** पु० विद-णिनि । पण्डिते, हिरण्यगर्भे च ज्ञातरि त्रि०

**वेध** पु० विध-घञ् । (बेँदा) वेधने, उत्खाते (खाडा) 'परिधिनवमभागः स्थूलभाग्येषु वेध' इति लीलावती । विवाहादौ वर्ज्ये नक्षत्रविशेषस्थितग्रहभेदकृतसंसर्गे च 'वेधं सर्वत्र वर्जये'दिति ज्योतिषम् ।

**वेधक** न० विध-ण्वुल् । कर्पूरे, अम्लवेतसे, धान्याके न० । वेधकर्त्तरि त्रि० ।

**वेधनी** स्त्री० विध्यतेऽनया विध-ल्युट् ङीप् । (भोमरी) मणिरत्नादिवेधकारणे अस्त्रभेदे । स्वार्थे कन् । तत्रार्थे कन् । तत्रार्थे, मेथिकायां, कस्तूर्यां च ।

**वेधमुख्य** पु० ७त० । कर्पूरे । संज्ञायां कन् । हरिद्राभे ।

वेधस् पु॰ वि+धा-असुन् गुणः। हिरण्यगर्भे जगत्स्रष्टरि, विष्णौ, सूर्ये श्वेतार्कवृक्षे, पण्डिते च।

वेधित पु॰ वेधोजातोऽस्य तार॰ इतच्। विद्धे छिद्रिते।

वेधिनी स्त्री॰ विध-णिनि। जलौकायाम् (जोंक)

वेन्धा स्त्री॰ वन ध घ॰। नदीभेदे।

वेप कम्पने भ्वा॰ आ॰ अक॰ सेट्। वेपते अवेपिष्ट। चङि न ह्रस्वः।

वेपथु पु॰ वेप-अथुच्। कम्पे।

वेपन पु॰ वेप-ल्युट्। कम्पने।

वेम पु॰ वे मन् न। आतस्य। वापदण्डे। मनिन्। अत्रैवार्थे पु॰ म॰।

वेर न॰ अज-रन् वीभावः। देहे, वार्ताकौ, कुङ्कुमे च। संज्ञायां कन्। कर्पूरे।

वेल चालने भ्वा॰ प॰ सक॰ सेट्। वेलति अवेलीत्। चङि न ह्रस्वः।

वेल कालोपदेशे, अ॰ चु॰उ॰ अक॰ सेट्। वेलयति ते अविवेलत त

वेल न॰ वेल-अच्। उपवने। काले समये, मर्य्यादायां समुद्रकूले च स्त्री॰ 'वेलामूले विभावरी परिक्षीणे'ति भट्टिः।

वेल्ल चालने भ्वा॰ पर॰ सक॰ सेट् चङि न ह्रस्वः। वेल्लति अवेल्लीत्

वेल्ल पु॰ न॰ वेल्ल-अच्। विडङ्गे। घञ्। चलने पु॰।

वेल्लज पु॰ वेल्ल-अच् तथाभूतः सन् जायते जन-ड। मरिचे।

वेल्लन न॰ वेल्ल-ल्युट्। अश्वादेर्भूमौ लुण्ठने काष्ठनिर्म्मिते पदार्थे (वेलुन) च बालादूर्वायां स्त्री॰ ङीप्।

वेल्लित न॰ वेल्ल भावे-क्त। गते। कर्त्तरि-क्त। कम्पिते, कुटिले च त्रि॰

वेल्लि (ल्ली) स्त्री॰ वेल्ल-इन् वा ङीप्। लतायाम्। संज्ञायां कन्। (वेलसुठ) वृक्षे।

वेवी कान्तौ गतौ व्याप्तौ क्षेपे भोजने च सक॰ प्रजनने अक॰अदा॰ आत्म॰ सेट् जक्षादि॰ वैदिक एवायम्। वेवीते अवेविष्ट

वेश पु॰ विश-घञ्। अलङ्कारादिना कृतरूपान्तरे, नेपथ्य कर्म्मणि, वेश्यागृहे, गृहमात्रे, प्रवेशे च। [क्ष्मुतपर्णप्रभृतौ।

वेशधारिन् पु॰ वेशं धरति धृ॰ धृ-णिनि। छलेन रूपान्तरधारिणि,

वेश्मन्त पु० विश-भच् । सुद्रसरोवरे, अग्नौ च ।
वेशर पु० वेशं राति रा-क । अश्वतरे ।
वेश्मन् न० विश मनिन् । गृहे ।
वेश्मभू स्त्री० ६त० । गृहकरणयोग्ये स्थाने ।
वेश्य न० विश-ण्यत् वेशाय हितं वा यत् । वेश्याजये पाठायाम्
(आकनादि) वारयोषिति च स्त्री० । [लये च ।
वेष पु० विष-अच् घञ् वा । भूषणादिना रूपान्तरकरणे, वेशत्र अना-
वेषण पु० विष-ल्युट् । कासमर्दे (कालकासुन्दे (भव्या) इत्ते च
ष्ट वेष्टने भ्वा० आत्म० सक० सेट् । वेष्टते अवेष्टिष्ट ।
वेष्ट पु० वेष्ट-घञ् अच् वा । वेष्टने, श्रीवेष्टे, वृक्षनिर्यासे च ।
वेष्टक न० वेष्ट-ण्वुल् । (पागडी) उष्णीषे । कुष्माण्डे, प्राचीरे च पु०
वेष्टन न० वेष्ट-ल्युट् । कर्णशष्कुल्याम्, उष्णीषे, मुकुटे च ।
वेष्टवंश पु० वेष्ट-अच् कर्म० । (वेष्टवांश) वंशभेदे ।
वेष्टसार पु० वेष्टस्य सारः । श्रीवेष्टे ।
वेष्टित त्रि० वेष्ट-क्त । प्राचीरादिना आवृते, रुद्धे च ।
वेस गतौ भ्वा०प०सक० सेट् चङि न ह्रस्वः । वेसति अवेसीत् ।
वेसन न० वेस ल्युट् । द्विदले, दालयसणकानान्तु निस्तुषा यन्नपेषितम् ।
तच्चूर्णं वेसनमित्युक्तं चणकादिद्विदलचूर्णे च
वेसर पु० वेस-अरन् । अश्वतरे ।
वेसवार पु० वेसं वारयति वृ-अच् । (वाटना) पिष्टधन्याकसर्षपादौ
वेह्व यत्ने भ्वा०आ०अक०सेट् चङि न ह्रस्वः । वेह्वते अवेह्विष्ट ।
वेहत् स्त्री० वि+हन अति नलोपः । गर्भोपघातिन्यां स्त्रियाम् ।
वेहार पु० वि+हृ-घञ् पृ० । स्वनामख्याते देशभेदे ।
वेह्ल गतौ भ्वा०पर० सक० सेट् । वेह्लति अवेह्लीत् चङि न ह्रस्वः
वै शोषे भ्वा० प०सक० सेट् अनिट् । वायति अवासीत् । निष्ठा तस्य नः ।
वानः निर्वाणः ।
वै अव्य० वा-डै । पादपूरणे, अनुनये, संबोधने च ।
वैकङ्क न० विशेषेण कङ्कति व्याप्नोति अण् । तिर्यक्कक्षाव लम्बिनि

कारभेदे । वुन् । उरसि उपवीताकारेण धृते माल्यभेदे ।

वैकङ्कत पु० विकङ्कत+स्वार्थेऽण् । (बैंचि) वृक्षभेदे । तस्येदमण् । विकङ्कतसम्बन्धिनि त्रि०

वैकल्पिक त्रि० विकल्पेन प्राप्तः भवो वा ठक् । पक्षप्राप्ते ।

वैकल्य न० विकलस्य भावः ष्यञ् । विकलत्वे ।

वैकुण्ठ पु० विकुण्ठे भवः अण् विविधा कुण्ठा माया यस्य स्वार्थेऽण् वा । विष्णौ, गरुड़े, इन्द्रे, सिताऽर्ज्जके च ।

वैकृत न० विकृतस्य भावः अण् । विकारे ।

वैखरी स्त्री० विशेषेण खं राति रा-क स्वार्थेऽण् । अर्थबोधके कण्ठस्थानादिषु उच्चार्य्यमाणे वर्णात्मके शब्दविशेषे ।

वैखानस पु० वि+खन-ड अन-असु कर्म० स्वार्थेऽण् वानप्रस्थे तापसभेदे 'वैखानसेभ्यः श्रुतरामवार्त्ता' इति भट्टिः ।

वैगुण्य न० विगतो विरुद्धो वा गुणोऽस्य तस्य भावः ष्यञ् । यत्र यदुचितं तस्य रूपान्तरतापादने, अन्यायत्वे, असम्यक्त्वे च

वैचित्र्य न० विचित्रस्य भावः ष्यञ् । नानारूपत्वे विलक्षणत्वे ।

वैजयन्त पु० विजयते वि+जि-झ स्वार्थेअण् । इन्द्रप्रासादे, अग्निमन्थवृक्षे, दानवभेदे च पताकायां, जयन्तीवृक्षे च स्त्री० ङीप् ।

वैजिक न० बीजेन निर्वृत्तं ठक् शिग्रुतैले । बीजाय हितम् ठक् । आत्मनि । स्वार्थे ठक् । कारणे । तस्येदं ठञ् । बीजसम्बन्धिनि त्रि०

वैज्ञानिक पु० विज्ञानाय साधु ठक् । निपुणे, विज्ञानमधिकृत्य कृतो ग्रन्थः ठक् । बौद्धागमे । तदध्येतरि, तत्सम्बन्धिनि च त्रि०

वैडालव्रत न० विडालस्येदम् अण् तदिव व्रतम् । 'यस्य धर्म्मध्वजो नित्यं शक्रध्वज इवोच्छ्रितः । प्रच्छन्नानि च पापानि वैडालं नाम तद्व्रतमित्युक्ते प्रकारेण धर्म्माचरणेन गुप्तपापाचारे ।

वैडालव्रतिक पु० वैडालव्रतमस्त्यस्य ठन् । छलेन धर्म्मचारिणि छद्मतापसे । इनि । वैड़ालव्रतीत्यप्यत्र ।

वैणव न० वेणूनां फलम् अण्, तस्य न लुप् । वेणुफले । वेणुसम्बन्धिनि त्रि० ।

वैणविक त्रि० वेणोर्विकारः अण् वैणवं वेणुवाद्यं शिल्पमस्यस्य ठन् ।
वैणिक त्रि० वीणा तद्वादनं शिल्पमस्य ठक् । वीणावादके
वैणुक न० वेणोर्विकारः ठक् । गजचालनार्थे लौहमुखे वंशदण्डे ।
वेणुसद्वादनं शिल्पमस्य ठक् । वेणुवादके त्रि० ।
वैण्य (न्य) पु० वेण (न)स्यापत्यम् यञ् । वेणसुते पृथुनामके नृपभेदे ।
वैतंसिक त्रि० वितंसेन मृगपक्ष्यादिबन्धनोपायेन चरति ठक् । मांसवि-
क्रयोपजीवके व्याधे ।
वैतनिक त्रि० वेतनेन जीवति ठक् । वेतनोपजीवके कर्मकरे भृत्यादौ ।
वैतरणी (णि) स्त्री० वितरणेन दानेन लङ्घ्यते अण् ङीप् वा पृ०
ह्रस्वः । यमद्वारस्थे नदीभेदे, यमद्वारे महाघोरे तप्ता वैतरणी
नदी'ति पुराणम् ।
वैतस पु० वेतसस्य स्वार्थेऽण् । अम्लवेतसे ।
वैतानिक पु० वितानस्यायम् । ठक् । श्रौतविधिनाऽग्निस्थापने दा-
क्षादूर्द्धमग्नौ स्यात् 'यस्य वैतानिको विधिरि'ति स्मृतिः
वैतालिक त्रि० विविधस्तालः मङ्गलगीत्यादिवाद्यस्तेन व्यवहरति ठक् ।
मङ्गलस्तुत्यादिभिः राज्ञां प्रबोधकारके मागधादौ ।
वैतालीय पु० मात्रावृत्तभेदे ।
वैदग्ध न० स्त्री० विदग्धस्य चतुरस्य भावः अण् स्त्रीत्वपक्षे ङीप् । चा-
तुर्ये, भङ्गौ च । ष्यञ् । वैदग्ध्यमप्यत्र न० ।
वैदर्भ पु० विदर्भाणां जनपदानां राजा अण् । विदर्भदेशाधिपे । वा-
क्यस्य कौटिल्ये न० । 'अष्टत्तिरलब्ध्नि यां वैदर्भीरीतिरिष्यते' यु-
क्तौ काव्यरचनाभेदे स्त्री० ङीप् । विदर्भे भवा अण् । नलराज-
पत्न्यां दमयन्त्याम् स्त्री०ङीप् । [रूभेदे पु० ।
वैदल न० विदलस्य विकारः अण् । भिक्षुकस्य भिक्षापात्रभेदे । पिष्ट-
वैदिक पु० वेदं वेत्त्यधीते वा ठञ् ।वेदज्ञे ब्राह्मणे वेदेषु विहितः ठक् ।
वेदोक्ते त्रि० । स्त्रियां ङीप् 'वैदिकी तान्त्रिकी सन्ध्या यथानुक्रम-
योगत' इति तन्त्रम् ।
वैदुष्य न० विदुषो भावः विद्वस्+ष्यञ् । पाण्डित्ये ।

वैदूर्य न० विदूरे भवः ष्यञ् । कृष्णपीतवर्णे विडालनेत्रतुल्ये मणिभेदे ।
वैदेह पु० विदेह्यां वैदेह: वश्यायां ब्राह्मणाज्जातः । वणिग्जने ।
विदेहे भवः अण् ततः कन् । वणिग्जने शूद्रात् वैश्याजाते जा-
तिभेदे च । ठञ् । वैदेहिकोऽपि । वणिजि । विदेहानां राजा
अण् । विदेहराजे जनके नृपे ।
वैदेही स्त्री० विदेहेषु मिथिलादेशेषु भवा अण् । सीतायाम् जनकात्म-
जायाम् हरिद्रायाम् पिप्पल्यां, वणिक् स्त्रियाञ्च
वैद्य पु० विद्याऽस्त्यस्य अण् । पण्डिते 'नाविद्यानाम्तु वैद्येने'ति श्रुतिः
भिषजि, तदुपकारके-वासकवृक्षे च ।
वैद्यक न० वैद्यं चिकित्सकमधिकृत्य कृतो ग्रन्थः कन् । आयुर्वेदे
वैद्यबन्धु पु० ६त० । आरग्वधवृक्षे ।
वैद्यमातृ स्त्री० वैद्यस्य मातेव । वासके तस्य वैद्यजीविकाङ्ग रोग-
शान्तिकरत्वेन तत्पोषकत्वात् तन्मातृतुल्यत्वम् ।
वैद्यसिंही स्त्री० वैद्यस्य सिंहीव । वासकवृक्षे ।
वैद्या स्त्री० वैद्यस्येयं प्रियत्वात् अण् काकोल्याम्० ।
वैध त्रि० विधित आगतः अण् । विधिप्रतिपाद्ये ।
वैधात्र पु० विधातुरपत्यम् अण् । सनत्कुमारादौ मुनिभेदे ।
वैधृति पु० विगता धृति र्यस्मात् प्र० वृद्धिः । विष्कम्भादिषु मध्ये अ-
न्तिमे योगे ।
वैधेय त्रि० विधीयतेऽसौ वि+धा यत् ततः स्वार्थे अण् मूर्खे
वैधर्म्य न० विरुद्धो धर्मो यस्य तस्य भावः ष्यञ् । विरुद्धधर्मत्वे अ-
न्यायत्वे च । [कुमारः ।
वैधव्य न० विधवाया भावः ष्यञ् । पतिविरहे नववैधव्यमसह्यवेदनमि'ति
वैनतेय पु० विनतायाः अपत्यं ढक् । गरुडे, अरुणे च ।
वैनयिक त्रि० विनये रतः ठक् । शास्त्रज्ञानादिना विनयरते
वैनायिक पु० विनायं बुद्धदेवमधिकृत्य कृतो ग्रन्थः ठक् । बौद्धागमे ।
उपचारात् तदभिज्ञे त्रि० ।
वैनाशिक पु० विनाशमधिकृत्य कृतो ग्रन्थः ठक् । सर्वेषां क्षणभङ्गुर-

ताम्रलिप्तादेर्वे लौहाम्रले वर्द्धमाने त्रि० विनाशाय हितम् ठञ्।
ज्योतिषोक्ते जन्मनक्षत्रावधित्रयोविंशे नक्षत्रे।
क्षणिके, परतन्त्रे च त्रि०। ऊर्णनाभे पुं०

वैनीतक पुं० न०। विनीतेन वा नीयतेऽनेन करणे क्त ततः स्वार्थे
कन्। परम्परया वाहने शिविकादौ।

वैपरीत्य न० विपरीतस्य भावः ष्यञ्। वैपर्य्ये।

वैभव न० विभोर्भावः अण्। विभुत्वे विभूतौ।

वैभ्राज न० विभ्राज इदम् अण्। देवोद्यानभेदे।

वैमुख्य न० विमुखस्य भावः ष्यञ्। विमुखत्वे।

वैमात्र पुं० विमातुरपत्यम् अण्। सापत्ने भ्रातरि तथाभूत भगिन्यां
स्त्री० ङीप्। [स्त्री० ङीप्।

वैमात्रेय पुं० विमातुरपत्यं ढक्। सापत्ने भ्रातरि तथाभूत भगिन्यां

वैयाकरण त्रि० व्याकरणं वेत्त्यधीते वा अण्। व्याकरणाभिज्ञे

वैयाघ्र पुं० व्याघ्रचर्म्मणा परिवृतो रथः अण्। व्याघ्रचर्मपरिवृते रथे।

वैयाघ्रपद्य पुं० व्याघ्रपदस्यापत्यं यञ्। गोत्रकारके मुनिभेदे: 'वैयाघ्र-
पद्यगोत्रायेति, भीष्मतर्पणमन्त्रः। [ति, भावः

वैयात्य न० वियातस्य भावः ष्यञ्। निर्लज्जत्वे 'वैयात्यं हरतेऽप्यपी'

वैयासकि पुं० व्यासस्यापत्यम् इञ्। व्यासस्यापत्ये शुकदेवे।

वैयासिकी स्त्री० व्यासेन प्रोक्ता ठञ् ङीप्। व्यासप्रणीतायां संहि-
तायाम्।

वैर न० वीरस्य भावः अण्। विरोधे विद्वेषे।

वैरकर त्रि० वैरं करोति कृ-ट। विरोधकारके।

वैरक्त्य न० विरक्तस्य भावः ष्यञ्। विरागे।

वैरनिर्यातन न० वैरस्य वैरकृतापकारस्य निर्यातनम् निर् यत-णिच्
ल्युट्। वैरकृतापकारप्रतीकारे। [तस्य शोधने।

वैरप्रतीकार पुं० ६त०। वैरकृतापकारस्य प्रत्यपकारकरणेन

वैरशुद्धि स्त्री० ६त०। वैरप्रतीकारे। [धिकविषयरागराहित्ये च।

वैराग्य न० विरागस्य भावः ष्यञ्। विषयवासनाराहित्ये ऐहिकामु-

वैरवृन्द पु० वीरसाम तन्नामकत्वात् कर्म० । अञ्ज्, नदृचे ।
वैरानुबन्धिन् त्रि० वैरं विद्वेषमनुबध्नाति णिनि । विद्वेषानुरूपकारके, वैरानुगते च ।
वैरिन् त्रि० वैरमस्त्यस्य इनि । शत्रौ । [वस्तुनो विकारे च ।
वैरूप्य न० विरूपस्य भावः ष्यञ् । विरूपत्वे, अननुरूपत्वे, अन्यथाभावे,
वैरेच (न) नि पु० विरोचनस्यापत्यम् शिवाद्यण् इञ् वा । अग्निपुत्रे सूर्यपुत्रे, बलिराजनामके दानवे च ।
वैलक्षण्य न० विलक्षणस्य भावः ष्यञ् । विलक्षणत्वे वैचित्र्ये ।
वैलक्ष्य न० विलक्षस्य भावः ष्यञ् । लज्जायां, स्वभाववैलक्षण्ये च वैलक्ष्यहेतोर्गति'मिति नैषधम् ।
वैल्व न० विल्वस्य फलम् अण् तस्य न लुप् । विल्वफले तत्सम्बन्धिनि त्रि० । [ नैगमे (दोकानी) ।
वैवधिक त्रि० विवधेन धान्यादिसंग्रहेण व्यवहरति ठक् । वार्त्तावहे
वैवर्ण्य न० विवर्णस्य भावः ष्यञ् । विवर्णत्वे मालिन्ये ।
वैवस्वत पु० विवस्वतोऽपत्यम् तस्येदं वा अण् । यमे शनौ, रुद्रभेदे च तत्सम्बन्धिनि त्रि० 'वैवस्वतकरक्रियेत्युद्भटः दक्षिणदिशि स्त्री०ङीप् ।
वैवाहिक त्रि० विवाहाय हितं साधु वा ठक् । विवाहयोग्ये 'वैवाहिकीं तिथिं पृष्टा' इति कुमारः विवाहेन संबद्धे कन्यापुत्रयोः श्वशुरे, विवाहसम्बन्धिनि च त्रि० । पञ्चमे सप्तमे वापि येषां वैवाहिकी क्रियेति स्मृतिः ।
वैशम्पायन पु० व्यासशिष्ये भारतवक्तरि मुनिभेदे ।
वैशस न० विशसस्य भावः स्वार्थे वा अण् । हिंसने हिंसके वा
वैशाख पु० विशाखानक्षत्रयुक्ता पौर्णमासी वैशाखी सा यत्र मासे पुनः अण् । स्वनामख्याते वर्षमध्ये द्वितीये चान्द्रे मासे तन्मासस्य पौर्णमास्यां स्त्री० ङीप् । विशाखा प्रयोजनमस्य अञ् । मन्थनदण्डे । धनुर्धराणामवस्थानभेदे न० ।

वैशिष्ट्य न० विशिष्टस्य भावः ष्यञ् । विशेष्यविशेषणसम्बन्धे, विशिष्टबुद्धिनियामके-सम्बन्धे, भेदे च ।

वैशेषिक न० विशेषं पदार्थभेदमधिकृत्य कृतो ग्रन्थः ठञ् । कणादप्रणीते शास्त्रभेदे । तदधीते अण् । काणादशास्त्राभिज्ञे त्रि० । तस्येदम् अण् । काणादशास्त्रसम्बन्धिनि त्रि० ।

वैशेष्य न० विशेषस्य भावः ष्यञ् । वैशिष्ट्ये भेदे च 'वैशेष्यात्तद्वाद' इति शाङ्करम् । [ अन्त्यजाते जातिभेदे

वैश्य पु० विशति उपभुङ्क्ते विश-क्विप् स्वार्थे ष्यञ् । वर्णभेदे अम्बष्ठ

वैश्यवृत्ति स्त्री० ६त० । कृषिवाणिज्यादौ ।

वैश्रवण पु० विश्रवसोऽपत्यम् अण् विश्रवणादेशः । कुवेरे ।

वैश्रवणालय पु०६त०। वटवृक्षे कुवेरपुर्य्याञ्च । वैश्रवणावासादयोऽप्यत्र।

वैश्वदेव पु० विश्वेभ्यो देवेभ्यो देयो वलिः अण् । वैश्वदेवोद्देशेन दीयमाने वलौ ।

वैश्वानर पु० विश्वेषां नराणामयम् कुक्षिस्थत्वात् अण् पूर्व्वदीर्घः। वह्नौ, चित्रकवृक्षे, सामवेदावयवभेदे च ।

वैषम्य न० विषमस्य भावः ष्यञ् । विषमत्वे वैलक्षण्ये ।

वैषयिक त्रि० विषयेण निर्वृत्तः ठक् । विषयनिर्वृत्ते सुखादौ

वैष्णव त्रि० विष्णुर्देवताऽस्य तस्येदं वा अण् । विष्णूपासके विष्णुसम्बन्धिनि च स्त्रियां ङीप् । वैष्णव्यां शक्तौ 'वैष्णवी समरे वैन जिता चण्डी' । विष्णुसम्बन्धिनि त्रि० स्त्रियां ङीप् 'गायत्री वैष्णवी ह्येषेति स्मृतिः विष्णुधामनि न० ।

वैसारिण पु० विसरति वि+सृ-णिनि स्वार्थे अण् । मत्स्ये ।

वैहासिक पु० विहासेऽभिरतस्तं करोति वा ठक् । नाटकादौ प्रसिद्धे शृङ्गाररसनायकसहचरे विदूषके ।

वोढु पु० वह-तृन् । मुनिभेदे "वोढुः पञ्चशिखस्तथे"ति स्मृतिः

वोढृ त्रि० वह-तृच् । वाहके स्थानान्तरप्रापके 'भागीरथी निर्झरसीकराणां वोढेति" कुमारः । पाणिग्राहके पु० पिण्डदा वोढुरेव ते इति स्मृतिः । भारवाहके मूढे च त्रि० वृषभे पु० ।

वोण्ट पु० वा उण्ट । (वोंटा) इति ख्याते इन्ते ।

वोरव पु० वा-उर वोरं वाति वा-क । (बोरो) धान्यभेदे ।

वोल पु० वा-उलच् । गन्धरसे गन्धद्रव्यभेदे ।

वौषट् अव्य० वह-डौषट् । देवोद्देशेन हविस्त्यागे ।

व्यंसक पु० विगतोऽंसो यस्य कप् । धूर्ते 'मयूरव्यंसकादयश्चेति पाणि-
निसूत्रम् ।

व्यंसित त्रि० वि + अंस-क्त । वञ्चिते ।

व्यक्त त्रि० वि-अनुज-क्त । स्फुटे प्रकाशिते, दृश्ये, प्राज्ञे, स्थूले, च ।
विष्णौ पु० [ विशेषे च ।

व्यक्ति स्त्री० वि+अनुज-क्तिन् । प्रकाशे क्तिच् । जने पृथगात्मके, एकैक-

व्यग्र त्रि० विगतमग्रं यस्य । व्याकुले, व्यासक्ते च । विशिष्टमग्रं यस्य ।
विष्णौ पु० । [ कक्षहीने त्रि० ।

व्यङ्ग न० विगतं विकलं वाङ्गं कर्म० । विकलाङ्गे, विगतमङ्गं यस्य ।

व्यङ्ग्य त्रि० वि+अनुज-ण्यत् । व्यञ्जनया वृत्त्या बोध्येऽर्थे, प्रकाश्ये

व्यच व्याजे अक० सम्बन्धे सक० तु० कु० प०. सेट् । विचति अविचीत्
विव्याच ।

व्यजन न० वि + अज-ल्युट् । तालवृन्तके ।

व्यञ्जक पु० वि+अनुज-णिच्-ण्वुल् । स्तुतभावादिप्रकाशके अभिनये,
व्यञ्जनयार्थबोधके शब्दे च । प्रकाशकमात्रे त्रि०

व्यञ्जन न० विशेषेणाज्यते वि+अनुज-ल्युट् । सूपशाकादौ ओदनभोज-
नोपकरणे । वि+अनज-णिच् ल्युट् । अलङ्कारप्रसिद्धे वृत्तिभेदे ।
श्मश्रु च । 'विरतास्वभिधाद्यासु ययार्थो बोध्यतेऽपरः । सा वृत्तिर्व्यञ्जना
नाम" इत्युक्ते शब्दशक्तिभेदे ।

व्यञ्जित त्रि० वि+अनुज-णिच्-क्त । प्रकाशिते 'अव्यञ्जितहर्षलक्षणा
इति कुमारः । व्यञ्जनावृत्त्या बोधितेऽर्थे च ।

व्यडम्बक पु० वि+अड-अच् डवि-ण्वुल् कर्म० शक० । एरण्डवृक्षे

व्यतिकर पु० वि+अति-कृ-अप् । सम्बन्धे, व्यसने च ।

**व्यतिक्रम** पु० वि+अति+क्रम-घञ् न वृद्धिः। विपर्य्यये 'विवाहे च व्यतिक्रम' इति स्मृतिः। [मिति कुमारः।

**व्यतिरिक्त** त्रि० वि+अति+रिच्-क्त। भिन्ने 'इष्टाद्दत्त व्यतिरिक्तान्न-

**व्यतिरेक** पु० वि+अति+रिच-घञ्। विशेषे, अतिक्रमे, अभावे, विनेत्यर्थे, अर्थालङ्कारभेदे च।

**व्यतिषक्त** त्रि० वि+अति+षन्ज-क्त। मिश्रिते, ग्रथिते च।

**व्यतिषङ्ग** पु० वि+अति+षन्ज-घञ्। परस्परमेलने।

**व्यती (ति)हार** पु० वि+अति+हृ-घञ् वा दीर्घः। परीवर्त्ते परस्परैकजातीयक्रियाकरणे। [इति रघुः।

**व्यतीत** त्रि० वि+अति-इण्-क्त। अतीते 'व्यतीतकालस्त्वहमभ्युपेत'

**व्यतीपात** पु० वि+अति+पत-घञ् दीर्घः। महोत्पातभेदे,। विष्कम्भादिषु मध्ये योगभेदे 'श्रवणा च धनिष्ठार्द्रा नागदैवमस्तके। यद्यमा रविवारेण व्यतीपातः स उच्यते" इत्युक्ते योगभेदे च।

**व्यत्यय** पु० वि+अति+इण्-अच्। व्यतिक्रमे, विपर्य्यये च।

**व्यत्यास** पु० वि+अति-अस-घञ्। विपर्य्यये।

**व्यथ** भये चलने दुःखानुभवे च भ्वा० आ० अक० सेट् घटा०। व्यथते अव्यथिष्ट। अङ् व्यथा।

**व्यथा** स्त्री० व्यथ-अङ्। पीड़ायाम्, दुःखे च।

**व्यध** ताड़ने दि०प सक० अनिट्। विध्यति अव्यात्सीत्।

**व्यध** पु० व्यध अच्। वेधे, छिद्रीकरणे, भेदने च।

**व्यध्व** पु० विरुद्धः अध्वा अच्समा०। कुपथे।

**व्यप** क्षये चुरा० उभ० सक० सेट्। व्यापयति ते अविव्यपत् त।

**व्यपदेश** पु० वि + अप + दिश-घञ्। कथने। संज्ञायां, कापट्ये च

**व्यपरोपण** न० वि+अप+रुह णिच्-ल्युट्। छेदने।

**व्यपरोपित** त्रि० वि+अप+रुह-णिच्-क्त। छिन्ने। [निष्कृते च।

**व्यपाकृति** स्त्री० वि+अप+आ+कृ-क्तिन्। निराकरणे, अस्वीकारे,

**व्यपाश्रय** पु० वि+अप+आ+श्रि अच्। आश्रये। [याथार्थ्येक्षणे च।

**व्यपेक्षा** स्त्री० वि+अप + ईक्ष-अ। अपेक्षायां व्याकरणोक्ते अन्वय-

व्यभिचार पु० वि + अभि-चर घञ् । निन्दिताचारे स्त्रियाः परपुरुषसंगमे, पुरुष परस्त्रीसंगमे, न्यायादिप्रसिद्धे हेतुदोषभेदे च

व्यभिचारिन् पु० वि+अभि + चर-णिनि । अलङ्कारोक्ते रसाङ्गभेदे निर्वेदादौ, न्यायोक्ते व्यभिचाररूपहेतुदोषवति पदार्थे च । परपुरुषगामिन्यां स्त्रियां स्त्री० ङीप् ।

व्यय गतौ त्यागे अद० चु० उभ० सक० सेट् । व्यययति ते अवव्ययत् त

व्यय गतौ भ्वा० उभ० सक० सेट् । व्ययति ते अव्ययीत् अव्ययिष्ट ।

व्यय नोदे चु० उभ० सक० सेट् । व्याययति ते अविव्ययत् त ।

व्यय पु० वि+इण—अच् । विगमे, धनादेस्त्यागे, ज्योतिषोक्ते लग्नात् द्वादशस्थाने च । [ शून्ये च ।

व्यर्थ त्रि० विगतोऽर्थः प्रयोजनं वाऽस्य । निष्प्रयोजने, विफले, अर्थ-

व्यलीक न० वि+अल-ईकक् । अकार्य्ये, कामजे, अपराधे अप्रिये, अन्हते च तद्वति त्रि० ।

व्यवकलन न० वि+अव-कल-ल्युट् । वियोजने, विगमने, हीनतासम्पादने च । 'व्यवकलनमार्गेऽसौ'ति लीलावती ।

व्यवकलित त्रि० वि+अव+कल-क्त । वियोजिते ।

व्यवच्छिन्न त्रि० वि+अव+छिद-क्त । छिन्ने, विशेषिते च । [चने च ।

व्यवच्छेद पु० वि+अव+छिद घञ् । पृथक्करणे, विशेषकरणे, मो-

व्यवधा स्त्री० वि+अव+धा-अ । व्यवधाने । [ आच्छादने च ।

व्यवधान न० वि+अव+धा-ल्युट् । तिरोधाने द्रव्यान्तरेण द्रव्यान्तर-

व्यवधायक त्रि० वि+अव+धा-ण्वुल् । व्यवधानकर्त्तरि, आच्छादके च ।

व्यवधि पु० वि+अव + धा-कि । व्यवधाने ।

व्यवसाय पु० वि + अव + षो-घञ् । उद्यमे 'मरणव्यवसायबुद्धि'मिति कुमारः उपजीविकायाम् अनुष्ठाने, अवधारणे च 'व्यवसायात्मिका बुद्धि'रिति गीता ।

व्यवस्था स्त्री० वि०अव+स्था-अ । शास्त्रविहितस्य विषयान्तरपरिहारेण विषयविशेषे स्थापने, शास्त्रमर्यादायाञ्च ।

**व्यवस्थित** त्रि॰ वि+अव+स्था-क्त। विषयान्तरपरिहारेण विषयविशेषे अवस्थिते-शास्त्रविहिते पदार्थे।

**व्यवस्थितविभाषा** स्त्री॰ कर्म॰। व्याकरणोक्ते विषयान्तरपरिहारेण विषयविशेषेऽवस्थितरूपे विकल्पे।

**व्यवहर्तृ** त्रि॰ वि+अव+हृ-तृच्। व्यवहारकर्त्तरि।

**व्यवहार** पु॰ वि+अव+हृ-घञ्। अर्थविशेषबोधनाय शब्दविशेषप्रयोगे ऋणादानादिष्वष्टादशसु विवादेषु। 'स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः। आवेदयति चेद्राज्ञे व्यवहारपदं हि तदि'ति स्मृतिः। 'परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु वाक्यात् न्यायाद्व्यवस्थानं व्यवहार उदाहृतं' इत्युक्ते विवादनिर्णये, सहाशनभोजनादौ च।

**व्यवहारपद** न॰ ६त॰। व्यवहारविषये।

**व्यवहारमातृका** स्त्री॰ व्यवहारस्य विवादनिर्णयस्य मातेव पोषकत्वात् परिच्छेदकत्वाद्वा इवार्थे कन्। व्यवहारनिर्णयार्थं प्राड्विवाकादिकार्य्ये क्रियासमुदाये, विस्तरोवाचस्पत्ये

**व्यवहारिक** त्रि॰ व्यवहारः प्रयोजनमस्य ठक्। व्यवहारयोग्ये लोकप्रसिद्धे घटपटादौ,स्त्रियां ङीप्। इङ्गुदवृक्षे पु॰

**व्यवहारिकसत्ता** स्त्री॰ कर्म॰ व्यवहारोपयिके सत्त्वे वेदान्त कल्पिते ब्रह्मभिन्नपदार्थमात्रस्य वस्तुतोऽसत्त्वेऽपि व्यवहारयोग्ये सत्त्वे येन घटादि व्यवह्रियते। तत्कार्य्यकरणोपयोगित्वेन कल्पिते घटादेरर्थक्रियाकारित्वलक्षणे सत्त्वे च।

**व्यवहार्य्य** त्रि॰ वि+अव+हृ ण्यत्। इदमित्यमेवेत्येवंरूपेण व्यवहारविषये येन सह भोजनादि क्रियते तस्मिंश्च।

**व्यवहित** त्रि॰ वि+अव+धा-क्त। व्यवधानवति पदार्थे।

**व्यवाय** पु॰ वि+अव+इण-घञ्। ग्राम्यधर्मे मैथुने, अन्तर्धाने शुद्धौ च तेजसि न॰।

**व्यवायिन्** पु॰ वि+अव+इण्-णिनि। ग्राम्यधर्मकारके स्त्रियां ङीप्।

**व्यसन** न॰ वि+अस-ल्युट्। विपत्तौ, भ्रंशे, कामजाते, कोपजाते च, स्त्रीभोगमद्यपानादौ दोषे, दैवाद्विहते उपद्रवे च।

**व्यसनार्त्त** त्रि० व्यसनेनार्त्तः दैवाद्युपद्रवयुक्ते ।

**व्यसनिन्** त्रि० व्यसनमस्यास्ति इनि । व्यसनयुक्ते कामजादि मद्यपानादिरूपदोषयुक्ते, दैवाद्युपद्रुते च । [ तिषम् ।

**व्यसु** त्रि० विगताः असवो यस्य मृते, 'शेषे जातो भवेद्व्यसुरि'ति ज्यो-

**व्यस्त** त्रि० वि+अस-क्त । व्याकुले, व्याप्ते, विभक्ते च 'व्यस्त,रात्रिं-दिवस्ये'ति कुमारः विपरीते, 'व्यस्तविधिर्विलोम"इति लीलावती । समुदितपदार्थमध्ये एकैकस्मिन् । 'एते व्यस्ता समस्ता वे'ति स्मृतिः । समस्तभिन्ने च भावे-क्त । व्यतिक्रमे न० ।

**व्याकरण** पु० व्याक्रियन्ते व्युत्पाद्यन्ते अर्थवत्तया प्रतिपाद्यन्ते शब्दा येन वि+आ+कृ-ल्युट् । वेदाङ्गे शब्दसाधुताबोधके शास्त्रभेदे, वेदान्तोक्ते नामरूपाभ्यां जगतोविकाशने च ।

**व्याकुल** त्रि० वि+आ+कुल-क । रोगादिना इतकर्त्तव्यतानिश्चयविहीने ।

**व्याकृति** स्त्री० वि+आ+कृ-क्तिन् । भङ्गौ प्रकाशने, व्याकरणे च ।

**व्याकृत** त्रि० वि+आ+कृ-क्त । प्रकाशिते ।

**व्याकोश** (ष) त्रि० वि+आ+कुश(ष) अच् व्यागतः कोशा (षा)त् प्रा० स०वा । प्रफुल्ले 'व्याकोश (ष)न्दीवराक्ष इति तन्त्रम् । [कथने च

**व्याख्या** स्त्री० वि+आ+ख्या-अङ् । विवरणात्मके शब्दसमूहरूपे ग्रन्थभेदे

**व्याख्यात** त्रि० वि+आ+ख्या-क्त । कथिते, विवृते च ।

**व्याघात** त्रि० वि+आ+हन-घञ् । अन्तराये, प्रहारे, अर्थालङ्कारभेदे, सप्रतिबन्धे कथने, प्रतिबन्धभेदे 'व्याघातावधिराशङ्केति खण्डनखण्डखाद्यम् । विष्कम्भादिसप्तविंशतियोगमध्ये योगभेदे च ।

**व्याघ्र** पु० वि+आ+घ्रा-क । जन्तुभेदे, रक्तैरण्डे, करञ्जे च ।

**व्याघ्रदल** पु० व्याघ्रपाद इव दलमस्य शा० । एरण्डवृक्षे ।

**व्याघ्रनख** न० व्याघ्रस्य नखमिव । नखीनामगन्धद्रव्ये व्याघ्रस्य नख इव दलान्यस्य । । स्नुहीवृक्षे । इत० । व्याघ्रनखे ।

**व्याघ्रपाद(द्)** पु० व्याघ्रस्य पाद इव मूलमस्य वा अन्त्यलोपः । विकङ्कतवृक्षे । मुनिभेदे च । [ ह्रूले ।

**व्याघ्रपुच्छ** पु० व्याघ्रस्य पुच्छमिव दलमस्य । एरण्डवृक्षे इत० व्याघ्रस्या-

व्याघ्रादनी स्त्री० व्याघ्रेणाद्यते अद-ल्युट् ङीप् । सिंहतायाम् ।
व्याघ्रास्य स्त्री० व्याघ्रस्येवास्यं यस्य । विड़ाले ।
व्याघ्री स्त्री० व्याघ्रस्तस्याकारः कण्टकोऽस्त्यस्याः अच् गौ० ङीष् । कण्टकारिकायाम् । जातौ ङीष् व्याघ्रयोषिति ।
व्याज पु० वि+अज-घञ् वीभावाभावः । कपटे, वञ्चनाफले अयथाव्यवहारे कारणान्तरेण प्रवृत्तस्य कारणान्तरत्वेनोद्भावनरूपे अपदेशे च ।
व्याजनिन्दा स्त्री० ६त० । कपटनिन्दायाम्, अर्थालङ्कारभेदे च ।
व्याजस्तुति स्त्री० ६त० । कपटस्तुतौ, अर्थालङ्कारभेदे च ।
व्याजोक्ति स्त्री० ६त० छलेनोक्तौ, अर्थालङ्कारभेदे च ।
व्याड पु० वि+अड-अच् । मांसभक्षके व्याघ्रादौ पशौ, सर्पे, इन्द्रे च वञ्चके त्रि० । [स्वाख्ये गन्धद्रव्ये ।
व्याडायुध न० व्याडस्य व्याघ्रस्यायुधं नख इवास्त्यस्य अच् । व्याघ्रन-
व्याडि पु० व्याकरणस्य संग्रहकारके कोषकारके च मुनिभेदे ।
व्याध पु० व्यध-ण । मृगहिंसके जातिभेदे ।
व्याधभीत पु० व्याधाद्भीतः भी क्त । मृगे ।
व्याधि पु० वि+आ+धा-कि । रोगे कुष्ठरोगे च ।
व्याधिघात पु० व्याधिं हन्ति-हन-अण् । आरग्वधे (सोन्दाल)
व्याधिहन्तृ त्रि० व्याधिं हन्ति हन-तृच् । वाराहीकन्दे ।
व्याधित त्रि० व्याधिर्जातोऽस्य तार० इतच् । व्याधियुक्ते ।
व्याधु(धू)त त्रि० वि+आ+धु-धू-वा-क्त । कम्पिते ।
व्यान पु० वि+अन-घञ् । देहस्थे सर्व्वशरीरव्यापके प्राणादिमध्ये वायुभेदे ।
व्यापक त्रि० विशेषेणाप्नोति वि+आप-ण्वुल् । अधिकदेशवृत्तौ, न्यायोक्ते स्वाधिकरणवृत्त्यभावप्रतियोगिनि च पदार्थे । तन्त्रोक्ते सर्व्वाङ्गसम्बन्धिनि न्यासभेदे च ।
व्यापन्न त्रि० वि+आ+पद-क्त । मृते, विपद्युक्ते च ।
व्यापाद पु० वि+आ+पद-घञ् द्रोहचिन्तने । [चिन्तने च ।
व्यापादन न० वि+आ+पद-णिच् ल्युट् । मारणे, परानिष्ट

**व्यापार** पु० वि+आ+पृ-घञ् । 'व्यापारो भावना सैवोत्पादना सैव च क्रिये'त्युक्तायां भावयितुः उत्पादनक्रियायाम् ।

**व्यापारिन्** त्रि० व्यापारोऽस्त्यस्य इनि । व्यापारवति करणादौ व्यवसायवति वणिग्जने पु० ।

**व्यापिन्** त्रि० वि+आप-णिनि । व्यापके । विष्णौ पु० ।

**व्यापृत** त्रि० वि+आ+पृ-क्त । व्यापारयुक्ते ।

**व्याप्त** त्रि० वि+आप-क्त । पूर्णे, न्यायोक्ते व्याप्तिमति पदार्थे यथा वह्नि[व्याप्तो धूमः ।

**व्याप्ति** स्त्री० वि+आप-क्तिन् । ईश्वरस्य ऐश्वर्यभेदे, न्यायमते तदभाववति अविद्यमानत्वरूपे पदार्थे यथा वह्नेर्भाववति जलादौ धूमो नास्तीति धूमादौ वह्नेर्व्याप्तिः ।

**व्याप्य** त्रि० वि-आप-ण्यत् । व्याप्ये । अल्पदेशवृत्तौ पदार्थे अनुमितिसाधने न० ।

**व्याम** पु० वि+अम-घञ् । तिर्य्यक्पार्श्वतोविस्तृतयोर्बाह्वोरन्तराल[परिमाणे ।

**व्यायत** त्रि० वि+आ+यम-क्त । दीर्घे, आयते, दूरे अतिशये च । भावे-क्त । दैर्घ्ये, आयामे च न० ।

**व्यायाम** पु० वि+आ+यम-घञ् । श्रमे, श्रमसाधने व्यापारे, मल्लानां श्रमकारके व्यापारे, पौरुषे, दुर्गसंचारे, विषमे, व्यामपरिमाणे च ।

**व्यायोग** पु० वि+आ+युज-घञ् । दृश्यकाव्यभेदे ।

**व्याल** पु० वि+अड-घञ् डस्य लः । सर्पे । हिंस्रकपशौ, दुष्टगजे च

**व्यालगन्धा** स्त्री० व्यालस्य गन्धो लेशोऽस्याः । काकोल्याम्

**व्यालग्राह** पु० व्यालान् सर्पान् गृह्णाति ग्रह-अण् । (सापुडे) सर्पधारिणि । णिनि । अत्रैव ।

**व्यालजिह्वा** स्त्री० व्यालस्य सर्पस्य जिह्वेव पत्रमस्याः । महासमङ्गायाम्

**व्यालदंष्ट्र** पु० व्यालस्य व्याघ्रस्य दंष्ट्रेव कण्टकमस्य । गोक्षुरे

**व्यालनख** पु० व्यालस्य व्याघ्रस्य नख इव । गन्धद्रव्यभेदे व्यालदलोऽप्यत्र ।

**व्यालपत्रा** स्त्री० व्यालस्य पाद इव पत्रमस्याः । इर्वारौ कर्कटीभेदे

**व्यालम्ब** पु० विशेषेण आलम्बते वि+आ+लबि+अच् । रक्तैरण्डे ।

**व्याघ्रायुध** न० व्याघ्रस्य आयुधं नखइव। नखीनामगन्धद्रव्ये।
व्याघ्रनखाख्ये गन्धद्रव्ये पुं०

**व्यावक्रोशी** स्त्री० वि+अव+क्रुश-णच्। स्वार्थे ऽण्। परस्पराक्रोशे।

**व्यावहारी** स्त्री० वि+अव+हृ-णच् स्वार्थे अण् ङीप्। परस्परहरणे

**व्यावहासी** स्त्री० वि+अव+हस-णच् स्वार्थे ऽण्। परस्परहसने

**व्यावृत्त** त्रि० वि+आ+वृत-क्त। वृत्ते, निवृत्ते च 'व्यावृत्तगतिरुद्याने,
इति। कुमारः।

**व्यावृत्ति** स्त्री० वि+आ+वृत-क्तिन्। निवारणे।

**व्यास** पुं० व्यस्यति वेदान् वि+अस-घञ्। पराशरसुते मुनिभेदे, समासादिसमानार्थके विग्रहवाक्ये, विस्तारे, गोलवृत्तस्य मध्यस्थरेखायाम् "यएवं श्रावयेद्विप्रो स ब्रह्मन्! व्यास उच्यते" इत्युक्ते पुराणपाठके विप्रे च।

**व्यासक्त** त्रि० वि+आ+षन्ज-क्त आसक्ते तत्परे, संलग्ने च

**व्यासङ्ग** पुं० वि+आ+षन्ज-घञ्। कार्य्यान्तरत्यागेनैकपरत्वे आसक्तौ च।

**व्यासिद्ध** त्रि० वि+आ+षिध-क्त। राजाज्ञादिना बद्धे निषिद्धे च

**व्याहत** त्रि० वि+आ+हन-क्त। व्याघातयुक्ते।

**व्याहार** पुं० वि+आ+हृ घञ्। वाक्ये उक्तौ। [भेदेषु च।

**व्याहृति** स्त्री० वि+आ+हृ-क्तिन्। उक्तौ, भूर्भुवःस्वरादिषु सप्तसु मन्त्र-

**व्युत्क्रम** पुं० वि+उद्+क्रम-घञ्। क्रमवैपरीत्ये, व्यतिक्रमे च

**व्युत्थान** न० वि+उद्+स्था-ल्युट्। विरोधकरणे, स्वातन्त्र्यकरणे, प्रतिरोधने, नृत्यभेदे विशेषेण उत्थाने च। वि+उद्+स्था-क्तिन्। व्युत्थितिरप्यत्र स्त्री०।

**व्युत्पत्ति** स्त्री० वि+उद्+पद-क्तिन्। विशेषेण उत्पत्तौ, शास्त्रजन्ये शब्दार्थज्ञानादिधर्म्याद्ये संस्कारभेदे, शब्दानामर्थावबोधकशक्तौ च।

**व्युत्पन्न** त्रि० वि+उद्+पद-क्त। व्युत्पत्तियुक्ते शब्दे, तत्संस्कारयुक्ते पुरुषे च

**व्युदस्त** त्रि० वि+उद्+अस-क्त निराकृते।

**व्युदास** पुं० उद्+अस घञ्। निराकरणे।

व्युष त्यागे अद० चु० उभ० सक० सेट् । व्युषयति ते अवुव्युषत् त
व्युष्ट त्रि० वि+उष-क्त । दग्धे, वि+वस-क्त इडभावः । पर्य्युषिते, प्रभाते च । फले, दिवसे च न० ।
व्युष्टि स्त्री० वि+वस-क्तिन् । समृद्धौ, स्तुतौ, फले च ।
व्युस त्यागे दिवा० पर० सक० सेट् । व्युस्यति अव्युसत् अव्युसीत्
व्यूढ त्रि० वि+वह-क्त । निवेशनविशेषेण स्थिते सैन्यादौ व्यूढां द्रुपदपुत्रेणे"ति गीता । संहते 'व्यूढोरस्को वृषस्कन्ध इति रघुः । पृथुले, परिहिते विवाहिते च त्रि० व्यूढा काचन कन्यके'ति प्रबोधचन्द्रोदयः ।
व्यूढकङ्कट त्रि० व्यूढःपरिहितः कङ्कटःवर्म येन । सन्नद्धकवचे
व्यूत त्रि० वि+वे-क्त । तन्तुभिर्ग्रथिते ।
व्यूति स्त्री० वि+वे-क्तिन् । वस्त्रादिवपनकर्म्मणि ।
व्यूह पु० वि+ऊह-घञ् । समूहे निर्म्माणे च । सम्यक्तर्के, देहे सैन्ये युद्धार्थं सैन्यसन्निवेशनविशेषे च ।
व्यूहपार्ष्णि पु०६त० । युद्धार्थमवस्थानविशेषेण स्थितसैन्यानां पश्चाद्भागे ।
व्ये स्यूतौ वृतौ च भ्वा० उभ० सक० अनिट् यजा० । व्ययति ते अव्यासीत् अव्यास्त विव्याय विव्यतुः ।
व्यो अव्य० वे-डो । लौहे, वीजे च ।
व्योकार पु० व्यो+कृ अण् । लौहकारके ।
व्योमकेश पु० व्योम्नि केशो यस्य । शिवे महादेवे ।
व्योमकेशिन् पु० व्योमाकारः केशोऽस्त्यस्य इनि । महादेवे ।
व्योमचारिन् पु० व्योम्नि चरति चर-णिनि । विहगे, देवे, पवनचलादौ च ।
व्योमधूम पु० व्योम्नः धूमइव नीलत्वात् । मेघे ।
व्योमन् न० व्ये-मनिन् पु० । आकाशे, (आव) अभ्रके, जले च
व्योममण्डल न० व्योम मण्डलमिव । मण्डलाकारे आकाशे ६त० । पताकायाम् । [ ध्वजमिते वायोर्निपाते च ।
व्योममुद्गर पु० व्योम्नोमुद्गर इव आघातहेतुत्वात् । गगनात् अकस्मा

व्रीमयान न० ७त० । आकाशगमनयोग्ये वाहने विमाने ।
व्रीष न० वि+उष-अच् । शुण्ठीमरिचपिप्पलीरूपे त्रिकटुनि
व्रज गतौ भ्वा० पर० सक० सेट् । व्रजति अव्राजीत् ।
व्रज संस्कारे गतौ च चु० उ०सक०सेट् । 'व्राजयति ते अविव्रजत् त
व्रज पु० व्रज-घञर्थे क । समूहे, गोष्ठे, पथि, मथुरासमीपस्थे देश-
भेदे च ।
व्रजनाथ पु० ६त० । श्रीकृष्णे व्रजपालादयोऽप्यत्र ।
व्रजमोहन पु० व्रजान् व्रजस्थान् मोहयति मुह-णिच्-ल्यु । श्रीकृष्णे ।
व्रजवर पु० व्रजानां वरः प्रार्थनीयः । श्रीकृष्णे ।
व्रजवल्लभ पु० ६त० । श्रीकृष्णे ।
व्रजाङ्गना स्त्री० ६त० । व्रजस्य स्त्रियां गोप्याम् ।
व्रज्या स्त्री० व्रज-क्यप् । पर्य्यटने, गमने, जिगीषोर्युद्धार्थप्रयाणे च
व्रण शब्दे भ्वा० पर० अक०सेट् । व्रणति अव्राणीत् अव्रणीत्
व्रण अङ्गक्षतौ अद० चु०उ०सक०सेट् । व्रणयति ते अवव्रणत् त
व्रण पु०न० चु०व्रण-अच् । क्षते ।
व्रणकृत् पु० व्रणं करोति कृ-क्विप् । भल्लातके, व्रणकारके त्रि०
व्रणद्विष् पु० व्रणं द्वेष्टि द्विष-क्विप् । आम्लपर्यष्टिकायाम् । व्रणघा-
तके त्रि० ।
व्रणहृ पु० व्रणं हन्ति हन-ड । एरण्डवृक्षे । गुडूच्याम् स्त्री० ।
व्रणाश पु० व्रणमश्नाति अश-अण् । गोले, गन्धरसे वटवृक्षे च
व्रत न० व्रज-घ जस्य तः । भक्षणभेदे, पुण्यसाधने उपवासादि नियम-
भेदे च ।
व्रतति(ती) स्त्री० प्रत-अति पृ० वा ङीप् । लतायां विस्तारे च
व्रतसंग्रह ऽ० ६त० । व्रतग्रहणार्थं व्रतदीक्षायाम् ।
व्रतादेश पु० ६त० । उपवासादिव्रतोपदेशे ।
व्रतिन् पु० व्रतमस्यास्ति इनि । व्रतधारके, यजमाने च ।
व्रश्च छेदे तु०प सक० वेट् । वृश्चति अव्रश्चीत् अव्राक्षीत् ।

व्रश्चन पु० वृश्च्यतेऽनेन वृश्च-ल्यु । (केनि) स्वर्णादिच्छेदनार्थे अस्त्रे । भावे ल्युट् । छेदने न० ।

व्रात पु० वृ-अतच् पृ० । समूहे ।

व्रातीन त्रि० व्रातेन संघेन जीवति । संघजीविनि ।

व्रात्य न० व्रातात् समूहात् च्यवति यत् । अध्ययनहीने, संस्कारहीने, जातिमात्रोपजीविनि, 'अत ऊर्द्धं त्रयोऽप्येते यथाकालमसंस्कृता । सावित्रीपतिता व्रात्या' इति मनुः ।

व्रात्यस्तोम पु० व्रात्ययोग्यः स्तोमः । यज्ञभेदे ।

व्री वृतौ क्र्या० प्वा० पर०सक० अनिट् । व्रिणाति-व्रीणाति अव्रैषीत्

व्री गतौ दिवा०आत्म०सक० अनिट् । व्रीयते अव्रेष्ट-निष्ठा तस्य नः । व्रीणः ।

व्रीड क्षेपे सक०लज्जायाम् अक-दि० आ०सेट् । व्रीड्यते अव्रीडिष्ट

व्रीड पु० व्रीड-घञ् । लज्जायाम् । अ । तत्रैव स्त्री० ।

व्रीण वधे वा चु०उभ० पक्षे भ्वा०पर० सक०सेट् । व्रीणयति ते व्रीणति अविव्रिणत् त अव्रीणीत् ।

व्रीहि पु० व्री-हि किच्च । धान्यमात्रे, आशुधान्ये च ।

व्रीहिक त्रि० व्रीहिरस्त्यस्य ठक् । धान्यवति । इनि व्रीहीत्यप्यत्र

व्रीहिकाञ्चन पु० व्रीहिषु काञ्चनं तद्रूपमस्त्यस्य अच् । मसूरे

व्रीहिपर्णी स्त्री० व्रीहीणामिव पर्णान्यस्याः ङीप् । (शालपान) क्षुपभेदे ।

व्रीहिमय पु० व्रीहिप्रचुरः मयट् । व्रीहिनिर्मिते हविर्द्रव्ये चर्व्वादौ ।

व्रीहिराजिक पु० व्रीहिषु राजते राज-अच् ततः स्वार्थे ठ । (काङ्गनि) धान्यभेदे ।

व्रुड संवरणे सक० संघाते अक० तु०कु० पर०सेट् । व्रुडति अव्रुडीत् ।

व्रूश वधे वा चु०उभ०पक्षे भ्वा०पर०स०सेट् । व्रूशयते अवुव्रूशत् त व्रूशति अव्रूशीत् ।

व्रैहेय त्रि० व्रीहीणां भवनं क्षेत्रं ढक् । व्रीहिभवनयोग्ये क्षेत्रे

व्लीँ गतौ वरणे च क्र्या० प्वा० पर० सक० अनिट् । व्लीनाति व्लिनाति अव्लैषीत् ।

श

शं न० शो-डं । मङ्गले । महादेवे, शस्त्रे च पु० ।
शंयु त्रि० शमस्यास्य शम्+युस् । शुभान्विते ।
शंव त्रि० शमस्यास्य शम्+व । शुभयुक्ते, मूषलाग्रस्थलौहे वज्रे च पु०
शंवर न० शं वृणोति शम्+वृ-अच् । जले ।
शंसा स्त्री० शन्स-अ । वाक्ये, वाञ्छायां, प्रशंसायाञ्च ।
शंसित त्रि० शन्स-क्त । निश्चिते, हिंसिते, कथिते स्तुते च ।
शंस्य त्रि० शन्स-ण्यत् । हिंस्ये, स्तुत्ये वाच्ये, च ।
शक लाभे अक० संशये सक० भ्वा० आ० सेट् इदित् । शङ्कते अशङ्किष्ट ।
शक सामर्थ्ये अक० दि० उभ० सेट् । शक्यति ते अशाकीत्-अशकीत् अशकिष्ट । [प्वादिरित्यन्ये तेन अशकदित्येव ।
शक सामर्थ्ये स्वा० प० अक० अनिट् । शक्नोति अशकत्-अशाक्षीत् पु-
शक पु० शक-अच् । जातिभेदे, देशभेदे, स्वराज्यावधि वत्सराङ्क प्रवर्त्तके नृपभेदे तदीये वत्सरे च । कलियुगे शककर्त्तृषु युधिष्ठिरः विक्रमादित्यः शालिवाहनश्चेति त्रयोमताः ।
शकट पु० न० शक-अटन् । यानभेदे, असुरविशेषे, स्वल्पार्थे ङीप् । क्षुद्रशकटे स्वार्थे कन् । शकटिका तत्रैव ।
शकटहन् पु० शकटमसुरभेदं हतवान् हन भूते क्विप् श्रीकृष्णे
शकटाह्वा स्त्री० शकटाकारत्वात् तदाह्वा यस्याः । रोहिण्यां नक्षत्रे तस्याः शकटाकारपञ्चतारात्मकत्वेन तथात्वम् । [(आंव) च न०।
शकल पु० न० शक-कलच् । खण्डे एकभागे, त्वचि वल्कले, शल्के ।
शकलिन् पु० शकलं शल्कमस्यास्ति इनि । मत्स्ये ।
शकाब्द पु० शककर्त्तृनृपस्य वर्षो अब्दः । शकप्रवर्त्तकनृपराज्यावधि वत्सरे तत्संख्यायाञ्च ।
शकार पु० मदमूर्खताभिमानी दुष्कुलैश्वर्यसंयुक्तः । सोऽयमनूढ़ा-

भ्राता राज्ञः श्यालः शकार, इत्युक्तलक्षणे राज्ञोऽनूढभार्य्याभ्रातरि ।

शकारि पु० शकानां म्लेच्छजातिभेदानामरिः । विक्रमादित्ये ।

शकुन न० शक-उनन् । शुभाशुभसूचकनिमित्ते-वाक्स्पन्दनकाकादिदर्शनादौ पक्षिमात्रे, पक्षिभेदे, गृध्रे च पु० ।

शकुनज्ञ त्रि० शकुनं जानाति ज्ञा-क । निमित्ताभिज्ञे, ज्येष्ठ्यां स्त्री० ।

शकुनि पु० शक-उनि । पक्षिमात्रे, चिल्लपक्षिणि, सुबलराजपुत्रे दुर्य्योधनमातुले च । श्यामापक्षिणि स्त्री० ङीप् ।

शकुनिप्रपा स्त्री० ६त० । पक्षिणां पानीयशालायाम् ।

शकुन्त पु० शक-उन्त । पक्षिमात्रे, भासपक्षिणि, कीटभेदेच ।

शकुन्तला स्त्री० शकुन्तैः लायते ला घञर्थे-क । मेनकागर्भजातायां विश्वामित्रसुतायाम् सा च जातमात्रा मात्रोत्सृष्टा शकुन्तपालिता यस्मात् कण्वमुनिना प्रतिपालिता दुष्मन्तेनैव गान्धर्व्वविधिना व्यूढेति भारतम् ।

शकुन्तलात्मज पु०६त० । भरतनृपे ।

शकुन्ति पु० शक-उन्ति । पक्षिमात्रे, भासपक्षिणि च ।

शकुल पु० शक-उलच् । मत्स्यभेदे (शउल) ।

शकुलाक्षी पु० शकुलस्याक्षीव पत्र् समा० ङीप् । गण्डदूर्व्वायाम् ।

शकुलादनी स्त्री० शकुलैरद्यते अद-ल्युट् । (कट्की) शाकभेदे जटामांस्यां, जलपिप्पल्यां, कट्फले च । [मत्स्ये ।

शकुलार्भक पु० शकुलस्यार्भक इव क्षुद्रत्वात्तदाकारत्वाच्च । (गडुइ)

शकृत् स्त्री० शक-ऋतन् । विष्ठायाम् । [ ङीप् ।

शकृत्करि पु० शकृतं किरति कृ-इन् । गवादीनां वत्से वत्सायां स्त्री०

शकृद्द्वार न० ६त० । मलद्वारे अपानस्थाने ।

शक्व(क)र पु० शक-क्विप् कृ-अच् कर्म० शक-करप् वा । वृषे । चतुर्द्दशाक्षरपादके छन्दोभेदे, नदीभेदे मेखलायां च स्त्री० ङीप् । शक्वरीत्यपि चतुर्द्दशाक्षरपादके छन्दसि ।

शक्त त्रि० शक-क्त । समर्थे ।

शक्ति स्त्री० शक-क्तिन् । सामर्थ्ये स्त्रीदेवतायाञ्च । न्यायाद्युक्तकारण-

निष्ठे कार्य्योत्पादनयोग्ये धर्म्मभेदे, शब्दनिष्ठे अर्थबोधकताक्षमे वृत्तिभेदे अस्त्रभेदे च ।

शक्तिग्रह पु० ६त० । शक्तेः अर्थबोधकताक्षपवृत्तेर्ज्ञाने ।

शक्तिग्राहक पु० शक्तिं गृह्णाति ग्रह-ण्वुल् । कार्त्तिकेये शक्तिं ग्राहयति बोधयति ग्रह-णिच् ण्वुल् । 'शक्तिग्रहं व्याकरणोपमानात् कोषाप्तवाक्यात् व्यवहारतश्च वाक्यस्य शेषाद्विवृतेर्वदन्ती'त्याद्युक्ते शक्तिबोधके हेतौ ।

शक्तिधर पु० शक्तिं धरति धृ-अच् । कार्त्तिकेये सामर्थ्यधरे त्रि० 'शक्तिधरः कुमारः' इति रघुः शक्तिभृदादयोऽप्यत्र ।

शक्तिपर्ण पु० शक्तिरिव पर्णं यस्य । सप्तपर्णे ।

शक्तिपाणि पु० शक्तिः पाणौ यस्य । कार्त्तिकेये शक्तिहस्तादयोऽप्यत्र ।

शक्तिहेतिक पु० शक्तिर्हेतिः प्रहरणास्त्रं यस्य कप् । शक्त्यायोद्धरि ।

श(स)क्तु पु० श(स)ञ्च-तुन् । (छातु) भृष्टयवादिचूर्णे ।

शक्तुफला(ली) स्त्री० शक्तव इव सूक्ष्माणि फलान्यस्याः वा ङीप् । शमीवृक्षे ।

शक्ति(क्तृ) पु० वशिष्ठसुनेः पुत्रे पराशरस्य पितरि सुनौ ।

शक्नु त्रि० शक-नु । प्रियभाषिणि । [ यितुं योग्ये, वाक्ये च ।

शक्य त्रि० शक-यत् । शक्तियुक्ते शक्त्या बोध्येऽर्थे, समर्थनीये, साध-

शक्यतावच्छेदक त्रि० ६त० । शक्यपदार्थस्य धर्म्मं येन धर्मेण अर्थस्य शब्दसङ्केतविषयता तस्मिन् धर्मे । यथा घटशब्दः घटत्ववन्तं पदार्थं बोधयति अतस्तद्धर्मो घटत्वं घटशब्दस्य शक्यतावच्छेदकम् ।

शक्र पु० शक-रक् । इन्द्रे, कुटजवृक्षे, अर्जुनवृक्षे, जेष्ठानक्षत्रे, पेचके च ।

शक्रगोप पु० शक्रं शक्रधनुर्गोपायति समवर्णत्वात् । इन्द्रगोपे ।

शक्रज पु० शक्रात् जायते जन-ड । काके । इन्द्रजन्ये त्रि० शक्रजातादयोऽप्यत्र । [ राक्षसे, इन्द्रजेतरि त्रि० ।

शक्रजित् पु० शक्रं जितवान् जि-क्विप् तुक् च । रावणात्मजे मेघनादे

शक्रधनुस् न० ६त० । मेघलाञ्छने शक्रधनुराकारे सूर्य्यकिरणसम्पर्कजे
पदार्थभेदे (रामधनुक) ।
शक्रध्वज पु० ६त० । भाद्रशुक्लद्वादश्यां पूज्ये इन्द्रदैवते ध्वजाकारे पदार्थे ।
शक्रनन्दन पु० ६त० । अर्ज्जुने । इन्द्रानन्दकेऽपि ।
शक्रपर्य्याय पु० शक्रस्य पर्य्यायो नाम नाम यस्य शाक० । कुटजवृक्षे
६त० । इन्द्रस्य वाचकशब्दे ।
शक्रपादप पु० ६त० । देवदारुवृक्षे । [तत्रैव ।
शक्रपुष्पी स्त्री० शक्रस्येव पुष्पमस्याः ङीप् । अग्निशिखावृक्षे स्वार्थे कन् ।
शक्रभवन न० ६त० । स्वर्गे । शक्रावासादयोऽप्यत्र ।
शक्रभूभवा स्त्री० शक्ररूपभुवि भवति भू—अच् । इन्द्रवारुण्याम् ।
शक्रमातृ स्त्री० शक्रस्य मातेव । भार्य्याम् । ६त० । इन्द्रजनन्याम् ।
शक्रमूर्द्धन् पु० शक्रस्येव शिखावान् मूर्द्धा यस्य । वल्मीके । ६त० ।
इन्द्रमस्तके शक्रशिर आदयोऽप्यत्र ।
शक्रवल्ली स्त्री० शक्रप्रिया वल्ली । इन्द्रवारुण्याम् । [योऽप्यत्र
शक्रवाहन पु० शक्रं वाहयति वह णिच्-ल्यु । मेघे इन्द्रवाहनाद-
शक्रवीज न० शक्रस्य कुटजस्य वीजम् । इन्द्रयवे ।
शक्रशाखिन् पु० शक्रनामकः शाखी । कुटजवृक्षे ।
शक्रसारथि पु० ६त० । इन्द्रसारथौ मातलौ ।
शक्रसुत पु० शक्रस्य सुतः । वालिनामके वानरराजे ।
शक्रसुधा स्त्री० शक्रस्य सुधेव । पालङ्क्याम् ।
शक्रसृष्टा स्त्री० ६त० । हरीतक्याम् ।
शक्राख्य पु० शक्रस्येवाख्या यस्य । पेचके । [न्याम्
शक्राणी स्त्री० शक्रस्य पत्नी ङीप आनुक् च । पुलोमजायामिन्द्रप-
शक्राशन न० शक्रेणाश्यते अश—ल्युट् । भङ्गायाम् ।
शक्राशन पु० शक्रं तन्नामानमश्नुते अश—ल्यु । कुटजवृक्षे ।
शक्रोत्थान न० शक्रस्य तद्ध्वजस्य उत्थानम् । शक्रध्वजस्योत्थाने,
तदुपलक्षिते उत्सवे च । ६त० शक्रोत्सवोऽप्यत्र ।

शङ्कर पु० शं करोति कृ-अच् । महादेवे कल्याणकरे त्रि० । शिवपत्न्यां स्त्री० ङीप् । [ कर्पूरे ।

शङ्करावास पु० ६त० । कैलासाचले शङ्करस्यावास इव शुभ्रत्वात् ।

शङ्का स्त्री० शकि-अ । त्रासे, वितर्के, संशये च ।

शङ्कित त्रि० शङ्का जातास्य तार० इतच् । भीते संदिग्धे वितर्किते च ।

शङ्कु पु० शकि-उण् । स्थाणौ, मत्स्यभेदे, शल्यास्त्रे, कीलके, दशकोटिसंख्यायां, तत्सङ्ख्याते, महादेवे, कलुषे, पत्रशिराजाले, मेढ्रे, नखीनामद्रव्ये, छायापरिमाणार्थे काष्ठादिनिर्मिते, 'अर्काङ्गुला तु स्वच्छया काष्ठाद्यङ्गुलमूलिका । शङ्कुसंज्ञा भवेदि'त्युक्ते कीलभेदे च ।

शङ्कुकर्ण पु० शङ्कुरिव कर्णोऽस्य । गर्द्दभे ।

शङ्कुतरु पु० शङ्कुयोग्यस्तरुः । शालवृक्षे शङ्कुवृक्षादयोऽप्यत्र ।

शङ्कुला स्त्री० शकि-उलच् । उत्पलपत्रिकायाम् पूगच्छेदकास्त्रभेदे (जांति) शङ्कुलाखण्ड इति सिद्धान्तकौमुदी ।

शङ्ख पु० न० शम-ख । स्वनामख्याते समुद्रजाते पदार्थे, ललाटास्थ्नि, निधिभेदे, नखीनामगन्धद्रव्ये, पार्श्वसमीपस्थे-अस्थ्नि नागभेदे, हस्तिदन्तमध्ये, दशनिखर्वसंख्यायां, तत्संख्याते च ।

शङ्खक न० शङ्खस्य विकारः वुन् । शङ्खजाते वलयाकारे पदार्थे ।

शङ्खकार पु० शङ्खं तद्विकारं वलयाकारं पदार्थं करोति कृ-अण् । वर्णसङ्करजातिभेदे (शांखारी)

शङ्खचूर्ण न० ६त० । शङ्खजाते चूर्णे ।

शङ्खद्राविन् पु० शङ्खं द्रावयति द्रु-णिच्-णिनि । अम्लवेतसे ।

शङ्खधरा स्त्री० धृ-अच् ६त० । हिलमोचिकायाम् ।

शङ्खध्म पु० शङ्खं धमति ध्मा-क । शङ्खवादके । क्विप् । शङ्खाध्मा इत्यप्यत्र । [ तत्र ङीप्

शङ्खनख पु० शङ्खस्य नख इव । क्षुद्रशङ्खे (जोङ्गड़ा) स्त्रीत्वमपि

शङ्खपुष्पी स्त्री० शङ्ख इव पुष्पमस्याः ङीप् । (शङ्खाली) वृक्षे ।

शङ्खभृत् पु० शङ्खं बिभर्त्ति भृ-क्विप् तुक् च । विष्णौ ।
शङ्खमुख पु० शङ्ख इव मुखमस्य । कुम्भीरे ।
शङ्खिका स्त्री० शङ्खोऽस्त्यस्याः ठन् । (चोरकाचका) क्षुपभेदे ।
शङ्खिन् पु० शङ्ख+अस्त्यर्थे इनि । विष्णौ, समुद्रे च ।
शङ्खिनी स्त्री० शङ्खोऽस्त्यस्याः इनि । चोरपुष्प्याम्, श्वेतचुकायां, यव-
तिक्तायां, स्त्रीभेदे, उपदेवताभेदे, (शाँकचुन्नी) शङ्खवत्यां स्त्रियाञ्च ।
शङ्खिनीफल पु० शङ्खिन्या इव फलमस्य । शिरीषवृक्षे ।
शङ्खिनीवास पु० ६त० । शाखोटकवृक्षे ।
शच मतौ भ्वा० आ०स०सेट् इदित् । शञ्चते, अशञ्चिष्ट ।
शच वाचि भ्वा० आ० सक० सेट् । शचते अशचिष्ट ।
शचि (ची) स्त्री० शच-इन् वा ङीप् । इन्द्रपत्न्याम् ।
शचीपति पु० ६त० । इन्द्रे । शचीभर्त्रादयोऽप्यत्र ।
शट (ठ) श्लाघायां चु० आ० अक० सेट् । शाट(ठ)यते अशीशट(ठ)त ।
शट शादे गतौ भेदे च भ्वा० पर० सक० रोगे अक० सेट् । शटति ।
अशाटीत्-अशटीत् ।
शट पु० शटति रुजति शट-अच् । अम्ले, सिंहकेशरे, जटायाञ्च स्त्री० ।
शटि (टी) स्त्री० शट-इन् वा ङीप् । (वन आदा) ख्यातनामख्याते ओ-
षधिभेदे । [ अशठीत्
शठ बधे सक० कैतवे क्लेशे च अक० भ्वा० पर० सेट् । शठति अशाठीत्
शठ आलस्ये चु० पर० अक० सेट् । शाठयति ते अशीशठत् त
शठ दुष्टवचने अद० चु० उभ० सक० सेट् । शठयति ते अशशठत् त
शठ न० शठ-अच् । तगरे, कुङ्कुमे, लौहे च । धुस्तूरे, मध्यस्थपुरुषे
च पु० । धूर्त्ते त्रि० ।
शठता स्त्री० शठस्य भावः तल् । शाठ्ये वञ्चनायाञ्च ।
शम्बा स्त्री०शठ-अच् अबि-अच् कर्म्म० सक० । कम्बचायाम् ।
शड संघाते रोगे च अक० भ्वा० प०सेट् इदित् । शण्डति अशण्डिष्ट ।
शण दाने भ्वा० पर० सक० सेट् । शणति अशाणीत् अशणीत्

शण पु० शण अच्। स्वनामख्याते क्षुपभेदे। [ रवन्ति फले।

शणघण्टिका स्त्री० शणस्य घण्टेव इवार्थे कन्। शणपुष्पजाते घण्टा

शणपर्णी स्त्री० शणस्येव पर्णान्यस्याः ङीप्। अशनपर्ण्याम्।

शणपुष्पी स्त्री० शणस्येव पुष्पमस्याः ङीप् (झनझने) वनशणे स्वार्थे कन्। तत्रैव।

शणसूत्र न० शणाज्जातं सूत्रम्। शणजाते जाले।

शणालुक पु० शण इव इवालुकः। आरेवतवृक्षे (शोणालु)

शणिका स्त्री० शणस्तत्पुष्पमस्त्यस्याः ठन्। शणपुष्प्याम्।

शण्ड न० शडि अच्। पद्मादिसमूहे, नपुंसके, वृषे च।

शण्डिल पु० शडि इलच्। शाण्डिल्यस्य पितरि मुनिभेदे।

शण्ढ पु० शण-ढ तस्य नेत्त्वम्। अन्तःपुररक्षके कृत्रिमक्लीबे।

शत न० शो-डतच्। स्वनामख्यातसंख्यायाम्, तत्संख्याते बहुसंख्यायां च। स्वार्थे कन्। तत्रैव न०।

शतक त्रि० शतं परिमाणमस्य कन्। शतसंख्यायुक्ते।

शतकुम्भ पु० शतं कुम्भा यत्र। स्वर्णखनिपर्वतभेदे।

शतकोटि पु० शतं कोटयोऽग्राणि यस्य। वज्रे शतगुणिता कोटिः शाक०। शतगुणितकोटिसंख्यायां स्त्री०।

शतक्रतु पु० शतं क्रतवोऽस्य। इन्द्रे।

शतग्रन्थि स्त्री० शतं ग्रन्थयोऽस्य। दूर्वायाम्।

शतघ्नी स्त्री० शतं हन्ति हन-टक्। अस्त्रभेदे, वृश्चिकाल्यां, करञ्जे च

शततम त्रि० शतस्य पूरणः तमप्। शतसंख्यापूरणे।

शततारा स्त्री० शतभिषक् तारा शाक०। शतभिषानक्षत्रे।

शतदन्तिका स्त्री० शतं दन्ता इव सन्त्यस्य ठन्। नागदन्त्याम्

शतद्रु पु० शतधा द्रवति कु-द्रु-मि०। नदीभेदे। [ तत्प्रकारे अव्य०।

शतधा स्त्री० शतं ग्रन्थीन् धत्ते धा-क। दूर्वायाम्। शत+धाच्। श०

शतधामन् पु० शतं धामानि यस्य। विष्णौ।

शतधार पु० शतं धारा अग्राणि यस्य। वज्रे शतधारायुक्ते त्रि०।
'वसोः पवित्रमसि शतधारमि'ति श्रुतिः।

शतधृति पु० शतं धृतयोऽस्य । इन्द्रे, ब्रह्मणि स्वर्गे च ।
शतपत्र न० शतं अङ्गानि पत्राण्यस्य । पद्मे ।
शतपत्री स्त्री० शतं पत्राणि दलान्यस्याः ङीप् । (सेओती) पुष्पवृक्ष-भेदे स्वार्थे कन् । तत्रैव । [कयन्यभेदे ।
शतपथ पु० शतं पन्थानो यत्र अच् समा० । यजुर्वेदीयब्राह्मणात्म-
शतपथिक त्रि० शतपथं वेत्त्यधीते वा ठक् । शतपथब्राह्मणात्मकग्रन्था-ध्यायिनि ।
शतपद न० शतं पदानि यत्र । ज्योतिषोक्ते नक्षत्रपादानुसारेण नाम-करणोपयोगिप्रथमवर्णसूचके चक्रभेदे । शतं पादाः यस्याः पा-द्भावः समा० ङीपि पद्भावः । कीटभेदे (कानकोटार) स्त्री० ।
शतपद्म न० शतदलयुक्तं पद्मम् । शतदलकमले, श्वेतपद्मे च ।
शतपर्व्वन् पु० शतं पर्वाणि ग्रन्थयो यस्य । वंशे, इक्षुभेदे च कटुकायां वचायां दूर्वायां च स्त्री० । कन् । तात्र, यवे च ।
शतपाद् स्त्री० शतं पादा अस्याः पाद्भावः । कीटभेदे (कानकोटार)
शतपादिका स्त्री० शतं पादा मूलान्यस्याः । काकोल्याम् ।
शतपुष्पा स्त्री० शतं पुष्पाणि यस्याः । (सुल्फा) शाकभेदे (मौरी) क्षुपभेदे च । कन् । तत्रैव ।
शतप्रसूना स्त्री० शतं प्रसूनानि यस्याः । (सुल्फा) शाके ।
शतप्रास पु० शतं प्रासा इव फलानि यस्य । करवीरवृक्षे ।
शतभिषज् स्त्री० शतं भिषज इव तारा: यत्र । शततारात्मके अश्वि-न्यादिषु चतुर्विंशे नक्षत्रे । शतभिषाप्यत्र स्त्री० ।
शतभीरु स्त्री० शतं बहवो वियोगिनो भीरवो यस्याः ब० स० । मल्लिका-याम् तद्दर्शने हि वियोगिनां कामोद्दीपनात् ततो भीरुत्वम् ।
शतमख पु० शतं मखा यज्ञा यस्य । इन्द्रे ।
शतमन्यु पु० शतं मन्यवो यज्ञा यस्य, शते दैत्येषु मन्युः क्रोधो वा यस्य । इन्द्रे ।
शतमान पु० न० शतेन मीयते मि-ल्युट् । पले, तत्परिमिते च ।
शतमारिन् पु० शतं मारयति मृ-णिच् णिनि । वैद्ये, वशिष्टचिकित्सके ।

शतमुखी पु० शतं सुखानि यस्याः ङीप्। संमार्जन्याम्। शतमुख-युक्ते त्रि०। [शतायाञ्च।

शतमूली। स्त्री० शतं मूलान्यस्याः ङीप्। दूर्वायां, खनामख्यातायां

शतयष्टिक पु० शतं यष्टयो गुच्छा यस्य। शतगुच्छके हारभेदे।

शतरुद्रीय न० शतं रुद्रा देवता यस्य। यजुर्वेदोक्ते रुद्राध्याये।

शतरूपा स्त्री० शतं रूपाण्यस्याः। ब्रह्मणः पत्न्याम्।

शतवीर्य्या स्त्री० शतं वीर्य्याणि यस्याः ५ब०। श्वेतदूर्वायाम्।

शतवेधिन् पु० शतं विधति विध-णिनि। अम्लवेतसे।

शतसहस्र न० शतगुणितं सहस्रम्। शाक०। लक्षसंख्यायाम्।

शतसाहस्र त्रि० शतं सहस्राणि परिमाणमस्य अण् उत्तरपदवृद्धिः। लक्षसंख्याते।

शतह्रदा स्त्री० शतं ह्रादाः शब्दा यस्याः पृ० ह्रस्वः। विद्युति।

शताक्षी स्त्री० शतमक्षीणीव पुष्पाण्यस्याः अच् समा० ङीष्। शतपुष्पायाम् दुर्गायाञ्च।

शताङ्ग पु० शतमङ्गान्यवयवा यस्य। रथे, तिनिशवृक्षे च।

शतानन्द पु० शतमानन्दयति अण्। गोतमपुत्रे अहल्यागर्भजे मुनिभेदे। शतजनानन्दके त्रि०।

शतानीक पु०शतमनीकानि यस्य। व्यासशिष्ये मुनिभेदे। शतसैन्यवति त्रि०

शतार न०शतमाराण्यस्य। वज्रे। [पुरुष" इति श्रुतेः।

शतायुस् त्रि० शतमायुर्यस्य कालोऽस्य। शतवर्षमितवयस्के 'शतायुर्वै

शतावरी स्त्री० शतमावृणोति आ+वृ अच् गौ० ङीष्। शतमूल्याम् इन्द्रभार्य्यायाम्।

शतावर्त्त पु० शतमावर्त्ता यस्य। विष्णौ शतधा वर्त्तते णिनि। तत्रैव।

शताह्वा स्त्री० शतं शतमूली शतपुष्पा वेति आह्वा यस्याः उत्तरलोपः। शतमूल्यां, शतपुष्पायाञ्च।

शतिक त्रि० शतेन क्रीतः ठन्। शतेन क्रीते पदार्थे।

शत्य त्रि० शतेन क्रीतः यत्। शतसंख्यातद्रव्येण क्रीते।

शत्रु पु॰ शद-त्रुन्। रिपौ, राज्ञां विजयामन्तरस्थे नृपे, ज्योति शोक्तौ लग्नावधि षष्ठस्थाने, कामादिषु च। शातके त्रि॰

शत्रुघ्न पु॰ शत्रून् हन्ति हन-क। दशरथात्मजे सुमित्रागर्भजे लक्ष्मणानुजे।

शद शातने भ्वा॰ पर॰ सक॰ अनिट्। शीयते अशदत्। शत्स्यति

शद गतौ भ्वा॰ पर॰ सक॰ अनिट् शीयते अशात्सीत्।

शनकावलि (ली) स्त्री॰ शनैः कायति कै-क मु॰ तेषामावलिर्यत्र वा ङीप् गजपिप्पल्याम्।

शनपर्णी स्त्री॰ शणस्येव पर्णान्यस्याः पृ॰ णस्य नः। कटुकायाम्

शनि पु॰ शो-अनि किच्च। सूर्यपुत्रे छायागर्भजाते ग्रहभेदे, तत्स्वामिकदिने च।

शनिवार पु॰ शनिस्वामिको वारः। सूर्यादिवारमध्ये सप्तमे वारे

शनैश्चर पु॰ शनैश्चरति चर अच्। शनिग्रहे तस्य ग्रहाणां मध्ये सर्वोपरिकक्षस्थितत्वात् बहुकालेनैकराशिभोगात् मृदुगतित्वम्।

शनैस् अव्य॰ शण डैसि पृ॰ नुक् च। मन्दे, अशैघ्र्ये च।

शन्स हिंसायां स्तुतौ कथने च भ्वा॰ परः सक॰ सेट्। क्त्वा वेट्। शंसति अशंसीत्।

शप आक्रोशे वा भ्वा॰ पक्षे दिवा॰ उभः सक॰ अनिट्। शपति ते शप्यति ते अशापसीत्।

शपथ पु॰ शप-अथन्। सत्यताकरणाय दिव्यभेद करणे यथा। एतत् यदि मिथ्या स्यात् तदा मे एतदनिष्टं स्यादित्यादि

शपन पु॰ शप-ल्युट्। शपथे।

शप्त त्रि॰ शप-क्त। अभिशापग्रस्ते। उलपाख्ये तृणभेदे पु॰।

शफ न॰ शम-अच् पृ॰ मस्य फः। गवादीनां खुरे, वृक्षमूले च।

शफर पु॰ स्त्री॰ शफं राति रा-क।(पुंटी)मत्स्यभेदे स्त्रीत्व पक्षे ङीप्।

शब्द शब्दकरणे अ॰चु॰उभ॰ सक॰ सेट्। शब्दयति ते अशशब्दत् त

शब्द पु॰शब्द-घञ्। ध्वन्यात्मके, वर्णात्मके च श्रोत्रेन्द्रियग्राह्ये आकाशादिस्थे गुणभेदे।

शब्दग्रह पु॰ शब्दं गृह्णाति ग्रह–अच् । श्रोत्रे इन्द्रिये शब्दार्थे च ६त॰। शब्दस्थाने। [शब्दकर्मे ग्रहापि ।
शब्दब्रह्मन् न॰ शब्दात्मकं ब्रह्म । वेदात्मके, स्फोटात्मके च निर्व्वं
शब्दभेदिन् पु॰ शब्दानुसारेण भिनत्ति लक्ष्यम् भिद–णिनि । बाणभेदे ।
शब्दवेधिन् पु॰ शब्दानुसारेण विध्यति लक्ष्यं विध–णिनि । बाणभेदे, अर्ज्जुने च । [ इत्तिरूपे सामर्थ्ये ।
शब्दशक्ति स्त्री॰ ६त॰ । शब्दानामर्थावबोधकतारूपे अभिधालक्षणादौ
शब्दानुशासन न॰ अनुशिष्यतेऽनेन अनु+शास–ल्युट् ६त॰ । शब्द-साधुताज्ञापके व्याकरणे । [सादौ अलङ्कारे ।
शब्दालङ्कार पु॰ शब्दमात्रकृतोऽलङ्कारः । अलङ्कारशास्त्रप्रसिद्धेऽनुप्रा-
शब्दित त्रि॰ शब्द–क्त । आहूते ।
शम शान्तौ अक॰ शान्तीकरणे सक॰ दि॰ शमा॰ पर॰ सेट् । शाम्यति अशमत्–अशमीत् । क्त्वा वेट् ।
शम आलोचने चु॰उ॰सक॰ सेट् । शामयति–शमयति ते अशीशमत्–त
शम पु॰ शम–घञ् । शान्तौ अन्तरिन्द्रियदमने ।
शमथ पु॰ शम–अथन् । शान्तौ ।
शमन पु॰ शमयति शम–णिच्–ल्यु । लोकानां पुण्यापुण्यफलदातृ-त्वेन दण्डकारके यमे । शम–णिच्–भावे ल्युट् । शान्तीकरणे न॰।
शमनस्वसृ स्त्री॰ ६त॰ । यमुनायाम् ।
शमल न॰ शम–कलच् । विष्ठायाम् ।
शमि(मी)स्त्री॰ शम–इन् वा ङीप् । (सांइ)वृक्षभेदे (सुं टि)शिम्बायाञ्च।
शमिन् त्रि॰ शाम्यति शम–णिनि । शान्ते ।
शमीक पु॰ शम–ईकक् । मुनिभेदे ।
शमीगर्भ पु॰ शमीगर्भ आधारत्वेनास्त्यस्य अच् । वह्नौ, विप्रे च
शमीधान्य न॰शमी शिम्बैव धान्यम् । शिम्बात्मके माषमुद्गादौ धान्ये।
शमीपत्री स्त्री॰ शम्या इव पत्त्रमस्याः ङीप् । लज्जालुवृक्षे
शमीर पु॰ अल्पा शमी अल्पार्थे रः 'क्वचित् स्वार्थिका अपि प्रत्ययाः प्र-कृतितो लिङ्गवचनान्यतिवर्त्तन्ते' इति भाष्योक्तेः पुंस्त्वम् । क्षुद्रायां शम्याम् ।

शम्पा स्त्री० शं पाति पा-क । विद्युति ।

शम्पाक पु० शं शिवं पाके फले यस्य । आरग्वधे ।

शम्ब गतौ भ्वा० सक० सेट् । शम्बति अशम्बीत् ।

शम्ब पु० शम्ब अच् । वज्रे मूषलाग्रस्थितलौहे लौहकाञ्च्याम् । अनुलोमकर्षणे, दरिद्रे च ।

शम्बर न० शम्ब-अरन् । जले धने, व्रते, चित्रे च । मृगभेदे दैत्यभेदे, मत्स्यभेदे, पर्वतभेदे, युद्धे, चित्रकवृक्षे, लोध्रे, अर्जुनवृक्षे च पु० । श्रेष्ठे त्रि०

शम्बरकन्द पु० शम्बरः श्रेष्ठः कन्दो यस्य । वाराहीकन्दे ।

शम्बरचन्दन न० ६त० । शम्बरपर्वतजाते चन्दनभेदे ।

शम्बरसूदन पु० शम्बरमसुरं सूदयति हिनस्ति सु०सूद-ल्यु । कामदेवे ।

शम्बरारि पु० ६त० । कामदेवे शम्बररिप्वादयोऽप्यत्र ।

शम्बरी स्त्री० शम्बरं जलं बाहुल्येनास्त्यस्य अच् गौरा० ङीष् । आखुपर्ण्याम् ।

शम्बल पु०न० शम्ब-कलच् । कूले, पाथेये, मत्सरे च ।

शम्बाकृत त्रि० शम्बं कृष्टमनुलोममाक्रियते शम्ब+कर्षणार्थे डाच्+कृ-क्त । अनुलोमेन द्विरावृत्ते कृष्टे क्षेत्रे ।

शम्बु(म्बू) पु०स्त्री० शम्ब-उन् ऊ वा । जलशुक्तौ (शामुक) गजकुम्भान्तभागे च । रामायणप्रसिद्धे शूद्रतापसे, शम्बुः दैत्यभेदे च पु० ।

शम्भ त्रि० शमस्त्यस्य शम्+भ । कल्याणयुक्ते ।

शम्भल पु० शम्भं कल्याणदायकं तीर्थं लाति-ला क । ग्रामभेदे यत्र कल्की भविष्यति तस्मिन् । कुट्टिन्यां स्त्री० गौरा० ङीष्

शम्भु पु० शम्+भू-डु । महादेवे ।

शम्भुतनय पु० ६त० । गणेशे, कार्त्तिकेये च शम्भुसुतादयोऽप्यत्र

शम्भुप्रिया स्त्री० ६त० । आमलक्याम् दुर्गायाञ्च ।

शम्भुवल्लभ न० ६त० । श्वेतपद्मे । महादेवप्रिये त्रि० ।

शम्या स्त्री० शम-यत् टाप् । युगकीलके ।

शय पु० शी-अच् । हस्ते, सर्पे, निद्रायां, शय्यायां, पणे च ।

शयथ पु० शी-अथच् । अजगरसर्पे, मृत्यौ, वराहे, मत्स्ये च निद्राशीले त्रि० ।

शयन न० शी-ल्युट् । निद्रायाम् शय्यायां, मैथुने च ।

शयनीय न० शी-अनीयर् । शय्यायाम् स्वार्थे कन् । तत्रैव ।

शयनैकादशी स्त्री० ६त० । आषाढ़शुक्लैकादश्याम् ।

शयालु त्रि० शी-आलुच् । निद्राशीले । अजगरे, कुक्कुरे च पु० ।

शयित त्रि० शी कर्त्तरि क्त । निद्रिते । भावे-क्त । निद्रायां न०

शयु पु० शी-उ । अजगरे सर्पे । उनन् । शयुनोऽप्यत्र ।

शय्या स्त्री० शी-क्यप् । खट्वायाम् ।

शर न० शॄ-अच् । जले । बाणे दधिदुग्धादिसारे, इषुसाधने तृणभेदे च पु० ।

शरकाण्ड पु० ६त० । शरस्तम्बे, तन्निर्मितकाण्डे च ।

शरज न० शरात् दधिदुग्धसारात् जायते जन-ड । हैयङ्गवीने । शरवणे-जाते कार्त्तिकेये पु० ।

शरजन्मन् पु० शरवणे जन्म यस्य । कार्त्तिकेये ।

शरट पु० शॄ-अटन् । कृकलासे, कुसुम्भशाके च ।

शरण न० शॄ-ल्युट् । गृहे, रक्षके, रक्षणे, वधे, घातके च प्रसारण्यां स्त्री० टाप् ।

शरणागत त्रि० शरणमागतः आ+गम-क्त । शरणापन्ने ।

शरणापन्न त्रि० शरणमापन्नः आ+पद-क्त । शरणमागते ।

शरणार्थिन् त्रि० शरणमर्थयते अर्थ-णिनि । शरणकामे ।

श(स)रणि(णी) स्त्री० शॄ(सृ)-अनि वा ङीप् । पथि, ङीबन्तस्तु जयन्त्याञ्च ।

शरण्य त्रि० शरणाय साधुः यत् । शरणागतत्राणकरणयोग्ये ।

शरत्कामिन् पु० शरदि कामयते कम णिनि । कुक्कुरे ।

शरत्पद्म न० शरदिव शुभ्रं पद्मम् । श्वेतपद्मे ।

शरत्पर्व्वन् न० ७त० । कोजागरपूर्णिमानिमित्तोत्सवे ।

शरद् स्त्री० शॄ-अदि । वत्सरे, आश्विनकार्त्तिकमासात्मके ऋतौ च ।

शरधि पु॰ शरा धीयन्तेऽत्र धा-कि । तूणे ।
शरपुङ्खा स्त्री॰ शरस्येव पुङ्खा यस्य । नीलीसदृशाकृतौ क्षुपभेदे ।
शरभ पु॰ शॄ-अभच् । 'अष्टपादूर्द्ध्वनयन ऊर्द्ध्वपादचतुष्टय' इत्युक्तलक्षणे मृगभेदे, करभे, वानरभेदे, उष्ट्रे च ।
शरभू पु॰ शर शरवणे भवति भू-क्विप् । कार्त्तिकेये ।
शरमय त्रि॰ शरस्य विकारः मयट् । शरजाते पदार्थे ।
श(स)रयु(यू) स्त्री॰ शॄ(सृ)-अयु वा ऊङ् । अयोध्यानिम्नवाहिन्यां नद्याम् । [वृक्षभेदे च ।
श(स)रल त्रि॰ शॄ(सृ)-अलच् । सुगमे, अकुटिलचित्ते (सरल)
शरवणोद्भव पु॰ शरवणे उद्भवः उत्पत्तिस्थानमस्य । कार्त्तिकेये
शरव्य न॰ शरवे वाणक्षिप्त्यै हितं शरु+यत् । लक्ष्ये, शरेण वेधनायोद्देश्ये ।
शराटि(डि)(लि) स्त्री॰ शरमनुलक्ष्य अटति अट-इन् पृ॰ टस्य ड ल वा । (शराल) पक्षिभेदे ।
शराभ्यास पु॰ ६त॰ । वाणमोचनशिक्षायाम् ।
शरारु त्रि॰ शॄ-आरु । हिंस्रे । [धनुषि ।
शरारोप पु॰ शराः आरोप्यन्तेऽत्र आ+रुह-णिच पङ् च अच् ।
शराव पु॰ शरं दध्यादिसारमवति अव-अण् । मृण्मये पात्रभेदे, (शरा) कुडवद्वयपरिमाणे च ।
शरावती स्त्री॰ शराः सन्त्यस्याम् मतुप् मस्य वः पूर्व्वदीर्घश्च । नदीभेदे
शराश्रय पु॰ ६त॰ । तूणे ।
शरासन पु॰ शराः अस्यन्तेऽनेन अस ल्युट् । धनुषि शराणामासनम् । तूणे ।
शरी स्त्री॰ शीर्य्यते शॄ-ई । एरकातृणे ।
शरीर न॰ शॄ-ईरन् । प्रतिक्षणं क्षीयमाणे देहे ।
शरीरक पु॰ शरीरं कायति आत्मत्वेनाभिमन्यते कै-क । जीवे । स्वार्थे वुन् । शरीरकोऽप्यत्र ।
शरीरज पु॰ शरीरात् जायते जन-ड । रोगे देहजातमात्रे त्रि॰

शरीरावरण न० शरीरमावृणोति आ+वृ-युच्। देहव्यापिनि चर्मणि। देहावरके त्रि० लुप्ट्। देहाच्छादने न०
शरीरिन् पु० शरीरमात्माभिमानाश्रयत्वेनास्त्यस्य इनि। जीवे
शरु पु० शृ-उन्। क्रोधे, वज्रे, बाणे, आयुधे च।
शरेष्ट पु० शृणाति कामिनं शृ-अच् शरः कामःतस्य इष्टइष-क्त। आम्रे।
शर्करक पु० शर्करायाः रसः ष्यञ् इद्रूभावः शर्करः रस इव दायति मधुरत्वात् कै-क। मधुरजम्बीरे।
शर्करजा स्त्री० शर्करात् जायते जन-ड। सिताखण्डे।
शर्करा स्त्री० शृ करन् कस्य नेत्त्वम्। खण्डविकारे (चिनि) उपलखण्डे, कर्परखण्डे च। शर्करा अस्त्यस्य मतुप् तस्य लुक्। शर्करावति देशे, रोगभेदे, शकले च।
शर्कराचल पु० दानार्थं कल्पिते शर्करामये पर्व्वते।
शर्कराधेनु स्त्री० दानार्थं कल्पिते शर्करामये धेन्वाकारे स्तूपे
शर्करावत् त्रि० शर्कराः सन्त्यस्मिन् मतुप् मस्य वः। शर्करायुक्तदेशे
शर्करिक त्रि० शर्कराः सन्त्यस्य ठन्। शर्करायुक्तदेशे इलच्। तत्रैव
शर्द्ध पु० शृध-घञ्। अपानवायूत्सर्गे। ल्युट्। तत्रैव न०।
शर्द्धञ्जहा पु० शर्द्धमपानवायूत्सर्गं जहाति हा-खश्मुम् च। माषे
शर्ब हिंसायां गतौ च भ्वा०प०स०सेट्। शर्बति अशर्बीत्।
शर्मद त्रि० शर्म ददाति दा-क। सुखदायके। विष्णौ पु०।
शर्मन् शृ-मनिन्। सुखे, तद्वति त्रि० ब्राह्मणोपाधौ पु०।
शर्मरा स्त्री० शर्म-राति रा-क। दारुहरिद्रायाम्। सुखदायके त्रि०
शर्य्याति पु० वैवस्वतमनोः पुत्रभेदे।
शर्व्व हिंसे भ्वा० पर० सक० सेट्। शर्वति अशर्वीत्।
शर्व्व पु० शर्व-अच्। महादेवे।
शर्व्वर पु० शर्व-अरन्। कामदेवे तमसि न०। सन्ध्यायां च
शर्व्वरी स्त्री०शृ-वनिप् ङीप् वनो र च। रात्रौ हरिद्रायां,
शर्व्वला स्त्री० शर्व-घञ् तं शर्वं लाति ला-क। तोमरास्त्रे

शर्वाणी स्त्री० शर्वस्य पत्नी ङीप् आनुक् च । भवान्याम्
शल चालने भ्वा०आ०सक०सेट् । शलते अशलिष्ट ।
शल गतौ भ्वा० पर० सक० सेट् ज्वलादि० । शलति अशालीत्
शल श्लाघायां चु० आ०सक०सेट् । शालयते अशीशलत ।
शल वेगे भ्वा० पर० सक० सेट् । शलति अशालीत् ।
शल न० शल-अच् । शल्लकीलोम्नि (सजारूकांटा)
शलभ पु० शल अभच् । कीटभेदे पतङ्गे ।
शलल न० स्त्री० शल-कलच् । शल्लकीलोम्नि (साजारूकांटा) स्त्रीत्वे
गौ० ङीष् ।
शलाका स्त्री० शल-आकन् । शल्ये, मदनवृक्षे (मयना) शारिकायां,
शल्लक्याम्, शरे, आलेख्यतूलिकायां, अस्थ्नि च ।
शलाकापरि अव्य० अव्ययी० शलाकासाधनक्रीड़ायां पराजये
शलाटु त्रि० शल-आटु । अपक्वफले मूलभेदे । विल्वे च पु० ।
शलालु पु० शल आलुच् । सुगन्धिद्रव्यभदे ।
शलालुक त्रि० शलालुना क्रीतं कन् । शलालुद्रव्येण क्रीते पदार्थे
शल्क न० शल क कस्य नेत्त्वम् । खण्डे, वृक्षवल्कले, मत्स्यत्वचि च
(आंस) ।
शल्कल न० शल कलन् कस्य नेत्वम् । मत्स्यवल्कले, वृक्ष त्वचि च
शल्कलिन् पु० शल्कलमस्त्यस्य इनि । मत्स्ये ।
शल्किन् पु० शल्कमस्त्यस्य इनि । मत्स्ये ।
शल्भ प्रशंसायां भ्वा०आ०सक०सेट् । शल्भते अशल्भिष्ट ।
श(शा)ल्मलि पु० शल-मलच् स्वार्थे इन् इञ् वा । शाल्मलिवृक्षे
(शिमुल) ।
शाल्मलि स्त्री० शल-मलिन् स्वार्थे इञ् वा ङीप् । (शिमुल) वृक्षे
शल्य न० शल-यत् । वाणे, तोमरे, खण्डे, वंशकविकायां कीलके च
शल्यक पु० शल्यमिव कायति कै-क । मदनवृक्षे (मयना)
शल्यलोमन् न० शल्यमिव लोम । शल्लकीलोम्नि ।
शल्ल गतौ भ्वा० पर०सक०सेट् । शल्लति अशल्लीत् ।

शल्ल न० शल्ल-अच्। त्वचि, भेके पु०। स्वार्थे कन् त्वचि न० शल्यादौ
पु०। (सजारु) पक्षिभेदे स्त्री० गौ० ङीप्।

शल्लकद्रुम पु० शल्लकीद्रुम इव स्वादुः। तिन्दुके।

शल्व शल-व। शाल्वदेशे।

शव विकारे गतौ च भ्वा०पर० सक०सेट्। शवति-अशावीत्-अशवीत्

शव पु० न०। शव-अच्। मृतदेहे गतप्राणे देहे। जले न०।

शवकाम्य पु० शवं काम्यति शव+काम्यच्। कुक्कुरे।

शवयान न० शववाह्यं यानम्। मृतदेहवाहनार्थे तल्पे।

शवर न० शव-अरन्। म्लेच्छजातिभेदे। पानीये, शिवे च पु० तत्-
पत्न्यां स्त्री० ङीप्।

शवरथ पु० शववाहनार्थं रथः। शववाहनार्थे याने।

शवरलोध्र पु० शवरप्रियः लोध्रः। श्वेतलोध्रे।

शवरालय पु० ६त०। शवरावासस्थाने।

शवल पु० शव-कलन्। कर्वूरवर्णे तद्वति त्रि०। तद्वर्णवत्यां धेनौ स्त्री०।

शश प्लुतगतौ भ्वा०पर० सक० सेट्। शशति। अशाशीत्-अशशीत्।

शश पु० शश-अच्। मृगभेदे (खरगोश) स्वार्थे कन्। तत्रैव।

शशधर पु० शशं मृगभेदं धरति धृ-अच्। चन्द्रे, कर्पूरे च शश-
भृदादयोऽप्यत्र। [योऽप्यत्र

शशलाञ्छन पु० शशः मृगभेदो लाञ्छनं यस्य चन्द्रे, शशाङ्काद-

शशबिन्दु पु० राजभेदे, विष्णौ च।

शशशिम्बिका स्त्री० शश शिम्बीतया कायति कै-क। जीवन्त्याम्

शशस्थली स्त्री० शशवासयोग्या स्थली। अन्तर्वेद्याम् देशभेदे

शशाण्डुलि पु० अडि-उलि ६त०। कर्कटीभेदे।

शशाद पु० शशमत्ति अद-अण्। श्येनविहगे, ल्यु। तत्रैव।

शशिकला स्त्री० ६त०। चन्द्रस्य षोडशभागे।

शशिकान्त न० शशी कान्तो यस्य। कुमुदे। चन्द्रकान्तमणौ पु०

शशिन् पु० शशोऽस्त्यस्य इनि। चन्द्रे।

शशिप्रभ न० शशिना प्रभा यस्य। कुमुदे ६त० ज्योत्स्नायाम्।

शशिभूषण पु० शशी भूषणं यस्य । महादेवे, शशिमकुटनादयोऽप्यत्र
शशिलेखा स्त्री० शशिनो रेखा रस्य सः । चन्द्रकलायाम् । शशिनो लेखेव अमृतासदत्वात् । गुडूच्याम् ।
शशिवाटिका स्त्री० शशिनोवाटीव इवार्थे । पुनर्नवायाम् ।
शशिशेखर पु० शशी शेखरं यस्य । महादेवे शशिमूर्द्धादयोऽप्यत्र
शशोर्ण न० ६ त० । शशस्य लोम्नि ।
शश्वत् अव्य० शश–वति । नैरन्तर्ये पुनः पुनरित्यर्थे च ।
शष बधे भ्वा० प० सक०सेट् । शषति अशाषीत् अशषीत् ।
शष्कुल पु० शष–कुलच् कस्य नेत्त्वम् । (डहरकरमचा) इत्ते अपूपभेदे, कर्णरन्ध्रे, 'अवलम्बितकर्णशष्कुली'ति नैषधम् मत्स्यभेदे च दन्तमध्योऽप्ययमत्रार्थे ।
शष्प न० शष–पक् । बालतृणे घासे । प्रतिभाक्षये पु० ।
शस बधे भ्वा०प०स०सेट्, क्त्वा वेट् । शसति अशासीत् अशसीत्
शंस आशिषि भ्वा०आ०सक० इदित् सेट् । प्रायेणाङ्पूर्वः । आशंसते आशंसिष्ट ।
शस स्वप्ने अदा०स्वपा प०अक० सेट् इदित् । शंस्ति अशंसत्
शसन न० शस बधे ल्युट् । यज्ञार्थं पशुहनने ।
शस्त न० शन्स क्त । कल्याणे तद्वति, स्तुते, प्रशस्ते च त्रि० ।
शस्त्र न० शस–ष्ट्रन् । लौहे, खड्गादौ अस्त्रे च स्वार्थे कन् । तत्रैव
शस्त्रकोषतरु पु० शस्त्रकोषस्य हितस्तरुः । महापिण्डीद्रुमे
शस्त्रजीविन् पु० शस्त्रेण जीवति णिनि । शस्त्राजीविनि ।
शस्त्रपाणि पु० शस्त्रं पाणौ यस्य । शस्त्रधारके आततायिभेदे 'शस्त्रपाणिर्धनापहः' इति स्मृतिः । [नकारे शिल्पिभेदे
शस्त्रमार्ज पु० शस्त्रं मार्ष्टि मृज अण् । (शिकलकर) शस्त्रमार्ज्जे
शस्त्राभ्यास पु० ६ त० । शस्त्रप्रयोगशिक्षायाम् ।
शस्त्रायस शस्त्रयोग्यमयः अच्समा० । लौहभेदे (इष्पात) ।
शस्त्रिन् त्रि० शस्त्रमस्त्यस्य इनि । शस्त्रविशिष्टे ।
शस्त्री स्त्री० स्वल्पं शस्त्रं ङीप । छुरिकायाम् ।

**शष्प** न० शस–प । बालतृणे घासे ।

**शस्य** न० शस–यत् । वृक्षादीनां फले । 'शस्यं क्षेत्रगतं प्रोक्त'मित्युक्ते क्षेत्रस्थे धान्यादौ च । [ शस्यनाशके त्रि० ।

**शस्यध्वंसिन्** पु० शस्यं ध्वंसयति ध्वन्स–णिच् णिनि । तुम्बवृक्षे

**शस्यमञ्जरी** स्त्री० ६त० । अभिनवधान्यादिशीर्षे ।

**शस्यशूक** न० । धान्यादेः शीर्षे ।

**शस्यसम्बर** पु० शस्यं संवृणोति सम्+वृ–अच् । शालवृक्षे ।

**शस्याक** पु० शस्यमकति अक–उण् । क्षुद्रशमीवृक्षे (सेगुन) वृक्षे च

**शाक** पु०न० शक–घञ् । पत्रपुष्पादौ वृक्षभेदे पु० शक्तौ शिरीषवृक्षे, स्वराज्यावधि वत्सरप्रवर्त्तके राजभेदे, तदीये वत्सरे, च पु० हरितक्यां न० । श्यति सामर्थ्यं शोक मस्य नेत्त्वम् । 'मूल पत्रकरीराग्र फलकाण्डाधिरूढकम् । त्वक् पुष्पं कवकञ्चैवं शाकं दशविधं स्मृत'मित्युक्तेषु वृक्षादीनां पत्रादिषु न० 'अशाकभुक् सोऽरुगित्युद्भटः ।

**शाकचक्रिका** स्त्री० शाकेषु मध्ये चक्रिका । चिञ्चायाम् ।

**शाकट** न० शकटाय हितम् अण् । शकटसम्बन्धियुगादौ । स्त्री शालवृक्षे, धववृक्षे च पु० ।

**शाकटायन** पु० व्याकरणकारके मुनिभेदे ।

**शाकटिक** पु० शकटेन चरति ठञ् । शकटेन गन्तरि ।

**शाकटीन** पु०शकटः परिमाणमस्य खञ् । विंशतितुलापरिमाणे

**शाकतरु** पु० शाकाख्यः तरुः । (सेगुण) वृक्षे । शाकवृक्षादयोऽप्यत्र

**शाकपत्र** पु० शाकः पत्रमस्य । शिग्रुवृक्षे ।

**शाकबालेय** पु० बलये हितम् ढक् शाकप्रधानो बालेयः । ब्रह्मयष्टिकायाम् ।

**शाकम्भरी** स्त्री० शाकैर्बिभर्त्ति भृ–खच् मुमच । "भरिष्यामि सुराः ! शाकैरावृष्टेः प्राणधारकैः । शाकम्भरीति विख्यातिमि"ति चण्ड्युक्तायाम् दुर्गायाम् ।

**शाकयोग्य** पु० शाके तद्भक्षणे योग्यः । धन्याके ।

शाकराज पु० शाकेषु राजते अच् । शाकानां वा राजा टच् । वास्तूकशाके

शाकबिल्व पु० शाकोऽपि बिल्व इव । वार्त्ताकौ स्वार्थे कन् तत्रैव

शाकवीर पु० शाकेषु वीरः वीर्य्यदायकत्वात् । वास्तूकशाके ।

शाकशाकट न० शाकस्य क्षेत्रं शाकटच् । शाकक्षेत्रे । शाकटिनच् । अत्रार्थे ।

शाकश्रेष्ठ पु० शाकेषु श्रेष्ठः । वास्तूकशाके जीवन्त्यां वार्त्ताकौ स्त्री ।

शाकाङ्ग न० शाकस्य तद्व्यञ्जनस्याङ्गमुपयोगि । मरिचे ।

शाकाम्ल न० शाकमेवाम्लम् । वृक्षाम्ले ।

शाकाम्लभेदन न० शाकरूपम् अम्लं भिनत्ति भिद ल्यु । चुक्रे (चुकोपालङ्ग) ।

शाकालाबु स्त्री० शाकप्रधानालाबुः । अलाबुभेदे ।

शाकिनी स्त्री० शाकोऽस्त्यस्याः इनि । शाकभवनयोग्यायां भूमौ, देवीसहचरीभेदे च ।

शाकुन पु० शकुनं शुभाशुभसूचकं निमित्तमधिकृत्य कृतो ग्रन्थः अण् । शकुनज्ञानसाधने ग्रन्थे (काकचरित) ।

शाकुनिक पु० शकुनेन पक्षिवधादिना जीवति ठञ् । पक्षिघातके ।

शाकुन्तलेय पु० शकुन्तलाया अपत्यं ढक् । दुष्मन्तात्मजे शकुन्तलागर्भजे भरते नृपे ।

शाक्त त्रि० शक्तिर्देवताऽस्य अण् । तन्त्रोक्ते शक्तिदेवतोपासके

शाक्तीक पु० शक्तिः प्रहरणमस्य ईकक् । शक्त्या योद्धरि ।

शाक्य पु० शक-घञ् तत्र साधुः यत् । बुद्धे ।

शाक्यमुनि पु० शाक्यो मुनिः । बुद्धभेदे ।

शाक्यसिंह पु० शाक्यवंशे सिंह इव । बुद्धभेदे ।

शाख व्याप्तौ भ्वा० पर० सक० सेट् चङि न ह्रस्वः । शाखति अशाखीत्

शाखा स्त्री० शाख-अच् । हस्तिकापृष्ठे स्कन्धानुजे गणभेदे, ग्रन्थपरिच्छेदे, सर्गस्थानीये ग्रन्थांशभेदे, वृक्षस्यावयवभेदे च (डाल) पक्षान्तरे, राहौ, लतायाम्, अन्तिके वेदैकदेशे च स्त्री०

शाखाकण्ट पु० शाखाव्यापी कण्टः कण्टको यस्य । स्नुहीवृक्षे

शाखानगर न० शाखेव नगरम् । मूलनगरसमीपस्थे क्षुद्रपुरे शाखा-
    पुरादयोऽप्यत्र ।

शाखामृग पु० शाखास्थो मृगः पशुः वानरे ।

शाखाम्ला स्त्री० शाखायामम्ला । वृक्षाम्ले ।

शाखारण्ड पु० शाखायां वेदशाखायां रण्डः तद्विहित कर्म्मानाचर-
    णात् । स्वशाखात्यागेन कर्मकर्त्तरि ।

शाखाल पु० शाखाः बाहुल्येन सन्त्यस्य लच् । वानीरवृक्षे ।

शाखाशिफा स्त्री० शाखारूढा शिफा मूलम् शाक० । वटादीनां शा-
    खाजाते मूले । शिफामारभ्य शाखा । गुडूच्यादि लतायाम् ।

शाखिन् पु० शाखाऽस्त्यस्य इनि । वृक्षे । वेदैकदेशवति, नृपभेदे,
    म्लेच्छभेदे च ।

शाखोट पु० शाखा-व्याप्तौ ओटन् (श्याओड़ा) वृक्षे स्वार्थे कन् ।

शाङ्खिक पु० शङ्खस्तद्विकारवलयनिर्म्माणं शिल्पमस्य ठञ् । जाति-
    भेदे (शांखारी) ।

शाङ्गुष्ठा स्त्री० श्यति शो-क शः अङ्गुष्ठ इव यस्याः । गुञ्जायाम् ।

शाट पु० शट-घञ् । वस्त्रे । स्त्रीत्वमपि गौ० ङीष् ।

शाटक पु० न० शट-ण्वुल् । वस्त्रे स्त्रीत्वमपि टाप् ।

शाटयायन पु० ऋषिभेदे, तेन प्रोक्तम् अण् । प्रकृतहोमकर्म्मणि वैगु-
    ण्यसमाधानार्थं विहिते होमभेदे न० ।

शाठ्य न० शठस्य भावः ष्यञ् । शठतायाम् ।

शाड श्लाघायां भ्वा०आत्म० सक० सेट् । शाडते अशाडिष्ट

शाण न० शणेन निर्वृत्तम् अण् । शणसूत्रनिर्मिते वस्त्रादौ । शण-
    घञ् । (कष्टिपाथर) कषपाषाणे स्वर्णादीनां निकर्षणेन तीक्ष्णी-
    करणयन्त्रभेदे । [ शिल्पिनि ।

शाणाजीव पु० शाणमाजीवति आ+जीव-अण् । अस्त्रतीक्ष्णताकारके

शाणी पु० शण-इण् । पट्टद्रव्ये शणेन निर्वृत्ता इञ् वा ङीप् । श-
    णनिर्म्मिते पट्टिकावस्त्रे छिद्रवस्त्रे च ।

शाणित त्रि॰ शण-णिच् क्त । तीक्ष्णीकृते ।

शाण्डिल्य पु॰ शण्डिलस्यापत्यम् यञ् । गोत्रप्रवर्त्तके भक्तिशास्त्रकारके मुनिभेदे, तत्प्रियत्वात् विल्वे वह्निभेदे च । [धुस्तूरे पु॰ ।

शात न॰ शो-क्त । सुखे, सङ्गते, छिन्ने, तनौ, दुर्बले, निशिते च त्रि॰

शातकुम्भ न॰ शतकुम्भे भवः अण् । हिरण्ये । धुस्तूरे करवीरे च पु॰ । [स्तूरे पु॰ ।

शातकौम्भ न॰ शतकुम्भे भवम् अण् द्विपदवृद्धिः । हिरण्ये धु-

शातन न॰ शो-णिच्-तुक्च ल्युट् । तनूकरणे, विनाशने च 'जायते पक्षशातनमि'ति मीमांसा ।

शातभीरु पु॰ शाता दुर्बलाः पान्था भीरवो यस्याः । मल्लिकाभेदे

शातला स्त्री॰ शातं कार्श्यं लाति ला-क । (चामकषा) वृक्षे ।

शात्रव पु॰ शत्रुरेव स्वार्थेऽण् । रिपौ । तस्य भावः संघो वा अण् । वैरे, रिपुसमूहे च न॰ ।

शाद पु॰ शद-घञ् । कर्द्दमे, बालतृणे च ।

शाद्वहरित पु॰ शादेन हरितस्तद्वर्णयुक्तः । शाद्वले देशे ।

शाद्वल पु॰ शादाः सन्त्यत्र ड्वलच् । बहुबालतृणयुक्ते देशे ।

शान भेदने भ्वा॰ उभ॰ सक॰ सेट् स्वार्थे सन् । शीशांसति ते अशीशांसीत् अशीशांसिष्ट ।

शान पु॰ शान-अच् । अस्त्रादीनां तीक्ष्णताकारके यन्त्रभेदे ।

शानी स्त्री॰ शान-इन् ङीप् । इन्द्रवारुण्याम् ।

शान्त त्रि॰ शम-क्त । शमयुक्ते, अभियुक्ते च शम-णिच्-क्त त्रि॰ शान्तिं गमिते त्रि॰ । निर्वेदस्थायिभावके रसभेदे पु॰ । लोमपादराजकन्यायां, ऋष्यशृङ्गपत्न्यां, शमीभेदे च स्त्री॰ ।

शान्तनव पु॰ शान्तनोरपत्यम् अण् । भीष्मे 'भीष्मः शान्तनव इति तर्पणमन्त्रः ।

शान्तनु पु॰ द्वापरयुगभवे चन्द्रवंश्ये प्रतीपराजपुत्रे नृपभेदे ।

शान्ति स्त्री॰ शम-क्तिन् । कामक्रोधादिजये, विषयेभ्यो मनसो निवारणे, उपद्रवनिवारणे, निवारणे च ।

शान्तिक त्रि० शान्तये हितम् ठक् । शान्तिकारके होमादौ ।

शाप पु० शप–घञ् । 'अनिष्टं भूयादि'त्येवम् आक्रोशे, शपथे च

शापास्त्र पु० शाप एवास्त्रं यस्य । मुनौ ।

शाब्दबोध पु० शब्देन निर्वृत्तः अण् । अन्वयबोधे शब्दज्ञानजन्ये पदार्थस्मृतिद्वारके ज्ञानभेदे । [ व्याकरणशास्त्राभिज्ञे ।

शाब्दिक पु० शब्दं शब्दसाधुताज्ञापकं शास्त्रं वेत्त्यधीते वा ठक् ।

शामित्र न० शम–णिच् इत्रच् । पशुबन्धनस्थाने । [आलादौ ।

शाम्बरी स्त्री० शम्बरेण निर्वृत्ता अण् ङीप् । मायायाम् इन्द्र

शाम्बविक त्रि० शम्बुः पण्यमस्य ठक् । शाङ्खिके । (शांखारी)

शा(म्बु)म्बूक पु० श(म्बु)म्बूक+स्वार्थे अण् । शम्बुके (शामुक)

शाम्भव पु० शम्भोरयम् अण् । गुग्गुलौ, कर्पूरे, विषभेदे, शम्भुपुत्रे, मल्लिकाभेदे, देवदारुणि च । शिवसम्बन्धिनि, तदुपासके च त्रि०। दुर्गायां स्त्री० 'शाम्भवी कुपिता तस्मै'ति तन्त्रम् ।

शा(सा)यक पु० शो(षो)–ण्वुल् । वाणे, खड्गे च ।

शार दौर्बल्ये अद० चु०उभ०सक० सेट् । शारयति–ते अशशारत्

शार न० शार–अच्, शृ–घञ् वा । कर्बूरवर्णे । तद्वति त्रि० ।

शारङ्ग पु० शारं कर्बूरमङ्गं यस्य शक० । चातकपक्षिणि, हरिणे,गजे, भृङ्गे, मयूरे च

शारद न० शरदि भवम्–अण् । श्वेतपद्मे । कासे, वकुले, हरिमुद्गे च पु० शरत्कालभवे त्रि० शारं श्वेतपद्ममस्त्यस्याः अच् । सरस्वत्याम् स्त्री० । [तत्कालजे रोगे पु० ।

शारदिक न० शरदि भवं श्राद्धं रोगो वा ठञ् । शरत्काले भवे श्राद्धे

शारदीया स्त्री० शरदि भवा छण् । शरत्काले कर्त्तव्यायां दुर्गापूजायाम्

शारि(री) स्त्री० शृ–इञ् वा ङीप् । पाशकादिगुटिकायां, पक्षिभेदे च 'शारीं चरन्तीं सखि ! मारये'ति नैषधम् । युद्धार्थं गजपर्य्याणे, व्यवहारभेदे, कपटे च । स्वार्थे कन् पक्षिभेदे ।

शारिफल पु०न० शारेः फलमाधारः । शारिपट्टके पाशक–क्रीडाधारे धने द्रव्ये (कक) स्वार्थे कन् । तत्रैव ।

शारिवा स्त्री० शारिरिव वसति वस—ड । श्यामालतायाम् ।
शारीर त्रि० शरीरस्येदं अण् । देहसम्बन्धे सुखदुःखादौ तत्रोद्भवस्य
पुंसः अण् । वृषे पु० । शरीरमात्रत्वेनाभिमन्यते अण् । जीवे ।
स्वार्थे क । जीवे । शारीरं दुःखं जीवं वा अधिकृत्य कृतो ग्रन्थः
अण् व्यासकृते वेदान्तसूत्रे चिकित्साङ्गे सुश्रुतग्रन्थाद्येकदेशे च ।
शारीरिक त्रि० शरीरे भवः ठक् । देहजाते दुःखादौ ।
शारुक त्रि० शॄ—उकञ् । हिंसके ।
शार्कर त्रि० शर्करा अस्त्यस्य अण् । शर्करायुक्ते देशे शर्कराया विका-
रः अण् । फाणिते, दुग्धफेणे च पु० ।
शार्ङ्ग त्रि० शृङ्गस्य विकारः अण् । शृङ्गजाते पदार्थे । विष्णु ध-
नुषि, धनुर्मात्रे च पु० आर्द्रके न० ।
शार्ङ्गिन् पु० शार्ङ्गः अस्त्यस्य इनि । विष्णौ धन्विमात्रे त्रि० ।
शार्दूल पु० शॄ—ऊलच् दुक् च । व्याघ्रभेदे, पक्षिभेदे, राक्षसभेदे,
च उत्तरपदस्थः । श्रेष्ठार्थे ।
शार्दूलललित न० अष्टादशाक्षरपादके छन्दोभेदे ।
शार्दूलविक्रीडित न० ऊनविंशत्यक्षरपादके छन्दोभेदे ।
शार्व्वर न० शर्व्वर्या इदम् अण् । अत्यन्ततमसि । रात्रिसम्बन्धिनि,
धातुके च त्रि० । [ श्लाघायाम् ।
शाल कथने भ्वा० आ० सक० सेट् चङि न ह्रस्वः । शालते
शाल पु० शल—घञ् । मत्स्यभेदे, प्राकारे, स्वनामख्याते, वृक्षभेदे
वृक्षमात्रे, दन्त्यादिस्तु वृक्षमात्रे 'स्कन्धः शाखः समहाद्युतानने'ति
नैषधम् । [जातः अण् । तत्र जाते विष्णोर्मूर्त्तिभेदे ।
शालग्राम पु० शालानां वृक्षाणां ग्रामः समूहो यत्र । पर्व्वतभेदे तत्र
शा(सा)लज पु० शा(सा)लात् जायते जन—ड । सर्ज्जरसे (धुना)
शालनिर्य्यास पु० इतः । सर्ज्जरसे (धुना) ।
शालपर्णी स्त्री० शालस्येव पर्णान्यस्याः ङीप् । (शालपानी) वृक्षभेदे ।

शालभञ्जिका स्त्री॰ शालेन भज्यते निर्मीयते भन्ज-ण्वुल्। काष्ठनिर्मितपुत्तलिकायां, वेश्यायाञ्च।
शालस्र पु॰ शालः तन्निर्यास इव वसति वह्निर्गन्धाति वस-ड। लोध्रे।
शालवेष्ट पु॰ शालस्य वेष्ट इव। सर्ज्जरसे (धुना)।
शालसार पु॰ शालस्य सारः। हिङ्गुनि शालेषु सारः। श्रेष्ठे।
शाला स्त्री॰ शाल-अच्। गृहे, वृक्षस्य स्कन्धस्थशाखायाञ्च।
शालाञ्जि पु॰ शाल इवाञ्जति अन्ज-इन्। शाकभेदे (शाञ्चा)
शालातुरीय पु॰ शालातुरे भवः। सङ्ग्रामवासिनि मुनौ।
शालानी स्त्री॰ शालमानयति आ+नी-ड गौ॰ ङीष्। विदार्य्याम्।
शालामृग पु॰ शालायां गृहे मृग इव। शृगाले।
शालावृक पु॰ शालायां गृहे, शाखायां वृक इव वा। कुक्कुरे, शृगाले, विडाले, मृगे, वानरे च। [मार्ज्जारे च।
शालि पु॰ शल+इञ्। कलमादिधान्ये,। षष्ठिकादिधान्ये, गन्ध-
शालिका स्त्री॰ शालिरिव कायति कै-क। विदार्य्याम्।
शालिञ्च पु॰ शालिं चमति चम-ड पृ॰ कुम्। शाकभेदे।
शालिपर्णी स्त्री॰ शालेरिव पर्णान्यस्याः ङीष्। माषपर्ण्याम्
शालिवाहन पु॰। विक्रमादित्यं हत्वा शकाब्दप्रवर्त्तके नृपभेदे
शालिहोत्र पु॰ शालयो हूयन्तेऽत्र हु-त्रन्। घोटके।
शाली स्त्री॰ शाल-अच् गौ॰ ङीष्। कृष्णजीरके।
शालीन त्रि॰ शालामर्हति ख। धृष्टे सलज्जे, निम्ने याञ्च।
शालु न॰ शाल-उण्। शालूके, कषायद्रव्ये, चौरनामगन्धद्रव्ये च भेके पु॰।
शालूक न॰ शाल ऊकञ्। कुमुदादिमूले ऊकञ्। तत्र जातीफले।
शालूर पु॰ शाल-ऊरच्। भेके।
शालेय पु॰ शालायां भवं ढक्। मधुरिकायाम्।
शालोत्तर पु॰ ग्रामभेदे।
शालोत्तरीय पु॰ शालोत्तरे भवः। पाणिनिमुनौ।
शाल्मल पु॰ शाल-मलच्। (शिमुल) वृक्षे तच्चिह्निते द्वीपभेदे च

शाल्मलि(ली) पु० स्त्री० शाल-मलिच् वा ङीप् (शिमुल) वृक्षे
शाल्मलिक पु० शाल्मलिरिव कायति कै-क। रोहितकवृक्षे
शाल्मलीफल पु० शाल्मल्या इव फलमस्य। तेजःफलवृक्षे।
शाल्मलीविष्ट पु० शाल्मलीं वेष्टयति वेष्ट अच्। शाल्मलीनिर्यासे
    स्वुल्। तत्रैव।
शाल्व पु० शाल-व। देशभेदे।
शाव पु० शव-घञ्। शिशौ स्वार्थेकन्। तत्रैव शवस्येदम् अण्। शव-
    सम्बद्धे 'त्रिरात्रं शावमाशौच'मिति स्मृतिः।
शावर पु० शावयति विकारयति शव-णिच् अरन्। पापे, अपराधे,
    लोध्रद्रुमे च शवरेण प्रोक्तमण्। शबरकृते मीमांसाभाष्ये। शवर-
    स्येदम् अण्। शवर सम्बन्धिनि त्रि०।
शावरी स्त्री० शवरस्य प्रिया अण्। शूकशिम्ब्याम्, विद्याभेदे च
शाश्वत त्रि० शश्वद् भवः अण्। सतते नित्ये।
शाष्कुलिक न० शष्कुलीनां समूहः ठञ्। शष्कुलीसमूहे।
शास आशंसायां भ्वा०आ०सक० सेट् क्त्वा वेट्। प्रायेणाङ्पूर्वकः आ-
    शंसते आशंसिष्ट। [ आशास्ते आशासिष्ट
शास आशीर्वादे अदा० आ० सक० सेट् क्त्वा वेट्। प्रायेणाङ्पूर्वः।
शास शासने अदा०प०द्विक०सेट् क्त्वा वेट्। शास्ति अशासत्।
शासन न० शास ल्युट्। निकृष्टस्य हितसाधनादौ प्रवर्त्तने।
शासनहर पु० शासनं हरति हृ-अच्। आज्ञाहारके दूते।
शासितृ त्रि० शास-तृच् इट्। शासनकर्त्तरि।
शास्तृ त्रि० शास-तृच् इडभावः। शासन कर्त्तरि।
शास्त्र न० शिष्यतेऽनेन शास-ष्ट्रन्। हितानुशासने ग्रन्थे।
शास्त्रदर्शिन् त्रि० दृश णिनि इत०। शास्त्रज्ञे शास्त्रविदादयोऽप्यत्र
शास्त्रिन् त्रि० शास्त्रं वेत्त्यधीते वा इनि। शास्त्रज्ञे।
शास्त्रीय त्रि० शास्त्रेण विहितः छ। शास्त्रोक्ते धर्मादौ।
शास्य त्रि० शास-यत्। अनुशासनीये शिष्यादौ।
शि छेदने भ्वा० उभ० सक० अनिट्। शिनोति शिनुते अशैषीत् अशेष्ट।

शिंशपा स्त्री० शिवं पाति पा-क पृ० । (शिशु) वृक्षे ।

शि(सि)ग्रु न० शिष-रक् कुक् च पु० तस्य शोभा । (शोभ) मधुच्छि-ष्टे । स्वार्थे कन् । तत्रैव ।

शिक्य न०स्त्री०शिक-यत्, शि-यत् कुक् च । (शिका ) रज्जुकृते पदार्थे

शिक्यित त्रि० शिक्यंशिक्यस्थं करोति शिक्य+णिच्-कर्मणि क्त शिक्या-धारे स्थापिते पदार्थे ।

शिक्ष स्त्री० अभ्यासे भ्वा० आ० सक० सेट् । शिक्षते अशिक्षिष्ट

शिक्षा स्त्री० शिक्ष-अपच । अभ्यासे वर्णानामुच्चारण प्रदर्शके वेदाङ्गे ग्र-न्थभेदे 'शिक्षा कल्पो व्याकरणमि'ति पु० ।

शिक्षागुरु पु० ७त० । विद्यादातरि ।

शिक्षित त्रि० शिक्षा जाताऽस्य तार० इतच् शिक्ष—क्त वा । कृताभ्यासे निपुणे विज्ञे च ।

शिख गतौ भ्वा० पर० सक० सेट् इदित् । शिङ्खति अशिङ्खीत्

शिख(खा)ण्ड पु० शिखामनति अन ड तस्य नेत्वम् ६त० वा शक० । मयूरपिच्छे, चूड़ायाञ्च । [ तत्र, सा च चूड़ायाञ्च ]

शिखण्डक पु० शिखण्ड इव कन् । काकपक्षे (कापजुल्फी) स्त्रीत्वमपि

शिखण्डिक पु० शिखण्डोऽस्त्यस्य ठन् । कुक्कुटे ।

शिखण्डिन् पु० शिखण्डोऽस्त्यस्य इनि । मयूरे द्रुपदराजस्य पुत्रभेदे, विष्णौ च । यूथिकायां, गुञ्जायां च स्त्री०

शिखर न० शिखा अस्त्यस्य अरच् आलोपः । पर्व्वताग्रे अग्रमात्रे च । वृक्षाग्रे पु० न० । पुलके, गुच्छदण्डादौ, रत्नभेदे च मूर्वायां स्त्री०

शिखरिन् पु० शिखरोऽस्त्यस्य इनि । पर्व्वते, कोयष्टौ वन्दाके, वृक्षे, अपामार्गे, कुन्दुरुके, यावनाले च । रसालायां खाद्यभेदे, सप्तद-शाक्षरपादकै छन्दोभेदे, मल्लिकायां रोमावल्यां च स्त्री०ङीप् ।

शिखलोहित पु० शिखास्त्यस्य अच् तथाभूतः सन् लोहितः (कुक्कुर-मुड़ा) क्षुपभेदे ।

शिखा स्त्री० शी-खक् तस्य नेत्वम् पृ०। अग्निज्वालायां, मस्तकमध्यस्थ-केशगुच्छे च 'कर्ध्वस्यशिखां विद्धि'रिति स्मृतिः

शिखाकन्द न० शिखेव कन्दोऽस्य। गृञ्जने।
शिखातरु पु० शिखायादीपशिखायास्तरुरिव। दीपवृक्षे। (देलकी)
शिखाधर पु० शिखां चूड़ां धरति धृ-अच्। मयूरे, शिखाधारके त्रि०।
शिखामूल न० शिखेव मूलमस्य। गृञ्जने, (गाजर)।
शिखालु पु० शिखास्त्यस्य आलुच्। मयूरशिखावृक्षे।
शिखावत् पु० शिखा ज्वालाऽस्त्यस्य मतुप् मस्य वः। वह्नौ, केतुग्रहे
चित्रकवृक्षे च। शिखावति त्रि० मूर्वायां स्त्री० ङीप्
शिखावर पु० शिखां वृणोति वृ-अच्। पनसवृक्षे।
शिखावल पु० शिखास्त्यस्य वलच्। मयूरे मयूरशिखावृक्षे च
शिखिकण्ठ न० शिखिनो मयूरस्य कण्ठस्तद्वद्वर्णोऽस्त्यस्य अर्श आद्यच्।
तुत्थे (तुंते) शिखिग्रीवादयोऽप्यत्र।
शिखिध्वज शिखिनो वह्ने र्ध्वज इव। धूमे।
शिखिन् पु० शिखा अस्त्यस्य इनि। मयूरे, वह्नौ, चित्रक वृक्षे,
केतुग्रहे, कुक्कुटे, वृषे, अश्वे, अजलोम्नि पर्वते, ब्राह्मणे, मेथि-
कायां, मयूरशिखावृक्षे च। शिखायुक्ते त्रि०
शिखिप्रिय पु० शिखिनं प्रीणयति प्री-क। लघुबदरे।
शिखिमण्डल पु० शिखिनां मण्डनमिव यत्र। वरुणवृक्षे।
शिखिमोदा स्त्री० शिखिनं मोदयति मुद णिच्-अच्। अजमोदायाम्
शिखिवर्द्धक पु० शिखिनं वर्द्धयति वृध णिच् ण्वुल्। कुष्माण्डे।
शिखिवाहन पु० शिखी मयूरो वाहनं यस्य। कार्त्तिकेये।
शिग्रु पु० शि रक् गुक् च। (सजिना) वृक्षे शाकमात्रे च।
शिघ आघ्राणे भ्वा० पर० सक० सेट् इदित्। शिङ्घति अशिङ्घीत्
शिङ्घाण न० शिघि आनच् पृ० णत्वम्। काचपात्रे लौहमले, नासि-
कामले, श्लेष्मणि च। स्वार्थे कन्। नासिकामले न०।
शिज अस्फुटध्वनौ इदित् वा चु० उभ० पक्षे अदा० आ० सक० सेट्।
शिञ्जयति ते शिङ्क्ते अशिशिञ्जत् त अशिञ्जिष्ट भ्वादिरप्ययं पर०
इत्येके तेन शिञ्जति अशिञ्जीत्

शिञ्जा स्त्री० शिजि-अ भूषणशब्दे । शिजि-अच् । धनुर्गुणे

शिञ्जिनी स्त्री० शिञ्जति शिजि णिनि । धनुर्गुणे ।

शिट अनादरे भा० पर० सक० सेट् । शेटति अशेटीत् ।

शित त्रि० शो-क्त । दुर्बले, शाणिते च ।

शितद्रु पु० शतं द्रवति द्रु-कु-नि० । (शतलुज) नदीभेदे ।

शितशूक पु० शितस्तीक्ष्णः शूको यस्य । यवे ।

शिति पु० शि-क्तिच् । भूर्जपत्रवृक्षे, शुक्लवर्णे कृष्णवर्णे, च । तद्वर्णवति त्रि०

शितिकण्ठ पु० । शितिः कण्ठो यस्य । शिवे, दात्यूहविहगे च

शितिचार पु० शितिः सन् चरति चर-घञ् । (शुषनि) शाके

शितिसारक पु० शितिः शुभ्रः सारो यस्य कप् । तिन्दुकवृक्षे

शिथिल त्रि० श्लथ-किलच् पृ० श्लथे, अदृढे संयोगभेदे, मन्दे च

शिनि पु० शि-निक् । यदुवंश्ये, क्षत्रियभेदे यस्य सात्यकिर्नप्ता

शिप्र पु० शि रक् पुक् च । सरोवरभेदे, नदीभेदे स्त्री० ।

शिफ पु० स्त्री० शि फक् । वृक्षाणां जटाकारे मूले ।

शिफाक पु० शिफेव इवार्थे कन् । पद्ममूले ।

शिफाकन्द पु० शिफेव कन्दः । पद्ममूले ।

शिफाधर पु० शिफां धरति धृ-अच् । शाखायाम् ।

शिफारुह पु० शिफायां रोहति रुह-क । वटवृक्षे ।

शि(सि)म्बा स्त्री० शाम्यति समति वा शम (सम) डम्बच् पृ० (छिमी) ख्याते पदार्थे चक्रमर्द्दे च ।

शिम्बि (म्बी) स्त्री० शम-बि नि० वा ङीप् । शिम्बायाम्, (शिम्) लतायां एरकायाञ्च, स्वार्थे कन् तत्रैव ।

शिम्बिपर्णी स्त्री०शिम्बिरिव पर्णमस्याः । मुद्गपर्णीम् स्वार्थे कन् तत्रैव।

शिर न० शॄ-क । मस्तके, पिप्पलीमूले, शय्यायाम् अजगरे च ।

शिरःफल पु० शिर इव फलमस्य । नारिकेले ।

शिरःशूल न० शिरसः शूलमिव तापकत्वात् । रोगभेदे ।

शिरज पु० शिरे जायते जन-ड । केशे ।

शिरस् न० शृ-असुन् नि० । मस्तके, अग्रे च ।
शिरसिरुह पु० शिरसि रोहति रुह-क-अलुक् स० । केशे ।
शिरस्क न० शिरसि कायति प्रकाशते कै-क । शिरस्त्राणे ।
शिरस्त्र न० शिरस्त्रायते त्रै-क । शिरोरक्षके उष्णीषे ।
शिरस्य पु० शिरसि भवः यत् । निर्मलकेशे शिरोजातमात्रे त्रि०
शिरा स्त्री० शृ-क । नाड्याम् (शिर)
शिरापत्र पु० शिरेव पत्रं यस्य । हिन्तालवृक्षे ।
शिराल न० शिराऽस्त्यस्य लच् । कर्म्मरङ्गे शिरायुक्ते त्रि० ।
शिरावृत्त न० शिरवे वर्त्तते वृत-क । सीसके ।
शिरीष पु० शृ-ईषन् । स्वनामख्याते वृक्षे । [शालायाम् ।
शिरोगृह न० शिरःस्थ सुपरिस्थं गृहम् । (चिलेघर) चन्द्र-
शिरोधरा स्त्री० शिरोमस्तकं धरति धृ अच् । ग्रीवायाम् ।
शिरोधि स्त्री० शिरो धियतेऽत्र धा-कि । ग्रीवायाम् ।
शिरोमणि पु स्त्री० शिरसि धार्य्यो मणिः । शिरोधार्य्ये रत्ने चूडामणौ
स्त्रीपक्षे वा ङीप् । शिरोरत्नादयोऽप्यत्र । [मस्तकरोगे
शिरोरुजा स्त्री०शिरो रुजति व्यथयति रुज-क । सप्तच्छदवृक्षे । ६त०।
शिरोरुह पु० शिरसि रोहति रुह-क । केशे ।
शिरोवल्ली स्त्री० शिरसः वल्लीव । मयूरचूडायाम् ।
शिरोवृत्त न० शिर इव वृत्तं वर्तुलम् । मरिचे । पामार्गे
शिरोवृत्तफल पु० शिरो वृत्तं मरिचमिव फलमस्याः । रक्त-
शिरोवेष्ट पु० वेष्ट-घञ् शिरसो वेष्टः । उष्णीषे ल्युट् । तत्रैव न० ।
शिल उञ्छे कणश आदाने तु० पर० सक० सेट् । शिलति अशेलीत्
शिल न० शिल-क । गृहीतशस्यात् क्षेत्रात्कणश आदानरूपायां वृत्तौ,
पाषाणे, द्वाराधःस्थितकाष्ठखण्डे च स्त्री० ।
शिलाकर्णी स्त्री० शिलेव कर्णमस्य ङीप् । शल्लकीवृक्षे ।
शिलाकुट्टक पु० शिलां कुट्टयति कुट्ट-ण्वुल् । पाषाणभेदके अस्त्र-
भेदे । शिलया कुट्टति विलुप्तीकरोति । तापनभेदे ।
शिलाज न० शिलातो जायते जन-ड । शैलेये गन्धद्रव्ये ।

शिलाजतु न० शिलाजातं जतु। पर्वतजाते उपधातुभेदे।
शिलाञ्जनी स्त्री० शिला अञ्जतेऽनया अनुज-ल्युट्। कालाञ्जनीवृक्षे।
शिलात्मज न० शिलाया आत्मज इव। लौहे।
शिलादद्रु पु० शिलायां दद्रुरिव। शैलेये गन्धद्रव्ये।
शिलाधातु पु० शिलाया धातुखरमधातुरिव शुभ्रत्वात्। श्वेतोपले, (खडी) पीतवर्ण-गौरिकभेदे च।
शिलापुत्त्र पु० शिलायाः पुत्त्र इव। (नोड़ा)। प्रस्तरखण्डे।
शिलापुष्प न० शिलायाः पुष्पम्। शैलेये गन्धद्रव्ये।
शिलाभेद पु० शिलामपि भिनत्ति भिद्-अण्। पाषाणभेदि वृक्षे, पाषाणभेदकास्त्रे च।
शिलाव्याधि पु० शिलाया व्याधिरिव। शैलेये गन्धद्रव्ये।
शिलासन न० शिलाया आसनम्। शैलेये गन्धद्रव्ये।
शिलासार न० शिलायाः सार इव। लौहे।
शिलि पु० शिल-कि भूर्जपत्रवृक्षे द्वारस्थे काष्ठे (गोवराट) भेक्याञ्च छत्राकपुष्पे च स्त्री० ङीप्।
शिलीन्ध्र न० शिलीं भरति भृ-क पृ० मुम्। कदलीपुष्पे।
शिलीन्ध्रक न० शिलीन्ध्र इव कै-कन्। गोमयच्छत्राके।
शिलीपद पु० शिलीव पदमस्य। रोगभेदे (गोद)। [भूते च।
शिलीमुख पु० शिली यस्यं मुखमस्य। भ्रमरे, वाणे, युद्धे, जडी-
शिलोच्चय पु० शिलानामुच्चयो यत्र। पर्वते।
शिलोञ्छ पु०शिलेनोञ्छः उञ्छ-घञ् उपात्तशस्यात् क्षेत्रात् शेषावचयने।
शिलोत्थ शिलाया उत्तिष्ठति उद्+स्था-क। शैलेये गन्धद्रव्ये शिलोद्भ-वादयोऽप्यत्र।
शिल्प न०शिल-पक्। चित्रकलादिकर्मसु। [दिकर्त्तरि।
शिल्पकारिन् त्रि० शिल्पं चित्रादिकर्म्म करोति कृ- णिनि। चित्रा-
शिल्पशाला स्त्री० ६त०। चित्रकरादीनां चित्रकरणगृहे।
शिल्पशास्त्र न० शिल्पज्ञापनं शास्त्रम्। वास्तुविद्यादि ज्ञापके शास्त्रे।
शिल्पिन् त्रि० शिल्पं वेत्त्यधीते वा इनि। चित्रादिकर्मकरे।

शिव न० शी-वन् पु०। मङ्गले, सुखे, जले। वेलवे, सामुद्रे, चे लवणे, श्वेतटङ्कणे च। मङ्गलवति त्रि०। महादेवे, मोक्षे वालमले, वालुके, गुग्गुलौ, वेदे, पुण्डरीकवृक्षे, कृष्णधुस्तूरे, पारदे, देवे, त्रिकूटे, विष्कुम्भादिषु मध्ये विंशतितमे योगे च पु०।

शिवक पु० शिव-इव इवार्थे कन्। कीलके गवां गात्रकण्डूयनार्थं गोष्ठे निखाते काष्ठे।

शिवकाञ्ची स्त्री० ६त०। पुरीभेदे।

शिवधर्मज शिवधर्माज्जायते जन-ड। मङ्गलग्रहे।

शिवचतुर्द्दशी स्त्री० शिवप्रिया चतुर्द्दशी। फाल्गुनकृष्णचतुर्द्दश्याम्।

शिवदारु न० शिवो देवस्तदादिकं दारु। देवदारुवृक्षे।

शिवदूती स्त्री० शिवो दूतो यस्याः। दुर्गामूर्त्तिभेदे।

शिवद्रुम पु० शिवप्रियः द्रुमः। विल्ववृक्षे।

शिवद्विष्टा स्त्री० ३त०। केतक्याम्।

शिवधातु पु० ६त०। पारदे।

शिवपुरी स्त्री० ६त०। काश्याम्।

शिवप्रिय न० ६त०। रुद्राक्षे, महादेववल्लभे त्रि०। वकवृक्षे, धुस्तूरे, स्फटिके च पु०। दुर्गायां स्त्री०।

शिवमल्लक पु० शिवः कल्याणकरः मल्लइव कायति कै-क। अर्ज्जुनवृक्षे

शिवमल्ली स्त्री० शिवस्य मल्लीव प्रिया। वकवृक्षे।

शिवरात्रि स्त्री० शिवप्रिया तदुपासनायां रात्रिः। शिवचतुर्द्दश्याम् माघीतः परस्यां कृष्णचतुर्द्दश्याम्। तद्रात्रौ हि शिवपूजनव्रतादिकं क्रियते इति तस्या रात्रेस्तत्प्रियत्वम् तद्दिवसकर्त्तव्ये व्रते च।

शिवलिङ्ग न० ६त०। शिवस्य लिङ्गाकारे प्रस्तरादिमये पदार्थे।

शिवलोक पु० ६त० कैलासनामके स्थाने।

शिववल्लभ त्रि० ६त०। महादेवप्रिये। शतपत्र्यां स्त्री०।

शिववल्ली स्त्री० शिवप्रिया वल्ली। शिवलिङ्गलतायां, श्रीवल्लयाञ्च।

शिववाहन न० शिवं वाहयति वह-णिच्-ल्यु। वृषभे।

शिववीज न० ६त०। पारदे शिववीर्य्यादयोऽप्यत्र।

शिवशेखर पु॰ शिवस्य शेखर इव । धुस्तूरे, वकपुष्पे च ।
शिवसुन्दरी स्त्री॰ ६त॰ । दुर्गायाम् ।
शिवा स्त्री॰ शी–वन् नि॰ । मङ्गलवत्यां स्त्रियां, दुर्गायां, मुक्तौ, शृगाले, हरीतक्याम्, शमीवृक्षे, आमलक्यां, दूर्व्वायां, गोरोचनायाञ्च ।
शिवानी स्त्री॰ शिवं कल्याणमानयति आ+नी-ड गौ॰ ङीष् । जयन्तीवृक्षे । शिवस्य पत्नी ङीप् आनुक् च । दुर्गायाम् ।
शिवापीड़ पु॰ ६त॰ । वकवृक्षे ।
शिवाफला स्त्री॰ शिवाया इव फलं यस्याः । शमीवृक्षे ।
शिवालय न॰ शिव आलीयतेऽत्र ली–अच् । श्मशाने ६त॰ । रक्ततुलस्यां महादेवगृहे च पु॰ ।
शिवास्मृति स्त्री॰ शिवायाः स्मृतिर्यस्याः । जयन्तीवृक्षे तन्नामोच्चारणे हि जयन्तीनामकदुर्गायाः स्मरणम् ।
शिवाह्लाद पु॰ शिवमाह्लादयति आ+ह्लद-णिच्-अण् । वकवृक्षे
शिवाह्वा स्त्री॰ शिवस्येवाह्वा यस्याः । रुद्रजटावृक्षे ।
शिवि पु॰ शि-वि नि॰ न गुणः । हिंस्रपशौ, भूर्जवृक्षे उशीनरराजसुते नृपभेदे च ।
शिविका स्त्री॰ शिवं करोति शिव+णिच्-ण्वुल् । यानभेदे (डुली) ।
शिविर न॰ शी+किरच् वुक् च । कटके सैन्यनिवासस्थाने ।
शिवेष्ट पु॰ ६त॰ । वकवृक्षे दूर्व्वायां स्त्री॰ । महादेवप्रिये त्रि॰ ।
शिशिर न॰ शश-किरच् नि॰ । हिमे, माघफाल्गुनमासद्वयात्मके ऋतुभेदे शीतले स्पर्शे च तद्वति त्रि॰ ।
शिशु पु॰ शो–कु सन्वद्भावः द्वित्वम् । बालके स्वल्पे च ।
शिशुक पु॰ शिशुरिव इवार्थे कन् । जलजन्तुभेदे (शुशुक) ।
शिशुगन्धा स्त्री॰ शिशुः स्वल्पो गन्धो यस्याः । मल्लिकाभेदे ।
शिशुचान्द्रायण न॰ चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समाहितः चतुरोऽस्तमिते सूर्य्ये शिशुचान्द्रायणं स्मृत'मित्युक्ते व्रते ।
शिशुत्व न॰ ६त॰ । शिशोर्भावः त्व । वाल्ये तल् शिशुताप्यत्र स्त्री॰ ।

शिशुपाल पु० चेदिदेशीयराजभेदे दमघोषात्मजे।

शिशुपालहन् पु० शिशुपालं हतवान् हन-भूते क्विप् श्रीकृष्णे।

शिशुमार पु० शिशु मारयति मृ-णिच्। जलजन्तुभेदे गगनस्थे तारा-
चक्रभेदे च।

शिश्न पु० शश मक् नि०। मेढ्रे पुंचिह्नभेदे।

शिश्निदान त्रि० शिश्-कानच् ह्रिस्वम्। पापकारके।

शिष वधे भ्वा०पर०सक०सेट्। शेषति अशेषीत्।

शिष परिशेषीकरणे वा चु०उ०पक्षे भ्वा०प०सक०सेट्। शेषयति ते
शेषति अशीशिषत् त अशेषीत्।

·शिष विशेषे रुधा०प०सक०अनिट्। शिनष्टि अशिषत्।

शिष्ट त्रि० शास-क्त। शान्ते, वेदवाक्ये विश्वासकरे, सुबोधे धीरे च।

शिष्टाचार पु० शिष्टानामाचारः सद्व्यवहारे।

शिष्टि स्त्री० शास-क्तिन्। आज्ञायां, शासने, ताड़ने च 'शिष्यशिष्टिरव-
धेने'ति स्मृतिः।

शिष्य त्रि० शास-क्यप्। शिक्षणीये, छात्रे, उपदेश्ये च।

शि(सि)ह्लक पु० शिह्-लक् नि० सस्य शो वा। गन्धद्रव्यभेदे स्वार्थे
कन्। तत्रैव।

शी शयने अदा०आ०अक०सेट्। शेते अशयिष्ट। [अशीकिष्ट।

शीक सेके सर्पणे च भ्वा०आ०सक०सेट् चङि न ह्रस्वः। शीकते

शीक आमर्षे सेके च चु० उभ० पक्षे भ्वा०प०सक०सेट्। शीकयति
ते शीकति अशीशिकत्-त अशीकीत्।

शीकर न० शीक अरन्। सरलद्रवे, जलकणे, वायौ च।

शीघ्र न० शिघि रक् पृ०। विलम्बाभावे त्वरिते च तद्वति त्रि०।

शीघ्रजन्मन् पु० शीघ्रं जन्म यस्य। करञ्जवृक्षे।

शीघ्रपुष्प पु० शीघ्रं पुष्पं यस्य। वकवृक्षे।

शीघ्रवेधिन् पु० शीघ्रं विध्यति विध-णिनि। शीघ्रलक्ष्यवेधनकर्त्तरि।

शीत न० श्यै-क्त। शीतत्वे, जले, हिमे च। बहुवारवृक्षे असनवृक्षे
वेतसवृक्षे च पु०। शीतस्पर्शवति त्रि०।

शीतक पु० शीतमिव करोति । दीर्घसूत्रिणि अलसप्रकृतिजने आर्द्रीकर-
णाश्रय शीतलवायादिभिर्णीय सुस्थिते शी+स्वार्थे कन् । शीतपदार्थे,
शीतकाले, वृश्चिके च ।
शीतकर पु० शीतः शीतलः करो यस्य । चन्द्रे । कर्पूरे च । शीत-
किरणादयोऽप्यत्र त्रि० शीतकारके ।
शीतकाल पु० ६त० हिमर्त्तौ मार्गपौषमाघप्रात्मके काले ।
शीतकुम्भ पु० शीतं स्कुम्भाति स्कुनुभ-कच् नि० । करवीरे ।
शीतकृच्छ्र पु० 'त्र्यहं शीतं पिबेत् तोयं त्र्यहं शीतं पयः पिबेत् ।
त्र्यहं शीतं घृतं पीत्वा वायुभक्षपरस्त्र्यहमि'त्युक्ते व्रते ।
शीतचार न० कर्म्मः । श्वेतटङ्कणे ।
शीतगन्ध न० शीतः शीतलः गन्धो यस्य । श्वेतचन्दने ।
शीतगु पु० शीता गावः किरणाः यस्य । चन्द्रे, कर्पूरे च ।
शीतपर्णी स्त्री० शीतं पर्णं यस्याः ङीप् । अर्कपुष्पिकायाम् ।
शीतपल्लवा स्त्री० शीतः पल्लवो यस्याः । भूमिजम्ब्वाम् ।
शीतपाकिनी स्त्री० शीते पाकोऽस्त्यस्याः इनि । काकोल्याम् ।
शीतपाकी स्त्री० शीतेन पाको यस्याः ङीप् । वाट्यालके, काकोल्याञ्च
शीतपुष्प पु० शीतं शीतवीर्य्यकरं पुष्पं यस्याः । शिरीषवृक्षे स्वार्थे
कन् । शैलेये । अर्कवृक्षे च ।
शीतप्रभ पु० शीतस्य हिमस्येव प्रभा यस्य । कर्पूरे ।
शीतप्रिय पु० ६त० । पर्पटे ।
शीतफल पु० शीतं शीतलवीर्य्यकरं फलमस्य । उडुम्बरे, शेलौ च ।
शीतबला स्त्री० शीतं बलं च यस्याः । महासमङ्गायाम् ।
शीतभानु पु० शीताः शीतला भानवोऽस्य । चन्द्रे, कर्पूरे च ।
शीतभीरु स्त्री० ६त० । मल्लिकायाम् शीतभीते त्रि० ।
शीतमञ्जरी स्त्री० शीतकाले मञ्जरी यस्याः न कप् । शेफालिकायाम्,
शीतमूलक न० शीतं शीतवीर्य्यकरं मूलमस्य कप् । उशीरे ।
शीतरश्मि पु० शीतारश्मयोऽस्य । चन्द्रे, कर्पूरे च ।
शीतल पु० शीतं लाति ला-क शीतमस्त्यस्य लच् वा । शीतस्पर्शे द्रव-

ति त्रि० । मलयोद्भवे-चन्दने, शैलेये, पद्मके, मौक्तिके वीरणमूले, ग्रैवेये च न० । अश्मन्तपर्ण्यां बकुलवारवृक्षे, चम्पके, चन्द्रे, कर्पूरे, राले च पु० ।

शीतलक न० शीतलमिव इवार्थे कन् । श्वेतोत्पले मरुवके पु० ।

शीतलच्छद पु० शीतलः शीतलस्पर्शवान् छदोऽस्य । चम्पके कर्म० । शीतलपत्रे पु० । [न० ।

शीतलजल न० शीतलं जलं यस्मात् । उत्पले कर्म० । शीतलवारिणि

शीतलवातक पु० शीतलो वातो धातुभेदो यस्मात् । अश्मन्तपर्ण्याम् । तत्सेवने हि वायोः शीतलता ।

शीतला स्त्री० देवीभेदे जलजद्रव्यभेदे च । तत्र ङीप् च ।

शीतवल्क पु० शीतः शीतकरः वल्कोऽस्य । उडुम्बरे ।

शीतवीर्य्यक पु० शीतं शीतलकरं वीर्य्यं यस्मात् । प्लक्षवृक्षे ।

शीतशिव न० शीतं शीतलमपि शिवम् । सैन्धवलवणे । मिश्रेयायां शमीवृक्षे च स्त्री० । मधुरिकायाम् पु० ।

शीतसह पु० शीतं सहते सह-अच् । पीलुवृक्षे, नीलसिन्धुवारे च वासन्त्याम् स्त्री० । [सिन्यां, दूर्व्वायाश्च ।

शीता स्त्री० श्यै-क्त । लाङ्गलपद्धतौ, रामपत्न्याम्, अतिबलायां कुट्ट-

शीतांशु पु० शीताः अंशवो यस्य । चन्द्रे, कर्पूरे च ।

शीताङ्गी स्त्री० शीतमङ्गमस्याः ङीप् । हंसपदीवृक्षे । शीतलदेहे त्रि०

शीतार्त्त त्रि० शीतेन ऋतः । शीतालौ ।

शीतालु त्रि० शीत+अस्त्यर्थे आलुच् । शीतबाधायुक्ते । [याम् ।

शीतावला स्त्री० शीतमावलयति आ+वल-णिच्-अण् । महासमङ्गा-

शीत्कार पु० शीदित्यस्य कारः शीत्+कृ-घञ् । स्त्रीणां रतिकाले ध्वनिभेदे ।

शी(सी)त्य त्रि० शी(सी)ताम् अर्हति यत् । हलकृष्टे क्षेत्रादौ ।

शीधु पु० न० । शी-धुक् । इक्षुरसजाते मद्यभेदे ।

शीधुगन्ध पु० शीधोरिव गन्धोऽस्य । बकुलवृक्षे ।

शीन त्रि० श्यै-क्त । घनीभूते घृतादौ । मूर्खे, अजगरे च पु० ।

शीभ कथने भ्वा०आ०स०सेट् चङि न ह्रस्वः । शीभते अशीभिष्ट ।

शीर पु० शी-रक् । अजगरसर्पे ।

शीर्ण त्रि० शॄ-क्त । क्षये, शुष्कतादशाप्ते च ।

शीर्णपत्त्र पु० शीर्णं पत्त्रमस्य । कर्णिकारवृक्षे, निम्बे, पट्टिका लोध्रे च । विशीर्णपत्त्रयुक्ते त्रि० । कर्म० विशीर्णे पर्णे न०

शीर्णपर्ण पु० शीर्णं पर्णमस्य । निम्बे, विशीर्णपत्त्रयुक्ते त्रि० कर्म० । विशीर्णे पर्णे न० । [ कन् । तत्रैव ।

शीर्णपुष्पी स्त्री० शीर्णं पुष्पमस्याः ङीप् । अवाक्पुष्प्याम् स्वार्थे

शीर्णमाला स्त्री० शीर्णानां मालेव । पृश्निपर्ण्याम् । कर्म० । विशीर्णे माल्ये ।

शीर्णवृन्त न० शीर्णं वृन्तमस्य । (तरमुज) फलवृक्षे ।

शीर्ष न० शिरस् वा शीर्षादेशः । मस्तके । शसादौ शीर्ष्णः इत्यादि ।

शीर्षक न० शीर्षे कायति कै-क । शिरस्त्राणे (टोपर) शिरोस्थि, जयपराजयपत्त्रप्राप्यदण्डभेदे 'शीर्षकस्थेऽभियोक्तरी'ति स्मृतिः । स्वार्थे कन् । मस्तके न० । तेने कायति कै-क । राहुग्रहे ।

शीर्षच्छेद्य त्रि० शीर्षच्छेदमर्हति यत् । वध्ये 'शीर्षच्छेद्यमतोऽर्हं-त्वा'मिति भट्टिः ।

शीर्षण्य पु० शीर्षे बध्यते शीर्ष यत् शीर्षन्नादेशः । शिरस्त्राणे । शीर्षे भवः यत् । विशदकेशे पु० केशजाते त्रि० ।

शीर्षरक्ष न० शीर्षं रक्षति रक्ष-अण् । शिरस्त्राणे ।

शील समाधौ भ्वा० पर० अक० सेट् । शीलति अशीलीत् । "सरसीः परिशीलितु"मिति नैषधम् । [ते अशिशीलत् त ।

शील अभ्यासे अतिशायने च अद०चु० उभ० सक० सेट् । शीलयति

शील न० शील-अच् । स्वभावे, सद्वृत्ते, चरित्रे च । अजगरसर्पे पु० ।

शीलन न० शील-ल्युट् । अभ्यासे, अतिशायने, प्रवर्त्तने च ।

शीलित त्रि० शील-क्त । अभ्यस्ते, चीर्णे च ।

शुक गतौ भ्वा० पर० सक० सेट् । शोकति अशोकीत् ।

शुकी न० शुक क। ग्रन्थिपर्णे, वस्त्रे, वस्त्राञ्चले च। व्यासस्रुते, पक्षि-
भेदे शोनकवृक्षे च पु०।
शुकच्छद न० शुकस्य छद इव छदो दलमस्य। ग्रन्थिपर्णे।
शुकजिह्वा स्त्री० शुकस्येव जिह्वा पर्णमस्याः। (शुयाठोंटा) वृक्षे।
शुकतरु पु० शुकप्रियस्तरुः। शिरीषवृक्षे शुकद्रुमादयोऽप्यत्र।
शुकदेव पु० व्यासपुत्रे।
शुकनाशन पु० शुकं नाशयति नश-णिच्-ल्यु। द्रुद्रुमे।
शुकनास पु० शुकस्य नासेव पत्त्रमस्याः। श्योनाकवृक्षे शुकतुल्यनासा-
युक्ते त्रि०। कादम्बरीग्रन्थप्रसिद्धे तारापीडनृपमन्त्रिभेदे पु०।
शुकपिण्डी पु० शुकानां प्रिया पिण्डीव। शुकशिम्ब्याम्।
शुकपुच्छ पु० शुकस्य पुच्छ इव। गन्धके दृन०। शुकस्य पुच्छे पु०।
शुकपुष्प शुक इव हरित् पुष्पमस्य। शिरीषवृक्षे।
शुकप्रिय पु० दृन०। शिरीषवृक्षे, जम्ब्वां स्त्री०।
शुकफल पु० शुकइव फलमस्य। अर्कवृक्षे।
शुकवल्लभ पु० दृन०। दाडिमवृक्षे दृत०। तस्य प्रिये त्रि०।
शुकशि(सि)म्बा स्त्री० शुक इव शि(सि)म्बा। कपिकच्छ्वाम्।
शुकादन पु० शुकैरद्यते अद ल्युट्। दाडिमे।
शुकानना स्त्री० शुकस्याननमिव पत्त्रमस्याः। (शुयाटोंठी) वृक्षे।
शुकोदर न० शुकस्योदरमिव। तालीशपत्त्रे दृत०। शुकस्योदरे।
शुक्त न० शुच-क्त। मांसे, काञ्जिके, द्रवद्रव्यभेदे, 'शुक्तं यन्मधुरं काल-
वशादम्लत्वमागत' मित्युक्ते पदार्थे च 'दधि शुक्तेषु भोक्तव्य'-
मिति मनुः। निष्ठुरे पूते, श्लिष्टे, दुर्जने, अम्ले, च त्रि० चु-
क्रिकायां स्त्री०।
शुक्ति स्त्री० शुच-क्तिन्। जलजन्तुभेदे (झिनुक) कपालखण्डे, शङ्खे,
शङ्खनखे, नख्याम् अर्शोरोगे, अश्वावर्त्तके, चक्षुरोगभेदे च।
शुक्तिका स्त्री० शुक्तिरेव कन्। (झिनुक) मुक्तास्फोटे, चुक्रिकायाञ्च।
शुक्तिज न० शुक्तौ जायते जन-ड। मुक्तायाम्।
शुक्तिमत् पु० शुक्तिरस्त्यस्य मतुप्। पर्वतभेदे। नदीभेदे स्त्री० ङीप्।

शुक्र न० शुच रक् नि० कुत्वम् । मज्जजाते चरमधातौ, नेत्ररोगभेदे च । ग्रहभेदे, दैत्यगुरौ, अग्नौ, चित्रकवृक्षे, ज्यैष्ठमासे, विष्कम्भादिषु योगेषु मध्ये चतुर्विंशे योगे च पु० । [त्रि० ।

शुक्रकर पु० शुक्रं वीर्य्यं करोति कृ-अच् । मज्जधातौ । वीर्य्यकारके

शुक्रभुज् स्त्री० शुक्रं भुङ्क्ते भुज-क्विप् । मयूरजातिस्त्रियाम् ।

शुक्रला स्त्री० शुक्रं लाति ला-क । उच्चटावृक्षे ।

शुक्रशिष्य पु० ६त० । दैत्ये असुरे ।

शुक्रिय त्रि० शुक्रो देवताऽस्य तस्येदम् वा घ । शुक्रसम्बन्धिनि तद्दैवते, यजुर्वेदीये 'ऋचं वाचमि'त्यादिके षट्त्रिंशत्तमे शान्त्यध्याये न० ।

शुक्ल न० शुच-लक् कुत्वम् । रजते, नवनीते, अक्षिरोगभेदे च । श्वेत वर्णे पु० । श्वेतवर्णवति शुद्धे च त्रि० ।

शुक्लकन्द पु० शुक्लः कन्दो यस्य । महिषकन्दे । अतिविषायां स्त्री० । कर्म० । श्वेते कन्दे ।

शुक्लकर्म्मन् त्रि० शुक्लं शुद्धं कर्म यस्य । पवित्रे शुभचरित्रे ।

शुक्लकुष्ठ न० कर्म० । श्वेतकुष्ठे (धवल) ।

शुक्लदुग्ध पु० शुक्लं दुग्धमस्य । शृङ्गाटके । श्वेतनिर्यासवति त्रि० ।

शुक्लधातु पु० कर्म० । कठिन्याम् (खड़ि)

शुक्लपक्ष पु० कर्म० । वृद्ध्यनुगुणचन्द्रकलाक्रियापक्षद्वयकात्मके चान्द्रमासार्द्धे काले, श्वेतच्छदे, काके, बके च ।

शुक्लपुष्प पु० शुक्लं पुष्पमस्य । कुवाकवृक्षे, कुन्दवृक्षे, मरुवके च । श्वेतपुष्पवति त्रि० नागदन्त्यां स्त्री० ङीप् । कर्म० शुभ्रे पुष्पे न० ।

शुक्लपृष्ठक पु० शुक्लं पृष्ठमस्य कप् । सिन्धुकवृक्षे ।

शुक्लरोहित पु० वर्णौ वर्णेनेति कर्म० । श्वेतरक्ते वर्णे, तद्वति त्रि० ।

शुक्लला स्त्री० शुक्लं लाति ला-क । उच्चटायाम् ।

शुक्लवायस पु० कर्म० । बके, श्वेतकाके च ।

शुक्लशाल पु० कर्म० । गिरिनिम्बे श्वेतवर्णवृक्षे च ।

शुक्ला स्त्री० शुक्ल+अर्श आद्यच् टाप् । सरस्वत्यां, शर्करायां, काकोल्यां, विदार्य्यां, स्नुह्यां, श्वेतवर्णवत्यां, स्त्रियाञ्च ।

शुक्लाङ्गी स्त्री० शुक्लमङ्गमस्याः ङीप् । शेफालिकायाम्, श्वेताङ्गयुक्ते त्रि० ।
शुक्लापाङ्ग पु० शुक्लः अपाङ्गो यस्य । मयूरे ।
शुक्लाम्ल न० कर्म० । अम्लशाके ।
शुक्लिमन् पु० शुक्लस्य भावः इमनिच् । श्वेतवर्णे ।
शुक्लोपला स्त्री० कर्म० व अस्त्यस्याः अच् । शर्करायाम् ।
शुङ्ग पु० शम ग तस्य नेत्त्वं नि० अत उत्त्वञ्च । वटवृक्षे, आम्रातके, शूके च । पर्पटीवृक्षे धान्यादिशूके च स्त्री० ।
शुङ्गाकर्म्मन् न० शुङ्गैः वटपल्लवैः आ सम्यक् कर्म यत्र । पुंसवन-संस्कारभेदे ।
शुङ्गिन् पु० शुङ्गोऽस्त्यस्य इनि । वटवृक्षे । शुङ्गवति त्रि० ।
शुच् स्त्री० शुच-क्विप् । शोके । वा टाप् । तत्रैव ।
शुच शोचे क्लेदे च दिवा० उभ० अक० सेट् । शुच्यति ते अशुचत् अ-शोचीत् अशोचिष्ट ।
शुच शोके भ्वा० पर० सक० सेट् । शोचति अशोचीत् ।
शुचि पु० शुच-किन् । वह्नौ, चित्रकवृक्षे, ज्यैष्ठमासे, आषाढमासे शुक्लाचरणे, धौमे, श्रृतौ, शुद्धमन्त्रिणि, अग्निभेदे श्वेतवर्णे च । तद्वति त्रि० ।
शुचिद्रुम पु० कर्म० । अश्वत्थवृक्षे ।
शुचिमल्लिका स्त्री० कर्म० । नवमल्लिकायाम् ।
शुच्य अभिषवे भ्वा०पर० सक० सेट् निष्ठा अनिट् । शुच्यति अशुच्यीत्
शुठ गतिविघाते भ्वा० पर० सक० सेट् । शोठति अशोठीत् ।
शुठ आलस्ये चु० उभ० सक० सेट् । शोठयति ते अशूशुठत् ।
शुठ शोषणे वा० चु० उभ०पक्षे भ्वा० पर० सक० सेट् इदित् । शुण्ठ-यति ते शुण्ठति अशुशुण्ठत् त अशुण्ठीत् ।
शुण्ठि(ण्ठी) स्त्री० शुठि-इन् वा ङीप् । (शुंठ) । इक्षौ ।
शुण गतौ तु० पर०सक० सेट् । शुणति अशोणीत् ।
शुण्ड पु० शुण-ड तस्य नेत्त्वम् । मदनिर्झरे, गजहस्ते पु० स्त्री० ।

स्त्रीपक्षे टाप् मद्यपानगृहे वेश्यायाम् सुरायां नलिन्यां कुट्टिन्याम् जलहस्तिन्याञ्च स्त्री० ।

शुण्डार पु० शुण्डा अस्त्यर्थे र । शौण्डिके, हस्तिनि च । अपकर्षे र । अपकृष्टशुण्डायाम् । लच् । हस्तिनि । [वृक्षे ।

शुण्डी स्त्री० शुण्डाकारोऽस्त्यस्याः अच् गौ० ङीष् । (हातिशुण्डा)

शुद्ध न० शुध-क्त । सैन्धवलवणे, मरिचे च । केवले, निर्दोषे, पवित्रे, शुभ्रे च त्रि० ।

शुद्धवल्ली स्त्री० कर्म० । गुडूच्याम् पवित्रायां-लतायाञ्च ।

शुद्धान्त पु० शुद्धः अन्तः पर्यन्तो यस्य । अन्तःपुरे, उपचारात् तत्र स्थितायां राजयोषिति पु० स्त्री० । 'शुद्धान्तसंभोगनितान्ततुष्टे' इति नैषधम् ।

शुद्धापह्नुति स्त्री० कर्म० । अर्थालङ्कारभेदे ।

शुद्धि स्त्री० शुध-क्तिन् । मार्ज्जने नैर्मल्यसंपादने वैदिककर्मयोग्यतासम्पादकसंस्कारभेदे च ।

शुद्धोदनि पु० बौद्धभेदे ।

शुध शौचे शोधने, निःशेषभवने च दि० पर० सक० अनिट् । शुध्यति अशुधत् । 'भक्तो हरः शुध्यति यद्गुणः स्यादिति' कौ० ।

शुन गतौ तु० पर० सक० सेट् । शुनति अशोनीत् ।

शुन पु० शुन-क । कुक्कुरे । इक् । तत्रैव । [भेदे ।

शुनःशेफ पु० शुन इव शेफोऽस्य अलुक्स० । विश्वामित्रशिष्ये मुनिशुनक पु० शुन इव कन् । मुनिभेदे स्वार्थे कन् । कुक्कुरे ।

शुनी स्त्री० श्वन्+स्त्रियां ङीप् । कुक्कुरयोषिति, कुष्माण्ड्यां च ।

शुन्ध शुद्धौ चु० उ०सक० सेट् । शुन्धयति ते अशुशुन्धत् त ।

शुन्ध शुद्धौ अक० शुद्धीकरणे सक० भ्वा० उभ० सेट् । शुन्धति ते 'आपः शुन्धन्तुमैनसः' इति वेदमन्त्रः । अशुन्धीत् । अशुन्धिष्ट ।

शुन्भ दीप्तौ अक० मर्द्दने च सक० तु० पर० सेट् । शुम्भति अशुम्भीत् 'प्राणप्राप्तनिशुम्भशाम्भवधनु'रिति वीरचरितम् ।

शुभ दीप्तौ अक० हिंसने स० तु० सुधा०प० सेट् । शुभति अशोभीत्

शुभ दीप्तौ भ्वा० आ० अक० सेट् । शोभते अशुभत् ।
शुभ न० शुभ-क । मङ्गले, पद्मकाष्ठे च । शुभयुक्ते त्रि० । विष्कम्भादिषु मध्ये त्रयोविंशयोगे पु०। [ भद्रिः ।
शुभंयु त्रि० शुभम्+अस्त्यर्थे युस् । शुभान्विते "क्षितिपः शुभंयु"रिति
शुभगन्धक न० शुभो गन्धोऽस्य । बोले ।
शुभग्रह पु० शुभः शुभदायकः ग्रहः । सौम्यग्रहे गुरौ शुक्रे अर्द्धाधिकचन्द्रे, पापग्रहायुक्ते बुधे च । [ दुर्गायां स्त्री० ।
शुभङ्कर त्रि० शुभं करोति कृ-अच् मुम् च । मङ्गलकारके ।
शुभद पु० शुभं ददाति दा—क । अश्वत्थवृक्षे मङ्गलदातरि त्रि० ।
शुभपत्री स्त्री० शुभानि पत्राण्यस्याः ङीप् । (शालपान) क्षुपे ।
शुभा स्त्री० शुभ-क । शोभायां, कान्तौ रोचनायां, गोरोचनायां, शम्यां, प्रियङ्गौ, श्वेतदूर्व्वायां, देवसभायाञ्च ।
शुभाञ्जन पु० शुभ-क शुभम् अञ्जनं यस्मात् ।• शोभाञ्जनवृक्षे ।
शुभ्र न० शुभ-रक् । अभ्रके, रौप्ये, कासीसे च । चन्दने, श्वेतवर्णे च पु० । तद्वति त्रि० । [ शुभ्रश्वेतयोऽप्यत्र ।
शुभ्रकर पु० शुभ्रः करोऽस्य । चन्द्रे, कर्पूरे च । शुभ्रकिरणादयो-
शुभ्रदन्ती स्त्री० शुभ्रो दन्तो यस्याः ङीप् । पुष्पदन्तदिग्गजयोषिति ।
शुभ्रालु पु० कर्म० । महिषकन्दे ।
शुम्भ पु० शुम्भ-अच् । दानवभेदे ।
शुम्भमर्दिनी स्त्री० शुम्भं मर्दयति मृद-णिनि । दुर्गायाम् ।
शुर मारणे स्तम्भने च दि०आ०अक०सेट् । शूर्य्यते अशोरिष्ट ।
शुल्क कथने, सर्जने, वर्जने च चु०उभ०सक०सेट् । शुल्कयति ते अशुशुल्कत् त ।
शुल्क पु० न० शुल्क्यते अतिसृज्यते कर्मणि घञ् । घट्टादिदेये राजग्राह्यकरभेदे, वरपक्षात्, कन्यापक्षीयैः ग्राह्ये धने स्त्रीधनभेदे, 'भगिनीशुल्कं सोदर्य्याणा'मिति स्मृतिः स्त्रीभ्यः सम्भोगार्थं देये धने, 'अशुल्कोपहृतायान्तु पिण्डदावोढुरेव ते' स्मृतिः पणे च ।

शुल्कस्थान न० ६त० । (घाटि) घट्टे, भूपानां क्रयविक्रययोग्य-
द्रव्यकरादानस्थाने ।

शुल्ल न० शुल्ल-अच् पु० । ताम्रे, रज्जौ च ।

शुल्व माने दाने च चु०उभ०सक०सेट् । शुल्वयति ते अशुशुल्वत् त ।

शुल्व न० शुल्व-अच् । ताम्रे, रज्जौ च । जलसमीपे, आचारे,
यज्ञकार्य्ये च ।

शुल्वारि पु० ६त० । गन्धके तस्य ताम्रादिजारकत्वात् तथात्वम् ।

शुश्रूषण न० श्रु-सन्-ल्युट् । सेवायाम् । युच् । तत्रैव स्त्री० ।

शुश्रूषा स्त्री० श्रु-सन्-अ । श्रवणेच्छायाम्, उपासनायाञ्च ।

शुष शोषे दि०प०सक०अनिट् । शुष्यति अशुषत् ।

शुष पु० शुष क । गर्त्ते, विले च ।

शुषि स्त्री० शुष-इक् । शोषणे, विले च ।

शुषिर न० शुष-किरच् । छिद्रे, वंशप्रादिवाद्ये च । सच्छिद्रे त्रि०
मूषिके, अग्नौ च पु० । नद्यां, नलीनामगन्धद्रव्ये च स्त्री० ।

शुष्क त्रि० शुष-क्त । आतपादिना कृतशोषणे । [पर्य्यं न० ।

शुष्कपत्र न० शुष्कं पत्रमस्य । (नालता) शाकभेदे । कर्म० । शुष्के

शुष्कल न० शुष्कं शोषणं लाति ला-क । शुष्कमांसे ।

शुष्कवृक्ष पु० कर्म० । धववृक्षे ।

शुष्कवैर न० शुष्कं फलशून्यं वैरम् । उद्देश्यशून्ये कलहे ।

शुष्कव्रण पु० कर्म० । (घेटा) किणाख्ये व्रणे ।

शुष्काङ्ग पु० शुष्कमङ्गमस्य । धववृक्षे (धगाछ) शुष्कावयवे त्रि० स्त्रियां
ङीप् । सा च गैरिकायाञ्च ।

शुष्कार्द्रक न० शुष्कमार्द्रकम् । शुण्ठ्याम् (शुँट) ।

शुष्म न० शुष-मन् किच्च । तेजसि, पराक्रमे च । सूर्य्ये, अग्नौ,
चित्रकवृक्षे, वायौ, पक्षिणि, अर्च्चिषि च पु० । [च पु० ।

शुष्मन् न० शुष-कनिप् । तेजसि, शौर्य्ये च । अग्नौ, चित्रकवृक्षे

शूक पु० न० शो-ऊकक् । (शुङ्गा) तीक्ष्णाग्रे, शिखायाञ्च ।

शूककीट पु० शूकाकाररोमयुक्तः कीटः । (शुयापोका) कीटभेदे ।

शूकधान्य न० शूकयुक्तं धान्यम् शाक० । यवादौ धान्ये ।
शूकपिण्ड(ण्डी) स्त्री० शूकस्य पिण्डीव । शूकशिम्बग्राम् ।
शूकर पु० शू इत्यव्यक्तं शब्दं करोति क-अच् शूक+अस्त्यर्थे र वा ।
स्वनामख्याते पशौ ।
शूकरकन्द पु० शूकर इव रोमशः कन्दोऽस्य । वाराहीकन्दे ।
शूकरपादिका स्त्री० शूकरस्येव पादाः मूलान्यस्याः ङीप् संज्ञायां
कन् । कोलशिम्बग्राम् । [क्रान्तायाम् ।
शूकराक्रान्ता स्त्री० शूकरेणाक्रम्यते स्म आ+क्रम-क्त ३त० । वराह-
शूकरी स्त्री० शूकर आक्रामकत्वेनास्त्यस्याः अच् गौ०ङीष् । वराहक्रा-
न्तायाम् । शूकर+पुंयोगे ङीप् तज्जातिस्त्रियाम् ।
शूकरेष्ट पु० ६त० । कसेरुनामकन्दे । वराहप्रियद्रव्ये त्रि० ।
शूकवती स्त्री० शूकस्तीक्ष्णाग्रकस्त्यस्याः मतुप् मस्य वः । कपिकच्छ्वाम् ।
शूकशिम्बा स्त्री० शूकयुक्ता शिम्बा । कपिकच्छ्वाम् ।
शूकशिम्बि (म्बी) स्त्री० शूकयुक्ता शिम्बिः वा ङीप् । कपिकच्छ्वाम् ।
शूका स्त्री० शूकोऽस्त्यस्याः अच् । कपिकच्छ्वाम् ।
शूद्र पु० शुच-रक् पृ० चस्य दः दीर्घश्च । चतुर्थे वर्णे । शुचाद्रवति पृ० ।
शोकहेतुकगतियुक्ते 'अह हारे त्वा शूद्रे'ति श्रुतिः शुचा द्रवणात्
क्षत्रियस्यापि शूद्रत्वमिति शारीरकभाष्यम् । टाप् शूद्रा शूद्रजाति-
स्त्रियाम् । पुंयोगे ङीप् । शूद्रभार्य्यायाम् ।
शूद्रकर्म्मन् न० शूद्रस्य शास्त्रविहितं कर्म्म । शूद्रकर्त्तव्ये द्विजसेवादौ
शूद्रकृत्यादयोऽप्यत्र ।
शूद्रप्रिय पु० ६त० । पलाण्डौ ।
शूद्रार्त्ता स्त्री० शूद्रेणार्त्ता पीड़िता । प्रियङ्गौ ।
शूद्रावेदिन् स्त्री० शूद्रां विन्दति विद-णिनि उप० । शूद्रजातिस्त्रिया
विवाहकर्त्तरि । 'शूद्रावेदी पतत्यत्रे'रिति स्मृ० ।
शूद्रासुत पु० शूद्रायाः द्विजातिभिः ऊढायाः सुतः । द्विजातिजाते
शूद्रजातिस्त्रिया सूते पुत्रभेदे ।

शूना स्त्री० श्वि-अधिकरणे-क्त । प्राणिवधस्थाने 'पञ्च शूनागृहस्थस्ये'ति स्मृतिः (आलजिभ) अधोजिह्वायाञ्च ।

शून्य त्रि० शूनायै प्राणिवधाय हितम् रहस्यस्थानत्वात् यत् । निर्ज्जनस्थाने, आकाशे, विन्दुमात्रे, अभावे च । असम्पूर्णे, ऊने, तुच्छे च त्रि० ।

शून्यमध्य पु० शून्यमाकाशो मध्ये यस्य । नले । शून्यमध्ययुक्ते त्रि०।

शून्यवादिन् पु० शून्यमभावमात्रं सर्व्वकारणतया वदति वद-णिनि । बौद्धभेदे । [(फाणमनसा) ।

शून्या स्त्री० शून्यमस्त्यस्याः अच् । नल्याम् महाकालीन्याञ्च ।

शूर हिंसे स्तम्भे च दि० आत्म० सक० सेट् । शूर्य्यते अशूरिष्ट।

शूर विक्रमे अ० चु० उभ० सक० सेट् । शूरयति ते अशुशूरत् त ।

शूर पु० शूर-अच् । वीरे, विक्रमवति, यदुदेवनामके, यादवे, सूर्य्ये, सिंहे, शूकरे, चित्रकवृक्षे, शाले, निकुचे, मनुष्यभेदे च ।

शूरण पु० शूर-ल्यु (ओल) मूलभेदे, श्योनाकवृक्षे च ।

शूरसेन पु० शूरा सेना यत्र, यस्य वा । देशभेदे, नृपभेदे च ।

शूर्प माने चु० उ० सक० सेट् । शूर्पयति ते अशुशूर्पत् त ।

शूर्प पु० शूर्प्यते धान्यादिकमनेन शूर्प-घञ् । (कुला) धान्यस्फोटके, वंशमयपात्रे, द्रोणद्वयपरिमाणे च ।

शूर्पकर्ण पु० शूर्प इव कर्णौ यस्य । गजे ।

शूर्पणखा (खी) स्त्री० शूर्प एव नखा अस्याः णत्वम् वा ङीप् । रावणभगिन्याम् ।

शूर्पपर्णी स्त्री० शूर्प इव पर्णान्यस्याः ङीप् । शिम्बीभेदे ।

शूर्म्म प० सुष्ठु ऊर्म्मिरस्त्यस्याः पृ० । लौहप्रतिमायाम् ।

शू(सू)र्म्मि (र्म्मी) स्त्री० सुष्ठु ऊर्म्मिः यस्याः वा शत्वम् वा ङीप् । लौहादिप्रतिमायाम् ।

शूल रुजायां भ्वा० प० अक० सेट् । शूलति अशूलीत् ।

शूल पु० न० शूल-क । रोगभेदे, व्यथायां, सुतीक्ष्णे अयःफाले, त्रिशूले च । चिह्ने, मुनिभेदे, विष्कम्भादिषु नवमयोगे च पु० ।

शूलग्रन्थि पु० शूलाकारः ग्रन्थिरस्य । मालादूर्वायाम् ।
शूलघातन न० शूलं रोगभेदं घातयति हन-णिच्-ल्यु । मण्डूरे ।
शूलघ्न पु० शूलं हन्ति हन-क । तुम्बुरवृक्षे
शूलद्विष् पु० द्वत० । हिङ्गौ ।
शूलधन्वन् पु० शूलं धनुरायुधमस्य अनङ् समा० । शिवे ।
शूलधर पु० शूलं धारयति धारि-अच् । शिवे । शूलभृदादयोऽप्यत्र ।
शूलधारिन् पु० शूलं धरति धृ-णिनि । शिवे दुर्गायां स्त्री० ।
शूलधृष् पु० शूलेन धर्षति धृष-क्विप् । शिवे । दुर्गायां स्त्री० ।
शूलनाशन न० शूलं नाशयति नश-णिच्-ल्यु । सौवर्चलवणे ।
शूलपाणि पु० शूलं पाणौ यस्य । शिवे । शूलहस्तादयोऽप्यत्र ।
शूलशत्रु पु० शूलस्य शत्रुः । एरण्डवृक्षे ।
शूलहन्त्री स्त्री० शूलं हन्ति हन-तृच् ङीप् । यवान्याम् ।
शूलहृत् पु० शूलं हरति हृ-क्विप् । हिङ्गौ ।
शूलाकृत त्रि० शूलेन विद्धा कृतं पक्वम् शूल+डाच्+कृ-क्त । लौहादिकीलकेन विद्धा पक्वे मांसे । (काबाब) ।
शूलिक त्रि० शूलं पाकसाधनत्वेनास्त्यस्य ठन् । शूलाकृते ।
शूलिन् पु० शूलमस्त्यस्य इनि । शूलरोगयुक्ते, शूलास्त्रधारके त्रि०
शूलिन पु० शूलकारं फलमस्त्यस्य इनन् । भाण्डीरवृक्षे ।
शूलोत्खा स्त्री० शूलेन उत्खन्यते उद्+खन-ड । सोमराज्याम् ।
शूल्य त्रि० शूले संस्कृतं यत् । शूलाकृते मांसे ।
शूष प्रसवे भ्वा० प० सक० सेट् । शूषति अशूषीत् ।
शृ(सृ)गाल पु० असृजं लाति ला-क पृ० (शेयाल) पशौ दैत्यभेदे, वासुदेवे, निष्ठुरे, खले च । [क्षुपभेदे ।
शृगालकण्टक पु० शृगालसदृशं इव कण्टको यस्य । (शेयालकाँटा)
शृगालकोलि पु० शृगाल इव कण्टकितः कोलिः । (शेयाकुल) क्षुपभेदे । [पभेदे ।
शृगालघण्टी स्त्री० शृगाल इव कण्टकिनी घण्टी । कोकिलाक्षे क्षु-
शृगालजम्बु स्त्री० शृगालप्रिया जम्बुः । गोडुम्बे (गोमुक) ।

**शृगालविन्ना** स्त्री० शृगालैर्विद्यते विद-क्त । पृश्निपर्ण्याम् ।

**शृगालिका** स्त्री० शृगालस्य भार्य्या ङीप् स्वार्थे कन् । शृगालयोषिति शृगालीव इवार्थे कन् । भयात् पलायने ।

**शृगाली** स्त्री० शृगालस्तत्पलायनं माहात्म्येनास्त्यस्य अच् ङीप् । पलायने । [पादबन्धने च ।

**शृङ्खल** पु० शृङ्गात् प्राधान्यात् खल्यतेऽनेन घ० । निगडे, लौहमये

**शृङ्खली** स्त्री० शृङ्खलः तदाकारोऽस्त्यस्याः अच् गौ०ङीष् । कोकिलाख्ये वृक्षे पुंस्कटीवस्त्रबन्धने च । रीनौ स्त्री० टाप् ।

**शृङ्ग** न० शॄ-गन् ह्रस्वः । पर्वतोपरिभागे, प्राधान्ये, कामोद्रेके, पश्वादेर्विषाणे, वाद्यभेदे च । (शिङ्गा) मद्गुरस्त्रियां स्त्री० ङीप् ।

**शृङ्गक** पु० शृङ्गमिव इवार्थे कन् । जीरकवृक्षे ।

**शृङ्गकन्द** पु० शृङ्गमिव कन्दोऽस्य । शृङ्गाटके (पानीफल) ।

**शृङ्गज** न० शृङ्गे पर्वताग्रे जायते जन-ड । अगुरुचन्दने सरलवृक्षे पु० । शृङ्गजातमात्रे त्रि० ।

**शृङ्गमूल** पु० शृङ्गमिव मूलमस्य । शृङ्गाटके । [चम्पके ।

**शृङ्गमोहिन्** पु० शृङ्गाय कामोद्रेकाय मोहयति मुह-णिच्-णिनि

**शृङ्गला** स्त्री० शृङ्गं तदाकारफलं लाति ला-क । अजशृङ्ग्याम् (गाडरशिङ्गा) ।

**शृङ्गवत्** पु० शृङ्गं प्राशस्त्येनास्त्यस्य मतुप् मस्य वः । इलावर्षस्य 'नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः' इत्युक्ते सीमापर्वतभेदे । शृङ्गयुक्ते त्रि० ।

**शृङ्गवेर** न० शृङ्गमिव वेरमवयवो यस्य । आर्द्रके, शुण्ठ्याम्, राम-मित्रगुहचण्डालस्य पुरे च । स्वार्थे कन् । आर्द्रके ।

**शृङ्गवेराभमूलक** पु० शृङ्गवेरेण तुल्यं मूलमस्य कप् । एरकावृक्षे ।

**शृङ्गाट** पु० शृङ्गं प्राधान्यमटति अट-अण् । उत्तरस्थपर्वतभेदे चतुष्पथे, जलकण्टकितृणे च तत्फले न० । (पानीफल) स्वार्थे कन् । तत्र, चतुष्पथे, अलङ्कारोक्तचित्रभेदरूपे शब्दालङ्कारे च ।

**शृङ्गार** पु० शृङ्गं कामोद्रेकमृच्छत्यनेन ऋ-अण् । नाट्योक्ते रसभेदे

लवङ्गे सिन्दूरे। चूर्णे च शृङ्गं कारणत्वेन ऋच्छति अण्। कालागुरुणि आर्द्रके च। शृङ्गं प्राधान्यमृच्छत्यनेन अण्। भूषणे, गजभूषणे च स्वार्थे कन्। सिन्दूरे।

शृङ्गारिन् पु० शृङ्गारः जन्यत्वेनास्त्यस्य इनि। पूगे। तत्फलभक्षणे हि कामोद्रेकइति तथात्वम् गजे च। सुवेशे त्रि०।

शृङ्गिक न० शृङ्गाकारोऽस्त्यस्य ठन्। विषभेदे। प्रतिविषायां स्त्री०।

शृङ्गिण पु० शृङ्गं प्राधान्येनास्त्यस्य इनच्। मेषे।

शृङ्गिन् पु० शृङ्गमस्त्यस्य इनि। मेषे, भारतवर्षस्य सीमापर्वतभेदे, पर्वतमात्रे, मुनिभेदे, वृक्षे च। शृङ्गयुक्ते त्रि० धेन्वां स्त्री० ङीप्।

शृत त्रि० शृ—क्त। पक्वे।

शृध अपानशब्दे भ्वा० आ० लुङि लृटि लृङि च उ० अक० सेट् क्त्वा-वेट् इता०। शर्द्धते अशृधत् शर्त्स्यति शर्द्धिष्यते।

शृध छेदने भ्वा० उ० स० सेट् क्त्वावेट्। शर्द्धति ते अशर्द्धीत् अशर्द्धिष्ट

शॄ हिंसने क्र्या० प्वा०प०सक० सेट्। शृणाति अशारीत्। शीर्णः

शेखर पु० शिखि—गतौ अरण् पृ०। शिखायां, मूर्द्धस्थितमाल्ये च। वन्दायां स्त्री०।

० शी—पन्। शेफे शिश्ने। शयनकर्त्तरि त्रि०।

पु०न०। शी—फन्। शिश्ने शी—असि दुक् च शेफोऽप्यत्र न०

..लिका स्त्री० शेरते इति शेफाः अलयो यत्र कप्। (शिउलि) पुष्पवृक्षे। [लिकायाम्।

शेफाली स्त्री० शेफाः शयनशालिनः अलयो यत्र ङीप्। शेफा-

शेमुषी स्त्री० शी—विच् शेः मोहस्तं मुष्णाति मुष-क। बुद्धौ।

शेल गतौ चालने च भ्वा०पर०सक०सेट्। शेलति अशेलीत् चङि न ह्रस्वः।

शेलु पु० शेल-उण्। बहुवारवृक्षे।

शेव पु० शी-वन्। पुंलिङ्गे शिश्ने।

शेवधि पु० शेः प्रमादिमोहस्तस्य अवधिः। 'पद्मोऽस्त्रियां महापद्मः

शङ्खो मकरकच्छपौ । मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नवे'त्युक्ते नवविधे निधौ ।

शेवल न० शी-विच् तथाभूतः सन् वलते अच् । शैवाले । (सेवाला)

शेवाल न० शेते विच् शेः सन् वलते अण् । शैवाले ।

शेष पु० शिष-अच् । अनन्ते सर्पराजे सर्पभेदे, अवशेषे च ।

शेषा स्त्री० शिष-घञ् । निर्माल्यमाल्यादौ 'शेषामिव भर्त्तुराज्ञा'मिति कुमारः ।

शैक्ष पु० शिक्षां तन्नामग्रन्थमधीते वेत्ति वा अण् । शिक्षाग्रन्थाध्यायिनि, तद्वेत्तरि च । कन् । शैक्षकोऽप्यत्र ।

शैखरिक पु० शिखरे प्राचीराद्यग्रे भवः ठक् । अपामार्गे ।

शैखरेय पु० शिखरे भवः ढक् । अपामार्गे ।

शैत्य न० शीतस्य भावः ष्यञ् । शीतलत्वे ।

शैथिल्य न० शिथिलस्य भावः ष्यञ् । अदृढसंयोगभेदे ।

शैनेय पु० शिनेर्गोत्रापत्यम् ढक् । सात्यकिनाम्नि यादवे ।

शैल न० शिलायां भवः अण् । शैलेये गन्धद्रव्यभेदे । स्वार्थे कन् । तत्र, शिलाजतुनि च । शिलाः सन्त्यस्य प्रशा० अण् । पर्वते पु० ।

शैलगन्ध न० शैलस्य शैलजस्येव गन्धोऽस्य । शावरचन्दने ।

शैलज न० शैले पर्व्वते जायते जन—ड । स्वनामख्याते गन्धद्रव्यभेदे । गजपिप्पल्याम् दुर्गायाञ्च स्त्री० ।

शैलधर पु० शैलं गोवर्द्धनपर्वतं धरति धृ—अच् । श्रीकृष्णे ।

शैलपत्र पु० शैलमिव सुगन्धि पत्रमस्य । बिल्ववृक्षे ।

शैलभित्ति पु० शैलं भिनत्ति भिद—क्तिच् । टङ्के पाषाणदारणास्त्रे ।

शैलराज पु० शैलानां नगानां राजा टच् समा० । हिमाचले

शैलबीज पु० शैलं तन्मध्यं दूरं धावति अण् शैलं बीजं यस्य । भल्लातके ।

शैलशिविर न० शैलानां नगानां शिविरमिव । समुद्रे

शैलसार पु० न० शैलस्य सारइव । शिलाजतुनि ।

शैलसुता स्त्री० ६त० । पार्वत्याम् ।

**शैलाग्र** न० शैलस्याग्रम् । पर्वतशृङ्गे ।

**शैलाज** न० शिलायां जायते जन–ड स्वार्थेऽण् । शैलजे ।

**शैलाट** पु० शैलं पर्वतमटति अट–अण् । सिंहे, किराते, शुक्लवर्ण-काचे, देवले च ।

**शैलादि** पु० शिलादस्यापत्यम् इञ् । शिवपार्श्वचरे नन्दिनि ।

**शैलालिन्** पु० शिलालिना ऋषिणा प्रोक्तं नटसूत्रमधीयते णिनि । नटे शैलूषे ।

**शैली** स्त्री०शीलमेव स्वार्थे अण् ङीप् । चारित्रे, 'आचार्य्याणा मियं शैली यत्सामान्येनाभिधाय विशेषेण विवृणोतीति प्राहुः' ।

**शैलूष** पु० शिलूषस्यापत्यम् अण् । नटे, बिल्वहक्षे, धूर्त्ते, तालधारके च

**शैलूषिक** पु० शैलूषं तद्वृत्तिमन्वेष्टा ठक् । 'वृत्त्यन्वेषी नटानान्तु स तु शैलूषिकः स्मृत" इत्युक्ते नटवृत्त्यन्वेषिणि नट प्रधाने, तत्पत्न्यां स्त्री० ङीप् 'नटीं शैलूषिकीं चैव रजकीं वेणु जीविनीम् । गत्वा चान्द्रायणं कुर्य्यादि'ति स्मृतिः ।

**शैलेद्र** पु०शैलः इन्द्र इव । हिमालये । ६त० । शैलेशादयोऽप्यत्र

**शैलेन्द्रज** पु० शैलेन्द्रे हिमालये जायते जन–ड । भूर्ज्जवृक्षे ।

**शैलेय** न० शिलायां भवः ढक् । शैलजाख्ये गन्धद्रव्यभेदे पर्वतजात-मात्रे त्रि० । सिंहे, भ्रमरे च पु० ।

**शैलोद्भवा** स्त्री० शैलं पर्वतमुद्भिद्य भवति भू–अच् । क्षुद्रपाषाणभेदि-नि वृक्षे पार्वत्याञ्च ।

**शैव** न० शिवमधि कृत्य कृतो ग्रन्थः अण् । वेदव्यासप्रणीते शिवप्रभाव-वर्णनात्मके महापुराणभेदे । शिवो देवताऽस्य अण् । शिवभक्ते त्रि० । तस्येदमण् । शिवसम्बन्धिनि त्रि० ] शैवले न० ।

**शैवल** न० शी+वलच् । पद्मकाष्ठे, शैवाले च 'वहतो बकुशैवलच्छ-तामि'ति नैषधम् ।

**शैवलिनी** स्त्री० शैवलानि सन्त्यस्याः इनि । नद्याम् । [धभेदे ।

**शैवाल** न० शी–वालम् स्वार्थे अण् । (शेओयाला) जलजाते पदा-

**शैव्य** पु०शिवेर्गोत्रापत्यम् ञ्य । शिविगोत्रजे राजभेदे 'शैव्यश्च नरपु-

कुर्व' इति गीता। शिशितोऽधिगतः अण्। घोटकजाते, शैश-
वास्य घोटके च।

शैशव न० शिशोर्भावः अण्। शिशुकाले अवस्थाभेदे।

शैशिर पु० शिशिरं प्रियं यस्य अण्। श्यामचटके। शिशिरे भवः।
ऋत्वण्। शिशिरजाते त्रि०।

शो तीक्ष्णीकरणे दिवा०प०सक०अनिट्। श्यति अशात्–अशासीत्।

शोक पु० शुच–घञ्। इष्टवियोगजाते दुःखानुगुणे चित्तवृत्तिभेदे।

शोकनाश पु० शोकं नाशयति नश–णिच्–अण्। अशोकवृक्षे।
६त०। शोकध्वंसे।

शोकहारी स्त्री०शोकं हरति हृ–अण् ङीप्। वनवर्वरिकायाम्

शोकारि पु०६त०। कदम्बवृक्षे।

शोचिष्केश पु० शोचिः केशइव यस्य। वह्नौ, चित्रकवृक्षे च।

शोचिस् न० शुच–इसि। प्रभायाम्, रोचिषि च। [तत्रैव।

शोच्य त्रि० शुच–यत्। क्षुद्रे, अवरे अनुकम्पनीये च। स्वार्थे, कन्।

शोण गतौ सक०वर्णे अक० भ्वा० पर० सेट्। शोणति अशोणीत्
चङि न ह्रस्वः।

शोण न० शोण-अच्। सिन्दूरे, रुधिरे च। रक्तेक्षौ, मङ्गले, पट्टे,
अग्नौ, चित्रके, श्योनाके वृक्षे, नदभेदे, रक्तवर्णे, च पु० तद्वति त्रि०।
वनहरिद्रायां स्त्री०।

शोणक पु० शोणइव कन् श्योनाकवृक्षे।

शोणझिण्टिका स्त्री० कर्म०। शोणझिण्ट्याम्, रक्तसैरेये च।

शोणझिण्टी स्त्री० शोणा झिण्टीव। कुरुवके, कण्टकिन्याञ्च।

शोणपत्र पु० शोणं पत्रमस्य। रक्तपुनर्णवायाम्।

शोणपुष्पक पु० शोणं पुष्पमस्य कप्। कोविदारे।

शोणपुष्पी स्त्री० शोणं पुष्पमस्याः ङीप्। सिन्दूरपुष्प्याम्।

शोणरत्न न० कर्म०। पद्मरागमणौ।

शोणाक न० रक्तवर्णमकति अण् (शोना)। क्षुपभेदे

शोणित न० शोण इतच्। रुधिरे।

शोणितचन्दन न० शोणितं रुधिरमिव चन्दनम् । रक्तचन्दने
शोणितपुर न० शोणितमिव रक्तं पुरम् । बाणासुरनगरे ।
शोणोपल पु० कर्म० माणिक्ये मणौ । [तत्रैव ।
शोथ पु० शु-थन् । हस्तपादादेः स्फीतताकारके रोगभेदे । स्वार्थे कन् ।
शोथघ्नी स्त्री० शोथं हन्ति हन-क । पुनर्णवायाम् शालपर्ण्याञ्च ।
शोथनाशके औषधमात्रे त्रि० ।
शोथजि(हृ)त् पु० शोथं जयति हरति वा जि-हृ-क्विप् भल्लातके
शोथजिह्म पु० शोथे जिह्मः विपरीताचरणशाली । पुनर्णवायाम्
शोधन न० शुध-णिच्-ल्युट् । शौचे, क्रियायाम् मलादेर्विरेचने दोष-
निवारणे, ऋणादिनिर्यातने च । शुध-णिच्-ल्युट् । निम्बुके,
पु० । शुद्धिकारके त्रि० । शुध्यत्यनया करणे ल्युट् ङीप् ।
सम्मार्जन्याम्, ताम्बुलवल्यां, नील्याञ्च स्त्री० ङीप् ।
शोधनाधीश न० ६त० । जयपाले ।
शोधित त्रि० शुध-णिच्-क्त । मलाद्यपसारणेन कृतसंस्कारे, मार्जिते ।
शोफ पु० शु-फन् । शोथे ।
शोफघ्नी स्त्री० शोफं हन्ति हन-क । शालपर्ण्याम्, रक्तपुनर्णवायाञ्च
शोफनाशन पु०शोफं नाशयति नश-णिच्-ल्यु । नीलवृक्षे ।
शोफहृत् पु० शोफं हरति हन-क्विप् । भल्लातके ।
शोभन न० शोभते शुभ-ल्यु । पद्मे, विष्कम्भादिषु पञ्चमे योगे पु०। शो-
भायुक्ते त्रि० ।
शोभनक पु० शोभनाय कायति कै-क । शोभाञ्जनवृक्षे ।
शोभना स्त्री० शोभयति लेपनात् शुभ-णिच्-ल्यु । हरिद्रायां, गोरो-
चनायाञ्च ।
शोभा स्त्री० शुभ-अ । दीप्तौ ।
शोभाञ्जन पु० शोभायै अज्यते अन्ज-ल्युट् । (सजना)वृक्षे
शोष पु० शुष-वञ् वातादिना जलाद्यपहारेण कठिनकरणे शोषयति
शुष—णिच्-अच् । यक्ष्मरोगे ।
शोषण न० शुष-ल्युट् । चोषणेन, रसास्वादने, शोषे च शोषयति शुष-

शिष-ल्युट् । भक्ष्यादनः शोषणश्चेत्युक्ते ज्वरभेदे, श्योनाकवृक्षे च पु० ।

शौषसम्भव न० सम्भवत्यस्मात् सं भू-अप् ६त० । पिप्पलीमूले

शौक न० शुकानां समूहः अण् शुकसमुदाये ।

शौकर न० शूकरस्य वराहस्येदम् अण् । तीर्थभेदे ।

शौक्तिकेय न० शुक्तिकायां भवम् । ढक् । मुक्तायाम् ।

शौक्तेय न० शुक्तौ भवम् ढक् । मुक्तायाम् ।

शौक्ल्य पु० शुक्लस्य भावः ष्यञ् । श्वेततायाम् श्वेतवर्णे ।

शौच न०शुचेर्भावः अण् । शुद्धौ, पवित्रतायाम् 'अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः स्वधर्मे च व्यवस्थानं शौचमित्यभिधीयते' इति स्मृत्युक्ते धर्म्मविशेषे च ।

शौट गर्व्वे भ्वा० पर०सक० सेट् । शौटति अशौटीत् । चङि न ह्रस्वः

शौटीर पु० शौट-ईरन् । त्यागिनि-वीरे च । गर्वान्विते त्रि०

शौटीर्य्य न० शौटीरस्य वीरस्य भावः ष्यञ् । वीर्य्ये, पराक्रमे, गर्व्वे च।

शौड गर्व्वे भ्वा० पर० सक० सेट् चङि न ह्रस्वः । शौडति अशौडीत् ।

शौण्ड त्रि० शुण्डायां सुरायामभिरतः अण् । मत्ते, दक्षे च ।

शौण्डिक पु० शुण्डा सुरा पण्यमस्य ठक् । मद्यविक्रेतरि जातिभेदे।

शौण्डी स्त्री० शुण्डा करिकरस्तदाकारः अस्त्यस्य अण् गौ० ङीप् । चव्ये, गजपिप्पल्याञ्च ।

शौण्डीर पु० शुण्डा गर्वोऽस्त्यस्य ईरन् स्वार्थेऽण् । गर्वान्विते त्रि० ।

शौद्र पु० शूद्रायां द्विजातिभिरूढायां भवः अण् । द्वादशपुत्रमध्ये शूद्राजाते द्विजातिपुत्रभेदे ।

शौद्धोदनि पु० शुद्धोदनस्यापत्यम् इञ् । बौद्धमुनिभेदे ।

शौधिका स्त्री०शोधः शोधनं मलविरेकस्तस्मै हितः ठक् । रक्तकङ्गौ।

शौनक पु० शुनकस्यापत्यमण् । मुनिभेदे 'नैमिषे निमिषक्षेत्रे ऋषयः शौनकादय' इति भागवतम् ।

शौनिक पु० शूना प्राणिवधस्थानं प्रयोजनमस्य ठक् । मांसविक्रेतरि (कसाइ) मृगयायां मृगयाजीवे च ।

शौभ न० शोभायै हितम् अण्। व्योमगामिनि पुरभेदे। देवे पु०

शौभाञ्जन पु० शोभाञ्जनएव स्वार्थेऽण्। (सजना) वृक्षभेदे

शौभिक त्रि० शोभा शिल्पमस्य ठक्। इन्द्रजालिके।

शौरि पु० शूरस्य यादवभेदस्य वसुदेवस्य सूर्य्यस्य वा गोत्रापत्यम् इञ्। विष्णौ, शनैश्वरे च।

शौर्य्य नः शूरस्य भावः ष्यञ्। वीर्य्ये शक्तौ च।

शौल्किक पु० शुल्के राजादिदेये करे तदादाने अधिकृतः ठक्। शुल्कादानाधिकृते।

शौल्किकेय पु० शुल्किकः देशभेदः ततः भवः ढक्। विषभेदे।

शौलिकक पु० शुल्कः कांस्यस्तन्मयपात्रादि पण्यमस्य ठक्। कांस्यकारे (कँासारी) जातिभेदे।

शौवस्तिक त्रि० श्वःपरदिने भवः श्वस् + ठक् तुट् च। भाविदिनस्थायिनि पदार्थे।

शौष्कल पु० शुष्कलं शुष्कमांसं पण्यमस्य अण्। शुष्कमांसविक्रेतरि। तद्भक्ष्यमस्य अण्। शुष्कमांसभक्षके त्रि०।

श्चुत क्षरणे भ्वा० पर० अक० सेट्। श्चोतति अश्चुतत् अश्चोतीत्

श्च्युत क्षरणे भ्वा० पर० अक० सेचने सक० सेट्। श्च्योतति अश्च्युतत् अश्च्योतीत्।

श्च्योत पु० श्च्युत-घञ्। समन्तात् सेचने।

श्मन् न० शेते शी-मनिन् डिच्च। मुखे, शवे अदन्तोऽप्यत्र।

श्मशान न० श्मानः शवाः शेरतेऽत्र शी-आनच् डिच्च। श्मन् शब्देन शवः प्रोक्तः शानं तत्स्थानमुच्यते' इति निरुक्तः। शवदाहस्थाने

श्मशानकाली स्त्री० श्मशानस्या काली। कालिकाभेदे।

श्मशानवासिन् पु० श्मशाने वसति वस-णिनि। महादेवे वटुकभैरवे च। श्मशानवासकर्त्तरि चण्डालादौ त्रि०

श्मश्रु न० श्म पुंमुखं श्रूयते लभ्यतेऽनेन श्रु-डु। पुरुषमुखस्थे लोमसङ्घे। [पोटाख्यायां स्त्रियाम्।

श्मश्रुमुखी स्त्री० श्मश्रु मुखे यस्याः ङीप्। पुरुषलक्षणयुक्तायां

**श्मश्रुल** पु० श्मश्रु विद्यतेऽस्य लच्। श्मश्रुयुक्ते 'श्मश्रुलैर्मुखैरिति रघुः।

**श्मश्रुवर्द्धक** पु० श्मश्रु वर्द्धयति छिनत्ति वृध-ण्वुल्। नापिते क्षुरकर्मकारके।

**श्मील** निमेषे भ्वा० पर० अक० सेट्। श्मीलति अश्मीलीत्।

**श्यान** त्रि० श्यै-क्त सङ्कोचविशेषप्राप्ते घनीभूते 'पथश्च्याश्यानकर्द्दमानिति रघुः।

**श्याम** पु० श्यै-मक्। वृद्धदारकवृक्षे प्रयागतीर्थस्थे वटे, कोकिले, धुस्तूरे, पीलुवृक्षे, श्यामाके, गन्धतृणे, कृष्णवर्णे, हरिद्वर्णे च। तद्वति त्रि० मरिचे, सिन्धुलवणे च न०।

**श्यामक** न० श्याम+संज्ञायां कन्। रोहिषतृणे श्यामाके (शामा) धान्यभेदे पु०।

**श्यामकण्ठ** पु० श्यामः कण्ठोऽस्य। मयूरे, शिवे, नीलकण्ठविहगे च

**श्यामकन्दा** स्त्री० श्यामः कन्दोऽस्याः अतिविषायाम्।

**श्यामकाण्डा** स्त्री० श्यामः काण्डोऽस्याः। गण्डदूर्वायाम्।

**श्यामग्रन्थि** स्त्री० श्यामो ग्रन्थिरस्याः। गण्डदूर्वायाम्।

**श्यामपत्र** पु० श्यामानि पत्राणि यस्य। तमालवृक्षे।

**श्यामल** पु० श्यामवर्णं लाति ला-क। पिप्पले कृष्णवर्णयुक्ते त्रि०। अश्वगन्धायां, कटभ्यां जम्ब्वां, कस्तूर्य्याञ्च स्त्री०।

**श्यामलचूडा** स्त्री० श्यामला चूडाऽस्याः। गुञ्जायाम्।

**श्यामलता** स्त्री० कर्म०। स्वनामख्याते लताभेदे। श्यामलस्य भावः तल्। कृष्णवर्णे, हरिद्वर्णे च।

**श्यामलिका** स्त्री० श्यामलो वर्णोऽस्त्यस्याः ठन्। नील्यामौषधौ

**श्यामलेक्षु** पु० कर्म० (काजला) इक्षुभेदे।

**श्यामसुन्दर** पु० श्यामोऽपि सुन्दरः। श्रीकृष्णे 'श्यामसुन्दर! ते दास्य इति भागवतम्।

**श्यामा** स्त्री० श्यै-मन्। शारिवौषधौ, प्रियङ्गौ, यमुनायां, रात्रौ, कृष्णत्रिवृति, नील्याम्, गुग्गुलौ, सोमलतायां, गुन्द्रायाम् कृष्णायाम्, अम्बिकायां गुडूच्यां, कस्तूर्य्याम्, वटपत्र्यां वन्दायां, नीलपुन-

सोमवार्यां, पिप्पल्यां, हरिद्रायां, नीलदूर्वायां, हस्तग्रां, पद्मबीजे गवि, छायायां, शिंशपायां पक्षिभेदे (शामा) स्त्रीमात्रे 'शीत-काले भवेदुष्णा ग्रीष्मे च सुखशीतला। तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कीर्त्तिते'' त्युक्तलक्षणे स्त्रीविशेषे च।

श्यामाक पु० श्यामेव इवार्थे कन्। (श्यामा) धान्यभेदे।

श्यामाङ्ग पु० श्यामं हरिद्वर्णमङ्गमस्य। बुधग्रहे, कृष्णदेहे त्रि० स्त्रियां ङीप् 'श्यामाङ्गी विगताम्बरा'' मिति तन्त्रम्।

श्यामाम्लो स्त्री० कर्म०। नीलाम्लीकुसुमे।

श्याल पु० श्यै कालन्। पत्नीभ्रातरि स्वार्थे ठक् श्यालिकोऽप्यत्र।

श्यालिका स्त्री० श्यै-कालन् संज्ञायां कन्। अत इत्वम्। पत्नी-भगिन्याम्।

श्याव पु० श्यै-वन्। कृष्णपीतमिश्रवर्णे। तद्वति त्रि०।

श्यावदत् त्रि० श्यावो दन्तो यस्य दत्रादेशः श्यामवर्णदन्तयुक्ते

श्यावदन्त पु० कर्म०। स्वभावतः कृष्णवर्णयुक्ते दन्ते, इत० कप् तद्युक्ते त्रि० 'सुरापः श्यावदन्तक' इति स्मृतिः।

श्येत पु० श्यै-इतच्। शुक्लवर्णे तद्वति त्रि० स्त्रियां ङीप् तस्य नश्च। श्येनी।

श्येन पु० श्यै-इनन्। पक्षिभेदे (बाज) पाण्डुरवर्णे च तद्वति त्रि०।

श्येनघण्टा स्त्री० श्येना घण्टेव। दन्तीवृक्षे।

श्यै गतौ भ्वा० आ० सक० अनिट्। श्यायते अश्यास्त।

श्यैनम्पाता स्त्री० श्येनस्य पातो यत्र अण् मुम् च। मृगयायाम्।

श्योनाक(श्योणाक) पु० श्यै-ना(णा)क। (सोणा) वृक्षभेदे।

श्रङ्क सर्पणे भ्वा० आ० सक० सेट् इदित्। श्रङ्कते अश्रङ्किष्ट।

श्रग गतौ भ्वा० पर० सक० सेट् इदित्। श्रङ्गति अश्रङ्गीत्।

श्रण दाने भ्वा० पर० सक० सेट्। श्रणति अश्राणीत् अश्रणीत् घटा-दि० श्रणयति।

श्रण दाने चु० उ० सक० सेट्। श्राणयति ते अशिश्रणत् त।

श्रत् अव्य० श्रो-डति । श्रद्धायाम् ।

श्रथ यत्ने अक० प्रतिहर्षे सक० चु० उभ० सेट् । श्राथयति ते अशि-

श्रथ दौर्बल्ये अ० चु० उभ० अक० सेट् । श्रथयति ते अशश्रथत् त ।

श्रथ बधे भ्वा० पर० सक० सेट् । श्रथति अश्रथीत् अश्राथीत् ।

श्रथ बन्धे मोक्षे बधे च वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् ।
 श्राथयति ते श्रथति अशिश्रथत् त अश्रथीत् अश्राथीत् ।

श्रथ शैथिल्ये अक० तत्करणे सक० भ्वा० आ० सेट् इदित् । श्रन्थते
 अश्रन्थिष्ट ।

श्रथन न० श्रथ-ल्युट् । बधे यत्ने प्रतिहर्षे च ।

श्रद्धा स्त्री० श्रत्-धा-अङ् । आदरे, गुरुवेदान्तवाक्यादिषु विश्वासे, स्पृ-
 हायां, शुद्धौ, चित्तप्रसादे प्रत्ययो 'धर्मकार्य्येषु या श्रद्धेत्य भिधी-
 यते' इति स्मृत्युक्ते धर्मकार्य्येषु प्रत्यये च ।

श्रद्धालु स्त्री० श्रद्धा+आलुच् । स्पृहावत्यां स्त्रियाम् श्रद्धायुक्ते त्रि०

श्रन्थ ग्रन्थने बधे च वा चु० उ० पक्षे भ्वा० पर० सक० सेट् । श्रन्थयति-
 ते श्रन्थति अशश्रन्थत् त । अश्रन्थीत् ।

श्रन्थ मोचने प्रतिहर्षे च क्र्या० पर० सक० सेट् । श्रथ्नाति अश्रन्थीत्

श्रन्थन न० श्रन्थ-ल्युट् ग्रन्थने ।

श्रपित त्रि० पु० श्रा क्त-णिच् पुक् ह्रस्वश्च । पक्वे ।

श्रम तपसि० आयासे खेदे च अक०भ्वा०शमादि०प०सेट् क्त्वावेट् ।
 श्राम्यति अश्रमत् अश्रमीत् । श्रान्त्वा श्रमित्वा ।

श्रम पु० श्रम-घञ् न वृद्धिः । तपसि, खेदे, आयासे, शस्त्राभ्यासे च ।

श्रमण पु० श्रम-युच् । यतिभेदे । भिक्षाजीविनि त्रि० । जटामांस्यां,
 मुण्डीर्य्यां, शरीरभेदे, कुदर्शनायां स्त्रियां च स्त्री० ।

श्रमिन् त्रि० श्रम-इनि । श्रमयुक्ते ।

श्रम्भ प्रमादे भ्वा० आ० अक०सेट् । श्रम्भते अश्रम्भिष्ट ।

श्रय पु० श्रि-अच् । आश्रये । ल्युट् । तत्रैव न० ।

श्रव पु० श्रणोत्यनेन श्रु-अप् । कर्णे, ख्यातौ च ।

श्रवण न० श्रणोत्यनेन श्रु-ल्युट् । कर्णे शब्दग्राहकेन्द्रियभेदे भावे

ल्युट्। श्रुतौ। अश्विन्यादिषु द्वाविंशे नक्षत्रे पु॰ स्त्री॰ क्लीवत्व-मपि 'अमार्कपाते श्रवणं यदि स्यादिति' स्मृतिः मुण्डरिकाद्रुमे स्त्री॰

श्रवणद्वादशी स्त्री॰ श्रवणेन युक्ता द्वादशी शाक॰। 'मासि भाद्रपदे युक्ता द्वादशी श्रवणान्विते'त्युक्तायां भाद्रशुक्लद्वादश्याम्।

श्रवणशीर्षिका स्त्री॰ श्रवणमिव शीर्षमस्याः कप् अत इत्वम्। श्रावणीवृक्षे।

श्रविष्ठा स्त्री॰ श्रूयते श्रु—अप् श्रवः प्रसिद्धिरस्त्यस्याः मतुप् अतिशयेन श्रववती इष्ठन् मतुपो लुक्। धनिष्ठानक्षत्रे।

श्रविष्ठाज पु॰ श्रविष्ठानक्षत्रे जायते जन—ड। बुधग्रहे।

श्रवस् न॰ श्रूयतेऽनेन श्रु—असि। कर्णे। कर्मणि असि। कीर्त्तौ।

श्रा विक्लृत्तौ अदा॰प॰अनिट्। श्राति अश्रासीत्।

श्रा पाके अदा॰प॰सक॰ अनिट् घटा॰। श्राति अश्रासीत् श्रपयति।

श्राण त्रि॰ श्रा—क्त। पक्वे। यवाग्वां स्त्री॰।

श्राद्ध न॰ श्रद्धा—हेतुत्वेनास्त्यस्य अण्। 'श्रद्धया दीयते यस्मात् श्राद्धं तेन निगद्यते' इत्युक्ते पित्रादिभ्यः श्रद्धया देये द्रव्ये चरूद्यौ अण्। श्रद्धायुक्ते त्रि॰।

श्राद्धदेव पु॰ श्राद्धोद्देश्यानां पितॄणां देवः शाक॰। यमे, मनुभेदे च।

श्राद्धदेवता स्त्री॰ श्राद्धे देवता त्यक्तद्रव्यस्योद्देश्या। 'पितरः श्राद्धदेवता' इति स्मृत्युक्तेषु पितृषु।

श्राद्धशाक न॰ श्राद्धयोग्यं शाकम्। कालशाके।

श्राद्धिक त्रि॰ श्राद्धे देयं श्राद्धं तद्द्रव्यं भक्ष्यत्वेनास्त्यस्य वा ठन्। श्राद्धदेये भक्ष्ये, श्राद्धदेयद्रव्यभोक्तरि च।

श्राद्धिन् त्रि॰ श्राद्धं तद्द्रव्यं भक्ष्यत्वेनास्त्यस्य इनि। श्राद्धदेयान्नभोक्तरि

श्रान्त त्रि॰ श्रम—क्त। श्रमयुक्ते, शान्ते, जितेन्द्रिये च।

श्रान्तसंवाह न॰ श्रान्तस्य श्रमस्य संवाहः दूरीकरणम्। पादाघातना-दिना। श्रमनिवारणे।

श्राम मन्त्रणे अ॰चु॰उभ॰सक॰सेट्। श्रामयति ते अशश्रामत् त।

श्रावण पु॰ श्रवणेन युक्ता पौर्णमासी श्रावणी साऽस्मिन् मासे अण्।

वैशाखादिषु चतुर्थे चान्द्रे मासे उपचारात् कर्कटस्थरविके सौर-मासे, पाणखण्डे च श्रवणेन कर्णेन निर्वृत्तः अण्। कर्णमाध्ये मत्स्यभेदे। श्रवणनक्षत्रेण युक्ता पौर्णमासी अण्। चान्द्रश्रावणमासीयपौर्णमास्यां स्त्री० ङीप्। (मुण्डरि) हृक्षभेदे च।

श्रावणिक पु० श्रावणी श्रवणनक्षत्रयुक्ता पूर्णिमाऽस्यस्मिन् मासे ठन्। चान्द्रश्रावणमासे।

श्रावस्ती स्त्री० श्रु–क्विप् पृ० ङीप्। धर्म्मपत्तनाख्ये नगरीभेदे।

श्रि सेवने भ्वा० उ०सक०सेट्। श्रयति ते अशिश्रियत् त।

श्रित त्रि० श्रि–क्त। सेविते, आश्रिते च।

श्रिष दाहे भ्वा०पर०सक०सेट् क्त्वा वेट्। श्रेषति अश्रेषीत्।

श्री पाके क्र्या०उ०सक० अनिट्। श्रीणाति श्रीणीते अश्रैषीत्।

श्री स्त्री० श्रि क्विप् नि०। लक्ष्म्यां, लवङ्गे, शोभायां, वाण्यां, वेशरचनायां, सरलद्रवे, धर्मार्थकामेषु सम्पत्तौ, प्रकारे, उपकरणे, वृद्धौ, विभूतौ, अधिकारे प्रभायां कीर्त्तौ, ऋद्धौ, सिद्धौ, कमले, विल्वद्रुमे हरिनामौषधौ, 'देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम्। सिद्धं सिद्धाधिकारांश्च श्रीपूर्वं समुदीरयेदित्युक्तेषु देवादीनां नामोच्चारणायोपाधिभेदे च। रागभेदे पु०।

श्रीकण्ठ पु० श्रीः शोभा कण्ठेऽस्य शिवे, श्रीतस्य कण्ठसन्निकर्षे शोभाधिक्यात्तस्य। हस्तिनापुरस्य उत्तरपश्चिमस्थे कुरुजाङ्गलाख्ये देशे च।

श्रीकन्दा स्त्री० श्रीः शोभा तया युक्तः कन्दोऽस्याः। वन्ध्याकर्कोट्याम्।

श्रीकर न० श्रियं शोभां करोति कृ–अच्। रक्तोत्पले, विष्णौ, दायनिबन्धकारके पण्डितभेदे च। शोभाकारके त्रि०।

श्रीकान्त पु० ६त० विष्णौ। श्रीनाथश्रीपत्यादयोऽप्यत्र।

श्रीखण्ड न० श्रियः शोभायाः खण्ड इव यत्र। चन्दने।

श्रीगर्भ पु० श्रीर्गर्भेऽस्य। विष्णौ, खड्गे च 'श्रीगर्भो विजयश्चेति खड्गनामाष्टकम्।

श्रीगृह पु० श्रियः गृह इव यत्र। पक्षिणां पानीयशालायाम्।

श्रीघन पु० श्रिया बुद्ध्या घनः । बुद्धभेदे । दध्नि न० ।

श्रीचक्र न० श्रियाः चक्रं यन्त्रभेदः । ‘बिन्दुत्रिकोणवसुकोणदशारयुग्मं मन्वस्रनागदलसङ्गतषोडशारम् । वृत्तत्रयञ्च धरणीसदनत्रयञ्च श्रीचक्रमेतदुदितं परदेवतायाः’ इति तन्त्रोक्ते त्रिपुरासुन्दरीपूजाङ्गे यन्त्रभेदे ।

श्रीज पु० श्रियो जायते जन–ड । कामदेवे । श्रीनन्दनादयोऽप्यत्र ।

श्रीताल पु० श्रीयुक्तस्तालः । तालवृक्षतुल्ये वृक्षभेदे ।

श्रीद पु० श्रियं धनं ददाति दा–क । कुबेरे । धनदा तत्र त्रि० ।

श्रीधर पु० श्रियं धरति धृ अच् । विष्णौ, ‘अतिसुन्दरं द्विचक्राङ्कं वनमालाविभूषितम् । श्रीधरं देवि ! विज्ञेय’मित्युक्ते शालग्राममूर्त्तिभेदे न० ।

श्रीनिकेतन पु० श्रियं निकेतयति नितरां वासयति नि+कित–णिच् ल्यु । विष्णौ । द्वत० । श्रीवासे न० ।

श्रीनिवास पु० निवसत्यस्मिन् नि+वस घञ् द्वत० । विष्णौ ।

श्रीपथ पु० श्रीयुक्तः पन्थाः । राजपथे ।

श्रीपर्ण न० श्रीर्लक्ष्मीः पर्णे दलेऽस्य । पद्मे । श्रीयुक्तं पर्णमस्य अग्निमन्थवृक्षे पु० । [कट्फलवृक्षे ।

श्रीपर्णिका स्त्री० श्रीयुक्तं पर्णमस्याः संज्ञायां कन् अत इत्वम् ।

श्रीपर्णी स्त्री० श्रीयुक्तानि पर्णान्यस्याः ङीप् । गाम्भारीवृक्षे, कट्फलवृक्षे, शाल्मलीवृक्षे अग्निमन्थवृक्षे च ।

श्रीपिष्ट पु० श्रियै शोभायै पिष्यते पिष–क्त । सरलद्रवरसे ।

श्रीपुत्र पु० द्वत० कामदेवे श्रियः पुत्रो भ्राता सहजत्वात् । अश्वे, उच्चैःश्रवसि च ।

श्रीपुष्प न० श्रीयुक्तं पुष्पम् । लवङ्गे । पद्मकाष्ठे च ।

श्रीफल पु० श्रीयुक्तं फलमस्य । बिल्ववृक्षे राजादन्याञ्च ।

श्रीभद्रा स्त्री० श्रीयुक्तं भद्रमस्याः । भद्रमुस्तके ।

श्रीभागवत न० श्रीयुक्तं भागवतम्। अष्टादशपुराणेषु मध्ये द्वादशस्कन्धयुक्ते अष्टादशसाहस्रे व्यासप्रणीते पुराणे।

श्रीभ्रातृ पु० श्रियः लक्ष्म्या भ्राता अनुजत्वात्। अश्वे, चन्द्रे च।

श्रीमत् पु० श्रीरस्त्यस्य मतुप्। तिलकवृक्षे, अश्वत्थवृक्षे, विष्णौ, शिवे, कुबेरे च। शोभायुक्ते त्रि० स्त्रियां ङीप्। सा च राधिकायाञ्च। [पद्मायां कमलायाम्।

श्रीमलापहा स्त्री० श्रिया शोभया मलमपहन्ति अप+हन-ड। भूम-

श्रीमूर्त्ति स्त्री० श्रीपूर्वककथनयोग्यामूर्त्तिः। देवताप्रतिमायाम्।

श्रीरङ्गपत्तन न० श्रिया रङ्गस्य पत्तनमिव। दक्षिणस्थे देशभेदे।

श्रीरस पु० श्रिये रसोऽस्य। श्रीवेष्टे गन्धद्रव्ये।

श्रीराम पु० श्रीशब्दयुक्तो रामः। दशरथात्मजे नृपभेदे।

श्रील त्रि० श्री+अस्त्यर्थे लच्। शोभायुक्ते सम्पदादियुक्ते च।

श्रीलता स्त्री० श्रीयुक्ता लता। महाज्योतिष्मत्यां लतायाम्।

श्रीवत्स पु० वदति महत्त्वं वद-स श्रीयुक्तो वत्सः। महत्त्वलक्षणश्वेतरोमावर्त्तविशेषे। स अस्त्यस्य अच्। विष्णौ।

श्रीवत्सक पु० श्रीवत्सः चिह्नभेदः तेन कायति कै—क। हृदयस्थश्वेतरक्ताकाररोमयुक्ते अश्वभेदे।

श्रीवत्सभृत् पु० श्रीवत्सं बिभर्त्ति भृ-क्विप्। विष्णौ।

श्रीवत्सलाञ्छन पु० श्रीवत्सोलाञ्छनं यस्य। विष्णौ। श्रीवत्साङ्कादयोऽप्यत्र।

श्रीवराह पु० श्रिया युक्तो वराहः विष्णोर्दशस्ववतारेषु वराहावतारे।

श्रीवाटी स्त्री० श्रिया वाटीव। नागवल्लीभेदे।

श्रीवारक पु० श्रियं वारयति कामयते ण्वुल्। शितावरके।

श्रीवास पु० श्रियै वासः सौरभमस्य। सरलद्रवरसे (टारपिन्)।

श्रीवासस् न० श्रियै वासयति वस-णिच् असि। सरलद्रवरसे।

श्रीविद्या स्त्री० श्रियै शिवाय विद्या। त्रिपुरासुन्दर्य्याम्।

श्रीवृक्ष पु० श्रियः शोभायाः वृक्ष इव। अश्वस्य हृदयस्थे श्वेतरोमावर्त्तभेदे।

श्रीवेष्ट पु० श्रियै वेष्ट्यतेऽसौ वेष्ट-घञ् । सरलद्रवनिर्यासे (तारपिन) ।

श्रीश पु० ६त० । विष्णौ ।

श्रीसहोदर पु० ६त० । चन्द्रे, उच्चैःश्रवसि अश्वे च ।

श्रीहस्तिनी स्त्री० श्रीयुक्ता हस्तिनी । (हातिशुण्डा) । वृक्षभेदे ।

श्रु गतौ भ्वा०पर०सक०अनिट् । श्रवति अश्रौषीत् ।

श्रु श्रवणे स्वा० पर० सक० अनिट् । शृणोति अश्रौषीत् ।

श्रु(स्रु)घ्निका स्त्री० श्रु(स्रु)घ्नः देशभेदः कारणत्वेनास्त्यस्य ठन् ।
सर्ज्जिकाक्षारे ।

श्रुत न० श्रूयते श्रु-क्त । शास्त्रे, तज्ज्ञाने च 'श्रुतान्वित' इति भट्टिः ।
श्रवणेन गृहीते, अवधृते च त्रि० ।

श्रुतकीर्त्ति स्त्री० । कुशध्वजकन्यायां शत्रुघ्नपत्न्याम् । श्रुता विख्याता
कीर्त्तिरस्य । विख्यातयशसि त्रि० ।

श्रुतदेवी स्त्री० श्रुतस्य शास्त्रस्य देवी । सरस्वत्याम् ।

श्रुतबोध पु० श्रुत मात्रं बोधयति बुध-णिच्-अच् । कालिदासकृते
छन्दोग्रन्थभेदे ।

श्रुतश्रवस् पु० श्रुतं श्रवो यशोऽस्य । शिशुपालपितरि 'निर्वर्त्यतेऽरिः
क्रियया स श्रुतश्रवसः सुत' इति माघः ।

श्रुति स्त्री० श्रु-क्तिन् । कर्णे, श्रवणेन्द्रियजन्ये, ज्ञाने, वेदे च । अङ्क-
शास्त्रोक्ते त्रिभुजक्षेत्रादौ भुजकोट्योः संयुज्यमानरेखाभेदे च ।

श्रुतिकटु पु० श्रुतौ श्रवणे कटुः कठोरः । अलङ्कारोक्ते कठोरशब्द-
विन्यासरूपे काव्यदोषभेदे ।

श्रुतिजीविका स्त्री० श्रुतिं जीवयति मूलतयानुसरति जीव ल्युट् ।
स्मृतिशास्त्रे । [मात्रेण धारणायुक्ते ।

श्रुतिधर त्रि० श्रुत्या श्रवणमात्रेण धरति धारयति धृ-अच् । श्रवण-

श्रुतिमूल न० श्रुतिरेव मूलं धर्मप्रामाण्ये कारणम् । वेदरूपे धर्म्म-
बोधनप्रमाणे ६त० । यज्ञादौ, वेदशास्त्रबोधिते धर्मादौ च ६त० ।
कर्णमूले । [वेदपाठहीने बधिरे च ।

श्रुतिवर्ज्जित त्रि० श्रुत्या वेदाध्ययनेन कर्णेन वा वर्ज्जितः वृज-क्त ।

श्रुतिवेध पु० श्रुतेः कर्णस्य वेधो यत्र । कर्णवेधाख्ये संस्कारभेदे ।
श्रुतिस्फोटा स्त्री० श्रुताविव पत्रे स्फोटो यस्याः । कर्णस्फोटाख्य-
तायाम् । [शब्दालङ्कारभेदे ।
श्रुत्यनुप्रास पु० श्रूयते इति श्रुतिः शब्दस्तस्यानुप्रासः । अलङ्कारोक्ते
श्रुत्युक्त त्रि० श्रुतौ वेदे उक्तः विहितः । वेदविहिते धर्मादौ ।
श्रु(स्रु)वा स्त्री० श्रु(स्रु) क स्रुचायां यज्ञपात्रभेदे ।
श्रु(स्रु)वावृक्ष पु० श्रु(स्रु)वार्थो वृक्षः । (बइचि) विकङ्कत वृक्षे ।
श्रेढी स्त्री० श्रेण्यै राशीकरणाय ढौकते ढौक ड पृ० गौ० ङीष् ।
भिन्नजातीयद्रव्याणां भिन्नकरणाय अङ्कशास्त्रोक्ते गणनाप्रकारभेदे
श्रेढीव्यवहार पु० श्रेढ्या व्यवहारः । श्रेढीगणनार्थे लीलावत्युक्ते
उपायभेदे ।
श्रेणि(णी) स्त्री० श्रि-नि वा ङीप् । छिद्ररहितायां पङ्क्तौ ।
श्रेयस् न० अतिशयेन प्रशस्यम् ईयसुः श्रादेशः । धर्मे, मोक्षे, शुभे
च । अतिप्रशस्ते त्रि० स्त्रियां ङीप् । सा च हरीतक्यां, पाठायां,
गजपिप्पल्यां, रास्नायाञ्च ।
श्रेष्ठ पु० अतिशयेन प्रशस्यः इष्ठन् श्रादेशः । कुवेरे, नृपे, विप्रे, विष्णौ
च । गोदुग्धे न० अत्यन्तशस्ते त्रि० । स्थलपद्मिन्यां, मेदायाञ्च स्त्री०
श्रेष्ठकाष्ठ पु० श्रेष्ठं काष्ठमस्य । शाकवृक्षे (सेगुन) ।
श्रेष्ठाम्ल न० श्रेष्ठमम्लमस्य । वृक्षाम्ले ।
श्रेष्ठिन् पु० श्रेष्ठं धनादिकमस्य इनि । शिल्पिवणिजां श्रेष्ठे 'वहि
श्रेष्ठिचत्वरे प्रतिवसतीति मृच्छकटिकटीका ।
श्रै स्वेदे भ्वा० प० अक० अनिट् । श्रायति अश्रासीत् । विकृतौ घ-
टादि० श्रपयति ।
श्रोण पु० श्रोण-अच् । पङ्गौ । काञ्जिके स्त्री० ।
श्रोण संघाते भ्वा० प० अक० सेट् । चङि न ह्रस्वः । श्रोणति अश्रोणीत्
श्रोणि(णी) स्त्री० श्रोण-इन् वा ङीप् । कट्याम् पथि च ।
श्रोणिफलक न० श्रोणिः फलकमिव । प्रशस्तकटौ हृत० । कटिपार्श्वे ।
श्रोणिसूत्र न० श्रोणौ स्थितं सूत्रं श्रोणिस्थे खड्गादि बन्धनसूत्रे ।

श्रोतस् न० श्रु-असुन् तुट् च । कर्णे, नदीवेगे, इन्द्रिये च ।
श्रोत्र न० श्रूयतेऽनेन श्रु-ष्ट्रन् । शब्दज्ञानसाधने कर्णरूपे इन्द्रिये
श्रोत्रिय पु० छन्दो वेदमधीते वेत्ति वा छन्दस्+घञ् । वेदाध्ययनानु-
रते, 'एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य च । षट्कर्मनि-
रतो विप्रः श्रोत्रियो नाम धर्मवित्' इत्युक्ते विप्रे च ।
श्रौत त्रि० श्रुतौ विहितमण् । वेदविहिते धर्मादौ 'श्रौतं कर्म स्वयं
कुर्य्या'दिति स्मृतिः । गार्हपत्याहवनीयदक्षिणाग्निषु पु० ।
श्रौत्र न० श्रोत्र-स्वार्थे अण् । कर्णे । श्रोत्रियस्य भावः कर्म वा अण् ।
वैदिकस्य भावे 'श्रौत्राहन्तीचयौरिति' सिद्धान्त कौ० ।
श्रौषट् अव्य० श्रु-डौषटि यज्ञादौ हविर्दाने ।
श्लक्क सर्पणे भ्वा० आ० सक० सेट् इदित् । श्लङ्कते अश्लङ्किष्ट
श्लक्ष्ण त्रि० श्लिष-क्स्न नि० । अल्पे, चिक्कणे, लौहे च ।
श्लक्ष्णत्वच् पु० श्लक्ष्णा त्वगस्याः । अश्मन्तकवृक्षे ।
श्लग गतौ भ्वा० प० सक० सेट् इदित् । श्लङ्गति अश्लङ्गीत् ।
श्लथ दौर्बल्ये अद० चु० उभ० सक० सेट् । श्लथयति ते अशश्लथत् त
श्लथ पु० श्लथ-अच् । विरलसंयोगे, शिथिले, दुर्बले च ।
श्लाख व्याप्तौ भ्वा० प० सक० सेट् । चङि न ह्रस्वः । श्लाखति
अश्लाखीत् । [अशश्लाखत् ।
श्लाघ आत्मगुणाविष्करणे भा०आ० सक० सेट् चङि न ह्रस्वः । श्लाघते
श्लाघा स्त्री० श्लाघ-अ । प्रशंसायां, निजगुणाविष्करणे परिचर्य्यायाम्,
अभिलाषे च ।
श्लाघ्य त्रि० श्लाघ-ण्यत् । प्रशस्ये 'श्लाघ्यस्त्वनृशंस्यतु रावयो"रिति चण्डी
श्लिष दाहे भ्वा० प० सक० सेट् क्त्वा वेट् । श्लेषति अश्लेषीत् ।
श्लिष आलिङ्गने संसर्गे च सक० दि० अनिट् । श्लिष्यति अश्लिषत् आ-
लिङ्गने तु अश्लिक्षत् ।
श्लिष श्लेषे चु० उ० सक० सेट् । श्लेषयति ते अशिश्लेषत् त । भिन्नार्थ-
र्थकेऽभिन्नशब्दे 'आश्लेषि न श्लेषकवेरि'ति, नैषधम् ।

श्लिष्ट त्रि० श्लिष-क्त । आलिङ्गिते, संहते, श्लेषरूपशब्दालङ्कारयुक्ते शब्दे च । [युक्ते त्रि० ।

श्लीपद न० श्लीयुक्तं इवियुक्तं पदमस्मात् पृ० । (गोद) रोगभेदे तद्रोग-

श्लीपदप्रभव पु० श्लीपदाय रोगाय प्रभवति प्र+भू-अच् । आम्रवृक्षे ।

श्लीपदापह पु० श्लीपदं रोगमपहन्ति अप+हन-ड । पुत्रजीववृक्षे ।

श्लील त्रि० श्रीरस्त्यस्य लच् पृ० रस्य लः । शोभायुक्ते तद्विपरीतोऽहि अश्लीलः ।

श्लेष पु० श्लिष-घञ् । संसर्गे, दाहे, आलिङ्गने, शब्दालङ्कारभेदे च

श्लेष्मघ्ना स्त्री० श्लेष्माणं हन्ति हन-क टाप् । मल्लिकायां, केतक्याञ्च । ज्योतिष्मत्यां ङीप् ।

श्लेष्मण पु० श्लेष्माऽस्त्यस्य न । कफविशिष्टे ।

श्लेष्मन् पु० श्लिष-मनिन् । कफे ।

श्लेष्मल त्रि० श्लेष्म+अस्त्यर्थे लच् । कफयुक्ते (बहुयार) वृक्षे पु०

श्लेष्महन् पु० श्लेष्माणं हन्ति । कट्फलवृक्षे ।

श्लेष्मात पु० श्लेष्मणे अतति अत-अच् । श्लेष्मातकवृक्षे । [वृक्षभेदे ।

श्लेष्मातक पु० श्लेष्मणा सेवनजनितकफेन अतति अत ण्वुल् (बहुयार)

श्लेष्मान्तक पु० श्लेष्मणा सेवनजकफेन अन्तक इव नाशकत्वात् (बहुयार) वृक्षभेदे । [अश्लोकिष्ट ।

श्लोक वर्णने संघाते च भ्वा० आ० सक० सेट् चङि न ह्रस्वः । श्लोकते

श्लोक पु० श्लोक-अच् । चतुःपद्यात्मके कविकृते वाक्यभेदे, यशसि च ।

श्लोण संघाते भ्वा०प०सक०सेट् चङि न ह्रस्वः । श्लोणति अश्लोणीत् ।

श्वःश्रेयस न० श्वः परदिने भाविकाले श्रेयो यस्मात् अच् समा० । मङ्गले, सुखे परमात्मनि च । कल्याणयुक्ते त्रि० ।

श्वङ्क सर्पणे भ्वा० आ० सक० सेट् इदित् । श्वङ्कते अश्वङ्किष्ट ।

श्वच गतौ भ्वा० आ० सक० सेट् । श्वचते अश्वचिष्ट इदिदप्ययम् ।

श्वठ गतौ संस्कारे च चु० उ० सक० सेट् । श्वठयति-ते अशिश्वठत् त । इदिदप्ययम् श्वण्ठयति ।

श्वठ दुर्वचने अद० चु० उभ० सक० सेट् । श्वठयति ते अशश्वठत् त
श्वदंष्ट्रक पु० शुनो दंष्ट्रेव कण्टकोऽस्य कन् । गोक्षुरे क्षुपे ।
श्वदंष्ट्रा स्त्री० शुनोदंष्ट्रेव कण्टकाढ्यत्वात् । गोक्षुरे क्षुपे ।
श्वधूर्त्त पु० श्वेव शुनां वञ्चनार्थं वा धूर्त्तः । शृगाले ।
श्वन् पु० श्वि-कनिन् नि० । कुक्कुरे तज्जातिस्त्रियां ङीप् । शुनी ।
श्वनिश नं०स्त्री०शुनां कुक्कुराणां निशा या स्वसः । कुक्कुरमादकरात्रौ।
श्वपच पु० श्वानः पच्यन्ते यैः भोजनाय पच घञर्थे क । चण्डाले ।
श्वपाक पु० श्वानं पचति कर्त्तरि घञ् । चण्डाले ।
श्वफल पु० शुनः प्रियं फलमस्य । बीजपूरवृक्षे ।
श्वफल्क पु० । वृष्णिवंश्ये अक्रूरपितरि नृपभेदे ।
श्वभीरु पु० श्वभ्यो भीरुः । शृगाले । [ ते अशुश्वभ्रत् त ।
श्वभ्र गतौ छिद्रकरणे सक० दौःस्थ्ये अक० चु० उ० सेट् । श्वभ्रयति
श्वभ्र न० श्वभ्र-घञ् । छिद्रे ।
श्वयथु पु० श्वि-अथुच् । शोथे ।
श्वल वेगे भ्वा० पर० अक० सेट् । श्वलति अश्वालीत् ।
श्वल्क भाषणे चु० उ० सक० सेट् । श्वल्कयति ते अशश्वल्कत् त ।
श्वल्ल वेगे भ्वा० प० अक० सेट् । श्वल्लति अश्वल्लीत् ।
श्ववृत्ति पु० शुन इव पराधीना वृत्तिः । दास्ये "न श्ववृत्त्या कदाचने"ति
स्मृतिः । [भार्य्यायाः पितरि च ।
श्वशुर पु० शु आशु अश्नुते आशु+अश-उरच् पृ० । पत्युः पितरि,
श्वशुर्य्य पु० श्वशुरस्यापत्यम् यत् । देवरे, श्याले च ।
श्वश्रू स्त्री०श्वशुरस्य पत्नी ऊङ् उकाराकारलोपश्च । श्वशुरभार्य्यायाम् ।
श्वस् अव्य० आगामि अहः पृ० नि० । आगामिनि दिवसे ।
श्वस जीवने अदा० अक्षा० प० सक० सेट् । श्वसिति अश्वसीत् ।
श्वस स्वप्ने अदा० प० अक० वैदिकयोऽयम् । श्वस्ति अश्वसीत् ।
श्वसन पु० श्वसित्यनेन श्वस-ल्युट् । वायौ, मदनवृक्षे च । भावे ल्युट् ।
निश्वासे न० ।
श्वसनेश्वर पु० श्वसनो वायुरीश्वरोऽस्य । अर्ज्जुनवृक्षे ।

श्वसित न० श्वस-क्त निश्वासे, घ्राणनासिकाभ्यां वहिर्गमनशीले हृदयस्थप्राणवायौ ।

श्वसुन पु० श्वस-उनन् । (कुकुरसोङ्गा) वृक्षे ।

श्वस्तन त्रि० श्वोभवः श्वस्+ट्युल् तुट् च । भाविदिनस्थायिवस्तुनि ।

श्वस्त्य त्रि० श्वोभवः श्वस्+त्यप् । भाविदिनस्थायिवस्तुनि ।

श्वागणिक पु० श्वगणेन चरति ठक् स्त्रि० ङी० । कुक्कुरादिना मृगयाकर्त्तरि व्याधे ।

श्वादंष्ट्र त्रि० शुन इव दन्तोऽस्य दी० । कुक्कुरतुल्यदशने ।

श्वान पु० श्वैव अण् । कुक्कुरे तज्जातिस्त्रियां ङीप् ।

श्वापद पु० शुन इवापदस्यात् अच् । हिंस्रपशौ, व्याघ्रे च ।

श्वाविध् पु० शुना आविध्यते आ-व्यध् क्विप् ६त० । शल्यके । (शजारु) क । श्वाविधोऽप्यत्र पु० ।

श्वास पु० श्वस-घञ् । वायौ, कासरोगभेदे, शिक्षोक्ते वर्णोच्चारणार्थे बाह्यप्रयत्नभेदे च ।

श्वासधारण न० श्वासः प्राणवायुः ध्रियतेऽनेन । प्राणायामव्यापारे ।

श्वासारि पु० श्वासस्य रोगभेदस्यारिः नाशकत्वात् । पुष्करमूले

श्वि गतौ सक० वृद्धौ अक० भ्वा० प०यजा० सेट् । श्वयति अशिश्वत्-अश्वयीत्-अश्वत् ।

[ तत् अश्वेतिष्ट ।

श्वित शुक्लतापादने भ्वा० आ०लुङि उ० सक० सेट् । श्वेतते अश्वि-

श्वित्र न० श्वित-रक् । श्वेतकुष्ठभेदे (धवल) ।

श्वित्रघ्नी स्त्री० श्वित्रं हन्ति हन-ट ङीप् । पीतपर्ण्याम् (विछुती) ।

श्वित्रिन् त्रि० श्वित्रमस्त्यस्य इनि । श्वेतकुष्ठयुक्ते ।

श्विद् शुक्लतापादने भ्वा० आ० सक० सेट् इदित् । श्विन्दति अश्विन्दीत् ।

श्वेत पु० श्वित-अच् घञ् वा । द्वीपभेदे, पर्व्वतभेदे, कपर्द्दके, शुक्रग्रहे, शङ्खे, शुभ्राभ्रे, जीरके, शुक्लवर्णे च । तद्वति त्रि० । रौप्ये न० । स्वार्थे कन् । रौप्ये न० । वराटके पु० ।

श्वेतकराटकारी स्त्री० कर्म० । शुभ्रवर्णकराटकारिकायाम् ।

श्वेतकन्दा स्त्री० श्वेतः कन्दोऽस्याः । अतिविषायाम् (आतइच्)

श्वेतकुञ्जर पु० कर्म० । ऐरावतगजे, श्वेतगजमात्रे च श्वेतगजा-
दयोऽप्यत्र ।

श्वेतकुश पु० कर्म० । शुक्लवर्णे कुशभेदे ।

श्वेतकेतु पु० कर्म० । केतुग्रहभेदे, सामवेदप्रसिद्धे ऋषिभेदे च ।

श्वेतकेश पु० श्वेतः केश इव यस्य । रक्तशिग्रौ । शुक्लवर्णकेशवति
द्रव्ये त्रि० । कर्म० । शुक्ले केशे पु० ।

श्वेतखदिर पु० कर्म० । शुक्ले खदिरभेदे ।

श्वेतगरुत् पु० श्वेतो गरुदस्य । हंसे । शुक्लपक्षयुक्ते त्रि० ।

श्वेतगुञ्जा स्त्री० कर्म० । शुभ्रगुञ्जायां पु० अदन्तोऽप्यत्र ।

श्वेतचिल्ली स्त्री० कर्म० । शाकभेदे, (शादाचिवड़) ।

श्वेतच्छद पु० श्वेतः छदः पक्षोऽस्य । हंसे । शुक्लपक्षयुक्ते त्रि० ।

श्वेतजीरक पु० कर्म० । शुक्लजीरके ।

श्वेतटङ्कण न० कर्म० । शुक्लटङ्कणे मालतीनदीतीरसम्भवे क्षारभेदे ।

श्वेतदूर्वा स्त्री० कर्म० । शुक्लदूर्वायाम् ।

श्वेतद्वीप पु० कर्म० । वैकुण्ठाख्यविष्णुधाम्नि, द्वीपभेदे च ।

श्वेतधातु पु० कर्म० । खटिकायाम्, शुक्लवर्णधातुद्रव्ये च ।

श्वेतधामन् पु० श्वेतं धाम यस्य । चन्द्रे, कर्पूरे, समुद्रफेने च श्वेत-
करादयोऽप्यत्र ।

श्वेतपक्ष पु० श्वेतं पक्षं पक्षोऽस्य । हंसे । शुक्लपक्षयुक्ते त्रि०

श्वेतपद्म न० कर्म० । सितकमले ।

श्वेतपर्णास पु०कर्म० । शुभ्रतुलस्याम् ।

श्वेतपाटला स्त्री०कर्म० । शुक्लपाटलावृक्षे (शादापारुल)

श्वेतपिङ्गल पु०देहेन श्वेतः जटया पिङ्गलः वर्णो वर्णेनेति स० सिंहे

श्वेतपिण्डीतक पु० कर्म० । महापिण्डीतकवृक्षे ।

श्वेतपुष्प पु० श्वेतं पुष्पमस्य । सिन्दुवारवृक्षे । शुक्लवर्णपुष्पयुक्ते त्रि०।
कर्म० । शुभ्रे पुष्पे न० । संज्ञायां कन् । शुक्लकरवीरे पु० ।ना-
गदन्त्यां, कोषातक्यां मृगेर्वारौ च स्त्री० ।

श्वेतपुष्पिका स्त्री० श्वेतं पुष्पमस्याः कप् अत इत्वम् । महाशणवृक्षे ।

श्वेतभण्डा स्त्री० कर्म० श्वेतापराजितायाम् ।
श्वेतमन्दार पु० कर्म० । शुक्लमन्दारे ।
श्वेतमरिच कर्म० । शोभाञ्जनबीजे शुक्लमरिचे च ।
श्वेतरक्त पु० श्वेतो रक्तः वर्णो वर्णेनेति स० । पाटलवर्णे । तद्वति त्रि०
श्वेतरञ्जन न० श्वेतं रौप्यं रज्यतेऽनेन रन्ज–ल्युट् । सीसके
श्वेतरथ पु० श्वेतो रथो यस्य । शुक्रग्रहे कर्म० । शुभ्रे रथे ।
श्वेतलोध्र पु० कर्म० । पट्टिकालोध्रे ।
श्वेतवचा स्त्री० श्वेता वचेव । अतिविषायाम् (आतइच) ।
श्वेतवल्कल पु० श्वेतं वल्कलमस्य । उडुम्बरवृक्षे ।
श्वेतवाजिन् पु० श्वेतो वाजी यस्य । चन्द्रे, अर्ज्जुने च । श्वेताश्वा-
दयोऽप्यत्र ।
श्वेतवासस् पु० श्वेतं वासोऽस्य । संन्यासिभेदे । शुक्लवस्त्रयुक्ते त्रि० ।
श्वेतवाह् पु० श्वेतेन श्वेताश्वेन उह्यते वह–णिव । इन्द्रे, अर्ज्जुने,
चन्द्रे च ।
श्वेतवाहन पु० श्वेतं वाहनमस्य । चन्द्रे, इन्द्रे, अर्ज्जुने च ।
श्वेतवुक्ला स्त्री० कर्म० । वनतिक्तायाम् ।
श्वेतवृक्ष पु० कर्म० । वरुणवृक्षे ।
श्वेतवृहती स्त्री० कर्म० । शुक्लवर्णक्षुद्रवृहत्याम् ।
श्वेतशिंशपा स्त्री० कर्म० । शुक्लशिंशपायाम् ।
श्वेतशिग्रु पु० कर्म० । सितशोभाञ्जने ।
श्वेतशुङ्ग पु० श्वेता शुङ्गाऽस्य । यवे । शुक्लवर्णशुङ्गायुक्ते त्रि०
श्वेतशूरण पु० कर्म० । वनशूरणे । [ शुक्लभुजगे ।
श्वेतसर्प पु० श्वेतः सन् सर्पति सृप–अच् । वरुणवृक्षे । कर्म०
श्वेतसर्षप पु० कर्म० । गौरसर्षपे ।
श्वेतसार पु० श्वेतः सारोऽस्य । शुक्लखदिरे ।
श्वेतसुरसा स्त्री० कर्म० । शुक्लशेफालिकायाम्
श्वेतस्पन्दा स्त्री० श्वेता सती स्पन्दते स्पन्द अच् । सितापराजितायाम्
श्वेतहय पु० कर्म० उच्चैःश्रवसि, सितवर्णयुक्ते हये च ।

श्वेता स्त्री० श्वित-अच् । वराटिकायाम्, काष्ठपाटलायां शङ्खिन्याम्, अ-
तिविषायाम् सितापराजितायाम्, शुक्लकण्टकार्य्यां, पाषाणभेद्याम्,
शुक्लदूर्वायां वंशरोचनायां, शर्करायां, शिलावल्कलायाम् ।

श्वेतार्क पु० कर्म० । शुक्लवर्णपुष्पके अर्कवृक्षे ।

श्वेतावर पु० श्वेतं श्वेतवर्णमावृणोति आ+वृ अच् । सितावरशाके

श्वेतेक्षु पु० कर्म० शुक्ले इक्षौ ।

श्वेतौही स्त्री० श्वेतौहः पत्नी ङीप् । इन्द्राण्याम् शच्याम् ।

श्वैत्य श्वेतस्य भावः ष्यञ् । शुक्लवर्णे ।

श्वोवसीयस न० अतिशयेन वसुः प्रशस्तम् वसीयस् नि० परदिने भावि-
काले प्रशस्ते मङ्गले । तद्वति त्रि० ।

## ष

ष पु० षो-क पृ० सत्वम् । केशे । गर्भविमोचने, मानवे च सर्वे, श्रेष्ठे,
विज्ञे च त्रि० । [ असगीत् । सगयति ।

षग संवरणे भ्वा० पर० सक० सेट् घटा० णिचि न वृद्धिः । सगति

षघ हिंसायां स्वा० पर०सक०सेट् णिचि न वृद्धिः । सघ्नोति असघीत् ।

षच सेचने भ्वा० आ० सक० सेट् । सचते असचिष्ट ।

षच सम्बन्धे भ्वा० पर०सक० सेट् । सचति । असचीत्-असाचीत्

षट विभाजने भ्वा० पर० सक० सेट् । सटति असटीत् असाटीत्

षट्कर्मन् न० षट् प्रकारं कर्म । तन्त्रोक्तेषु शान्तिवशीकरणस्तम्भनवि-
द्वेषोच्चाटनमारणरूपेषु षट्सु प्रयोगभेदेषु यजनयाजनाध्ययनाध्या-
पनदानप्रतिग्रहरूपेषु षट्सु विप्रकर्मसु च । षट् कर्माणि यस्य
यागादियुक्ते विप्रे पु० ।

षट्कोण न० षट् कोणा यस्य । वज्रे, तन्त्रोक्ते ऊर्द्ध्वाधःस्थे त्रिकोण-
द्वयरूपे यन्त्रभेदे, ज्योतिषोक्ते लग्नतः षष्ठस्थाने च ।

षट्चक्र न० षण्णां चक्राणां समाहारः पात्रादि० । तन्त्रोक्तेषु देह-
स्थेषु सुषुम्नानाडीमध्यवर्त्तिषु द्विदलषड्दलादिषु षट्सु पद्मेषु ।
द्विगुत्वात् ततोऽन्यः अण् तस्य लुक् । षट्चक्रप्रतिपादकग्रन्थभेदे ।

षट्चत्वारिंशत् स्त्री० षड्धिका चत्वारिंशत्। (छेचाल्लिश) सङ्ख्याभेदे तत्सङ्ख्यान्विते च।

षट्चरण पु० षट् चरणा यस्य। भ्रमरे षट्पदादयोऽप्यत्र।

षट्ट निवासे बधे च अक० हिंसायां दाने च सक० चुरा० उभ० सेट्। षट्टयति ते अषषट्टत् त।

षट्तिलिन् पु० षट् तिलाः तिलोद्वर्त्तनादयः कर्माण्यस्य। 'तिलोद्वर्त्ती तिलस्नायी तिलोहोमी तिलप्रदः। तिलभुक् तिलवापी च षट्तिली नावसीदतीत्युक्ते तिलोद्वर्त्तनादिकारिणि।

षट्त्रिंशत् स्त्री० षडधिका त्रिंशत् शाक०। (छत्रिश) सङ्ख्याभेदे तत्सङ्ख्यान्विते च।

षट्पञ्चाशत् स्त्री० षड्धिका पञ्चाशत् शाक०। (छाप्पान्न) सङ्ख्याभेदे, तत्सङ्ख्यान्विते च। [प्रियत्वम्

षट्पदप्रिय पु० ६त०। नागकेशरे तस्य हि प्रचुरमधुत्वात् भ्रमर-

षट्पदातिथि पु० षट्पदः अतिथिरिव यस्य। आम्रवृक्षे।

षट्पदानन्दवर्द्धन पु० षट्पदस्यानन्दं वर्द्धयति वृध णिच्-ल्यु उप०। अशोकवृक्षे।

षट्पदी स्त्री० षट् पादा अस्याः पादस्य पद्भावः ङीपि पद्भावः। यूकायां भ्रमरयोषिति स० द्विगुः। षट्चरणयुक्ते छन्दोभेदे च। षट् श्लोकात्मकपदसंघाते।

षट्प्रज्ञ पु० षट्सु प्रज्ञा यस्य। 'धर्मार्थकाममोक्षेषु लोकतत्त्वार्थयोरपि। षट्सु प्रज्ञा तु यस्यासौ षट्प्रज्ञः परिकीर्त्तितः' इत्युक्ते धर्मार्थाद्यभिज्ञे लोके।

षडङ्ग न० षण्णामङ्गानां समाहारः पात्रा०। 'जङ्घे बाहू शिरो मध्यं षडङ्गमिदमुच्यते' इत्युक्ते देहावयवभेदे तन्त्रोक्ते हृदयाद्यवयवभेदे यत्र हृदयादिषु षट्सु अङ्गेषु मन्त्रविशेषोन्यस्य ते तेषु। षट् अङ्गानीव यस्य। 'शिक्षाकल्पोव्याकरणं निरुक्तं छन्दसां चितिः। ज्योतिषामयनञ्चैव षड़ङ्गो वेद इष्यते' इत्युक्ते वेदे, क्षुद्रगोक्षुरक्षुपे च पु०।

षडभिज्ञ पु० षट् अभिज्ञा 'दिव्यं चक्षुः श्रोत्रं, परचित्तज्ञानं पूर्वनिवासानुस्मृतिः, आत्मज्ञानम्, वियद्गतिः कायव्यूहसिद्धिश्चेत्येतानि अभिज्ञा अभिज्ञायमानानि यस्य । बौद्धभेदे ।

षडशीति स्त्री० षडधिका अशीतिः शाक० । (छेयासि) सङ्ख्याभेदे, तत्सङ्ख्यान्विते च । षडशीतिमुखं तुला मिथुनकन्या मत्स्यमीनेषु रवेः संक्रान्तौ च 'अयनविष्णुपदी षडशीतयो विषुवविष्णुपदीषडशीमय इति ज्योतिषम् ।

षडशीतिमुख न० षडशीतेः तन्नामसंक्रान्तेर्मुखम् । 'तुलादिषडशीत्यङ्घ्रिः षडशीतिमुखम् क्रमात् । तच्चतुष्टयमेव स्यात् द्विस्वभावेषु राशिषु' इति षड्विंशे चतुर्थे भागे, द्वाविंशेऽनिमिषस्य च मिथुनाष्टादशे भागे कन्यायास्तु चतुर्दशे, इति सूर्यसिद्धान्तोक्ते तुलादितः षडशीतिदिनान्तरितकाले ।

षडानन पु० षट् आननानि यस्य । कार्त्तिकेये षड्वदनादयोऽप्यत्र

षडूर्म्मि पु० षट् ऊर्म्मय ऐश्वर्य्याणि यस्य । षडैश्वर्य्ये परमेश्वरे

षड्गव त्रि० षड्भिर्गोभिरायुक्तः शकटः हलो वा शाक० अच् समा० । षड्भिर्गोभिराकृष्टे हलादौ 'अष्टागवं धर्म्यहलं षड्गवं जीवितार्थिना'मिति स्मृतिः । षण्णां गवां समाहारः द्विगुः । षट्सु गोषु न० ।

षड्गुण पु० षड्भिः गुणिता गुणाः शाक० । राज्ञां सन्ध्यादिषु षट्सु [गुणेषु ।

षड्ग्रन्था स्त्री० ग्रन्थः ग्रन्थिः षट् ग्रन्था अस्याः । वचायां शट्याम्, महाकरञ्जे च ।

षड्ग्रन्थि न० षट् ग्रन्थयोऽस्य । पिप्पलीमूले, षट्पर्वयुक्ते त्रि० संज्ञायां कन् । सत्यां स्त्री० टाप् । अत इत्वम् वा ङीप् वचायां स्त्री० ।

षड्ज पु० षड्भ्यो नासादिस्थानेभ्यो जायते जन–ड । 'नासाकण्ठमुरस्तालु जिह्वां दन्तांश्च संश्रितः । षड्भ्यः संजायते यस्मात् तस्मात् षड्ज इति स्मृत' इत्युक्ते स्वरभेदे 'षड्जसंवादिनीः केका' इति रघुः

षड्दीर्घ पु० षड्भिर्गुणिता दीर्घाः। तन्त्रोक्तेषु आ, ई, ऊ, ऐ, औ अः इत्येवं रूपेषु षट्सु दीर्घेषु।

षड्धा अव्य० षष्+प्रकारे धाच्। षट्प्रकारे। [सवृत्ते लि०।

षड्भुजा स्त्री० षट् भुजा इव यस्याः (खरमुज) फललताभेदे षड्भु-

षड्रस न०षण्णां रसानां समाहारः पा०। 'मधुरो लवणस्तिक्तः कषा-योऽम्लः कटुस्तथा' इत्युक्तेषु 'मधुरं क्षौद्रमित्याक्षुरिक्षादौ स च लभ्यते। लवणस्तु पटुः प्रोक्तः सैन्धवादौ स दृश्यते। तिक्तस्तु पिचुमर्दादौ व्यक्तमास्वाद्यते रसः। कषायस्तुवरस्तूक्तः स च पूगी-फलादिषु। कटुस्तु तीक्ष्ण संज्ञः स्यात् मरीचादौ स चेष्यते' इत्यु-क्तस्थानेषु लक्ष्येषु षट्सु रसेषु।

षड्वर्ग पु० द्वन्द्व०। 'कामक्रोधलोभमोहमद मात्सर्य्येषु 'ध्याजेष षड्वर्गमिति भट्टिः। 'क्षेत्रं होरा च तद्रेक्काणं नवांशद्वादशके त्रिंशांशकश्चेति विज्ञैः षड्वर्गः समुदाहृतः' इति ज्योतिषोक्तेषु क्षे-त्रादिषु षट्सु विस्तरो वाचस्पत्ये। [असनीत् असानीत्।

षण संभक्तौ भ्वा० पर० सक० सेट्। षस्य सत्वे णस्य नत्वम्। सनति

षण दाने तना० उभ० सक० सेट् षस्य सत्वे णस्य नत्वम्। सनोति असनीत्—असानीत् असनिष्ट असत।

ष(ष्ण)ण्ड पु० षण्-ड डस्य नेत्वम् पृ० षत्वं णत्वं वा। वृषे, नपुंसके, पद्मादिसमूहे पुं० न०।

षण्ढ पु० षण्-ढ तस्य नेत्वम् पृ० षः। नपुंसके।

षण्मुख पु० षट् मुखानि यस्य। कार्त्तिकेये।

षद गतौ चु० उ० सक० सेट्। सादयति ते असीषदत्।

षद्लृ विषादे अक० हिंसायां गतौ च सक० तु पर० अनिट् ज्वला०। सीदति, असदत्। सदः सादः।

षनच गतौ भ्वा० पर० सक० सेट्। सश्चति असश्चीत्।

षन्ज सङ्गे, संबन्धे च भ्वा० पर० सक० अनिट्। सजति असाङ्क्षीत्

षप सम्बन्धे भ्वा० पर० सक० सेट्। सपति असापीत् असपीत्।

षम वैक्लव्ये अद० चु० उभ० अक० सेट्। समयति ते असससत

**षम्व** सर्पणे भ्वा० पर० सक० सेट् । सम्बति असम्बीत् ।

**षर्ज्ज** अर्जने भ्वा० पर० सक० सेट् । सर्ज्जति असर्ज्जीत् ।

**षर्द्द** अपानशब्दे भ्वा० पर०सक० सेट् । सर्द्दति असर्द्दीत् ।

**षर्व** (र्ब) गतौ भ्वा० सक० सेट् । सर्व (र्ब)ति असर्वी (र्बी)त् ।

**षल** गतौ भ्वा० पर० सक० सेट् । सलति असालीत् ।

**षष्** त्रि० ब० व० । षो क्विप् ष्ठ० । (छय) सङ्ख्याभेदे व्याकरणोक्ते सङ्ख्यावाचके षान्ते नान्ते च शब्दे च । [न्विते च ।

**षष्टि** स्त्री०षड्गुणिता दशतिः नि० । (षाट्) सङ्ख्याभेदे, तत्सङ्ख्या-

**षष्टिक** पु० षष्ट्या अहोभिः पच्यते कन् । (षाटिया) धान्यभेदे

**षष्टिक्य** न० षष्टिकधान्यस्य भवनं क्षेत्रम् यत् । षष्टिकधान्योत् पत्तियोग्ये क्षेत्रे । [ङीप्

**षष्टितम** त्रि०षष्टेःपूरणः तमट् । येन षष्टिसङ्ख्या पूर्य्यते तस्मिन् स्त्रियां

**षष्टिमत्त** पु० षष्टिवर्षैर्मत्तः । अर्द्धवयस्के गजे तदुत्तरं हि तस्य मत्तता-योग्यत्वात् तथात्वम् ।

**षष्टिसंवत्सर** पु० ब०व० षष्टिगुणिता संवत्सराः । ज्योतिषप्रसिद्धेषु प्रभवादिषु षष्टौ वत्सरेषु तद्विशेषो वाचस्पत्ये ।

**षष्टिहायन** पु० षष्टिर्हायना वयोऽस्य । षष्टिवर्षवयस्के गजे षष्टिदिन-पच्योहायनी व्रीहिः शाक० । षष्टिकधान्ये ।

**षष्ठ** त्रि० षण्णां पूरणः षष्+डट् थुक् च । येन षट्संख्या पूर्य्यते तस्मिन् । स्त्रियां ङीप् ।

**षष्ठक** त्रि० षष्ठो भागः कन् । षष्ठे भागे । [षष्ठांशरूपे नृपकरे ।

**षष्ठांश** पु० कर्म्म० । रक्षणप्रतिरूपतया प्रजाभ्यो ग्राह्ये उत्पन्नशस्य

**षष्ठान्न** त्रि०षष्ठो दिवसस्य षष्ठकालः अन्नस्य तद्भोजनस्य वा कालो यस्य । दिवसस्य षष्ठभागे अन्नभोजनकालवर्ति पुरुषे ।

**षष्ठान्नकाल** पु० षष्ठे दिवसे भक्ष्यान्नकालो यत्र । व्रतभेदे ।

**षष्ठी** स्त्री० षण्णां पूरणी डट् थुट् ङीप् । चन्द्रमसः षष्ठकलाया ह्रास-वृद्धिरूपक्रियारूपे तिथिभेदे" स्कन्दभार्य्यारूपे मातृकाभेदे, मातृ-कासु पूज्यतमा सा च षष्ठी प्रकीर्त्तिता । शिशूनां प्रति विश्वेषु

प्रतिपालनकारिणी तपस्विनी विष्णुभक्ता कार्त्तिकेयस्य कामिनी'ति पुराणम् ।

षस स्वप्ने अदा० पर० अक० सेट् वैदिकः । षस्ति अषासीत् असषीत्

षस्ज सर्पणे भा० पर० सक० सेट् । सज्जति असज्जीत् । अयमात्म नेपदीत्यन्ये "वचोऽपि यत्पावरं न च यदेषु संसज्जते इति शकुन्तला ।

षस्त स्वप्ने अदा० स्वपा० पर० अक० सेट् वैदिकः षदित् । षंस्ते असंस्तीत् ।

[ षहति असीसहत् असहीत्

षह क्षमायां वा चु० उभ० पक्षे दि० पर० सक० सेट् । षाहयति ते

षह क्षमायां भा० आ० सक० सेट् ज्वला० । सहते असहीत् ।

षाड्गुण्य न० षट् गुणा एव ष्यञ् । राज्ञां सन्धिविग्रहादिषु षट्सू-पायेषु 'षाड्गुण्यमुपभुञ्जते' इति माघः ।

षाण्मातुर पु० षण्णां मातॄणामपत्यम् अण् उदादेशो रपरः । कार्त्ति-केये तस्य कृत्तिकाषट्क', गङ्गा, पृथिवी, पार्वती चेति षट् मातरः पुराणेषु प्रसिद्धाः ।

[पादके षष्ठ्ये ।

षाष्ठपाठिक त्रि० सत्वपाठे अधिकृत्य कृतो ग्रन्थः ठक् । सत्वपाठप्रति-

षाण्मासिक न० षष्ठे मासे भवः ठञ् । म्तस्य एकाहोन षष्ठमासे क-र्त्तव्ये श्राद्धभेदे 'आद्यं षाण्मासिके तथेति' स्मृतिः 'एकाहेन्यू-नषण्मासे तस्य विधानमि'ति मार्त्तण्डेयः

षाध सिद्धौ स्वा० दि० च पर० अक० अनिट् । षाध्नोति षाध्यति । अषात्सीत् ।

[असषान्तत् त ।

षान्त्व सामप्रयुक्तसम्भाषने अद० चु० उभ० सक० सेट् । सान्त्वयति ते

षि बन्धे स्वा० क्र्या० उभ० सक० अनिट् । सिनोति सिनुते सिनाति सिनीते असैषीत् । असेष्ट ।

[त । षेक्ता

षिच आर्द्रीकरणे तु० उ० उभ० सक० अनिट् । सिञ्चति ते असिचत्

षिट अनादरे भा० प० सक० सेट् । सेटति असेटीत् ।

षिड्ग पु० षिट-गन् पृ० षिडे (लम्पट) काटके । [षीत् ।

षिध गत्याम् अक० शासने सक० सेट् । सेधति असेधीत् असे-

षिध गतौ भ्वा० पर० सक० सेट् । सेधति असेधीत् क्वावेट् ।
षिध सिद्धौ दिवा० पर० अक० अनिट् क्त्वावेट् । सिध्यति असैत्सीत् ।
षिम्भ हिंसने सक० दीप्तौ अक० भ्वा० पर० सेट् क्त्वावेट् । सिम्भति असिम्भीत् ।
षिम हिंसने भ्वा प० सक० सेट् । सेमति असेमीत् । [असेलीत् ।
षिल उञ्छ तत्रस्थत्वात् कणश आदाने तुदा० पर०सक०सेट् । सिलति
षिव तन्तुविस्तारे दि०पर० सक० सेट् क्त्वा वेट् । सीव्यति असेवीत् ।
षु (सुराच्यावनरूपे सन्धाने सोमादेः पीडने मन्थने च स्वा० उ० सक० स्नाने अक० अनिट् लुङि पर० सेट् । सुनोति सुनुते असावीत् असोष्ट । [असोष्ट ।
षु गतौ भ्वा० क्वा० सक० अनिट् लुङि प० वेट् । सवति असावीत्
षु प्रसवे ऐश्वर्य्ये च भ्वा० पर० सक० अनिट् सवति असौषीत् ।
षु ऐश्वर्य्ये प्रसवे च अदा० पर० सक० वेट् लिटि सेट् । सौति असावीत् असौषीत् । सुषुविव ।
षुट्ट अनादरे भ्वा० चु० उ० सक० सेट् । सुट्टयति ते असुषुट्टत् त ।
षुन्भ दीपने अ० हिंसने स० भ्वा० पर० सेट् सुम्भति असुम्भीत् ।
षुर दीप्तौ अक० ऐश्वर्य्ये सक० तु० प० सेट् । सुरति असोरीत् ।
षुह तृप्तौ असमायाञ्च सक० दि० प० सेट् । सुह्यति असुहत् ।
षू प्रसवे अदा० आ० सक० सेट् । सूते असविष्ट ।
षू प्रसवे दि० आ० सक० सेट् । सूयते असविष्ट-असोष्ट ।
षू चोपे तु० प० सक० वेट् । सुवति असावीत् ।
षूद निरसने भ्वा० आ० सक० सेट् । सूदते असूदिष्ट ।
षूद मारणे भ्वा०प० सक० सेट् । सूदति असूदीत् ।
षूद क्षरणे अक० प्रतिज्ञायां निरासे च सक० चु० उ० सक० सेट् । सूदयति ते असूषुदत् ।
षूर स्तम्भे अक० हिंसने स०दि० आ०सक०सेट् । सूर्यते असूरिष्ट
षूर्क्ष अनादरे भ्वा० प० सक० सेट् । सूर्क्षति असूर्क्षीत् ।
षूर्क्ष्य ईर्षायां भ्वा० प० सक० सेट् । सूर्क्ष्यति असूर्क्ष्यीत् ।

षूष प्रसवे भ्वा० प० सक० सेट् । षूषति असूषीत् ।

षृनृभ हिंसने भ्वा०प०सक० सेट् । सृम्भति असृम्भीत् ।

षृभ हिंसने भ्वा०प०सक०सेट् । सर्भति असर्भीत् ।

षेक सर्पणे भ्वा०आ०सक०सेट् चङि न ह्रस्वः । सेकति असेकीत् ।

षेल चालने गतौ च भ्वा०पर०सक०सेट् चङि न ह्रस्वः । सेलति असेलीत् ।

षेव आराधने उपभोगे आश्रये च भ्वा०उ०सक०सेट् चङि न ह्रस्वः । सेवति सेवते असेवीत् असेविष्ट ।

षै क्षये भ्वा०प०अक०अनिट् । सायति असासीत् ।

षो नाशने अक०दि०प०अनिट् । स्यति असात्-असासीत् ।

षोडत् पु० षट् दन्ता यस्य दन्तस्य दत् नि० । षड्दन्तयोग्यवयस्के वृषादौ । [द्धान्विते च ।

षोडशन् त्रि० ब० व० षडधिका दश नि० । (षोल) संख्याभेदे तत्सं-

षोडश पु० षोडशानां पूरणः डट् । येन षोडशसंख्या पूर्य्यते तस्मिन् । चन्द्रमण्डलस्य कलात्मके षोडशभागरूपकलायां, त्रिपुरासुन्दर्य्याञ्च स्त्री० ङीप् ।

षोडशक न० षोडश परिमाणमस्य कन् । षोडशसंख्याते वस्तुनि 'भूम्या-सनं जलं वस्त्रं प्रदीपोऽन्नं ततः परम् । ताम्बूलं छत्रगन्धाश्च माल्यं फलमतः परम् । शय्या च पादुका गावः काञ्चनं रजतं तथा । दानमेतत् षोडशकं प्रेतमुद्दिश्य दीयते' इति स्मृत्युक्तेषु भूम्यादिषु प्रेतोद्देशेन दीयमानेषु षोडशसु । 'स्वर्णं रौप्यं तथा ताम्रं कांस्यं गावो गजा हयाः । रथं भूमिर्गृहं वस्त्रं शय्या चोत्तमपानही । दासश्च पितृयज्ञेषु दानं षोडशकं मतमिति वायुपुराणोक्तेषु पितृकृत्ये देयेषु स्वर्णादिषु षोडशसु च ।

षोडशमातृका स्त्री० ब०व० षोडशसंख्या मातरः । 'गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः । शान्तिः पुष्टिर्धृतिस्तुष्टिः कुल देवात्मदेवता' इत्युक्तासु गौर्य्यादिषु षोडशसु मातृकासु ।

षोडशाङ्ग पु० षोडश द्रव्याणि अङ्गान्यस्य । 'गुग्गुलुं सरलं दारु पद्मं मलयसम्भवम् । ह्रीवेरमगुरुं कुष्ठं सर्ज्जरसं घनम् । हरीतकीं नखीं लाक्षां जटामांसीञ्च शैलजम् षोडशाङ्गं विदुर्धूपं दैवे पैत्ते च कर्म्मणी'त्युक्ते गुग्गुल्वादिषोडशद्रव्यैरचिते धूपे ।

षोडशाङ्घ्रि पु० षोडश अङ्घ्रयश्चरणा यस्य । कुर्कटे ।

षोडशार न० षोडश आराणि कोणा अस्य । षोडशदलयुक्ते कमले, तन्त्रोक्ते यन्त्रभेदे च ।

षोडशिन् पु० षोडशकला विद्यन्तेऽस्य इनि । सोमे । यज्ञाङ्गे तत्पात्र-सोमरसस्थापनपात्रे च 'अतिरात्रे षोडशिनं गृह्णातीति श्रुतिः ।

षोडशोपचार पु० व०व० षोडशसंख्याता उपचाराः । 'आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् । मधुपर्काचमस्नानं वसनाभरणानि च गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनं तथे'त्युक्तेषु षोडशसु पूजा-ङ्गद्रव्येषु ।

षोढा अव्य० षट् प्रकारम् धाच् नि० । षट्सु प्रकारेषु ।

षोढान्यास पु० षोढा षट्प्रकारो न्यासः । तन्त्रोक्ते षट्प्रकारन्यास-भेदे विस्तरो वाचस्पत्ये ।

ष्टक प्रतीघाते भ्वा०प०सक०सेट् घटा० स्तकति अस्ताकीत् ।

ष्टग संवरणे भ्वा०प०सक०सेट् ऌदित्वाच न वृद्धिः घटा० । स्तगति अस्तगीत्

ष्टन शब्दे भ्वा०पर०अक० सेट् वा घटा० । स्तनति अस्तानीत्-अस्तनीत्

ष्टभ स्तम्भे सञ्चने अ०भ्वा०आ०सेट् इदित् । स्तम्भते अस्तम्भिष्ट ।

ष्टम वैकल्ये चुरा०उभ०सक०सेट् । स्तामयति ते अतस्तमत् त ।

ष्टम वैकल्ये अक०भ्वा०प०सेट् । स्तमति अस्तमीत् ।

ष्टिघ अभियोगे स्वा०आ०सक०सेट् । स्तिघ्नुते अस्तेघिष्ट ।

ष्टिप क्षरणे भ्वा०आ०अक०सेट् चङि न ह्रस्वः स्तेपते अस्तेपिष्ट ।

ष्टिम क्लेदे दि०प०अक०सेट् । स्तिम्यति अस्तेमीत् ।

ष्टीम क्लेदे दि०प०अक०सेट् । स्तीम्यति । अस्तीमीत् ।

ष्टु स्तुतौ अदा०उ०सक० अनिट् सिचि सेट् लुङि प० वेट् स्तौति स्तवीति स्तुते स्तवीते अस्तावीत् अस्तोष्ट ।

ष्टुच प्रसादे अक०भ्वा०आ०सेट्। स्तोचते अस्तोचिष्ट।
ष्टुप उच्छ्राये अद०चु०उ०सक०सेट्। स्तूपयति ते अतुष्टुपत् त।
ष्टुप उच्छ्राये दि०प०सक०सेट्। स्तूप्यति अस्तूपत्। [भिष्ट
ष्टुभ स्तम्भे अक० स्तम्भे सक०भ्वा०आ०सेट् क्त्वा वेट्। स्तोभते अस्तो-
ष्टृक्ष गतौ भ्वा०प०सक०सेट्। स्तृक्षति अस्तृक्षीत्।
ष्टृह वधे तु०प०सक०वेट्। स्तृहति अस्तर्हीत् अस्तृक्षत्।
ष्टृंह वधे तु०आ०सक०वेट्। स्तृंहति अस्तृंहीत् अस्तृंक्षत्।
ष्टेप क्षरणे भ्वा०आ०अक०सेट् चङि न ह्रस्वः। स्तेपते। अस्तेपिष्ट।
ष्टै संघाते सक० ध्वनौ अक०भ्वा०प०अनिट् स्तायति। अस्तासीत्।
ष्ट्यै वेष्टने सक० दीप्तौ अक०भ्वा०प०अनिट्। स्त्यायति अस्त्यासीत्।
मतान्तरे ष्ट्यायति। [गीत्।
स्थग सम्वरणे भ्वा०प०सक०सेट् घटा० मितिच न वृद्धिः। स्थगति अस्थ-
ष्ठगा स्थितौ भ्वा०प०अक०सेट् ज्वला०। स्थगति अस्थागीत्।
ष्ठस निरासे दि०प०सक०सेट्। स्थस्यति अस्थासीत्—अस्थसीत्।
ष्ठा गतिनिवृत्तौ भ्वा०प०अक०अनिट्। तिष्ठति अस्थात्।
ष्ठिव निरासे (मुखेन श्लेष्मादेर्वमने) भ्वा०प०सक०सेट् ष्ठीवति अष्ठेवीत्।
ष्ठेवनम्। [वीत् ष्ठीवनम्।
ष्ठीव निरासे (श्लेष्मादेर्मुखेन वमने) भ्वा०प०अक० सेट्। ष्ठीवति अष्ठे-
ष्ठ्यूत त्रि० ष्ठिव-क्त। निरस्ते, वान्ते च। [वत्।
ष्णस निरासे दि०प०सक०सेट् क्त्वा वेट् वा घटा०। स्नस्यति अस्न-
ष्णा शोधने अदा०प०अक०अनिट्। स्नाति अस्नासीत्। [स्नः स्ना।
ष्णिह प्रीतौ दि०प०सक०वेट्। स्निह्यति अस्निहत्। स्नेहिता-स्नेढा—
ष्णिह स्नेहयुक्त भवने चु०उ०अक०सेट्। स्नेहयति ते असिष्णिहत् त
ष्णु क्षाने अ०प०अक०सेट्। स्नौति अस्नावीत् अस्नोष्ट।
ष्णुच सेचने भ्वा०आ०सक०सेट्। स्नोचते अस्नोचिष्ट।
ष्णुस भक्षे दि०प०सक०सेट्। स्नुस्यति अस्नोसीत्।
ष्णुह उद्गारे दि०प०सक०वेट्। स्नुह्यति अस्नुहत्।

ष्ट्यै वेष्टे भ्वा०प०सक० अनिट्। स्त्यायति अस्त्यासीत्। प्रपूर्वो द्रव्ये प्रस्त्यायति अप्रस्त्यासीत्।

ष्मि ईषद्धास्ये भ्वा०आ०अक०अनिट्। स्मयते अस्मेष्ट।

ष्वक्क सर्पणे भ्वा०आ०सक०सेट्। ष्वक्कते अष्वक्किष्ट।

ष्वद स्वादे छेदने च चु०उ०सक०सेट्। स्वादयति ते असिष्वदत् त।

ष्वद प्रीतौ लेहने च भ्वा० आ०सक०सेट्। स्वदते अस्वदिष्ट।

ष्वन्ज आलिङ्गने भ्वा०आ०सक०अनिट्। स्वजते। अस्वङ्क्त।

ष्वप शयने निद्रायाञ्च अदा० स्वपा० जग्वा० प० अक० अनिट्। स्वपिति अस्वाप्सीत्। [असष्वर्त्तत् त।

ष्वर्त्त गतौ सक० दुःखेन जीवने अक० चु० उ० सेट्। ष्वर्त्तयति ते।

ष्वष्क गतौ भ्वा० आ० सक० सेट्। ष्वष्कते अष्वष्किष्ट।

ष्विद मोहे स्नेहे, च अक० मोचने सक० भ्वा० आ० लुङि उ० सेट्। स्वेदते अस्विदत् अस्वेदिष्ट।

ष्विद गात्रप्रक्षरणे अक० दि० प० अनिट्। स्विद्यति अस्विदत्।

स

स पुं० सो—ड् विष्णौ, सर्पे, ईश्वरे, विहगे च।

संक्षेप पुं० सम्+क्षिप-घञ्। भूयसोऽर्थस्याल्पवाक्यादिना प्रकाशने।

संक्षोभ पुं० सम्+क्षुभ—घञ्। चाञ्चल्ये, क्षोभे च।

संग्राहिन् पुं० सम्+ग्रह—णिनि। कुटजवृक्षे। सङ्ग्रहकारके त्रि०

संघ पुं० सम्+हन—ड नि० समूहे, जन्तुसमूहे च। घञ्। संघातोऽपि समूहे दृढ़संयोगे च पुं०।

संघर्ष पुं० सम्+घृष घञ्। अन्योन्यदृढ़संयोगे।

संज्ञ न० सम्+ज्ञा—क। पीतकाष्ठे कालीयके गन्धद्रव्ये। सम्+ज्ञा—अङ्। चेतनायाम् बुद्धौ, आख्यायाम्, हस्ताद्यैरर्थसूचने, गायत्र्यां, सूर्य्यपत्न्याञ्च स्त्री०।

सं(ज्ञ)ज्ञापन सम्+ज्ञा—णिच्—पुक् मारणे ह्रस्वः ल्युट्। मारणे। अन्यार्थे न ह्रस्वः। ज्ञाने। क्तिन्। संज्ञप्तिरप्यत्र स्त्री०

संज्ञासुत पुं० संज्ञायाः सूर्य्यपत्न्याः सुतः। शनैश्चरे।

संज्ञु त्रि० संहते जानुनी यस्य जानुस्थाने ज्ञुः । संहतजानुके ।
संज्वर पु० सम् + ज्वर–अप् । अग्निजाते तापे ।
संमर्द्द पु० सम्+मर्द–घञ । अन्योन्यदृढसंयोगरूपे सङ्घर्षे ।
संयत त्रि० सम्+यम–क्त । बद्धे कृतशास्त्रोक्तनियमे च ।
संयत् स्त्री० संयम्यतेऽत्र सम्+यम–क्विप् तुक् च। युद्धे ।
संयन्तृ त्रि० संयच्छति सम् + यम–तृच् । नियन्तरि ।
संय(या)म पु० सम् यम–घञ् वा वृद्धिः । व्रताङ्गतया पूर्वदिने कर्त्तव्ये नियमभेदे, इन्द्रियनिग्रहे, बन्धने च ।
संयमन न० सम्+यम–ल्युट् । बन्धने; व्रते, चतुःशाले गृहे च
संयमनी स्त्री० संयम्यते बध्यतेऽत्र सम् + यम–ल्युट् । यमाधिष्ठितपुर्य्याम् । [वति त्रि० ।
संयमिन् पु० सम्+यम–णिनि न वृद्धिः मुनिभेदे इन्द्रियसंयम-
संयाव पु० सम्यक् घृतादिभिर्यूयते मिश्र्यते गोधूमचूर्णोऽत्र सम् + यु-घञ् । 'संयावस्तु घृतक्षीरगुडगोधूमपाकज' इत्युक्ते घृतादिना पक्वगोधूमचूर्णे ।
संयुज् त्रि० सम्यक् युनक्ति सम् + युज–क्विन् । गुणाढ्ये, संयुक्ते च ।
संयुक्त त्रि० सम् + युज–क्त । संयोगवति पदार्थे ।
संयुग न० संयुज्यतेऽत्र सम् + युज–क पृ० जस्य गः । युद्धे ।
संयुत त्रि० सम् + यु-क्त । संयुक्ते ।
संयोग पु० सम्+युज-घञ् । मेलने क्रियाजन्ये द्रव्याश्रिते गुणभेदे, संबन्धमात्रे च ।
संयोगपृथक्त्व न० संयोगेन फलसंबन्धभेदेन पृथक्त्वं नानारूपत्वं यत्र । एकस्यैव कर्म्मणो नित्यानित्यत्वप्रतिपादके मीमांसकोक्ते न्यायभेदे । [ योजने पदार्थे ।
संयोजित त्रि० सम्+युज-णिच्-क्त । कृतमेलने पदार्थान्तरेण कृत-
संरम्भ पु० सम्+रभ घञ् मुम् च । कोपे, आक्रोशे, उत्साहे वेगे च "अहटिसंरम्भमिवाभ्युपागमि" ति कुमारः ।
संराधन न० सम् + राध-ल्युट् । सम्यक् सेवने, सम्यक् चिन्तने च

संराव पु॰ सम्+रु-घञ् । शब्दे ।

संरूढ त्रि॰ सम् + रुह–क्त । प्रौढे, जाताङ्कुरे च ।

संरोध पु॰ सम् + रुध–घञ् रोधने, क्षेपे च ।

संलग्न त्रि॰ सम् + लग–क्त । मिलिते ।

संलय पु॰ संलीयते इन्द्रियव्यापारोऽत्र सम् + ली–अच् । निद्रायाम्, प्रलये च ।

संलाप पु॰ सम् + लप घञ् । परस्परकथने प्रीत्या अन्योन्योक्तिप्रत्युक्तिभ्यां भाषणे, रहसि कथने च ।

संवत्सर पु॰ संवसन्ति ऋतवोऽत्र सम्+वस+सरन् । वत्सरे, ज्योतिषोक्ते समादिपञ्चकान्तर्गते वत्सरभेदे च ।

संवत् अव्य॰ सम्+वय–क्विप् यलोपे तुक् । विक्रमादित्यराज्यावधिके तत्प्रवर्त्तकवत्सरे ।

संवदन सम् + वद–ल्युट् । आलोचने, वशीकरणे, च । सम् + वन–ल्युट् । संवननमप्यत्र ।

संवर न॰ सम् । वृ–अप् । जले, दैत्यभेदे, मत्स्यभेदे, मृगभेदे च ।

संवर्त्त पु॰ सम्यक् वर्त्यते प्रावर्त्यतेऽत्र सम् + वृत-णिच्-घञ् । प्रलयकाले, स्मृतिकारकमुनिभेदे, कर्षफलवृक्षे, मेघे, 'संवर्त्तश्च वहद्रकः' इत्युक्ते मेघनायकभेदे च ।

संवर्त्तक न॰ सम् + वृत-णिच्-ण्वुल् । बलदेवलाङ्गले । ततः स्वार्थे अच् । बलदेवे, वाड़वानले च पु॰ ।

संवर्त्तिका स्त्री॰ सम् + वृत-ण्वुल् टापि अतइत्वम् । दीपादेः शिखायाम्, पद्मादेः केशरसमीपस्थे दले, नवपत्रे च [रके च

संवर्द्धक त्रि॰ सम् + वृध-णिच्-ण्वुल् । सम्माननाकारिणि वृद्धिका-

संवलित त्रि॰ सम् + वल-क्त । मिलिते । [सस्थाने

संवसथ पु॰ संवसन्त्यस्मिन् सम्+वस–अथच् । ग्रामे जन-समूहनिवा-

संवह पु॰ सम्यक् वहति सम्+वह–अच् । सप्तवायुमध्यवर्त्तिवायौ ।

संवार पु॰ सम्+वृ–घञ् । शिक्षायामुक्ते वर्णोच्चारणार्थं बाह्य प्रयत्नभेदे, सङ्गोपने च ।

संवास पु० संवसत्यत्र सम्+वस घञ् । सङ्घे, पुरवासिनां पुराद्बहि-
 र्विहारयोग्ये अनावृते स्थाने च । [तत्रैव ।

संवाह पु० संवाहयति सम्+वह—घञ् । अङ्गसंमर्दके । रघु ।

संवाहन न० सम्+वह—णिच् ल्युट् । भारादेर्वहने, अङ्गसंमर्दने च

संविग्न त्रि० सम् + विज—क्त । उद्विग्ने इष्टवस्तुलाभाय तद् प्राप्ति-
 हेतुना भयादिना वा जातौत्कण्ठे । [अङ्गीकारे च ।

संवित्ति स्त्री० सम्+विद—क्तिन् । ज्ञाने, प्रतिपत्तौ, बुद्धौ, अ-

संविद् स्त्री० सम्+विद् सम्प० क्विप् । ज्ञाने, प्रतिपत्तौ, बुद्धौ अङ्गी-
 कारे, सम्भाषौ, नामनि, आचारे, सङ्केते, युद्धे, तोषे च ।

संविदा स्त्री० संविद्यतेऽनया सम्+विद् क्विप् टाप् । भङ्गायाम्
 (सिद्धि) 'संविदासवयो र्मध्ये संविदैव गरीयसीति' तन्त्रम्

संविद्व्यतिक्रम पु० संविदोऽङ्गीकारस्य व्यतिक्रमो यत्र । कृताङ्गीका-
 रस्योल्लङ्घनहेतुके विवादभेदे ।

संविदित त्रि० सम् + विद्-क्त । अङ्गीकृते, सम्यग्ज्ञाते च ।

संविधान न० सम् + वि+धा-ल्युट् । उपाये, आयोजने रचनायाञ्च ।

संविषा स्त्री० संमर्द्दितं विषं यया शाकजाप्र उत्तरपदलोपः । अति-
 विषायाम् (आतइच्) ।

संवीक्षण न० सम्यग् ईक्ष्यते अन्विष्यते वा सम्-वि+ईक्ष ल्युट् । इष्ट-
 वस्तुनो लाभाय अन्वेषणे सम्यग्दर्शने च ।

संवीत त्रि० सम् + व्येञ्-क्त । आवृते, रुद्धे, च-सम्+वि+इण-क्त ।
 सङ्गते । [श्रेति" रघुः ।

संवृत त्रि० सम् + वृ-क्त । आवृते, कृतगोपने च 'तस्य संवृतमन्त्र-

संवेग पु० सम्+विज-घञ् । भयादिना त्वरायाम्, सम्यग् वेगे च ।

संवेद पु० सम् + विद्-घञ् । ज्ञाने । युच् । संवेदनाप्यत्र स्त्री० ।

संवेश पु० सम्यक्विशत्यत्र सम्+विश घञ् । निद्रायाम् संपूर्वकस्य तस्य
 निद्रार्थकत्वात्तथात्वम् । तथाच संविष्टः कुश शयने निशां निनाये
 ति रघुः पीठे च ।

संवेशन न० सम्+विश-णिच्-ल्युट् । रतिक्रियायाम् । तदुत्तरं हि निद्राधिक्येन तस्या निद्राहेतुत्वात् तथात्वम् ।

संव्यान न० संवीयते सम्+व्येञ्-कर्मणि ल्युट् । उत्तरीय वस्त्रे, वस्त्रमात्रे च ।

संशप्तक पु० सम्यक् शपथमङ्गीकारो यस्य कप् । प्रतिज्ञाय संग्रामाद-निवर्त्तिनि सैन्ये 'संशप्तकगणैरभूदिति' रघुः ।

संशय पु० सम्+शी-अच् । सन्देहे एकस्मिन् धर्म्मिणि भावाभावयोः, विरुद्धधर्म्मद्वयस्य वा सन्देहे । यथा पर्वतो वह्निमान् वा, अयं स्थाणुर्वा पुरुषोवेति । 'संशयो भवेद्याधीरेकत्र भावयोरिति" भाषापरिच्छेदः ।

संशयस्थ त्रि० संशये तिष्ठति स्था—क । संशययुक्ते ।

संशयात्मन् पु० संशय आत्मनि यस्य । संदिग्धान्तःकरणे "संशयात्मा विनश्यतीति,, पुराणम् ।

संशयालु त्रि० संशय+अस्त्यर्थे आलुच् । संशययुक्ते ।

संशयितृ त्रि० सम्+शी-तृच् । संशयकर्त्तरि ।

संशरण न० संशीर्य्यते ऽनेन सम्+शॄ—ल्युट् । रणारम्भे

संशित त्रि० सम्+शो—क्त । सम्पादितव्रतविषयकयत्ने ।

संशितव्रत त्रि० संशितं सम्यक् सम्पादितं व्रतमनेन । सम्यक्सम्पा-दितव्रते ।

संशुद्धि स्त्री० सम्+शुध—क्तिन् । सम्यक् शोधने देहादिमार्ज्जने च ।

संश्यान त्रि० सम् + श्यै—क्त । शीतादिना सङ्कुचिते ।

संश्रय पु० सम्+श्रि—अच् । आश्रये

संश्रव पु० सम्+श्रु—अप् । अङ्गीकारे । घञ् । संश्रावोऽप्यत्र । पु० ।

संश्रुत त्रि० सम्+श्रु—क्त । अङ्गीकृते ।

संश्लिष्ट त्रि० सम+श्लिष-क्त । आलिङ्गिते, संबद्धे च ।

संश्लेष पु० सम् + श्लिष—घञ् । आलिङ्गने, संबन्धमात्रे च ।

संसक्त त्रि० सम्+सञ्ज–क्त । मिलिते, संबद्धे, वचनादुर्धृष्टे च "प्रान्तेषु संसक्तनमेरुशाखमिति" कुमारः ।

संसद् स्त्री० संसीदन्त्यस्याम् सम्+सद्–सम्प० क्विप् । सभायाम् ।

संसरण न० सम्+सृ–ल्युट् । आदृष्टनिबद्धदेहस्वीकाररूपे संसारे, असंबाधसेनागमने, रथारम्भे, राजपथे, संगतौ च ।

संसर्ग पु० सम्+सृज–घञ् । सम्बन्धे, विभागानन्तरं "यत्तव धनं तन्ममेति" कृतसमयेन एकत्रावस्थानरूपे सम्बन्धे च ।

संसर्गाभाव पु० संसर्गस्य सम्बन्धस्याभावः । ध्वंसप्रागभावात्यन्ताभावरूपे–भेदभिन्ने अभावे सम्बन्धाभावे च ।

संसर्गिन् त्रि० सम्+सृज–घिणुन् । संसर्गयुक्ते विभागानन्तरं "यत् तव धनं तन्ममेति, कृतसमयेन एकत्रावस्थानरूपसंसर्गयुक्ते भ्रात्रादौ, सम्बद्धे च ।

संसार पु० संसरत्यस्मात् सम्+सृ–घञ् । मिथ्याज्ञानाजन्य संस्काररूपवासनायां, देहादस्यादृष्टभेदे, "आदृष्टोपनिबद्ध देहपरिग्रहे च । आधारे घञ् । विश्वे । भावे घञ् । सङ्गतौ ।

संसारमार्ग पु० ६तत० । योनिद्वारे तत एव हि बहिर्निर्गमने मायानुभवतेति तस्य तथात्वम् ।

संसारिन् त्रि० संसरति अदृष्टभेदेन देहेन संयुज्यते सम्-सृ-णिनि । शरीराभिमानिनि जीवे ।

संसिद्ध त्रि० सम्यक् स्वभावेन वा सिद्धः सम्+सिध-क्त । स्वभावसिद्धे, सम्यङ्निष्पन्ने च । [मुक्तौ च ।

संसिद्धि स्त्री० सम्+सिध-क्तिन् । स्वभावे, प्रकृतौ, सम्यग् नि·

संसृति स्त्री० सम्+सृ-क्तिन् । संसारप्रवाहे, सङ्गतौ च ।

संसृष्ट पु० सम्+सृज-क्त । विभागानन्तरं स्नेहात् पुनः स्वस्वधनेन ततः संसर्गयति भ्रात्रादौ "संसृष्टस्य तु संसृष्टीति" स्मृतिः वचनादिना संपृक्ते, संयुक्ते च । भावे क्त । संबन्धे

संसृष्टिन् पु० संसृष्टमनेन इनि । संसृष्टभ्रात्रादौ । 'अन्योदर्यस्तु संसृष्टीति' स्मृतिः ।

संस्कर्तृ पु० सम्+कृ-तृच्-सुट् च । संस्कारकारके, पाचके च ।

संस्कार पु० सम्+कृ-घञ् सुट् च सतोगुणान्तराधानरूपे प्रतियत्ने, -यथा अलङ्कारादेरश्वादेर्वस्त्रादेश्च उद्दीपनविधानमार्ज्जनादयः, व्रीह्यादेश्च यज्ञाङ्गतासम्पादनाय वैदिकमार्गेण प्रोक्षणादिः दर्पणादेर्निर्म्मलीकरणादिः । स्मृतिहेतौ अनुभवजन्ये आत्मवृत्तिगुणभेदे, पृथिव्यादिचतुष्टयस्थे वेगाख्ये गुणे, यथावस्थिततयास्थापनप्रयोजके स्थितिस्थापनाख्ये गुणभेदे, शास्त्राभ्यासजन्यव्युत्पत्तौ, व्याकरणोक्तविधया शब्दानां साधनप्रकारे, विप्रादीनां वैदिककर्म्मार्हत्वसाधने गर्भाधानादौ क्रियाकलापे, पाके च ।

संस्कारवर्जित त्रि० ३त० । गर्भाधानादिसंस्कारहीने शास्त्रीयव्युत्पत्तिहीने च संस्कारहीनादयोऽप्यत्र ।

संस्कृत त्रि० सम्+कृ-क्त सुट् च । कृतसंस्कारे पदार्थे, व्याकरणादिलक्षणाधीनसाधनयुक्ते शब्दे, पक्वे, भूषिते, शोधिते च ।

संस्तर पु० सम्+स्तॄ-अप् । यज्ञे शय्यायाम् पल्लवादिरचित-शय्यायां च 'नवपल्लवसंस्तरे यथेति' कुमारः ।

संस्तव पु० सम्+स्तु-अप् । परिचये, सम्यक् स्तुतौ च ।

संस्ताव पु० संस्तूयतेऽत्र- सम्-स्तु घञ् । यज्ञार्थं संस्तावकविप्राणां वासभूमौ ।

संस्तुत त्रि० सम्+स्तु क्त । परिचिते, सम्यक्स्तुते च ।

संस्त्याय पु० सम्+स्त्यै-घञ् । संघाते, निविडसंयोगरूपे सन्निवेशे, विस्तृतौ, गृहे, संस्थाने च ।

संस्थ त्रि० सम्+स्था-क । अवस्थिते, मृते च ।

संस्था स्त्री० सम्+स्था-अङ् । व्यवस्थापथावस्थितौ, स्थितौ, नाशे, यज्ञभेदे, व्यवस्थायां, व्यक्तौ, सादृश्ये, प्रान्ते च ।

संस्थान न० सम्+स्था ल्युट् । चतुष्पथे, आकारे, अवयवव्यारम्भकसंयोगभेदे, चिह्ने, सन्निवेशे, सम्यक्स्थितौ च ।

संस्थित त्रि० सम्+स्था-क्त । मृते, सम्यक्स्थिते च ।

संस्पर्शा स्त्री० संस्पृश्यते सम्+स्पृश-घञ् टाप् । रजनीगन्धाद्रव्ये

संस्फुट त्रि० सम्+स्फुट-क । विकसिते ।
संस्फेट न० सम्+स्फिट-घञ् । युद्धे ।
संस्फोट पु० सम्+स्फुट घञ् । युद्धे ।
संहत त्रि० सम्+हन-क्त । दृढे, मिलिते, परार्थं मिलिते "संहतप-रार्थत्वादिति, सांख्यम् दृढसंयोगयुक्ते सम्यग्हते च । [हये ।
संहतल पु० संहतं संहननं संघातं आति-आ-क । मिलितपाणि-
संहतपुष्पिका स्त्री० संहतानि दृढं संयुक्तानि पुष्पाण्यस्याः कप् अत इत्वम् । मिश्रेयायाम् ।
संहति स्त्री सम्+हन-क्तिन् । समूहे, सम्यग्हनने च ।
संहनन न० संहन्यते परार्थं संहन्यते सम्+-हन-ल्युट् । देहे, संघाते, बधे च ।
संहर्ष पु० सम्यक् हर्षः सम्+हृष-घञ् आनन्दे, स्पर्द्धायाञ्च संहृष्य-त्यनेन घञ् । वायौ ।
संहार पु० सम्+हृ-घञ् । प्रलये, नाशे, संक्षेपे, नरकभेदे, विस-र्ज्जने, भैरवभेदे च ।
संहारमुद्रा स्त्री० संहाराय स्थानान्तरनयनाय मुद्रा । तन्त्रोक्ते मु-द्राभेदे तल्लक्षणं वाचस्पत्ये ।
संहिता स्त्री० सम्यक् हितं प्रतिपाद्यं यस्याः । मन्वादिप्रणीते, धर्म्म-शास्त्रे, पुराणे, इतिहासादौ, कर्मकाण्ड-प्रतिपादके वेदभागे च ।
संहूति स्त्री० सम्+ह्वेञ् क्तिन् बहुभिः कृते आह्वाने ।
संहृत त्रि० सम्+हृ-क्त । कृतसंहारे, सङ्कुचिते च ।
संहृति स्त्री० सम्+हृ-क्तिन् । संहारे
संह्रादि पु० सम्+ह्राद-घञ् । शब्दभेदे ।
संह्रादिन् त्रि० सम्+ह्राद-णिनि । शब्दायमाने ।
संह्राद पु० सम्+ह्राद-घञ् । आनन्दभेदे ।
सकण्टक पु० सह कण्टकेन सहस्य सः । करञ्जभेदे, (नाटाकरञ्जा) शैवाले च । कण्टकयुक्ते त्रि० । [युक्ते च ।
सकर्ण त्रि० सह कर्णेन श्रवणेन तद्व्यापारेण वा । श्रुतिशीले, कर्ण-

सकर्म्मक त्रि० सह कर्म्मणा कप् । व्याकरणोक्ते कर्म्मयुक्तक्रियाबोधके
धातौ 'फलव्यापारयोरेकनिष्ठतायामकर्म्मकः । धातुस्तयोर्धर्म्मिभेदे
सकर्म्मक उदाहृत' इत्युक्तदिशा धातोः सकर्म्मकत्वमवसेयम् ।

सकल त्रि० सह कलया, अवयवमात्रया, चतुःषष्ट्या कलाभि र्वा सहस्य
सः। संपूर्णे समग्रे, कलासहिते च । ..

सकारण त्रि० सह कारणेन । कार्य्ये । [समीपे ।

सकाश पु० कशनं पीडनं काशः कश-घञ् सह काशेन । अन्तिके

सकुण्ड पु० सह समानः कुण्डेन । शाकवृक्षे ।

सकुल पु० सह समानं कुलमस्य । मत्स्यभेदे (शल) स्त्रीत्वमपि ।
समानवंशे त्रि० ।

सकुल्य त्रि० समाने कुले भवः यत् । अशौच विषये स्वावध्यूर्द्ध्वं सप्त-
ष्टमपुरुषावधिदशमपर्य्यन्ते पुरुषवर्गे, दायग्रहणे स्वावधिपञ्चमोर्द्ध्व-
धस्तनपुरुषमात्रे "विभक्तदायादान् सकुल्यानाचक्षते" इति स्मृतिः ।

सकृत् अव्य० एक+नि० । एकवारे विष्ठायाञ्च तत्र स्त्रीत्वमिति केचित् ।

सकृत्प्रज पु० सकृत् एकवारं प्रजायते प्र+जन—ड । काके एकवारजा-
तापत्ये त्रि० ।

सकृत्फला स्त्री० सकृत् फलति फल—अच् । कदलीवृक्षे

सक्त त्रि० सन्ज—क्त । आसक्ते, अविरते च ।

सक्तु पु० सच—तुन् । भृष्टयवादिचूर्णे (छातु) "मेषादौ सक्तुभिः देयाः"
इति स्मृतिः । [निवीतिरे ।

सक्तफला(ली) स्त्री० सक्तवदव ?? फलान्यस्याः ?? ।

सक्थि न० सन्ज—क्थिन् । ऊरौ, शकटावयवभेदे च ।

सखि त्रि० सह समानं ख्यायते ख्या इन् नि० । सौहार्द्द ??

सखी स्त्री० सखि+ङीप् । सहचर्य्यां, वयस्यायाञ्च ।

सख्य न० सख्युर्भावः यत् । मित्रतायाम् सौहार्द्दे ।

सगर पु० सह गरेण विषेण जातः । सूर्य्यवंश्ये नृपभेदे "सगरस्तु
सगरो जात" इति पुराणम् । विषयुक्ते त्रि० ।

**सगर्भ** पु० सह समानो गर्भोऽस्य । सहोदरे भ्रातरि । सह गर्भे गर्भयुक्ते, मध्यवर्त्तिसूक्ष्मपत्रयुक्ते कुशदूर्वादौ च त्रि० ।

**सगर्भ्य** पु० समाने गर्भे भवः यत् । सहोदरे भ्रातरि ।

**सगोत्र** न० सह समानं गोत्रम् । कुले । सह समं गोत्रमस्य । ज्ञातौ त्रि०

**सग्धि** स्त्री० अद–क्तिन् नि० सह ग्धिः । सहभोजने ।

**सङ्कट** त्रि० सम् + कटच् । अल्पावकाशे स्थाने, संबाधे । सम्+कट-अच् । दुःखे "नरो मुच्येत सङ्कटादिति" चण्डी । देवीभेदे, ज्योतिषोक्ते दशाभेदे च स्त्री० टाप् ।

**सङ्कटाक्ष** पु० सङ्कटं संबाधमक्षति अक्ष–अण् । धवद्रुमे ।

**सङ्कर** पु० सम्+कॄ-अप् । सम्मार्जन्यादिभिः क्षिप्ते रजसि । मेलने, इतरजातिपुरुषेण इतरजातिस्त्रियां जाते जातिभेदे "सङ्करस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजा" इति गीता न्यायोक्ते जातिबाधके परस्पराभावसमानाधिकरणयोरेकाधिकरणवृत्तित्वरूपे धर्म्मविशेषे च । तदुदाहरणादि वाचस्पत्ये ।

**सङ्करीकरण** न० संकरः क्रियतेऽनेन च्वि+कृ–ल्युट् । "खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा । सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च" इत्युक्ते खरादिवधजन्ये पापे ।

**सङ्कर्षण** पु० संकृष्यते गर्भात् गर्भान्तरं नीयतेऽसौ सम्+कृष युच् । बलदेवे । भावे ल्युट् । आकर्षणे, स्थानान्तरनयने च न० ।

**सङ्कलन** न० सम्+कल–ल्युट् । एकत्रस्थीकरणे, योजने, (ठिक देओया) संग्रहे च ।

**सङ्कलित** त्रि० सम्+कल–क्त । योजिते, रेखादिना संहते, संगृहीते च

**सङ्कल्प** पु० सम्+कृप–घञ् । अभीष्टसिद्धये "इदमित्थमेव कार्य्य" मित्येवंरूपे मनसो व्यापारभेदे, कर्म्मसाधनाय अभिलापवाक्ये, "सङ्कल्पेन विना राजन् ! यत् किञ्चित् कुरुते नर" इति पुराणम् तत्र विशेषो वाचस्पत्ये । [ऽस्यत्र ।

**सङ्कल्पजन्मन्** पु० सङ्कल्पात् जन्म यस्य । कामदेवे । सङ्कल्पभवादयो-

सङ्कल्पयोनि पु० सङ्कल्पो योनिरुत्पत्तिकारणं यस्य । कामदेवे "सङ्कल्पयोनेरभिमानभूतमिति" कुमारः । [वाटशीले च ।

सङ्कसुक त्रि० सम्+कस-उकञ् । अस्थिरे, मन्दे, दुर्जने, सङ्कीर्णे, अप-

सङ्काश त्रि० सम्यक् काशते काश-अच् । सदृशे "तरुणादित्यसङ्काशमिति" तन्त्रम् । निभादिवदस्य नित्यसमासता ।

सङ्किल पु० सम्+किल-क । वह्नेरुल्कायाम् ।

सङ्कीर्ण त्रि० सम्+कॄ-क्त । बहुजनसंघर्षेण निरवकाशे स्थाने, मिलितनानाजातौ, व्याप्ते, मिश्रिते, सङ्कटे, एकत्र मिलितयोः परस्परविजातीययोश्च । इतरवर्णेन इतरवर्णस्त्रियां जाते जातिभेदे पु० ।

सङ्कुचित त्रि० सम्+कुच-क्त । कृतसङ्कोचे, संक्षिप्ते, अप्रफुल्ले च ।

सङ्कुल न० सम्+कुल-क । परस्परपराहते, "यावज्जीवमहं मौनी ब्रह्मचारी च मे पिता । माता तु मम बन्ध्यैव पुत्त्रहीनः पितामहः" इत्येवं वाक्ये, परस्परहननरूपे युद्धे बहुजनादिभिः संबाधेन निरवकाशे स्थाने च सङ्कीर्णे त्रि० ।

सङ्केत पु० सम्+कित घञ् । मनोगतभावव्यञ्जनाय कृते हस्तादिचालनरूपे व्यापारे (इसारा) "अस्माच्छब्दादयमर्थो बोध्यः, अयं शब्दः अमुमर्थं बोधयतु वा" इत्येवं शब्दनिष्ठे अर्थबोधनाशक्तिविशेषे, प्रियसङ्गमार्थे गुप्तस्थाने च ।

सङ्केतित त्रि० सङ्केतो जातोऽस्य तार० इतच् । सङ्केतवति वाच्ये अर्थे "साक्षात् सङ्केतितं योऽर्थमभिधत्ते" इति काव्यप्र० ।

सङ्कोच पु० सम्+कुच-घञ् । बहुविषयकवाक्यस्याल्पविषयकतया व्यवस्थापने, सामान्यशब्दस्य विशेषपरतायाम्, जडीभावे, बोधे, बन्धे च । सम् + कुच-अच् । मत्स्यभेदे पु० कुङ्कुमे न० ।

सङ्कोचनी स्त्री० सम्+कुच ल्यु-गौ० ङीष् । लज्जालुलतायाम् ।

सङ्क्रन्दन पु० सङ्क्रन्दयत्यसुरान् सम् + क्रन्द-णिच्-ल्यु । इन्द्रे । भावे ल्युट् । सम्यक्क्रन्दने न० ।

सङ्क्र(क्रा)म पु० सङ्क्रामत्यनेन सम् + क्रम घञ् वा वृद्धिः जलबन्ध-

स्थाने(सांको) "आत्मानं सङ्क्रमं कृत्वेति" श्रुतिः भावे घञ् ।
रव्यादेः राश्यन्तरसञ्चारे च । [न्तरगमने च ।

सङ्क्रमण न० सम् + क्रम ल्युट् । सङ्क्रान्तौ, रव्यादीनां राश्य-

सङ्क्रान्त त्रि० सङ्क्रान्तिरस्यास्ति अच्, सम् + क्रम क्त वा । सङ्-
क्रान्तियुक्ते सङ्क्रमणकर्त्तरि, प्राप्ते, दायरूपेण पितृभर्त्रादितः
आगते स्त्रिया प्राप्तधने च ।

सङ्क्रान्ति स्त्री० सम् + क्रम क्तिन् । सम्यक्क्रमणे, रव्यादीनां राश्य-
न्तरसञ्चारे च । तत्र विशेषो वाचस्पत्ये वक्ष्यते ।

सङ्ख्य न० संख्यायते परस्परनामोच्चारणं क्रियतेऽत्र सम्+ख्या घञर्थे
क । युद्धे । अङ् । विचारे, बुद्धौ, द्रव्याश्रिते एकत्वद्वित्वादौ गुण-
भेदे, च स्त्री० टाप् ।

सङ्ख्यात त्रि० सम्+ख्या-क्त । कृतसङ्ख्ये, गणिते-सम्यक्ख्याते च ।

सङ्ख्यावत् पु० सङ्ख्या विचारणा सास्त्यस्य मतुप् मस्य वः । पण्डिते
सङ्ख्यायुक्ते त्रि० । [योग्ये ।

सङ्ख्येय त्रि० सङ्ख्यायतेऽसौ सम् + ख्या-यत् । गण्ये सङ्ख्याकरण-

सङ्ग पु० सम्+सज-घञ् । मेलने, सम्बन्धे, विषयादिरागे च "ध्यायतो
विषयान् पुंसः सङ्गस्तेषूपजायते" इति गीता ।

सङ्गत न० सम् + गम-भावे क्त । सौहार्द्दे सङ्गतौ च कर्त्तरि क्त ।
मिलिते त्रि० ।

सङ्गति स्त्री० सम् + गम-क्तिन् । सङ्गमे, मेलने, न्यायोक्ते अनन्तरा-
भिधानप्रयोजकजिज्ञासाजनकज्ञानविषये, "सप्रसङ्गः उपोद्घातो हेतु-
तावसरस्तथा । निर्वाहकैककार्य्यत्वे षोढा सङ्गतिरिष्यते" इत्युक्ते
प्रसङ्गादौ पदार्थे च ।

सङ्गम पु० सम्+गम-घञ् न वृद्धिः । सङ्गतौ स्त्रीपुंसयोः संभोगे, नद्या-
देर्नद्यादियोगस्थाने च "गङ्गासागरसङ्गम" इति पुराणम् ।

सङ्गर पु० संगीर्य्यते सम्+गॄ अप् । आपदि, प्रतिज्ञायां, क्रियाकारके,
विषे, प्रमीट्वते च ।

सङ्गव पु० सङ्गता गावो दोहनायात्र काले नि० । "प्रातःकालो सङ्ग-

सीश्लोत् सङ्गवस्तावदेव तु” इति कात्युक्ते प्रातःकालानन्तरं मुहूर्त्तत्रयात्मके कालभेदे ।

**सङ्गिन्** त्रि० मनुज विषुन् । सङ्गयुक्ते । स्त्रियां ङीप् ।

**सङ्गीत** न० सम् + गै-क्त । दर्शनार्थे नाट्यगीतवाद्यत्रिके, तत्प्रतिपादकग्रन्थे च । कर्म्मणि क्त । सम्यग्गीते त्रि० ।

**सङ्गीर्ण** त्रि० सम् + गॄ-क्त । स्वीकृते । [सङ्कलने च ।

**सङ्ग्रह** पु० सम् + ग्रह-अप् । सञ्चये, संक्षेपे, बह्वर्थकवाक्यानामेकत्र

**सङ्ग्रहणी** स्त्री०सञ्ज्ञिता ग्रहणी । ग्रहणीरोगभेदे । [ङ्ग्रामत् त ।

**सङ्ग्राम** युद्धे अद० चु० उभ० सक० सेट् । सङ्ग्रामयति ते अस स-

**सङ्ग्राम** पु० सङ्ग्राम-घञ् । युद्धे ।

**सङ्ग्रामपटह** पु० ६त० । रणवाद्यभेदे ।

**सङ्ग्राहिन्** पु० सम्यक् गृह्णाति मलम् सम्+ग्रह-णिनि । कुटजवृक्षे । मलावष्टम्भके संग्रहकारके, च त्रि० ।

**सङ्घ** पु० संवयत् सर्वम् । सजातीयसमूहे, समूहे च ।

**सङ्घचारिन्** पु० सङ्घीभूय चरति चर-णिनि । मत्स्ये । सङ्घीभूयचारिणि जन्तुमात्रे त्रि० ।

**सङ्घजीविन्** पु० सङ्घेन जीवति जीव-णिनि । सङ्घोपजीविनि यानीने

**सङ्घट्ट** पु० सम्+घट्ट-घञ् । परस्परसङ्घर्षणे गठने च ।

**सङ्घट्टन** न ०सम्+घट्ट-ल्युट् । मेलने, गठने, रचनायाञ्च । युच् । तत्रैव स्त्री० । [(योड्हात) ।

**सङ्घतल** पु० सङ्घौ संहते मिलिते तले यत्र । संयोजितप्रतलद्वये

**सङ्घपुष्पी** स्त्री० सङ्घीभूतानि पुष्पाण्यस्याः ङीप् । धातकी पुष्प्राम् । (धाइ फूल) ।

**सङ्घर्ष** पु० सम्+घृष्-घञ् । परस्परघर्षणे, स्पर्द्धायाञ्च ।

**सङ्घशम्** अव्य० सङ्घ+वीप्सार्थे शम् । भूरिशः इत्यर्थे ।

**सङ्घाटिका** स्त्री० सङ्घटयति-सम् +घट-णिच् ण्वुल् । युग्मे, जलकण्टके, घ्राणे च । [संयोगे कफे च ।

**सङ्घात** पु० सम्+हन-घञ् । समूहे, नरकभेदे, सम्यग्हनने, दृढ़·

सङ्कातपत्रिका स्त्री० सङ्कातयुक्तं पत्रमस्याः कप् कत इत्वम् । शतपुष्यायाम् ।

सचि(ची) स्त्री० सच-इन् वा ङीप् । इन्द्राण्याम् ।

सचिल्लक पु० सह चिल्लकेन । क्लिन्ननेत्रे (पिँचुटियुक्तनेत्रे) ।

सचिव पु० सच-इन् तथा सन् याति वा-क । सहाये, मन्त्रिणि, ध्यात्तूरे च ।

सचेतन त्रि० सह चेतनया । विशिष्टज्ञानयुक्ते ।

सचेष्ट पु० सचते सच अच् तथाभूतः सन् इष्टः । आम्रे । सह चेष्टया । चेष्टान्विते त्रि० ।

सचारा स्त्री० सन् चारो गात्रानुलेपने विच्छगतिरस्याः । हरिद्रायाम्

सच्चिदानन्द पु० सन् नित्यः चित् चैतन्यमानन्दः त्रिपदकर्म्म० । नित्यज्ञानसुखमये ब्रह्मणि । [पितावितिः" स्मृतिः ।

सच्छूद्र पु० कर्म्म० । सद्गोपनापितादौ शूद्रभेदे । "सच्छूद्रौ गोपना-

सजम्बाल त्रि० सह जम्बालेन । पङ्कयुक्ते देशे ।

सजाति पु० समाना जातिरस्य । समानवर्णेन समानवर्णायामूढायाम् उत्पादिते पुत्रे । तुल्यजातौ त्रि० ।

सजातीय त्रि० समानां जातिमर्हति छ । समानधर्म्मयुक्ते ।

सजु(जू)स् अव्य० सह जुषते क्विप् पृ० वा दीर्घः । सहार्थे "सजुःस्त्य रतिं वसेदिति" । भट्टिः ।

सज्ज त्रि० सस्ज-अच् । उद्युक्ते, संनद्धे, सम्भृते, निष्टते च । अ । आयोजने, वेशे, च स्त्री० । सतो जायते जन-ड । साधुजाते त्रि० ।

सज्जन त्रि० सस्ज णिच् ल्युट् । रक्षार्थं सैन्यस्थापने, घट्टे च । सस्ज-ल्युट् । आयोजने । सन् जनः । सौजन्यवति जने, "कुरु . सज्जनरञ्जनमिति" सत्कुलोद्भवे च पु० । सस्ज-णिच् ल्युट् । गजपादीनामारोहणार्थं गजभूषाकरणादौ ।

सज्जित त्रि० सज्जा जातास्य तार० इतच् । कृतवेशे, भूषिते संनद्धे च

सञ्च सञ्चीयतेऽत्र सम्+चि-ड । लेखनार्थे पत्रभेदे (साँच)

सञ्चय पु० सम्+चि-अच् । समूहे, संग्रहे च । ल्युट् । सञ्चयनम् । सञ्ग्रहे न० । [ पुराणम् ।

सञ्चयिन् पु० सम्+चि-इनि । संग्रहकारके, "सञ्चयी नावसीदतीति"

सञ्च(ञ्चा)र पु० सञ्चरत्यनेन सम्+चर घञर्थे क घञ् वा । सेतौ, देहे, ग्रहादेः राश्यन्तरगमने च । भावे-क । सम्यग्गतौ

सञ्चाय्य पु० सञ्चीयतेऽग्निरत्र सम् चि-ण्यत् । यज्ञभेदे ।

सञ्चारिका स्त्री० सञ्चारयति नायकयोर्वार्त्ताम् सम्+चर-णिच् ण्वुल् । दूत्यां कुट्टिन्याम्, युग्मे, घ्राणे च ।

सञ्चारिन् पु० सम्+चर-णिनि । धूपे, वायौ, अलङ्कारोक्ते शृङ्गारादिरसाद्यनुगुणे भावभेदे च । "व्यक्तः सञ्चारिणा तथेति, साहित्य० सञ्चारकारके त्रि० स्त्रियां ङीप् । "सञ्चारिणी दीपशिखेवेति" रघुः । सा च हंसपद्याञ्च ।

सञ्चाली स्त्री० सञ्चलति सम्+चल-ण गौ०ङीष् । गुञ्जायाम् ।

सञ्चित त्रि० सम्+चि-क्त । संगृहीते ।

सञ्जवन न०सम्+जु-युच् । परस्पराभिमुखतया स्थिते चतुःशाले गृहे ।

सञ्जीवन न० सम्+जीव-ल्युट् । चतुःशालगृहे सम्यक्प्राणधारणे च । संजीवयति णिच् -ल्युट् । औषधिभेदे स्त्री० ङीप् ।

सट न० स्त्री० सट- अच् । व्रतिनां केशसङ्घाते, जटायाम्, शिखायां, सिंहादेः केसरे च "सटाच्छटाभिन्नघनेनेति" माघः ।

सटि(टी) स्त्री० सट-इन् वा ङीप् । शट्याम् । कन् । गन्धपत्त्र-द्रव्ये । सठ-इन् ङीप् । सठीत्यत्र ।

सण्डीन न० सम्+डी-क्त । पक्षिणां सङ्गत्य गमनरूपे गतिभेदे ।

सत् त्रि० अस-शतृ । सत्ये, साधौ, पूजिते, धीरे, प्रशस्ते, विद्यमाने च । स्त्रियां ङीप् सा च पतिव्रतायां, स्त्रियां, दक्षकन्यायाञ्च । "सती सती योगविसृष्टदेहेति" कुमारः । ब्रह्मणि न० "ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत" इति गीता । आदरे अव्य० "सद-सती आदरानादरयोरिति" पाणिनिः ।

सन्तत न० सम्+तन-क्त पु० समोऽन्त्यलोपः । निरन्तरे तद्वति त्रि० ।

सतत्त्व न० सह सदृशं तत्त्वेन । स्वभावे ।
सतानन्द पु० गौतमपुत्रे अहल्यागर्भजे मुनिभेदे ।
सतीन पु० सतीं नयति नी-ड । वंशभेदे, (क्षुद्रमटर) कलायभेदे च ।
स्वार्थे कन् तत्रैव ।
सतीर्थ्य पु० समाने तीर्थे गुरौ वसति यत् समानस्य सः । परस्परैकगु-
रुके छात्रे, निर्यंकारोऽप्ययमित्यन्ये ।
सतील पु० सतीं लाययति ड । (क्षुद्रमटर) कलाये ।
सतीलक पु० सतील इव कायति कै-क, सह तिलेन तिलचिह्नेन कप्
पृ० दीर्घः । वंशे, (क्षुद्रमटर)कलायभेदे च ।
सतीला स्त्री० सह तिलेन तिलचिह्नेन पृ० दीर्घः । कलायभेदे ।
सत्कर्तृ पु० सत्+कृ-तृच् । विष्णौ । सत्कारके त्रि० ।
सत्कर्म्मन् न० कर्म्म० । वेदादिविहिते यागादौ कर्म्मणि ।
सत्काञ्चनार पु० कर्म्म० । रक्तकाञ्चने ।
सत्कार पु० सत्+कृ-घञ् । सम्मानने, पूजने च ।
सत्कृत त्रि० सत्+कृ-क्त । पूजिते, कृतसम्माने च ।
सत्क्रिया स्त्री० सत्+कृ-श । सत्कारे, सम्मानने, पूजने च ।
सत्तम त्रि० अतिशयेन सन् तमप् । अतिशयसाधौ । [तायाञ्च ।
सत्ता स्त्री० सतो भावः तल । द्रव्यगुणकर्म्मवृत्तौ जातिभेदे, विद्यमान-
सत्त्र न० सद त्रल् । स्थाने, यज्ञे, सदादाने, आच्छादने, अरण्ये कैतवे,
धने, गृहे, दाने, सरसि च ।
सत्त्रम् अव्य० सद-त्रस् । सहार्थे । त्र । सत्त्राप्यत्रार्थे अव्य०
सत्त्रशाला स्त्री० ६त० । अन्नजलादेर्दानार्थे कल्पिते गृहे ।
सत्त्राजित् पु० सत्त्रेणाजयति लोकान् आ+जि-क्विप् । श्रीकृष्णश्व-
शुरे सत्यभामाजनके राजभेदे ।
सत्त्रिन् पु०सत्त्रं गृहं यज्ञो वा विद्यतेऽस्य इनि । गृहपतौ गृहस्थे च ।
सत्त्व न० सतोभावः त्व । सांख्यसिद्धे प्रकाशादिसाधने प्रकृत्यवयवे पदार्थे,
"तत्र सत्त्वं निर्म्मलत्वात् प्रकाशकमनामयमिति" गीता । अयं हि-
तकारः । पु० एतत्कारः स्वभावे द्रव्ये, प्राणेषु, व्यवसाये, रणे,

श्रात्मनि, चित्ते, चायुषि, धने च। न्यायोक्ते बलाकुपे जातिभेदे, विद्यमानतायाञ्च त्रिलकारः। जन्तुग पु० न०।

सत्पत्त न० सत् शोभनं पत्रम्। पद्मस्य नवदले इवं। तद्दले त्रि०

सत्पथ पु० कर्म्म०। शोभनमार्गे, वेदादिविहिताचारे च।

सत्प्रतिग्रह पु० सद्ग्रहः प्रतिग्रहः। साधुदत्तधनस्य प्रतिग्रहे "सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः। विभागः संप्रयोगश्च सत्प्रतिग्रह एव चेति" स्मृतिः।

सत्प्रतिपत्त पु० कर्म०। तुल्यविरोधिनि, न्यायोक्ते हेतुदोषभेदे च।

सत्फल पु० सन्ति शोभनानि फलान्यस्य। दाडिमवृक्षे सुफलवति त्रि०

सत्य न० सते हितं यत्। सत्ययुगे, शपथे, सिद्धान्ते, याथार्थ्ये च तद्वति त्रि०। अश्वत्थवृक्षे नान्दीमुखश्राद्धदेवे च पु०।

सत्यङ्कार पु० सत्य+कृ—घञ् नि० मुम्। मयैतत् अवश्यं क्रेयमित्येवं सत्यकरणे, सत्यापने (बायनादेश्रीया)।

सत्यपुर न० सत्ययुक्तं पुरम्। विष्णुलोके।

सत्यफल पु० सत्यं फलमस्य। विल्ववृक्षे।

सत्यभामा स्त्री० सत्राजितोन्पसुतायां श्रीकृष्णस्य भार्य्यायाम्।

सत्यम् अव्य० सत्+यक्। स्वीकारे।

सत्ययुग न० सत्यप्रधानं युगम् शाक०। सत्यप्रचुरे प्रथमे युगे।

सत्यलोक पु० सत्यप्रचुरो लोकः। ऊर्द्ध्वस्थसप्तलोकमध्ये, सर्व्वोपरिस्थे-लोके। [दयोऽप्यत्र।

सत्यवचस् पु०सत्यं वचोऽस्य। मुनौ। सत्यवचनयुक्ते त्रि०सत्यवचना-

सत्यवत् पु० सत्यं विद्यते ऽस्य मतुप् मस्य वः। सावित्रीपतौ नृपभेदे मुनिभेदे च। सत्ययुक्ते त्रि० स्त्रियां ङीप् सा च व्यासस्य मातरि च।

सत्यवतीसुत पु० ६त०। मत्स्यगन्धापुत्रे व्यासे मुनिभेदे।

सत्यवाच् पु०सत्या वाक् यस्य। ऋषौ, काके च तस्य शब्देनहि शुभाशुभनिश्चयेन तस्य तथात्वम्। सत्यवदनशीले त्रि०।

सत्यवादिन् त्रि० सत्यं वदति वद-णिनि । यथार्थवाक्यवक्तरि ।
सत्यव्रत पु० सत्यं व्रतमस्य । त्रिशङ्कुनामके राजभेदे । सत्यव्रत परे त्रि०
सत्यसङ्गर सत्यः सङ्गरः प्रतिज्ञा यस्य । कुबेरे सत्यप्रतिज्ञे त्रि०
सत्यसन्ध त्रि० सत्या सन्धा सन्धानं यस्य । सत्याभिसन्धौ ।
सत्याकृति स्त्री० सत्य+डाच्+कृ-क्तिन् । "अवश्यमेतन्मयाक्रेय मि-
त्येव" प्रतिज्ञारूपे सत्यकरणे (बायनादेओया) ।
सत्यानृत न० सत्यसहितमनृतं यत्र । वणिग्वृत्तौ वाणिज्ये ।
सत्यापन न० सत्य+णिच्-पुक् च ल्युट् । सत्याकृतौ । युच् । सत्या-
पनाप्यत्र स्त्री० । [वाक्ये न० ।
सत्योद्य त्रि० सत्यमुद्यं यस्य वद-क्यप् । सत्यवादिनि । कर्म० सत्य-
सत्र सम्बन्धे सन्ततौ च अद० चु० आ० सक० सेट् । सत्रयते अससत्रत । सत्रापयते इत्यन्ये ।
सत्र न० सत्र्यते सन्तन्यते घञ् । यज्ञभेदे, श्रीकृष्णश्वशुरे नृपभेदे च ।
सत्राजित् पु० सत्रेणाजयति लोकम् । श्रीकृष्णश्वशुरे ।
सत्वर न० सह त्वरया शीघ्रे त्वरान्विते त्रि० ।
सदंशक पु० सह दंशेन कप् । कर्कटके । दंशकयुक्ते त्रि० ।
सदंशवदन पु० सह दंशेन दंशाकारेण तथाभूतं वदनमस्य । कङ्कविहगे
सदञ्जन न० कर्म० । पुष्पाञ्जने रीतिजाते अञ्जनभेदे ।
सदन न० सीदत्यस्मिन्+सद-ल्युट् । गृहे, जले च ।
सदय पु० सन् अयः साधुशुभावहविधौ । सह दयया । दयान्विते त्रि०
सदस् स्त्री० न० । सीदन्त्यस्याम् सद-असि । सभायाम् ।
सदस्य पु० सदसि साधुर्वर्त्तति वा यत् । न्यूनातिरिक्ततावियर्ययपरि-
हारार्थं विधानदर्शिनि । सभासदि त्रि० ।
सदा अव्य० सर्वस्मिन् काले दाच् सादेशः । सर्वस्मिन् काले इत्यर्थे ।
सदागति पु० सदा गतिरस्य । वायौ सदागतियुक्ते त्रि० ।
सदाचार पु० कर्म० द्वत० वा "सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ।
तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते । तस्मिन् देशे य आचारः
पारम्पर्यक्रमागतः । वर्णानां सान्तरालानां स सदाचार उच्यते"

इति मनूक्तदेशप्रचलिताचारे "साधवः क्षीणदोषाश्च सच्छब्दस्, साधु-वाचकः । तेषामाचरणं यत्तु सदाचारः स उच्यते" इत्युक्ते साधूनामाचरणे च ।

**सदातन** पु० सदा भवः सदा+ट्युल् तुट् च । विष्णौ । नित्ये त्रि० । स्त्रियां ङीप् ।
[र्णायाञ्च ।

**सदातोया** स्त्री० सदा तोयानि यस्याम् । करतोयानद्याम्, एकाप-

**सदात्मन्** त्रि० सन् साधुरात्मा चित्तं यस्य । साधुचित्ते ।

**सदादान** पु० सदा दानं मदजलं त्यागो वा यस्य । ऐरावते गजे+ सदात्यागिनि त्रि० ।

**सदानन्द** पु० सदा आनन्दो यस्य सदाशिवे । अनवरतानन्दयुक्ते त्रि०

**सदानर्त्त** पु० सदा नृत्यति नृत–अच् । खञ्जनविहगे सदा नृत्य-वति त्रि० ।

**सदानीरा** स्त्री० सदा नीरमस्याम् । करतोयानद्याम् ।

**सदापुष्प** पु० सदा पुष्पं यस्य । नारिकेलवृक्षे । रक्तार्के स्त्री० ङीप् । सदापुष्पयुक्ते त्रि० ।

**सदाप्रसून** पु० सदा प्रसूनमस्य । रोहितकवृक्षे, अर्कवृक्षे, कुन्दे च ।

**सदाफल** पु० सदा फलमस्य । नारिकेलवृक्षे, उडुम्बरवृक्षे च वार्त्ता-कुभेदे त्रि० स्त्रियां टाप् ।

**सदाभद्रा** स्त्री० सदा भद्रमस्याः गाम्भारीवृक्षे ।

**सदाशिव** पु० सदा शिवमस्मात् । महादेवे ।

**सदुत्तर** न० कर्म्म० व्यवहारे, प्रतिज्ञापत्रानुसारिण्युत्तरे प्रश्नस्य सम्य-गुत्तरे च इत० तद्वति त्रि० ।

**सदृक्ष** त्रि० समानं दर्शनमस्य दृश+क्स समानस्य सादेशः । तुल्यरूपे ।

**सदृश्** त्रि० समानं दर्शनमस्य समान+दृश–क्विप् सादेशः । तुल्यरूपे ।

**सदृश** त्रि० समानं दर्शनमस्य समान+दृश–टक् । तुल्यरूपे स्त्रियां ङीप्

**सदेश** पु० सह देशेन । निकटे । देशान्विते त्रि० ।

**सद्धेतु** पु० कर्म्म० न्यायोक्ते हेत्वाभासदोषरहिते हेतौ ।

सद्भाव पु० सतोभावः, सन् वा भावः । विद्यमानत्वे साधुभावे च । सद्भावमागत" इति भट्टिः ।

सद्भूत न० असत् सत् भूतम् । सत्+च्वि—भू-क्त । यथार्थे । तद्वति त्रि०

सद्मन् न० सीदत्यस्मिन् सद्—मनिन् । गृहे, जले च ।

सद्यःक्षत त्रि० सद्यस्तत्क्षणात् क्षतः क्ष-क्त । तत्क्षणक्षते ।

सद्यःप्राणकर त्रि० सद्योऽकठात् प्राणं बलम् आयुर्वृद्धिं करोति कृ-अच् । "सद्योमांसं नवान्नं च बाला स्त्री क्षीरभोजनम् घृत-मुष्णोदकञ्चैव सद्यःप्राणकराणि षड़ित्युक्ते" द्रव्यसमूहे ।

सद्यःप्राणहर त्रि० सद्यः प्राणमायुर्बलं वा हरति हृ-अच् । शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि । प्रभाते मैथुनं निद्रा सद्यःप्राणहराणि षड़ित्युक्ते" शुष्कमांसादिद्रव्यसमूहे ।

सद्यःशोथा स्त्री० सद्यः शोथोयस्याः । कपिकच्छ्वाम् ।

सद्यःशौच न० सद्यः शौचमपनेयमशौचम् । स्तत्युक्ते शौचनाश्ये अशौचे इव० । तद्वति शिल्पन्दपशोत्रियादौ त्रि० ।

सद्यस् अव्य० समेऽह्नि नि० । तत्क्षणे, समानदिवसे इत्यर्थे च ।

सद्यस्क त्रि० सद्योभवः कन् । सद्योजाते ।

सद्योजात पु० सद्योजायते जन—कर्त्तरि क्त । वत्से, शिवमूर्त्तिभेदे च आशुजाते त्रि० ।

सद्योभाविन् पु० सद्योभवति भू-णिनि । वत्से ।

सद्वृत्त न० वृत-क्त-कर्म० । साधुस्वभावे साधुवर्त्तने । इब० सच्चरित्रवति त्रि० । 'सद्वृत्तसन्निकर्षौहि क्षणार्द्धमपि शस्यते' इति पुराणम् ।

सद्वृत्ति स्त्री० कर्म० । उत्तमचरित्रे उत्तमव्याख्यानरूपे ग्रन्थे च सती वृत्तिः यस्य । सद्वृत्तिमति त्रि० 'सद्वृत्तिः सन्निबन्धनेति' माघः । [वा ङाप् ।

सधर्मन् त्रि० समानोधर्मोऽस्य अनिच् समानस्य सः । सदृशे । स्त्रियां

सधर्मचारिणी स्त्री० सह धर्मं चरति चर-णिनि । सह धर्म-चारिण्यां भार्य्यायाम् । [ ङीप् । सा च पत्नग्राह्य ।

सधर्मिन् त्रि० समानं धर्मं चरति । तुल्यधर्मचरणकर्त्तरि । स्त्रियां

**सधवा** स्त्री० सह धवेन । जीवत्पतिकायां स्त्रियाम् ।

**सध्र्यच्** त्रि० सह-अञ्चति अनृच-क्विप् सहस्य सध्रिः । सहचरे स्त्रियां ङीप् सध्रीची सा च भार्य्यायाञ्च ।

**सन** पु० सन-अच् । घण्टापाटलिवृक्षे ।

**सनक** पु० सन वुन् । मुनिभेदे 'सनकश्च सनन्दश्चेति' तर्पणमन्त्रम् ।

**सनत्** पु० सन-अति । चतुर्मुखे ब्रह्मणि, सदेत्यर्थे अव्य० ।

**सनत्कुमार** पु० ६त० । ब्रह्मणः पुत्रे मुनिभेदे ।

**सनन्द** पु० सह नन्देन । मुनिभेदे । आनन्दयुक्ते त्रि० ।

**सनपर्णी** स्त्री० सनस्येव पर्णान्यस्याः ङीप् । अश्वनपर्ण्याम् ।

**सनसूत्र** न० सनस्य सूत्रमस्त्यस्य अच् पु० । मत्स्यधारणार्थं सूत्रकृते जाले

**सना** अव्य० सदा-नि दस्य नः । सदेत्यर्थे ।

**सनातन** त्रि० सदा ट्युल् तुट् च नि० । सदाभवे वस्तुनि निश्चले च स्त्रियां ङीप् सा च सरस्वत्यां, लक्ष्म्याञ्च । शिवे ब्रह्मणि, दिव्य-मनुष्ये च पु० ।

**सनाभि** पु० समानः नाभिर्यस्य । ज्ञातौ तस्य एकदेहोत्पन्नत्वेन तुल्य-नाभिता इति तथात्वम । सध्वयुक्ते, स्नेहयुक्ते च त्रि० ।

**सनामक** पु० सना सदा अमयति अम-ण्वुल् । शोभाञ्जनवृक्षे तस्य पक्वादिभोजनस्य रोगहेतुत्वात्तथात्वम् । सह नाम्ना कप् । नाम-युक्ते त्रि० । [ङीप् ।

**सनि** पु० सन इन् । पूजायां, दाने च । सत्कारपूर्वकनियोगे स्त्री० वा

**सनिष्ठी(ष्ठे)व** न० सह निष्ठी(ष्ठे)वेन । मुखच्युतवारिकणे (सथुत्कारे)

**सनीड** त्रि० समानं नीडं सह नीडेन वा । निकटस्थे, नीड़युक्ते च ।

**सन्तत** न० सम्+तन-क्त । सतते निरन्तरे । नैरन्तर्य्यवति विस्तीर्णे च त्रि० ।

**सन्तति** स्त्री० सन्तन्यते सम्+तन-क्तिच् । गोत्रे, पुत्रे, कन्यायाञ्च । भावे-क्तिन् । विस्तारे, पङ्क्तौ, अविच्छिन्न धारायाञ्च ।

**सन्तप्त** त्रि०सम्+तप-क्त । अध्वगमनादिना परिश्रान्ते, अग्नितप्ते, तेन विशुद्धे च 'सन्तप्तचामीकरवल्गुवज्रमिति भट्टिः ।

सन्तमस न० सन्ततं तमः अच् समा०। गाढान्धकारे, मोहे च

सन्तान पु० सम्+तन-घञ्। वंशे, अपत्ये, विस्तारे, कल्पवृक्षे च।

सन्तानिका स्त्री० सम्—तन-ण्वुल् टाप् अत इत्वम्। क्षीरसरे, कर्कटजाले, फेने, क्षुरिकाफले च।

सन्ताप पु० सम्यक् तापः प्रा०। वह्निजाते तापे।

सन्तापन पु० सन्तापयति सम्+तप-णिच्-ल्यु। कामदेवस्य पञ्चशरान्तर्गते शरभेदे। सन्तापकारके त्रि०।

सन्तोष पु० सम्+तुष-घञ्। धैर्य्ये, स्वास्थ्ये च 'सन्तोषमूलं हि सुखमि'ति मनुः। [शिंकायाञ्च स्त्री०।

सन्दंश पु० सम्+दन्श-अच्। (सांडाशी) यन्त्रभेदे। ण्वुल्। सन्दं

सन्दंशपतित पु० सन्दंशे तन्मध्ये पतित इव। मीमांसकोक्त न्यायभेदे

सन्दर्भ पु० सम्+दृभ-घञ्। रचनायां, ग्रन्थने, प्रबन्धे "गूढार्थस्य प्रकाशश्च सारोक्तिः श्रेष्ठता तथा। नानार्थवत्त्वं वेद्यत्वं सन्दर्भः कथ्यते बुधैरि"त्युक्ते कथनभेदे, वस्तुतात्पर्य्यविशेषे च।

सन्दान न० सम्+दो-ल्युट्। बन्धने, दाम्नि, सम्यक्खण्डने च दा-ल्युट्। सम्यग्दाने न० गजस्याष्ठीवतोरधोभागे पु०।

सन्दानिका स्त्री० सन्दानं संखण्डनमस्त्यस्य ठन्। विट्खदिरे

सन्दानित त्रि० सन्दानं जातमस्य तारकादि इतच्। बद्धे 'रसनासन्दानितचरणे'ति मालविकाग्निमित्रम्।

सन्दानिनी स्त्री० सन्दानं बन्धनं गवामत्र इनि ङीप्। गोष्ठे

सन्द्राव पु० सम्+द्रु-घञ्। पलायने।

सन्दाह पु० सम्+दह घञ्। मुखादिशोषे, सम्यग्दाहे च।

सन्दिग्ध त्रि० सम्+दिह-कर्त्तरि क्त। सन्देहयुक्ते। कर्मणि क्त। सन्देहविषये।

सन्दित त्रि० सम्+दो-क्त। बद्धे।

सन्दिष्ट न० सम्+दिश—भावे—क्त। वाचिकार्थकथने वार्त्तायाम् कर्मणि-क्त। उपदिष्टे त्रि०।

सन्दिहान त्रि० सम्+दिह—शानच्। सन्देहयुक्ते।

सन्दी स्त्री० सम्+दो-ड गौ०ङीष् । खट्वायाम् ।

सन्दीप्य पु० सन्दीप्यतेऽसौ सम्+दीप–कर्त्तरि यत् । मयूर शिखाद्रुमे।

सन्देश पु० सम्+दिश–घञ् । वाचिकार्थकथने वार्त्तायाम् ।

सन्देशहर पु० सन्देशं हरति अभीष्टस्थानं कथनाय नयति हृ–अच् । दूते 'तत्रैव सन्देशहरादिति' रघुः । ण्वुल् । सन्देशहारकोऽप्यत्र।

सन्देह पु० सम्+दिह–घञ् । संशयशब्दस्यार्थे ।

सन्दोह पु० सम्+दुह–घञ् । समूहे । सम्यग्दोहे च

सन्द्राव पु० सम+द्रु-घञ् । पलायने ।

सन्धा स्त्री० सम्+धा-अङ् । स्थितौ, प्रतिज्ञायाम्, सन्धाने, द्रव्योत्पादनानुगुणे व्यापारभेदे, अनुसन्धाने च ।

सन्धान न० सम्-धा-ल्युट् । सुरादिसम्पादनानुगुणे व्यापारे सौमनसकण्डनात्मके अभिषवे, अनुसन्धाने सङ्घट्टने च सन्धाने स्त्रीत्वमपि तत्र ङीप् । सा च कुम्भशालायाञ्च

सन्धि पु० सम्+धा-कि । नृपाणां षड्गुणान्तर्गते मेलनार्थं सन्धीकरणरूपे व्यापारे, संयोगे, अस्थिद्वयसंयोगस्थाने, चौरादिकृतसुरङ्गायां 'सन्धिं कृत्वा तु चौर्य्यमिति स्मृतिः भगे, सङ्घट्टने, नाटकाङ्गविशेषे, व्याकरणोक्ते वर्णद्वयजाते वर्णविकारभेदे ।

सन्धिचौर पु० सन्धिना कृतसुरङ्गया चौरः । सन्धिं कृत्वा चौर्य्यकारके (सिन्धेल) ।

सन्धिजीवक पु० सन्धिं जीवति जीव-ण्वुल् । शाठ्येन परार्थहारके

सन्धित त्रि० सन्धा जाताऽस्य तारकादित्वात् इतच् । कृतसन्धे, मिलिते च

सन्धिनी स्त्री० सन्धा वृषभसंयोगस्तज्जगर्भोऽस्त्यस्याः इनि ङीप् । वृषभसंयोगेन धृतगर्भायां गवि ।

सन्धिपूजा स्त्री० सन्धौ अष्टम्याः शेषे नवम्याश्च आद्ये दण्डे पूजा । आश्विनशुक्लाष्टमीनवमीसन्धिकाले विहितपूजायाम् ।

सन्धिबन्ध पु० सन्धिं बध्नाति संयुनक्ति सम्+बन्ध-अच् । भूमिचम्पके । तत्सेवने हि भग्नसन्धियोजनं वैद्यके प्रसिद्धम् ।

**सन्धिला** स्त्री० सन्धिं लाति ला-क । नद्यां, मदिरायाञ्च । स्वार्थे कन् । सुरङ्गायाम् ।

**सन्धिविग्रहाधिकारिन्** पु० सन्धिविग्रहेषु अधिकरोति अधि+कृ-णिनि । नृपाणां सन्धिविग्रहाद्यधिकारिमन्त्रिभेदे

**सन्धिवेला** स्त्री० सन्धियुक्ता वेला समयः । अहोरात्रसन्धिसमये

**सन्धिहारक** पु० सन्धिना सुरङ्गया हरति परद्रव्यम् हृ-ण्वुल् सन्धिचौरे । (सिन्धेल)

**सन्धुक्षित** त्रि० सम्+धुक्ष क्त । उद्दीपिते ।

**सन्धेय** त्रि० सम्+धा-यत् । संयोज्ये मेलनीये ।

**सन्ध्या** स्त्री० सम्-ध्यै-अङ् टाप् । एकरूपकालोत्तरभाविपररूपकालस्थावकाशे, दिवारात्रस्य मध्यवर्त्तिकाले, स च दिवाशेषदण्डसहितरात्रिप्रथमदण्डात्मकः कालः तयोश्चतुर्दण्डात्मककालश्च "त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टये । नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते इति स्मृतिः । अहोरात्रस्य यः सन्धिः सूर्य्यनक्षत्रवर्जितः । सा च सन्ध्या समाख्यातेति स्मृतिः । सायाह्ने, सन्ध्याकाले उपास्यदेवताभेदे च । सन्ध्यामुपासते ये तु नियतं शंसितव्रता इति स्मृतिः । 'प्रातः सन्ध्यां ततः कृत्वा संकल्पं बुध आचरेदि'ति स्मृतिः। एतद्विशेषो वाचस्पत्ये । 'चत्वार्य्याहुः सहस्राणि वर्षाणान्तु कृतं युगम् । तस्य तावच्छती सन्ध्या सन्ध्यांशश्च प्रकीर्त्तित 'इत्युक्ते युगसन्धिकाले, नदीभेदे, ब्रह्मपत्नीभेदे च ।

**सन्ध्यांश** पु० सन्ध्यायाः सत्ययुगादेरंशः । सत्ययुगादेरंशभेदे तत्प्रमाणम् सन्ध्यार्थे द्रष्टव्यम् । 'सन्ध्यासन्ध्यांशसहितं विज्ञेयं चतुर्युगमिति मनुः ।

**सन्ध्याचल** पु० 'सन्ध्यां वशिष्ठः कृतवान् तत्र यस्माद्द्विजैः स्तुतः । ततः सन्ध्याचलं नाम तस्य गायन्ति देवता' इत्युक्ते पर्व्वतभेदे ।

**सन्ध्यानटिन्** सन्ध्यायां नटति नट-णिनि । शिवे ।

**सन्ध्यापुष्पी** स्त्री० सन्ध्यायां पुष्पमस्याः । जातिवृक्षे ।

सन्ध्याबल पु० सन्ध्यायां सन्ध्योपलक्षिते रात्रिकाले बलं यस्य । रात्रौ बलयुक्ते राक्षसे । [कमेघे च ।

सन्ध्याभ्र न० सन्ध्याकालिकमभ्रमिव । सुवर्णगैरिके । सन्ध्याकालि-

सन्ध्याराग न० सन्ध्याया इव रागोऽस्या सिन्दूरे । [भ्रस्मणि ।

सन्ध्याराम पु० सन्ध्यायां तदाख्यभार्य्यायां रमते रम-घञ् । चतुर्मुखे

सन्न पु० सीदति सद क्त । पियालवृक्षे अवसन्ने त्रि०स्वार्थे कन् । खर्वे

सन्नकद्रु पु० सन्न एव सन्नकः कर्म्म० । पियालवृक्षे खर्ववृक्षे च

सन्नत त्रि० सम्+नम क्त । प्रणते, शब्दायमाने च ।

सन्नति स्त्री० सम् + नम-क्तिन् । प्रणामे, ध्वनौ, नम्रतायाञ्च ।

सन्नद्ध त्रि० सम्+नह-क्त । कृतसन्नाहे धृतवर्म्मणि, व्यूह रचनयाव-स्थिते सैन्यादौ, आततायिनि, मन्त्रादियुक्ते च ।

सन्नय पु० सम्+नी-अच् । समूहे, पृष्ठस्थिते बले च ।

सन्नहन न० सम्+नह-ल्युट् । वर्म्मग्रहणे, उद्योगे, सम्यग् बन्धने च ।

सन्नाह पु० सन्नह्यते सम् + नह-घञ् । (सांजोया) वर्मणि ।

सन्निकर्ष पु०सम्+नि-कृष-घञ् । सान्निध्ये 'सद्द्रसन्निकर्षो हि कर्णा-र्द्धमपि शस्यते" इति पुराणम् । विषयेन्द्रियसम्बन्धे, न्यायमते ज्ञा-नलक्षणा सामान्यलक्षणायोगजधर्मविशेषात्मके अलौकिकप्रत्यक्ष-साधने उपायभेदेच ।

सन्निकर्षण न० सम्+नि+कृष-ल्युट् । सन्निधाने ।

सन्निकृष्ट त्रि०सम्+नि+कृष-क्त । निकटस्थे ]

सन्निध न० सम्+नि+धा-क । नैकट्ये ।समीपस्थिते त्रि० ।

सन्निधान न० सम्+नि + धा-ल्युट् । नैकट्ये, सामीप्ये ।

सन्निधि पु० सम्+नि+धा-कि । सामीप्ये । कर्मणि कि । इन्द्रियवि-षये । कर्म० । साधु निधौ ।

सन्निपतित त्रि० सम् + नि—पत—क्त । मिलिते, उपस्थिते, हृते च

सन्निपात पु० सम्+नि—पत-घञ् । मेलने 'सन्निपात लक्षणोविधिर-निमित्तं तद्विघातस्येति" व्या० परि० । कफादिधातुत्रयस्य विजा-तीयवैषम्यरूपत्रिदोषजे विकारे, नाशे, उपस्थितौ च ।

**सन्निपातज्वर** पु० सन्निपातस्य तदर्थो ज्वरः। वैद्यकोक्ते। त्रिदोषज-
विकारसाधने ज्वरे। [पाणिनिः।

**सन्निपातनुद्** पु० सन्निपातं त्रिदोषजविकारं नुदति नुद-क्विप्। मे-

**सन्निबन्धन** न० सम्यक् निबन्धनं प्रा०। नानास्थानस्थवाक्यानामेकत्र
सङ्कलने, तदुपयोगिग्रन्थभेदे च। ७ब०। सम्यग्निबन्धवति त्रि० "स-
हृत्तिः सन्निबन्धनेति" माघः।

**सन्निभ** त्रि० सम्+नि+भा—क। सदृशे। निभादिवदस्य नित्यसमासता।

**सन्निवेश** पु०सम्+विश—आधारे घञ्। पुरादेर्बाह्यस्थे देशे। भावे घञ्।
सम्यक् स्थितौ।

**सन्निहित** त्रि० सम्+नि+धा—क्त। निकटस्थे "कर्म्मसन्निहितं
नैवेति" मीमांसा। सम्यक् स्थापिते च। भावे क्त। नैकट्ये न०

**सन्न्यस्त** त्रि० सम्+नि+अस—क्त। निक्षिप्ते, कृतसम्यक्त्यागे, युक्ते, अ-
र्पिते च।

**सन्न्यास** पु० सम्+नि+अस—घञ्। "काम्यानां कर्म्मणां त्यागं सन्न्यासं
कवयोविदु" रित्युक्ते विहितकर्म्मणां विधानेन सम्यक्त्यागे, तदु-
पयोगिचतुर्थाश्रमे, चैत्रे—कर्त्तव्ये पुराणप्रसिद्धशिवव्रतभेदे च।

**सन्न्यासिन्** पु० सम्+नि+अस—णिनि। सन्न्यासवति, चतुर्थाश्रमवति,
चैत्रे कर्त्तव्यशिवव्रत कर्त्तरि च।

**सपक्ष** पु० समानः पक्षः। तुल्यरूपे साध्यसाधनाश्रये पक्षे च।

**सपक्षाकरण** न०सह पक्षेण पक्षेण सपक्षः तथा क्रियते सपक्ष+डाच्
कृ—ल्युट्। पक्षेण सह शरवेधनरूपे अत्यन्तव्यथने। कर्म्मणि—क्त।
सपक्षाकृतः। तथा पीड़िते त्रि०।

**सपत्न** पु० सह एकार्थे पतति यतते पत—न सहस्य सः। शत्रौ।

**सपत्नारि** पु० सपत्नः अरिरिव। (वेडवाँश) वंशभेदे।

**सपत्नी** स्त्री०समानः पतिर्यस्याः ङीप् न च। एकभर्त्तृकायां स्त्रियाम्,
समस्वामिकायां भूम्यादौ तु सपतिरित्यपि।

**सपदि** अव्य० सह पद्यते पद-इन् सहस्य सः तत्क्षणाद्यर्थे "सपदि
मुकुलिताक्षीमिति" कुमारः।

सपर पूजायां कण्ड्वादि० पर० सक० सेट्। सपर्य्यति असपर्य्यीत्।

सपर्य्या स्त्री० सपर—यक्-अ टाप्। पूजायाम् "सोऽहं सपर्य्याविधि-भाजनेनेति" रघुः। [सविग्रिष्टे च।

सपाद स्त्री० सह पादेन चरणेन चतुर्थांशेन वा। पादयुक्ते,चतुर्थां-

सपिण्ड त्रि० समानः पिण्डः स्वदेहारम्भकदेहोयस्य। एकदेहारम्भदेहे ज्ञातिभेदे "असपिण्डा च या मातुरिति" स्मृतिः ज्ञातीनाञ्च सा-क्षात् परम्परया अतिपरम्परया वा एकदेहारम्भत्वात्तथात्वम्। तत्र च दाये अशौचे च सापिण्ड्यविशेषो वाचस्पत्ये वक्ष्यते। "दा-तृत्वभोक्तृत्वेनैकपिण्डवत्ति दायग्रहणोपयोगि सापिण्ड्य" मिति दायभागः।

सपिण्डीकरण न० सह पिण्डेन ततः अभूततद्भावे च्चि+कृ-ल्युट्। प्रेतत्वविमोचनाय प्रेतोद्देशेन कर्त्तव्ये पित्रादिपिण्डसमन्वयकरण श्राद्धभेदे "सपिण्डीकरणादूर्द्ध्वं न दद्यात् प्रतिमासिक" मिति स्मृतिः।

सपिण्डीकृत त्रि० सह पिण्डैः पित्रादिपिण्डैः सपिण्डः ततः च्चि-कृ कर्म्मणि क्त। यदुद्देशेन सपिण्डीकरणं श्राद्धं कृतं तस्मिन् मृते जने "ये सपिण्डीकृताः प्रेता" इति स्मृतिः।

सपीतक पु० सह समानः पीतकेन। राजघोषातकीवृक्षे।

सपीति स्त्री० पा०क्तिन् पीतिः पानम् सह एकत्र पीतिः। ज्ञात्यादीनां सह भोजने।।

सपीतिका स्त्री० सह पीतेन कप् अतइत्वम्। हस्तिघोषातकी वृक्षे।

सप्तक न० सप्तानामवयम् कन्। सप्तसङ्ख्यायाम्। सप्त प्रमाणमस्य कन् सप्तसङ्ख्यान्विते त्रि०।

सप्तकी सप्तभिः स्वरैरिव कायति शब्दायते कै-क मेखलायाम्

सप्तचत्वारिंशत् स्त्री० सप्ताधिका चत्वारिंशत् शाक० (सातचल्लिश) सङ्ख्यायां, तत्सङ्ख्यान्विते च। एवं सप्तदशादयः सप्ताधिकतत्तत्-सङ्ख्यायां तत्सङ्ख्यान्विते च।

सप्तच्छद पु० सप्त सप्त छदाः प्रतिपत्रम् यस्य हस्तौ सङ्ख्यायास्तस्य वी-प्सार्थता भाष्योक्ता। (छातिम) वृक्षे।

**सप्तजिह्व** पुं० सप्त जिह्वा इव आस्वादसाधनानि अर्च्चिषो यस्य । वह्नौ "काली कराली च मनोजवा च सुलोहिता यैव सुधूम्रवर्णा । उग्रा प्रदीप्ता च कपोटयोनेः सप्तैव कीलाः कथितास्च जिह्वाः" इत्युक्तानां सप्तानामग्निज्वालानामेव तज्जिह्वात्वमुक्तम् । [योऽप्यत्र ।

**सप्तज्वाल** पुं० सप्त कालीत्यादयः ज्वाला यस्य । वह्नौ सप्तार्चिरादृ-

**सप्ततन्तु** सप्तभिः भूरादिभिर्महाव्याहृतिभिस्तन्यते तन तनु । यज्ञे ।

**सप्तति** स्त्री०सप्तगुणिता दशतिः नि०। (सत्तर)सङ्ख्यायां तत्सङ्ख्यान्विते च ।

**सप्ततितम** त्रि० सप्ततेः पूरणः तमप् । येन सप्ततिसङ्ख्यापूर्य्यते तस्मिन् अर्थे । [ सप्तिसत्यर्थे ।

**सप्तदश** त्रि० सप्तदशानां पूरणः डट् । येन सप्तदशसङ्ख्या पूर्य्यते

**सप्तद्वीपा** स्त्री० सप्त जम्बूप्रभृतयोद्वीपाः यस्याः । जम्बूप्रभृतिसप्तद्वीप- वत्यां पृथिव्याम् ।

**सप्तधा** अव्य० सप्तन्+प्रकारे धाच् । सप्तप्रकारे ।

**सप्तधातु** पुं० ब० व० । सप्तगुणिता धातवः । देहस्थेषु "रसासृङ्मां- समेदोऽस्थिमज्जानः शुक्रसंयुताः । शरीरस्था इमे ज्ञेयाः पण्डितैः सप्त धातवः" इत्युक्तेषु रसादिषु धातुषु ।

**सप्तन्** पुं०त्रि० । सप-तनिन् । (सात) सङ्ख्यान्विते ।

**सप्तनामा** स्त्री० सप्त नामानि यस्याः डाप् । आदित्यभक्तायाम्

**सप्तपत्र** पुं० सप्त सप्त पत्त्राणि प्रतिपत्त्रं यस्य । मुद्गरवृक्षे, सप्तच्छद- वृक्षे च ।

**सप्तपदी** स्त्री० सप्तानां पदानां समाहारः ङीप् । विवाहकाले मण्ड- लिकासु गन्तव्येषु सप्तसु पदेषु ।

**सप्तपर्ण** पुं० सप्त सप्त पर्णान्यस्य प्रतिपर्णम् । (छातिम) वृक्षे । लज्जा- लुलतायां स्त्री० ।

**सप्तपाताल** न० समाहारद्विगुः पात्रादि । अतलं वितलञ्चैव नितलञ्च क्रमादधः । महातलञ्च सुतलं पातालं सप्त कीर्त्तित' मित्युक्तेषु सप्तसु भूमेरधःस्थलोकेषु ।

**सप्तसङ्ख्याति** स्त्री० ब० व० सप्तसंख्याताः प्रकृतयः । सांख्योक्ते महदहं-

सुखदुःखहितसत्त्वरजस्तमोभूतहेतुमहदादितत्त्वात्मके पदार्थे सप्तके "म-हदाद्याः प्रकृतिविकृतयः सप्त" इति सांख्यकारिका मोक्तुयपदार्थं हेतुत्वात्प्रकृतित्वम् प्रकृतिकार्य्यत्वाच्च विकृतित्वमाख्याम् ।

सप्तभद्र पु० सप्तसु स्थानेषु भद्रमस्य । शिरीषवृक्षे ।

सप्तम त्रि० सप्तानां पूरणः मट् । येन सप्तसंख्या पूर्य्यते तस्मिन्नर्थे स्त्रियां ङीप् । सा च चन्द्रस्य सप्तमकलायां शुक्लपक्षकृष्णपक्षयोः तिथौ च ।

सप्तरक्त पु० सप्त रक्तानि प्रशस्तान्यस्य । "पाणिपादतले रक्ते नेत्रा-न्तरनखानि च । तालुकाधरजिह्वाश्च प्रशस्ता सप्तरक्त ते"इत्युक्त-स्थानेषु रक्ततावति जने ।

सप्तर्षि पु० ब० व० । सप्त ऋषयः कर्म्म० । "मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः वशिष्ठस्चेत्युक्तेषु सप्तसु ऋषिषु ।

सप्तर्षिमण्डल त्रि० ६त० । आकाशे नियं भुवनचक्रपरिभ्रामके नक्षत्रसप्तकात्मके नक्षत्रमण्डलभेदे "सप्तर्षिमण्डलं तस्माद्धृवग्रहस्ते सर्व्वकोपरीति" पुराणम् । [गुञ्जायां, पाटलायाञ्च ।

सप्तला स्त्री० सप्तवा लाति ला-क । नवमालिकायां चर्म्मकषायां,

सप्तशती स्त्री० सप्तानां शतानां समाहारः । मार्कण्डेय पुराणान्त-र्गते सप्तशतमन्त्रसमुदायात्मके देवीमाहात्म्यबोधके ग्रन्थभेदे। "मध्ये सप्तशतीं जपेदिति" पुराणं तद्विभागो वाचस्पत्ये वक्ष्यते । [सर्व्वदोषसूचके सप्तशलाकाकारितचक्रभेदे ।

सप्तशलाक पु० सप्त शलकाकारा रेखा यत्र । ज्योतिषोक्ते विवाहे-

सप्तशिरा स्त्री० सप्त शिरा अस्याः । ताम्बूलवल्ल्याम् । [दयोऽप्यत्र

सप्तसप्ति पु० सप्त सप्तयोऽश्वा यस्य । सूर्य्ये, अर्कवृक्षे च । सप्तमा-

सप्तसागर पु० ब० व० सप्तसंख्याताः सागराः । "नवनीतसुरासर्पि-र्दधिदुग्धजलान्तका" इत्युक्तेषु सप्तसु सागरेषु । सप्त एतादि-कल्पिताः सागराइव देयपदार्था यत्र । पुराणोक्ते स्वनामख्याते महादानभेदे तच्च वाचस्पत्ये ।

सप्तांशु पु० सप्त अंशवोज्वाला यस्य। "काली कराली" त्याद्युक्त सप्तज्वालावति वह्नौ।

सप्ताश्ववाहन पु० सप्त अश्वाः वाहनान्यस्य। सूर्ये, अर्कवृक्षे च।

सप्ति पु० सप-ति। अश्वे। [सफरीविवर्त्तिनोर्वित" माघः।

सफर पु० सप-अरन् पृ० यस्य फः। (पुँटी) मत्स्ये स्त्रीत्वमप्यत्र "चल-

सफल त्रि० सह फलेन सहस्य सः। अव्यर्थे, फलयुक्ते च। [च।

सबल त्रि० सह बलेन सामर्थ्येन सैन्येन वा। सामर्थ्यान्विते सैन्ययुक्ते

सब्रह्मचारिन् पु० समानं ब्रह्म वेदग्रहणकालिकं व्रतं चरति चर-णिनि। एकगुरुसकाशात् वेदाध्ययनकाले तन्निबन्ध समानव्रता-चारवति।

सभर्तृका स्त्री० सह भर्त्रा पत्या। विद्यमानपतिकायां स्त्रियाम्।

सभा स्त्री० सह भान्ति अभीष्टनिश्चयार्थमेकत्र गृहे यत्र। बहूनां स-मावेशनस्थाने, तदधिष्ठायिजनसमूहे च।

सभाज सेवने दर्शने च सक० प्रीतौ अ० अद० चु० उभ० सेट्। स-भाजयति ते असभाजत्-त।

सभाजन न० सभाज-ल्युट्। गमनागमनादिकाले सुखानन्दप्रीतिसाधनै सम्भाषणे, पूजने च।

सभासद् पु० सभायां सीदति-क्विप्। सामाजिके सभ्ये।

सभास्तार पु० सभां स्तृणाति स्तृ-अण्। सभ्ये।

सभिक पु० सभा द्यूतसभास्त्यस्य ठन्। द्यूतकारके

सभीक पु० सभा द्यूतं प्रयोजनमस्य ईकः। द्यूतकारे।

सभोचित पु० सभा उचिता परिचिता यस्य। पण्डिते। सभायोग्ये त्रि०

सभ्य पु० सभायां साधुः यत्। सामाजिके, द्यूतकारे च विश्वस्ते त्रि०।

सम् अव्य० सो-क्वप्। सम्यगर्थे, प्रकर्षे सङ्गतौ शोभने, समुच्चये च।

सम त्रि० सम-अच्। समाने, तुल्ये, सर्वे, साधौ च (योड़)युग्मे, "समेऽर्द्धिते वर्ग" इति लीलावती। समतयाख्यातेषु द्वितीयचतुर्थ-षष्ठादिषु राशिषु च। अतुल्येऽस्य सर्वनामता। गीतवाद्ययो-र्देशकालभवे गायकहस्तादिचालनरूपे ताले न०।

समक्ष अव्य० अक्ष्णः समीपम् अव्ययी० अच्। चक्षुःसन्निकर्षे तद-
स्यास्ति अच्। प्रत्यक्षविषये त्रि०।

समगन्धक पु० समांस्तुल्यभागेन निवेशिता गन्धाः गन्धयुक्तद्रव्याण्यत्र
कप्। कृत्रिमधूपभेदे। [(वेनारमूल)

समगन्धिक पु० समः सर्व्वदा तुल्यरूपः गन्धोऽस्यास्य ठन् उशीरे

समग्र त्रि० समं सकलं यथा स्यात्तथा गृह्यते ग्रह-ड। सकले।

समङ्गा स्त्री० समज्यतेऽनया सम्+अञ्ज—घञ्। मञ्जिष्ठायाम्

समचित्त त्रि० समं सर्व्वत्र समभावं चित्तं यस्य। सर्व्वत्र तुल्यदर्शके
तत्त्वज्ञानिनि।

समज न० समजत्यत्र सम्+अज-अप् व्यभावः। वने, समूहे पशूनां संघे,
मूर्खवृन्दे च।

समज्ञा स्त्री० समस्मिन् सर्व्वत्र ज्ञायते ऽनया ज्ञा-कप्। कीर्त्तौ

समज्या स्त्री० सम्+अज-क्यप् न वीभावः। सभायाम्, कीर्त्तौ च।

समञ्जस त्रि० सम्यक् अञ्जः औचित्यं यत्र। उचिते, युक्ते च प्रा०।
औचित्ये न०।

समदर्शिन् त्रि० समस्मिन् सर्वत्र ब्रह्मभावेनाऽभिन्नतया पश्यति दृश-
णिनि। सर्वत्र समदर्शके तत्त्वज्ञानिनि। "विद्याविनयसम्पन्ने
ब्राह्मणे गवि हस्तिनि। शुनि चैव श्वपाके च पण्डिताः समद-
र्शिनः" इति गीता।

समदृष्टि स्त्री० कर्म्म०। सर्वत्र तुल्यदर्शने। ६ ब०। समदर्शिनि त्रि०

समधिक त्रि० सम्यक् अधिकः प्रा०। अत्यन्ताधिके।

समन्त पु० सम्यक् अन्तः स यत्र वा। सम्यगन्ते, सीमायाम् च।

समन्ततस् अव्य० समन्त+तसिल्। सर्वत्र विस्तारे।

समन्तदुग्धा स्त्री० समन्ततो दुग्धमस्याः। स्नुहीवृक्षे।

समन्तपञ्चक न० समन्तात् पञ्चकं नदपञ्चकं यत्र। तीर्थभेदे।

समन्तभद्र पु० समन्तात् भद्रमस्य। बुद्धे।

समन्तभुज् पु० समन्तात् भुङ्क्ते भुज-क्विप्। वह्नौ।

समन्तात् अव्य० समन्त+आति। समन्तत इत्यर्थे सर्वत्र विस्तारे च।

**समन्वित** त्रि॰ सम्+अनु+इण-क्त । सङ्गते ।

**समपद** न॰ समं पदं यस्मिन् । धन्विनां सनपदनिवेशनपूर्वके "स्थानानि धन्विनां षट्" त्युपक्रम्य "अन्वर्थं स्यात् समपद मित्युक्ते" व्यवस्थानभेदे ।

**समभिव्याहार** पु॰ सम्+अभि+वि+आ+हृ-घञ् । साहित्ये ।

**समभिव्याहृत** त्रि॰ सम्+अभि+वि+आ+हृ—क्त । सहिते ।

**समभिहार** पु॰ सम्+अभि+हृ-घञ् । पौनःपुन्ये "क्रियासमभिहारेण विराध्यन्त"मिति माघः ।

**समम्** अव्य॰ सम-अम् । साहित्ये, एकदेत्यर्थे, "सममेव समाक्रान्त द्वयमिति"रघुः

**समय** पु॰ सम्+इण-अच् । काले, शपथे, आचारे सिद्धान्ते निर्देशे सङ्केते, भाषायां, अङ्गीकारे च ।

**समया** अव्य॰ सम+इण्-आ । नैकट्ये, मध्ये, च ।

**समयाध्युषित** पु॰ समयः अध्युषितो यत्र । सूर्य्यतारारहितकाले "उदितेऽनुदिते चैव समयाध्युषिते तथेति" मनुः ।

**समर** पु॰ न॰ सम्+ऋ—अप् । युद्धे ।

**समरमूर्द्धन्** पु॰ ६त॰ । समरस्याग्रे ।

**समर्च्चन** न॰ सम्यक् अर्च्चनं प्रा॰ । सम्यक्पूजने ।

**समर्ण** त्रि॰ सम्+अर्द्द-क्त । सम्यक्पीड़िते ।

**समर्थ** त्रि॰ सम्+अर्थ अच् । शक्ते, हिते च । सम्यगर्थःप्रा॰ । प्रयस्ताभीष्टे पु॰ ।

**समर्थन** न॰ सम्+अर्थ-ल्युट् । इदमित्थमेवेति निश्चयहेतूपन्यासेन निश्चायकव्यापारभेदे युच् । अयक्तोऽध्यवसाये स्त्री॰

**समर्द्धक** त्रि॰ समर्द्धयति सम्—ऋध-णिच्-ण्वुल् । इष्ट फल दातरि, देवादौ ।

**समर्य्याद** त्रि॰ सह मर्य्यादया । सीमायाम् । समीपे पु॰ ।

**समल** न॰ सम्यक् मलम् । विष्ठायाम् । सह मलेन । कलुषे त्रि॰

**समवतार** पु० समवतीर्य्यते ऽनेन सम्+ अव+तॄ-घञ् । जलावतरण-सोपाने ।

**समवर्त्तिन्** पु० समं वर्त्तते वृत-णिनि । यमे धर्मराजे ।

**समवकार** पु० सम्+अव+कृ-घञ् । नाटकभेदे ।

**समवाय** पु० सम्+अव-इण-अच् । समूहे, मेलने, न्यायोक्ते नित्य-द्रव्यादिषु जात्यादीनां संबन्धभेदे च ।

**समवेत** त्रि० सम्+अव-इण-क्त । मिलिते, समूहान्विते न्यायोक्ते समवायसम्बन्धेन स्थिते च ।

**समष्टि** स्त्री० सम्+अश-क्तिन् । सम्यगव्याप्तौ, समस्ततायाञ्च । कर्त्तरि क्तिच । संवीभूते समस्ते पदार्थे । [शाके ।

**समष्ठि(ष्ठी)ल** पु० समं तिष्ठति स्था-इलच् ष० वा दीर्घः । (गुड़िया)

**समसन** न० सम्+अस-ल्युट् । समासे, संक्षेपे ।

**समस्त** त्रि० सम् + अस-क्त । संक्षिप्ते, सकले, व्याकरणोक्ते कृतसमासे शब्दभेदे च ।

**समस्थ** त्रि० समंतिष्ठति स्था-क । समभावेन तुल्यतया स्थिते

**समस्थली** स्त्री० कर्म्म० । गङ्गायमुनयोर्मध्यस्थे अन्तर्वेदिदेशे ।

**समस्या** स्त्री० समस्यते संक्षिप्यतेऽनया सम्+अस-क्यप् । संक्षेपेण उक्तस्य श्लोकपदादेः परकृतेन स्वकृतेन वा अवशेषेण भागान्तरेण संघटनार्थं कृते प्रश्ने ।

**समा** स्त्री० समयति विकलयति भावान् सम-अच्-टाप् । वत्सरे अम-रकृतास्य नित्यबहुवचनान्तताङ्गीकृता पाणिनिना तु समांसमां वि-जायतेइति सूत्रे एकवचनान्तता निर्दिष्टा ।

**समांसमीना** स्त्री० समांसमां विजायते प्रसूते ख नि० अत्र समांस-मामित्यत्र कालाधारे द्वितीया । प्रतिवर्षं प्रसूतायां गवि ।

**समाकर्षिन्** पु० सम्+आ+कृष-णिनि । अतिदूरगामिनि गन्धे । सम्यगाकर्षणकर्त्तरि त्रि० । [छायाञ्च ।

**समाख्या** स्त्री० समाख्यायतेऽनया सम्+आ+ख्या अङ् । कीर्त्तौ, सं-

**समाघात** पु० समाहन्यतेऽत्र सम्-आ+हन-घञ् । युद्धे ।

**समाज** पु० सम्+अज-घञ् अभावः। पशुभिन्नानां समूहे, सभायाम्, हस्तिनि च।

**समाधा** स्त्री० सम्+आ+धा-अङ्। निष्पत्तौ, विवादभञ्जने, पूर्व्वपक्षस्य सम्यगुत्तरानुगुणसिद्धान्तानुकूलतर्कादिना सम्यगर्थावधारणे च। ल्युट्। समाधानमप्यत्र न०। तत्र चित्तैकाग्र्ये, ध्येयवस्तुनि निरन्तरस्थापनरूपे समाधौ च।

**समाधि** पु० सम्+आ+धा-कि। समाधायां, ध्येयवस्तुनि एकाग्रतया मनसःस्थापनरूपे ध्यानभेदे, वचनाभावे, नियमे च।

**समाध्मात** त्रि० सम्+आ+ध्मा क्त। सम्यग्गर्व्विते, सम्यक्शब्दिते च।

**समान** त्रि० सममानयति अन-अण्। तुल्ये, साधौ, एकस्मिन्नित्यर्थे यत्समानाधिकरणमितिचिन्तामणिः।

**समानोदक** पु० समानमेकं तर्पणादौ देयमुदकं यस्य। "समानोदकभावस्तु निवर्त्तताचतुर्द्दशादित्युक्तेः" एकादशाद्यवधिचतुर्द्दशपुरुषपर्य्यन्ते ज्ञातिभेदे।

**समानोदर्य्य** पु० समाने उदरे भवः यत् वा न सादेशः। एकोदरभ्रात्रादौ। भगिन्यां स्त्री०।

**समाप** पु० सम्यक् आपोयत्र अच् समा० नि०। देवयजनस्थाने।

**समापन** न० सम्+आप-ल्युट्। समाप्तौ, परिच्छेदे, शेषे च।

**समापन्न** त्रि० सम्+आ-पद-क्त। समाप्ते, प्राप्ते, क्लिष्टे च। भावे क्त। समाप्तौ न०।

**समाप्त** त्रि० सम्+आप-क्त। अवसानप्राप्ते, सम्यक्प्राप्ते च।

**समाप्ति** स्त्री० सम्+आप-क्तिन्। अवसाने, समर्थने, प्राप्तौ च

**समायोग** पु० सम्+आ+युज-घञ्। संयोगसमवायरूपादि सम्बन्धे "कर्षेर्द्दिसमायोगादिति" पुराणम् प्रयोजने च।

**समालम्बिन्** पु० समालम्बते सम्+आ+लबि-णिनि। भूषण्के। समालम्बनकर्त्तरि त्रि०।

**समालम्भ** पु० सम्+आ+लभ-घञ् मुम् च। कुङ्कुमादिना गात्रलेपने। ल्युट्। तत्रैवार्थे न०।

**समावर्त्तन** न॰ समावर्त्तते गुरुकुलादनेन सम्+आ+वृत–ल्युट् । वेदाध्ययनानन्तरं गार्हस्थ्याय गुरुकुलादागमन हेतुके संस्कारभेदे ।

**समाविष्ट** त्रि॰ सम् आ+विश-क्त युक्ते, मनोभिनिवेशवति, अभीष्ट-कर्त्तव्यकर्म्मणि चित्तैकाग्र्यविशेषयुक्ते च ।

**समावृत्त** पु॰ सम्+आ+वृत क्त । कृतसमावर्त्तनसंस्कारे ।

**समावेश** पु॰ सम्+आ+विश-घञ् बहूनामर्थानामेकत्र वाक्यादौ अवस्थापने, कर्त्तव्येऽभिनिवेशे च ।

**समावेशित** त्रि॰सम्+आ+विश-णिच्-क्त । कृतसमावेशने ।

**समास** पु॰ सम्+अस-घञ् । संक्षेपे, समर्थने, समाहारे, व्याकरणोक्ते द्व्यादिपदानामेकपदतासम्पादके पदसाधुतार्थके संस्कारभेदे च ।

**समासक्त** त्रि॰ सम्+आ–सन्ज-घञ । संयुक्ते, अत्यन्तासक्ते, अभि-निविष्टे च ।

**समासङ्ग** पु॰ सम्+सन्ज-घञ । संयोगे, सम्यगभिनिवेशे च

**समासवत्** पु॰ समास+अमस्त्यर्थे । लुप् मस्य वः । व्याकरणोक्ते स-मासयुक्ते शब्दे संक्षेपयुक्ते च समासेन तुल्यं वति । समासतुल्ये ।

**समासादित** त्रि॰ सम्+आ+सद+णिच्-क्त । सारभागस्थे, निकट-स्थिते त्रि॰ ।

**समासार्था** स्त्री॰ समासेन संक्षेपेणार्थोऽभिहितोयस्याः । समस्यायाम् ।

**समाहित** त्रि॰ सम्+आ + धा-क्त । कृतसमाधौ, आहिते, प्रतिज्ञाते, निष्पन्ने, शुद्धे च ।

**समाहृत** त्रि॰ सम् + आ + हृ-क्त । संगृहीते, एकत्रस्थीकृते ।

**समाहृति** स्त्री॰ सम् + आ + हृ-क्तिन् । संक्षेपे, संग्रहे, समुच्चये च

**समाह्वय** पु॰ समाह्वयते सम्+आ + ह्वे-अच् आत्वाभावः । युद्धे आ-ह्वाने प्राणिकरणकद्यूते च, 'प्राणिभिः क्रियमाणस्तु स विज्ञेयः समाह्वय' इति स्मृतिः ।

**समाह्वा** स्त्री॰ समा आह्वा यस्याः । गोजिह्वाख्ये ।

**समित्** स्त्री॰ समीयतेऽत्र सम् + इण् क्विप् । युद्धे ।

**समिता** स्त्री॰ सम्+इण्–क्त । गोधूमचूर्णे सङ्गते त्रि॰ ।

**समिति** स्त्री० सम् + इण-क्तिन् । सभायां, युद्धे च ।

**समिध्** स्त्री० समिध्यतेऽनया सम् + इन्ध-क्विप् । काष्ठे, होमीय काष्ठ-
भेदे च विस्तरो वाचस्पत्ये

**समिध** पु० समिध्यते सम्+इन्ध-क । काष्ठे वह्नौ च ।

**समिन्धन** न० सम् + इन्ध-ल्युट् । काष्ठे सम्यग्दीप्तौ च ।

**समीक** न० सम् + ईकक् । युद्धे ।

**समीकरण** न० असमःसमः क्रियतेऽनेन सम+च्वि+कृ-ल्युट् । बीज-
गणितप्रसिद्धे अज्ञातसंख्यानां यावत्तावतां संज्ञाज्ञानार्थं प्रक्रिया-
भेदे, तुल्यरूपतापादने च ।

**समीक्ष** न० सम्यगीक्ष्यतेऽनेन घञ् । सांख्यदर्शने । भावे घञ् ।
पर्य्यालोचने, सम्यग्ज्ञाने च । अ । समीक्षाप्यत्र तत्त्वे बुद्धौ, मी-
मांसाशास्त्रे, यत्ने च स्त्री० टाप् ।

**समीक्ष्यकारिन्** त्रि० समीक्ष्य पर्य्यालोच्य करोति कृ-णिनि उप० ।
वस्तुस्वरूपपर्य्यालोचनपूर्व्वककार्य्यकारके ।

**समीचीन** त्रि० सम्यगभवः सम् + अन्च+क्विप् ततः ख समः समिः
अश्वे रकारलोपे पूर्वपददीर्घः । यथार्थे, साधौ च सत्ये न० सत्य-
वति त्रि० ।

**समीप** त्रि० सङ्गता आपोऽत्र अच् समा० अत ईत्वम् । निकटे

**समीर** पु० सम्यक् ईरयति नोदयति सम्+ईर-अच् । वायौ पृ० शमि-
रोऽप्यत्र ।

**समीरण** पु० सम् + ईर-ल्यु । वायौ, मरुवकवृक्षे, पथिके च

**समीरिता** त्रि० सम्+ईर-क्त । कथिते, उच्चारिते 'चतुर्मुख समीरिते'-
ति कुमारः । [वाग्मिनि च ।

**समीहित** त्रि० सम्+ईह-क्त । अभीष्टे । [द्रुके ।

**समुख** त्रि० सह मुखेन मुखव्यापारेण वा सहस्य सादेशः । वाव-

**समुचित** त्रि० सम् + उच-क्त । सम्यक् उपयुक्ते समञ्जसे ।

**समुच्चय** पु० सम् + उद् + चि-अच् । शिलादीनां राशौ, परस्परनिर-
पेक्षाणामनेकेषामेकस्मिन् क्रियादावन्वये च । यथा देवदत्तो यज्ञ-

दरश्च गच्छतीत्यत्र देवदत्तयज्ञदत्तयोः परस्परसापेक्षताभावेऽपि एक-
स्मिन् गमने अन्वयः। तद्वाचकश्च प्रायेण चकारः क्वचित् तथाविध-
शब्दोऽपि।

समुच्चित त्रि० सम्+उद्+चि क्त। कृतसमुच्चये "समुच्चितफलं काम-
माना'मिति विधिस्वरूपे गदाधरः।

समुच्च(चा)र पु० सम्+उद्+चर-अप् घञ् वा। सम्यगुच्चारणे, सम्य-
क्त्यागे च।

समुच्छेद पु० सम्+उद्+छिद घञ्। विनाशे। [उच्छेदे च।

समुच्छ्र(च्छ्रा)य पु०सम्+उद्+श्रि अच् घञ् वा। अत्युन्नतौ, विरोधे

समुच्छ्रित त्रि० सम्+उद्+श्रि क्त। अत्युन्नते।

समुच्छलित त्रि० सम्यक्+उच्छलितम् सम्+उद्+शल्-क्त। समन्तात्
विस्तीर्णे (क्वचिदपि) 'समुच्छलित'भ्रमभागतिरि"ति काव्य प्र०।[च।

समुच्छसित त्रि०सम्+उद्+श्वस क्त।समग्रमुच्छासयुक्ते प्रत्युज्जीविते

समुच्छ्वास पु० सम्+उद्+श्वस-घञ्। मुखनासिकाभ्यां प्राणवायो
र्व्यापारे।

समुज्झित त्रि० सम्+उज्झ-क्त त्यक्ते। [समग्रमुद्गमने च।

समुत्क्रम पु० सम्+उद्+क्रम-घञ् न वृद्धिः। ऊर्द्धगमने,

समुत्क्रोश पु०समग्रक् उत्क्रोशति उच्चैः शब्दायते सम्+उद्+क्रुश-
अच्। कुररीविहगे। भावे घञ्। अत्युच्चैः शब्दे।

समुत्थ त्रि० समग्रमुत्तिष्ठति सम्+उद्+स्था क्त सस्य थः। समग्रमुत्थिते।

समुत्थान न० सम्+उद्+स्था करणे ल्युट् सस्य थः। समुद्योगे, उ-
त्तोलने च।

समुत्पत्ति स्त्री० सम्+उद्+पद-क्तिन्। समुद्भवे।

समुत्पन्न त्रि०सम्+उद्+पद-क्त समुद्भूते।

समुत्पाट पु० सम्+उद्+पट घञ्। उन्मूलीकरणे।

समुत्पाटित त्रि० सम्+उद्-णिच्-पट-क्त। उन्मूलीकृते।

समुत्पिञ्ज त्रि० सम्+उद्+पिञ्ज-अच्। अत्याकुले। आकुलसैन्ये पु०

समुत्सर्ग पु० समग्रक् उत्सर्गः। सम्+उद्+सृज-घञ्। सम्यक् त्यागे

समुत्सुक त्रि॰ सम्यगुत्सुकः प्रा॰। अत्यन्तोत्सुके इष्टवस्तुलाभाय त्वरान्विते।

समुत्सृष्ट त्रि॰ सम्+उद्+सृज-क्त। सम्यक् त्यक्ते।

समुत्सेध पु॰ सम्+उद्+सिध-घञ्। अत्युन्नतौ, अतिस्फीततायाञ्च

समुदक्त त्रि॰ सम्+उद्+अनुच-क्त। कूपादेरुद्धृतजलादौ।

समुदय पु॰ सम्+उद्+इण-अच्। समूहे, युद्धे, सदुद्गमे, दिवसे च ज्योतिषोक्ते लग्ने न॰। वजन्तः समूहे पु॰।

समुदाचार पु॰ सम्+उद्+आ+चर-घञ्। अभिप्राये,सम्यगाचारे च

समुदित त्रि॰ सम्+उद्+इण क्त। प्राप्तसंहतौ पदार्थे, सम्+वद-कर्मणि क्त। सम्यक् कथिते।

समुदीरण न॰ सम्+उद्+ईर-ल्युट्। सम्यक् कथने।

समुदीरित त्रि॰ सम्+उद्+ईर क्त। सम्यक्कथिते।

समुद्ग पु॰ सम्+उद्+गम-ड। सम्पुटके सम्पुटाकारेण संश्लेषकारके पदार्थे। स्वार्थे कन् तत्रैव।

समुद्गम पु॰ सम्+उद्+गम घञ् न वृद्धिः। ऊर्द्ध्वगतौ, समुद्भवे च

समुद्गीत त्रि॰ सम्+उद्+गै-क्त। उच्चैर्गीते

समुद्गीर्ण त्रि॰ सम्+उद्+गॄ—क्त। वमिते, उत्तोलिते,कथिते च

समुद्दिष्ट त्रि॰ सम्यक् उद्दिष्टम् उद्+दिश-क्त। सम्यगुद्दिष्टवति पदार्थे 'तत्समुद्दिष्ट कर्म्मेति संक्षिप्तसारः।

समुद्देश सम्यक् उद्देशः उद्+दिश-घञ्। सम्यगभिसन्धौ।

समुद्धत त्रि॰ सम्+उद्+हन क्त। अत्यन्तप्रगल्भे, अत्यन्ताविनीते, समुद्गीर्णे च।

समुद्धरण न॰ सम्+उद्+हृ-ल्युट्। उत्तोलने कूपादेर्जलोत्रयने, भुक्तान्नस्य वमने, उन्मूलने च। कर्म्मणि ल्युट्। वान्ते-अन्नादौ, उन्मूलिते च। [उन्मूलिते च।

समुद्धृत त्रि॰ सम्+उद्+हृ-क्त। अपनीते, वान्ते, उत्तोलिते

समुद्धर्तृ त्रि॰ सम्+उद्+हृ-तृच्। वमनकारिणि, उन्मूलयितरि, उत्थापके, हृतद्रव्यस्य पुनरादानकर्त्तरि च।

समुद्भव पु॰ सम्+उद्+भू अप्। समुत्पत्तौ।
समुद्भूत त्रि॰ सम्+उद्+भू-क्त। समुत्पन्ने।
समुद्यत त्रि॰ सम्+उद्+यम-क्त। सम्यगुद्यमवति।
समुद्यम त्रि॰ सम्+उद्+यम-घञ् न वृद्धिः। सम्यक् प्रयत्ने।
समुद्र पु॰ सम्+उन्द-क्लेदने र, सम्+उद्+रा-क वा। सनामख्याते प्रचुरजले पदार्थे। सह मुद्रया मुद्रासहिते त्रि॰ 'बभौ मरुत्वान् विकृतः समुद्रः बभौ मरुत्वान् विकृतः समुद्रः इति भट्टिः। मठ्यां, सप्तम्यां स्त्री॰ टाप्।
समुद्रकफ पु॰ समुद्रस्य कफ इव। जलधिफेने।
समुद्रकान्ता स्त्री॰ ६त॰। पृक्कायां, नद्याञ्च। समुद्रप्रियादयोनद्याम्।
समुद्रगा स्त्री॰ समुद्रं गच्छति गम-ड। नद्याम्। 'सर्वा नद्यः समुद्रगा' इति पुराणम्।
समुद्रगृह न॰ समुद्र इव प्रचुरजलं गृहम्। जलयन्त्रगेहे।
समुद्रचुलुक पु॰ समुद्र चुलुकः गण्डूषमितजलमिव अनायासेन पीत-त्वादस्य। अगस्त्ये मुनौ। [चन्द्रे च।
समुद्रनवनीत न॰ समुद्रस्य नवनीतमिव। समुद्रमन्थनोद्भूतसारांशे अमृते
समुद्रफेन पु॰ ६त॰। समुद्रस्य फेने।
समुद्रमेखला स्त्री॰ समुद्रः मेखलेव वेष्टनाकारत्वात् यस्याः। पृथि-व्याम्। समुद्ररसनादयोऽप्यत्र। [नौकाभेदे।
समुद्रयान न॰ यायतेऽनेन या-ल्युट् ६त॰। पोते समुद्रतरण साधने
समुद्रलवण न॰ समुद्रजलजातं लवणम्। (करकच) लवणे
समुद्रवह्नि पु॰ ६त॰। समुद्रस्ये अग्नौ वाड़वानले।
समुद्रवेला स्त्री॰ ६त॰। समुद्रस्य कूले।
समुद्रान्त न॰ समुद्रस्यान्तः पर्यन्तदेशः साधनत्वेनास्त्यस्य अच् समुद्रः अन्तो यस्य वा। जातीफले। दुरालभायाम्, कार्पास्यां, पृक्कायां, यवासे च स्त्री॰। समुद्रपर्यन्ते त्रि॰।
समुद्राम्बरा स्त्री॰ समुद्रः अम्बरमिव वेष्टनाकारः यस्याः। पृथि-व्याम्। सागराम्बरादयोऽप्यत्र।

समु(द्रि)द्रीय त्रि० समुद्र+भवार्थे छ वा । समुद्रभवे पदार्थे
समुद्वह त्रि० सम्+उद्+वह अच् । श्रेष्ठे, सम्यगुद्वहनकर्त्तरि च
समुन्दन न० सम्+उन्द-ल्युट् । सम्यगार्द्रीभावे (भिजा) ।
समुन्न न० सम् + उन्द-क्त । क्लिन्ने आर्द्रे ।
समुन्नत त्रि० सम्+उद्+नम-क्त । अत्युच्चे । यज्ञभेदे पु० ।
समुन्नति स्त्री० सम्+उद्+नम-क्तिन् । उन्नतायाम् 'प्रायः पयोधरस-समुन्नतिरस्य हेतुरि'त्युद्भटः ।
समुन्नद्ध त्रि० सम्+उद्+नह क्त । गर्विते पण्डितम्मन्ये, प्रभौ समुद्भूते च । कर्म्मणि क्त । उत्तोल्य बद्धे । [समुद्भावने च ।
समुन्नय पु० सम्+उद्+नी-अच् । ऊर्द्ध्वनयने, सम्यग्नीतौ, उत्क्षेपणे.
समुपचित त्रि० सम्यक् उपचितम् उप+चि-क्त । सुबद्धली क्रते संवर्द्धिते च ।
समुपजोषम् अव्य० सम्+उप+जुष-अमु । अत्यन्तानन्दे ।
समुपेयिवस् त्रि० सम्+उप+इण-क्वसु । समीपगते ।
समुपोढ़ त्रि० सम्+उप+वह क्त । सङ्गते संजाते च ।
समुल्लेख पु० सम्+उद्+लिख-घञ् । पादादिना भूम्यादेः खनने
समूढ त्रि० सम्+ऊह-वा वह-क्त । राशीकृते, अनपप्लुते 'समूढमस्य पांसुरे इति' ऋग्वेदः भुग्ने, दमिते, क्रतविवाहे, शोधिते च । सह मूढ़ेन मूढ़सहिते त्रि० ।
समूरु पु० सङ्गतौ सम्बिन्धिनौ ऊरू यस्य । मृगभेदे ।
समूल त्रि० सह मूलेन । मूलसहिते 'समूलघातं न्यवधीदि'ति भट्टिः
समूह पु० सम्+ऊह-घञ् । समुदाये ।
समूहनी स्त्री० समूह्यतेऽनया ल्युट् । सम्मार्ज्जन्याम् भावे-ल्युट् । संमार्ज्जने सम्यगूहकरणे च न० ।
समूह्य पु० सम् + ऊह-ण्यत् । यज्ञियाग्नौ ।
समृद्ध त्रि० सम्यक् ऋद्धः ऋध क्त । अधिकसम्पत्तियुक्ते, अति वृद्धे च
समृद्धि स्त्री० समयक् ऋद्धिः सम्+ऋध-क्तिन् । अतिसम्पत्तौ, वृद्धौ 'मधुसमृद्धिसमेधिते'ति माघः ।

समेत त्रि० सम् + आ-इण-क्त । समागते, सङ्गते च ।

समेधित त्रि० सम् + एध-णिच् + क्त । 'संवर्द्धिते मधुवन्द्विसमेधित-मेधये'ति माघः ।

समोदक न० समम् अर्द्धभागेन तुल्यमुदकं यत्र । अर्द्धाम्बुसंयोगेन मथितदधिजाते तक्रभेदे । सह मोदकेन, मोदकसहिते त्रि० ।

सम्पत्ति स्त्री० सम्+पद-क्तिन् । अतिविभवे, अनुरूपात्मभावे यस्य यद्रूपता उचिता तस्य तथाभवने च ।

सम्पद् स्त्री० सम्+पद सम्प०क्विप् । विभवे, सम्पत्तौ च ।

सम्पन्न त्रि० सम् + पद-क्त । साधिते, सम्पद्युक्ते च ।

सम्पराय पु० सम्+परा+इण-अच् । युद्धे, आपदि उत्तरकाले च ।

सम्परायिक न० सम्परायाय आपदे हितम् ठन् । युद्धे । ठण् । साम्परायिकमप्यत्र ।

सम्पर्क पु० सम्+पृच-घञ् । सम्बन्धे ।

सम्पर्किन् त्रि० सम्+पृच-घिणुन् । सम्बन्धयुक्ते ।

सम्पा स्त्री० सम्यक् अतर्कितं पतति पत ड । विद्युति ।

सम्पाक पु० सम्यक् पाको यस्मात् ५ब० । आरग्वधवृक्षे तद्भोजने हि भुक्ताद्याद्देः सम्यक्पाको भवतीति वैद्यके प्रसिद्धम् धूर्त्ते, अल्पे, अभ्रके, लम्पटे च त्रि० ।

सम्पात पु० सम् + पत-घञ् । पक्षिगतिभेदे सम्यक् पतने च ।

सम्पाति पु० सम् + पत-णिच्-इन् । जटायुषो ज्येष्ठभ्रातरि, पक्षिभेदे । स्वार्थे कन् । तत्रैव ।

सम्पुट पु० सम् + पुट-क । कुलकवृक्षे सम्यक् पुटमिव उभयपार्श्ववर्त्ति यस्य । एकजातीयपदार्थे भिन्नजातीयस्य उभयतो व्याप्त्या स्थिते त्रि० 'वर्कार्णैः सम्पुटीजाप्य' इति तन्त्रम् ।

सम्पुटक पु० सम्पुटयति सम् + पुट-अच् स्वार्थे वुन् । समुद्गके मञ्जूषाख्ये (पेटरा) पदार्थविशेषे ।

**सम्पूर्णा** त्रि० सम्+पूर-क्त । परिपूर्णे, समग्रे च 'आदित्योदयवेलायाः प्राङ्मुहूर्त्तद्वयान्विता एकादशीहि सम्पूर्णे'ति स्मृत्युक्ते एकादशीभेदे

**सम्पृक्त** त्रि० सम्+पृच-क्त । मिश्रिते, सम्बद्धे च ।

**सम्प्रक्षालन** न० सम्+प्र+क्षाल-ल्युट् । सम्यगवच्छिन्नतादेः शोधनाय संस्कारविशेषे, विधाने च ।

**सम्प्रति** अव्य० सम्+प्रति+समाहारद्वन्द्वः । इदानीमित्यर्थे ।

**सम्प्रतिपत्ति** स्त्री० सम्+प्रतिपद्यते क्तिन् । वाद्युक्तार्थविषयस्वीकरणे 'श्रुत्वाभियोगं प्रत्यर्थी यदि तं प्रतिपद्यते सा तु सम्प्रतिपत्तिः स्यादि'ति स्मृत्युक्ते व्यवहारे उत्तरभेदे च ।

**सम्प्रदातृ** त्रि० सम्+प्र+दा-तृच् । दानकर्त्तरि ।

**सम्प्रदान** न० सम्+प्र+दा-भावे ल्युट् । सम्यक्प्रदाने । सम्प्रदीयते ऽस्मै ल्युट् । 'कर्मणा यमभिप्रैति स सम्प्रदान"मिति पाणिन्युक्ते दानकर्मोद्देश्ये तच्च त्रिविधम् । 'अनिराकरणात्कर्त्तुस्त्यागाङ्गं कर्मणेप्सितम् प्रेरणानुमतिभ्याञ्च लभते सम्प्रदानताम्' इति । तत्र विप्राय वस्त्रं ददातीत्यादौ अनिराकर्त्तृ सम्प्रदानम्, याचकाय धनं ददातीत्यादौ प्रेरयितृ सम्प्रदानम्, गुरवे धनं ददातीत्यादौ अनुमन्तृ सम्प्रदानम् । [ नार्थसमर्थने ।

**सम्प्रधारणा** स्त्री० सम्+प्र+धृ-णिच्-युच् । युक्तायुक्तत्वविवेचने-

**सम्प्रयोग** पु० सम्+प्र+युज्-घञ् । इष्टादिलाभेच्छया धनादिविनियोगे । 'विभागः सम्प्रयोगश्चे'ति स्मृतिः रमणे, सम्बन्धे च ।

**सम्प्रयोगिन्** त्रि० सम्+प्र+युज-घिणुन् । कामुके कलाकेलिकारके, सम्यग्लाभार्थं धनादिविनियोजके च ।

**सम्प्रसाद** पु० सम्+प्र+सद-घञ् । योगादिशास्त्रोक्ते चित्तस्य नैर्मल्यसम्पादके प्रयत्नभेदे । भावे घञ् । सम्यक्प्रसन्नतायाम् ।

**सम्प्रसाधन** न० सम्+प्र+साध-णिच्-करणे ल्युट् । कटकादौ भूषणे । भावे ल्युट् । भूषणक्रियायाम् ।

**सम्प्रसारण** न० सम्+प्र+सृ-णिच्-ल्युट् । सम्यग्विस्तारणे सम्पादने, व्याकरणोक्ते यणः स्थाने जायमाने इक्वर्णे च

सम्प्रहार पु० सम्यक् युद्धे । सम्+प्र+हृ-घञ् । युद्धे भावे घञ् । सम्यक्प्रहरणे, गमने च । [ वस्त्राभेदे च ।

सम्प्राप्ति स्त्री० सम्+प्र+आप-क्तिन् । सम्यक् प्राप्तौ वैद्यकोक्ते रोगा-

सम्प्रैष पु० सम्+प्र+इष-घञ् वा वृद्धिः । नियोगे ।

सम्प्रोक्षण न० सम्+प्र+उक्ष ल्युट् जलादिसेचनेन संस्कार भेदे

सम्प्रोक्षित त्रि० सम्+प्र+उक्ष-क्त । जलादिसेचनेन कृतसंस्कारे पदार्थे ।

सम्फाल पु० सम्+फल+घञ् । मेषे ।

सम्फुल्ल त्रि० सम्+फुल्ल-अच् । विकसिते । सम्+फल-क्त अत उत्वम् । सम्फुल्त इति तकारमध्योऽपि तत्रैव ।

सम्ब गमने भ्वा०प०सक०सेट् । सम्बति असम्बीत् ।

सम्ब सम्बन्धे चु०उभ०सक०सेट् । सम्बयति ते अससम्बत् त

सम्ब न० सम्ब अच् । कृष्टक्षेत्रस्य प्रतिलोमकर्षणे ।

सम्बद्ध त्रि० सम्+बन्ध-क्त । संश्लिष्टे । भावे क्त । सम्यग्बन्धने न०

सम्बन्ध पु० सम्+बन्ध-घञ् । संसर्गे, संयोगादौ, न्याये, समृद्धौ, सम्यग्बन्धने च सम्यग्बन्धो यस्मात् । समर्थे,हिते च त्रि०

सम्बर न० सम्ब अरन् । जले, बौद्धमतभेदे च । सेतौ, दैत्यभेदे, मृगभेदे, मीनभेदे, पर्वतभेदे च पु० ।

सम्बरारि पु० सम्बरस्य दैत्यविशेषस्य अरिः । कामदेवे ।

सम्बरी स्त्री०सम्ब-अरन् ङीप् । मूषिकपर्ण्याम्, शतावर्य्याञ्च ।

सम्बल न० म्ब-कलच् । जले । पाथेये पु०न० ।

स(श)म्बाकृत त्रि०स(श)म्बेन प्रतिलोमेन कृष्टं क्षेत्रं स(श)म्ब डाच्+कृ-क्त । प्रतिलोमकृष्टे क्षेत्रादौ । भावे घञ् । प्रतिलोमकर्षणे

सम्बाध न० सम्यक् बाधा यत्र । नरकवर्त्मनि सम्+बाध-भावे घञ् । अन्योन्यसंघर्षे पु० ।

सम्बुद्धि स्त्री० सम्+बुध-क्तिन् । सम्बोधनार्थे ।

सम्बोध पु० सम्+बुध-घञ् । बोधे, नाशे, सम्यक्ज्ञाने च ।

सम्बोधन न०सम्+बुध-ल्युट् । सम्यक्ज्ञाने । बुध-णिच्-ल्युट् ।

सम्यगज्ञापने 'स्थितस्याभिमुखीभावमात्रं सम्बोधनं विदुः। प्राप्ता-भिमुख्यः पुरुषः क्रियासु विनियुज्यते' इति व्याकरणोक्ते कस्य-चिदासन्नस्याभिमुखीकरणाय अभीष्टक्रियासु विनियोगाय ज्ञापना-दिरूपे व्यापारे च।

**सम्भली** स्त्री॰ सम्यक् भलते सम्+भल–अच् गौ॰ ङीप्। कुट्टिन्याम् परपुरुषेण सह कन्यास्त्रिया योजयित्र्याम्।

**सम्भव** पु॰ सम्+भू–अप्। उत्पत्तौ, आधेयस्याधारे समावेशनयोग्यत्व-रूपे व्यापारे, उत्कटसन्देहे च अपादाने अप्। हेतौ। कर्त्तरि अच्। मेलके त्रि॰।

**सम्भाव्य** पु॰ सम्+भू–कर्त्तरि यत्। कपित्थे, सम्यगभाविनि त्रि॰

**सम्भाव** पु॰ सम्+भू–घञ्। परिपूर्णतायाम्, सम्भूहे, सामग्र्याञ्च

**सम्भावन** न॰ सम्+भू–णिच्–ल्युट्। अर्थालङ्कारभेदे, व्याकरणोक्ते क्रियासु योग्यताध्यवसाये लिङर्थभेदे, उत्कटकोटिक संशयरूपे ज्ञा-नभेदे च युच् सम्भावनापि उक्तार्थे स्त्री॰।

**सम्भावित** त्रि॰ सम्+भू–णिच्–क्त। सम्भवयुक्ते पदार्थे।

**सम्भाषण** न॰ सम्+भाष–ल्युट्। सम्यक्कथने च परस्पर कथने च

**सम्भिन्न** त्रि॰ सम्+भिद–क्त। विदलिते भेदान्विते सम्यग् विकसिते च 'सम्भिन्नमुकुल' इति वेणीसंहारः।

**सम्भूति** स्त्री॰ सम्+भू–क्त। विभवे ईश्वरस्यैश्वर्यभेदे च। 'सम्भूतिं य उपासते' इति श्रुतिः।

**सम्भूयसमुत्थान** न॰ सम्भूय+मिलित्वा सम्यगुत्तिष्ठन्त्यनेन। मिलित्वा वणिजां वाणिज्यादिकर्मकरणे विवादभेदे

**सम्भृति** स्त्री॰ सम्–भृ–क्तिन्। सम्यक्पोषणे।

**सम्भेद** पु॰ संभिद्यते संश्लिष्यतेऽत्र सम्+भिद–आधारे घञ्। नद्योः सङ्गमस्थाने। भावे घञ् तत्सङ्गमे, सम्यगभेदने, स्फुटने मिलने ऐकरूप्ये च। 'सम्भेदे नाव्यतरवैयर्थ्यमिति मीमांसा।

**सम्भोग** पु॰ सम्+भुज–घञ्। सम्यगभोगे, सुरते, हर्षे, केलिनागरे, 'दर्शनस्पर्शनादीनि निषेवेते विलासिनौ। यत्रानुरक्तावन्योन्य स-

भोगः समुदाहृतं इत्युक्तलक्षणे शृङ्गाररसावस्थाभेदे ।

सम्भ्रम पु० सम्+भ्रम–घञ् न वृद्धिः । भयादिजनिते वेगे, त्वरायां,तद्धेतुके भये, आदरे, अतिशयभ्रमे, भ्रमे च ।

सम्मति स्त्री० सम्–मन–क्तिन् । अनुमतौ, आत्माभीष्टे अभिलाषे च ।

सम्मद पु० सम्–मद–घञर्थे क । हर्षे । अच् । हर्षयुक्ते त्रि० ।

सम्मर्द पु० संमृद्यतेऽत्र सम्+मृद–घञ् । युद्धे । भावे घञ् । अन्योन्यसंघर्षे च ।

सम्मान पु० सम्+मन–घञ् । आदरे ।

सम्मानित त्रि० सम्+मन–णिच्–क्त । कृतगौरवे, समादृते च

सम्मार्जन न० सम्+मृज–ल्यु । संशोधने ।

सम्मार्जनी स्त्री० संमृज्यतेऽनया सम्+मृज–करणे ल्युट् ङीप् । धूल्याद्यपसारणार्थे पदार्थे ( झाटा )

सम्मित त्रि० सम्+मा–क्त । सदृशे, तुल्यपरिमाणे च ।

सम्मुख त्रि० सङ्गतं मुखम् प्रा० । अभिमुखागते ।

सम्मुखीन त्रि० सम्मुखं पतति ख । अभिमुखे पातिनि ।

सम्मूर्च्छज न० सम्मूर्च्छात् जायते जन–ड । स्वरभेदे ।

सम्मूर्च्छन न० सम्+मूर्च्छ ल्युट् । सम्यग्विस्तारे, उन्नतौ, मोहे च ।

सम्मृष्ट त्रि० सम्+मृज––क्त । मार्ज्जनयुक्ते । मक्षिकाद्यपसारणेन शोधितेऽन्नादौ च ।

सम्मोद पु० सम्+मुद-घञ् । हर्षे, प्रीतौ च ।

सम्यच् अव्य० सम–अन्च–क्विप् सम्यादेशः । शोभने, सङ्गते मनोज्ञे च त्रि० । सत्यवाक्ये न० । तद्वति त्रि० ।

सम्राज् पु० सम्यक् राजते राज-क्विप् नानुस्वारः । कृतराजसूययज्ञे सर्वभूमीश्वरे नृपतौ ।

सर न० सरति सृ-अच् । सरोवरे,जले च । लवणे, दध्यग्रे, दधिमस्तौ, तज्जाते नवनीते, वाणे च निर्झरे स्त्री० भावे अप् । भेदने गमने च । [ त्याले, कविरलपथिकदङ्क्तौ च ।

सरक पु०न०सृ वुन् । मद्यपानमात्रे, मद्यपरिवेशने, इक्षुजमद्ये, त-

सरघा स्त्री० सरं मधुभेदं हन्ति हन-ड नि०। मधुमक्षिकायाम्
सरज न० सरात् जायते जन-ड। नवनीते।
सरजस् स्त्री० सह रजसा। ऋतुमत्यां स्त्रियाम् अव्ययी० रजोयुक्ते
त्रि० अच् समा०। रजःसाहित्ये।
सरट पु० सृ-अटन्। कृकलासे (काकलास)।
सरण न० सृ-ल्युट्। गमने, लोहमले च ( गन्धभादाल ) लतायाञ्च
सरणि(णी) स्त्री० सृ-अनि। पथि पङ्क्तौ प्रसारिण्याम्।
सरपत्त्रिका स्त्री० सरे जले पत्त्रमस्त्यस्याः ठन्। पद्मे।
सरमा स्त्री०सह रमते। कुक्कुरयोषिति, विभीषणपत्न्याञ्च।
सरयु पु० सृ-अयु। वायौ। अच्। अयोध्यान्तिकवाहिनदीभेदे स्त्री०।
सरल पु० सृ-अलच्। पीतदारुणि धूपकाष्ठभेदे। उदारे, ऋजौ च
त्रि०। त्रिवृटायां स्त्री०। [टायाञ्च।
सरलद्रव पु० ६त०। सरलवृक्षनिर्यासे, (टारपीन) नदीभेदे, त्रिपु-
सरलाङ्ग पु० सरलो वृक्षोऽङ्गं साधनं यस्य। श्रीवेष्टे गन्धद्रव्ये।
सरस् न० सृ-असि। जले, सरोवरे च। गौरा० ङीप्। सरसीत्यप्यत्र
स्त्री० 'सरसीः परिशीलितुमि'ति नैषधम्।
सरस न०सह रसेन जलेन आस्वादेन च। सरोवरे, रसान्विते, सार्द्रे च
त्रि०। 'सरसां सरसां परिसुच्चे'ति भट्टिः। श्वेतत्रिवृतायां स्त्री०।
सरसम्प्रतन न० सरमिव निर्यासं सम्प्रतनोति सम्+प्र+तन-ड। विक-
ङ्कटवृक्षे (तेकाँटासिजु)। [विड्ग्मे'ति शकुन्तला।
सरसिज न० सरसि जायते जन-ड अलुक् स०। पद्मे ,सरसिजमनु-
सरसीरुह न सरस्यां सरोवरे रोहति रुह-क। पद्मे।
सरस्वत् पु० सरांसि जलानि सन्त्यस्य मतुप् मस्य वः। सरोवरे सागरे
च नद्याम्, नदीभेदे, वाग्यां गवि, ज्योतिष्मत्यां ब्राह्मयाम्, शक्तौ,
देवीभेदे, सोमलताञ्च स्त्री० ङीप्।
सरा स्त्री० सृ-अच्। निर्झरे।
सराव पु० सरं जलमवति अव-अण्। जलाधारे मृण्मये पात्रभेदे
(शरा)। सह रावेण, सशब्दे त्रि०।

सरि पु० स्त्री० सृ-इन् । स्त्रीत्वपक्षे वा ङीप् । निर्झरे ।
सरिका स्त्री० सरोऽस्त्यस्याः स्व वुन् वा-। हिक्कुरचित्रकायाम् ।
सरित् स्त्री० सृ-इति । नद्याम्, सूत्रे च ।
सरित्पति पु० ६त० । समुद्रे । [न तस्य दः समुद्रे
सरित्वत् पु० सरित् स्वामित्वेनास्त्यस्य मतुप् मस्य वः पदत्वाभावात्
सरित्सुत पु० ६त० । गङ्गापुत्रे भीष्मे ।
सरिताम्पति पु० ६त० अलुक् स० । समुद्रे सरितां नाथादयोऽप्यत्र ।
सरिद्वरा स्त्री० सरितृषु वरा श्रेष्ठा । गङ्गायाम् ।
सरिल न० सृ-इलच् । जले ।
सरीसृप पु० वक्रं सर्पति । सृप-यङ् तस्य लुक्, अच् । सर्पे वृश्चिकादौ, ज्योतिषोक्ते वृश्चिकादिराशौ च ।
सरु पु० सृ-उन् । खड्गादिमुष्टौ ।
सरूप त्रि० समानं रूपमस्य समानस्य सः । तुल्यरूपे सदृशे ।
सरोज न० सरसि जायते जन-ड । पद्मे सरोजातमात्रे त्रि० ।
सरोजन्मन् न०सरसि जन्म यस्य । पद्मे । तडागजातमात्रे त्रि०।
सरोजिनी स्त्री० सरोजानां समूहः तद्विशिष्टदेशो वा इनि । पद्मसमूहे तद्युक्तदेशरूपायां पद्मलतायाम्, पद्मा धारदीर्घिकायाञ्च ।
सरोरुह् (ह) सरसि रोहति रुह-क्विप् क वा । पद्मे ।
सरोवर पु० सरोभिर्जलैर्व्रियतेऽसौ वृ-अप् । तडागे ।
सर्ग पु० सृज-घञ् । स्वभावे, सृष्टौ, निर्मोक्षे काव्यादेः परिच्छेदे 'सर्गोऽयमादिर्गत' इति नैषधम् । निश्चये, "यदि सर्ग एष ते" इति रघुः । मोक्षे, उत्साहे, अनुमतौ च । [सत्ये ।
सर्गबन्ध पु० सर्गैर्बध्यतेऽसौ बन्ध-घञ् । महाकाव्ये । लक्षणं यथा-
सर्ज्ज अर्ज्जने भ्वा०पर०सक०सेट् । सर्ज्जति असर्ज्जीत् षोप देशत्वाभावान्न षत्वम् ।
सर्ज्ज पु० सृ-अच् । शालवृक्षे, तद्रसे, (धुना) पीतशाले च ।
सर्ज्जक पु० सृज-ण्वुल् । पीतशाले, शालवृक्षे च ।
सर्ज्जगन्धा स्त्री० सर्ज्जस्येव गन्धो यस्याः । रास्नायाम् ।

सर्ज्जन न० सृज–ल्युट् । सैन्यपश्चाद्भागे, सृष्टौ च ।
सर्ज्जनिर्यासक पु० सर्ज्जस्य निर्यास इव कायति कै–क । राले ।
सर्ज्जमणि पु० सर्जस्य शालवृक्षस्य मणिरिव । (धुना) सर्जरसे ।
सर्ज्जरस पु० ६त० । शालवृक्षरसे (धुना) ।
सर्ज्जि (र्ज्जी) स्त्री० सृज–इन् वा ङीप् । नदीभेदे, नद्कूलजे सर्जि-
का क्षारे (साजिमाटि) । [भेदे च ।
सर्ज्जिका स्त्री० सृज–ण्वुल् टाप । अत इत्त्वम् । सर्जिकाक्षारे, नदी-
सर्जिकाक्षार स्त्री० सर्जिकायाः क्षारः । स्वनामख्याते क्षारभेदे, (साजिमाटि) ।
सर्जिक्षार पु० ६त० । (साजिमाटि) सर्जिकाक्षारे ।
सर्ज्य पु० सर्जस्येदं यत् । सर्जरसे । सर्ज्ज-यत् । सर्जनीये त्रि० ।
सर्प पु० सृप-अच् । नागकेशरे, भुजङ्गमे च 'सर्पापसर्प भद्रम् इति भारतम् तज्जातिस्त्रियां ङीप् । भावे घञ् । गमने ।
सर्पकङ्काली स्त्री० सर्पस्येव कङ्कालमङ्गविशेषो यस्याः गौ० ङीप् । सर्पविषघातिन्यां लतायाम् ।
सर्पगन्धा स्त्री० सर्पाणां विषस्य गन्धो गन्धनं हिंसनं यस्याः ५ब० । विषहारिण्यां लतायाम् । [लतायाम् ।
सर्पघातिनी स्त्री० सर्पं सर्पविषं हन्ति हन-णिनि । सर्पविष हरी-
सर्पतृण पु० सर्पस्तृणमिवानायासच्छेद्यो यस्य । नकुले ।
सर्पदंष्ट्र पु० सर्पस्य दंष्ट्रेव पुष्पमस्य । नागदन्तीवृक्षे । सर्पस्य दंष्ट्रेव स्पर्शनात् दुःखदत्वात् । वृश्चिकालीलतायां स्त्री० ।
सर्पदंष्ट्रिका स्त्री० सर्पदंष्ट्राकारोऽस्त्यस्याः ठन् । अजशृङ्ग्याम् ।
सर्पदण्डी स्त्री० सर्पं दण्डयति दण्ड-अण् । गोरक्षीवृक्षे । [न्तीवृक्षे ।
सर्पदन्ती स्त्री० सर्पस्य दन्त इव पुष्पाग्रमस्याः गौ० ङीष् । नागद-
सर्पदमना स्त्री० सर्पान् दमयति दम-णिच् ल्युट् । वन्ध्याकर्कोटक्याम् ।
सर्पपुष्पी स्त्री० सर्पस्य सर्पदन्त इव पुष्पाग्रमस्याः ङीप् । नागदन्त्याम्
सर्पभुज् पु० सर्पं भुङ्क्ते भुज-क्विप् । मयूरे ।
सर्पराज पु० सर्पाणां राजा टच् समा० । वासुकौ नागभेदे ।

सर्पलता स्त्री॰ सर्पाख्या लता । ताम्बूलीलतायाम् ।
सर्पसत्र न॰ सर्पेण होमद्रव्येण तन्नाशनार्थं वा सत्रम् । जनमेजयानुष्ठिते महाभारतप्रसिद्धे सर्पनाशनार्थे सत्रभेदे ।
सर्पसहा स्त्री॰ सर्पं सहते सह-अच् । सर्पकङ्कालीलतायाम् ।
सर्पहन् पु॰ सर्पं हन्ति हन क्विप् । नकुले ।
सर्पाक्षी स्त्री॰ सर्पस्येवाक्षि यस्याः षच् समा॰ । गन्धनाकुल्याम् ।
सर्पाख्य पु॰ सर्पस्याख्या यस्य । नागकेशरे, मण्डिमकन्दभेदे च ।
सर्पाङ्गी स्त्री॰ सर्पस्येवाङ्गं यस्याः ङीप् । सर्पकङ्कालीलतायाम् ।
सर्पादनी स्त्री॰सर्पः सर्पविषमद्यतेऽनया अद ल्युट् ङीप् । नाकुल्याम्
सर्पाराति पु॰ ६त॰ । गरुडे, नकुले च सर्पारिप्रभृतयोऽप्यत्र ।
सर्पावास न॰ सर्पाणामावासो यत्र । चन्दनवृक्षे । ६त॰ । सर्पवासे पु॰
सर्पाशन पु॰ सर्पमश्नाति अश-ल्युट् । मयूरे, गरुडे च ।
सर्पिस् न॰ सृप इसि । घृते ।
सर्पिणी स्त्री॰ सृप-णिनि । सर्पयोषिति, क्षुपभेदे च । गमनकारके त्रि॰
सर्पेष्ट न॰ सर्पाणां भुजगीनामिष्टम् । । चन्दनवृक्षे ।
सर्पेष्ट न॰ सर्पाणामिष्टम् । चन्दने ।
सर्व सर्वे भ्वा॰प॰सक॰सेट् । सर्वति असर्वीत् अणोपदेशत्वान्न णत्वम् ।
सर्व्व पु॰ सर्व-अच् । शिवे, विष्णौ च । सम्पूर्णे, सकले च त्रि॰ । अ संज्ञायामस्य सर्वनामता । [ त्रि॰ ।
सर्व्वंसहा स्त्री॰ सर्व्वं सहते खच् मुम् च । पृथिव्याम् । सर्वसोढ र
सर्व्वकर्त्तृ पु॰ सर्व्वं करोति कृ तृच् । चतुर्मुखे ब्रह्मणि, परमेश्वरे च
सर्वकर्म्मीण त्रि॰ सर्वकर्मभ्योऽलं ख । सर्वकरणसमर्थे पदार्थे 'संपामे सर्वकर्मीणावि'ति भट्टिः ।
सर्वक्षार पु॰ सर्वः क्षारमयः (साबान) । ख्याते पदार्थे ।
सर्वंग न॰ सर्वं गच्छति गम-ड । जले । शिवे, परमेश्वरे, वायौ, आत्मनि च पु॰ सर्वगामिनि त्रि॰ । प्रियङ्गुवृक्षे स्त्री॰ टाप् ।
सर्वगन्ध न॰ सर्वे गन्धा अत्र । "चातुर्जातककर्पूरकक्कोलागुरुकुङ्कुमम् लवङ्गसहितञ्चैव सर्वगन्धं प्रकीर्त्तित"मित्युक्ते गन्धद्रव्यसमूहे ।

**सर्वग्रन्थि** पु॰ सर्वत्र ग्रन्थिरस्य । पिप्पलीमूले ।

**सर्वङ्कष** पु॰ सर्वं कषति कष-खच् मुम् च । पापे । सर्वातिशायिनि त्रि॰

**सर्वजनीन** त्रि॰ सर्वजनेषु विदितः ख । सर्वत्र विख्याते ।

**सर्वज्ञ** पु॰ सर्वं जानाति ज्ञा-क शिवे, बुद्धे, परमेश्वरे च । सर्वज्ञान-कर्त्तरि त्रि॰ । दुर्गायां स्त्री॰ ।

**सर्वतस्** अव्य॰ सर्व+तसिल् । समन्तत इत्यर्थे ।

**सर्वतिक्ता** स्त्री॰ सर्वतः तिक्ता । काकमाच्याम् ।

**सर्वतोभद्र** पु॰न॰ सर्वतो भद्राणि सुखानि यस्य । चतुर्द्वारयुक्ते गृहभेदे, प्रतिष्ठादौ पूज्यदेवतानां मण्डलभेदे ज्योतिषोक्ते शुभाशुभज्ञानार्थे चक्रभेदे, अलङ्कारोक्ते बन्धभेदात्मके चित्रकाव्ये च । सर्वतोभद्रमस्य । निम्बवृक्षे पु॰ । गाम्भार्य्यां, नटयोषिति च स्त्री॰ ।

**सर्वतोभद्रचक्र** न॰ सर्वतो भद्रं यत्र तादृशं चक्रम् । ज्योतिषोक्ते शुभाशुभज्ञानार्थे चक्रभेदे ।

**सर्वतोभद्रबन्ध** पु॰ सर्वतोभद्राकारेण बन्धः । चित्रकाव्यभेदे ।

**सर्वतोभद्रमण्डल** न॰ सर्वतो भद्रनामकं मण्डलम् । शारदातिलकाद्युक्ते प्रतिष्ठादौ--पूज्यदेवतामण्डलभेदे ।

**सर्वतोमुख** न॰ सर्वतोमुखमस्य । जले । आकाशे, शिवे, ब्रह्मणि, परमेश्वरे, आत्मनि ब्राह्मणे अग्नौ च पु॰ ।

**सर्वत्र** अव्य॰ सर्व-त्रल् सर्वस्मिन् काले, देशे, दिशि वेत्यर्थे ।

**सर्वत्रगा** पु॰ सर्वत्र गच्छति गम-ड । वायौ । सर्वत्र गामिनि त्रि॰

**सर्वत्रगामिन्** पु॰ सर्वत्र गच्छति गम णिनि । वायौ सर्वत्र गन्तरि त्रि॰

**सर्वथा** अव्य॰ सर्वप्रकारम् थाच् । सर्वप्रकारे, भृशे प्रतिज्ञायां, हेतौ च ।

**सर्वदमन** पु॰ सर्वान् दमयति दम णिच्-ल्युट् । दुष्मन्तपुत्रे भरतनृपे । सर्वदमनकर्त्तरि त्रि॰ ।

**सर्वदर्शिन्** पु॰ सर्वं समभावेन पश्यति दृश-णिनि । बुद्धे, परमेश्वरे च । सकलद्रष्टरि त्रि॰ ।

**सर्वदा** अव्य॰ सर्वस्मिन् काले देशे दिशि वा दाच् । सर्वस्मिन् काला-दावित्यर्थे ।

**सर्वधुरीण** त्रि॰ सर्वां धुरं वहति ख । सकलभारवाहके वृषादौ ।

सर्वनाम पु॰ सर्वेषां नाम । व्याकरणोक्ते कार्य्यविशेषार्थं कृतसंज्ञावति सर्वादिशब्दभेदे ।

सर्वभक्षा स्त्री॰ भक्ष-अण् उप॰ । अजायाम् सर्वभक्षके त्रि॰ ।

सर्वमङ्गला स्त्री॰ सर्वाणि मङ्गलान्यस्याः ५ब॰ । दुर्गायाम् ।

सर्वमय त्रि॰ सर्वात्मकः मयट् । सर्वात्मके । परमेश्वरे पु॰ ।

सर्वमूषक पु॰ सर्वं मुष्णाति मुष-उकन् पु॰ । काले ।

सर्वरस पु॰ सर्वो रसमयः । (धुना) शालरसे वीणादेर्वाद्ये, पण्डिते च । कर्म॰ । लवणे रसे ।

सर्वरसोत्तम पु॰ सर्वेषु रसेषु उत्तमः । लवणे रसे ।

सर्वरात्र पु॰ सर्वा रात्रिः अच् समा॰ । रात्राह्नान्ताः पुंसीति पुंस्त्वम् सकलरात्रौ ।

सर्वरी स्त्री॰ शॄ—वनिप् ङीप् र च । रात्रौ ।

सर्वर्त्तुपरिवर्त्त पु॰ सर्वर्त्तूनां परिवर्त्तो यत्र । वत्सरे ।

सर्वला(ली) स्त्री॰ सर्वं लाति ला क वा गौरा॰ ङीष् । तोमरास्त्रे

सर्वलिङ्गिन् पु॰ सर्वेषां लिङ्गानि सन्त्यस्य इनि । वेदविरुद्धाचारिणां बौद्धादीनां लिङ्गवत्सु पाषण्डेषु ।

सर्वलोह पु॰ सर्वः लोहमयोऽवयवो यस्य । लौहमये बाणे ।

सर्ववर्णिका स्त्री॰ सर्वं वर्णयति वर्ण-ण्वुल् अत इत्त्वम् । गाम्भारी॰ वृक्षे ।

सर्वविद् पु॰ सर्वं वेत्ति विद-क्विप् । परमेश्वरे । सर्वज्ञातरि त्रि॰

सर्ववेद पु॰सर्वे वेदा अधीतत्वेन सन्त्यस्य अच् । सर्ववेदाध्ययनकर्त्तरि । विद-अण् उप॰ । सर्वज्ञे त्रि॰ ।

सर्ववेदस् पु॰ सर्वाणि धनानि वेदयते लाभयते यागाय ददाति विद-लाभे णिच्-असि । सर्वस्वदक्षिणाकविश्वजिन्नामक यागकर्त्तरि ।

सर्ववेशिन् पु॰ सर्वेषां वेशो भार्य्यत्वेनास्त्यस्य इनि । नटे ।

सर्वसङ्गत पु॰ सर्वं सङ्गतमुचितं यस्य । षष्टिधान्ये । सर्वतोचिते त्रि॰ । [ सैन्यसज्जीकरणेन युद्धयात्रायाम् ।

सर्वसन्नहन न॰ सर्वेषां सन्नहनं युद्धार्थं सज्जीकरणं यत्र । सर्व-

सर्व्वंसह पु० सर्व्वं सहते अच्। गुग्गुलौ। सर्व्वसहिष्णौ त्रि०।
सर्व्वसिद्धि पु० सर्व्वेषां सिद्धिरस्मात्। श्रीफले। सकलसाधने त्रि०।
सर्व्वस्व न० कर्म्म०। सकलधने।
सर्व्वस्वदक्षिण पु० सर्व्वस्वं दक्षिणा यत्र। विश्वजिन्नामकयागभेदे
सर्व्वहित न० सर्व्वेषां हितम्। मरिचे पु०। सकलहितहेतौ त्रि०।
सर्व्वाङ्गीण त्रि० सर्व्वाङ्गाणि व्याप्नोति ख। सर्व्वावयवव्यापके "सर्व्वाङ्गीणे तनुत्वचे" इति भट्टिः। [दुर्गायाम्।
सर्व्वाणी स्त्री० सर्व्वेभ्य आनयति मोक्षं आ-नी-ड पूर्व्वपदादिति णत्वम्।
सर्व्वानुकारिणी स्त्री० सर्व्वमनुकरोति अनु+कृ णिनि। शालपर्ण्याम्।
सर्व्वानुभूति स्त्री० सर्व्वेषामनुभूतिर्यत्र। श्वेतत्रिवृतायाम् तत्त्वज्ञानिनि त्रि०
सर्व्वान्नभोजिन् त्रि० सर्व्वेषामन्नं सर्व्वाण्यन्नानि वा भुङ्क्ते भुज-णिनि। सर्व्वान्नभक्षके।
सर्व्वान्नीन त्रि० सर्व्वेषामन्नं सर्व्वमन्नं वा भुङ्क्ते ख। सर्व्वान्नभक्षके।
सर्व्वाभिसन्धिन् पु० सर्व्वत्र आचरणे अभिसन्धानमस्य इनि। सर्व्वत्राभिसन्धिमति जने। [सैन्यसन्नाहेन युद्धयात्राभेदे।
सर्व्वाभिसार पु० अभिस्रियते अत्र अभि+सृ घञ् ६त०। चतुरङ्ग-
सर्व्वार्थसिद्ध पु० सर्व्वेषु अर्थेषु सिद्धः। बुद्धे सकलाभीष्टसिद्धिमति त्रि०
सर्व्वाह्ण पु० सर्व्वमहः टच् समा० अह्नादेशः णत्वम्। सकलदिने
सर्व्वौघ पु० सर्व्वेषां चतुरङ्गसैन्यानामोघो छन्दमभिसारो यत्र ओघीभूतसर्व्वसैन्याभिसारे कर्म०। सर्व्वजलवेगे।
सर्व्वौषधि स्त्री० कर्म०। "कुष्ठमांसीहरिद्राभिर्वचाशैलेयचन्दनैः। मुराचन्दनकर्पूरैर्मुस्तैः सर्व्वौषधिः स्मृतः," इत्युक्ते कुष्ठादिद्रव्यवर्गे।
सर्व्वौषधिगण पु० सर्व्वासामोषधीनां गणः। मुरामांसी वचाकुष्ठं शैलेयं रजनीद्वयम्। शठीचम्पकमुस्तञ्च सर्व्वौषधिगणः स्मृतः, इत्युक्ते द्रव्यगणे।
सर्षप पु० सृ-अप षुक् च। (सरिषा) शस्यभेदे। [तैलभेदे
सर्षपतैल न० सर्षपस्य स्नेहे सर्षपं स्नेहार्थे-तैलच्। सर्षपस्नेहरूपे
सल न० सल-अच्। जले।

सलिल न० सल-इलच्। जले
सलिलकुन्तल पु० सलिलस्य कुन्तल इव। शैवाले।
सलिलराशि पु० ६त०। समुद्रे सलिलनिध्यादयोऽप्यत्र।
सलिलेन्धन पु० सलिलमिन्धनमिव दाह्यं यस्य। बाडवानले।
सल्लकी स्त्री० सल-वुन् लुक् च पृ० गौरा० ङीष्। शल्लक्याम्।
सव पु० सूयते सू-अप्। यज्ञे, सन्ताने च। अच्। सूर्य्ये, अर्कवृक्षे च
सवन न० सु ल्युट्। यज्ञाङ्गे स्नाने, सोमनिष्पादनव्यापारे, सोमपाने,
यज्ञे, सोमनिष्पीडने, प्रसवे च। [इति रघुः।
सवयस् त्रि० समानं वयो यस्य समानस्य सः। वयस्ये "सवयोभिरन्वित"
सवर्ण पु० समानोवर्णो यस्य। तुल्यरूपे, एकजात्याश्रये यथाविप्रस्य वि-
प्रजातिः क्षत्रियस्य क्षत्रियजातिः। "तुल्यास्यप्रयत्नं सवर्णमि"ति
व्याकरणोक्ते स्थानप्रयत्नाभ्यां तुल्यवर्णे च यथा ककारस्य स्थानेन
तुल्यो गकारादिः, प्रयत्नसाम्येन चकारस्य ककारादिः जकारस्य ग-
कारः सकारस्य षकारः ङकारस्य वर्गीयचतुर्था वर्णाः। सह वर्णेन
वर्णसहिते त्रि०
सवर्ह्दा स्त्री० सह वर्हेन। त्रिवृतायाम्।
सवासस् त्रि० सह वाससा। वस्त्रत्यागविलम्बस्याक्षमे वेगवति
सविकल्पक न० सह-विकल्पेन कप्। वेदान्तोक्ते ज्ञातृज्ञेयभेदादिकल्प-
नासहिते ध्यानभेदे, न्यायोक्ते एकस्मिन् धर्म्मिणि विषयपरसंसर्गावगा-
हिनि ज्ञानभेदे च।
सविकाश त्रि० सह विकाशेन। प्रफुल्ले, विकसिते, असङ्कोचे च
सवितृ पु० सू-तृच्। जगत्स्रष्टरि परमेश्वरे 'तत् सवितुर्वरेण्य, मिति
स्मृतिः सूर्य्ये च। [सूर्य्यसारथिर्णी, इति नैषधम्।
सविध त्रि० सह विध्यति विध-क सहस्य सः। निकटे 'सविधेऽपि न'
सविस्मय त्रि० सह विस्मयेन। विस्मयापन्ने।
सवेश त्रि० विशत्यत्र वेशोदेशः सह वेशेन। निकटे, वेशान्विते च
सव्य त्रि० सू+प्रेरणे यत्। वामे दक्षिणे, प्रतिकूले च विष्णौ पु०

सव्यसाचिन् पु० सव्येन वामेन सचति सच णिनि । अर्ज्जुने

सव्येष्ठ पु० सव्ये तिष्ठति स्था-क अलुक् स अम्बष्टादि० षत्वम् । सारथौ

सव्येष्टृ पु० सव्ये तिष्ठति स्था ऋन् किच्च अलुक् स० षत्वम् । सारथौ ।

ससस्या स्त्री० सह सस्येन । नागदन्त्याम् । सस्ययुक्ते त्रि० ।

ससत्त्वा स्त्री० सह सत्त्वेन । गर्भवत्यां स्त्रियाम्, प्राणयुक्ते त्रि० 'न ससत्त्वेषु गर्त्तेष्विति मनुः ।

ससन न० सस-हिंसने ल्युट् । यज्ञार्थं पशुहनने ।

सस्य न० सस-यत् । वृक्षादीनां फले क्षेत्रगते धान्ये च ।

सस्यसंवर पु० सस्यं संवृणोति सम्+वृ-अच् । शालवृक्षे ।

सस्यसंवरण पु० सस्यं संवृणोति स+वृ-ल्यु । अश्वकर्णवृक्षे

सह अव्य० सह-अच् । साहित्ये, साकल्ये, सादृश्ये, यौगपद्ये, विद्यमानत्वे, समृद्धौ, सम्बन्धे, सामर्थ्ये च ।

सह पु० सहते सह अच् । अग्रहायणमासे भारादिसहिष्णौ त्रि०

सहकार पु० सह युगपत् किरति सौरभम् दूरादौ कॄ-अण् । अतिदूरगामिसौरभान्विते आम्रे । भावे घञ् सहकरणे पु०

सहकारिन् त्रि० सह सम्भूय करोति कार्य्यं कृ णिनि । हेतुभेदे स्वनिष्ठे स्वकार्य्यकारके हेतौ ।

सहगमन न० सह+गम ल्युट् । सहमरणे, सह गमने च ।

सहचर पु० सह चरति चर-अच् । पीतझिण्ट्यां नीलझिण्ट्याञ्च । वयस्ये, प्रतिबन्धके, सहाये, अनुचरे च त्रि० 'सहचरमधुहस्तेति, कुमारः स्त्रियां ङीप् ।

सहचरी स्त्री० सह चरति चर ट । पीतझिण्ट्यां सह चरति धर्मम् चर-ट । धर्मपत्न्याम् ।

सहज पु० सह जायते जन-ड । सहोदरे, निसर्गे च स्वभावसिद्धे 'सहजपाकलतापरी'ति माघः सहोत्थिते च त्रि० ज्योतिषोक्ते जन्मलग्नात् तृतीयस्थाने न० ।

सहजमित्र न० सहजं स्वभावसिद्धम् प्राकृतं मित्रम् । भागिनेयादौ

सहजारि पु० सहजः स्वभावसिद्धः अरिः । सापत्न्यभ्रातृपितृव्यपुत्रादौ ।

सहदेव पु॰ सह दीव्यति दिव-अच् । माद्रीसुते पाण्डवभेदे । बला-
यास् दण्डोत्पले, शारिरोषधौ च स्त्री॰ गौ॰ ङीष् । सर्पाक्ष्याम्
पीतदण्डोत्पलायाञ्च स्त्री॰ टाप् ।

सहधर्म्मिणी स्त्री॰ सह समानो धर्म्मोऽस्यस्या इनि । पत्न्याम्

सहन न॰ सह-ल्युट् । क्षमायां, तितिक्षायाम् शीतोष्णादिद्वन्द्व-
धर्मसहने । सह-युच् । सहिष्णौ, क्षमाशीले च त्रि॰ ।

सहपान न॰ सह पानम् । एकत्र मद्यादिपाने ।

सहभाविन् त्रि॰ सह भवति भू-णिनि । सहाये ।

सहभोजन न॰ सह एकत्र भोजनम् । एकत्रस्थानाशनादौ ।

सहमरण न॰ सह मृतेन पत्या सह एकचितारोहणेन मरणम् ।
मृतपतिचितारोहणेन तत्सहितमरणे ।

सहरसा स्त्री॰ सह रसेन । मुद्गपर्ण्याम् । रसान्विते त्रि॰ ।

सहस् न॰ सह-असि । बले, ज्योतिषि च मार्गशीर्षे मासे पु॰ ।
'सहसा सहसा लावेयर्युरिति' माघः ।

सहसा अव्य॰ सह+सो-डा । हठादित्यर्थे, अकस्मादित्यर्थे च ।

सहस्य पु॰ सहसे बलाय हितः यत् । पौषमासे ।

सहस्र न॰ समानं हसति हस र । दशशतसङ्ख्यायां, बहुसङ्ख्यायां,
तत्सङ्ख्यान्विते च । [दयोऽप्यत्र ।

सहस्रकर पु॰ सहस्रं कराः किरणा अस्य । सूर्ये सहस्रकिरणा-

सहस्रकाण्डा स्त्री॰ सहस्रं काण्डा यस्याः । श्वेतदूर्वायाम् ।

सहस्रदंष्ट्र पु॰ सहस्रं बहुसङ्ख्या दंष्ट्रा अस्य । पाठीनमत्स्ये (वोयाल)

सहस्रदंष्ट्रिन् पु॰ सहस्रं दंष्ट्राः सन्त्यस्य इनि । पाठीनमत्स्ये

सहस्रधारा स्त्री॰ सहस्रगुणिता धारा । देवतास्नानार्थं बहुच्छिद्रा-
न्विते तन्मुक्तबहुजलादिधारायाम् ।

सहस्रनयन पु॰ सहस्रं नयनान्यस्य । इन्द्रे । सहस्रनेत्रादयोऽप्यत्र ।

सहस्रपत्र न॰ सहस्रं बहुसङ्ख्यकानि पत्राणि यस्य । पद्मे सहस्र-
पर्णादयोऽप्यत्र ।

सहस्रपाद् पु॰ सहस्रं बहवः पादा अस्य पाद्भावः । विष्णौ, परमे-

श्वरे च। 'सहस्राक्षः सहस्रपादि'ति पुरुषसूक्तम्।

**सहस्रपाद्** पु० सहस्रं पादाः किरणाश्चरणा वा सन्त्यस्य अच्। विष्णौ, सूर्य्ये अर्कवृक्षे च। [र्जुने च।

**सहस्रभुज** पु० सहस्रं बहवो भुजा अस्य। विष्णौ, कार्त्तवीर्य्या-

**सहस्रमूर्द्धन्** पु० सहस्रं बहवो मूर्द्धानोऽस्य। विष्णौ, सहस्रशीर्षा-दयोऽप्यत्र। [विष्णौ च।

**सहस्रबाहु** पु० सहस्रं बाहवोऽस्य। बाणासुरे, कार्त्तवीर्य्यार्जुने,

**सहस्रवीर्य्या** स्त्री० सहस्रं बहूनि वीर्य्याण्यस्याः। दूर्वायाम् महाश-तावर्य्यां च।

**सहस्रवेध** न० सहस्रं बहवो वेधा अस्य। चुक्रे।

**सहस्रवेधिन्** न० सहस्रं विध्यति विध-णिनि। हिङ्गौ। अम्ल-वेतसे, कस्तूर्य्यां च पु०। सहस्रवेधकर्त्तरि त्रि०।

**सहस्रशिखर** पु० सहस्रं बहूनि शिखराण्यस्य। विन्ध्यपर्वते

**सहस्रा** स्त्री० सहस्रं बलानि सन्त्यस्याः अच्। अम्बष्ठायाम्।

**सहस्रांशु** पु० सहस्रमंशवो यस्य। सूर्य्ये, अर्कवृक्षे च।

**सहस्राक्ष** पु० सहस्रमक्षीणि यस्य षच् समा०। इन्द्रे, विष्णौ, ईश्वरे च

**सहस्रार** न० सहस्रमाराः कोणा अस्य। शिरःस्थिते सुषुम्ना नाडीमध्यस्थे सहस्रदलकमले। [पाठीने च।

**सहस्रिन्** पु० सहस्रं सैन्यानि सन्त्यस्य इनि। सहस्रसैन्ययुक्ते नृपादौ

**सहा** स्त्री० सहते सह-अच्। मुद्गपर्ण्यां, घृतकुमार्य्यां, दण्डोत्पलायां, पृथिव्यां, शुक्लझिण्ट्याम्, रास्नायां, स्वर्णक्षीर्य्यां, सर्पकङ्काल्यां, नारीपुष्पे च।

**सहाचर** पु० सह आचरति आ+चर-अच्। पीतझिण्ट्याम्।

**सहाय** पु० सह एति इण-अच्। सहचरे, अनुकूले, 'असावनुक्तोऽपि सहाय एवेति' कुमारः। [समुदाये च।

**सहायता** स्त्री० सहायानां समूहः तद्भावो वा तल्। साहाय्ये सह-

**सहार** पु० सह एकदैव ऋच्छति दूरं गच्छति सौरभेण ऋ-अच्। आम्रे। हारोहरणं सह हारेण। महाप्रलये।

सहारोग्य त्रि० सह आरोग्येण रोगशून्ये ।
सहासन न० सह आस्यतेऽत्र आस-ल्युट् । एकासने ।
सहित त्रि० सम्यक् हितः पृ० समोऽन्त्यलोपः । सम्यग्हिते सह-कृ वा इट्, सह-इतच् वा । समभिव्याहृते । [स्त्रियां ङीप् ।
सहितृ त्रि० सह-तृच् वा इट् । सहनशीले । दृढभावे । सोढाप्यत्र
सहित्र न० सह्यतेऽनेन सह-इत्र । सहनसाधने धर्म्मभेदे ।
सहिष्णु त्रि० सह-इष्णुच् । सहनशीले । [विरुद्धधर्मद्वयसहने ।
सहिष्णुता स्त्री० सहिष्णोर्भावः तल् । क्षमायाम् शीतोष्णादि-
सहृदय त्रि० सह हृदयेन । प्रशस्तचित्ते, काव्यार्थभावनाधीनपरिपक्व-बुद्धौ 'सहृदयधुरीणाः कतिचये' इति रसगङ्गाधरः ।
सहृल्लेख पु० हृदयस्य लेखः कालुष्यकरणं हृल्लासः सह हृल्लेखेन । 'किञ्चित्कल्पा तु हृदये यस्मै यस्मिन् प्रजायते । सहृल्लेखन्तु विज्ञे-यमित्युक्ते दूषिताम्ब्रे ।
सहोक्ति स्त्री० सह उक्तिः । सहकथने, एकोक्तौ, सह शब्दस्योक्ति-र्यत्र । अर्थालङ्कारभेदे । [शालायाम् ।
सहोटज पु० न० सहते आतपाद्यत्र सह-अच् कर्म० । मुनीनां पर्ण-
सहोढ़ पु० सह ऊढा येन । 'या गर्भिणी संस्क्रियते जाता जातापि वा सती । वोढुः स गर्भो भवति सहोढ इति चोच्यते' इति मनूक्ते अज्ञातगर्भायां परिणीतायां स्त्रियां जाते पुत्रभेदे, सहोढः सन् जायते जन-ड । सहोढजोऽप्यत्रार्थे । [स्त्री० ।
सहोदर न० सह समानमुदरं यस्य । एकगर्भजाते भ्रातरि । भगिन्यां
सह्य न० सहायस्य भावः यत् नि० । साहाय्ये, 'तत्रार्थे सहायकरो-दिति' पुराणम् सह भावे यत् । आरोग्ये, साम्ये माधुर्ये च । कर्म्मणि यत् । सोढव्ये त्रि० पुनराख्यदेशसमीपस्थे पर्वतभेदे पु० ।
सा स्त्री० सो—ड । गौर्य्यां, लक्ष्म्याञ्च ।
सांख्य न० संख्यायतेऽत्र संख्या सम्यग्ज्ञानं साऽस्त्यस्य अण् । सम्यग्दर्शने 'एषा तेऽभिहिता सांख्ये इति गीता संख्यां मूलप्रकृत्यादिपदार्थानां

गणनमत प्रसाध्यण् । कपिलप्रणीते दर्शनशास्त्रे, परस्वर्णे साङ्ख्य-
मप्युभयत्र साङ्ख्ययोगयोगे पु० ।

**सांघातिक** त्रि० संघाताय हितम् ठण् । सङ्घातकारके । ज्योतिषोक्ते
जन्मनक्षत्रात्षोडशनक्षत्रे च 'देहद्रविण बन्धूनां नाशः साङ्घा-
तिके तथे'ति ज्योतिषम् परस्वर्णे सङ्घातिकमपि उभयत्र ।

**सांदृष्टिक** न० संदृष्टं प्रत्यक्षदृष्टमनुसरति ठण् । दृष्टानुसारि न्यायभेदे
संदृष्टो दृष्टमात्रः फलति ठण् । सद्य फले । परस्वर्णे सान्दृष्टिकम-
प्युभयत्र ।

**सांयात्रिक** पु० सम्यक् यात्रायै अलम् ठण् । पोतेन वाणिज्य कारके ।

**सांयुगीन** त्रि० संयुगे युद्धे साधुः ख । रणकुशले ।

**सांराविण** न० सम्+रु—भावे णिनि ततः स्वार्थेऽण् व्याप्ते हट्टादिको-
लाहले । [ज्योतिर्वेत्तरि, गणके ।

**सांवत्सर** पु० संवत्सरं तज्ज्ञानोपयोगिशास्त्रं वेत्ति अधीते वा अण् ।

**सांवत्सरिक** त्रि० संवत्सरे भवः ठञ् । प्रतिवर्षकर्त्तव्ये श्राद्धे ।

**सांवादिक** पु० सम्यग्वादायालं ठण् । नैयायिके । [च ।

**सांशयिक** त्रि० संशयमापन्नः ठण् । सन्दिग्धे, संशययुक्ते, संशयविषये

**सांसारिक** त्रि० संसाराय हितम् तत्र भवो वा ठण् । संसारभवे,
संसारोपयोगिनि वा पदार्थे ।

**सांसिद्धिक** त्रि० संसिद्धिः स्वभावसिद्धिः तया निर्वृत्तं ठण् । स्वभाव-
सिद्धे । सांसिद्धिकं द्रवत्व'मिति भाषापरिच्छेदः ।

**साकम्** अव्य० सह अकति अक—अम् सादेशः । साहित्ये ।

**साकल्य** न० सकलस्य भावः ष्यञ् सऊद्भवे । स्वार्थे ष्यञ् । सकले,
होमार्थे मिश्रितेषु तिलादिद्रव्येषु च ।

**साकाङ्क्ष** त्रि० सहाकाङ्क्षया । साभिलाषे, शाब्दबोधोपयोग्याकाङ्क्षायुक्ते
पदभेदे च ।

**साकार** त्रि० सह आकारेण मूर्त्या । मूर्त्तिविशिष्टे, सावयवे च ।

**साकुरुण्ड** पु० सकुरुण्ड एव स्वार्थेऽण् । सकुरुण्डवृक्षे ।

**साकेत** न० आकित्यते आकेतः सहाकेतेन । अयोध्यापुरे 'जनस्य साके-

तनियामिनः' इति रघुः ।

**साक्तुक** पु० सक्तवे हितः ठक् । यवे । सक्तूनां समाहारः तस्येदम् वा ठक् । सक्तुसमूहे न० । तत्सम्बन्धिनि त्रि० ।

**साक्षात्** अव्य० सह अक्षति अक्ष-आति सादेशः, सह अक्षमति अत-क्विप् वा । प्रत्यक्षे तद्विषये च 'यत्साक्षात् अपरोक्षाद्ब्रह्मे'ति श्रुतिः ।

**साक्षात्कार** पु० साक्षात्+कृ-घञ् । प्रत्यक्षे ।

**साक्षिन्** त्रि० सह-अक्षि अस्य इनि साक्षात्द्रष्टा इनि वा नि० । साक्षात्द्रष्टरि । स्त्रियां ङीप् । परमेश्वरे पु० 'साक्षी चेता केवलोनिर्गुणश्चे'ति श्रुतिः । अयमेव साक्षिचैतन्यत्वेन वेदान्तपरिभाषादौ स्वीकृतः ।

**साक्ष्य** न० साक्षिणो भावः कर्म वा ष्यञ् । साक्षिकर्मणि, व्यवहार-विषयदृष्टतत्तान्तकथनरूपे तद्भावे च । 'यः साक्ष्यमनृतं वदेदि'ति स्मृतिः ।

**सागर** पु० सगरेण निर्वृत्तः अण् । समुद्रे, मृगभेदे, संख्याभेदे च ।

**सागरगामिनी** स्त्री० सागरं गच्छति गम+णिनि न णत्वम् । नद्यां, स्थूलैलायाञ्च ।

**सागरनेमि** स्त्री० सागरः नेमिरिव वेष्टनाकारो यस्याः । पृथिव्याम् ।

**सागरमेखला** स्त्री० सागरो मेखलेव यस्याः । पृथिव्याम् ।

**सागरालय** पु० सागर आलयो यस्य । वरुणे ।

**सागरोत्थ** न० सागरात् उत्तिष्ठति उद्+स्था क । सामुद्रलवणे ।

**साग्निक** पु० सहाग्निना अग्निहोत्रेण वा कप् । श्रौतस्मार्त्ताग्नियुक्ते, अग्निहोत्रिणि द्विजे च ।

**साङ्कर्य्य** न० सङ्करस्य भावः ष्यञ् । परस्पराभावसमानाधिकरणवृत्तित्व-रूपे न्यायोक्ते जातिबाधके दोषभेदे, पूर्वोक्तसङ्करस्य धर्मे च ।

**साङ्ग** त्रि० सहाङ्गेन । अङ्गयुक्ते 'साङ्गं तत् क्रियते पुनरि'ति स्मृ० ।

**साङ्कृतिक** त्रि० सङ्कृत्या निर्वृत्तः ठण् । सङ्कृते ।

**साङ्ग्रामिक** त्रि० संग्रामाय प्रभवति ठञ् । सेनापतौ, युद्धोपयोगि-रथादौ च ।

**साचि** अव्य० सच–इण् । वक्रे, तिर्यगर्थे च । [याम् ।

**साचिवाटिका** स्त्री० साचि यथा तथा वटति ण्वुल् । श्वेतपुनर्णवा-

**साचीकृत** त्रि० असाचि साचि क्रियते स्म च्वि–नि० दीर्घः । वक्रीकृते 'साचीकृता चारुतरेण तस्थावि'ति कुमारः ।

**साट** प्रकाशने अद०चु०उ०स०सेट् । साटयति ते अससाटत् त ।

**साटोप** त्रि० सहाटोपेन । सगर्वे, विकटे च ।

**सात** सुखे अ०चु०उभ०अक०सेट् । सातयति ते अससातत् त ।

**सात** न० सात अच् । सुखे । सन क्त । दत्ते, नष्टे च ।

**सातला** स्त्री० सातं सुखं लाति ला-क । चर्मकषायाम् ।

**साति** स्त्री० सन क्तिन् । अवसाने । दाने, तीव्रपीड़ायाञ्च ।

**सातीनक** पु० सतीनएव स्वार्थे अण् । सतीनकशब्दे (क्षुद्रमटर) ।

**सात्यकि** पु० सत्यकस्य वृष्णिवंश्यस्यपत्यम् अण् । शिनेर्नप्तरि स्वना-मख्याते वृष्णिवंश्ये क्षत्रियभेदे ।

**सात्वत्** पु० सत्वमेव सात्वमस्ति अत क्विप् शक० । यादवाधिकृतदेशभेदे

**सात्वत** पु० सत्वमेव सात्वमस्त्यस्य त सत्वगुणोपाधिके विष्णौ । सात्वतो देशस्य राजा अण् । विष्णौ, सात्वद्देशाधिपे नृपे बहुषु तस्य लुक् 'भगवान् सात्वतां पतिरि'ति पुराणम् । 'सत्वं सत्वाश्रयं सत्वगुणं सेवेत केशवम् । योऽनन्यत्वेन मनसा सात्वतः समुदाहृत' इत्युक्ते वैष्णवे यदुवंश्ये अंशुपते नृपभेदे च । यदुवंश्योत्पन्नत्वेन शिशु पाल-मातरि स्त्री० ङीप् । सा च नाटकस्य वृत्तिभेदे च ।

**सात्विक** पु० सत्वात् सत्वगुणप्रधानात् विष्णोर्भवति ठञ् । चतुर्मुखे ब्रह्मणि तस्य विष्णुनाभिकमलजत्वात् तथात्वम् । सत्वमेव सात्वम-स्त्यस्य ठन् विष्णौ । सत्वगुणेन तत्कार्येण मनसा वा निर्वृत्तः ठञ् । सत्वगुणजाते, सत्वप्रधान मनोविशेषजाते च शृङ्गारादिर-सानुगुणे भावभेदे च । सत्वप्रधाने जने त्रि० । 'आहाराः सात्विक-प्रिया' इति गीता । दुर्गायां स्त्री० ङीप् ।

**सादनी** स्त्री० साद्यन्ते रोगा अनया सद-णिच् ल्युट् । कटुकायाम् ।
**सादि** पु० सद-इण् । सारथौ, योद्धरि च । अश्वसाद्ये त्रि० ।
**सादिन्** पु० सद-णिनि । अश्वारोहणकर्त्तरि, गजारोहिणि, रथारोहिणि च । अवसादे त्रि० ।
**सादृश्य** न० सदृशस्य भावः ष्यञ् । तद्भिन्नत्वे सति तद्गतभूयोधर्मरूपे समानधर्मे, येन सह यस्य सादृश्यं प्रसिद्धं तत् वाचस्तत्ये वक्ष्यते ।
**साधक** त्रि० सध-ण्वुल्, सिध-णिच्-ण्वुल् साधादेशः वा । साधनकर्त्तरि, तन्त्रोक्ते मन्त्रादिसिद्धिकारके शिष्ये च । साधकः सिद्धिमाप्नुयादिति तन्त्रम् ।
**साधन** न० साध्यतेऽनेन सिध-णिच्-ल्युट् साधादेशः । करणे, क्रियोत्पादके हेतुभेदे 'क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र करणं तत्तदा,स्मृतमित्युक्ते क्रियासाधकव्यापारयतिकरणे, सैन्ये, युद्धोपकरणे पुंचिह्ने, कारकभेदे, प्रमाणे, अनुमापके हेतौ च । भावे ल्युट् । मारणे, मृतसंस्कारे, अग्निदाने, गतौ, निष्पादने, अनुगमने, सिद्धौ च । कर्मणि ल्युट् । द्रव्ये, धने, मेत्रे च ।
**साधर्म्य** न० सधर्मस्य समानधर्मस्य भावः ष्यञ् । स्वकीयासाधारणधर्मरूपे लक्षणे 'यदुक्तं यस्य साधर्म्यमि'ति भाषापरिच्छेदः । समानो धर्मोयस्य तस्य भावः ष्यञ् । समान धर्मे यथा पद्ममिव सुन्दरं मुखमित्यादौ सौन्दर्य्यम् ।
**साधारण** त्रि० सह धारणया स्वार्थेऽण् । सदृशे, अनेकस्वत्ववत्येकस्मिन् धने 'साधारणं समाश्रित्य यत्किञ्चिद्वाहनादिकमिति' स्मृतिः । स्त्रियां गौरा० ङीप् । सा च कुञ्चिकायां, वेणुप्रादिनायिकायाञ्च न्यायोक्ते 'यः सपक्षे विपक्षे च । भवेत् साधारणस्तु सं' इत्युक्ते हेत्वाभासभेदे पु० । यथा वह्निमान् द्रव्यत्वादित्यादौ द्रव्यत्वहेतुः सपक्षे पर्व्वते, विपक्षे ह्रदादौ च । स्थित इति साधारणः ।
**साधारणधर्म्म** पु०कर्म० । 'अहिंसा सत्यमस्तेयं शौचमिन्द्रिय निग्रहः ।

दमस्तमाऽऽर्ज्जवं दानं धर्म्मं साधारणं विदुरित्युक्तेः अ-ि शादौ सर्ववर्णाश्रमतुल्ये धर्म्मे । न्यायाद्युक्ते संशयहेतौ समानधर्म्मे च रज्जं रजतं नवेति संशये रङ्गरजतयोः सामान्यधर्मश्चाकचिक्यत्वशु-भ्रत्वादिः ।

**साधित** त्रि॰ सिध णिच्-क्त । दापिते,प्रमाणादिना उद्भाविते च 'साधितात् दशकं शतमिति स्मृतिः निष्पादिते शोधिते च ।

**साधिदैव** त्रि॰ सह अधिदैवेन स्वार्थेऽण् द्विपदवृद्धिः । अधिदैवतायुक्ते साधिभूतसाधियज्ञायपि परमेश्वरे ।

**साधिष्ठ** त्रि॰ अतिशयेन साधुः बाढो वा इष्ठन् साधादेशः टि लोपो वा अत्यन्तदृढे, अतिसाधौ, अतिशोभने च ।

**साधिष्ठान** त्रि॰ सह अधिष्ठानेन । सन्निहिते तन्त्रोक्ते षट्चक्रमध्ये सुषुम्नामध्यस्थे चक्रभेदे न॰ ।

**साधीयस्** त्रि॰ अतिशयेन साधुः बाढो वा साधादेशः टि लोपोवा । अत्यन्तदृढे, न्याय्ये, साधुतरे च । स्त्रियां ङीप् ।

**साधु** त्रि॰ साध उन् । उत्तमकुलजाते, सुन्दरे,मनोहरे, उचिते च । स्त्रियां वा ङीप् । मुनौ,जिने च 'न प्रहृष्यति सम्माने नावमाने न कुप्यति । न क्रुद्धः परुषं ब्रूयादेतद्धि साधुलक्षण'मित्याद्युक्तधर्मयति जने वार्द्धुषिके च पु॰ ।

**साधुपुष्प** न॰ साधु पुष्पं यस्य । स्थलपद्मे । कर्म्म॰ । उत्तमकुसुमे ।

**साधुवाह** पु॰ कर्म्म॰ । विनीते सुशिक्षिते घोटके ।

**साधुवाहिन्** पु॰ साधु यथा तथा वहति णिनि । विनीतेऽश्वे सुन्दरवहनकर्त्तरि त्रि॰ ।

**साधुवृक्ष** पु॰कर्म॰ । कदम्बवृक्षे, यक्षवृक्षे शोभनवृक्षमात्रे च ।

**साध्य** पु॰ सिध-णिच्-यत् । मनोमन्ता तथा प्राणो नरोऽपानश्च वीर्य्यवान् । निर्भयोनरकश्चैव दंशो नारायणो वृषः॥भुश्चेति समाख्याताः साध्या द्वादश देवता'इत्युक्ते द्वादशसंख्यके गणदेवताभेदे, विष्कम्भादिषु योगेषु एकविंशे योगे च । साधनीये त्रि॰ । असाद्यविशिष्टे प्रमाणादिना उद्भाव्ये पदार्थे । 'प्रतिज्ञादोषनिर्मुक्तं साध्यं

सत्कारणान्वितम् । निश्चितं लोकसिद्धञ्च पक्षं पक्षविदो''रित्युक्ते व्यवहारे साधनार्हे प्रतिज्ञेये पक्षे पु० । अनुमित्या साधनीये वह्न्यादौ च यथा वह्निमान् धूमादित्यादौ विधाधर्मितः वह्निः साध्यः । साध्यमस्यास्ति अर्श आद्यच् । साध्यवति पक्षे पु० 'साध्यनिर्देशः प्रतिज्ञे'ति न्यायसूत्रम् साध्यवत्तया पक्षनिर्देश इति दीधितिकारः संस्कार्ये, तन्त्रोक्ते मन्त्रमात्रे, ग्राह्यमन्त्रस्य स्वानुकूलताग्राहकचक्रस्थे द्वितीयपञ्चमादिके 'सिद्धः साध्यः सुसिद्धोऽरिः क्रमात् ज्ञेया मनीषिभिरि'त्युक्ते मन्त्रभेदे च विस्तरो वाचस्पत्ये ।

**साध्यता** स्त्री० साध्यस्यानुमितिविधेयस्य भावः तल् । अनुमितिविधेयतारूपे न्यायोक्ते विषयताभेदे ।

**साध्यतावच्छेदक** पु० साध्यतामवच्छिनत्ति विशेषयति 'अव+च्छिद-ण्वुल् । येन रूपेण यस्य साध्यतारूपा विषयता तस्मिन् धर्मे । यथा वह्निमान् धूमादित्यत्र वह्निः साध्यः तस्य साध्यतां वह्नित्वमवच्छिनत्तीति वह्नित्वं साध्यतावच्छेदकम् ।

**साध्यसिद्धि** स्त्री० साध्यस्य सिद्धिः विनिर्णयः सिध-क्तिन् । साध्यस्य वह्न्यादेः अनुमित्यादिना साधनाधीने निर्णये, निष्पत्तौ, साध्यस्य प्रतिज्ञेयार्थस्य सिद्धिर्निर्णयो यत्र । व्यवहारे प्रतिज्ञातार्थस्य प्राड्विवाकादिभिः विनिर्णयरूपे व्यवहारपादे च ।

**साध्वस** न० साधु+अस्यति अस अच् । भये ।

**साध्वी** स्त्री० साधु-ङीप् । मेदायां, 'आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा । मृते म्रियते या पत्यौ साध्वी ज्ञेया पतिव्रते'त्युक्तलक्षणायां स्त्रियाञ्च । [ मालती माधवम् ।

**सानन्द** त्रि० सह आनन्देन । आनन्दसहिते 'सानन्द' नन्दि हस्ते'ति

**सानु** पु० न० सन् ञुण् । पर्वतस्य समभूमिदेशे प्रस्थे, वने, वातसमूहे, पथि, अग्रे, कोविदे, अर्के, पल्लवे च ।

**सानुज** न० सानौ जायते जन-ड । प्रपौण्डरीके । तुम्बुरवृक्षे पु० । सहानुजेन अनुजसहिते त्रि० ।

**सानुमत्** पु० सानुरस्त्यस्य मतुप् । पर्वते ।

सान्तपन न० सन्तापयति सम्+तप०णिच् ल्युट् स्वार्थेऽण् । 'गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकरात्रोपवासश्च कृच्छ्रं सान्तपनं विदु'रित्युक्ते कृच्छ्रसाध्ये व्रतभेदे ।

सान्तर न० सह अन्तरेण सादेशः । विरले व्यवधानसहिते च ।

सान्तानिक त्रि० सन्तानः प्रयोजनमस्य ठक् । सन्तानसाधके विधानभेदे ।

[न्तत् सान्त्वापयतीत्यन्ये ।

सान्त्व आनुकूल्यकरणे अद०चु०उभ०सक०सेट् । सान्त्वयति ते असान्त्व न० सान्त्व-अच् । अत्यर्थमधुरे, आनुकूल्ये, अन्यमनः प्रीतिदवाक्ये प्रियवाक्यादिना क्रोधोपशमनरूपे, सान्त्वने च ।

सान्त्वन न० सान्त्व ल्युट् । आनुकूल्यकरणे प्रियवादादिना क्रोधाद्युपशमने च । युच् । अत्रैव स्त्री० ।

सान्दीपनि पु० सन्दीपनस्यापत्यम् इञ् । रामकृष्णयोराचार्य्ये अवन्तिपुरवासिनि मुनिभेदे ।

[च वने न० ।

सान्द्र त्रि० अदि-रक् सह अन्द्रेण । निविडे, मृदौ, स्निग्धे, मनोज्ञे

सान्द्रपुष्प पु० सान्द्रं पुष्पमस्य । विभीतकवृक्षे ।

सान्द्रस्निग्ध त्रि० सान्द्रं स्निग्धः अतिहृद्ये अतिमनोहरे च

सान्धिक पु० सन्धा सुरासन्धानं शिल्पं वेत्ति ठक् । शौण्डिके सन्धिः प्रयोजनमस्य ठण् । सन्धिकर्त्तरि त्रि० ।

सान्ध्य त्रि० सन्ध्यायां भवः अण् । सन्ध्याकालिके ।

सान्नाय्य न० सन्नीयते सम् + नी-ण्यत् नि० । मन्त्रादिना संस्कार्य्ये घृतादौ ।

[दुर्गाह्वानमन्त्रः ।

सान्निध्य न० सन्निधिरेव ष्यञ् । नैकट्ये, 'सान्निध्यमिह कल्पयेति,

सान्निपातिक त्रि० सन्निपातात् त्रिदोषविकारात् आगतः तेन निर्वृत्तो वा ठक् । सन्निपाताज्जाते रोगे 'विकारे सन्निपातिके' कुमारः ।

सान्न्यासिक पु० सन्न्यासः प्रयोजनमस्य ठक् । सन्न्यासिनि ।

सापत्न पु० सपत्न एव स्वार्थे ष्यञ् । शत्रौ, सपत्न्यां भवः अपत्यं वा इञ् । सपत्नीपुत्रे । अण् । सापत्नोऽप्यत्र भवत

सापिण्ड्य न० सपिण्डस्य भावः ष्यञ् । दायाधिकारप्राप्त्युप- योगिनि ज्ञातिधर्मे सापिण्ड्यं साप्तपौरुषमिति स्मृतिः [शार्ङ्ग

साप्तपदीन न० सप्तभिः पदैः उच्चारितैर्निर्वृत्तम् खञ् । सख्ये सौ-

साप्तपौरुष त्रि० सप्त पुरुषान् व्याप्नोति अण् । सप्तपुरुषव्यापके ।

साफल्य न० सफलस्य भावः ष्यञ् । सार्थक्ये, सम्पूर्णतायाञ्च ।

साम सान्त्वने अद० चु० उ० स० सेट् । सामयति ते असमासनत् त ।

सामग पु० साम तद्वेदं गायति । सामवेदाध्यायिनि ।

सामगर्भ पु० साम गर्भे यस्य । विष्णौ ।

सामग्री स्त्री० न० समग्रस्य भावः ष्यञ् स्त्रीत्वाच्च ङीष् ङीपि यलो- पः । समस्ततायाम् 'प्रायेण सामग्र्यविधा'विति कुमारः स्वार्थे ष्यञ् । कारणसमूहे, द्रव्ये च स्त्री० ।

सामञ्जस्य न० समञ्जसस्य भावः ष्यञ् । औचित्ये ।

सामन् न० सो-मनिन् । "अग्निं दूतं वृणीमहे,इत्यादिके वेदभेदे, तस्यो- क्तासु ऋक्षु गानभेदे 'ऋच्यध्यूढं साम गीयते इति' छान्दोग्यम् । राज्ञां "साम भेदस्तथा दानं दण्डश्चे'त्युक्ते शत्रुवशीकरणोपायभेदे, प्रियवाक्यादिना सान्त्वने च । पशुबन्धनरज्जौ स्त्री० ङीप् ।

सामन्त पु० संश्लिष्टोऽन्तः एकदेशो यस्य समन्तस्तस्येश्वरः अण् । स्वविष- यानन्तरवर्त्तिदेशाधिपे नृपे । समन्ताद्भवः अण् टि लोपः । श्रेष्ठप्रजासु (मण्डल)यं परम्परया मौलाः सामन्ता'वेति स्मृतिः ।

सामयिक त्रि० समये भवः उचितो वा ठञ् । समयभवे, कालोचिते च ।

सामयोनि पु० साम योनिरुत्पत्तिस्थानं यस्य । हस्तिनि, तेषाञ्च सा- मयोनित्वमुक्तं पालकाप्ये 'सूर्यस्याण्डकपाले द्वे समानीय प्रजा- पतिः । हस्ताभ्यां परिगृह्याथ सप्त सामान्य गायत । गायतो ब्रह्मणस्तस्मात् समुत्पेतुर्मतङ्गजा' इति । चतुर्मुखे ब्रह्मणि च ।

सामर्थ्य न० समर्थस्य भावः ष्यञ् । देहजे बले शक्तौ योग्यतायां, स- ङ्गतार्थतायाञ्च । [समवायसम्बन्धिनि त्रि० ।

सामवायिक पु० समवाये प्रसृतः ठञ् । मन्त्रिणि । तस्येदम् ठञ् ।

**सामाजिक** पु० समाजः सभा तेन प्रयोजनमस्य । सभ्ये ।

**सामान्य** न० समानस्य भावः ष्यञ् । साहश्यप्रयोजकधर्मे यथा मुखं पद्ममिव सुन्दरमित्यादौ सौन्दर्य्यादि । समानमेव स्वार्थे ष्यञ् । द्रव्यगुणकर्मसु तुल्यतया स्थितायां जातौ ।

**सामान्यलक्षणा** स्त्री० सामान्यं साधारणधर्मः लक्षणं यस्याः । न्यायोक्ते अलौकिकप्रत्यक्षसाधने उपायभेदे । यथा एकघटज्ञाने घटत्वरूपसामान्यधर्मज्ञानात् सकलस्य घटत्ववतो ज्ञानम् ।

**सामान्या** स्त्री० समानैव स्वार्थे ष्यञ् अजा० टाप् । साधारणस्त्रियां वेश्यायाम् ।

**सामि** अव्य० साम-इन् । अर्द्धे "सामिघटिते"ति नैषधम् ।

**सामिधेनी** स्त्री० सम्-इन्ध करणे ल्युट् नि० । अग्निसमिन्धनसाधने ऋग्भेदे, समित्काष्ठे च ।

**सामीप्य** न० समीपस्य भावः स्वार्थे वा ष्यञ् । नैकट्ये निकटे च 'सामीप्याभिव्यापकवैषयिकौपश्लेषिकाधारश्चतुर्विध' इति व्याकरणम् ।

**सामुद्र** न० समुद्रे भवः अण् । (करकच्) लवणे ।

**सामुद्रक** न० समुद्रेण प्रोक्तम् वुण् । हस्तादिरेखादिना स्त्रीपुंसशुभाशुभलक्षणज्ञापके ग्रन्थभेदे, 'वामभागे तु नारीणां दक्षिणे पुरुषस्य च निर्द्दिष्टं लक्षणं तेषां समुद्रेण यथोदितमिति, 'सामुद्रकसारसमुद्रेणे'ति नैषधम् ।

**सामुद्रिक** त्रि० समुद्रेण प्रोक्तम् ठञ् । स्त्रीपुंसशुभाशुभलक्षणज्ञापके ग्रन्थे । [युद्धे परलोकसाधने त्रि० ।

**साम्परायिक** न० सम्परायाय आपदे परलोकाय वा हितम् । ठञ् ।

**साम्प्रतम्** अव्य० सम्+प्र+तम-अमुयुक्ते । उचिते ।

**साम्बर** न० सम्बरदेशे भवम् अण् । सम्बरदेशोद्भवे लवणे

**साम्भवा** स्त्री० सम्भवः अस्त्यस्य प्रज्ञाद्यण् गौ० ङीप् । रक्तलोध्रे ।

**साम्य** न० समस्य भावः ष्यञ् । तुल्यत्वप्रयोजके साधारणधर्मे

**साम्राज्य** न० सम्राजः भावः ष्यञ् । सार्वभौमत्वे 'भेजे साम्राज्य-

दीक्षितमिति रघुः 'सर्वाधिपत्यं राज्यं स्यात् साम्राज्यं इत्यमरे' इत्युक्ते इत्यक्तयोजनाधिराज्ये च।

**साय** पु० सो–घञ्। दिनान्ते, वाणे च।

**सायंसन्ध्या** स्त्री० सायम् दिनान्ते सन्ध्या, तत्र सन्ध्यायते सम्+ध्यै–सञर्थे क वा। दिनान्तसन्ध्यायाम् दिनान्ते–उपास्यदेवताभेदे च। भावे अङ्। तत्रापि सनायाम्।

**सायक** पु० सो–ण्वुल्। वाणे-खड्गे च।

**सायन्तन** त्रि० सायम्भवः ट्युल् तुट् च। दिनान्तभवे। स्त्रियां ङीप्। "सायन्तनीं तिथिप्रणय" इति भट्टिः।

**सायपुङ्खा** स्त्री० सायकस्य पुङ्खोयस्याः ५ब०। शरपुङ्खाख्ये।

**सायम्** अव्य० सो–अमु। दिनान्ते "सायं सम्प्रति वर्त्तते" इत्युद्भटः।

**सायाह्न** पु० सायोऽह्नः एक० त० टच् अह्नादेशः। दिनान्ते, "सायाह्नस्त्रिमुहूर्त्तः स्यात् श्राद्धं तत्र न कारयेदिति" स्मृत्युक्ते पञ्चधा विभक्तदिनस्य त्रिमुहूर्त्तात्मके पञ्चमे भेदेऽंशे च।

**सायुज्य** न० सह युनक्ति-युज क्विप् सादेशः सयुक् तस्य भावः ष्यञ्। सहयोगे, पञ्चविधमुक्तिमध्ये एकत्र समवस्थानरूपे मुक्तिभेदे च।

**सार** दौर्बल्ये अद० चु० उभ० सक० सेट्। सारयति ते ऋष सारत् त

**सार** न० सृ-घञ्, सार-अच् वा। जले, धने, न्याय्ये, नवनीते, श्रेष्ठे, वने च। बले, स्थिरांशे, मज्जनि, पर्जन्यारे, वायौ, रोगे, अतिदृढे द्रव्यस्थे च पु० न०। श्रेष्ठे, वरे च त्रि०। [त्रि०

**सारक** पु० सारयति रेचयति सृ-णिच्-ण्वुल्। जयपाले। रेचकद्रव्ये।

**सारखदिर** पु० कर्म०। विट्खदिरे।

**सारगन्ध** पु० सारः श्रेष्ठोगन्धोयस्य। चन्दने।

**सारघ** न० सरघाभिर्निर्वृत्तम् अण्। मधुनि क्षौद्रे।

**सारङ्ग** पु० सृ-अङ्गच्। चातकखगे, हरिणे, गजे, भृङ्गे छत्रे, राजहंसे, चित्रमृगे, वाद्यभेदे, वस्त्रे, नानावर्णे, मयूरे कामदेवे, चापे, केशे, आभरणे, पद्मे, शङ्खे, चन्दने, कर्पूरे, पुष्पे, कोकिले, मेघे,

चिह्ने, रात्रौ, भूमौ, दीप्तौ च। शारमङ्गमस्य शक०। शारङ्गोऽपि चित्रमृगादौ।

**सारङ्गिक** पु० सारङ्गं मृगं हन्ति ठक्। व्याधे।

**सारज** न० सारात् दध्यग्रात् जायते जन-ड। नवनीते।

**सारण** न० सृ-णिच्-ल्युट्। गन्धभेदे, अतीसाररोगे, रावणसचिवे च। भद्रबलायाम्, आम्रातके च पु०।

**सारणि(णी)** स्त्री० सृ-णिच् अनि वा ङीप्। क्षुद्रनद्यां, प्रसारिण्याम्, सङ्क्षेपेण ग्रहगत्यादिबोधके ज्योतिषग्रन्थभेदे च।

**सारतरु** पु० सारप्रधानः जलप्रधानस्तरुः। कदलीवृक्षे।

**सारथि** पु० सृ-अथिण्, सह रथेन सरथः घोटकः तत्र नियुक्तः इञ् वा। रथादिवाहनप्रेरके नियन्तरि।

**सारदा** स्त्री० सारं ददाति दा-क। सरस्वत्याम् "लिखति यदि गृहीत्वा सारदेति" शिवस्तवः। सारदातरि त्रि०।

**सारद्रुम** पु० साराढ्यो द्रुमः खदिरवृक्षे।

**सारभाण्ड** न० कर्म०। अकृत्रिमपात्रे, श्रेष्ठपात्रे च।

**सारमूषिका** स्त्री० सारे मूषिके वापहारकत्वात्। देवदारौ वृक्षे।

**सारमेय** पु० स्त्री० सरमायाः कश्यपपत्न्याः अपत्यम् ढक्। कुक्कुरे। तद्योषिति स्त्री०।

**सारलौह** न० लौहेषु सारः राज०। लौहसारे (इस्पात)।

**सारव** त्रि० सरय्वां भवः अण् नि०। सरयूनदीभवे।

**सारस** न० सरोऽभिजनो नियतवसतिरस्य अण्। पद्मे, कट्याभरणे च। सह रसेन स्वार्थे अण्। चन्द्रे, स्वनामख्याते पक्षिणि च पु०। तद्योषिति स्त्री०। सरस इदम् अण्। सरोवरसम्बन्धिनि त्रि०

**सारसन** न० सारं सनोति सन-अच्। स्त्रीकट्याभरणे, काञ्च्याम्, कञ्चुकदाढ्यार्थं मध्यकाये निबद्धे, पट्टिकादौ च।

**सारस्वत** पु० सरस्वती देवताऽस्य, सरस्वत्या इदं वा अण्। बिल्वदण्डे देशभेदे, पञ्चगौडमध्ये ब्राह्मणभेदे सरस्वती प्रतिपालितमुनिभेदे, ब्राह्मादिकल्पे कल्पभेदे च "सारस्वतस्य कल्पस्येति" पुराणम्। सरस्वती-

सम्बन्धिनि "तस्यां पूर्व्वाह्णसमये कुर्य्यात् सारस्वतोत्सवमिति" पुरा-
णम् । सरस्वतीदेवताके च त्रि० "तत्रावभाय नियोयश्चरुः सार-
स्वतो द्विजैरिति" स्मृतिः । [भेदे, तन्नामके ब्राह्मादिके च ।
सारस्वतकल्प पु० कर्म्म० । तन्त्रोक्ते सरस्वत्या उपासनार्थके विधान-
सारा स्त्री० सारयति सृ-णिच्-अच् । कृष्णत्रिवृतायाम्, दूर्व्वायाञ्च ।
साराल पु० सारमालाति आ+ला-क । तिलवृक्षे ।
सारि(री) पु० स्त्री० सृ-इण् स्त्रीत्वपक्षे वा ङीप् । पाशके "सारीं
चरन्तीं सखि ! मारयेति" नैषधम् पक्षिभेदे च ।
सारिका स्त्री० सरति गच्छति सृ-ण्वुल् । पक्षिभेदे (शालिक) ।
सारिणी स्त्री० सृ णिनि । सहदेवीलतायाम्, कार्पास्यां, दुरालभायां,
कपिलशिंशपायां, प्रसारिण्यां, रक्तपुनर्णवायाञ्च ।
सारिवा स्त्री० सारिरिव याति वा-क । (अनन्तमूल) लताभेदे ।
सारोष्ट्रिक पु० सारः श्रेष्ठ उष्ट्रोयत्र सारोष्ट्रः देशभेदस्तत्रभवः ठक् ।
विषभेदे ।
सार्थ पु० सृ-थन् स्वार्थे अण् । समूहे, जन्तुसमूहे "स जयत्यरिसार्थ-
सार्थकीति" नैषधम् सह अर्थेन वाच्येन वा । वणिक् समूहे ।
धनिनि त्रि० । कन् । सार्थकः । अर्थसहिते जने त्रि० शब्दे । पु०
"सार्थकः स्वार्थबोधकादिति" शब्दशक्तिप्रकाशिका" ।
सार्थवाह पु० सार्थं वहति वह-अण् । वणिग्जने ।
सार्द्र त्रि० सह आर्द्रेन । आर्द्रतायुक्ते । [अर्द्धयुक्ते त्रि० ।
सार्द्धम् अव्य० सह+ऋध-अम् । साहित्ये । सह अर्द्धेन । सार्द्धः ।
सार्प न० सर्पोदेवतास्य अण् । अश्लेषानक्षत्रे ।
सार्पिष्क त्रि० सर्पिषा संस्कृतम् ठञ् । घृतसंस्कृते व्यञ्जनादौ । [विदिते ।
सार्व्वजनीन त्रि० सर्वेषु जनेषु विदितः खञ् द्विपदवृद्धिः । सर्वलोक-
सार्व्वत्रिक त्रि० सर्व्वत्र भवम् ठक् । सर्वकाल कालादौ भवे ।
सार्व्वधातुक न० सर्वधातून् व्याप्नोति ठक् । व्याकरणोक्ते सर्वधातु-
प्रकृतिके तिङादौ प्रत्यये । [भूतव्यापके ।
सार्व्वभौतिक त्रि० सर्वाणि-भूतानि व्याप्नोति ठञ् द्विपदवृद्धिः । सर्व-

**सार्व्वभौम** पु० सर्वस्याः भूमेरीश्वरः सर्वासु भूमिषु विदितो वा अण्। चक्रवर्त्तिनि नृपे, उत्तरदिक्स्थे गजे च।

**सार्व्वलौकिक** त्रि० सर्वेषु लोकेषु विदितः ठञ् द्विपदवृद्धिः। सर्वलोकेषु विदिते "स रामः सार्वलौकिक" इति भट्टिः।

**सार्व्वविभक्तिक** त्रि० सर्वासु विभक्तिषु तदर्थे भवः—ठञ्। सर्वविभक्त्यर्थे विहिते तसिलादौ प्रत्यये।

**सार्षप** त्रि० सर्षपस्य विकारः अण्। सर्षपविकारतैलादौ 'कटुष्ट' सार्षपं [तैलमिति, स्मृतिः"।

**साल** पु० सल—घञ्। वृक्षमात्रे, "रसालः सालः समदृश्यतेति" नैषधम् स्वनामख्याते वृक्षभेदे, प्राकारे च। [(धुना)।

**सालन** पु० सालः कारणत्वेनास्त्यस्य पामादित्वात् न। सालनिर्यासे

**सालनिर्यास** पु० ६त०। (धुना) सर्ज्जरसे।

**सालपर्णी** स्त्री० सालस्येव पर्णान्यस्याः ङीप्। (सालपानि) वृक्षे।

**सालपुष्प** न० सालस्येव पुष्पं यस्य। स्थलपद्मे।

**सालभञ्जिका** स्त्री० सालं भनक्ति भन्ज—ण्वुल्। काष्ठादिनिर्म्मिते क्रीडासाधने पुत्तलिकायाम्, वेश्यायाञ्च।

**सालरस** पु० ६त० (धुना) राले।

**सालवेष्ट** पु० सालं वेष्टयति वेष्ट अण्। राले (धुना)।

**साला** स्त्री० सालः प्राकारोऽस्त्यस्याः अच्। गृहे।

**सालावृक** पु० सालायां वृकश्च। कुक्कुरे।

**सालूर** पु० सल ऊरच् णिच्च। भेके मण्डूके।

**सालेय** पु० सालायां भवः ढक्। मधुरिकायाम्।

**सालोक्य** न० समानोलोकोऽस्य तस्य भावः ष्यञ्। पञ्चविधमुक्ति मध्ये एकलोकवासरूपे मुक्तिभेदे।

**साल्व** पु० ब०व० सौवदेशे। तेषां राजा अण्। तद्देशाधिपे नृपे।

**साल्वहन्** पु० साल्वं नृपं हतवान् हन-क्विप्। विष्णौ।

**सावधान** त्रि० सह अवधानेन। सचेतने, सतर्के, मनोऽभिनिवेशयुक्ते च

प्रथमसाहस्रो दण्ड उत्तमसाहसः । तदर्द्धं मध्यमः प्रोक्तस्तदर्द्धमधमः स्मृत" इति स्मृतिः । "पारुष्ये तु साहस" इत्युक्ते अग्निभेदे च पु० ।

**साहसिक** त्रि० साहसे प्रसृतः ठन् । मनुष्यमारणाद्यभिरते चौरे, पारदारिके, मिथ्यावादिनि, परुषवादिनि च ।

**साहस्र** न० सहस्राणां समूहः अण् । सहस्रसमूहे । स्वार्थे अण् । सहस्रसङ्ख्यायाम् न० । सहस्रं परिमाणमस्य अण् । सहस्रसंख्यान्विते त्रि० । सहस्रसंख्यकगजसमूहे पु० ।

**साहायक** न० सहायस्य भावः वुञ् । साहाय्ये ।

**साहाय्य** न० सहायस्य भावः ष्यञ् । सहायतायाम् ।

**साहित्य** न० सहितस्य भावः । ष्यञ् । मेलने परस्परसापेक्षाणां तुल्यरूपाणामेकक्रियान्वयित्वे, तुल्यवदेकक्रियान्वयित्वे, एकक्रियान्वयित्वे बुद्धिविशेषविषयत्वे, काव्यभेदे च ।

**साह्य** न० सह्यस्य भावः अण् सह—ण्यत् वा । सहत्वे सहनीये त्रि० ।

**साह्वय** पु० सह आह्वयेनाभिधानेन । अभिधानसहिते "जगाम गजसाह्वयमिति" भारतम् । मेषादिप्राणिकरणकद्यूतकर्मे समाह्वये च ।

**सिंह** पु० हिन्स—अच् पृ०वर्णविपर्य्ययः । स्वनामख्याते पशुभेदे, रक्तशोभाञ्जने, मेषादितः पञ्चमे राशौ च । पदान्तस्थः । श्रेष्ठार्थे ।

**सिंहकेशर** पु० सिंहस्येव केशरोऽस्य । वकुले ।

**सिंहतल** पु० सिंहस्येव तलमत्र । करद्वयमेलनरूपे अञ्जलौ ।

**सिंहतुण्ड** पु० सिंहस्येव तुण्डः पुष्पमस्य । सेहुण्डवृक्षे ।

**सिंहद्वार** न० सिंहचिह्नितं द्वारम् । पुरप्रवेशनयोग्ये द्वारे ।

**सिंहध्वनि** पु० सिंहस्येव ध्वनिः । सिंहतुल्यनादे सिंहनादादयोऽप्यत्र । [ भेदे ।
इत० सिंहस्य शब्दे ।

**सिंहनर्दिका** पु० सिंहइव नर्दति नर्द--ण्वुल् । ( सिङ्गा ) वाद्य०

**सिंहनादिका** स्त्री० सिंहमपि नादयति नद णिच् ण्वुल् । दुरालभायाम् ।

**सिंहपर्णी** स्त्री० सिंहस्य पुच्छइव पर्णमस्या ङीप् । वासकवृक्षे

**सिंहपुच्छिका** स्त्री० सिंहस्य पुच्छमिव पश्चाद्भागोऽस्याः-कप्, अत इत्वम् । (आदृश्याकुले) वृक्षे ।

**सिंहपुच्छी** स्त्री० सिंहस्य पुच्छमिव पुष्पाणि पत्राणि वास्याः ङीप् । चित्रपर्ण्यां, पृश्निपर्ण्याम्, म षपर्ण्याञ्च ।

**सिंहपुष्पी** स्त्री० सिंहस्य पुच्छमिव पुष्पाण्यस्याः । पृश्निपर्ण्याम्

**सिंहमुखी** स्त्री० सिंहस्य मुखमिव मुखस्यदन्त इव पुष्पमस्याः ङीप् । वासके । [दयोऽप्यत्र ।

**सिंहयाना** स्त्री० सिंहोयानं वाहनं यस्याः दुर्गायाम् सिंहवाहना-

**सिंहल** पु० सिंहोऽस्त्यत्र लच् । देशभेदे । तद्देशप्रभवत्वात् रङ्गे, रीतौ त्वचे च न० ।

**सिंहलास्थान** पु० सिंहल आस्थानं यस्य । तालवृक्षे वृक्षभेदे ।

**सिंहवाहिनी** स्त्री० सिंहरूपो वाहो विद्यतेऽस्या इनि । दुर्गायाम् ।

**सिंहविक्रान्त** पु० सिंहइव विक्रान्तः । अश्वे । सिंहतुल्य विक्रमे त्रि०

**सिंहविन्ना** स्त्री० सिंहइव विन्ना विद् क्त । माषपर्ण्याम् ।

**सिंहसंहनन** त्रि० सिंहस्येव संहननमङ्गमस्य । वराङ्गयुक्ते सिंहतुल्य दृढाङ्गे, च । "सिंहसंहननो युवेति" रघुः ।

**सिंहा(शिङ्घा)न** न० शिघि-आनच् पृ० । लौहमले ।

**सिंहासन** न० सिंहचिह्नितमासनम् । राजासने चतुराजी क्रीडायां जयभेदे, योगासनभेदे च लक्षणं वाचस्पत्ये ।

**सिंहास्य** पु० सिंहस्यास्यमिवास्यस्यदन्तइव पुष्पं यस्य । वासके ।

**सिंहिका** स्त्री० । काश्यपपत्न्यां राहुमातरि ।

**सिंहिकासुत** पु० ६त० । राहौ सिंहिकापुत्रादयोऽप्यत्र ।

**सिंही** स्त्री० हिनस्ति रोगान् हिन्स अच् पृ० । वार्ताक्यां, कण्टकारिकायाम्, वासके, बृहत्यां, मुद्गपर्ण्याम्, राहुमातरि, च । सिंह+जातौ ङीप् । सिंहयोषिति ।

**सिक** सेचने सौत्र० पर० सक० सेट् सेकति असेकीत् ।

**सिकता** स्त्री० व० व० । सिक-अतच् किच्च । वालुकायाम् । सिकताः सन्त्यत्र अण् तस्य लुप् । सिकतायुक्तदेशे स्त्री० ।

सिकतामय त्रि० सिकता+मयट् । वालुकामये तटादौ
सिकतावत् त्रि० सिकताः सन्त्यत्र मतुप् मस्य वः । वालुकायुक्तदेशे ।
सिकतिल त्रि० सिकताः सन्त्यत्र इलच् । वालुकायुक्तदेशे
सिक्थ न० सिच-थक् । मधूच्छिष्टे, (मोम) नील्याञ्च । स्वार्थे कन् ।
तत्र, भक्तपुलाके, यावे च पु० ।
सिक्य न० सिक-यत् । (सिके) रज्जुनिर्म्मिते पदार्थे
सिङ्घा(घा)न न० सिघ—आनच् पु० । नासिकामले । (सिकनी) ।
सिच् त्रि० सिच-क्विप् । सेचनकर्त्तरि, कर्म्मणि क्विप् । वस्त्रे ।
सिचय पु० सिच्—अयच् किच्च । वस्त्रे ।
सिञ्चिता स्त्री० सिच-इतच् पु० । पिप्पल्याम्
सित न० सो-क्त । रौप्ये, मूलके, चन्दने च । शरे, शुक्लपक्षे, शुक्ल-
वर्णे च पु० । तद्वति, समाप्ते, बद्धे, ज्ञाते च त्रि० ।
सितकण्ठ पु० सितः कण्ठोऽस्य दात्यूहे, पक्षिणि ।
सितकर पु० सितः करः किरणो यस्य । चन्द्रे, कर्पूरे च सितमयूखा-
दयोऽप्यत्र ।
सितकर्णी स्त्री० सितः कर्ण इव पुष्पमस्याः ङीप् । वासके
सितकुञ्जर पु० सितः कुञ्जरोऽस्य । इन्द्रे । कर्म्म० । ऐरावतगजे
सितगुञ्जा स्त्री० कर्म्म० । श्वेतगुञ्जायाम् ।
सितच्छत्रा स्त्री० सितं छत्रमिव पुष्पमस्याः । श्वेतपुष्पायाम् ।
सितच्छद पु० सितश्छदः पक्षोऽस्य । हंसे । श्वेतदूर्वायां, स्त्री० ।
सितदर्भ पु० कर्म्म० श्वेतकुशे ।
सितदीप्य पु० दीपयत्यग्निम् दीप-णिच्-यत् कर्म्म० । श्वेतजीरके ।
सितदूर्वा स्त्री० कर्म्म० । श्वेतदूर्वायाम् ।
सितद्रु पु० कर्म्म० । मोरटभेदे, शुक्लयवक्षे च ।
सितधातु पु० कर्म्म० । कठिन्याम् ।
सितपक्ष पु० सितः पक्षोऽस्य । हंसे । कर्म्म० । चन्द्रस्य हद्धिकारक
पञ्चदशतिथ्यात्मके शुक्ले पक्षे ।

सितपर्णी स्त्री० सितानि पर्णान्यस्याः ङीप् । अर्कपुष्पिका वृक्षे ।
सितपाटलिका स्त्री० कर्म० । (श्वेतपारुल) वृक्षे ।
सितपुङ्खा स्त्री० सितः पुङ्खोऽस्याः । श्वेतशरपुङ्खावृक्षे ।
सितपुष्प न० सितानि पुष्पाण्यस्य । कैवर्त्तीमुस्तके । तगरवृक्षे, काशे श्वेतरोहितकवृक्षे च पु० । श्वेतापराजितायां स्त्री० ङीप् । मल्लिकायां स्त्री० टाप् । कर्म० । श्वेतपुष्पे न० ।
सितमरिच न० कर्म० । शुभ्रमरिचे ।
सितमाष पु० कर्म० । राजमाषे (वरवटी)
सितवर्षाभू स्त्री० वर्षासु भवति भू-क्विप् कर्म० । श्वेतपुनर्णवायाम् ।
सितसायका स्त्री० सितः सायकोयस्याः बब० । शुभ्रशरपुङ्खावृक्षे ।
सितशिम्बिक पु० सिता शिम्बिर्यस्य कप् । गोधूमे,
सितशूक पु० सितः शुभ्रः शूको यस्य । यवे ।
सितशूरण पु० कर्म० । वनशूरणे (वनओल) ।
सितसर्षप पु० कर्म० । गौरसर्षपे ।
सितसार(क) पु० सितः सारो निर्यासो यस्य वा कप् । शालिञ्चशाके ।
सिता स्त्री० सो क्त । शर्करायाम् ।
सिताखण्ड पु० सितायाः खण्ड इव । मधुजातशर्करायाम् ।
सिताग्र पु० सितमग्रं यस्य । कण्टके
सिताद्रि पु० सितायाः आदिः कारणम् । गुडे ।
सितापाङ्ग पु० सितमपाङ्गं यस्य । मयूरे
सिताब्ज न० कर्म० । श्वेतकमले । सिताम्भोजादयोऽप्यत्र ।
सिताभ पु० सिता आभा यस्य । कर्पूरे, चन्द्रे च । तक्रे स्त्री० ।
सिताभ्र पु० अभ्रइव सितः शुभ्रः राज० । कर्पूरे ।
सिताभ्रक न० अभ्रकमिव सितम् राज० । कर्पूरे ।
सितार्जक पु० कर्म० । श्वेतवर्वरायाम् ।
सितालक पु० आलयति भूषयति अल-णिच्-ण्वुल् कर्म० । श्वेतमन्दारे ।
सितालता स्त्री० सिता सती आलतते आ+लत-अच् । श्वेतदूर्वायाम्
सितावर पु० सितं श्वेततामावृणोति आ+वृ-अच् (सुसुनि) शाकभेदे ।

सिति पु० षो क्तिच्। शुक्लवर्णे, कृष्णवर्णे च। तद्वति त्रि०।
सितिमन् पु० सितस्य भावः इमनिच्। शुभ्रतायाम्। [शाके।
सितिशार पु० सितिं श्वेततां इयर्त्ति ऋ-अण्। मुनिकशाके (सुसनि)
सितिवासस् पु० सिति कृष्णं वासोऽस्य। बलदेवे।
सितेतर पु० सितादितरः। श्यामशालौ कुलत्थे च श्यामेतरवर्णे पु० तद्वति त्रि०।
सितोपल पु० कर्म्म०। स्फटिके। कठिन्यां न०। शर्करायां स्त्री०
सिद्ध न० सिध-क्त। सैन्धवलवणं अकृत्रिमत्वात्तथात्वम् निष्पन्ने, पक्के, नित्ये च त्रि०। सिद्धिरस्त्यस्य अच्। व्यासादौ ऋषौ देवयोनिभेदे च पु०। निश्चिते त्रि० विष्कम्भादिषु मध्ये द्वाविंशयोगे, गुडे क-ष्णधुस्तूरे च पु०। ज्योतिषोक्ते योगिन्योदशामध्ये सप्तम्यां दशायां स्त्री०। तन्त्रोक्ते सिद्धादिचक्रस्थे साधकनामाद्याक्षरयुक्तकोष्ठस्था-द्याक्षरयुक्ते मन्त्रभेदे पु०।
सिद्धक पु० सिद्ध इव इवार्थे कन्। सिन्धुवारे, शालवृक्षे च।
सिद्धजल न० सिद्धं पक्वं जलम्। काञ्जिके। सिद्धतोयादयोऽप्यत्र।
सिद्धदेव पु० सिद्धानां देवः। महादेवे।
सिद्धधातु पु० सिद्धः प्रसिद्धोधातुः। पारदे।
सिद्धपीठ पु० न० कर्म्म०। जातोलक्षबलिर्यत्र होमोवा कोटिसङ्ख्यकः। महाविद्याजपाः कोट्यः सिद्धपीठः प्रकीर्त्तित, इति तन्त्रोक्ते स्थानभेदे।
सिद्धपुर न० कर्म०। "लङ्कापुरमध्ये यमकोटिरस्याः प्राक् पश्चिमे रोम-कपत्तनञ्च। अधोगतं सिद्धपुरञ्चेत्युक्ते" भूगोलस्थेषु भूकल्पपादान्त-रितदेशस्थेषु चतुर्षु देवनिर्मितेषु पुरेषु मध्ये लङ्काधोभागस्थे पुरभेदे।
सिद्धपुष्प पु० सिद्धं नित्यं पुष्पं यस्य करवीरवृक्षे।
सिद्धप्रयोजन पु० सिद्धं प्रयोजनं यस्मात् ५ब०। गौरसर्षपे
सिद्धरस पु० सिद्धः प्रसिद्धोरसः। पारदे सिद्धोरसोऽत्र धातुवादे त्रि०।

**सिद्धविद्या** स्त्री० सिद्धा विद्या मन्त्रोऽस्याः। "काली तारा महाविद्या षोडशी भुवनेश्वरी। भैरवी छिन्नमस्ता च विद्या धूमावती तथा। बगला सिद्धविद्या च मातङ्गी कमलात्मिका। एता दश महाविद्याः सिद्धविद्याः प्रकीर्त्तिताः" इति तन्त्रोक्तासु दशसु काल्यादिषु।

**सिद्धसाधन** न० सिद्धस्य निश्चितस्य साधनमनुमानम्। न्यायोक्ते सिसाधयिषाविरहकाले साध्यवत्त्वेन निश्चितस्य पुनरनुमानरूपे दोषे। सिद्धं साधयति ल्यु। श्वेतसर्षपे पु०।

**सिद्धसाध्य** पु० सिद्धादिचक्रस्थे साधकनामाद्याक्षरयुक्तकोष्ठावधिद्वितीयकोष्ठस्थाद्याक्षरयुक्ते तन्त्रोक्ते मन्त्रभेदे।

**सिद्धसिद्ध** पु० तन्त्रोक्ते सिद्धादिचक्रस्थे साधकनामाद्यक्षरयुक्तकोष्ठस्थिताद्याक्षरयुक्ते मन्त्रभेदे।

**सिद्धसिन्धु** स्त्री० ६त०। गङ्गायाम् सिद्धनद्यादयोऽप्यत्र।

**सिद्धसुसिद्ध** पु० तन्त्रोक्ते सिद्धादिचक्रस्थे साधकनामाद्याक्षरयुक्तकोष्ठावधितृतीयकोष्ठस्थिताद्याक्षरयुक्ते मन्त्रभेदे।

**सिद्धान्त** पु० सिद्धः निश्चितोऽन्तोयस्मात्। प्रमाणाद्युपन्यासेन पूर्वपक्षनिरासके सिद्धपक्षस्य स्थापनरूपे वाक्यस्तोमे, ज्योतिःशास्त्रभेदे च स च सूर्य्यसिद्धान्तः सोमसिद्धान्तादिः।

**सिद्धारि** पु० तन्त्रोक्ते सिद्धादिचक्रस्थे साधकनामाद्याक्षरयुक्तकोष्ठावधिचतुर्थकोष्ठस्थाद्याक्षरयुक्ते मन्त्रभेदे।

**सिद्धार्थ** (क) पु० सिद्धः अर्थो यस्मात् ५ब० वा कप्। श्वेतसर्षपे वटीवृक्षे च। ६ब०। प्रसिद्धार्थे त्रि०। "सिद्धार्थं सिद्धसम्बन्धमिति" प्राहुः।

**सिद्धि** स्त्री० सिध–क्तिन्। ऋद्धिनामौषधे, योगभेदे, अन्तर्द्धाने, निष्पत्तौ, पाके, पादुकायाम्, मोक्षे, सम्पत्तौ, अणिमाद्यष्टविधैश्वर्य्ये, बुद्धौ, साध्यवत्तया निश्चये च।

**सिद्धिद** पु० सिद्धिं ददाति दा–क। वटुकभैरवे। सिद्धिदातरि त्रि०।

सिद्धियोग पु० सिद्धिहेतुर्योगः । "शुक्रे नन्दा बुधे भद्रा शनौ रिक्ता कुजे जया । गुरौ पूर्णा च संयुक्ता सिद्धियोगः प्रकीर्त्तितः" इति ज्योतिषोक्ते शुक्रादिवारयुक्तनन्दादौ ।

सिध्म न० सिध-मनु किच्च । किलासरोगे ।

सिध्मन् न० सिध—मनिन् किच्च । किलासरोगे तद्योगवति त्रि० ।

सिध्मल त्रि० सिध्मन्+अस्त्यर्थे लच् । किलासरोगवति । विकारे स्त्री० ।

सिध्य पु० कार्य्यं साधयति सिध—णिच्—कर्त्तरि यत् नि० । पुष्यनक्षत्रे

सिध्रक पु० सेधति रोगान् सिध—रक् स्वार्थे कन् । (सुध) वृक्षभेदे "वनगिर्य्यो"रित्यादिसूत्रेण सिध्रकशब्दस्य पाणिनिना दीर्घविधानात् पुंस्त्वमेवास्य, अमरोक्तं स्त्रीत्वमवगणनीयम् ।

सिध्रकावण न० सिध्रकप्रधानं वनं णत्वम् दीर्घश्च । देशोद्याने ।

सिन पु० सीयते बध्यते क्त षि-ग्रासे तस्य नः । ग्रासे, काये च ।

सिनी स्त्री० सि-क्त तस्य नश्च स्त्रियां ङीप् । शुक्लवर्णस्त्रियाम् ।

सिनीवाली स्त्री० सिनीं श्वेतां चन्द्रकलां वलति धारयति अण् ङीप् । चतुर्द्दशीयुक्तायाममावास्यायाम् ।

सिन्दु(न्धु)क पु० स्यन्दते स्यन्द-उ संप्रसारणञ्च द० दस्य वा धः स्वार्थे वा कन् । सिन्दुवारवृक्षे ।

सिन्दु(न्धु)वार पु० सिन्धुं गजमदं वारयति तिक्तत्वात् वृ-अण् । (निसिन्दा) वृक्षे । "मुक्ताकलापीकृत सिन्दुवारमिति" कुमारः तस्य च श्वेतपुष्पत्वात् मुक्तातुल्यत्वम् । [भेदे, वृक्षभेदे पु० ।

सिन्दूर न० स्यन्द—ऊरन् संप्रसारणम् । स्वनामख्याते रक्तवर्णे चूर्ण-

सिन्दूरकारण न० 6त० । सीसके । [शायाम् स्त्री० ।

सिन्दूरतिलक पु० सिन्दूरवर्णं तिलकं बिन्दुभेदो यस्य । हस्तिनि सध-

सिन्दूरी स्त्री० सिन्दूरवर्णानि पुष्पाणि सन्त्यस्याः अच् गौ० ङीप् । सिन्दूरपुष्प्यां, धातक्याञ्च ।

सिन्धु पु० स्यन्द—उ संप्रसारणं । दस्य धः । समुद्रे, नदभेदे, वृक्षे, श्वेतटङ्कणे, रागभेदे, गजमदे, देशभेदे च । तद्देशवासिनि पु०ब०व० । नदीभेदे स्त्री० ।

सिन्धुकफ पु० सिन्धोः कफइव । समुद्रफेने । [ इत्यौ
सिन्धुकर न० सिन्धुदेशे कीर्य्यते क्रियते वा कृ—कॄ—वा अप् । सौ तट-
सिन्धुखेल पु० सिन्धुसमीपे खेलति खेल—अच् । सिन्धुदेशे ।
सिन्धुज न० सिन्धुदेशे समुद्रे वा जायते जन—ड । सैन्धवलवणे ।
चन्द्रे, कर्पूरे च पु० । लक्ष्म्यां स्त्री० । सिन्धुजातादयोऽप्यत्र ।
सिन्धुनन्दन पु० ६त० । चन्द्रे, सिन्धुसुतादयोऽप्यत्र लक्ष्म्यां स्त्री० ।
सिन्धुपुष्प पु० सिन्धौ पुष्पमिव विकाशते पुष्प—अच् । शङ्खे ।
सिन्धुमन्थज न० सिन्धुमन्थात् जायते जन—ड । सैन्धवलवणे,
चन्द्रे च । [ति" मल्लिनाथः ।
सिन्धुर पु० सिन्धुर्मदजलमस्यास्ति र । हस्तिनि "मदान्धसिन्धुरघटे-
सिन्धुलवण न० सिन्धुदेशजातं लवणम् । सैन्धवलवणे ।
सिन्धुवरिल पु० सिन्धुः मदजलं वारितस्तिरस्कृतो येन अतितिक्तत्वात् ।
सिन्धुवारवृक्षे । (निसिन्दा)
सिन्धुवेषण पु० विष-ल्यु ६त० । गाम्भारीवृक्षे ।
सिन्धुसङ्गम पु० सिन्ध्वोः नद्योः नदीसमुद्रयोर्वा सङ्गमः । नद्योः नदी-
समुद्रयोर्वा, मेलने । स यत्र । तदाधारदेशे त्रि० ।
सिन्धूद्भव न० सिन्धोः उद्भवति उद्+भू—अच् । सैन्धवलवणे
सिन्धूपल पु० सिन्धोरुपलइव । सैन्धवलवणे । कौषमित्वाम्ये ।
सिप्र पु० सप—रक् पु० । सरोवरभेदे, चन्द्रे, निदाघजले, घर्म्मे च
उज्जयिनीसमीपस्थनदीभेदे स्त्री० "सिप्रातरङ्गानिलकम्पितासु-
ति" रघुः ।
सिम पु० सि-मन् किच्च । सर्वस्मिन् इत्यर्थे, तदर्थेऽस्य सर्वनामता ।
सिम्बा(म्बि) स्त्री० शाम्यति क्षुदनया शम-बन् इन् वा पृ० (छुटि)
शिम्बायाम् इत्यन्यः । मध्येनामसम्बद्धत्वे वा ङीप् । ङीबन्तः ।
निष्पाव्यास्तु ।
सिम्बिजा स्त्री० सिम्बेर्जायते जन-ड । शमीधान्ये कलायादौ ।
सिर सि-रक् । पिप्पलीमूले । नाड्याम् अम्बुवाहिन्यास्तु स्त्री० । [इत्यौ ।
सिलकी स्त्री० सि—क्विप् लक अच् गौरा० ङीष् कर्म० । शल्लकी-

सिहुण्ड पु० सो–कि षिः छेदनं कुण्डते कण्टकावृतत्वात् कुडि–अच्। स्नुहीवृक्षे ।                    [लिङ्ग ।

सिह्ल पु० सिह–क्लच् पृ० । तुरुष्काख्ये गन्धद्रव्ये । स्वार्थे कन् । तत्र ।

सिह्लकी स्त्री० सिह–वक्लच् पृ० गौ० ङीष् । शल्लकीवृक्षे ।

सिह्लभूमि स्त्री० सिह्लस्य गन्धद्रव्यस्य भूमिः । शल्लकीवृक्षे ।

सीक सेचने भ्वा० आ० सक० सेट् । सीकते असीकिष्ट । चङि न ह्रस्वः । अतोपदेशत्वाभावात् न षत्वम् ।

सीक स्पर्शे वा चु० उभ० पक्षे भ्वा० प० सक० सेट् । सीकयति ते सीकति असीसिकत् त असीकीत् । न षत्वम् ।

सीकर पु० सीक्यते सिच्यतेऽनेन सीक–अरण् । जलकणे ।

सीता स्त्री० सि–त पृ० दीर्घः । लाङ्गलपद्धतौ, जनकराजदुहितरि, भद्राश्ववर्षस्थितगङ्गायाञ्च ।

सीतापति पु० ६त० । श्रीरामे ।

सीतायाःपति पु० ६तः अलुक्समा० । श्रीरामे "सीतायाः पतये नमः" इति पुराणम् असमस्तत्वे पत्ये इति स्यात् ।

सीत्कार पु० सीदित्यव्यक्तस्य कारः सीत्+कृ–घञ् । अनुरागजे शब्दे ।

सीत्कृत न० सीत्–कृ–भावे क्त । सीत्कारे, अनुरागजशब्दे ।

सीत्य न० सीतया लाङ्गलपद्धत्या निर्वृत्तं यत् । धान्ये । सीतामर्हति यत् । कृष्टकर्षणयोग्ये क्षेत्रादौ त्रि० ।

सीधु पु० सिध–उ पृ० । मद्ये "इक्षोः पक्वरसैः सिद्धः सीधुरित्यभिधीयते" इत्युक्ते मद्यभेदे च ।

सीधुगन्ध पु० सीधोरिव गन्धोऽस्य न इत् अनित्यत्वात् । बकुले ।

सीधुपुष्प पु० सीधुगन्धयुक्तं पुष्पमस्य । कदम्बे, बकुले च । धातक्यां स्त्री० ङीप् ।

सीधुरस पु० सीधोरिव रस आस्वादोऽस्य । आम्रवृक्षे ।

सीमन्त पु० सीम्नोऽन्तः शक० । (सिंति) केशान्तर्गतपद्धतौ कारे पदार्थे "षष्ठेऽष्टमे वा सीमन्त" इत्युक्ते गर्भिणिकां षष्ठे अष्टमे वा मासि कर्त्तव्ये संस्कारभेदे च ।

सीमन्तक न० सीमन्ते कायति कै—क । सिन्दूरे । नरकावासे पु० ।
सीमन्तिनी स्त्री० सीमन्त+अस्त्यर्थे इनि । योषिति नार्य्याम् ।
सीमन्तोन्नयन न० सीमन्तस्य उन्नयनं यत्र गर्भसंस्कारस्य अङ्गभूतकार्य्यम् । ऋतुयुक्ते गर्भसंस्कारककर्म्मभेदे ।
सीमन् स्त्री० सि—इमनिन् उ० न गुणादि। मर्य्यादायाम्, अवधौ, स्थितौ क्षेत्रे, अमरकोषे "सीम्नि पुंस्यथकोश्रुतः" इति सिद्धान्तकौमुदी । वेलायाञ्च । [अर्थे च ।
सीमा स्त्री० सीमन्+डाप् । मर्य्यादायां, ग्रामादेरन्तभागे, सीमन्‌प्र-
सीमाविवाद पु० सीमायां विवादः । अष्टादशसु विवादेषु मध्ये स्वनामख्याते विवादभेदे ।
सीर पु० सि-रक् पृ० । सूर्य्ये, अर्कवृक्षे, हले च ।
सीरध्वज पु० सीरो हलः तच्चिह्नितो ध्वजोयस्य । चन्द्रवंश्ये जनकनृपे।
सीरपाणि पु० सीरः हलः पाणौ यस्य । बलदेवे ।
सीरिन् पु० सीरोहलोऽस्त्यस्यायुधत्वेन इनि । बलरामे ।
सी(से)वन न० सिव-ल्युट् नि० वा दीर्घः । सेवने तन्तुसन्ताने (सेलाइयान) [कन् । तत्रार्थे ।
सीस न० सि—क्विप् पृ० सो·क कर्म० । (सीसे) धातुभेदे स्वार्थे
सीहुण्ड पु० सिहुण्ड+पृ० दीर्घः । स्नुहीवृक्षे, [अनायासे च ।
सु अव्य० सु डु । पूजायाम्, अतिशये, कष्टे, अनुमतौ, समृद्धौ,
सुकण्टका स्त्री० सुष्ठु कण्टकोऽस्याः । घृतकुमार्य्याम् ।
सुकण्डु स्त्री० सु+कण्डु+यक् डु । कण्डुरोगे (चुलकोना)
सुकन्द पु० शोभनः कन्दोऽस्य । कसेरौ, शोभनकन्दयुक्ते त्रि० संज्ञायां कन् । पलाण्डौ । [धरणीकन्दे, सूरणे, च । (ओल)
सुकन्दिन् पु० शोभनः हितकरः कन्दोऽस्त्यस्य इनि । वाराहीकन्दे,
सुकरा स्त्री० सुखेन क्रियते दुह्यते वा सु+कृ-खल् । सुशीलायां गवि । सुखसाध्ये त्रि० । [युक्ते त्रि० ।
सुकर्णक पु० सुष्ठु कर्ण इव कन्दोऽस्य कप् । हस्तिकन्दे । शोभनकर्ण-

सुकर्णिका स्त्री० सुष्ठु–कर्णाविव पर्णान्यस्याः कप् अत इत्वम् । मूषिकपर्ण्याम् । [(राजाकुमारा) ।
सुकर्णी स्त्री० सुष्ठु कर्णाविव पत्राण्यस्याः ङीप् । इन्द्रवारुण्याम्
सुकर्म्मन् पु० सुष्ठु कर्म्म यस्मात् ५ब० । विष्कम्भादिषु मध्ये अष्टमे योगे । शोभनकर्म्मवति त्रि० । प्रादि० । शोभने कार्य्ये न० ।
सुकल पु० सुष्ठु कल्यते ख्यायतेऽसौ सु+कल+घञ् । दातृत्वभोक्तृत्वादिना विख्याते जने सुन्दरमधुर.व्यक्तशब्दे च ।
सुकाण्ड पु० सुष्ठु काण्डोऽस्य । कारवेल्ले, सुन्दरकाण्डयुक्ते वृक्षे च काण्डीरलतायां स्त्री० स्वार्थे कन् अतइत्वम् । तत्रैव ।
सुकामा स्त्री० सुष्ठु काम्यतेऽसौ सु + कम–घञ् । त्रायमाणा लतायाम् । शोभनकामवति त्रि० ।
सुकाष्ठ न० सुष्ठु काष्ठं प्रा० । देवदारुकाष्ठे, शोभनकाष्ठे च ।
सुष्ठु काष्ठा स्त्री० सुष्ठु काष्ठं यस्याम् । काष्ठकदल्याम्, कटुकायाञ्च
सुकुन्दक पु० सु + कुदि–ण्वुल् । पलाण्डौ ।
सुकुन्दन न० सु+कुदि–ल्यु– । वर्बरे
सुकुमारा स्त्री० सु+कुमार–अच् घञ् वा । जातीपुष्पे, नवमालिकायाम्, कदल्यां, पृक्कायां, मालत्याञ्च । अतिकोमले त्रि० । प्रा० । सुन्दरकुमारायस्यान्विते त्रि० स्त्रियां ङीप्
सुकृत् त्रि० सु+कृ–क्विप् । पुण्यकारके, धार्म्मिके जने ।
सुकृत न० सु+कृ–क्त । पुण्ये, धर्म्मे, शुभे च । सुकर्म्मणि न० ।
सुकृति स्त्री० सु+कृ-क्तिन् । पुण्ये, मङ्गले, सत्कर्मणि च ।
सुकृतिन् त्रि० सुकृतमनेन इनि । पुण्यशीले, शुभयुक्ते, सत्कर्म्माशे च ।
सुकेसर पु० सुष्ठु केसरो यस्य । बीजपूरे ।
सुकोली स्त्री० प्रा० । क्षीरकाकोल्याम् ।
सुकोषक पु० सुष्ठु कोषोऽस्य कप् । कोषाम्रे ।
सुख सुखसम्पादने अद० चु० उभ० सक० सेट् । सुखयति ते असुसुखत्-त । कथोपदेशत्वान्न षत्वम् ।
सुख न० सुख-घञ् । पुण्यजन्ये गुणभेदे आनन्दे अनुकूलवेदनीये

यदनुभवाय चित्तमनुकूलं भवति तस्मिन् अर्थे। तच्च आत्मधर्म इति नैयायिकादयः। चित्तधर्म इति सांख्यादयः। सुखयतीति अच्, सुखमस्त्यस्य अच् वा। सुखकारके, सुखिनि च त्रि०।

सुखङ्करी स्त्री० सुखङ्करोति कृ-खच् मुम् च ङीप्। जीवन्ती वृक्षे- सुखकारके त्रि०।

सुखजात त्रि० जातं सुखमस्य परनिपातः। जातानन्दे "सुखजातः सुरापीत" इति भट्टिः।

सुखदोह्या स्त्री० सुखेन दोह्या दुह-यत्। क्लेशं विना दोहनीयायां गवि-सुखसंदोह्याप्यत्र।

सुखभाज् त्रि० सुखं भजते भज-ण्वि। सुखयुक्ते।

सुखमोदा स्त्री० सुखः सुखकरोमोदो यस्याः। शल्लकीवृक्षे।

सुखरात्रि स्त्री० सुखा सुखकरी रात्रिर्यस्याम्। आश्विनामावास्यायाम् दीपान्विताामावास्यायाम्।

सुखरात्रिका स्त्री० सुखा रात्रिर्यस्याः ५ब० कप्। दीपान्विताामावास्यायां-पूजायां लक्ष्म्याम् दीपान्विताकृत्यप्रक्रमे "पूजनीया तदा लक्ष्मीर्विज्ञेया सुखरात्रिकेति" ज्योतिर्वचनम्। कवभावे सुखरात्रिरप्यत्र "आक्रान्ता भूतले देवि! सुखरात्रि! नमोऽस्तु ते" इति दीपान्विताामावस्यायां लक्ष्मीपूजनमन्त्रः।

सुखवर्चक पु० सुखं वर्चयति उद्दीपयति वर्च णिच्-ण्वुल्। सर्जिकाक्षारे साजिमाटि।

सुखवर्चस् पु० सुखं सुखकरं वर्चो यस्य। सर्जिकाक्षारे (साजिमाटि)।

सुखवास पु० सुखः सुखकरो वासोगन्धो यस्य। (तरमुज) फलवृक्षे।

सुखवासन पु० सुखं सुखकरं वासनं गन्धो यस्य। सुखवासनगन्धद्रव्ये

सुखाधार पु० सुखानामाधारः। स्वर्गे। कर्म०। सुखकराधारे।

सुखायत पु० सुखेनायम्यते आ+यम-क्त। विनीताश्वे।

सुखायन पु० सुखेनायतेऽनेन अय-ल्युट्। सुविनीताश्वे।

सुखावह त्रि० सुखमावहति जनयति आ+वह-अच्। सुखजनके।

सुखाश पु० सुखा सुखकरी आशा यस्य। वरुणे। सुखेनाश्यते अश-

घञ् । राजतिमिषे ह्यर्थे । स्वार्थे कन् । सुखासने, (यथा) राजतिमियवत्वे च पु० । भावे घञ् । सुखभोजने ।

**सुखोत्सव** पु० सुखकर उत्सवो यस्मात् ५ब० । पत्यौ । कर्म० । आनन्दकारके, उत्सवे पु० । [(वाचिस्पत्य)] ।

**सुखोर्ज्जिक** पु० सुखस्य ऊर्ज्जः वृद्धिरस्मात् ठन् । सर्ज्जिकाक्षारे

**सुग** न० सुष्ठु गच्छति निर्याति गम-ड । विष्ठायाम् । सुगमे त्रि० ।

**सुगत** पु० सुष्ठु गच्छति जानाति गम-कर्त्तरि-क्त । बुद्धे ।

**सुगन्ध** न० सुष्ठु गन्धोऽस्य न इत् । गन्धतैले, शुक्लजीरके, नीलोत्पले, चन्दने, ग्रन्थिपर्णे च । रक्तशिग्रौ, गन्धके, चणके, भूतृणे च पु० । बहुगन्धद्रव्ययुक्ते आपणादौ त्रि० । [रक्तके, कर्कोट्याञ्च ।

**सुखगन्धक** पु० सुष्ठु गन्धोऽस्य कप् । रक्ततुलस्यां, गन्धके, न.म-

**सुगन्धपत्रा** स्त्री० सुगन्धं पत्रमस्याः । रुद्रजटायाम् ।

**सुगन्धभूतृण** न० कर्म० । गन्धतृणे,

**सुगन्धमूला** स्त्री० सुगन्धं मूलं यस्याः । स्थलपद्मिन्याम्, रास्नायाञ्च ।

**सुगन्धा** स्त्री० सुष्ठु गन्धोऽस्याः । रास्नायां मह्यां, बन्ध्याकर्कोट्याम्, रुद्रजटायां, नाकुल्यां, शतपुष्पायां, नवमालिकायां, स्वर्णयूथिकायां, पृक्कायां, शल्लक्यां, गन्धपत्राम्, अनन्तायां, तुलस्यां, मातुलुङ्गके च ।

**सुगन्धामलक** न० सुगन्धैः सर्व्वौषधिगणैर्युक्तमामलकम् । "सर्वौषधिसमायुक्ताः शुष्कास्त्वामलकत्वचः । यदा तदायं योगः स्यात् सुगन्धामलकाभिध" इत्युक्ते सर्वौषधियुक्ते शुष्के आमलककल्कके ।

**सुगन्धि** पु० सुष्ठु गन्धः इत्समा० । इष्टगन्धे सुरभौ । सुष्ठु गन्धोऽस्य । सुगन्धयुक्ते त्रि० एलवालुके, सूक्ष्मायां, कशेरौ, गन्धतृणे, धान्यके, पिप्पलीमूले च पु० स्वार्थे कन् । कह्लारे, गौरसर्षपे पुष्करमूले, उशीरे, सुरपर्णे, महाशालौ, गन्धके, तरम्के च ।

**सुगन्धिकुसुम** पु० सुगन्धि कुसुमं यस्य । पीतकरवीरे । सद्गन्धयुक्तपुष्पवति त्रि० ।

**सुगन्धित्रिफला** स्त्री० त्रयवयवं त्रिपिराकं वा फलं त्रिफलं सुगन्धि

मिफलमस्यस्याः बाहुल्येन कप्। जातीफले, पूगफले, ककुल-कालिका फले च।

सुगन्धिमूल न० सुगन्धि मूलमस्य। उशीरे (वेना)

सुगृहीतनामन् पु० सुगृहीतं प्रातःकाले स्मरणीयं नाम यस्य। प्रातःस्मरणीये पुण्यकीर्त्तौ जने।

सुग्रन्थि पु० सुष्ठु ग्रन्थिर्यस्य। चोरकद्रव्ये। सुन्दरग्रन्थिमति त्रि०।

सुग्रीव पु० सुष्ठु ग्रीवाऽस्य। श्रीकृष्णस्याश्वे, सूर्य्यपुत्रे वानरेश्वरे च। सुन्दरग्रीवायति त्रि०।

सुचक्षुस् पु० सुष्ठु चक्षुरिव फलमस्य। उडुम्बरे, शोभनलोचनयुक्ते त्रि०। प्रा०। शोभने नेत्रे न०।

सुचञ्चुका स्त्री० सुष्ठु चञ्चुरिव शिखा यस्याः कप्। महाचञ्चुशाके।

सुचरित्रा स्त्री० सुष्ठु चरित्रं यस्याः। पतिव्रतायां स्त्रियाम्। सच्चरित्रवति त्रि०। प्रा०। सच्चरित्रे न०।

सुचर्म्मन् पु० सुष्ठु चर्म्मेव वल्कलमस्य। भूर्जद्रव्ये सुन्दरचर्म्मवति त्रि०। प्रा०। सुन्दरे चर्म्मणि न०।

सुचित्रबीजा स्त्री० सुचित्रं विचित्रं बीजं यस्याः। विडङ्गायाम्।

सुचित्रा स्त्री० प्रा०। चिर्भटायाम्। विचित्रे त्रि०।

सुचिर प्रा०। अत्यन्तचिरकाले, बहुकाले च। बहुकालभवे त्रि०।

सुचिरायुस् पु० सुचिरं बहुकालिकमायुर्यस्य। देवे। बहुकालजीविनि त्रि०। [त्रि०।

सुचेलक पु० प्रा०। सूक्ष्मवस्त्रे। सुष्ठु चेलोऽस्य कप्। सूक्ष्मवस्त्रभृति

सुजल न० शोभनं जलं यस्मात् ५ब०। कमले। प्रा०। सुन्दरे जले न०

सुजाता स्त्री० सु+जन-क्त। तुवर्य्याम्। मनोज्ञे त्रि०।

सुजीवन्ती स्त्री० प्रा०। स्वर्णजीवन्त्याम्। [त्याग पः।

सुट्ट अनादरे चु० उ० सक० सेट्। सुट्टयति ते असुसुट्टत् त अणोपदेश-

सुत पु० स्त्री० सु–क्त। पुत्रे तनयायां। स्त्री० टाप् च दुराल्लभायाम्। उत्पन्ने, सम्पन्ने, निष्पीड़िते च त्रि०।

सु(सू)तक न०। सु-(सू)-भावे क्त सु(सू)तं जननं तस्माद् गतम्

कन् । अमरशेषे, शब्दरत्नावल्यां च “सुतके सूतके तथेति” शब्दश्च सूतकं तत्सूतकाद्दिति” च स्मृतिः । [जीवकवृक्षे ।

सुतजीवक पु० सुतं जीवयति धारणात् जीव-णिच् ण्वुल् । पुत्र-

सु(तनु(नू) पु० स्त्री० सुष्ठु तनुर्यस्याः वा ऊङ् । नार्याम् । “सुतनु ! वललनकुसुमाय मे” इतिमाघः ।

सुतपस् पु० सुष्ठु तपति सु+तप-असि । सूर्ये । सुष्ठु तपोऽस्य मुनौ पु० । सुन्दरतपोयुक्ते त्रि० मा० । सुन्दरे तपसि न० ।

सुतपादिका सुतः संहताः पादाः मूलान्यस्याः कप् च पाक्षात् कपि अत इत्वम् । हंसपदीलतायाम्

सुतराम् अव्य० सु+अतिशयेऽर्थे आम् तरप् । अवधारितार्थस्य अतिशयोचितत्वे “धेन्वा तदध्यासितकातराक्ष्या निरीक्ष्यमाणः सुतरां दयालुरिति” रघुः अत्र कातराक्ष्या धेन्वा दृश्यमानत्वेन दयालुत्वस्य अतिशयौचित्यम्

सुतश्रेणी स्त्री० सुतश्रेणीमिच्छति श्र-अण् ङीप् । देवदाली लतायाम् ।

सुतल पु० न० सुष्ठु तलं यत्र । पातालभेदे अट्टालिकाभेदे पु० ।

सुतहिबुकयोग पु० सुते हिबुके च योगः ग्रहविशेषस्य । “सुतहिबुकवियद्विलग्नधर्मेष्वमरगुरुर्यदि दानवार्चितो वा । यदशुभमपयाति तच्छुभं स्यात्” इत्युक्ते योगभेदे ।

सुतिक्त पु० मा० । (श्वेतपापड़ा) पर्पटे अत्यन्ततिक्ते त्रि० कोषातक्यां स्त्री० संज्ञायां कन् । पारिभद्रे निम्बे भूनिम्बे च पु० ।

सुतीक्ष्ण पु० मा० । शोभाञ्जनवृक्षे, श्वेतशोभाञ्जने, मुनिभेदे च “सुतीक्ष्णमुनिकेतन” मितिभट्टिः । अत्युग्रे त्रि० ।

सुतुङ्ग पु० मा० । नारिकेलवृक्षे ज्योतिषोक्ते ग्रहाणाम् उच्चराशिषु अंशभेदेषु च विस्तरो वाचस्पत्ये । अतिशयोच्चे त्रि०

सुतेजन पु० सु+तिज-ल्यु । धन्वनि, इषौ ।

सुतेजस् पु० सुष्ठु तेजोऽस्य । आदित्यभक्तायाम् । शोभनतेजोयुक्ते त्रि०

सुतैला स्त्री० सुष्ठु तैलं यस्याम् ७ब० । महाज्योतिष्मती लतायाम्

सु(सू)त्रामन् पु० सुष्ठु त्रायते सु+त्रै-मनिन् पृ० । इन्द्रे

सुत्वन् पु० सुनोतीति सु–क्वनिप् । व्रताभिषेके व्रतयज्ञार्थस्नाने सवने सोमनिष्पीडने च ।

सुद शोभायां सौ० प० सक० सेट् इदित् । सुन्दति असुन्दीत् । अषो-पदेशत्वान्न षः ।

सुदग्धिका पु० सुष्ठु दग्धमस्त्यस्य ठन् । [illegible] ।

सुदण्ड पु० सुष्ठु दण्डो यस्मात् ५ब० । वेत्रे

सुदण्डिका स्त्री० सुदण्डयति रोगान् ण्वुल् । गोरक्ष्याम् । (गोरक्ष-चाकुले) सुदण्डवत्यां स्त्रियाञ्च ।

सुदत् पु० सुष्ठु दन्तोऽस्य वयसि दत्रादेशः । शोभनदन्तयुक्तवयस्के-भजादौ युवत्यां स्त्रियां ङीप् । "सुदतीजनमज्जनार्पितमिति" नै-षधम् । वयो भिन्ने तु सुदन्त इत्येव नटादौ ।

सुदर्भा स्त्री० सु+दृभ–घञ् । इक्षुदर्भाख्ये । सुष्ठु दर्भो यत्र सुन्दर-कुशयुक्ते त्रि० ।

सुदर्शन पु० सुष्ठु दृश्यते कर्मणि युच् । विष्णुचक्रे (पञ्चगुलञ्च) लता-भेदे, इन्द्रपुरे च अमरावत्यां स्त्री० ङीप् ।

सुदल पु० सुष्ठु दलान्यस्य । क्षीरमोरटाख्ये । शालपर्ण्यां स्त्री० ।

सुदामन् पु० सुष्ठु ददाति दा–मनिन् । मेघे, पर्व्वतभेदे (इरावत् प-र्व्वत) गोपभेदे, समुद्रे, ऐरावते गजे, पुराणप्रसिद्धे श्रीकृष्णमित्रे विप्रभेदे च शोभनदातरि त्रि० । नदीभेदे स्त्री० तत्र वा ङीप् । सुदाम्नी ।

सुदाय पु० सुष्ठु दीयते सु+दा–घञ् । यौतकप्रसादादिना देये धने । सुष्ठु दायो यस्य । पितृप्रभृतौ ज्ञातौ ।

सुदि अव्य० सुष्ठु दीव्यति सु+दिव–डि । शुक्लपक्षे ।

सुदिन न० प्रादि० । प्रशस्तदिवसे । प्रशस्ते त्रि० ।

सुदिनाह न० सुदिनं प्रशस्तमहः टच् समा० । प्रशस्तदिवसे ।

सुदीर्घघर्म्मा स्त्री० सुदीर्घः अतिविस्तीर्णो घर्म्मो गुणविशेषो यस्याः के-वलत्वाभावात्नानिच् डाप् । अमलपर्ण्याम्

सुदूर त्रि० प्रादि० । अतिदूरे ।

सुद्युम्न पु० वैवस्वतमनुपुत्रे ।

सुधन्वन् त्रि० सुष्ठु धनुर्यस्य अनङ् । सुन्दरधनुर्द्धरे । राजविशेषे, अनन्ते नागे, विश्वकर्म्मणि च पु० ।

सुधर्म्मन् स्त्री० सु+धृ मनिन् । देवसभायाम् । कुटुम्बिनि पु० ।

सुधर्मा स्त्री० सुष्ठु धर्मो यस्याः तनिच् समा० वा डाप् । देवसभायाम् । गौ० ङीप् । सुधर्म्मीत्यप्यत्र ।

सुधा स्त्री० सुष्ठु धीयते पीयते अर्प्यते वाधे, धा वा क । अमृते । लेपद्रव्ये (कलिचुन) मूर्वायाम्, स्नुह्यां, गङ्गायाम्, इष्टकायां, विद्युति, रसे, जले, धात्र्याम् हरीतक्याम् मधुनि, शालपर्ण्योश्च ।

सुधांशु पु० सुधेवाह्लादकाः अंशवोऽस्य । चन्द्रे, कर्पूरे च । सुधाकरादयोऽप्यत्र ।

सुधांशुतैल न० सुधांशुना कर्पूरेण वासितं तैलम् । कर्पूरवासिते तैले ।

सुधांशुरत्न न० ६त० । मौक्तिके तस्य चन्द्रप्रियत्वात्तथात्वम् ।

सुधाङ्ग पु० सुधेयाप्यायनमङ्गमस्य । चन्द्रे, कर्पूरे च ।

सुधाजीविन् पु० सुधां लेपनद्रव्यमाजीवति आ+जीव-णिनि । पलगण्डे (राज) ।

सुधाधार पु० ६त० । चन्द्रे, कर्पूरे, अमृताधारपात्रे च ।

सुधानिधि पु० सुधा निधीयतेऽत्र नि+धा-कि । चन्द्रे, कर्पूरे च ।

सुधापयस् पु० सुधा लेपनद्रव्यमिव शुभ्रं पयो निर्यासोऽस्य । स्नुहीवृक्षे ।

सुधाभुज् पु० सुधां भुक्तवान् भुज-भूते क्विप् । देवे ।

सुधाभृ(सू)ति पु० सुधा भ्रियते पुष्यते सूयते वाऽनेन भृ-सू वा क्तिच् । यज्ञे, चन्द्रे, कर्पूरे च ।

सुधामय न० सुधात्मकं लेपनद्रव्यात्मकं वा प्राचुर्य्ये मयट् । राजभवने सौधे । अमृतवदाह्लादकवाक्यादौ त्रि० । स्त्रियां ङीप् ।

सुधामोदक पु० सुधेव मोदयति मुद णिच्-ण्वुल् । यवासशर्करायाम्, कर्पूरे च ।

सुधावर्षिन् पु० सुधां वर्षति वृष-णिनि । चन्द्रे, कर्पूरे, ब्रह्मणि च ।

सुधावास पु० ६त० । चन्द्रे, कर्पूरे च । सुधाका इव वासो गन्धो यस्याः । त्रपुसाम् ।

सुधासिन्धु पु० सुधामयः सिन्धुः । अमृतसमुद्रे । [(आवकिन) ।

सुधास्रवा स्त्री० सुधां स्रवति स्रु-अच् । रुदन्तीवृक्षे घण्टिकायाम्

सुधाहर पु० सुधां हरति हृ-अच् । गरुडे सुधाहारकादयोऽप्यत्र ।

सुधिति पु० स्त्री० सु+धा—क्तिच् न ह्यादेशः । कुठारे ।

सुधी पु० सुष्ठु धीर्यस्य । पण्डिते । सुष्ठु धीः । सुन्दरबुद्धौ स्त्री० । सुष्ठु ध्यायति सु+ध्यै क्विप् नि० । सुबुद्धियुक्ते त्रि० ।

सुधोद्भव पु० सुधया सह उद्भवति उद्+भू-अच् । धन्वन्तरिवैद्यराजे ५त० । हरितक्यां स्त्री० ।

सुनन्द न० सुष्ठु नन्दयति सु+नन्द-अच् । बलरामसुषले श्रीकृष्णपार्श्व-चरभेदे, राजगृहभेदे च । आनन्दजनके त्रि० गोरोचनायाम्, उमायाम्, उमासखीभेदे, नार्य्याम्, अर्कपत्रीवृक्षे च (इश्वरमूल) स्त्री०

सुनयन पु० सुष्ठु नयने यस्य । मृगे । नार्य्यां स्त्री० । शोभननेत्रयुक्ते त्रि० । [युक्ते त्रि० ।

सुनालक पु० सुष्ठु नालेन कायति कै—क । वकवृक्षे सुन्दरनाल-

सुनासिका स्त्री० सुष्ठु नासाऽस्यस्य ठन् । काकनासायाम् । प्रा० । सुन्दरनासिकायाम् स्त्री० ।

सुनासी(शी)र पु० सुष्ठु नासी(शी)रः अग्रगसैन्यं यस्य । इन्द्रे

सुनासी(शी)र्य्य पु० सुना(शी)सीरो देवताऽस्य यत् । यज्ञभेदे । छ । सुनासी(शी)रीयोऽप्यत्र । [स्वार्थे कन् तत्रैव ।

सुनिषण्ण न० सुष्ठु निषण्णं स्वप्नो यस्मात् ५ब० । (सुसुनि)शाके ।

सुनिष्टप्त त्रि० सु+निस्+तप-क्त यत्वम् । अत्यन्तोद्दीप्ते, तप्ते च

सुनीति स्त्री० सुष्ठु नीतिः यस्याः । ध्रुवमातरि, सुन्दरनीतियुक्ते त्रि० । प्रा० । सुन्दरनीतौ स्त्री० ।

सुनील न० प्रा० । मणिभेदे (नीलम) । दाडिमे, सुन्दरनीलवर्णे च पु० । तद्वति त्रि० । अतस्याम्, अपराजितायाम्, जरतीतृणे च स्त्री० ।

सुनीलक पु० सुनील इव इवार्थे कन्। नीलभृङ्गराजे, नीलाम्लाने, नीलवर्ले च।

सुन्द पु०। दैत्यभेदे, वानरभेदे च।

सुन्दर त्रि० सु+उन्द-अरन्-शक०। मनोहरे। स्त्रियां ङीप्। सा च उत्तमस्त्रियां त्रिपुरसुन्दर्यादिदेव्याञ्च। कामदेवे, वृक्षभेदे च (सुंदरि) पु०।

सुपक्व पु० सुन्दरं पक्वमस्य पच-क्त तस्य वः। शोभनाम्रे सुन्दरपरिणते त्रि०

सुपच त्रि० सुकरं यत् सुखेन पच्यते पच-खलर्थे क। लघुपाके द्रव्यमात्रे।

सुपत्र न० सुष्ठु पत्रमस्य। तेजपत्रे आदित्यपत्रे पु० सुन्दरपत्रयुक्ते त्रि० रुद्रजटायां, शतावर्य्यां, पालङ्क्यां शालपर्ण्याञ्च स्त्री०।

सुपत्रक पु० सुष्ठु पत्रमस्य स्वार्थे कन्। शोभाञ्जनवृक्षे जतुकायां स्त्री०। अत इत्त्वम्।

सुपथ पु० सुष्ठु पन्थाः प्रा० अच् समा०। सद्वर्त्मनि सदाचारे च सुष्ठु पन्था यत्र अच् समा०। सुन्दरपथयुक्ते त्रि०।

सुपथिन् पु० प्रा० समासान्ताभावः। सत्पथे।

सुपद्मा स्त्री० सुष्ठु पद्यते पद-म। वचायाम्। पद्मिन्यां स्त्री०।

सुपर्ण पु० सुष्ठु पर्णं पक्षं पत्रो वा यस्य। गरुडे सुन्दरपर्णयुक्ते त्रि० नागकेशरे पु०। बहुव्रीहौ स्वार्थे कप्। आरग्वधवृक्षे, सप्तच्छदवृक्षे, गरुडे च। शालपर्ण्यां, रेणुकायां, पलाश्यां, स्वर्णजीवन्त्याञ्च स्त्री० कापि अत इत्त्वम्।

सुपर्णकेतु पु० सुपर्णो गरुडः केतुर्यस्य। विष्णौ।

सुपर्णी स्त्री० सुष्ठु पर्णान्यस्याः गौ० ङीष्। पद्मिन्यां, गरुडमातरि च।

सुपर्णीतनय पु० ६त०। गरुडे। [पर्व्वणि न०।

सुपर्वन् पु० सुष्ठु पर्व यस्य। देवे, वाणे, वंशे, धूमे च प्रा०। सुन्दरे

सुपर्वा स्त्री० सुष्ठु पर्व यस्याः डाप्। श्वेतदूर्वायाम्।

सुपाक्य न० सुपाकमर्हति यत्। विड्लवणे।

सुपार्श्व पु० सुष्ठु पार्श्वोऽस्य। प्लक्षवृक्षे (पाकुड़) वृक्षभेदे, सम्पातिसुते विहगभेदे च स्वार्थे कन्। गर्द्दभाण्डवृक्षे पु० सुन्दरपार्श्वान्विते त्रि०।

सुपिच्छिला स्त्री॰ प्रा॰ । ज्योतिष्मत्यां, जीवन्त्याञ्च । [लि॰ ।

सुपीत न॰ प्रा॰ । गर्ज्जरे (गाजर) । सुन्दरपीतवर्णे पु॰ । तद्वति

सुपुट पु॰ सुष्ठु पुटमस्य । कोलकन्दे, विष्णुकन्दे च ।

सुपुत्रिका स्त्री॰ सुष्ठु पुत्रः पक्षः यस्याः कप् अत इत्त्वम् । जतुका-यान् (तेलापोका) ।

सुपुष्करा स्त्री॰ सुष्ठु पुष्करमस्यास्यः अच् । स्थलपद्मिन्याम् ।

सुपुष्प न॰ प्रा॰ । लवङ्गकुसुमे, प्रपौण्डरीके, तूले, स्त्रीणां रजसि च । 'सुपुष्पैराकीर्णं कुसुमधनुषो मन्दिरमि'ति श्यामास्तवः । सुष्ठु पुष्पमस्य । (पालुदामान्दार) वृक्षे । कप् । पाटलायां स्त्री॰ अत इत्त्वम् । [पुष्पायाम्, मिश्रेयायां, द्रोणपुष्प्याञ्च ।

सुपुष्पी स्त्री॰ सुष्ठु पुष्पमस्याः गौ॰ ङीप् । श्वेतापराजितायां, शत-

सुपूर पु॰ सुष्ठु पूर्य्यते सु+पूर-क । वीजपूरे ।

सुपूरक पु॰ सुष्ठु पूरयति पूर-ण्वुल् । वकवृक्षे ।

सुप् स्त्री॰ व्याकरणपरिभाषिते सुप्प्रभृतौ प्रत्यये । [निद्रिते त्रि॰ ।

सुप्त न॰ स्वप-भावे क्त संप्रसारणम् । निद्रायां, शयने च । कर्त्तरि क्त ।

सुप्तजन पु॰ सुप्तो जनो यत्र । अर्द्धरात्रे ।

सुप्ति स्त्री॰ स्वप-क्तिन् । शयने, निद्रायाम्, स्वप्ने च 'करोति सुप्ति-र्जनदर्शनातिथिमि'ति नैषधम् ।

सुप्रतिभा स्त्री॰ सुष्ठु प्रतिभा यस्याः ५ब॰ । सुरायाम् प्रा॰ । उज्ज्वलबुद्धौ । ६ब॰ । तद्वति त्रि॰ । [पादके छन्दोभेदे स्त्री॰

सुप्रतिष्ठा स्त्री॰ प्रा॰ । प्रशंसायाम् । ६ब॰ तद्वति त्रि॰ । पञ्चाक्षर-

सुप्रतीक पु॰ सुष्ठु प्रतीकं यस्य । ऐशानकोणस्थिते दिग्गजे शिवे, कामे च सुन्दराङ्गे त्रि॰ । प्रा॰ । सुन्दरेऽङ्गे न॰ ।

सुप्रभा स्त्री॰ सुष्ठु प्रभा यस्याः । अग्निजिह्वाभेदे । सुन्दरदीप्तिमति त्रि॰ । प्रा॰ । शोभनदीप्तौ स्त्री॰ ।

सुप्रभात न॰ प्रा॰ । शुभसूचकप्रातःकाले, तत्र पाठ्यमाङ्गल्यवाक्ये च ।

सुप्रयुक्तशर पु॰ सुप्रयुक्तः शरो येन । शीघ्रहस्ते वाणमोचनाभ्यासपाटवयुक्ते ।

सुप्रयोगविशिख पु० सुष्ठु प्रयोगो निक्षेपो यस्य तादृशो विशिखो यस्य। नीलकण्ठे बाणमोक्षणेनोपलाद्युपपाटययुक्ते।

सुप्रलाप पु० सु+प्र+लप-घञ्। सुवचने।

सुप्रसन्न पु० सु+प्र+सद-क्त। कुबेरे। प्रसादयुक्ते त्रि०। संज्ञायां कन्। कृष्णार्जके पु०। [युक्ते त्रि०।

सुप्रसरा स्त्री० सु+प्र+सृ-अच्। प्रसारिण्यां लतायाम् विस्तार-

सुप्रसाद सुखेनानायासेन प्रसादो यस्य। शिवे। प्रा०। सुन्दरप्रसन्नतायाम्।

सुफल पु० सुष्ठु फलमस्य। दाडिमे, बदरे, मुद्गे, कर्णिकारे, कपित्थे च। सुन्दरफलवति त्रि०। इन्द्रवारुण्यां कुष्माण्ड्यां, कदल्यां, कपिलद्राक्षायाञ्च स्त्री०।

सुबन्ध पु० सुखेन बध्यते असौ बन्ध-घञ्। तिलवृक्षे।

सुभग सुष्ठु भगः माहात्म्यादिः यस्य। चम्पके, अशोके, रक्ताम्लाने, टङ्कणे च। सुदृश्ये, प्रिये, शोभनैश्वर्ययुक्ते च त्रि०। कैवर्तीमुस्तायां, शालपर्ण्याम्, हरिद्रायां, नीलदूर्वायां, तुलस्यां, प्रियङ्गौ, कस्तूर्यां, स्वर्णकदल्यां, वनमल्लिकायां, पतिप्रियायां स्त्रियां च स्त्री०।

सुभगम्भावुक त्रि० असुभगः सुभगोभवति भू-च्व्यर्थे खुकञ् मुम् च। प्रियम्भविष्णौ।

सुभगासुत पु० सुभगायाः पतिप्रियायाः सुतः। सौभागिनेये।

सुभङ्ग पु० सुखेनानायासेन भज्यते निःसारत्वात् भन्ज-घञ्। नारिकेलवृक्षे।

सुभट पु० प्रा०। सुन्दरयोद्धरि।

सुभद्र पु० सुष्ठु भद्रं यस्मात्। विष्णौ। दुर्व०। शोभनमङ्गलवति त्रि०। प्राणालतायाम् श्रीकृष्णस्य भगिन्याञ्च स्त्री०। कप्। देवरथे, बिल्ववृक्षे च पु०। [पाचनम्। त्रायन्तीलतायाम्।

सुभद्राणी स्त्री० सुभद्रं सुमङ्गलमानयति आ+नी-ड गौ० ङीष्।

सुभद्रेश पु० दुर्ग०। अर्जुने। सुभद्रापत्यादयोऽप्यत्र।

सुभाञ्जन पु० सुष्ठु भाति भा-क कर्म० । शोभाञ्जनवृक्षे ।

सुभिक्ष त्रि० सुखेन लभ्या भिक्षा यत्र भक्ष्याद्याधिक्यात् । प्रचुरान्नवति
कालादौ । [कान्तायाम् ।

सुभिक्षा स्त्री० सुष्ठु भिक्ष्यते याच्यतेऽसौ सु+भिक्ष-अ । धात्र सुप्रि-

सुभीरक पु० सुष्ठु भीः सुभीः तामीरयति विरहिणाम् ईर-ण्वुल् ।
पलाशवृक्षे ।

सुभूति पु० सुष्ठु भवति । सु भू-क्तिच् । पण्डितभेदे । प्रा० । सुन्द-
रविभूतौ स्त्री० इव० । तद्वति त्रि० । विल्ववृक्षे पु० ।

सुभृश न० सुष्ठु भृशम् । अतिशये दार्ढ्ये । तद्वति त्रि० । [त्रि० ।

सुभ्रु(भ्रू)स्त्री० सुष्ठु भ्रूर्यस्याः वा ऊङ् । नार्य्याम् सुन्दरभ्रुयुक्ते ।

सुम न० सुष्ठु मीयतेऽदः सु-मा-घञर्थे क । पुष्पे । चन्द्रे, कर्पूरे,
नभसि च पु० ।

सुमङ्गला स्त्री० सुष्ठु मङ्गलं यस्याः ५ब० (माकङ्हाता) हर्षे सुम-
ङ्गलयुक्ते त्रि० स्त्रियां ङीप् । 'सुमङ्गली इयं वधू'रिति श्रुतिः

सुमदन पु० सुष्ठु मदयति कोकिलान् मद-णिच् ल्यु आम्रवृक्षे ।

सुमधुर न० प्रा० । अत्यन्तप्रियवाक्ये; सान्त्ववाक्ये च । अतिमधुर
रसयुक्ते त्रि० ।

सुमन पु० सुष्ठु मन्यते मन-अप् । गोधूमे, धुस्तूरे च ।

सुमनःपत्रिका स्त्री० सुमनसः जात्याइव पत्रमस्याः कप् अत
इत्वम् । जातीपत्रिकायाम् । [जातीफले ।

सुमनःफल पु० सुष्ठु मनो यस्मात् तादृक् फलमस्य । कपित्थे, इदं० ।

सुमनस् न० सुष्ठु मनो यस्मात् यस्य वा । पुष्पे । बव० इत्यन्ये 'किं
सेव्यते सुमनसां मनसापि गन्ध इति' रसगङ्गाधरः । मालत्यां
स्त्री० । प्रशस्तचित्तयुक्ते त्रि० । प्रा० । प्रशान्ते मनसि न० ।

सुमना स्त्री० सुष्ठु मन्यते मन-अप् । मालतीवृक्षे ।

सुमनोरजस् न० इत० । पुष्पधूलौ परागे ।

सुमित्रा स्त्री० लक्ष्मणमातरि दशरथपत्नीभेदे । सुन्दरमित्रयुक्ते त्रि०

सुमुख पु० सुष्ठु सुखमस्मात् यस्य वा । गणेशे, पण्डिते नागभेदे,

नागभेदे, चित्ताङ्के, बर्बरे, वनबर्व्वरिकायाञ्च। सुन्दरवदने, मनोहरे च त्रि०। स्त्रियां ङीप्।

**सुमूल** पु० सुष्ठु मूलमस्य। श्वेतशोभाञ्जने। शालपर्ण्यां पृश्निपर्ण्यां च स्त्री०। सुन्दरमूलयुक्ते त्रि०। संज्ञायां कन्। गर्ज्जरे न०।

**सुमेखल** पु० सुष्ठु मेखला यस्मात् ५ब०। मुञ्जतृणे, ६ब०। सुन्दरमेखलान्विते त्रि०।

**सुमेधस्** स्त्री० सुष्ठु मेधा यस्याः ५ब० असिच्। ज्योतिष्मत्यां लतायाम् ६ब०। सुन्दरमेधायुक्ते त्रि०।

**सुमेरु** पु० प्रा०। पर्वतभेदे, जपमालासीमास्थगुटिकायाञ्च।

**सुम्भ(म्ह)** पु० सुम्भ-अच् पृ०। देशभेदे। तद्देशवासिनि पु०ब०व०।

**सुयामुन** पु० यमुनाया इदम् सुष्ठु यामुनं प्रियत्वेनास्त्यस्य अच्। विष्णौ, वत्सराजे, प्रासादविशेषे, पर्वतभेदे, मेघभेदे च।

**सुयोधन** पु० सुखेन युध्यतेऽसौ सु+युध-युच्। धृतराष्ट्रराजपुत्रे दुर्योधने।

**सुर** पु० सुष्ठु राति ददात्यभीष्टं सु+रा-क। देवे, सूर्य्ये, पण्डिते च।

**सुरकृता** स्त्री० ३त०। गुडूच्याम्। देवनिर्मिते त्रि०।

**सुरक्तक** पु० सुरक्त इव कायति कै-क। कोषाम्रे, स्वर्णगैरिके च।

**सुरगुरु** पु० ६त०। बृहस्पतौ।

**सुरग्रामणी** पु० सुराणां ग्रामणीः नेता। इन्द्रे।

**सुरङ्ग** न० सुष्ठु रङ्गो यस्मात् ५ब०। हिङ्गुले, (वर्णकमाटि) भेदे। प्रा०। नागरङ्गे, गर्त्तभेदे च।

**सुरङ्गधातु** पु० सुष्ठु रङ्गो रञ्जनं यस्मात् कर्म०। गैरिके।

**सुरङ्गिका** स्त्री० सुष्ठु रङ्गो रञ्जनं यस्याः ५ब०, कप् अत इत्वम्। मूर्वायाम्।

**सुरङ्गी** स्त्री० सुष्ठु रङ्गो यस्याः ५ब० गौ० ङीष्। काकनासायाम्, रक्तशोभाञ्जने च।

**सुरज्येष्ठ** पु० ७त०। चतुर्मुखे ब्रह्मणि।

**सुरञ्जन** पु० सुरञ्जयति सु+रन्ज-णिच्-ल्यु। गुवाके।

**सुरत** न० सु+रम-भावे क्त। स्त्रीपुंसयोः सङ्गमरूपे रमणभेदे सु-रम-कर्त्तरि क्त। अत्यन्तरते त्रि०।

सुरता स्त्री० सुराणां समूहः भावो वा तः, तल् वा । देवसमूहे, देवत्वे च । सु+रम-क्त । अत्यन्तरतायां स्त्रियाम् ।

सुरथ पु० सुष्ठु रथोऽस्य । चन्द्रवंश्ये नृपभेदे 'सुरथो नाम राजाऽभूदि'ति चण्डी सुन्दररथयुक्ते त्रि० । [दारुवृक्षे ।

सुरदारु न० सुरप्रियं सुरलोकपर्य्यन्तस्थितं वा दारु । देव-

सुरदीर्घिका स्त्री० सुराणां दीर्घिकेव । गङ्गायाम् । सुरवाप्यादयोऽप्यत्र ।

सुरदुन्दुभी स्त्री० सुराणां दुन्दुभीवाह्लादकत्वात् । तुलस्याम्

सुरद्रुम पु० सुरप्रियो द्रुमः । देवदारुणि, देवनले च ।

सुरद्विष् पु० सुरान् द्वेष्टि द्विष-क्विप् । असुरे देवद्वेष्टरि त्रि० ।

सुरधनुस् न० ६त० । इन्द्रधनुषि ।

सुरधूप पु० सुरप्रियो धूपः । राले (धुना) ।

सुरन(ध)दी स्त्री० ६त० वा णत्वम् । गङ्गायाम् सुरधुन्यादयोऽप्यत्र ।

सुरनाल पु० सुरप्रियं नालमस्य । देवनालवृक्षे ।

सुरपति पु० ६त० । इन्द्रे सुरेशादयोऽप्यत्र ।

सुरपथ पु० सुराणां पन्था यत्र अच् समा० । आकाशे ।

सुरपर्ण न० सुरप्रियं पर्णमस्य । सौगन्धिके ओषधिभेदे । [नागे ।

सुरपर्णिक पु० स्त्री० । सुरप्रियं पर्णं शाक० तदस्त्यस्य ठक् । सुरपु-

सुरपर्णी स्त्री० सुरप्रियं पर्णं यस्याः ङीष् । पलाशीवृक्षे ।

सुरपादप पु० ६त० । कल्पवृक्षे सुरवृक्षादयोऽप्यत्र ।

सुरपुन्नाग पु० सुरप्रियः पुन्नागः । पुन्नागभेदे ।

सुरपुरी स्त्री० ६त० । अमरावत्यां सुरनगर्य्यादयोऽप्यत्र ।

सुरप्रिय पु० ६त० । अगस्त्यवृक्षे, बृहस्पतौ, इन्द्रे च । जात्यां,स्वर्ण-कदल्याञ्च स्त्री० ।

सुरभि न० सु+रभ-इन् । स्वर्णे, सुन्दरे, गन्धाश्मनि च । चम्पके, जातीफलवृक्षे, वसन्ते ऋतौ, "स सुरभिं सुरभिं सुमनोभरैरिति माघः । सुगन्धे, शमीवृक्षे, कदम्बे, कणगुग्गुलौ, गन्धतृणे, बकुलवृक्षे, राले, चैत्रे मासि, पण्डिते, गन्धफले च पु० । शल्लक्यां, रुद्रजटायां, मातृकाभेदे, गवि, सुरायां, नवमालिकायां, तुवर्ष्यां,

पृथिव्यां, गवां मातरि च स्त्री० वा ङीप्। धीरे, सुगन्धयुक्ते, मनोहरे, विख्याते, च त्रि० ।

सुरभिका स्त्री० सुरभि+स्वार्थे कन्। (चाणाकला)। हर्षे ।

सुरभित्वच् स्त्री० सुरभिः त्वक् यस्याः। स्थूलैलायाम् ।

सुरभिदारु पु० सुरभि दारु यस्य। सरलद्रुमे ।

सुरभिपत्त्रा स्त्री० सुरभि पत्त्रमस्याः। जम्बूद्रुमे, राजजम्बूद्रुमे च ।

सुरभिवल्कल न० सुरभि वल्कलमस्य। गुडत्वचि (दारचिनि)।

सुरभिस्रवा स्त्री० सुरभिः स्रवो निष्यन्दो यस्याः। शल्लक्याम् ।

सुरमृत्तिका स्त्री० सुरप्रिया मृत्तिका। तुवर्याम्। (वर्णकमाटि)।

सुरमेदा स्त्री० सुरप्रियो मेदोऽस्याः। महामेदायाम् ।

सुरर्षि पु० सुरप्रियः ऋषिः। नारदादिषु ऋषिषु ।

सुरलता स्त्री० सुरप्रिया लता। महाज्योतिष्मत्याम्। [योऽप्यत्र।

सुरलोक पु० सुराणां लोकः वासस्थानादिः। स्वर्गे। सुरभुवनाद-

सुरवर्त्मन् न० सुराणां वर्त्म यत्र। आकाशे।

सुरवल्लभा स्त्री० ६त०। श्वेतदूर्वायाम् ।

सुरवल्ली स्त्री० सुरप्रिया वल्ली। तुलस्याम्। [तयोऽप्यत्र।

सुरवैरिन् स्त्री० ६त०। असुरे सुरविरोधिनि त्रि०। सुररिपुप्रभृ-

सुरस न० सुखेन रस्यते सु+रस अच्। बोले, त्वचे, गन्धतृणे, सिन्धुवारे भोचरसे च। प्रा० स्वादौ रसे। ६ब०। सुस्वादुरसयुक्ते त्रि० तुलस्यां पु० स्त्री०। रास्नायां, नागमातरि, निर्गुण्ड्याम्, ब्राह्म्यां, महाशतावर्य्यां च स्त्री०। [भेदे च।

सुरसुन्दरी स्त्री० सुरप्रिया सुन्दरी। मेनकाद्यप्सरसि, योगिनी-

सुरा स्त्री० सुर-क सु-रक् वा। मद्ये, चषके च।

सुराकर पु० सुराया आकरः। मद्योत्पत्तिस्थाने।

सुराचार्य्य पु० ६त०। वृहस्पतौ। [सुन्दरराजान्विते त्रि०।

सुराजक पु० सुष्ठु राजते राज-ण्वुल्। भृङ्गराजे। ६ब० कप्।

सुराजन् पु० सुष्ठु पूजितो राजा न टच्। सुन्दरे राजनि। ६ब०। सुन्दरराजयुक्ते देशे त्रि०।

सुराजीविन् पु० सुरां सुराक्रयादनमाजीवति आ+जीव णिनि । शौण्डिके । इति स्मृतिः ।

सुराप त्रि० सुरां पिबति पा-क । मद्यपानकारके 'सुरापः प्राज्ञवदन्तक'

सुरापगा स्त्री० ६त० । गङ्गायाम् । सुरतरङ्गिण्यादयोऽप्यत्र ।

सुरापान न० सुरा पीयतेऽनेन पा-करणे ल्युट् । अपदंशे (चाटनी) सुरायाः पानं येषां यत्वम् । प्राच्यदेशस्थे जने पु० ।

सुराभाग पु० सुराया भागः अग्रभागः । सुरामण्डे ।

सुरामण्ड पु० ६त० । सुराया अग्रभागे ।

सुरारिहन्तृ पु० सुराणामरिं हन्ति हन-तृच् । विष्णौ ।

सुरार्ह न० सुरान् देवानर्हति अर्ह-अण् । हरिचन्दने ।

सुराष्ट्र पु० ६ब० देशभेदे (सुरट) ।

सुराष्ट्रज न० स्त्री० सुराष्ट्रदेशे जायते जन-ड । तुवरिकायाम् । कृष्णमुद्गे, विषभेदे च पु० । तद्देशजातमात्रे त्रि० ।

सुराह्व पु० सुरपूर्व्विका आह्वा यस्य सुरान् आह्वयति गन्धेन आ+ह्वे-क वा । देवदारुवृक्षे, मरुवके, हरिद्राहृक्षे च ।

सुरुङ्ग पु० सु+रुज-अच् पृ० । शोभाञ्जनवृक्षे ।

सुरूप न० सुन्दरं रूपमस्य । तूले । सुन्दररूपवति त्रि० पण्डिते पु० । शालपर्ण्यां भार्य्यामु च स्त्री० । प्रा० । सुन्दरे रूपे न० ।

सुरूहक पु० सु+रुह-कुन् पृ० । गर्द्दभाण्डे । [स्त्री० ।

सुरेज्य पु० इज्यते पूज्यते यज-क्यप् ६त० । वृहस्पतौ । तुलस्यां

सुरेन्द्र पु० सुराणामिन्द्रः श्रेष्ठः राजा वा । इन्द्रे सुरराजे ।

सुरेभ न० सु+रेभ अच् । रङ्गे । (रांग) ।

सुरेवट पु० सुष्ठु रेवटः सु+रेव-अटन् वा । राजपूगे ।

सुरेश्वर पु० सुराणामीश्वरः । रुद्रे, इन्द्रे च । स्वर्गगङ्गायां, दुर्गायाञ्च स्त्री० ङीप् ।

सुरेष्ट पु० ६त० । शाले, सुरपुन्नागे, शिवमल्ल्याम् च माल्यां स्त्री० ।

सुरोत्तम पु० सुरेषूत्तमः । सूर्य्ये, देवश्रेष्ठे त्रि० ।

सुरोत्तर पु० सुरेषु अ.पूजनेषूत्तरः श्रेष्ठः । चन्दने ।

सुरोद पु० सुरेव उदकमस्य उदादेशः सुराससमुद्रे ।
सुलभ त्रि० सुखेन लभ्यते सु+लभ-खल् । अनायासलभ्ये । नागपञ्च्यां
भूमपञ्चाम्बाञ्च स्त्री० ।
सुलोचन पु० सुष्ठु लोचनमस्य । हरिणे । सुन्दरनेत्रयुक्ते त्रि० । [त्रि०
सुलोमशा स्त्री० सुलोमानि सन्त्यस्याः श । काकजङ्घाख्ये सुलोमयुक्ते
सुलोमा स्त्री० सुष्ठु लोमान्यस्याः ङीप् । ताम्रवल्ल्याम्, मांसच्छदायाञ्च
सुलोहक न० प्रा० । पित्तले । [स्त्रियां ङीप् तत्र नत्र ।
सुलोहिता स्त्री० प्रा० । अग्निजिह्वाभेदे । सुरक्तवर्णे पु० तद्वति त्रि०
सुवक्त्र पु० सुष्ठु वक्त्रं सेवनात् यस्मात् । वनवर्वर्य्याम् ह्व० । सुन्दरान-
नयुक्ते त्रि० । प्रा० । सुन्दरे मुखे न० ।
सुवचस् त्रि० सुष्ठु वचोऽस्य । वाग्मिनि ।
सुवर्चक पु० सुष्ठु वर्चयति सु+वर्च्च-णिच्-ण्वुल् । सर्जिकाक्षारे ।
सुवर्चला स्त्री० सुष्ठु वर्चयति वर्च-णिच्-कलच् । सूर्य्यभार्य्यायाम्,
अतस्याम्, आदित्यभक्तायां, ब्राह्म्याञ्च । देशभेदे पु० ।
सुवर्चिक पु० सुवर्च्च+अस्त्यर्थे ठन् । सर्ज्जिकाक्षारे । जतुकायां स्त्री०
सुवर्चिन् पु० सु+वर्च्च-णिच् णिनि । सर्ज्जिकाक्षारे ।
सुवर्ण न० सुष्ठु वर्णोऽस्य । स्वनामख्याते धातुभेदे, हरिचन्दने, स्वर्ण-
गैरिके, धने, नागकेशरे । 'कर्षं सुवर्णस्य सुवर्णसंज्ञ' मित्युक्ते
कर्षमिते काञ्चने च यज्ञभेदे, धुस्तूरे कणगुग्गुलौ च पु० । सुष्ठु
वर्णो रूपमक्षरं वास्य । सुरूपे सुन्दराक्षरयुक्ते च त्रि० । 'न सुव-
र्णमयी तनुः परं ननु वागपि तावकी तथे'ति नैषधम् ।
सुवर्णक न० सुवर्णमिव इवार्थे कन् । पित्तले, सुष्ठु वर्णोऽस्य कप् ।
सुन्दरवर्णयुक्ते त्रि० । [(चांपाकला) ।
सुवर्णकदली स्त्री० सुष्ठु वर्णो यस्याः कर्म० । स्वर्णवर्णकदल्याम्
सुवर्णकार पु० सुवर्णं सुवर्णमयभूषणादि करोति कृ अण् । (सेकरा)
स्वर्णकारे जातिभेदे ।
सुवर्णगैरिक सुवर्णमिव पीतं गैरिकम् । (वर्णकमाटि) गैरिकभेदे ।
सुवर्णनकुली स्त्री० सुवर्णमिव पीता नकुली । महाज्योतिष्मत्याम् ।

सुवर्णप्रसव न० सुवर्णस्य प्रसव इव । एलवालुके ।
सुवर्णवणिज् पु० सुवर्णस्य वणिक् क्रयविक्रयादिकर्त्ता । जातिभेदे (सोनारवेने) स्वर्णवणिक्प्रभृतयोऽप्यत्र ।
सुवर्णयूथी स्त्री० सुवर्णमिव पीता यूथी । पीतवर्णयूथिकायाम् ।
सुवर्णवर्णा स्त्री० सुवर्णस्येव वर्णो यस्याः । हरिद्रायाम् स्वर्णतुल्य-वर्णयुक्ते त्रि० ।
सुवर्णा स्त्री० सुष्ठु वर्णो यस्याः । कालागुरुणि, वाट्यालके च । स्वर्ण-जीर्ण्यां, हरिद्रायाम्, आखुकर्ण्यां च स्त्री० ङीप् ।
सुवयस् स्त्री० सुष्ठु वयोऽस्याः । प्रौढायां स्त्रियाम् ।
सुवल्लि (ल्ली) स्त्री० प्रा० । सोमराजीलतायाम् ।
सुवहा स्त्री० सुखेन उह्यते वायुनाऽसौ सु+वह-खल् । शेफालिकायां, रास्नायां, गोधापद्याम्, एलापर्ण्याम्, शल्लक्यां, वीणायां, त्रिवृ-तायाम्, रुद्रजटायां, हंसपद्यां, गन्धनाकुल्यां, मुसल्यां, नील-सिन्धुवारे च । सुखवाह्ये त्रि० ।
सुवास पु० सुष्ठु वासः । सद्गन्धे सुखनिवासे च । ६ब० । सद्गन्धयुक्ते, सन्निवासान्विते च त्रि० ।
सुवासिनी स्त्री० सुखेन वसति सु+वस-णिनि । चिरण्ट्यां चिरं पितृकुलवासिन्याम् स्त्रियाम् ।
सुविद् पु० सुष्ठु वेत्ति विद्-क्विप् । पण्डिते । सुष्ठु विद्यते लभ्यते विद्-लाभे क्विप् । गुणाढ्यायां स्त्रियाम् ।
सुविद पु० सु+विद-क । कञ्चुकिनि ।
सुविदत् पु० सुविदं गुणाढ्यां स्त्रियमतति अत-क्विप् । नृपे ।
सुविदत्त पु० सुविदत्तं राजानं लाति ला-क । अन्तःपुरेऽध्यक्षे, कञ्चुकिनि च । सुविदत्ता राज्ञा लीयते ला-क । अन्तःपुरस्थना-र्याम् स्त्री० । [त्रि० ।
सुविनीता स्त्री० सु+वि+नी-क्त । सुशीलायां गवि । सुविनययुक्ते
सुवीज पु० सुष्ठु वीज्यतेऽसौ वीज-क । (खसखसे) वृक्षभेदे ६ब० । सुन्दरवीजवति त्रि० । प्रा० । सुन्दरे वीजे न० ।

सुवीरक न० सु+वीर-ण्वुल् । सौवीराञ्जने ।

सुवीराम्ल न० सुवीरयति वीर्य्यान्वितं करोति सु+वीर–अच् कर्म० ।
काञ्जिके ।। [उत्तमे वीर्य्ये न० ।

सुवीर्य्य न० सुष्ठु वीर्य्यं यस्मात् । वदरीफले । वनकार्पासां स्त्री०, शा०

सुवृत्त पु० सुष्ठु वृत्तः वर्त्तुलः । शूरणे (ओल) सुन्दरवृत्तान्विते त्रि०
शतपत्त्र्यां, काकल्यां द्राक्षायां च स्त्री० । [प्तव्याम् ।

सुवेगा स्त्री० सुष्ठु वेगो वायुनिस्सारणवेगो यस्याः ५ त० । महाज्योति

सुवेल पु० सुगता वेला समुद्रकूलं येन । त्रिकूटपर्व्वते । सुष्ठु वेला
मर्य्यादा स्थितिः यस्य । शान्ते, प्रणते च त्रि० ।

सुवेश पु० सुखेन विश्यते उपभुज्यते सु+विश घञ् । श्वेतेक्षौ सुन्दर-
वेशयुक्ते त्रि० ।

सुव्रता स्त्री० सुष्ठु व्रतं नियमो यस्याः । सुशीलायां गवि सुन्दर-
व्रतयुक्ते त्रि० । [सुखव्रति त्रि० ।

सुशर्म्मन् पु० शॄ-मनिन् सुष्ठु शर्म्म सुखं यस्य । नृपभेदे सुन्दर-

सुशल्य पु० सुष्ठु दृढं शल्यं यस्मात् । खदिरे ।

सुशवी स्त्री० सु+शव-अच् गौरा० ङीप् । कारवेल्ले, कृष्णजीरके च

सुशाक न० सुष्ठु शाको यस्मात् ५ ब० । आर्द्रके । तत्संयोगे हि शा-
कस्य सुस्वादुता । सुष्ठु शाको यस्य । चञ्चुशाके, तण्डुलीये, (नटे-
शाक) भिण्डायाञ्च पु० ।

सुशिख पु० सुन्दरी शिखा यस्य । वह्नौ, चित्रकवृक्षे च । शोभन
शिखायुक्ते त्रि० । मयूरशिखायां स्त्री० ।

सुशीत न० प्रा० । पीतचन्दने अतिशीतलस्पर्शे । तद्वति त्रि० ।

सुशीतल न० प्रा० । गन्धतृणे अतिशीतगुणयुक्ते त्रि० ।

सुशीला स्त्री० प्रा० । शतपत्त्र्याम्, शीतगुणवत्यां स्त्रियां च ।

सुशोम पु० सु+शो मक् सम्प्रसारणञ्च । शीतस्पर्शे । तद्वति त्रि० ।

सुशील पु० सुन्दरं-शीलमस्य । विष्णुपार्श्वचरभेदे शोभनचरितान्विते त्रि०

सुश्रीका स्त्री० सुन्दरी श्रीरस्य कप् । शल्लकीवृक्षे । सुन्दरश्रीयुक्ते त्रि०

सुश्रुत पु० सु श्रूयते सु+श्रु-क्त । विश्वामित्रमुनिपुत्रे चिकित्साशास्-

कर्त्तरि मुनिभेदे, तत्कृतग्रन्थे च। सुन्दरस्तुते त्रि०। 'देवाकर्णय सुश्रुतेन चरकस्योक्तेनेति, नैषधम्।

सुश्लिष्ट त्रि० सु+श्लिष-क्त। सुसंयुक्ते दृढ़मिलिते।

सुषम पु० सुन्दरः समः प्रा० सत्सम्। शोभने, समे च परमायां शोभायां स्त्री०। [कृष्णजीरके च।

सुषवी स्त्री० सु+सु-अच् गौ० ङीष्। कारवेल्ले, क्षुद्रकारवेल्ले, जीरके,

सुषामन् त्रि० सुष्ठु साम यस्य सुषामादि० षत्वम्। सुसान्त्वने स्त्रियां वा डाप् ङीप् च।

सुषि स्त्री० शुष-इन् पृ० शस्य सः। शुषौ छिद्रे।

सुषिर न० शुष किरच् पृ० शस्य सः। छिद्रे।

सुषीम पु० सुष्ठु सीमा यस्य। शीतलस्पर्शे। तद्वति, मनोज्ञे च। त्रि०

सुषुप्त न० सु+स्वप-भावे क्त। 'यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत् सुषुप्तमिति' श्रुत्युक्ते ज्ञानशून्यावस्थाभेदे। कर्त्तरि क्त। तदवस्थान्विते त्रि०।

सुषुप्ति स्त्री० सु+स्वप–क्तिन्। पुरीतति नाड्यां मनसः संयोगरूपे सर्व्वज्ञानशून्ये वेदान्तोक्ते सर्वपदार्थशून्ये च अवस्थाभेदे 'सुषुप्तिकाले सकले प्रलीने' इति श्रुतिः।

सुषुम्ना स्त्री० सुष्ठु दत्यव्यक्तं शब्दं म्नायति यत्र म्ना-क। तन्त्रोक्ते-मेरुदण्डबाह्यस्थे इडापिङ्गलानाड्योर्मध्यस्थे सूक्ष्मे नाडीभेदे।

सुषेण पु० सुष्ठु सेनयति सेनां करोति अच् षत्वम्। करमर्द्दके (करमचा) वेतसे, चिकित्सके वानरभेदे च, विष्णौ त्रि० स्त्री० ङीप्। कन्, अत इत्वम्। कृष्णत्रिवृति स्त्री०।

सुष्ठु अव्य० सु+स्था-कु। अतिशये, प्रशस्ते, सत्ये च।

सुसंस्कृत त्रि० सु+सम्+कृ-क्त सुट् च। प्रयत्नेन कृतादिनासाकृत्ये च पक्वे व्यञ्जनादौ।

सुसम्पद् स्त्री० प्रा०। शोभना सम्पद् यस्य। सुसम्पदे त्रि०।

सुसार पु० सुष्ठु सारोऽस्य। रक्तखदिरे।

सुसिकता स्त्री० प्रा० । शर्करायाम् । उत्तमवालुकायां च० व० ।
सुस्थ त्रि० सुखेन तिष्ठति स्था-क । आरोग्ये यथा युक्ते सुखिनि च ।
सुस्त्रा स्त्री० सु+स्नै-क । (खेसारी) शमीधान्यभेदे ।
सुस्नात त्रि० सुष्ठु स्नातः सु+स्ना-क्त । मङ्गलद्रव्येण कृतस्नाने ।
सुहित त्रि० सु+धा-क्त । तृप्ते, विहिते च । प्रा० । सुष्ठुहिते न० ।
५व० । अग्निजिह्वाभेदे स्त्री० । [लग्नाच्चतुर्थस्थाने च ।
सुहृद् पु० सुष्ठु हृदयं यस्य स्वार्थे हृदादेशः । मित्रे ज्योतिषोक्ते
सुहृदय त्रि० सुष्ठु हृदयं यस्य प्रशस्तमनस्के । प्रा० । सुचित्ते न० ।
सुहृद्बल न० सुहृदेव बलम् । मित्ररूपे सैन्ये ।
सू स्त्री० सू-क्विप् । सूतौ, प्रसवे, क्षेपे प्रेरणे च ।
सूक न० सू-प्रेरणे क्विप् स्वार्थे कन् । उत्पले, वाणे, वाते च ।
सूकर पु० सू-इत्यव्यक्तं शब्दं करोति कृ-अच् । वराहे, कुम्भकारे,
मृगभेदे च । वराहक्रान्तायां, वराहयोषिति च स्त्री० ङीप् ।
सूक्त न० सु+वच-क्त । सुन्दरकथने, एकार्थप्रतिपादके एकदैवत्ये वेदम-
न्त्रसमुदाये च । यथा श्रीसूक्तं पुरुषसूक्तमित्यादि नामानि च वेदे
बहूनि सन्ति तत्र महादानोपयोगीनि कतिचित् सूक्तानि तुलादा-
नादिपद्धतौ अस्माभिः उद्धृतानि । "जपन्ति सूक्तानि तथैव
चैवा"मिति वह्निपुराणम् ।
सूक्ष्म न० सूच-मन् । कैतवे, अध्यात्मपदार्थे, अलङ्कारभेदे च । कतक-
वृक्षे पु० । अणुपरिमाणवति अल्पे च त्रि० ।
सूक्ष्मकणाफला स्त्री० सूक्ष्मं कणं फलं यस्याः । मध्यमजम्बूवृक्षे ।
सूक्ष्मतण्डुल पु० सूक्ष्मस्तण्डुलोऽस्य । (खसखस) इतिख्याते, पिप्प-
ल्यां स्त्री० । [पोयमुद्यौ ।
सूक्ष्मदर्शिन् त्रि० सूक्ष्मं पश्यति दृश-णिनि । अत्यन्तसुबुद्धौ कुशा-
सूक्ष्मपत्र पु० सूक्ष्मं पत्रमस्य । धान्यके, वनजीरके, देवसर्षपे, लघु-
बदरे, सुरपर्णे, बलवल्ल्यां, बावब्बूले, लोहितेक्षौ च । शत-
पुष्पायां, शतावर्य्यां, लघुकाक्ष्यां दुरालभायां, आकाशमांस्यां च
स्त्री० । कप् अत इत्वम् । तत्रैव ।

सूक्ष्मपिप्पली स्त्री॰ कर्म॰। वनपिप्पल्याम्।
सूक्ष्मपुष्पा स्त्री॰ सूक्ष्माणि पुष्पाण्यस्याः। यवतिक्तायाम्।
सूक्ष्मफला स्त्री॰ सूक्ष्मं फलमस्याः। भूम्यामलक्याम्।
सूक्ष्मबदरी स्त्री॰ कर्म॰। भूमिबदर्य्याम्।
सूक्ष्मभूत न॰ कर्म॰। वेदान्तप्रसिद्धे अपञ्चीकृते भूम्यादीनां पञ्चानां भूतानां सूक्ष्मांशभेदे।
सूक्ष्ममूला स्त्री॰ सूक्ष्मं मूलमस्याः। जयन्त्याम्।
सूक्ष्मवल्ली स्त्री॰ कर्म॰। ताम्रवल्ल्यां, जतुकायाञ्च।
सूक्ष्मवीज पु॰ सूक्ष्मं वीजमस्य। (खसखस) ख्याते द्रव्ये।
सूक्ष्मशर्करा स्त्री॰ कर्म॰। वालुकायाम्।
सूक्ष्मशाख पु॰ सूक्ष्मा शाखाऽस्य। जालवर्बुरे।
सूक्ष्मशालि पु॰ कर्म॰। अणुधान्ये शग्रामाकादौ।
सूक्ष्मा स्त्री॰ सूच–अन् टाप्। यूथिकायां, क्षुद्रैलायां, करुण्यां, वालुकायाञ्च।
सूक्ष्मैला स्त्री॰ कर्म॰। क्षुद्रैलायाम् (गुजराटी एलाच्)।
सूच पैशुन्ये (अन्तर्द्रोहे) अद॰चु॰उभ॰सक॰सेट्। सूचयति ते असुसूचत् त।
सूचक त्रि॰ सूचयति अन्तर्द्रुह्यति सूच-ण्वुल्। पिशुने अन्तर्द्रोहवति, वोधके च। काके, कुक्कुरे, विडाले, पिशाचे, सिद्धिगणे, बुद्धे, नाटकप्रसिद्धे सूत्रधाराख्ये प्रधाननटे, कथके, सूक्ष्मशालौ च पु॰
सूचन न॰ सूच ल्युट्। हिंसने, ज्ञापने च। युच्। तत्र, दृष्टौ, पीड़ायाम् अभिनये च स्त्री॰।
सूचि(ची) स्त्री॰ सूच-इन् वा ङीप्। शिखायां, सीवनसाधने सूनाख्याते लौहमयपदार्थे च। [(दरजि)।
सूचिक त्रि॰ सूचिः तया सीवनं शिल्पमस्यास्य ठन्। सूच्याजीविनि
सूचिका स्त्री॰ सूचि+स्वार्थे कन्। सूच्याम् सूचिरिव इवार्थे कन्। हस्तिशुण्डायाम्। [केव्यत्वाकयालम्।
सूचिकाभरण न॰ वैद्यकोक्ते औषधभेदे तस्य च सूच्यग्रमिततया

सूचिकामुख पु॰ सूचिकेव क्रमसूक्ष्मं मुखमस्य । शङ्खे ।
सूचिवीज न॰ सूच्याकारं बीजम् । बीजावल्यां प्रसिद्धे सूच्याकारके बीजभेदे ।
सूचित त्रि॰ सूच-क्त । कथिते, बोधिते, हिंसिते च । [दयोऽप्यत्र ।
सूचिदलक पु॰ सूचिरिव पत्त्रमस्य कप् । सितार्जकशाके सूचीदला-
सूचिपुष्प पु॰ सूच्याकारं पुष्पं पुष्पाग्रं यस्य । केतकवृक्षे सूची-पुष्पादयोऽप्यत्र ।
सूचिशालि पु॰ कर्म॰ । सूक्ष्मधान्ये ग्रामाकादौ ।
सूचीपत्त्रा स्त्री॰ सूचीव पत्त्रमस्याः । गण्डदूर्व्वायाम् ।
सूचीमुख सूचीव मुखमस्य । सितकुशे । हीरके न॰ । [भेदे ।
सूक्ष्मस्थूलक पु॰ सूक्ष्ममिव स्थूलः स्वार्थे कन् । (उलुखड़) तृण-
सूत पु॰ सू-प्रसवे प्रेरणे ऐश्वर्य्ये वा क्त । सूर्य्ये, क्षत्रियजाते ब्राह्मणीगर्भजे वर्णसङ्करभेदे, त्वष्टरि, सारथौ, वन्दिनि, मागधे, लोमहर्षणाख्ये पुराणवक्तरि च पारदे पु॰ न॰ । प्रसूते, प्रेरिते च त्रि॰ ।
सूततनय पु॰ सूतस्य तनयः । भारतप्रसिद्धे राधेये कर्णे सूतपुत्रा-दयोऽप्यत्र । तस्य सूतपालितत्वात्तथात्वम् ।
सूति स्त्री॰ सू-क्तिन् । प्रसवे 'प्रबलैः सूतिमारुतैरिति' स्मृतिः सूयते कण्ड्यते सोमोऽत्र सू-आधारे क्तिन् । सोमाभिषवभूमौ ।
सूतिका स्त्री॰ सू-क्त कन् अत इत्वम् । नवप्रसूतायां स्त्रियाम् 'षट्-क्यां सूतिकां विनेति' स्मृतिः ।
सूतिकागार न॰ सूतिकाया निवासयोग्यमगारम् । सूतिकागृहे । सूतिकागृहादयोऽप्यत्र ।
सूतिकारोग पु॰ ६त॰ । वैद्यकोक्ते रोगभेदे ।
सूतिकाषष्ठी स्त्री॰ सूतिकागृहपूज्या षष्ठी शाक॰ । सूतिकागारे—प्रसवावधि षष्ठे दिवसे पूज्यायां षष्ठीदेव्याम् ।
सूत्थान त्रि॰ सु+उत्थानम् उद्योगो यस्य । चतुरे, कर्मक्षमले ।
सूत्या स्त्री॰ सू-क्यप् नि॰ । यज्ञाङ्गस्नानभेदे, अभिषवे, सोमरसपाने च

सूत्याशौच न० सूतिनिमित्तकमाशौचम्। जननाशौचे 'शावाशौचं न कर्त्तव्यं सूत्याशौचं विधीयते' इति स्मृतिः। [त।

सूत्र ग्रन्थे वेष्टने च अद० चु०उभ० स०सेट्। सूत्रयति ते असुसूत्रत्

सूत्र न० सूत्र-अच्। वस्त्रसाधने तन्तौ, व्यवस्थायां, नाट्यसाधने, प्रस्तावे 'स्वल्पाक्षरमसंदिग्धं सारवत् विश्वतोमुखम्। अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुरि'त्युक्ते शास्त्रभेदे च।

सूत्रकण्ठ पु० सूत्रं कण्ठे यस्य। विप्रे, कपोते, खञ्जरीटे च।

सूत्रधार पु० सूत्रं नाट्यसाधनं धारयति धृ-णिच्-अण्। नाट्याङ्गसाधनयुक्ते नाटकप्रस्तावके प्रधाननटे, 'सूत्रधारेण सहिताः संलापं यत्र कुर्वते' इति दशरूपकम् इन्द्रे, शिल्पिभेदे (कुतार) च

सूत्रपुष्प पु० सूत्रगर्भं पुष्पं यस्य। कार्पासे।

सूत्रभिद् पु० सूत्रं भिनत्ति सूच्या, भिद-क्विप्। सूच्याजीवे (दरजी)

सूत्रयन्त्र न० सूत्रवापनं यन्त्रम्। (तांत) सूत्रवापनयन्त्रे।

सूत्रला स्त्री० सूत्रं लाति ला-क। तर्कुटाम् (टेको)।

सूद पु० सूदयति आगान् सूद-अच्। सूपकारके, व्यञ्जनभेदे सूपे, सारथ्ये, अपराधे, लोध्रे, पापे च।

सूदन न० सूद-ल्युट्। हिंसने, निःक्षेपे, अङ्गीकारे च।

सूदशाला स्त्री० ६त०। पाकशालायाम्।

सून न० सू-क्त तस्य नः। पुष्पे, प्रसवे च। कर्त्तरि क्त। विकसिते, जाते च त्रि०।

सूना स्त्री० सू क्त तस्य नः। प्राणिवधस्थाने "पञ्च सूना गृहस्थस्येति' मनुः तनयायां, गलशुण्डायाम् मांसविक्रये च। [जङ्।

सूनु पु० सू नु। पुत्रे अनुजे, सूर्य्ये, अर्कवृक्षे च कन्यायां स्त्री० वा

सूनृत न० सुनृत्यति अनेन सु+नृत-घञर्थे क। सत्ये-प्रिये-वाक्ये, मङ्गले च तद्वति त्रि०।

सूप पु० सुखेन पीयते सु+पा-घञर्थे क पृ०। (दालि) व्यञ्जनभेदे सु वपति सु+वप-क पृ०। सूपकारे पाचके। आधारे क्त। भाजने। करणे क्त। वाणे।

सूपकार पु० सूपं करोति कृ-अण् । पाचके ।
सूपधूपन न० सूपो धूप्यतेऽनेन । हिङ्गौ, सूपपाके हि हिङ्गुधूपदानं पाकशास्त्रे प्रसिद्धम् ।
सूपपर्णी स्त्री० सूपसाधनस्य मुद्गस्येव पर्णमस्याः ङीप् । मुद्गपर्ण्याम् ।
सूपश्रेष्ठ पु० सूपेषु तत्साधनेषु श्रेष्ठः । मुद्गे ।
सूपाङ्ग न० सूपस्य तत्संस्कारकमङ्गमुपकरणम् । हिङ्गौ ।
सूर पु० सवति प्रेरयति कर्म्मणि लोकान् सू-क्रन् । सूर्य्ये, अर्कवृक्षे च । सूर-क । पण्डिते ।
सूरण पु० सूर-ल्युट् । शूरणे (ओल) ।
सूरत त्रि० सु+रम-क्त पृ० । दयालौ ।
सूरसूत पु० ६त० । अरुणे, गरुडाग्रजे ।
सूरि पु० सू-क्रिन् । सूर्य्ये, अर्कवृक्षे, यादवभेदे, पण्डिते च 'सदा पश्यन्ति सूरय' इति श्रुतिः राजसर्षपे स्त्री० ङीप् ।
सूरिन् पु० सूर-णिनि । पण्डिते । [ अर्थोपदेशत्वात् सः ।
सूर्च(र्क्ष्य) अनादरे भ्वा० प०सक०सेट् । सूर्च(र्क्ष्य)ति असूर्चीत् (र्क्षीत्)
सूर्च(र्क्ष्य)ण न० सूर्च-(र्क्ष्य) ल्युट् । अनादरे ।
सूर्प पु० न० । शूर्प-पृ० शस्य सः । शूर्पशब्दार्थे । [भगिन्याम् ।
सूर्पणखा स्त्री० शूर्पं इव नखा अस्याः पृ० शस्य सः णत्वम् । रावण-
सूर्मि स्त्री० शूर्म्मि+पृ० शस्य सः । शूर्म्मिशब्दार्थे वा ङीप् ।
सूर्य्य पु० सृ-क्यप् नि० दीर्घश्च । दिवाकरे, अर्कवृक्षे, दानवभेदे च ।
सूर्य्यकान्त पु० सूर्य्यस्य कान्तः प्रियः । स्फटिकमणौ सूर्य्यसम्पर्कात् यत्राग्निसम्भवस्तस्मिन् मणौ च (आतसी) ।
सूर्य्यग्रहण न० सूर्य्यस्य राहुणा तदाक्रान्तभूच्छायया ग्रहणमाक्रमणम् । ज्योतिषोक्ते राहुप्रतिबिम्बभूमिच्छायया सूर्य्यमण्डलस्य आक्रमणरूपे व्यापारे ।
सूर्य्यज पु० सूर्य्यात् जायते जन-ड । शनिग्रहे, यमे, वैवस्वते मनौ, सुग्रीववानरे च सूर्य्यपुत्रादयोऽप्यत्र । यमुनायां स्त्री० ।
सूर्य्यभक्त पु० सूर्य्यस्य भक्त इव प्रियः । बन्धूकवृक्षे ।

सूर्य्यमणि पु० सूर्य्यप्रियः मणिः । सूर्य्यकान्तमणौ ।
सूर्य्यलता स्त्री० सूर्य्यभक्ता लता । आदित्यभक्तायाम् ।
सूर्य्यवल्ली स्त्री० सूर्य्यतुल्यपुष्पिका वल्ली । अर्कपुष्पिकावृक्षे ।
सूर्य्यसारथि पु० ६त० । अरुणे गरुडाग्रजे । सूर्य्यसूतादयोऽप्यत्र
सूर्य्या स्त्री० सूर्य्यस्य भार्या टाप् । अमानुष्यां संज्ञानाम्न्यां सूर्य्य-
भार्य्यायाम् । मानुष्यां कुन्त्यान्तु ङीप् । सूरीत्येव ।
सूर्य्यालोक पु० ६त० । आतपे रौद्रे ।
सूर्य्यावर्त्त पु० सूर्य्य इवावर्त्तते आ+वृत-अच् । (हुडहुडिया) क्षुप-
भेदे (सुलफिया) शाके च आदित्यभक्तायां स्त्री० ।
सूर्य्याश्मन् पु० सूर्य्यप्रियः अश्मा । सूर्य्यकान्तमणौ ।
सूर्य्योढ पु० सूर्य्येण सूर्य्यास्तकालेन ऊढः प्रापितः वह-क्त सूर्य्यास्त-
समये आगतातिथौ ।
सृकाल पु० सृ-कालन् कस्य नेत्त्वम् । शृगाले ।
सृक्क(न्) न० सृज-क्कन् क्वनिन् वा कस्य नेत्त्वम् । ओष्ठप्रान्तभागे 'सृक्क-
णी परिलेढि चेति, श्रुतिः । 'महासृक्काय शोभितो नृसिंह-
वदिति । स्त्रीत्वात् कमध्यताप्यस्य ।
सृक्वन् न० सृज-क्वनिप् । ओष्ठप्रान्तभागे । पु० सृक्विन् अप्यत्र
सृग पु० सृ-गक् गस्य नेत्त्वम् । भिन्दिपालास्त्रे ।
सृगाल पु० सृ गालन् गस्य नेत्त्वम् । जम्बूके, दैत्यभेदे च ।
सृजकाचार पु० सृजति वस्त्रस्थित्वं सृज-क ततः स्वार्थे कन् कर्म० ।
सर्ज्जिकाचारे । [त्यपि ।
सृणि पु० सृ-निक् । शत्रौ । अङ्कुशास्त्रे स्त्री० तत्र वा ङीप् । सृणी-
सृ(णि)णीका स्त्री० सृणि+कन् ईकन् वा । लालायाम् ।
सृति स्त्री० सृ-भावे क्तिन् । गमने । करणे क्तिन् । पथि ।
सृत्वर त्रि० सृ-क्वरप् । गमनकर्त्तरि स्त्रियां ङीप् सा च मातरि च ।
सृप गतौ भ्वा० पर०सक०अनिट् । सर्पति असृपत् । अत्रोपदेशत्वात्र सः
सृभ हिंसे भ्वा०पर०सक०सेट् क्त्वा वेट् । सर्भति असर्भीत् । सृभइत्येके
धातुः अत्रोपदेशत्वमस्य चिन्त्यम् ।

सृमर पु० सृ-कमरच् । मृगभेदे, गमनशीले त्रि० ।
सृष्ट त्रि० सृज—क्त । निर्मिते, युक्ते, निश्चिते, बहुले, भूषिते त्यक्ते च
सृष्टि स्त्री० सृज-क्तिन् । निर्माणे, विश्वस्य निर्माणे, स्वभावे, च ।
कर्म्मणि क्तिन् । सृज्यमाने 'या सृष्टिः स्रष्टुराद्येति' शकुन्तला ।
सृष्टिप्रदा स्त्री० सृष्टिं सर्ज्जनं गर्भं प्रददाति प्र+दा-क । गर्भदात्रीक्षुमे
सेक पु० सिच—घञ् । सेचने जलादिना आर्द्रीकरणे । [भेदे ।
सेकपात्र न० सिच्यतेऽनेन सिच करणे घञ् कर्म० । (सेञ्चोनी) पात्र-
सेक्तृ पु० सिञ्चति रेतः सिच-तृच् । पत्यौ । सेचके त्रि० । [त्रि० ।
सेचक पु० सिञ्चति तोयेन पृथिवीम् सिच-ण्वुल् । मेघे, सेककर्त्तरि
सेचन न० सिच-भावे ल्युट् । जलादिना आर्द्रीकरणे करणे ल्युट् ।
सेचन्यां, कुटसेकपात्र्यां स्त्री० ङीप् ।
सेटु पु० सिट् उन् । (तरमुज) वृक्षे ।
सेतु पु० सि तुन् । क्षेत्रादेर्जलधारणार्थे (आल) (जाङ्गाल) पदार्थे,
वरुणवृक्षे, तन्त्रोक्ते प्रणवात्मके मन्त्रे च स्वार्थे कन् । वरुणवृक्षे ।
सेतुबन्ध पु० ६त० । लङ्कागमनार्थं श्रीरामेण नलकपिद्वारा कारिते
समुद्रोपरि आलीबन्धे, क्षेत्रादेरालीबन्धे च ।
सेतुभेदिन् पु० सेतुं भिनत्ति भिद-णिनि । दन्तीवृक्षे ।
सेतुवृक्ष पु० सेतुनामको वृक्षः । वरुणवृक्षे सेतूपरिस्थे वृक्षे च ।
सेत्र न० सि-ष्ट्रन् । (वेड़ि) निगडे ।
सेना स्त्री० सि-न, सह इनेन प्रभुणा वा सैन्ये ।
सेनाङ्ग न० ६त० । हस्त्यश्वरथपदातिसंघाते, सेनाया उपकरणे च ।
सेनाचर पु० सेनायां चरति चर-ट । सेनागामिनि 'सेनाचरीभव-
द्गिभाननेति' नैषधम् । [पतौ च ।
सेनानी पु० सेनां देवसेनां वा नयति नी-क्विप् । कार्त्तिकेये, सेना-
सेनापति पु० ६त० । कार्त्तिकेये, सैन्याध्यक्षे च ।
सेनामुख न० ६त० । सैन्याग्रे, हस्त्यश्वादिसंख्याविशेषे, 'हस्तिनः
त्रयः रथाः त्रयः अश्वा नव पदातयः पञ्चदश एतत् सेनामुखम्' ।
सेनारक्ष पु० सेनां रक्षति रक्ष अण् । सेनारक्षाकारके यामिके सैन्ये

सेफ पु० सिफ । शेफे पुंसोऽसाधारणचिह्ने ।
सेमन्ती स्त्री० सिम-भि गौ० ङीष् । (सेओती) पुष्पवृक्षे ।
सेलु पु० सि-लु । श्लेष्मातकवृक्षे ।
सेवक पु० सीव्यति सिव-ण्वुल् । सीवनकर्त्तरि (दरजी) सेव-
    ण्वुल् । भृत्ये, दासे, अनुचरे च त्रि० ।
सेवधि पु० सेवं सेवनं दधाति धा-कि । यक्षप्रभृतौ निधौ ।
सेवन न० सिव-सेव-वा ल्युट् । सूच्यादिना वस्त्रादेर्योजने आश्रयणे,
    उपभोगे, बन्धने, पूजने, भजने च । सीव्यतेऽनया ल्युट् ।
    सूच्यां स्त्री० ङीप् ।
सेवा स्त्री० सेव-अ । भजने, आराधने, उपभोगे, आश्रयणे च
सेवित त्रि० सेव-क्त । पूजिते, आराधिते, आश्रिते, उपभुक्ते च ।
सेव्य न० सेव-ण्यत् । वीरणमूले । अश्वत्थे, हिज्जलवृक्षे च पु०
    सेवार्हे त्रि० । वन्दावृक्षे स्त्री० ।
सैंहली स्त्री० सिंहले देशे भवा अण् ङीप् । सिंहपिप्पल्याम् ।
सैंहिक पु० सिंहिकायां भवः ठक् । राहौ, तस्याः अपत्यम् ढक् ।
    सैंहिकेयोऽप्यत्र । [प्रचुरदेशे त्रि० ।
सैकत न० सिकताः सन्त्यत्र । अण् । बालुकाप्रचुरे नद्यादितटे सिकता-
सैकतेष्ट न० सैकतं स्थानमिष्टं यस्य । आर्द्रके ।
सैतवाहिनी स्त्री० सितायाः शर्करायाः अयम् अण् सैतो मधुरर-
    सस्तं वहति वह-णिनि । बाहुदायां नद्याम् ।
सैद्धान्तिक पु० सिद्धान्तं वेत्ति ठक् । सिद्धान्ताभिज्ञे ।
सैनापत्य न० सेनापतेर्भावः कर्म० वा ष्यञ् । सेनापतिधर्मे, तत्
    कर्मणि च सैनापत्यमुपेत्य वं इति कुमारः ।
सैनिक पु० सेनायां समवैति ठक् । शिविते हस्त्यश्वादौ ।
सैन्धव न० सिन्धुनदीसमीपे देशे भवम् अण् । लवणभेदे सिन्धोरुद्-
    भवः । अण् । घोटके, तस्य सिन्धुदेशसमुद्रसमीपस्थारण्यदेशोद्भ-
    वत्वात् तथात्वम् ।

सैन्धवघन पु॰ सैन्धवमिव घनः। सैन्धवपिण्डवत् समन्तादेकरसात्मके चिदानन्दस्वरूपे परमेश्वरे।

सैन्य पु॰ सेनायां समवैति ञ्य। सैनिके रक्षप्रवादौ। सेनानां संघः ष्यञ्। सैनायत्तदाये न॰।

सैरन्ध्री स्त्री॰ सीरं हलं धरति धृ-मूल॰ क सुम् च सीरन्ध्रः कर्षकस्तस्येदं शिल्पकर्म अण् तदस्यास्ति अच् गौ॰ ङीष्। परगृहस्थे स्ववशे शिल्पकारिणि स्त्रीभेदे प्र॰ सैरिन्ध्रीत्यप्यत्र।

सैरिभ पु॰ सीरे हले तद्वहने इभइव शूरः शक॰ ततः स्वार्थेऽण्। महिषे, 'सैवे सैरिभमर्द्दिनीमिह महालक्ष्मीमिति' महालक्ष्मीध्यानम्। [स्वार्थे कन् तत्रैव।

सैरीय पु॰ सीरस्येदम् अण् सैरं हलाकारमर्हति छण्। झिण्टग्राम्।

सैरेय स्त्री॰ सैरं सीराकारमर्हति ढक्। झिण्टग्राम्। ढकञ्। सैरेयकोऽप्यत्र।

सैवाल न॰ सेवायै मीनादीनामुपभोगाय अलति पर्य्याप्नोति अच् सेवालः ततः स्वार्थे अण्। शैवाले स्वार्थे कन्। तत्रैव।

सोढ त्रि॰ सह-क्त वा इडभावः। क्षान्ते तितिक्षिते। कर्त्तरि क्त। शीतादिसहनशीले त्रि॰।

सोढृ त्रि॰ सह-तृच् वा इडभावः। सहनकर्त्तरि क्षमाशीले।

सोत्कण्ठ त्रि॰ सह उत्कण्ठया। कौतुक्यान्विते अभीष्टलाभेच्छया विलम्बासहिष्णुत्वयुक्ते।

सोत्प्रास न॰ उद्+प्र-अस-घञ् सह उत्प्रासेन। सोल्लुण्ठने, अन्यार्थकस्य वाक्यस्य अन्यार्थकत्वकल्पनया तदुत्तरार्थके, वाक्ये, प्रियवाक्ये च। सपरिहासे पु॰।

सोदय न॰ त्रि॰ सह उदयेन प्रादुर्भावेण वृद्ध्या, वा। प्रादुर्भूते, वृद्धियुक्ते, लाभयुक्ते (सुदयुक्ते) च। [स्त्री॰

सोदर पु॰ सह समानमुदरं यस्य। एकोदरभवे भ्रातरि भगिन्यां

सोदर्य्य पु॰ सह समाने उदरे शयिता यत् सादेशः। एकोदरजाते भ्रातरि। भगिन्यां स्त्री॰।

**सोनह** न० सु—क्विप् सवे नह्यते नह कर्मार्थे क । लशुने ।

**सोन्माद** पु० सह उन्मादेन । उन्मत्ते, उन्मादिष्णौ ।

**सोपप्लव** पु० सह उपप्लवेन । समाक्रान्तभूच्छायेन राहुणा योगरूपोप्लवं सहिते चन्द्रे तथाभूतचन्द्रच्छायायोगयुक्ते सूर्य्ये च ।

**सोपाधि(क)** सह उपाधिना वा कप् । उपाधियुक्ते प्रतिदानाभावयुक्ते कृतदानादौ ।

**सोपान** न० उप—अन—भावे घञ् सह विद्यमानः उपानः, उपरि गतिरनेन । आरोहणसाधने काष्ठादिनिर्म्मिते (पैँठा) प्रस्तुतौ पदार्थे

**सोभाञ्जन** पु० शोभाञ्जन+पृ० । (सजना) वृक्षे ।

**सोम** पु० सु—मन् । चन्द्रे, कर्पूरे, कुवेरे, यमे, वायौ, वसुभेदे, जले, सोमलतौषधौ, तद्रसे, अमृते, दीधितौ च । सह उमया । शिवे, वानरेशे—सुग्रीवे च ।

**सोमगर्भ** पु० सोमस्य तदात्मकामृतरूपमोक्षस्य गर्भःस्थानम् । विष्णौ ।

**सोमज** न० सोमात् तदुच्चरितौषधिस्थरसपानात् जायते जन—ड । दुग्धे चन्द्रजाते त्रि० । बुधे पु० ।

**सोमतीर्थ** न० सोमेन तपस्तप्त्वा कृतं तीर्थम् । प्रभासतीर्थे ।

**सोमप** पु० सोमं तद्रसं पिबति पा—क । यज्ञे—सोमरसपानकर्त्तरि पितृगणभेदे ब० व० । पा—क्विप् सोमपा अप्यत्र ।

**सोमपत्त्र** पु० सोमस्य ओषधिविशेषस्येव पत्त्रमस्य (उलुखड़) तृणभेदे ।

**सोमपीति(थि)न्** पु० पीतमनेन इनि सोमं पीतो पृ० वा तस्य थः । यज्ञे—सोमरसपायिनि । पा-क्वनिप् । सोमपीवाप्यत्र ।

**सोमबन्धु** पु० सोमस्य बन्धुः, सोमो बन्धुरस्य वा । सूर्य्ये तद्वृद्धिकरत्वात् तस्य तथात्वम् चन्द्रजे बुधे पु० कुमुदे न० ।

**सोमभू** पु० सोम एव भूरुत्पत्तिस्थानं यस्य । बुधग्रहे, चन्द्रवंश्ये क्षत्रिये च ।

**सोमयाग** पु० सोमेन यागः । त्रिवर्षसाध्ये सोमरसपानाङ्गके यागभेदे

**सोमयाजिन्** पु० सोमेन यजते यज-णिनि । सोमयागकर्त्तरि ।

**सोमयोनि** न० सोमः योनिरस्य । चन्दनभेदे ।

**सोमराजी** स्त्री॰ सोमेन राजते राज-अच् गौ॰ ङीष्। (सोमराज) ओषधिभेदे। स्वार्थे कन्। सोमराजिकाप्यत्र। राज-णिनि। सोमराजीत्यप्यत्र पु॰।

**सोमलता** स्त्री॰ सु-मन् कर्म॰। स्वनामख्यातायां लतायाम्।

**सोमलतिका** स्त्री॰ सोमलतेव इवार्थे कन् अत इत्वम्। गुडूच्याम्।

**सोमवंश** पु॰ सोमस्य वंशः। चन्द्रवंशे चन्द्रादभिके गोत्रपरम्पराजाते क्षत्रिये च। [कट्फले च।

**सोमवल्क** पु॰ सोमस्येव वल्कमस्य। करञ्जे, रीठाकरञ्जे, श्वेतखदिरे,

**सोमवल्लिका** स्त्री॰ सोमवल्लीव इवार्थे कन्। सोमराज्याम् स्वार्थे कन्। सोमलतायाम्।

**सोमवल्ली** स्त्री॰ सोमाख्या लताय वल्ली। गुडूच्याम्। सोमरूपा वल्ली। सोमलतायाम् सोमराज्यां, ब्राह्म्यां, सुदर्शनायाञ्च।

**सोमवार** पु॰ सोमस्वामिको वारः। चन्द्रस्वामिके दिने।

**सोमविक्रयिन्** पु॰ सोमं विक्रीणाति वि+क्री-णिनि। सोमलतायाः तद्रसस्य वा विक्रेतरि।

**सोमवृक्ष** पु॰ सोम इव वृक्षः। कट्फलवृक्षे, श्वेतखदिरे च।

**सोमसार** पु॰ सोम इव शुभ्रः सारोऽस्य। श्वेतखदिरे।

**सोमसिद्धान्त** पु॰ सोमकृतः सिद्धान्तः। चन्द्रप्रोक्ते ज्योतिषग्रन्थभेदे।

**सोमसुत्** पु॰ सोमं सुतवान् सु-भूते क्विप्। यज्ञार्थं कृत सोमलतानिष्पीडने।

**सोमसुत्वन्** पु॰ सोमं सुतवान् भूते क्वनिप्। कृतसोमरसपाने।

**सोमसुता** स्त्री॰ 6त॰। नर्म्मदानद्याम्। बुधे पु॰। सोमोद्भवादयोऽप्यत्र पु॰ स्त्री॰ यथायथम्

**सोमसूत्र** न॰ सोमस्य जलस्य सूत्रमिव प्रणाली। जलनिर्गमप्रणाल्याम्, शिवलिङ्गस्नानीयोपद्रवस्य जलनिर्गमस्थाने च। 'सोमसूत्रं न लङ्घयेदिति' तन्त्रम्।

**सोल्लुण्ठ** त्रि॰ सह उल्लुण्ठेन। भूमौ पार्श्वपरिवर्त्तादियुक्ते बलादौ अन्यार्थवाक्यस्य अन्यपरत्वयुक्ते वाक्ये च।

सौस्नुयुहन न० सह भद्रुनहनेन। अन्यथाश्रितस्य अन्यरूपेण परिकीर्त्तनरूपे वाक्ये (स्तुतिपरस्य निन्दापरता निन्दापरस्य च स्तुतिपरता इत्येवंरूपे वाक्ये)।

सौकर्य्य न० सुकरस्य भावः ष्यञ्। अनायाससाध्यत्वे।

सौखसुप्तिक त्रि० सुखसुप्तिं सुखेन शयनं पृच्छति ठञ्। प्रातःकाले सुखशयनप्रच्छके वैतालिकादौ।

सौख्य न० सुखमेव चातु० ष्यञ्। सुखे।

सौगत पु० सुगत एव अण्। सुगते बुद्धभेदे तस्येदमण्। सुगतसम्बन्धिनि त्रि०।

सौगन्ध न० सुष्ठु गन्धोऽस्य स्वार्थे अण्। कत्तृणे रामकर्पूरे।

सौगन्धिक न० सुष्ठु गन्धः सुगन्धः तस्येदम् ठण्। कह्लारे।

सौगन्ध्य न० सुगन्धस्य भावः ष्यञ्। सद्गन्धे। स्वार्थे ष्यञ्। सुगन्धौ।

सौचिक पु० सूच्यां तत्कर्म्म सीवनमुपजीवति ठञ्। (दरजी) सीवनकारके।

सौजन्य न० सुजनस्य भावः ष्यञ्। सुजनतायां सद्व्यवहारे च 'सौजन्यजन्यं यशः' इत्युद्भटः।

सौण्डी स्त्री० शुण्डाकारोऽस्त्यस्याः अण् ङीप् पृ० सस्य सः। गजपिप्पल्याम्।

सौत्र पु० पाणिन्यादिभिः सूत्रेण कर्म्मविशेषाय पठितः अण्। भ्वादिगणपठितभिन्नेषु सूत्रमात्रपठितेषु धातुषु।

सौत्रामणी स्त्री० सूत्रामा इन्द्रो देवताऽस्य अण् सपूर्वत्वात् न टिलोपः णत्वम्। इष्टिभेदे तत्र हि सुरापानं विप्राणामपि विहितम् 'सौत्रामण्यां सुरां पिबेदिति' श्रुतिः।

सौदामनी स्त्री०सुदामा पर्व्वतभेदस्तेनैका दिक् तत्प्रान्तभवत्वात् अण्। विद्युति। सा हि स्फटिकमयस्य सुदाम्नः पर्व्वतस्यैकदेशे जाता। अप्सरोभेदे च। सुदामा ऐरावतगजस्तस्य पत्नी ङीप्। ऐरावतस्त्रीति। तत्र ङीपि अतोऽल्लोपे। सौदाम्न्यपि।

सौदायिक न० सुदायात् बन्धुकुलात् आगतः ठण्। "ऊढ़या कन्यया वापि पत्युः पितृगृहेऽथ वा। भर्तुः सकाशात् पित्रोर्वा लब्धं सौदायिकं स्मृतमिति" स्मृत्युक्ते स्त्रीधनभेदे "सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यं परिकीर्त्तितमिति" स्मृतिः।

सौदास पु० चन्द्रवंश्ये कल्माषपादे नृपतौ।

सौध पु० न० सुधया लेपनद्रव्येण रक्तम् अण्। राजसदनभेदे सुधावर्णमर्हति अण्। रूप्ये न०। सुधासम्बन्धिनि त्रि०।

सौनिक पु० सूना बध्यस्थानं तदुपलक्षितमांसादि पण्यमस्य ठण्। मांसक्रयविक्रयोपजीविनि व्याधे (कसाइ)।

सौन्दर्य्य न० सुन्दरस्य भावः ष्यञ्। चारुतायां, "अङ्गप्रत्यङ्गकानां यः सन्निवेशो यथोचितम्। सुश्लिष्टः सन्धिबन्धः स्यात् तत् सौन्दर्य्यमुदाहृतमि"त्युक्ते अङ्गादीनां मनोहरत्वे।

सौपर्ण न० सुष्ठु पर्णानि तद्रूपमर्हति अण्। मरकतमणौ।

सौपर्णेय पु० सुपर्ण्या विनतायाः अपत्यम् ढक्। गरुडे।

सौप्तिक त्रि० सुप्तिकाले रात्रौ भवम् ठञ्। रात्रियुद्धे सुप्तानधिकृत्य कृतो ग्रन्थः ठञ्। महाभारतपर्व्वभेदे।

सौभ न० सुष्ठु सर्व्वत्र लोके भाति भा-क स्वार्थे अण्। कामचारिणि, पुरे, हरिश्चन्द्रनृपपुरे च।

सौभद्र पु० सुभद्रायां भवः अण्। सुभद्रापुत्रे अभिमन्यौ।

सौभद्रेय पु० सुभद्राया अपत्यम् ढक्। सुभद्रासुते अभिमन्यौ।

सौभरि पु० मुनिविशेषे।

सौभागिनेय पु० सुभगाया अपत्यम् ढक् इनादेशः द्विपदवृद्धिः। सुभगापुत्रे। तत्कन्यायां स्त्री० ङीप्।

सौभाग्य न० सुभगस्य भावः ष्यञ् द्विपदवृद्धिः। प्रियत्वे स्वार्थे ष्यञ्। सिन्दूरे, टङ्कणे च। विष्कम्भादिषु मध्ये चतुर्थे योगे पु०। [त्रिको।

सौभिक पु० सौभं कामचारिपुरं तन्निर्म्माणं शिल्पमस्य ठण्। ऐन्द्रजा०

सौमनस्य न० सुमनसो भावः ष्यञ्। प्रसन्नचित्तत्वे।

सौमनस्यायनी स्त्री० सौमनस्यमयतेऽनया अय-ल्युट् ङीप् इत०। मालत्याम्, तत्कलिकायाञ्च।

सौमित्र(त्रि०) पु० सुमित्रायां भवः अण्, बाह्वादि० इञ् वा। लक्ष्मणे'

सौम्य त्रि० सोमो देवताऽस्य ष्यण्। सोमदेवताके ढित्वात् स्त्रियां ङीप्। सोम इव गवादित्वात् य स्वार्थे अण्। मनोहरे प्रियदर्शने अनुग्रे च त्रि० बुधे पु०। ततः स्वार्थिकप्रत्ययाभावे सोम्योऽप्युभयत्र। 'सदेव सोम्येदमग्र आसी'दिति श्रुतिः ज्योतिषोक्ते शुभग्रहे वृषादिसमराशौ, उडुम्बरवृक्षे, सोमपायिनि-विप्रे पु०।

सौम्यकृच्छ्र पु० कर्म० सोमदेवताके कृच्छ्रसाध्ये व्रतभेदे। शतपत्न्याम्।

सौम्यगन्धी स्त्री० सौम्यः अनुग्रः गन्धो यस्याः गौ० ङीप्।

सौम्यग्रह पु० कर्म० ज्योतिषोक्ते चन्द्रबुधगुरुशुक्ररूपे शुभग्रहे।

सौर पु० सूरस्य इदम् सूरो देवतास्य अण् वा। सूर्यपुत्रे शनैश्वरे यमे च। सूर्यदेवताके त्रि० स्त्रियां ङीप्। सूरेण निर्वृत्तः अण्। एकैकराशौ तदंशेषु सूर्यगतिसाध्ये दिनमासादौ त्रि०। 'विवाहादौ स्मृतः सौरः' इति स्मृतिः उडुम्बरवृक्षे पु०।

सौरज पु० सूरस्येदं सौर आलोकस्ततो जायते जन-ड। तुम्बुरुवृक्षे।

सौरभ न० सुरभेर्भावः अण्। सद्गन्धे, सौरभमस्यास्ति अच्। सुरभिरस्यास्ति अण् वा। कुङ्कुमे, बोले च न०।

सौरभेय पु० सुरभेरपत्यम् ढक्। गवि स्त्रियां ङीप्। 'सौरभेयीभ्य एव चेति' गोदानमन्त्रः तस्या इदम् ढक्। सुरभिसम्बन्धिनि त्रि०।

सौराष्ट्र पु० सुष्ठु राष्ट्रमस्यास्ति प्रज्ञा० अण्। (सुरट) देशभेदे। सुराष्ट्रे भवः अण्। सुराष्ट्रदेशभवे त्रि०। विषभेदे न०।

सौराष्ट्रिक न० सुराष्ट्रदेशे भवः ठक्। विषभेदे। [तिषम्।

सौरि पु० सूरस्यापत्यम् इञ्। शनैश्चरे, 'सौरिवारेऽक्षतानीति' ज्यो-

सौरिरत्न न० सौरिप्रियं रत्नम् शाक०। नीलके मणौ।

सौरेय पु० सुरायै हितम् ढक्। शुक्लझिण्ट्याम् स्वार्थे कन् तत्रैव।

सौल्विक त्रि० शुल्वं ताम्रपात्रादिनिर्माणं शिल्पमस्य ठक्। ताम्रमयपात्रनिर्माणकर्त्तरि (काँसारि)।

सौक त्रि० स्वस्येदम् अण् न वृद्धि वातृपूर्व्वं औत् । आत्मसंबन्धिनि ।

सौवग्रामिक त्रि० स्वग्रामे भवः ठक् न वृद्धिः वातृपूर्व्वं औत् । स्व-
ग्रामभवे पदार्थे ।

सौवर्चल न० सुवर्चलदेशे भवम् अण् । लवणलवणे ।

सौवर्णभेदिनी स्त्री० सुवर्णस्य विकारः अण् सौवर्णमिव भिनत्ति प्र-
काशते भिद-णिनि । प्रियङ्गौ ।	[हितं ।

सौवस्तिक पु० स्वस्तिकरणे कुशलः ठक् न वृद्धिः वातृपूर्वमौत् । पुरो-

सौविद् पु० सुविदन्नि सु+विद-क स्वार्थेऽण् । अन्तःपुररक्षके ।

सौविदल्ल पु० सुष्ठु विदल्लं विद्वांसमपि लाति ला-क स्वार्थेऽण् ।
अन्तःपुररक्षके ।

सौवीर पु० सुष्ठु वीरो यत्र सुवीरो देशभेदः तत्र भवः अण् । स्रोतोऽ-
ञ्जने । काञ्जिके बदरे च न० स्वार्थे कन् । काञ्जिकभेदे न० ।
बदरवृक्षे पु० ।

सौवीरसार पु० न० कर्म० । स्रोतोऽञ्जने ।

सौवीराञ्जन न० सौवीराख्यमञ्जनम् । अञ्जनभेदे 'सौवीरन्तु यवैरामैः
पक्वैर्वा निस्तुषैः कृतम् । गोधूमैरपि सौवीरमि'त्याद्युक्तौ अञ्जनभेदे ।

सौष्ठव न० सुष्ठु भद्रं तस्य भावः अण् टिलोपः । आतिशय्ये 'स
सौष्ठवौदार्य्यविशेषशालिनीमि"ति भारविः ।

सौहार्द न० सुहृदो भावः अण् । स्नेहे, मित्रत्वे च ।

सौहित्य न० सुहितस्य तृप्तस्य भावः ष्यञ् । तृप्तौ, 'नातिसौहित्य-
माचरेदिति' स्मृतिः ।

सौहृद न० सुहृदो भावः अण् । मित्रत्वे बन्धुतायाम् ।

स्कद उत्प्लुत्य गतौ, अक० उद्धृतौ, आप्लावे च सक० भ्वा० आ० सेट्
इदित् । स्कन्दते अस्कन्दिष्ट । ।

स्कन्द समाहारे अद० चु०उ०सक०सेट् । स्कन्दयति ते अचस्कन्दत् त ।

स्कन्द गतौ शोषणे च भ्वा० पर० सक० अनिट् । स्कन्दति अस्का-
न्त्सीत् अस्कानृत्सीत् ।

स्कन्द पु० स्कन्दते उत्प्लुत्य गच्छति अच् । कार्त्तिकेये ।

स्कन्दन न० स्कन्द ल्युट्। रेचने, क्षरणे, गतौ शोषणे च।

स्कन्दांशक पु० स्कन्दस्यांश एवांशो यस्य कप्। पारदे। तयोः शिववीर्य्यजत्वादेकांशत्वम्।

स्कन्ध पु० स्कद्यते आरुह्यते कर्मणि घञ् पृ०। अंसे (कांध) वृक्षस्य काण्डे (गुडि) रूपे, व्यूहे, युद्धे, समूहे; काये, भद्रादौ, छन्दोभेदे, सौगतसिद्धेषु विज्ञानादिषु पञ्चसु 'सद्धाङ्गस्कन्धपञ्चकमि'ति माघः। पथि, ग्रन्थपरिच्छेदे च। 'स्कन्धैर्द्वादशभिर्युक्तमि'ति भागवतविशेषणम्।

स्कन्धतरु पु० स्कन्धप्रधानस्तरुः। नारिकेलवृक्षे।

स्कन्धफल पु० स्कन्धे फलमस्य। नारिकेलवृक्षे, उडुम्बरवृक्षे च।

स्कन्धबन्धना स्त्री० स्कन्धे बन्धनमस्याः। मधुरिकायाम्।

स्कन्धरुह पु० स्कन्धात् रोहति रुह क। वटवृक्षे।

स्कन्धवाह पु० स्कन्धेन वाहयति वह णिच् अच्। शकटादि द्वारा स्कन्धवाहके वृषादौ। स्वु। तत्रैव। [याम्।

स्कन्धशाखा स्त्री० स्कन्धात् प्रभृति शाखा। वृक्षस्य प्रधानशाखा-

स्कन्धशृङ्ग पु० स्कन्धपर्य्यन्तं शृङ्गमस्य। महिषे।

स्कन्धावार पु० स्कन्धार्थमावारः आ + वृ-घञ्। युद्धार्थमुद्युक्तसैन्यानां स्थापने, तदाधारे-कटके च। [वे-स्त। क्षरणे न०।

स्कन्न त्रि० स्कन्द-क्त। च्युते, गलिते, क्षरिते, शुष्के, गते च। भा-

स्कन्भ प्रतिघाते क्र्या० स्वा० उ० सक० सेट्। स्कभ्नाति स्कभ्नोते स्कभ्नोति स्कभ्नुते। अस्कम्भीत् अस्कम्भिष्ट।

स्कभ स्तम्भे भ्वा० आ० सक० सेट् इदित्। स्कम्भते अस्कम्भिष्ट।

स्कु उद्धृतौ आप्रावने च क्र्या० स्वा० उ० सक० अनिट्। स्कुनाति स्कुनीते स्कुनोति स्कुनुते। अस्कौषीत् अस्कोष्ट। [स्कुन्दिष्ट।

स्कुन्द आप्रावने उद्धृतौ च भ्वा०आ०सक०सेट् इदित्। स्कुन्दते अस्कु-

स्कुन्भ रोधने सौ० क्र्या० स्वादि० शाप्यभावो प० सक० सेट्। स्कुभ्नाति स्कुभ्नोति। अस्कुम्भीत्। [दयति।

स्खद विदारे दि०आ० सक० सेट्। स्खद्यते अस्खदिष्ट घटादि० स्ख-

स्खल चले भ्वा० प० सक० सेट् वा घटा० । स्खलति अस्खालीत् स्खलयति स्खालयति ।

स्खलन न० स्खल-भावे ल्युट् । चलने पतने ।

स्खलित न० स्खल—भावे क्त । युद्धादौ प्रहत्या वीरमर्य्यादातः पतने स्खलनमात्रे च । कर्त्तरि क्त । चलिते त्रि० ।

स्तन मेघशब्दे अद० चु० उभ० सक० सेट् । स्तनयति ते अतस्तनत् त ।

स्तन पु० स्तन-अच् । (माइ) स्त्रीणाम् अङ्गभेदे ।

स्तनन न० स्तन-ल्युट् । ध्वनिमात्रे, मेघशब्दे, कुन्थनशब्दे च ।

स्तनन्धय पु० स्त्री० स्तनं धयति धे-खश् मुम् च । अतिशिशौ स्त्रियां ङीप् । [टाप् ।

स्तनप पु० स्त्री० स्तनं पिबति पा क । अतिशिशौ बालके । स्त्रियां

स्तनभर पु० ६त० । स्थूलस्तनभारे तदाभोगे च । [रोगे च ।

स्तनयित्नु पु० स्तन—इत्नु । मेघे, मुस्तके, मेघशब्दे, विद्युति, मृत्यौ,

स्तनवृन्त पु० स्तनस्य वृन्त इवाग्रम् । स्तनाग्रे स्तनशिखायोरग्रे ।

स्तनान्तर न० स्तनयोरन्तरम् । हृदि, स्तनमध्ये च ।

स्तनाभोग पु० ६त० । स्तनस्य परिपूर्णतायाम् ।

स्तनित न० स्तन—भावे क्त । मेघशब्दे, मुरजादिशब्दे च । कर्त्तरि क्त । शब्दिते त्रि० । [अस्तभत् अस्तम्भीत् ।

स्तन्भ रोधने क्र्या० स्वा०प०सक०सेट् क्त्वा वेट् । स्तभ्नाति स्तभ्नोति

स्तन्य न० स्तने भवम् यत् । स्तनजाते दुग्धे ।

स्तब्धरोमन् पु० स्तब्धानि रोमाणि यस्य । शूकरे ।

स्तभ स्तम्भने जडीभावे अक० तत्करणे, क्रियानिरोधे च सक० भ्वा० आ० सेट् इदित् । स्तम्भते अस्तम्भिष्ट । [ण्यादौ, गुच्छे च ।

स्तम्ब पु० स्था अम्बच् किच्च पृ० । काण्डरहिते भिण्टिकादौ वृक्षे,

स्तम्बकरि पु० स्तम्बं गुच्छं करोति कृ इन् । व्रीहिधान्ये । [त्रादौ ।

स्तम्बघन पु० स्तम्बो हन्यतेऽनेन हन—क नि० । स्तम्बोन्मूलके खनि-

स्तम्बघ्न पु० स्तम्बो हन्यतेऽनेन हन-घञर्थे क । स्तम्बोन्मूलके खनि-

मादौ । [अलक् स० । गर्भे ।

स्तम्बेरम पु० स्तम्बे हस्तादीनां काण्डे गुच्छे गुल्मे वा रमते अच्

स्तम्भ पु० स्तम्भ-अच् । (थाम) स्थूणायाम् । भावे घञ् । जडीभावे पु०

स्तम्भन न० स्तम्भ-जडीकरणे भावे ल्युट् । जडीकरणे । करणे ल्युट् ।

तन्त्रोक्ते जडीकरणसाधने प्रयोगभेदे । [मध्ये बाणभेदे ।

स्तम्भन पु० स्तम्भयति स्तम्भ—णिच् ल्यु । कन्दर्पस्य पञ्चसु बाणेषु

स्तव पु० स्तु अप् । प्रशंसायाम्, स्तुतौ च ।

स्तवक पु० स्तु-वुन्, स्था-अवक ष्ट० वा । गुच्छे ।

स्तावक त्रि० स्तु-ण्वुल् । स्तुतिकारके ।

स्तिमित न० स्तिम भावे क्त । आर्द्रतायाम्, अचाञ्चल्ये च । कर्त्तरि

क्त । अचञ्चले, आर्द्रे च त्रि० ।

स्तुत पु० स्तु-क्त । कृतस्तवे ।

स्तुति स्त्री० स्तु-क्तिन् । स्तवे ।

स्तुतिपाठक पु० स्तुतिं पठति पठ ण्वुल् । राजादेर्वन्दिनि ।

स्तुन्भ रोधने सौ० क्र्या० स्वा० आर्यभागी पर० सक० सेट् क्त्वावेट् ।

स्तुभ्नोति स्तुभ्नाति । अस्तुम्भीत् । [जले, निष्कर्षोजने च ।

स्तूप पु० स्तू पक् स्तूप—अच् वा । राशीकृते मृत्तिकादौ । संघाते,

स्तुभ पु० स्तुन्भ मूल० क । छागे । [अस्तृत अस्तरिष्ट ।

स्तृ विस्तारे स्वा० उ० सक० अनिट् । स्तृणोति स्तृणुते अस्तार्षीत्

स्तृ प्रीतौ अक० रक्षणे सक० स्वा० प० अनिट् । स्तृणोति अस्तार्षीत् ।

अपोपदेशत्वात्र षः । [त्वान्न षः ।

स्तृक्ष गतौ भ्वा० पर० सक० सेट् स्तृक्षति अस्तृक्षीत् । अषोपदेश-

स्तृह वधे तु० प० सक० वेट् । स्तृहति अस्तर्हीत् अस्तृक्षत् ।

अषोपदेशत्वान्न षः ।

स्तॄ आच्छादने क्र्या० स्वा० उ० सक० सेट् स्तृणाति स्तृणीते

अस्तारीत् अस्तरिष्ट अस्तरीष्ट अस्तीर्ष्ट । [स्तेनत्—ति ।

स्तेन मदौर्ये चुर० प० उभ० सक० सेट् । स्तेनयति—त अति-

**स्तैन** पु॰ स्तेन—घञ् । चौर्य्ये । अण् । चौरे त्रि॰ ।

**स्तेप** क्षेपे चु॰उभ॰ सक॰ सेट् । स्तेपयति—ते अतिस्तिपत्-त । अषो-
पदेशत्वान्न षः ।

**स्तेम** पु॰ स्तिम—घञ् । आर्द्रीभावे, स्नेहे च ।

**स्तेय** न॰ स्तेनस्य भावः यत् नि॰ । चौर्य्ये "प्रत्यक्षं वा परोक्षं वा
रात्रौ वा यदि वा दिवा । यत् परद्रव्यहरणं स्तेयं तत्परिकी-
र्त्तित" मित्युक्ते परद्रव्यापहारे ।

**स्तेयिन्** त्रि॰ स्तेयमस्त्यस्य इनि । परद्रव्यापहारके । स्त्रियां—ङीप् ।

**स्तैन(न्य)** न॰ स्तेनस्य भावः अण्, ष्यञ् वा । चौर्य्ये परद्रव्यापह-
रणे । स्तेन एव स्वार्थे ष्यञ् । चोरे त्रि॰ ।

**स्तैमित्य** न॰ स्तिमितस्य भावः ष्यञ् । जाड्ये, स्नेहे, आर्द्रीभावे च ।

**स्तोक** पु॰ स्तुच—घञ् । चातके, जलबिन्दौ च । अल्पे त्रि॰ ।

**स्तोकक** पु॰ स्तोकाय जलाय कायति शब्दायते कै—क । चातके ।

**स्तोत्र** न॰ स्तु—ष्ट्रन् । स्तवे—गुणकर्म्मादिभिः प्रशंसने ।

**स्तोभ** पु॰ स्तुभ—घञ् । अर्थशून्ये गानादिस्वरपत्तिपूरणार्थे शब्दभेदे,
यथा सामवेदे इडा, होइ, प्रभृतयः । हेलने, स्तम्भने च ।

**स्तोम** आत्मगुणाविष्करणे अद॰ चु॰ उभ॰ अक॰ सेट् । स्तोमयति—ते
अतुस्तोमत्—त ।

**स्तोम** पु॰ स्तोम—घञ् स्तु—मन् वा । समूहे, यज्ञे, स्तवे, च, मस्तके,
धने, शस्ये, लौहदण्डे च न॰ । वक्रे त्रि॰ ।

**स्त्यान** न॰ स्त्यै—भावे क्त तस्य नः । स्नेहे, घनत्वे, संहतौ, आलस्ये,
प्रतिशब्दे च । कर्त्तरि क्त । संहतिकारके, ध्वनिकारके च त्रि॰ ।

**स्त्यै** संहतौ ध्वनौ भ्वा॰ अक॰ अनिट् । स्त्यायति अस्त्यासीत् ।
अषोपदेशत्वान्न षः ।

**स्त्री** स्त्री॰ स्तु—ड्रट् । योषिति नार्य्याम् ।

**स्त्रीगवी** स्त्री॰ स्त्री चासौ गौश्च षच् समा॰ । (गाभि) रोहिण्याम् ।

**स्त्रीचित्तहारिन्** पु॰ स्त्रियाश्चित्तं हरति हृ—णिनि । शोभाञ्जने ।
स्त्रीमनोहारके त्रि॰ ।

स्त्रीचिह्न न० स्त्रियाः असाधारणं चिह्नम् । योनौ ।

स्त्रीचोर पु० स्त्रियाः चोर इव । कामुके ।

स्त्रीजित पु० स्त्रिया जितः जि—क्त । स्त्रीवश्ये ।

स्त्रीधन न० ६त० । स्त्रीस्वत्वाश्रये द्रव्यमात्रे इति मिताक्षरादयः ।
"अध्यग्न्यध्यावाहनिकं भर्तृदायं तथैव च । भ्रातृदत्तं पितृभ्याञ्च षड्विधं स्त्रीधनं स्मृत" मित्येवं परिगणिते स्त्रीस्वत्वाश्रये धने इति दायभागादयः ।

स्त्रीधर्म्म पु० ६त० । ऋतौ नारीकुसुमविकाशे रजसि ।

स्त्रीधर्म्मिणी स्त्री० स्त्रीधर्मोऽस्त्यस्या इनि । ऋतुमत्यां स्त्रियाम् ।

स्त्रीपुंधर्म्म पु० स्त्रियाः पुंसश्च धर्मः तमधिकृत्य व्यवहारो वा । स्त्रीपुंसयोः यथाशास्त्राचाररूपे धर्मे तद्विषयके अष्टादशसु विवादेषु मध्ये विवादभेदे "स्त्रीपुंधर्मोविभागश्चेति" स्मृतिः । [यो: ।

स्त्रीपुंस पु० द्विव० स्त्री च पुमांश्च अच् समा० । मिलितयोः स्त्रीपुरु-

स्त्रीपुंसलक्षणा स्त्री० स्त्रीपुंसयोर्लक्षणमस्याम् । स्तनश्मश्रुप्रभृतिस्त्री-पुरुषचिह्नधारिण्यां स्त्रियाम् ।

स्त्रीप्रिय पु० ६त० । आम्रवृक्षे । नारीप्रियमात्रे त्रि० ।

स्त्रीलिङ्ग पु० स्त्रिया इव लिङ्गं तत्कार्यं यस्य । स्त्रीलिङ्गविहितव्याकरणोक्तसंस्कारयुक्ते शब्दभेदे । ६त० स्त्रीचिह्ने न० ।

स्त्रीवश पु० ६त० । स्त्रीवशीभूते ।

स्त्रीविधेय पु० ६त० । स्त्रीवशीभूते । [भेदे ।

स्त्रीसंग्रहण न० स्त्रियाः संग्रहणं यत्र । परस्त्रीहरणरूपेविवाद-

स्त्रीसभ न० स्त्रीणां सभा क्लीवत्वम् । स्त्रीसमाजे ।

स्त्रीसेवा स्त्री० ६त० । स्त्रीसम्भोगे, व्यवायधर्मेण नारीसेवने ।

स्त्रीस्वभाव पु० स्त्रिया इव स्वभावो यस्य । अन्तःपुररक्षके षण्ढके ६त० । स्त्रीणां शीले ।

स्त्रैण न० स्त्रिया इदम् अण् नञ् । स्त्रीस्वभावे, "स्त्रैणेन नीता विकृतिं लघिम्नेति" भट्टिः । स्त्रीविधेये, स्त्रीसम्बन्धिनि च त्रि० ।

**स्थ** त्रि० स्था—क । स्थितिशीले प्रायेण उत्तरपदस्थित एवार्थं प्रयुज्यते यथा पदस्थः मार्गस्थः निकटस्थ इत्यादि ।

**स्थग** संवरणे भ्वा० पर० सक० सेट् घटा० मित्‌वे न हृस्वः । स्थगति, अस्थगीत् । अथोपदेशत्वान्न षः ।

**स्थगन** न० स्थग—ल्युट् । आच्छादने ।

**स्थगित** त्रि० स्थग—क्त । आवृते तिरोहिते ।

**स्थगी** स्त्री० स्थग्यतेऽनया घञर्थे क गौ० ङीष् । ताम्बूलपात्रे करङ्के ।

**स्थण्डिल** न० स्थल इलच् तुक् लस्य ड । चत्वरे, उन्नत्यवनति शून्ये समीकृते प्रदेशे "निषेदुषी स्थण्डिल एव केवले" इति कुमारः । यज्ञार्थं परिष्कृतस्थाने, होमार्थं कुण्डप्रतिनिधित्वेन बालुकादिभिः कर्त्तव्ये मण्डलभेदे च "नित्यं नैमित्तिकं कर्म स्थण्डिले वा समाचरेत् । हस्तमात्रं तु तत् कुर्य्यात् बालुकाभिः समन्ततः" इति तन्त्रम् ।

**स्थण्डिलशायिन्** पु० स्थण्डिले चत्वरे शेते व्रतवशात् शी-णिनि । व्रतार्थं चत्वरे शयितरि । "स्थण्डिलशायिनस्येति" भट्टिः ।

**स्थण्डिलेशय** पु० स्थण्डिले शेते अच् अलुक् समा० । व्रतार्थं चत्वरे शयितरि ।

**स्थपति** पु० स्था—क तस्य पतिः । कञ्चुकिनि, शिल्पिभेदे, (कुमार) कुवेरे, अधीशे, वृहस्पतिसवनामकयागकर्त्तरि च । सत्तमे त्रि० ।

**स्थपुट** त्रि० तिष्ठति स्था—क सं पुटं यत्र । विषमोन्नतप्रदेशे, "स्थपुटगतमपि क्रव्यमव्यग्रमत्तीति" मालतीमाधवम् । विषमस्थाने—सङ्कारिणि—जीवे पु० । [छलधातुनैवायं गतार्थ इत्यन्ये ।

**स्थल** स्थाने भ्वा० पर० अक० सेट् ज्वला० । स्थलति अस्थालीत् ।

**स्थल** न० स्त्री० स्थल—अच् । जलशून्ये—अकृत्रिमे—भूभागे । स्त्रीत्वपक्षे ङीप् "वनस्थलीमर्म्मरपत्रमोक्षा" इति कुमारः । कृत्रिमाकृत्रिमप्रदेशमात्रे, कृत्रिमभूभागे च न० ।

**स्थलकन्द** पु० स्थलजः कन्दः । (वनओल) वन्यायकन्दे ।

**स्थलकमल** न० स्थलजातं कमलम् । स्थलपद्मे ।

**स्थलकुमुद** पु० स्थले कुमुदमस्यस्य साहश्येन अच् । करवीरे ।

**स्थलपद्म** न० स्थलजातं पद्मं शाक० समानमध्याते पुष्पवृक्षे । स्थलजं पद्ममिव । मानके पु० ।

**स्थलपद्मिनी** स्त्री० स्थलपद्मानां समूहः तेषां सन्निकृष्टदेशो वा इनि । स्थलपद्मसमूहे तद्युक्तदेशे च । "ददर्श दूनः स्थलपद्मिनीं नलः" इति नैषधम् ।

**स्थलमञ्जरी** स्त्री० स्थलस्य मञ्जरीव । अपामार्गे ।

**स्थलशृङ्गाट** पु० स्थलजातः शृङ्गाटः शाक० । गोक्षुरे तस्य कण्टकावृतत्वात् तथात्वम् ।

**स्थलेरुहा** स्त्री० स्थले रोहति रुह—क अलुक् स० । घृतकुमार्य्याम्

**स्थलेशय** पु० स्थले शेते शी—अच् अलुक् स० । वराहरुरुप्रभृतौ पशौ—स्थलशायिनि त्रि० ।

**स्थविर** न० स्था—किरच् स्थवादेशः । शैलेये गन्धद्रव्ये । चतुर्मुखे ब्रह्मणि पु० । अचले, स्थिरे, वृद्धे च त्रि० । महाश्रावण्यां स्त्री० ।

**स्थविष्ठ** त्रि० अतिशयेन स्थूलः इष्ठन् ललोपे गुणः । अतिदृढे ईयसुन् स्थवीयानप्यि । अतिदृढे । स्त्रियां ङीप् ।

**स्थाणु** पु० स्था नु पृ० णत्वम् । शिवे, शाखाशून्यवृक्षे च । अस्त्रभेदे पु० स्थिरे त्रि० ।

**स्थाण्डिल** पु० स्थण्डिले शयिताऽण् । व्रतार्थं स्थण्डिले शयितरि ।

**स्थान** न० स्था-ल्युट् । स्थितौ, साहश्ये, अवकाशे सन्निवेशे, वसतौ, ग्रन्थसन्धौ, भाजने, निकटे, व्याकरणोक्ते प्रसङ्गे, (आदिश्यमानस्य यणादेः कारणभूते इगादौ) । नीतिवेदिमासुपचयापचयहीने साम्यावस्थाने च । [चञ्चलत्वात्तस्यास्तथात्वम् ।

**स्थानचञ्चला** स्त्री० स्थाने स्थितापि चञ्चला । वर्वरीवृक्षे अल्पवातेन

**स्थानाध्यक्ष** त्रि० स्थाने अध्यक्षः । स्थानरक्षके ।

**स्थानिक** त्रि० स्थानेऽधिकृतः ठक् । स्थानाध्यक्षे ।

**स्थानिन्** त्रि० स्थानमस्यास्ति इनि । स्थानरक्षके । स्थानं प्रसङ्गः

अवस्थये इति । व्याकरणोक्ते आदिप्रत्ययकारादिः कारके कृताद्दौ "स्थानिवदादेशोऽनल्विधाविति" पाणिनिः ।

स्थानीय न० स्थीयतेऽस्मिन् स्था-आधारे अनीयर् । नगरे । स्थान' ग्रासमर्हति स्थानस्येदम् वा छ । वासयोग्ये, देशे स्थानसम्बन्धिनि च त्रि० । [वर्त्मनि"रघुः । बले, सादृश्ये, करणार्थे च ।

स्थाने अव्य० स्था-न । योग्यत्वे, औचित्ये च "स्थानेभवानेकनराधिप।

स्थापत्य पु० स्थपतिरेव स्वार्थे । ष्यञ् । अन्तःपुररक्षके कञ्चुकिप्रभृतौ । तस्य भावः ष्यञ् । स्थपतिधर्मे न० ।

स्थापन न० स्था-णिच्-ल्युट् । आरोपणे, समाधौ, पुंसवनाख्ये गर्भसंस्कारे च युच् । स्थापनाऽप्य स्त्री० सा च निवेशने च ।

स्थापनी स्त्री० स्थाप्यतेऽनया स्था-णिच्—करणे ल्युट् । पाठायाम् ।

स्थापित त्रि० स्था-णिच्-क्त । निश्चिते, निवेशिते, न्यस्ते च ।

स्थामन् न० स्था-मनिन् । सामर्थ्ये, बले च ।

स्थायिन् त्रि० स्था-णिनि । स्थितिशीले अलङ्कारोक्ते रसानुकूले रत्यादिभावे पु० । विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा । रत्यादी रसतामेति स्थायी भावः सचेतसा मिति" साहित्य० ।

स्थायुक त्रि० स्था-उकञ् । स्थितिशीले । एकग्रामाधिकृते पु० ।

स्थाल न० स्थलति तिष्ठत्यन्नाद्यत्र आधारे घञ् । (थाल) अन्नपात्रे । पाकपात्रे (हाण्डि) स्त्री०गौ० ङीष् ।

स्थालीपाक पु० स्थाल्यां पाकः । गव्यदुग्धेन स्थाल्यां कृते पाकभेदे तद्विधानं यागकर्मणि ।

स्थालीपुलाक पु० स्थाल्याः पुलाकास्तण्डुलाः सन्त्यत्र एक धर्मतोन्यायकत्वेन अच् । मीमांसकोक्ते "स्थालीस्थास्तण्डुला एते सर्वे विक्लित्तिभागिनः । समकालाग्निसंयोगभागित्वात् प्रतिपन्नवत्" इत्यनुमानकल्पके न्यायभेदे यथा एकस्य पाकदर्शनेन अन्येषां पाकज्ञानम् एवं एकरूपाणां सर्वेषामेकधर्माक्रान्तत्वमिति वोधकरूपोद्भावनम् । [वृक्षभेदे ।

स्थालीवृक्ष पु० स्थाल्या वृक्षः । अश्वत्थाकारे स्थालीनिर्हा ीय साधने

स्थावर त्रि० स्था+वरच् । अचलत्वे स्थिरे, वृक्षादौ, भूम्यादौ च स्था-

नर' अङ्गमङ्गेव यद्यपि स्थवन्निति" श्रुतिः। पर्वते पु०।
वहुगुणे न०। [वाक्यालाभिधाने।

स्थाविर न० स्थविरस्य भावः अण्। वृद्धत्वे तच्च सप्ततिवर्षोपगमे भवतीति

स्थासक पु० स्था-ब-स्वार्थादौ कन्। अलङ्कारे, चार्चिक्ये जलवुद्बुदे च।

स्थास्नु त्रि० स्था-स्नु। स्थितिशीले, "स्थास्नुरिवाचिरप्रभेति भट्टिः।

स्थित त्रि० स्था-क्त। स्थिते, ऊर्द्ध्वतया दृश्यमाने, स्थिताया स्था-
नमाचरेरिति" रघुः निश्चले 'प्रतिज्ञायुक्ते स्थितिशालिनि च।

स्थिति स्त्री० स्था-क्तिन् मर्य्यादायां, न्याय्यपथावस्थाने, स्थाने च।

स्थिर पु० स्था-किरच्। पर्व्वते, देवे, वृक्षे, कार्त्तिकेये, शनौ, मोक्षे,
वृषे' धववृक्षे, ज्योतिषोक्तेषु वृषसिंहवृश्चिककुम्भराशिषु च। का-
ठिने, निश्चले च त्रि०। शालमलौ, काकोल्यां, पृथिव्यां, शालप-
र्ण्यां स्त्री०।

स्थिरगन्ध पु० स्थिरोगन्धो यस्य। चम्पकवृक्षे। पाटलायां, केतक्याञ्च
स्त्री०। स्थिरगन्धयुक्ते द्रव्यमात्रे त्रि०।

स्थिरच्छद पु० स्थिरच्छदोयस्य। भूर्ज्जपत्त्रवृक्षे। [च।

स्थिरच्छाय पु० स्थिरा छाया यस्य। वृक्षमात्रे छायाप्रधाने वटादौ

स्थिरजिह्व पु० स्थिरा अचञ्चला जिह्वा यस्य। मत्स्ये।

स्थिरजीविता स्त्री० स्थिरं जीवित मायुर्यत्र यस्याः। शाल्मलीवृक्षे

स्थिरतर त्रि० अतिशयेन स्थिरः तरप्। अत्यन्तस्थिरे। ईश्वरे पु०।

स्थिरपत्त्र पु० स्थिराणि पत्त्राण्यस्य। हिन्ताले।

स्थिरपुष्प पु० स्थिरं पुष्पमस्य। चम्पकवृक्षे बकुलवृक्षे च।

स्थिरपुष्पिन् पु० स्थिरं पुष्पमस्त्यस्य इनि। तिलकवृक्षे।

स्थिरफला स्त्री० स्थिरं फलं यस्याः। कुष्माण्ड्याम्।

स्थिरमति स्त्री० स्थिरा-मतिः। स्थिरचित्ते, स्थिरा मतिर्यस्य। स्थिर-
बुद्धियुक्ते त्रि० "अनिकेतः स्थिरमतिरिति" गीता।

स्थिरयौवन न० पु० स्थिरं यौवनमस्य। विद्याधरादौ देवयोनिभेदे,
चिरस्थायियौवनयुक्ते त्रि०।

स्थिररक्ता स्त्री० स्थिरोरङ्गो रागोयस्याः । नील्याम् ।

स्थिररागा स्त्री० स्थिरोरागोरञ्जनं यस्याः । दारुहरिद्रायाम् ।

स्थिरसाधनक पु० स्थिरं साधयति ल्यु ततः कन् । सिन्दुवारवृक्षे ।

स्थिरसार पु० स्थिरः सारोयस्य । (सेगुण) शाकवृक्षे ।

स्थिराङ्घ्रिप पु० कर्म० । हिन्तालवृक्षे ।

स्थिरायुस् पु० स्थिरमायुर्यस्य दीर्घकालस्थायित्वात् । शाल्मलिवृक्षे ।
 चिरजीविनि त्रि० ।

स्थुड वरणे तुदा० कुटा० पर० सक० सेट् । स्थुडति अस्थुडीत् तुस्थो-
 ड । अघोपदेशत्वान्न षः ।

स्थूणा स्त्री० स्था-नक् ऊदन्तादेशः पृ० । (खुटी) गृहस्तम्भे स्थूनाविशेषे
 गृहदारु ति" सांहि० लौहप्रतिमायाञ्च ।

स्थूरिन् पु० स्था-उरन् किच्च स्थूरो वृषादिर्भारवाहकः स्थूरोऽस्त्यस्य
 साहश्येन इनि । वृषादिवत्पृष्ठेन भारवाहकेऽश्वे । स्थूरस्य भावः
 अण् स्थौरं तदस्त्यस्य इनि । स्थौरीत्यप्यत्र ।

स्थूल वृंहणे अद० चु० उभ० अक० सेट् स्थूलयति-ते अतुस्थूलत्-त

स्थूल त्रि० स्थूल-अच् । पीवरे, (मोटा) कूटे, समूहे च न० पनसे
 पु० । गजपिप्पल्याम्, एर्वारौ, बृहदेलायाञ्च स्त्री० । स्वार्थे कन् ।
 पीवरे त्रि० । संज्ञायां कन् (उलुखड़) तृणभेदे पु० ।

स्थूलकङ्गु पु० कर्म० । वरकधान्ये (चीरधान) ।

स्थूलकणा स्त्री० कर्म० । स्थूलजीरके हृ० । पीनकणयति त्रि० ।

स्थूलकण्टक पु० स्थूलः कण्टकोऽस्य । जालवर्बुरे । संज्ञायां कन्
 अत इत्वम् । शाल्मलीवृक्षे स्त्री० ।

स्थूलकण्टा स्त्री० स्थूलः कण्टः कण्टकोऽस्याः । वृहत्याम् ।

स्थूलकन्द पु० स्थूलः कन्दोऽस्य । रक्तलशुने, सूरणे, हस्तिकन्दे,
 मानके च । [स्यूनौ त्रि० ।

स्थूलचञ्चु पु० । स्थूला चञ्चुरिव शिखाऽस्य । महाचञ्चुशाके । हृञ्-

स्थूलजीरक पु० कर्म० । जीरकभेदे (कालजिरा) ।

स्थूलताल पु० कर्म० । हिन्ताले

स्थूलदण्ड पु० स्थूलो दण्डोऽस्य । देवनडे । स्थूलनालोऽप्यत्र ।
स्थूलदर्भ पु० स्थूलं दर्भं दभ्यतेऽनेन दभ–घञ् । मुञ्जे (मुज) ।
स्थूलदला स्त्री० स्थूलानि दलानि यस्याः । घृतकुमार्याम् ।
स्थूलनास पु० स्थूला नासाऽस्य । शूकरे, स्थूलनासिकोऽप्यत्र । बृह-
 न्नासावति त्रि० । [त्वात्तथात्वम् ।
स्थूलपट्ट पु० स्थूलं पट्टं यस्मात् कार्पासे तस्य स्थूलजपट्टस्य स्थूल-
स्थूलपाद पु० स्थूलाः पीनाः पादा यस्य न पद्भावः । गजे श्लीपद-
 रोगे च । [यवतिक्तायां स्त्री० ङीप् ।
स्थूलपुष्प पु० स्थूलं पुष्पं यस्य । वकवृक्षे । पर्वतजातापराजितायां स्त्री०
स्थूलफल पु० स्थूलं फलमस्य । शाल्मलीवृक्षे । बृहत्फलान्विते त्रि०
 शणपुष्प्यां स्त्री० ङीप् । [व्यादौ भूते ।
स्थूलभूत न० कर्म० । वेदान्तोक्ते प्रत्येकमेकात्मकतामापन्ने पृथि-
स्थूलमरिच न० कर्म० । कक्कोले ।
स्थूललक्ष(क्ष्य) त्रि० स्थूलं लक्षयति दानाय संकल्पते, स्थूलं लक्ष्यं
 वाऽस्य । बहुदातरि ।
स्थूलवर्त्मकृत् पु० स्थूलं वर्त्म करोति कृ-क्विप् । आम्लयष्टिकायाम् ।
स्थूलवल्कल पु० स्थूलं वल्कलमस्य । रक्तलोध्रे । स्थूलत्वचान्विते त्रि०
स्थूलवृत्तफल पु० स्थूलस्य वृत्तस्येव फलमस्य । स्निग्धपिण्डीतकवृक्ष-
 भेदे (मयना) ।
स्थूलवैदेही स्त्री० विदेहे भवा अण् कर्म० । गजपिप्पल्याम् ।
स्थूलशाटक पु० कर्म० । स्थूलवस्त्रे स्थूलशाटिकादयोऽप्यत्र स्त्री० ।
स्थूलशालि पु० कर्म० । महाशालौ । [पीलिकायाम् ।
स्थूलशीर्षिका स्त्री० स्थूलं शीर्षं यस्याः कप् अत इत्वम् । क्षुद्रपि-
स्थूलषट्पद पु० षट् पद इव स्थूलः राज० । वरेलायाम् (बोलता) ।
स्थूलस्कन्ध पु० स्थूलः स्कन्धोऽस्य । लकुचे ।
स्थूलांशा स्त्री० स्थूलः अंशोऽवयवोऽस्याः । गन्धपत्रायाम् ।
स्थूलाम्र पु० कर्म० । आम्रभेदे ।

स्थूलैला स्त्री० कर्म० । हस्तहेलायाम् ।

स्थूलोच्चय पु० स्थूला उच्चया यत्र । गण्डशैले । स्थूलस्य गजस्य उच्चयः । गजमध्यगतौ । वरवृक्षे, गजदन्तच्छिद्रे च ।

स्थेय पु० स्थीयते विवादनिर्णयकतया यस्मिन् स्था-यत् विवादे संशयनिर्णायके (जुरी) पुरोहिते च । स्थिरे त्रि० ।

स्थेयस् त्रि० अतिशयेन स्थिरः ईयसुन् स्थादेशः । स्थिरतरे त्रि० स्त्रियां ङीप् । इष्टन् स्थेष्ठोऽप्यत्र त्रि० । वाल्मने न० ।

स्थैर्य्य न० स्थिरस्य भावः ष्यञ् । स्थिरतायाम् । [द्रव्ये ।

स्थौणेय(क) पु० स्थूणायां तत्समीपे भवः ढक् । ग्रन्थिपर्णे नामगन्ध-

स्थौल्य न० स्थूलस्य भावः ष्यञ् । पीवरत्वे ।

स्नपन पु० स्ना-णिच्-पुक् ल्युट् । जलादिनाऽभिषेककरणे ।

स्नव पु० स्नु-अप् । स्रवणे, क्षरणे च ।

स्नसा स्त्री० स्नस-अच् । स्नायौ ।

स्नातक पु० स्ना-भावे क्त स्नातं वेदाध्ययनानन्तरं समावर्त्तनाङ्ग स्नानं तदस्यास्ति कन् । वेदाध्ययनानन्तरं गार्हस्थ्याय कृतसमावर्त्त-नाङ्गस्नाने ।

स्नातकव्रत न० इत० । स्नातककर्त्तव्ये स्मृत्युक्ते व्रतभेदे, "अलाभे चैव कन्यायाः स्नातकव्रतमाचरेदिति" स्मृतिः ।

स्नान न० स्ना-ल्युट् । शोधने, अवगाहने मज्जने, च तच्च । मन्त्रादि कारणभेदादष्टविधं विस्तरो वाचस्पत्ये ।

स्नानतृण न० स्नानार्थं तृणम् कुशे ।

स्नानीय त्रि० स्नानाय हितम् छ । स्नानसाधने तैलोद्वर्त्तनादौ ।

स्नायु स्त्री० स्नाति-शुध्यति दोषोऽनया स्ना उण् । शरीरस्थे वायु-वाहिनाडीभेदे ।

स्निग्ध त्रि० स्निह-क्त । स्नेहयुक्ते, वयस्ये, मसृणे, चिक्कणे च । रक्तैरण्डे, सरलद्रवे च पु० । भक्तमण्डे न० मेदायां स्त्री० ।

स्निग्धतण्डुल पु० कर्म० । षष्टिधान्ये ।

स्निग्धता स्त्री० स्निग्धस्य भावः । स्नेहे, प्रियत्वे च ।

स्निग्धदारु पु० स्निग्धं दारु काष्ठमस्य । सरलवृक्षे, देवदारुवृक्षे च ।

स्निग्धपत्रक पु० स्निग्धं पत्रमस्य कप् । हस्तिकरञ्जे, गुच्छकरञ्जे, गर्भरहवे च । बदर्य्यां, पालक्यां, काश्मीर्य्याञ्च स्त्री० ।

स्निग्धपिण्डीतक पु० कर्म० । मदनवृक्षभेदे, पिण्डीतकभेदे ।

स्निग्धफला स्त्री० स्निग्धं फलमस्याः । नाकुल्याम् ।

स्निट स्नेहे चु० उ० सक० सेट् । स्नेटयति—असिस्निटत्-त । अणोपदेशत्वान्न षः ।

स्नु पु० सानु+स्नु आदेशः स्ना—कु वा । पर्वतस्य समभूभागे ऽस्नाय्यौ स्त्री० ।

स्नुक्छद पु० स्नुह्यति किन् कुलम् स्नुक्, छदोऽस्य । चोरकाख्यकीटके ।

स्नुत पु० स्नु—क्त । चरिते जलादौ ।

स्नुषा स्त्री० स्नु—सक् । पुत्रवध्वाम्, स्नुहीवृक्षे च ।

स्नुह्(हा) स्त्री० स्नुह—किन् वा टाप् । स्नुहीवृक्षे ।

स्नुहि(ही) स्त्री० स्नुह—इन् वा ङीप् । (मनसासिजु) वृक्षे । "स्नुहीविटपसंभिता निति" पुराणम् ।

स्नेह पु० स्निह-घञ् । प्रेमणि, तैलादिरसभेदे, न्यायोक्ते गुणभेदे च यद्वशात् दाहानुकूल्यम् ।

स्नेहन न० स्निह-णिच् ल्युट् । तैलादिमर्द्दने अभ्यङ्गे ।

स्नेहप्रिय पु० स्नेहः तैलादिः प्रियोऽस्य । प्रदीपे ।

स्नेहभू स्त्री० ६त० । श्लेष्माख्ये देहस्थे धातुभेदे, स्नेहमात्रे च ।

स्नेहरङ्ग पु० स्नेहेन रज्यते रञ्ज-कर्म्मणि घञ् । तिले ।

स्नेहवत् त्रि० स्नेहोऽस्त्यस्य मतुप् मस्य वः । स्नेहयुक्ते स्त्रियां ङीप् । सा च मेदायां पु० स्त्री० ।

स्नेहविद्ध न० स्नेहेन विद्धम् । देवदारुणि ।

स्नेहवीज पु० स्नेहाढ्यं वीजमस्य । प्रियालवृक्षे । ६त० स्नेहकारणे न० ।

स्नेहाश पु० स्नेहमश्नाति अश—अण् । प्रदीपे ।

स्नेहिन् पु० स्निह-णिनि । वयस्ये बन्धौ, स्नेहयुक्ते त्रि० स्त्रियां ङीप् ।

स्पद ईषच्चलने भ्वा० आ० अक० सेट् इदित् । स्पन्दते अस्पन्दिष्ट ।

स्पन्द पु० स्पदि घञ् । ईषच्चलने, ईषत्कम्पे, क्रियाभेदे च नेत्रस्पन्दादौ शुभाशुभविवेचनं वाचस्पत्ये । [अध्यर्द्धेट ।
स्पर्द्ध संघर्षे (पराभिभवेच्छायाम्) भ्वा० आत्म० अक० सेट् । स्पर्द्धते
स्पर्द्धा स्त्री० स्पर्द्ध-अ । संघर्षे पराभिभवेच्छायां, साम्ये, अमोघत्वे च
स्पर्श पर्शने, त्यागे च चु० उ० सक० सेट् । स्पर्शयति ते स्पर्शं कृ त
स्पर्श पु० स्पर्श-स्पृश-वा अच् घञ् वा । न्यायोक्ते त्वगिन्द्रियग्राह्ये गुणभेदे, ग्रहणे, रोगे, युद्धे, गुप्तचरे, उपतापके च । वायौ पु० स्पर्शके त्रि० । स्पृश-णिच् अच् । दाने स्पृश्यन्ते । वायुना जिह्वादयोऽत्यत्र, घञ् । कादिषु मावसानेषु वर्ग्यवर्णेषु पु० ।
स्पर्शन न० स्पर्श-स्पृश-वा ल्युट् । ग्रहणे, स्पर्शे च । णिच् ल्युट् । स्पर्शने, दाने च । स्पृश-कर्त्तरि ल्यु । वायौ पु० ।
स्पर्शलज्जा स्त्री० स्पर्शमात्रेण लज्जते लज्ज-अच् । लज्जालु च ।
स्पर्शशुचा स्त्री० स्पर्शे शुचा । शतमूल्याम् ।
स्पर्ष्टृ त्रि० स्पृश-तृच् । उपतापयितरि । रोगे पु० । अस्पृष्टायत
स्पश ग्रन्थे बाधने च भ्वा० उभ० सक० सेट् । स्पशति-ते अस्पशीत्-अस्पाशीत् । अस्पशिष्ट । [स्पशेति” माधः ।
स्पश पु० स्पश-अच् । चरमात्रे, युद्धे, गूढचरे, च । “राजनीतिरप-
स्पष्ट त्रि० स्पश-क्त नि० इडभावः । व्यक्ते, स्फुटे च ।
स्पृ प्रीतौ अक० प्रीणने रक्षणे पालने च सक० स्वा० पर० अनिट् । स्पृणोति अस्पार्षीत् ।
स्पृक्का स्त्री० स्पृश-क्क पृ० शस्य कः पृक्कायाम् । [अस्पृक्षत् ।
स्पृश स्पर्शे तु० पर० सक० अनिट् । स्पृशति अस्प्राक्षीत् अस्पार्क्षीत्
स्पृशा स्त्री० स्पृश-क । सर्पघातिमौषधौ । कण्टकार्य्यां स्त्री० ङीप् ।
स्पृष्ट त्रि० स्पृश-क्त कृतस्पर्शे । भावे क्त । स्पर्शे न० ।
स्पृष्टास्पृष्ट न० स्पृष्टेन सा सम्यक् स्पृष्टम् । परस्परस्पर्शने ।
स्पृष्टास्पृष्टि न० स्पृश-भावे-क्त नञ्+स्पृश-क्तिन्, स्पृष्टश्च अस्पृष्टिश्च द्वयोः समाहारः । स्पर्शास्पर्शयोः । “नगरे ग्रामदाहे च स्पृष्टा-

स्पृहि न दुष्यतीति" स्पृतिः । [स्पृत त ।

स्पृह इच्छायां अद० चुरा० उभ० सक० सेट् । स्पृहयति-ते अपस्पृ-

स्पृहणीय त्रि० स्पृह-अनीयर् । वाञ्छनीये, श्लाघ्ये च "अपी

 वताचि स्पृहणीयवीर्य्य" इति कुमारः ।

स्पृहयालु त्रि० स्पृह-आलुच् । स्पृहायोगे ।

स्पृहा स्त्री० स्पृह-अङ् । इच्छायाम् "मिथुने स्पृहायतीति" कुमारः

स्पृह्य पु० स्पृह-यत् । मातुलुङ्गकवृक्षे । वाञ्छनीये त्रि० ।

स्फट विशीर्णतायाम् अक० भ्वा० पर० सेट् । स्फटति अस्फटीत्-

 अस्फाटीत् । इदिदयमप्यत्रार्थे स्फण्टते अस्फण्टीत् ।

स्फट पु० स्त्री० स्फट-अच् । सर्पफणायाम् ।

स्फटि(टी) स्त्री० स्फट-इन् वा ङीप् । (फट्किरि) वणिग्द्रव्यभेदे ।

स्फटि(टी)क पु० स्फटिर(टी)व इवार्थे कन् । स्वनामख्याते मणौ

 स्वार्थे ऽण् । स्फाटिकमप्यत्र न० । [कमयपर्वते च ।

स्फटिकाचल पु० स्फटिक इव शुभ्रः अचलः । कैलासपर्वते, स्फाटि-

स्फटिकाद्रिभिद्(द) पु० स्फटिकाद्रिं स्फाटिकपर्वतं भिनत्ति सादृश्यात्

 भिद-क्विप् क वा कर्पूरे ।

स्फटिकाभ्र पु० स्फाटिकवर्णः अभ्र इव कर्पूरे ।

स्फटिकारि पु० ६त० (फट्किरि) वणिग्द्रव्यभेदे तस्य स्फटिकतुल्य-

 दीप्तिमत्त्वात्तथात्वम् । [स्फण्डत त ।

स्फड परिहासे चु० उभ० अक० सेट् इदित् । स्फण्डयति-ते अप-

स्फर चले स्फूर्त्तौ च तुदा० प० अक० सेट् । स्फरति अस्फारीत् ।

स्फरण न० स्फर-ल्युट् । स्फुरणे ।

स्फल चले स्फूर्त्तौ च तुदा० पर० अक० सेट् । स्फलति अस्फालीत् ।

स्फाटिकोपल पु० स्फटिकमेव अश्म् कर्म० । स्फटिके ।

स्फाति स्त्री० स्फाय-क्तिन् । वृद्धौ । [निष्ठायामनिट् स्फीतः ।

स्फाय वृद्धौ भ्वा० आ० अक० सेट् । स्फायते अस्फायि-अस्फायिष्ट ।

स्फार पु० स्फाय रक् । स्वर्णबुद्बुदे । विपुले, विकटे, प्रचुरे च त्रि०

स्फारण न० स्फुर-णिच्-स्फारादेशः ल्युट् । विकाशने ।

स्फाल पु० स्फल-घञ् । स्फूर्त्तौ ।

स्फिग्घातन पु० स्फिचं घातयति हन-स्वार्थे णिच्-ल्यु । काट्फले ।

स्फिच् स्त्री० स्फाय क्विप् । कटिप्रोथे, तत्स्थे वातजे रोगभेदे च ।

स्फिट हतौ हिंसे अनादरे च चु० उभ० सक० सेट् । स्फेटयति ते अपिस्फिटत् त ।

स्फिर त्रि० स्फाय-किरच् । प्रचुरे, वृद्धे च ।

स्फीत त्रि० स्फाय-क्त स्फीभावः । वृद्धे-समृद्धे च ।

स्फुट भेदे चु० उभ० सक० सेट् । स्फोटयति ते अपुस्फुटत् त ।

स्फुट विकाशे भ्वा० प० अक० सेट् । स्फोटति अस्फुटत् अस्फोटीत् ।

स्फुट विकाशे तु० कुटा०प०अक०सेट् । स्फुटति अस्फुटीत् पुस्फोट ।

स्फुट विदलने भ्वा० आत्म० अक० सेट् । स्फोटते अस्फोटिष्ट ।

स्फुट हावे चुरा० उभ० अक० सेट् । इदित् स्फुण्टयति ते अपुस्फुण्टत् त ।

[अपुस्फुटत् त ।

स्फुट हिंसे चु० उभ० सक० सेट् प्रायेणाङ्पूर्व्वः । आस्फोटयति ते

स्फुट विकाशे अद० चु० उभ० सक० सेट् । स्फुटयति ते अपुस्फुटत् त

स्फुट त्रि० स्फुट-क । विकशिते, व्यक्ते, भिन्ने, शुक्ले च । ज्योतिषोक्तेषु मेषादिराशिषु अंशविशेषस्थितेषु सूर्य्यादिग्रहेषु पु० तेषां तत्तदंशकलादिषु गतौ स्त्री० । उत्प्रेक्षाया द्योतने न० । सर्पफणायां स्त्री० ।

स्फुटन न० स्फुट ल्युट् । विकशने, विदलीभावे च ।

स्फुटबन्धनी स्त्री० स्फुटं बन्धनं यस्याः गौ० ङीष् । कपोतपर्ण्याम् ।

स्फुटित त्रि० स्फुट-क्त । विकशिते, भिन्ने "दग्धे वा स्फुटितेऽथ वेति" पुराणम् व्यक्तीकृते, परिहासिते च ।

स्फुटि(टी) स्त्री० स्फुट-इन् वा ङीप् । पादस्फोटरोगे (फोड़ा) कर्कटीफले च (फुटि) ।

स्फुट्ट अनादरे चु० उ० सक० सेट् । स्फुट्टयति ते अपुस्फुट्टत् त ।

स्फुड़ वरणे तु० कु० पर० सक० सेट् । स्फुडति अस्फुडीत् पुस्फोड़ ।

स्फुड विकाशे भ्वा० आत्म० अक० सेट् इदित् । स्फुण्डते अस्फुण्डिष्ट ।

स्फुड परिहासे चु० उ० सक० सेट् इदित्। स्फुण्डयति ते अपु-
स्फुण्डत् त।

स्फुर स्फुरणे तु० कुटा० प० अक० सेट्। स्फुरति अस्फुरीत् पुस्फोर।
"चारु पुस्फोर बाहुरिति" भट्टिः।

स्फुरण न० स्फुर-ल्युट्। ईषत्स्पन्दने। युच्। तत्रैव स्त्री०।

स्फुर्च्छ विस्मरणे भ्वा० प० सक० सेट्। स्फूर्च्छति अस्फूर्च्छीत्।

स्फुर्ज वज्रशब्दे भ्वा० प० अक० सेट्। स्फूर्जति अस्फूर्जीत्।

स्फुल स्फूर्त्तौ चले च अक० सञ्चये सक० तुदा० कुटा० प० सेट्।
स्फुलति अस्फुलीत्। पुस्फोल।

स्फुल न० स्फुल-क। वस्त्रागारे (ताँबु)।

स्फुलन न० स्फुल-ल्युट्। स्फुरणे।

स्फुलिङ्ग पु० स्त्री० स्फुल-इङ्गच्, स्फुत् इत्यव्यक्तः शब्दो लिङ्गति गच्छति
यस्मात् लिगि-घञ् पृ० वा। अग्निकणे। [ङ्गयुक्ते त्रि०।

स्फुलिङ्गिनी स्त्री० स्फुलिङ्ग+अस्त्यर्थे इनि। अग्निज्वालायाम् स्फुलि-

स्फूर्जथु पु० स्फुर्ज अथुच्। वज्रपातशब्दे।

स्फूर्त्ति स्त्री० स्फुर्च्छ स्फुर-वा क्तिन्। स्फुरणे विकाशने प्रतिभायाञ्च।

स्फूर्त्तिमत् पु० स्फूर्त्तिरस्त्यस्य मतुप्। पाशुपताख्ये शैवभेदे प्रतिभायुक्ते
विकाशयुक्ते च त्रि०।

स्फेयस् त्रि० अतिशयेन स्फिरः, ईयसु स्फादेशः। अतिप्रचुरे, स्त्रियां
ङीप्। इष्ठन्। स्फेष्ठोऽप्यत्र त्रि०।

स्फोट पु० स्फुटत्यर्थो यस्मात् स्फुट-घञ्। व्याकरणोक्ते वर्णाभिव्यङ्ग्ये
पूर्वपूर्ववर्णानुभवसंस्कृतचरमवर्णव्यङ्ग्ये अर्थप्रत्यायके अखण्डे श-
ब्दभेदे "शृणोति य इमं स्फोटमिति" भागवतम्। "न स्फोटः
प्रतीत्यप्रतीतिभ्यामिति" शारीरकसूत्रम् यथा च वर्णेषु यथानां
नार्थबोधकत्वं तथा प्रपञ्चितमस्माभिः, शब्दार्थरत्ने। व्रणभेदे
च (फोड़ा)।

स्फोटक पु० स्फुट-ण्वुल्। (फोड़ा) व्रणभेदे विदारके च।

स्फोटन न० स्फुट-ल्युट्। विदारणे, विकाशने च।

स्फोटनी स्त्री० स्फुट्यतेऽनया स्फुट+ल्युट् ङीप् । मणिवेधनकरणे यन्त्रभेदे (भोमरी) । [भल्लातके ।

स्फोटबीजक पु० स्फोटस्य व्रणभेदस्य बीजम् ततः स्वार्थे कन् ।

स्फोटायन पु० स्फोट एवायनं अर्थबोधकतयाश्रयणं यस्य । अर्थबोधकत्वेन स्फोटाभ्युपगन्तरि वैयाकरणे मुनिभेदे "अवङ् स्फोटायनस्येति" पाणिनिः ।

स्फ्य न० स्फा—य यत् नि० । खड्गाकारे यज्ञार्थे काष्ठभेदे ।

स्म अव्य० स्मि—ड । अतीते, पादपूरणे च ।

स्मय पु० स्मि—अच् गर्वे, अद्भुते च ।

स्मर पु० स्मरति प्रियमनेन स्मृ—अप् । कामदेवे । भावे अप् । स्मरणे ।

स्मरगृह न० स्मरस्य गृहमिव । स्त्रीचिह्नभेदे स्मरमन्दिरादयोऽप्यत्र ।

स्मरण न० स्मृ—ल्युट् । ज्ञातवस्तुनोऽनुभवाधीनसंस्कारजन्ये उद्बोधकसहकारेण जायमाने ज्ञानभेदे आध्याने चिन्तने च ।

स्मरदशा स्त्री० स्मरकृता दशा । कामिनां स्मरकृतासु नयनप्रीत्यादिषु दशसु दशासु । विस्तरो वाचस्पत्ये ।

स्मरप्रिया स्त्री० ६ त० । स्मरभार्य्यायाम् रतौ ।

स्मरवीथिका स्त्री० स्मरस्य वीथिकेव प्राप्तिहेतुत्वात् । वेश्यायाम् ।

स्मरहर पु० स्मरं हरति नाशयति हृ-अच् । महादेवे स्मरमर्दनादयोऽप्यत्र । [स्त्रीणां स्मरोद्दीपनम् ।

स्मराङ्कुश पु० स्मरस्याङ्कुश इव उत्तेजकत्वात् । नखे, नखाघातेन हि

स्मराम्र पु० स्मरप्रिय आम्रः । राजाम्रे ।

स्मरासव पु० स्मरोद्दीपक आसवः । लालायाम् कामिनां तत्पाने हि स्मरोद्दीपनात्तस्यास्तथात्वम् ।

स्मार्त्त त्रि० स्मृतौ विहितः स्मृतिं वेत्त्यधीते वा अण् । स्मृतिविहिते स्नानादौ ''अन्योऽपि स्मार्त्तमाचरेदिति' स्मार्त्तं वैदिकवत् चरेदिति'' च स्मृतिः स्मृतिशास्त्राभिज्ञे च ।

स्मि अनादरे विकासे च भ्वा० आ० सक० अट् । स्मयते असिष्मियत ।

अणोपदेशत्वात् न षः । अन्यतोविषये आययतीत्येव । अयं भ्वादि-
रपि अनिट् । अयते अस्मेष्ट । [इत् त ।

स्मिट अनादरे सक० मुद्गे अक० चु० उभ० सेट् । स्मेटयति ते असिस्मि-
स्मित न० स्मि—क्त । ईषद्धास्ये "मुखं विकसितस्मितमिति" भाकतीमा-
धवम् । विकसिते, विस्मिते च त्रि० ।

स्मील निमेषणे भ्वा० पर० अक० सेट् । स्मीलति अस्मीलीत्

स्मृ स्मरणे भ्वा० पर० सक० अनिट् । स्मरति अस्मार्षीत् ।

स्मृ कौतुहल्ये भ्वा० प० सक० अनिट् घटा० स्मरति अस्मार्षीत् ।

स्मृत त्रि० स्मृ—क्त । कृतस्मरणे स्मृतिविषये ।

स्मृति स्त्री० स्मृ—क्तिन् अनुभूतवस्तुन उद्बोधकसहकारेण संस्काराधीने
ज्ञानभेदे । स्मर्यते वेदधर्मोऽनेन करणे क्तिन् । धर्मशासनशास्त्रे
वेदार्थानुभवजन्ये वेदार्थानुवादके मुनिप्रणीते वाक्यरूपे शास्त्रे ।
"वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदामिति" मनुः ।

स्मृतिहेतु पु० ६त० । संस्कारे वासनारूपे गुणभेदे ।

स्मेर त्रि० स्मि-रन् । विकसिते ईषद्धास्यान्विते च "मद्भाजनः स्मेरमुखो-
भविष्यतीति" कुमारः ।

स्याद पु० स्यन्द—घञर्थे क । वेगे । [असुस्रत् अस्यन्दिष्ट । अस्यन्त ।

स्यन्द स्रवणे भ्वा०आ०लुङ्, लृटि लृङि च उभ० अक०वेट् । स्यन्दते

स्यन्द पु० स्यन्द—घञ् । क्षरणे, प्रस्रवे ।

स्यन्दन न० स्यन्द—भावे ल्युट् । क्षरणे । कर्त्तरि ल्यु । जले न० ।
रथे, तिनिशवृक्षे च पु० । [रोहेण योद्धरि ।

स्यन्दनारोह पु० स्यन्दनमारोहति युद्धार्थम्, आ+रुह कण् । रथा-

स्यन्दनि पु० स्यन्द—अनि । तिनिशवृक्षे । ङीप् । लालायां स्त्री० ।

स्यन्दिन् त्रि० स्यन्द+णिनि । । प्रस्रविणि । लालायां स्त्री० ङीप् ।

स्यन्न त्रि० स्यन्द—क्त स्रुते जलादौ ।

स्यम ध्वनने भ्वा०पर०अक०सेट । ज्वलादि० घटादि० । स्यमति अस्यमीत्।

स्यम वितर्के चु० उ० सक—सेट् । स्यामयति ते असिस्यमत् त ।

स्रम ध्याने कद० चु० उभ० सक० सेट् । स्रमयति असिस्रमत् त ।

स्यमन्तक पु० स्यम+अन् संज्ञायां कन् । श्रीकृष्णस्य करस्थे मणिभेदे तस्य सुवर्णादिकं नाशसत्त्वाभिधाने वक्ष्यते ।

स्यमीका स्त्री० स्यम-ईकक् । वल्मीके । कामे, मेघे च पु० ।

स्यूत त्रि० सिव-क्त । सूच्यादिना ग्रथिते वस्त्रादौ । सूत्रपिटपात्रे पु० । पु० स्योत् । स्योतोऽप्यत्र ।

स्यूति स्त्री० सिव-क्तिन् । सूच्यादिना वस्त्रादिसीवने ।

स्यून पु० सिव-नक् । सूर्य्ये, किरणे, सूच्यादिस्यूतवस्त्रखण्डनिर्मिते पदार्थे (गुदड़ी) च ।

स्रंसन न० स्रन्स-णिच्-ल्युट् । अर्द्धगतस्याधोनयने पातने । युच् । स्रंसनाप्यत्र स्त्री० ।

स्रंसिन् त्रि० स्रन्स-णिनि । अधःपतनशीले । पीलुवृक्षे पु० ।

स्रक गतौ भ्वा० आत्म० सक० सेट् इदित् । स्रङ्कते अस्रङ्किष्ट ।

स्रग्वत् त्रि० स्रज् माल्यमस्त्यस्य मतुप् मस्य वः कुत्वम् । माल्यधारिणि । विनि । स्रग्वीत्यप्यत्र । उभयत्र । स्त्रियां ङीप् ।

स्रज् स्त्री० सृज्यते सृज-क्विन् नि० । माल्ये ।

स्रन्स पतने भ्वा० आत्म० लुङि उ० अक० सेट् क्त्वावेट् । स्रंसते अस्रसत् अस्रंसिष्ट । ["नास्रसत् करिणां ग्रैवं त्रिपदी" रघुः ।

स्रन्स प्रमादे भ्वा० आ० अक० सेट् क्त्वावेट् । स्रंसते अस्रंसिष्ट ।

स्रम्भ अनवधाने भ्वा० आ० अक० सेट् क्त्वावेट् । स्रम्भते अस्रम्भिष्ट ।

स्रम्भ विश्वासे भ्वा० आत्म० लुङि उ० अक० सेट् क्त्वावेट् । स्रम्भते अस्रभत् अस्रम्भिष्ट ।

स्र(स्रा)व पु० स्रु-अप् घञ् वा । क्षरणे । कर्त्तरि अच् । निर्झरे ।

स्रवण न० स्रु-ल्युट् । मूत्रजले, घर्मे च । भावे ल्युट् । क्षरणे ।

स्रवन्ती स्त्री० स्रु-शतृ ङीप् । नद्याम् ओषधिभेदे, दुग्धस्रवणे च । मतुप् । स्रववविशिष्टे त्रि० । स्त्रियां ङीप् ।

स्रवा स्त्री० स्रु-अच् । मूर्वायाम् ।

स्रष्टृ पु० सृज-तृच् । जगत्कर्त्तरि, चतुर्मुखे, शिवे च । सृष्टिकर्त्तरि त्रि० स्त्रियां ङीप् ।

स्रस्त त्रि० स्रन्स-क्त । च्युते पतिते ।

स्रस्तर पु० स्रन्स-तरच् किच्च । आसने ।

स्राक् अव्य० स्रु-डाक । त्वरिते द्रागित्यर्थे ।

स्रावक न० स्रावयति स्रु-णिच्-ण्वुल् । मरिचे । निःस्रावके त्रि० ।

स्रिम्भ हिंसे भ्वा० प० सक० सेट् क्त्वावेट् । स्रिम्भति अस्रिम्भीत् ।

स्रिभ हिंसे भ्वा० प० सक० सेट् क्त्वावेट् । स्रेभति अस्रेभीत् ।

स्रिव शोषे अक० दिवा० प० गतौ सक० सेट् क्त्वावेट् । स्रीव्यति
    अस्रेवीत् ।

स्रु गतौ सक० क्षरणे अक० भ्वा० प० अनिट् । स्रवति असुस्रुवत् ।

स्रुग्दारु पु० स्रुचे यज्ञपात्राय दारु यस्य । विकङ्कत वृक्षे ।

स्रुघ्न पु० देशभेदे । सोऽस्याभिजनः अण् गौ० ङीप् । सर्जिकाक्षारे स्त्री० ।

स्रुच् स्त्री० स्रु-क्विप् चिट् च । षटपञ्चाकृतौ विकङ्कतकाष्ठजे बाहुमात्रे,
    यज्ञपात्रभेदे ।

स्रुत त्रि० स्रु-क्त । क्षरिते जलादौ, गते च । हिङ्गुपत्र्यां स्त्री० ।

स्रुव पु० स्त्री० स्रु-क । खदिरकाष्ठभवे हस्तमिते यज्ञपात्रभेदे ।
    सल्लक्याम् मूर्वायाञ्च स्त्री० ।

स्रू स्त्री० स्रु-क्विप् नि० । यज्ञपात्रभेदे । निर्झरे च ।

स्रै विक्लित्तौ-भ्वा० पर० अक० अनिट् । स्रायति अस्रासीत् ।

स्रोत न० स्रु-तन् । स्रोतसि वेगेन स्वतोजलनिःसरणे ।

स्रोतस् न० स्रु तसि । वेगेन स्वतोजलनिःसरणे रेतसि च ।

स्रोतस्वत् त्रि० स्रोतोऽस्त्यस्य मतुप् मस्य वः । स्रोतोयुक्ते । नद्यां
    स्त्री० ङीप् । [त्रि० ।

स्रोतस्विनी स्रोतस्+अस्त्यर्थे विनि ङीप् । नद्याम् । स्रोतोयुक्ते

स्रोतोञ्जन न० स्रोतसि यमुनास्रोतोजलसन्निकटसौवीरदेशे भवम् ।
    अञ्जनम् । सौवीरदेशजेऽञ्जने ।

स्रोतोवहा स्त्री० स्रोतसा वहति सरति वह-अच् । नद्याम् ।

स्व न० स्वन–ड । धने, आत्मनि ज्ञातौ च पु० । आत्मीये त्रि० ।
आत्मनि आत्मीये, चार्थे ऽस्य सर्वनामता ।

स्वकम्पन पु० स्वेनैव पराप्रयुज्यमान एव कम्पते कपि-युच् । वायौ ।

स्वकर्म्मन् न० स्वस्य कर्म्म । स्ववर्णोचिते कृत्ये । "स्वकर्म्मनिरतः सदेति" गीता । [ अकुक् युक्तप्रयोगस्तु अपाणिनीयः ।

स्वकीय त्रि० स्वस्येदम् छ कुक् च । आत्मीये । अत्र नित्यमेव कुक्,

स्वग सर्पणे भ्वा० प० सक० सेट् इदित् । स्वङ्गति अस्वङ्गीत् ।

स्वगत त्रि० स्वस्मिन् मनसि आत्मनि वा गतम् गम क्त । मनोगते, आत्मगते च । नाटकाभिनये प्रतिपाद्यपुरुषं वर्ज्जयित्वा रङ्गभूमिस्थसामाजिकजनश्रवणायोग्ये वाक्ये न० । लक्षणं चास्यात्माभिधाने ।

स्वगुप्ता स्त्री० स्वेनैव गुप्ता । शूकशिम्ब्याम्, लज्जालुलतायाञ्च ।

स्वच्छ त्रि० सुष्ठु अच्छः प्रा० । अतिनिर्म्मले कालुष्यरहिते । मुक्तायां, स्फटिके च पु० । श्वेतदूर्व्वायाम् स्त्री० ।

स्वच्छन्द त्रि० स्वस्य छन्दोऽभिप्रायः छन्दोऽभिप्रायः वर्त्तते यस्य । स्वाधीने

स्वच्छपत्र न० स्वच्छं पत्रं यस्य । अभ्रके ।

स्वच्छमणि पु० कर्म० । स्फाटिके ।

स्वज न० स्वस्मात् देहात् आत्मनो वा जायते । रुधिरे । पुत्रे पु० कन्यायां स्त्री० आत्मजाते त्रि० । [ स्वम्बिलोके ।

स्वजन पु० स्वस्येव जनो जननमेककुले यस्य । ज्ञातौ । ६त० । आत्मस

स्वठ गतौ संस्कारेऽसंस्कारे च चु० उभ० सक० सेट् । स्वठयति–ते अविस्वठत्–त ।

स्वतन्त्र त्रि० स्वस्य तन्त्रं वशीकारो यस्य । स्वाधीने अपराधीने

स्वतस् अव्य० स्व+तसिल् । आत्मन इत्यर्थे ।

स्वता स्त्री० स्वस्य स्वकीयस्य भावः तल् । स्वकीयत्वे । "कामः स्वतां पश्यतीति" शकुन्तला ।

स्वत्व न० स्वस्य भावः त्व । द्रव्यादिषु यथेष्टक्रयविक्रयादिक्रियासु नियोज्यत्वे धर्म्मभेदे, स्वामित्वे च तच्च द्रव्यगतमात्मगतञ्च ।

स्वदन न० स्वद–ल्युट् । आस्वादे लेहने च । सुष्ठु अदनम् । सुभक्षणे ।

स्वधर्म्म स्वस्य वेदादिविहितोधर्म्मः। स्वानुरूपे वेदाद्युक्ते आचारादिधर्म्मे।
स्वधा अव्य० स्वद आ पृ० दस्य धः। पितृदेवोद्देशेन हविस्त्यागे। स्वेन भवति धे-क आप्। मातृकाभेदे स्त्री० "नमः स्वधायै स्वाहायै" इति पितृगाथा।
स्वधाप्रिय पु० स्वधायिनां प्रियः शाक०। कृष्णतिले, स्वधोप लक्षितश्राद्धादिप्रिये पित्रादौ च। [देवे च।
स्वधाभुज् स्वधेत्यनेन त्यक्तद्रव्यं भुङ्क्ते भुज-क्विप्। पितृगणे,
स्वधिति(ती) स्त्री० स्वेन धीयते धा-क्तिच् वा ङीप्। कुठारे परश्वधे। पु०। स्वधितिरश्वत्थ। [अयं भूषणे वा घटा०।
स्वन शब्दे भ्वा०पर०अक०सेट्—फणा०। स्वनति। अस्वनीत्-अस्वानीत्।
स्वन ध्वाने अद० चु० उभ० अक० सेट्। स्वनयति—ते असस्वनत्-त।
स्वन पु० स्वन-अप्। शब्दे। [च न०।
स्वनित त्रि० स्वन-कर्त्तरि—क्त। शब्दिते। भावे क्त। शब्दे, मेघगर्जिते
स्वपन न० स्वप-ल्युट्। शयने, निद्रायाञ्च। [जूर्ण्याम्।
स्वपिण्डा स्त्री० स्वेनैव पिण्डः पिण्डाकारोऽस्यस्याः अच्। पिण्डख-
स्वप्न पु० स्वप-नन्। निद्रायां, शयने, सुप्तस्य मानसिकज्ञानभेदे च।
स्वप्नकृत् न० स्वप्नं निद्रां करोति कृ-क्विप्। (सुसनि) शाक।
स्वप्नज् त्रि० स्वप नजिङ्। शयनशीले।
स्वभाव पु० स्वस्य भावः। निसर्गे, नैसर्गिके-स्वकीये-धर्मे च।
स्वभावोक्ति स्त्री०स्वभावस्योक्तिरत्र। अलङ्कारोक्ते अर्थालङ्कारभेदे ह्त० स्वभावस्य कथने। [कामे च।
स्वभू पु० स्वेनैव भवति भू-क्विप्। ब्रह्मणि, विष्णौ, शिवे, ईश्वरे,
स्वयंवर पु० स्वयमात्मना वरो वरणम्। "कन्ययात्मनैव स्वपतेर्वरणे, सदसि स्वयंवर" इति नैषधम्। स्वयं वृणुते पतिम्। वृ-अच्। आत्मनैव पतिवरणकर्त्र्यां कन्यकायां स्त्री०।
स्वयङ्कृत पु० स्वयमात्मना कृतः। कृत्रिमे पुत्रे, आत्मकृते त्रि०। "पूर्व्वजुष्टः स्वयंकृत" इति स्मृतिः।
स्वयङ्गुप्ता स्त्री० स्वयमात्मनैव गुप्ता। शूकशिम्ब्याम्।

स्वयन्दत्त पु० स्वयमात्मनैव न तु पितृमातृभ्यां दत्तः । दत्तात्मके पुत्रभेदे "दत्तात्मा तु स्वयन्दत्त" इति स्मृतिः ।

स्वयम् अव्य० सु+अय- अम् । आत्मनेत्यर्थे ।

स्वयम्भु पु० स्वयम्+भू-डु । ब्रह्मणि ।

स्वयम्भुवा पु० स्वयम्भवति भू-क भूम्यपद्मायाम् ।

स्वयम्भू पु० स्वयं भवति भू-क्विप् । चतुर्मुखे ब्रह्मणि, कामे च ।

स्वर आक्षेपे अद० चुरा० उभ० सक० सेट् । स्वरयति-ते अससस्वरत्-त ।

स्वर् अव्य० स्वृ-विच् । स्वर्गे, "यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पद" मित्युक्ते दुःखासंभिन्ने सुखसन्ताने, परलोके, देवावासे, शोभने च ।

स्वर पु० स्वर-अच्, स्वृ-अप् वा । उदात्तानुदात्तस्वरितरूपे वर्णोच्चारणयत्नभेदे, तादृशस्वरवत्सु च अकारादिषु व्यञ्जनभिन्नवर्णेषु शिक्षायामुक्ता । तन्त्रोक्ते प्राणादिवायोर्व्यापारभेदे, काकादिकृते वर्णाद्युच्चारणध्वनिविशेषे, निषादादिषु गानजध्वनिषु च । विस्तरो वाचस्पत्याभिधाने ।

स्वरपत्तन न० स्वराणां निषादादीनां गानध्वनिविशेषाणां पत्तनमाश्रयः । सामवेदे ।

स्वरभङ्ग पु० स्वरस्य कण्ठध्वनिभेदस्य भङ्गो यस्मात् । रोगभेदे ।

स्वरमण्डलिका स्वराणां मण्डलमस्त्यस्य ठन् । वीणायाम् स्त्री० । स्वरसमूहे । [ण्वुल् । वीणायां, वंश्याञ्च ।

स्वरलासिका स्त्री० स्वरैः निषादादिभिः लसति नृत्यतीव लस-

स्वरस पु० स्वेन स्वभावेन रसः आस्वादः । शिलापिष्टकल्कभेदे, क्वाथभेदे च । स्वस्य रसः रागः । स्वाभिप्राये, स्वतात्पर्य्ये, काव्यादौ रचनाभङ्ग्यां च ।

स्वराज् पु० स्वेनैव राजते राज-क्विप् । ईश्वरे "सर्वेष्वभिज्ञः स्वराडिति" भागवतम् । वैदिकच्छन्दोभेदे च ।

स्वरापगा स्त्री० स्वःस्वर्गस्यापगा । गङ्गायाम् [illegible] ।

स्वरित पु० स्वरोजातोऽस्य इतच्। उदात्तानुदात्तसमाहाररूपे स्वर-
भेदे स्वर न०। स्वरयुक्ते लि०। [ भेदे च ]

स्वरु पु० स्वृ-उ। वज्रे, यूपखण्डे, बाणे, यज्ञे, सूर्यकिरणे, वृश्चिक-

स्वरुचि लि० स्वस्यैव रुचिः प्रवर्त्तिका ज्ञानत्वे यस्य। स्वतन्त्रे, ६त०।
स्वस्याभिलाषे स्त्री०।

स्वरूप न० स्वस्य रूपम्। स्वभावे। स्वमेव रूपम्। स्वात्मके पदार्थे
स्वं यथास्वं रूपयति रूप-अण्। यथास्वरूपाभिज्ञे-पण्डिते पु०।
स्वेन स्वभावेनैव रूपमस्य। मनोज्ञे, लि०।

स्वरूपसंबन्ध पु० स्वरूपं सम्बन्धः, स्वरूपयोर्वा सम्बन्धः। न्यायोक्ते,
स्वात्मके सम्बन्धे, षट्पदार्थातिरिक्ते पदार्थभेदे, यथा प्रतियोगित्वम्
विषयत्वमित्यादि।

स्वरोदय स्वराणामुदयो यत्र। स्वरस्य श्वासविशेषस्य शुभाशुभत्वज्ञान-
साधने तन्त्रशास्त्रभेदे।

स्वर्ग पु० स्वरिति गीयते गै क सु+ऋज घञ् वा। दुःखासंभिन्ने,
सुखसन्ताने, देवानामावासस्थाने च।

स्वर्गनाथ पु० ६त०। इन्द्रे। स्वर्गपत्यादयोऽप्यत्र।

स्वर्गवधू स्त्री० ६त०। अप्सरसु।

स्वर्गाचल पु० स्वर्गलोकस्थोऽचलः। सुमेरुपर्वते।

स्वर्गिन् पु० स्वर्गोऽस्त्यस्य भोग्यत्वेन इनि। देवे। स्वर्गवासिनि लि०।

स्वर्गौकस् पु० स्वर्ग ओको यस्य। देवे।

स्वर्जिक पु० सु+अर्ज्ज-वुञ् अस्त्यर्थे ठन्। सर्ज्जिकाक्षारे। कर्म०।
स्वर्जिकाक्षारादयोऽप्यत्र।

स्वर्ण न० सुष्ठु अर्णो वर्णोऽस्य। काञ्चने, धुस्तूरे, नागकेशरे, गौरसु-
वर्णशाके च। [भेदे पु०।

स्वर्णकण न० स्वर्णमिव पीतःकणोऽस्य। कणगुग्गुलौ ६त०। सुवर्णस्य

स्वर्णकाय पु० स्वर्णमिव पीतः कायोऽस्य। गरुडे।

स्वर्णकार पु० स्वर्णं स्वर्णमयमलङ्कारादि करोति कृ-अण्। (सेकरा)
जातिभेदे।

स्वर्णकेतकी स्त्री० स्वर्णमिव पीता केतकी । पीतकेतक्याम् ।
स्वर्णक्षीरी स्त्री० स्वर्णमिव पीतं क्षीरं निर्यासोऽस्यास्तत्र गौ० ङीष् ।
ओषधिभेदे सा च मालवदेशे जायते ।
स्वर्णगैरिक न० स्वर्णमिव पीतं गैरिकम् । (वर्णकमाटि) पदार्थभेदे ।
स्वर्णग्रीवा स्त्री० नदीभेदे ।
स्वर्णचूड़ पु० स्वर्णमिव पीता चूड़ा यस्य । चाषपक्षिणि ।
स्वर्णज न० स्वर्णात् जायते जन-ड । वङ्गे । स्वर्णजातमात्रे त्रि० ।
स्वर्णजीवन्ती स्त्री० सुवर्णमिव पीता जीवन्ती । पीतपुष्पजीवन्त्याम् ।
स्वर्णद्री स्त्री० सुवर्णं द्यति अपसारयति तुल्यवर्णत्वात् दो-क गौ० ङीष् ।
वृश्चिकाल्याम् । ६त० । गङ्गायाम् ।
स्वर्णदीधिति पु० सुवर्णमिव भासुरा दीधितिरस्य । अग्नौ, चित्रकवृक्षे च ।
स्वर्णद्रु पु० सुवर्णमिव पुष्पादौ पीतो द्रुः । आरग्वधे ।
स्वर्णपक्ष पु० सुवर्णमिव पीतः पक्षोऽस्य । गरुड़े ।
स्वर्णपाटक पु० सुवर्णं पाटयति पट-णिच्-ण्वुल् । टङ्कणे ।
स्वर्णपुष्प पु० सुवर्णमिव पीतं पुष्पमस्य । चम्पके, आरग्वधे, पु० स्त्री०
स्त्रीत्वे ङीप् । सा च सुवर्णकेतक्याञ्च । सातलायाम् कलिकारी
स्त्री० टाप् । [ल्याम् ।
स्वर्णफला स्त्री० सुवर्णमिव पीतं फलमस्याः । (चांपाकला) सुवर्णकद-
स्वर्णभृङ्गार पु० सुवर्णमिव सुवर्णमयो वा भृङ्गारः । पीतभृङ्गराजे सुवर्ण-
मयकलसे च । [भेदे ।
स्वर्णमाक्षिक न० सुवर्णमिव पीतं माक्षिकम् । सुनामख्याते उपधातु-
स्वर्णयूथी स्त्री० सुवर्णमिव पीता यूथी । पीतयूथिकायाम् ।
स्वर्णलता स्त्री० सुवर्णमिव पीता लता । ज्योतिष्मत्याम् ।
स्वर्णवर्णा स्त्री० सुवर्णमिव वर्णो रूपमस्याः हरिद्रायाम् ।
स्वर्णवल्कल पु० सुवर्णमिव पीतं वल्कलमस्य । श्योनाकवृक्षे ।
स्वर्णशेफालिका स्त्री० सुवर्णमिव पीता शेफालिका । पीतशेफालिकायाम् ।
स्वर्णाङ्ग पु० सुवर्णमिवाङ्गं पत्रपुष्पादि-यस्य । आरग्वधे । पीतवर्णदेहे त्रि० ।
स्वर्णारि पु० ६त० । गन्धके तस्य स्वर्णमारकत्वात्तथात्वम् ।

स्वर्त्त गतौ सक०दुःखेन जीवने अक०चु०उ०सेट्। स्वर्त्तयति ते असस्वर्त्तत् त
स्वर्द्द प्रीतौ अक० प्रीणने वेहने च सक० भ्वा० आत्म० सेट । स्वर्द्दते
अस्वर्द्दिष्ट।
स्वर्भानव पु० स्वरिव भूमौ भानुर्दीप्तिरस्यस्य अण्। गोमेदमणौ।
स्वर्भानु पु० स्वः स्वर्गे भानुर्दीप्तिरस्य। राहौ।
स्वर्लोक पु० स्वरेव लोकः भुवनम्। स्वर्गे, इत०। स्वर्गस्थलोके।
स्वर्वापी स्त्री० स्वः स्वर्गस्य वापीव। गङ्गायाम्।
स्वर्वेश्या स्त्री० स्वः स्वर्गस्य वेश्या। मेनकाद्यप्सरस्सु।
स्वल्प त्रि० सुष्ठु अल्पम् प्रा०। अत्यल्पे क्षुद्रे।
स्वल्पकेशरिन् पु० स्वल्पः केशरोऽस्त्यस्य इनि। कोविदारवृक्षे।
स्वल्पपत्रक पु० स्वल्पं पत्रमस्य कप्। गौरयाके।
स्ववासिनी स्त्री० स्व स्मिन् पित्रालये वसति वस-णिनि। चिरं पितृगृ
हादिवासिन्यामूढायामनूढायां वा स्त्रियाम्।
स्वसृ स्त्री० सु+अस-ऋन्। भगिन्याम्।
स्वस्क गतौ चु० उ० सक० सेट्। स्वस्कति ते असस्वस्कत् त।
स्वस्ति अव्य०सु-अस-क्तिच्, अस्तीति विभक्तिरूपकम् अव्ययं प्रादि०वा।
क्षेमे, आशिषि, पुण्यादौ, स्वीकारसूचने च।
स्वस्तिक पु० न०। स्वस्ति शुभाय हितम् ठन्। "स्वस्तिकं प्राङ्मुखं
यत् स्यादलिन्दानुगतं भवेत्। तत्पार्श्वानुगतौ चान्यौ तत्पर्यन्त-
गतोऽपर" इत्युक्तलक्षणे गृहभेदे, सितावरशाके, आसनबन्धभेदे,
तण्डुलचूर्णनिर्म्मिते-त्रिकोणाकारे द्रव्यभेदे च "इतं स्वस्तिक-
सिन्दूर" नित्यविवाहनद्रव्यज्ञापकवाक्यम्" चतुष्पथे पु०।
स्वस्तिमुख पु० स्वस्ति मुखे आदौ यस्य। लेख्ये पत्रादौ। विप्रे
पु०। स्वस्तिवादिनि त्रि०।
स्वस्तिवाचन न०स्वस्ति शुभस्य विप्रद्वारा वाचनम्। कर्मारम्भे विघ्नो-
पशान्तये ब्राह्मणद्वारा कर्त्तव्यकर्मणां शुभतावाचने।
स्वस्तिवाचनिक त्रि० स्वस्तिवाचनाय हितं, तत आगतम्, तत्रभवं
वा ठन्। स्वस्तिवाचनसाधने, तदुक्तिलब्धे, तत्सम्बन्धिनि च।

स्वस्त्ययन न० स्वस्ति शुभस्यायनं लाभो यस्मात् । शुभार्थं क्रियमाणे वेदादिविहिते यज्ञयागादौ ।

स्वस्थ त्रि० स्वः परलोके तिष्ठति स्वेन स्वभावेन सुखेन, वा तिष्ठति स्था-क विसर्गलोपः । स्वभावस्थे, स्वर्गस्थिते, विनायासेन सुखेनावस्थिते च । "सुस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः" इति वेणीसंहारनाटकम् ।

स्वस्रीय पु० स्वसुरपत्यम् छ । भागिनेये भागिनेय्यां स्त्री० ।

स्वागत न० सुखेनागतम् सु+आ+गम्—क्त । सुखेनागमने "स्वागतं स्वानधीकारानिति, कुमारः तदस्यास्ति अच् । कुशले ।

स्वाच्छन्द्य न० स्वच्छन्दस्य भावः ष्यञ् । स्वाधीनत्वे, स्वास्थ्ये च ।

स्वातन्त्र्य न० स्वतन्त्रस्य भावः ष्यञ् । स्वाधीनत्वे परानधीनत्वे ।

स्वाति(ती) पु० स्त्री० स्वेनैव अतति अत इन् स्त्रीत्वपक्षे वा ङीप् । अश्विन्यादिषु पञ्चदशे नक्षत्रे, सूर्य्यपत्नीभेदे च ।

स्वाद प्रीतौ अक० प्रीणने लेहने च सक० भ्वा० आ० सेट् । स्वादते आस्वादिष्ट ।

स्वाद पु० स्वद—स्वाद वा घञ् । रसानुभवे, प्रीतौ, प्रीणने, लेहने च ।

स्वादु पु० स्वद—उण् । मधुररसे, गुड़े, जीवकौषधौ च । इष्टे, मधुरे, मनोज्ञे च त्रि० स्त्रियां वा ङीप् ।

स्वादुकण्टक पु० स्वादुः कण्टकोऽस्य । विकङ्कतद्रुमे ।

स्वादुकन्दा स्त्री० स्वादुः कन्दोऽस्याः । विदार्य्याम् ।

स्वादुका स्त्री० स्वादुना मधुररसेन कायति कै—क । नागदन्त्याम् ।

स्वादुखण्ड पु० स्वादुः मिष्टः खण्डोऽस्य । गुड़े कर्म० । मधुरेभागे ।

स्वादुगन्धा स्त्री० स्वादुरिष्टः गन्धोऽस्याः । रक्तशोभाञ्जने, भूमिकुष्माण्डाञ्च ।

स्वादुपर्णी स्त्री० स्वादूनि पर्णान्यस्याः ङीप् । दुग्धिकायाम् ।

स्वादुपाका स्त्री० स्वादुः पाकोऽस्याः । काकमाच्याम् ।

स्वादुपिण्डा स्त्री० स्वादुः पिण्डः पिण्डाकारं फलमस्याः । पिण्डखर्ज्जूर्याम् ।

**स्वादुफल** स्त्री० स्वादु फलमस्य । कोविदार्य्याम् कर्म० । मिष्टफले न० ।

**स्वादुमज्जन्** पु० स्वादुः मज्जायस्य । पर्व्वतजे पीलौ ।

**स्वादुमांसी** स्त्री० स्वादु मांसमिव फलमस्याः । काकोल्याम् ।

**स्वादुमूल** न० स्वादु मूलमस्य । गर्जरे (गाजर) ।

**स्वादुरसा** स्त्री० स्वादुःरसोयस्याः । काकोल्याम्, मदिरायाम्, शता-वर्य्यां, द्राक्षायाम्, आम्रातके च ।

**स्वादुलता** स्त्री० स्वाद्वी लता । विदार्य्याम् ।

**स्वाद्वम्ल** पु० स्वादुः अम्लः । दाड़िमे ।

**स्वाधीन** त्रि० स्वस्याधीनः । स्वायत्ते स्वतन्त्रे ।

**स्वाधीनपतिका** स्त्री० स्वाधीनः पतिर्यस्याः कप् । नायिकाभेदे स्वाधीनभर्तृकादयोऽप्यत्र ।

**स्वाध्याय** पु० स्वःस्वकीयत्वेन विहित अध्यायः द्विजानाम्, अधि+इङ—कर्म्मणि घञ् । द्विजैः पाठ्ये वेदभागभेदे "स्वाध्यायोऽध्येतव्य" इति श्रुतिः । भावे घञ् । अवश्यपाठ्य वेदाध्ययने "स्वाध्यायोजपइत्युक्तो वेदाध्ययनकर्म्मणीति" स्मृतिः ।

**स्वान्त** न० स्वन—क्त । मनसि—गह्वरे च ।

**स्वाप** पु० स्वप—घञ् । निद्रायाम् शयने, अज्ञाने च ।

**स्वापतेय** न० स्वस्य धनस्य पतिः तस्येदम् ढञ् । धने ।

**स्वाभाविक** त्रि० स्वभावादागतः ठञ् । स्वभावसिद्धे, स्त्रियां ङीप् ("स्वाभाविकी स्वच्छते"त्युद्भटः) ।

**स्वामिन्** त्रि० स्व+अस्त्यर्थे मिनि दीर्घश्च । अधिपतौ, ईश्वरे च । स्त्रियां ङीप् । हरे, विभौ, नृपे कार्त्तिकेये, भर्त्तरि, वात्स्यायनमुनौ, गरुड़े, परमहंसे च पु० ।

**स्वायम्भुव** पु० स्वयम्भुवोऽपत्यं, तस्येदम् वा अण् ओरोर्दिति वक्तव्ये ओर्गुण इति संज्ञापूर्व्वकविधानादनित्यत्वान्न गुणः उवङ् । स्वयम्भुपुत्रे प्रथमे मनौ, स्वयम्भूसम्बन्धिनि त्रि० । "धाम स्वायम्भुवं ययुरिति" कुमारः । स्त्रियां ङीप् । सा च आह्मयाम् ।

**स्वार्थिक** त्रि० स्वार्थे विहितः ठण् । स्वार्थविहिते व्याकरणोक्ते प्रत्यये ।

स्वाराज् पु० स्वः स्वर्गे राजते राज-क्विप् । इन्द्रे ।
स्वाराज्य न० स्वराजः स्वाराजो वा भावः ष्यञ् । ब्रह्मत्वे, इन्द्रत्वे च
स्वारोचिष पु० द्वितीये मनौ । "स्वारोचिषेऽन्तरे प्राप्ते" इति चण्डी ।
स्वार्थ पु० स्वस्य अर्थः प्रयोजनम् अभिधेयं वा । स्वप्रयोजने स्वाभिधेये
च "स्वार्थकः स्वार्थबोधकत्वादिति" शब्दशक्ति० ।
स्वास्थ्य न० स्वस्थस्य भावः ष्यञ् । आरोग्ये, सन्तोषे, सुखे च ।
स्वाहा अव्य० सु+आ+ह्वे-डा नि० । देवोद्देशेन हविस्त्यागे । अग्नि-
भार्यायां "स्वाहयेव हविर्भुजमिति" रघुः मातृकाभेदे च स्त्री०
"नमः स्वधायै स्वाहायै" इति पितृगाथा ।
स्वाहाप्रिय पु० ६त० । अग्नौ । स्वाहापत्यादयोऽप्यत्र ।
स्वाहाभुज् पु० स्वाहेतिमन्त्रेण त्यक्तद्रव्यं भुङ्क्ते भुज-क्विप् । देवे ।
स्विद् अव्य० स्विद-क्विप् । प्रश्ने, वितर्के, पादपूरणे च ।
स्विन्न त्रि० स्विद-क्त घर्मयुक्ते, प्रस्वेदान्विते च ।
स्वीकार पु० अस्वस्य स्वस्य कारः करणं स्व+च्वि+कृ-घञ् । अङ्गीकारे
स्वीय त्रि० स्वस्येदम् छ अपाणिनीयैरत्र न कुगिति मन्यते । स्वसम्ब-
न्धिनि । नायिकाभेदे स्त्री० ।
स्वुर्च्छ विस्मृतौ भ्वा० प० सक० सेट् । स्वूर्च्छति अस्वूर्च्छीत् । [घीनृ ।
स्वृ शब्दे अक० उपतापे सक० भ्वा० प० वेट् स्वरति अस्वारीत् अस्वा-
स्वॄ हिंसने क्र्या० प्वा० प०सक०सेट् । स्वृणाति अस्वारीत् । [क्षिष्ट ।
ष्वेक गतौ भ्वादि० आत्म० सक० सेट् चङि न ह्रस्वः । स्वेकते असे-
स्वेच्छा स्त्री० स्वस्येच्छा । स्वाभिलाषे ।
स्वेच्छामृत्यु पु० स्वेच्छया मृत्युर्यस्य । भीष्मे स्वेच्छाधीन मृत्युयुक्ते त्रि०
स्वेद पु० स्वेद-स्विद-वा, घञ् । पाकभेदे (सेका) घर्मे गात्रादितो
जलादेः निष्यन्दने । [जातमात्रे त्रि० ।
स्वेदज पु० स्वेदाज्जायते जन-ड । स्वेदाजाते दंशादिजन्तौ । स्वेद-
स्वेदन न० स्विद-णिच्-ल्युट् । गात्रादितो घर्मादेर्निःसारणव्यापारे ।
(भापरा) ।

खेदनी स्त्री० खिद्यते च्युतेऽनया खिद्–ल्युट् । लौहपात्रभेदे (ताओया) संज्ञायां कन् टापि अत इत्वम् । खेदनिका । कन्दुरूपे पात्रे भर्जनपात्रे स्त्री० ।
स्वैर न० स्वस्य ईरम् ईर–अच् वृद्धिः । स्वेच्छायाम् । तद्वति मन्दे, च त्रि०
स्वैरिन् त्रि० स्वेनैव ईरयितुं शीलमस्य ईर–णिनि वृद्धिः । स्वेच्छाचारिणि स्वतन्त्रे । व्यभिचारिस्त्रियां स्त्री० ङीप् ।
स्वोपार्ज्जित त्रि० स्वेन उपार्जितम् । स्वयमर्ज्जिते धनादौ ।

# ह

ह अव्य० हा–ड । पादपूरणे, सम्बोधने, नियोगे, क्षेपे, निग्रहे, प्रसिद्धौ च, । शिवे, जले, शून्ये, मङ्गले, आकाशे, रक्ते, स्वर्गे, पापहरणे, चन्द्रे, सकोपवारणे, शुक्रे च पु० ।
हंस पु० हस–अच्–पृ० । स्वनामख्याते पक्षिभेदे, निर्लोभनृपे, विष्णौ, सूर्य्ये, परमात्मनि, "हंसं तनौ सन्निहितं चरन्तमिति" नैषधम् । मत्सरे, यतिभेदे, मन्त्रभेदे० देहस्थवायुचेष्टाभेदे, अश्वभेदे, सुमेरुपर्व्वते, शिवे, अग्रस्थिते, श्रेष्ठे, विशुद्धे, अजपामन्त्ररूपे वर्णे च "हंकारेण बहिर्याति सकारेण विशेत्पुनः, हंसेति सततं मन्त्रं जीवो जपति सर्व्वदेति" तन्त्रम् ।
हंसक पु० हंसइव कायति शब्दायते कै–क । पादकटके नूपरादौ ।
हंसगामिनी स्त्री० हंसइव मृदु गच्छति गम–णिनि । मृदुगामिन्यां स्त्रियाम् । हंसेन गच्छति णिनि ङीप् । ब्रह्माण्याम् ।
हंसनादिनी स्त्री० "गजेन्द्रगमना तन्वी कोकिलालापसंयुता । नितम्बे गुर्व्विणी या स्यात् सा स्मृता हंसनादिनी"त्युक्तलक्षणायां नार्य्याम्
हंसपदी स्त्री० हंसस्येव पादाः मूलान्यस्याः पाद्भावे स्त्रियां । ङीपि पद्भावः । गोधातकीलतायाम् । छन्दोभेदे तु हंसपदा ।
हंसपाद न० हंसस्य पादः तद्वर्णोऽस्त्यस्य अच् । हिङ्गुले ।
हंसमाला स्त्री० हंत० पङ्क्त्याकारेण स्थिते हंससमूहे, कादम्बे च ।

हंसरथ पु० हंसः रथोवाहनं यस्य। चतुर्मुखे ब्रह्मणि हंसवाहना-
दयोऽप्यत्र।

हंसलोमश न० हंस इव लोमशं लोमयुक्तम्। कासीसे उपधातौ।

हंसवती स्त्री० हंसजात्यादाकारः अस्त्यस्याः मतुप् मस्य वः। हंस-
पद्याम्।

हंसवीज न० हंसस्य वीजमत्र। हंसडिम्बे।

हंसाङ्घ्रि पु० हंसस्याङ्घ्रिरिव लोहितत्वात्। हिङ्गुले।

हंसारूढ़ पु० हंसमारूढः आ+रुह–क्त। ब्रह्मणि तच्छक्त्यां ब्रह्माण्यां
स्त्री०। [छन्दोभेदे च।

हंसी स्त्री० हंसस्य भार्य्या ङीप्। हंसयोषिति द्वाविंशत्यक्षर पादके

हंहो अव्य० हमितत्यव्यक्तं जहाति हा–डो। सम्बोधने "हंहो
स्निग्धचित्तचन्द्रमपास्य चन्द्रादिति दर्पे, दम्भे, प्रश्ने च।

हञ्जे(ञ्जा) अव्य० हमित्यव्यक्तं जयतेऽत्र जप-ड डा वा। नाट्य-
क्रियायां नटाभिमेयकर्त्ते चेटीसम्बोधने।

हट दीप्तौ भ्वा० प० अक० सेट्। हटति अहटीत्-अहाटीत्।

हट्ट पु० हट-ट टस्य नेत्त्वम्। क्रयविक्रयस्थाने "प्रतिहट्टपथे घरट्ट-
जादिति" नैषधम्। [चोर) चौरभेदे।

हट्टचौरक पु० हट्टे प्रकाशिते स्थाने एव चौरः स्वार्थे कन्। (हाट-

हट्टविलासिनी स्त्री० हट्टं विलासयति वि+लस-णिच्–णिनि ङीप्
गन्धद्रव्यभेदे, हरिद्रायाञ्च। [अहाठीत्-अहठीत्।

हठ कीलबन्धे बलात्कारे प्लुतौ च भ्वा० पर० अक० सेट्। हठति।

हठ पु० हठ-अच्। बलात्कारे- प्रसह्ये च।

हठपर्णी स्त्री० हठने प्लवते हठ-अच् हठं प्लवमानं पर्णं यस्याः
ङीप्। शैवाले, कुम्भिकायाञ्च।

हठयोग पु० हठात्कारेण योगः। प्राणायामादिक्रियाभ्यासजे राज-
योगं विनैव परमात्मसाक्षात्काररूपे चित्तवृत्तिरोधात्मके योगे।

हठालु पु० हठः प्लवमानः आलुरिव। कुम्भिकायाम् (पाना)।

हठी स्त्री० हठ-अच् गौ० ङीष्। वारिपर्ण्याम् (पाना)।

हडि पु॰ हठ-इन् पृ॰। पशुमारणसाधने काष्ठयन्त्रे (हाड़िकाठ)।
हडिक पु॰ हठ-इकक् पृ॰। नीचजातिभेदे (हाड़ि)।
हड्ड न॰ हड ड डस्य नेत्वम् पृ॰। अस्थि-(हाड) स्वार्थे कन्।
 नीचजातिभेदे (हाड़ि)।
हण्डा स्त्री॰ हन डा डस्य नेत्वम्। कुम्भि-मृत्पात्रभेदे (हांड़ा)
 नाट्योक्तौ नीचसम्बोधने अव्य॰।
हण्डिका स्त्री॰ क्षुद्रा हण्डा कन्। क्षुद्रे मृत्पात्रे (हांड़ि)।
हण्डे अव्य॰ हन-डे डस्य नेत्वम्। नाट्योक्तौ नीचसम्बोधने।
हत त्रि॰ हन-क्त। नाशिते, प्रतिहते, प्रतिबद्धे, आशा रहिते,
 गुणिते च। भावे क्त, हनने, गुणने च न॰।
हतक त्रि॰ हतइव नष्टप्रायत्वात् कन्। नष्टप्राये (मड़ा)।
हताश त्रि॰ हता आशा यस्य। आशाशून्ये, वन्ध्ये, निर्दये, पिशुने च
हति स्त्री॰ हन-क्तिन्। हनने, मारणे, व्याघाते, अपकर्षे, गुणने च।
हत्या स्त्री॰ हन-क्यप्। मारणे, वधे, प्राणवियोगानुकूल व्यापारे
 "ब्रह्महत्या सुरापानमिति" स्मृतिः।
हद् विष्ठोत्सर्गे भ्वा॰ आ॰ अक॰ सेट्। हदते अहदिष्ट।
हन वधे-गतौ च भ्वा॰ प॰ सक॰ अनिट्। हन्ति अवधीत्। "कुञ्ज
 हन्ति कृशोदरी"त्यादावालङ्कारिकास्तु गतौ निहतार्थतामाहुः।
हनन न॰ हन-ल्युट्। "स्यात् प्राणविच्छेदफलव्यापारो हननं स्मृत,
 मित्युक्ते, व्यापारे गुणने च।
हनाल पु॰ हन-इन् डीप् हन्यां लीयते ली-ड। कीटकीटभे।
हनु(नू) पु॰ स्त्री॰ हन-उन् वा ऊङ्। कपोलद्वयोपरिस्थे मुखभागे,
 हट्टविलासिन्यां रोगे, अस्त्रभेदे, मृतौ च स्त्री॰।
हनु(नू)मत् पु॰ हनु(नू)+अस्त्यर्थे मतुप्। रामस्य अनुचरे, अञ्जना-
 गर्भजाते पवनतनये वानरभेदे।
हन्त अव्य॰ हन-त। हर्षे, अनुकम्पायां, विषादे, आर्त्तौ, वाक्य-
 सम्भने, वाक्यारम्भे, खेदे, परिच्छेदे, कल्पने च।

हुङ्कार पु० हुम् इत्यस्य कारः करणं, हुमित्यस्य कारः उच्चारणम् वा कृ-घञ् । अतिशये दैवे-शब्दे, हुमशब्दप्रयोगे च ।

हुन्तृ त्रि० हन-तृच् । हननकर्त्तरि सततहननानुशीलयितरि च स्त्रियां ङीप् । "महिषासुरहन्त्र्यास्वेति" पुराणम् ।

हुत त्रि० हद-क्त । क्लतपुरीषोत्सर्गे ।

हम् अव्य० हा-डम् । रुषोक्तौ, अनुनये च । [ख्यत ।

हम्भा(म्बा) स्त्री० हम्+भा-इम्ब-अक् वा । गवां ध्वनौ पु० । हम्बा-

हम्म गतौ भा० प० सक० सेट् । हम्मति । अहम्मीत् ।

हय गतौ सक० क्लान्तौ अक० भा० प० सेट् । हयति अहयीत् ।

हय पु० हय हि-वा अच् । घोटके । [मोदायाञ्च स्त्री० ।

हयगन्ध पु० हयस्येव गन्धोऽस्य । काचलवणे । अश्वगन्धायाम् अज-

हयग्रीव पु० हयस्येव दीर्घा ग्रीवाऽस्य । विष्णोरवतारभेदे, दैत्यभेदे च "हयग्रीवबधोपेतं तद्वै भागवतं विदुरिति" पुराणम् दुर्गायां स्त्री० ।

हयग्रीवहन् पु० हयग्रीवाख्यं दैत्यं हतवान् हन क्विप् । विष्णौ ।

हयन न० हि-ल्युट् । कर्णीरथे । [पामार्गे ।

हयपुच्छी स्त्री० हयस्य पुच्छाकारोऽस्त्यस्याः अच् गौ० ङीष् । माष

हयप्रिय पु० इत० यवे, अश्वगन्धायां, खर्जुर्याञ्च स्त्री० अश्वबल्लभे त्रि० हयेष्टादयोऽप्यत्र । [वुल् । तत्रैव ।

हयमार पु० हयं मारयति निषेधणात् मृ-णिच् अण् । करवीरे,

हयमारण पु० हयं मारयति मृ-णिच् ल्यु । अश्वत्थवृक्षे ।

हयवाहनसङ्कर पु० हयस्य वाहनं चालनं सङ्किरति सम्+कॄ-अच् । रक्तकाञ्चने ।

हया स्त्री० हयः हयगन्धोऽस्त्यस्याः । अश्वगन्धायाम् ।

हयाध्यक्ष पु० हयेषु तद्रक्षणेषु अध्यक्षः । अश्वरक्षणाधिकृते ।

हयानन्द पु० हयमानन्दयति आ+नन्द-णिच् अण् । मुद्गे ।

हयारि पु० इत० । करवीरे ।

हयाशना स्त्री० हयैरश्यते अश-ल्युट् । शल्लकीवृक्षे ।

हयोत्तम पु० हयेषु उत्तमः । अश्वरत्ने आजानेयेऽश्वे ।

हर पु० हृ-अच् । रुद्रे, अग्नौ, गर्द्दभे, विभाजके च "अन्योन्यहाराभिहतौ हरांशा विति" लीलावती । हृ-भावे अप् । हरणे, विभाजने च ।

हरगौरी स्त्री० हरदेहार्द्धं हरा गौरी । अर्द्धनारीश्वररूपे शिवपार्व्वत्योर्मूर्त्तिभेदे द्वन्द्व० । शिवपार्वत्योः द्वि० व० ।

हरण न० हृ—भावे ल्युट् । स्थानान्तरकरणे, विभाजने च कर्मणि ल्युट् । यौतुकादौ देये धने ।

हरतेजस् न० ६त० । पारदे शिववीर्य्ये च । हरवीजादयोऽप्यत्र ।

हरशेखरा स्त्री० हरस्य शेखरभावासत्त्वेनास्त्यस्याः अच् । गङ्गायाम्

हरि पु० हृ—इन् । विष्णौ, सिंहे, सर्पे, वानरे, भेके, चन्द्रे, सूर्य्ये, वायौ, अश्वे, यमे, हरे, ब्रह्मणि, किरणे, नववर्षमध्ये वर्षभेदे, मयूरे, कोकिले, हंसे, शुकपक्षिणि, भर्त्तृहरिनामके वाक्यपदीयग्रन्थकारके पण्डिते, इन्द्रे, पीते, पिङ्गलवर्णे, हरिद्वर्णे च । तद्वति त्रि० "हरिं विदित्वा हरिभिश्च वाजिभिरि"ति रघुः ।

हरिकेश पु० हरिः पिङ्गलः केशोऽस्य । शिवे, शिवभक्तयक्षभेदे च । स एव तत्प्रसादात् काश्यां दण्डपाणित्वनामयात् इति काशीखण्डे स्थितम् । [पुरीभेदे च ।

हरिगृह न० ६त० । हरेर्विष्णुमूर्त्तेर्गृहम् । हरिमूर्त्तिगृहे एकचक्र-

हरिचन्दन न० हरेरिन्द्रस्य प्रियं चन्दनम्, चन्दयति चदि-ल्यु ६त० वा । देवतरुभेदे । हरेर्विष्णोः प्रियं चन्दनम् । श्वेतचन्दने गोशीर्षनामके—मलयैकदेशे—जाते चन्दनभेदे, ज्योत्स्नायां, कुङ्कुमे, सुन्दराङ्गे च न० ।

हरिण पु० हृ—इनन् । स्वनामख्याते पशौ, शिवे, विष्णौ, हंसे, शुक्लवर्णे पाण्डुवर्णे च । तद्वति त्रि० ।

हरिणहृदय पु० हरिणस्येव भीतं हृदयमस्य । भीरौ ।

हरिणाक्षी स्त्री० हरिणस्येवाक्षि यस्याः ५त० षच् समा० ङीष्

हृद्विलासिनीनामगन्धद्रव्ये हरिणतुल्यनेत्रवति त्रि० स्त्रियां, ङीप्। 'हरिणाक्षि! कटाक्षेण्' त्युद्भटः।

**हरिणाङ्क** पु० हरिणः शशनामको मृगोऽङ्कश्चिह्नं, अङ्के क्रोड़े वा अस्य। चन्द्रे।

**हरिणी** स्त्री० हरितवर्णा स्त्री ङीप् तस्य नः। हरिद्वर्णायां स्त्रियां, स्वर्णप्रतिमायां, स्वर्णयुथ्यां, मञ्जिष्ठायां, वरुण्यां, वराहस्त्रियां, सप्तदशाक्षरपादके छन्दोभेदे च। हरिणस्य स्त्री० ङीप्। मृग्याम्

**हरित्** पु० हृ—इति। नीलपीतमिश्रितवर्णे (पातारङ्ग) पलाशवर्णे च तद्वति त्रि०। सूर्याश्वे, मुद्गे, सिंहे, सूर्ये, विष्णौ च पु०।

**हरित** पु० हृ-इतच्। सिंहे, मन्थानतृणे, हरिद्वर्णे च। तद्वति त्रि०। स्त्रियां ङीप् तस्य नश्च। दूर्वायां, जयन्त्यां, हरिद्रायां, कपिलद्राक्षायां नीलदूर्वायाञ्च स्त्री० टाप्।

**हरितक** न० हरितेन वर्णेन कायति प्रकाशते कै—क। शाके।

**हरितशाक** पु० हरितं शाकमस्य। शोभाञ्जने।

**हरिताल** न० हरिवर्णस्य पीतवर्णस्य तालः प्रतिष्ठा यत्र। पीतवर्णे उपधातुभेदे 'स हरितालसमाननवांशुकमिति' माघः। पीतवर्णपक्षिभेदे पु० स्वार्थे कन्। हरितालो।

**हरितालिका** स्त्री० हरेस्तालो हस्ततालो यस्यां कप् अत इत्त्वम्। भौरभाद्रशुक्लचतुर्थ्याम्। हरितवर्णाय अलति पर्याप्नोति अल—ण्वुल्। दूर्वायाम्। अण् ङीप्। हरितालो। दूर्वायाम्, सा च आकाशरेखायां, खड्गलतायाञ्च।

**हरिताश्म** न० हरिमवर्णमश्म अच् समा० (पेरोजा) मणिभेदे, तुत्थे, (तुँते) उपधातुभेदे च।

**हरित्पर्ण** न० हरिद्वर्णं पर्णमस्य। मूलके (मूला) हरिपर्णादयोऽप्यत्र

**हरिद्दर्भ** पु० हरिः हरिद्वर्णो दर्भः। हरिद्वर्णे कुशे।

**हरिदश्व** पु० हरिन्नामकोऽश्वो यस्य। सूर्ये।

**हरिद्देव** पु० हरिर्देवोऽधिष्ठात्री देवता अस्य। श्रवणानक्षत्रे।

**हरिद्गर्भ** पु० हरिद्वर्णो गर्भो यस्य। हरिद्वर्णे कुशे।

**हरिद्रव** पु० हरिवर्णः पिङ्गलवर्णो द्रवद्रव्यः । नागकेशररजसि ।

**हरिद्रा** स्त्री० हरिं पीतवर्णं द्रवति द्रु-ड । सुनामख्याते ओषधिभेदे

**हरिद्रागणेश** पु० हरिद्रावर्णयुक्तो गणेशः । पीतवर्णे गणेशभेदे ।

**हरिद्राभ** पु० हरिद्रेव आभाति आ+भा—क । पीतशाले (पियाशाल)

कर्बुरके, पीतवर्णे च । तद्वति त्रि० ।

**हरिद्राराग** त्रि० हरिद्राया इव रागः रञ्जनमनुरागोऽस्य । अस्थि-

रानुरागे सौहृदे । [हरिद्रायाञ्च ।

**हरिद्रु** पु० हरिः हरिद्वर्णो दृतादिद्वारा, द्रुः । दृक्षमाले, दारु-

**हरिद्वार** न० हरेस्तत्प्राप्तेः द्वारं सेवनात् । सुनामख्याते तीर्थभेदे ।

**हरिनामन्** न० हरेर्नाम तदाख्यानं वा । हरिनामनि तदाख्याने

च हरेरिव नामास्य । मुद्गे पु० ।

**हरिनेत्र** न० हरेर्नेत्रमिव । श्वेतपद्मे हेम० । विष्णोर्लोचने । हरेः

सिंहस्येव नेत्रमस्य दीर्घत्वात् । मेचके पु० ।

**हरिन्मणि** पु० हरिद्वर्णो मणिः । मरकते मणौ ।

**हरिन्मुद्ग** पु० हरिद्वर्णो मुद्गः । शरदि पक्वमुद्गे ।

**हरिप्रिय** न० हरेर्विष्णोः प्रियम् । कालीयके चन्दने, उशीरे च ।

कदम्बे, पीतभृङ्गराजे विष्णुकन्दे, करवीरे, शङ्खे, बन्धूके, शिवे,

बातुले च पु० । लक्ष्म्यां, तुलस्यां, पृथिव्यां, द्वादश्यां तिथौ च

स्त्री० । हरिवल्लभे त्रि० ।

**हरिवालुक** न० हरेर्विष्णोः प्रियम् वालुकम् । एलवालुके ।

**हरिभक्त** त्रि० हरौ विष्णौ भक्तः । विष्णुभक्तिमति 'सर्व्वजीवेषु यो

विष्णुं भावयेत् समभावतः । हरौ करोति भक्तिञ्च हरिभक्तः स

च स्मृतं' इति पुराणोक्ते सर्व्वत्र समदृष्टिपूर्वकहरिसेवके पु० ।

**हरिभद्र** न० हरिं भद्रयति वर्जयति अच् । हरिवालुके ।

**हरिभुज्** पु० हरिं भेकं भुङ्क्ते भुज—क्विप् । सर्पे ।

**हरिमन्थ** पु० मथ्यते मन्थः एकदेशः हरिःपीतो मन्थो यस्य । चणके,

तस्य बहुमन्थ्योऽपि पीतत्वानपायात्तथात्वम् । हरिं सर्पं मथ्नाति

मन्थ—अण् । गन्धिकारिकायाम् देशभेदे च ।

हरिमन्थक पु॰ हरिः पीतो मन्थ एकांशको यस्य कप्। चणके।

हरिमन्थज पु॰ हरिमन्थे देशे जायते-जन–ड। चणके, कृष्णमुद्गे च

हरिवंश पु॰ ६त॰। विष्णुवंशे, हरेर्वंशो आख्येयत्वेनास्त्यत्र अच् महाभारतान्तर्गते खिलरूपे ग्रन्थभेदे।

हरिवर्ष न॰ हरिनामकं वर्षम्। जम्बुद्वीपस्य नववर्षमध्ये वर्षभेदे।

हरिवासर न॰ हरिप्रियं वासरम्। एकादशीदिवसे, द्वादशी प्रथमपादे च। 'अन्नमाश्रित्य पापानि तिष्ठन्ति हरिवासरे' इति, द्वादश्याः प्रथमः पादो हरिवासरसंज्ञक' इति च पुरा॰।

हरिवाहन पु॰ हरिं वाहयति स्थानान्तरं नयति वह+णिच् ल्यु। गरुडे ६त॰ वारिवाहनमप्यत्र न॰।

हरिवीज न॰ हरेर्वीजमुत्पत्तिकारणत्वेनास्त्यस्य अच्। हरिताले 'हरितालं हरेर्वीजं लघ्वग्रावीजं मनःशिले'ति वैद्यकम्।

हरिशयन न॰ हरेः शयनं निद्रा। विष्णुनिद्रायाम्। हरेः शयनं यत्र तदुपलक्षिते काले स च 'मैत्राद्यपादे स्वपितीह विष्णु'रित्युपक्रम्य 'प्रबुध्यते मासचतुष्टयेने'त्यन्तेन दर्शितः आषाढस्य शुक्लद्वादश्यवधिकार्त्तिकशुक्लद्वादशीपर्य्यन्तरूपोमासचतुष्टयात्मकः। विस्तरो वाचस्पत्याभिधाने।

हरिश्चन्द्र पु॰ हरिः चन्द्र इव ऋषौ सुट्। सूर्य्यवंश्ये त्रिशङ्कुपुत्रे नृपभेदे। ऋषिभिन्ने तु न सुट्। हरिचन्द्रएव।

हरिश्चन्द्रपुर न॰ ६त॰। सौभनगरे।

हरिसङ्कीर्त्तन न॰ हरेर्हरिनाम्नः संकीर्त्तनं कथनम्। श्रीविष्णोर्नामोच्चारणे 'सकलं निष्फलं राजन्! हरिसङ्कीर्त्तनं विने'ति पुराणम्।

हरिहय पु॰ हरिवर्णौ हयौयस्य। इन्द्रे 'हरिं विदित्वा हरिभिश्च वाजिभि'रिति रघौ तस्य हरिवर्णतुरगत्वमुक्तम्।

हरिहर पु॰ हरियुक्तो हरः। हरिहरयोः संश्लिष्टार्द्ध देहतया स्थिते मूर्त्तिभेदे। द्व॰। शिवनारायणो द्वि॰ ब॰।

हरिहरक्षेत्र न॰ हरिहरयोः प्रियं क्षेत्रम् । गङ्गागण्डकी-सङ्गमान्तिकदेशस्थे पाटलिपुत्राद् उत्तरस्यां दिशि स्थिते तीर्थभेदे ।

हरीतकी स्त्री॰ हरिं पीतवर्णं फलद्वारा इता प्राप्ता इण-क्त । संज्ञायां कन् गौ॰ ङीप् । स्वनामख्याते वृक्षे तस्याः फलम् अण् तस्य लुप् । हरीतकीफले स्त्री॰ । कदाचित् कुपिता माता नोदरस्था हरीतकी'ति वैद्यकम् ।

हरेणु स्त्री॰ हृ-एणु । रेणुकानामगन्धद्रव्ये, कुलस्त्रियाञ्च । (मटर) सतीले पु॰ । स्वार्थे कन् तत्रैव ।

हर्त्तृ त्रि॰ हृ-तृच् । हरणकारिणि चौरे, सूर्य्ये च पु॰ ।

हर्म्म्य न॰ हृ-यत् मुट् च । धनिनां गृहभेदे 'रम्यं हर्म्यतलमिति प्रबोधचन्द्रोदयः ।

हर्य्य क्लमे अक॰ गतौ सक॰ भ्वा॰ पर॰ सेट् । हर्यति अहर्यीत् ।

हर्य्यक्ष पु॰ हरि पिङ्गलमक्षि यस्य षच् समा॰ । सिंहे, कुबेरे च ।

हर्य्यश्व पु॰ हरिवर्णोऽश्वोऽस्य । इन्द्रे ।

हर्ष पु॰ हृष-घञ् । सुखे, इष्टाधिगमजन्यानन्दे ।

हर्षण पु॰ हर्षयति अभीष्टदानात् हृष-णिच्-ल्यु । विष्कम्भादिमध्ये चतुर्दशे योगे । हर्षकारके त्रि॰ । हृष-ल्युट् । हर्षे न॰ ।

हर्षमाण पु॰ हृष ताच्छील्ये चानश् । श्राद्धदेवभेदे हृष्टचित्ते त्रि॰

हर्षिणी स्त्री॰हृष-णिच् णिनि ङीप् । विजयायाम् । हर्षकारके त्रि॰

हर्षित त्रि॰ हर्षोजातोऽस्य इतच् । जातानन्दे ।

हल विलेखे भ्वा॰ पर॰ सक॰ सेट् ज्वलादि॰ । हलति अहालीत् ।

हल न॰ हल्यते कृष्यतेऽनेन हल-घञर्थे क । लाङ्गले ।

हलद्दी स्त्री॰हल-शत्, हलन्तं कृषकमपि दायति शोधयति दै-क गौ॰ ङीष् । हरिद्रायाम् ।

हलधर पु॰ हलं धरति आयुधत्वेन धृ-अच् । बलरामे । कृषके त्रि॰ 'उन्मूलिता हलधरेण पदावघातैरि' त्युद्भटः ।

हलभूति स्त्री॰ हलेन हलसाध्या भूतिः कृषिवृत्तौ ।

हला अव्य० हेति लीयते ला-का। नाट्योक्तौ सखीसम्बोधने, सख्यां पृथिव्यां, जले च।

हलायुध पु० हलेन आयुध्यति आ+युध क। बलदेवे।

हलाहल पु० हलेनेव आहलति विलिखति आ+हल-अच्। विषभेदे

हलि पु० हल—इन्। हृहकुले।

हलिन् पु० हलोऽस्त्यस्यायुधत्वेन इनि। बलरामे। कृषके त्रि०।

हलीन पु० हलाय हितः ख। शाकवृक्ष। (सेगुन)।

हलीषा स्त्री० हलस्य ईषा षक०। लाङ्गलदण्डे।

हल्य त्रि० हलं हलकर्षणमर्हति तस्येदं वा यत्। हलकृष्टे क्षेत्रादौ, हलसम्बन्धिनि च। हलानां समूहः यत्। हलसमूहे स्त्री०।

हल्ल चिकाशे भ्वा० पर० अक० सेट्। हल्लति अहल्लीत्।

हल्लक न० हल्ल-ण्वुल्। रक्तकह्लारे (हेला)।

हल्लीश न० हल्ल क्विप् लस-अच् पृ० कर्म०। स्त्रीणां मण्डलिकाकार-नृत्ये। ततः कन्। तत्रैव।

हव पु० हु अप् ह्वे-अप् पृ० वा। यज्ञे, आज्ञायां, होमे आह्वाने च

हवन न० हु ल्युट्। होमे देवाद्युद्देशेन मन्त्रपूर्व्वकं वह्नौ हविःप्रक्षेपे।

हवनी स्त्री० हूयतेऽस्यां हु-ल्युट्। यज्ञकुण्डे।

हवनीय त्रि० हु कर्म्मणि अनीयर्। होमद्रव्ये।

हवा अव्य० हव वाच इन्म० प्रसिद्धार्थे।

हविरशन पु० हविरश्नाति अश-युच्। वह्नौ।

हविर्गन्धा स्त्री० हविषो गन्धो यस्याम्। शम्याम्। (शांइ)।

हविर्गेह न० हविषो गेहम्। यज्ञमण्डपसन्निकृष्टस्थे हवनीय द्रव्य-स्थापनार्थे गेहे।

हविर्मन्थ पु० हविषे मथ्यतेऽसौ मन्थ-घञ्। गणिकारीवृक्षे।

हविष्य न० हविषे हितम् यत्। घृते, मुन्यन्ने हैमन्तिकादान्ने च "चरुर्हविष्यं भुञ्जाना" इति भागवतम्।

हविष्यान्न न० कर्म०। "हैमन्तिकं सितास्विन्नं धान्यं मुद्गास्तिलायवाः कलायकङ्गुनीवारा वास्तूकं हिलमोचिका। षष्टिका कालशाकञ्च

मूलकं केमुकेमरत्। लवणे सिन्धु सामुद्रे गव्ये च दधिसर्पिषी। पयोऽनुद्धृतसारञ्च पनसाम्रहरितकी। तिन्तिडी जीरकञ्चैव नागरञ्चैवपिप्पली। कदली लवली धात्री फलान्यगुडमैक्षवम्। अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते" इत्युक्ते व्रतादौ भक्ष्यद्रव्यभेदे।

**हविस्** न० हूयते हुकर्म्मणि असुन्। घृते, हवनीयद्रव्यमात्रे च यपायामेदसो हविषोनुब्रूहीति' श्रुतिः। भावे असुन्। होमे।

**हव्य** न० हु-कर्मणि यत्। देवयोग्यान्ने हवनीयद्रव्ये त्रि०। भावे यत् होमे न०। [खिन्ने घन्ने चरौ।

**हव्यपाक** पु० हव्याय होमाय पाको यस्य। होमार्थं घृतादिमिश्रिते।

**हव्यवाह** पु० हव्यं वहति देवान् वह-अण्। अग्नौ।

**हव्यवाहन** पु० हव्यं वाहयति वह-णिच् ल्यु। वह्नौ।

**हव्याश** पु० हव्यमश्नाति अश-अण्। वह्नौ। ल्यु। हव्याशनोऽप्यत्र पु०

**हस** हासे भ्वा० प० अक० सेट् सिचि न वृद्धिः। हसति अहसीत् दोषदर्शनपूर्वकहासे। तु सकर्म्मकः "स्थितावहस्सेव पुरं मघोनः" इति भट्टिः।

**ह(हा)स** पु० हस अप् घञ् वा। हासे सुखविकाशनभेदे।

**हसन** न० हस-ल्युट्। प्रीत्यामुखकपोलादेर्विकाशने हास्ये।

**हसन्ती** स्त्री० हस झ ङीप्। अङ्गारधानिकायां मल्लिकाभेदे, शाकिनीभेदे च। हस-शतृ-ङीप्। हासिनि त्रि०। स्त्रियाम् ङीप्।

**हसित** न० हस-भावे क्त। हास्ये, कर्त्तरि क्त। क्रतहास्ये विकसिते च।

**हस्त** पु० हस-तन् नट्। देहावयवभेदे (हात) चतुर्विंशत्यङ्गुल परिमाणे यवोदरैरङ्गुलमष्टसंख्यं हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिरिति' लीलावती। हस्तिशुण्डे च। अश्विन्यादिषु त्रयोदशे नक्षत्रे पु० स्त्री०। जाह्नवी हस्तयोगे, इति पुराणम्। 'पुष्या हस्ता तथा स्वातिरि'ति ज्योतिषम्।

**हस्तामलक** न० हस्तस्थितमामलकम् आमलक्याः फलं। तदिव वा। करावस्थितामलकफले, तद्वत् अनायासदृश्ये पदार्थे वेदान्तप्रसिद्धग्रन्थभेदे च। करामलकादयोऽप्यत्र।

हस्तिक न० हस्तिनां समूहः कन्। हस्तिसमूहे।
हस्तिकर्ण पु० हस्तिनः कर्ण इव पर्णमस्य अच्। एरण्डवृक्षे, पलाशभेदे, गणदेवताभेदे हस्तिकन्दे, रक्तैरण्डे च। कन् किंशुकभेदे।
हस्तिकन्द पु० हस्तिनः पदमिव कन्दोऽस्य। स्वनामख्याते कन्दभेदे।
हस्तिकरञ्ज पु० हस्तीव महान् करञ्जः। महाकरञ्जे।
हस्तिकर्णदल पु० हस्तिनः कर्ण इव दलमस्य। पलाशभेदे।
हस्तिकोलि पु० हस्तीव कोलिः। बदरीभेदे।
हस्तिघोषा स्त्री० हस्तीव बृहती घोषा। बृहद्घोषायाम्।
हस्तिघोषातकी स्त्री० हस्तीव बृहती घोषातकी। हस्तिघोषायाम्।
हस्तिचारिणी स्त्री० हस्तीव चरति चर-णिनि। महाकरञ्जे।
हस्तिदन्त पु० ६त०। करिदन्ते। तदाकारोऽस्त्यस्य अच्। मूलके न०। गृहभित्तिनिखाताग्रे काष्ठनिर्मितकलिकाकारे पदार्थे नागदन्तादयोऽप्यत्र। [भेदे।
हस्तिदन्तफला स्त्री० हस्तिदन्त इव इव फलमस्याः। एर्वारौ कर्कटी-
हस्तिन् पु० हस्तः शुण्डादण्डोऽस्त्यस्य। गजे चन्द्रवंश्ये नृपभेदे च
हस्तिनख पु० हस्तिनो नख इव हस्तिना न खन्यते नञ्+खन—ड वा। पुरद्वारस्थे, मृत्कूटे, दुर्गद्वारावरोधनार्थे निम्नोन्नते खातोद्धृते मृद्राशौ च। [अलुक् स०। (दिल्ली) पुरभेदे।
हस्तिनापुर न० हस्तिना तदाख्यनृपेण चिह्नितं तत्कृतत्वात् पुरम्
हस्तिनी स्त्री० हस्तिनः योषा ङीप्। करिण्याम् गजयोषिति स्त्रीभेदे च।
हस्तिप पु० हस्तिनं पाति पा—क। हस्त्यारोहे। स्वार्थे कन् तत्रैव
हस्तिपत्र पु० हस्तिकर्ण इव पत्रमस्य। हस्तिकन्दवृक्षे।
हस्तिपर्णिका स्त्री० हस्तिकर्णइव पर्णमस्याः कप् अत इत्त्वम्। राजकोषातक्याम्। [कर्कटयाञ्च।
हस्तिपर्णी स्त्री० हस्तिकर्ण इव पर्णमस्या ङीष्। मोरटालतायां,
हस्तिमद पु० ६त०। करिकर्णनिःसृतमदजले। स इव। गन्धद्रव्यभेदे च।

**हस्तिरोहणक** पु० हस्तीव रोहते ल्यु कन्। महाकरञ्जे।
**हस्तिलोध्रक** पु० हस्तीव लोध्रः स्वार्थे कन्। लोध्रभेदे।
**हस्तिविषाणी** स्त्री० हस्ति विषाणं गजदन्तस्तदाकारः मध्यभागो (थोड़) यस्याः गौ० ङीष्। कदल्याम्।
**हस्तिशुण्डा(ण्डी)** स्त्री० हस्तिशुण्डस्तदाकारोऽस्त्यस्याः अच् वा गौ० ङीष्। (हातिशुड़ा) वृक्षे।
**हस्तिश्यामाक** पु० हस्तीव स्थूलः श्यामाकः। स्थूलश्यामाके।
**हस्ते** अव्य० हस्त+ए। पाणौ इत्यर्थे स्वीकारे च।
**हस्त्यध्यक्ष** पु० ७त०। गजाध्यक्षे गजरक्षणादौ नियुक्ते च।
**हस्त्यारोह** पु० हस्तिनमारोहति। आ+रुह अण्। हस्तिपके।
**हहा** पु० हेति शब्दं जहाति हा–क्विप्। गन्धर्वभेदे।
**हा** त्यागे जु० प० स० अनिट्। जहाति अहासीत् निष्ठातस्य नः।
**हा** गतौ जु० आ० स० अनिट्। निष्ठातस्य नः। जिहीते अहासिष्ट।
**हा** अव्य० हा-का। विषादे, शोके, पीडायां, कुत्सायाञ्च।
**हाङ्गर** पु० हा विषादाय पीडायै वा अङ्गं राति रा कस्कनामख्याते जलजन्तुभेदे। [मिते त्रि०।
**हाटक** न० हट-ल्युट्। देशभेदे। तत्रजे-स्वर्णे, धुस्तूरे च स्वर्णनि-
**हान** न० हा भावे क्त। परित्यागे, "हिमहानकृता न कतेति भट्टिः।
**हानि** स्त्री० हा-क्तिन् नि० निः। क्षतौ अपचये।
**हायन** पु० स्त्री० अब्दु जहाति हा-ल्यु-नि०। व्रीहौ। भावं जहाति हा ल्यु नि०। वत्सरे अग्निशिखायां स्त्री०।
**हार** पु० हृ-कर्म्मणि घञ्। मुक्तामालाभेदे "हारो नारोपितः कण्ठे, इति सीतावाक्यम्। हरतीति कर्त्तरि घञ् ण वा भाजके, 'अन्योन्यहाराभिहतौ हरांशाविति लीलावती।
**हारक** पु० हृ–ण्वुल्। चौरे, कितवे, शाखोटकभेदे, भाजकाङ्के च हरणकर्त्तरि त्रि०। [द्राक्षायाम्।
**हारहारा** स्त्री० हार इव हरति आस्वादनात् हृ–अण्। कपिल-

**हारहूर** स्त्री० हृ—क्विप् हृः हारइव हूरं राति रा—क। द्राक्षा-
याम्। मद्ये पु०। [गङ्गास्तवः। पुरुषोत्तमकृते कोषभेदे च।

**हारावली** स्त्री० हार इवावली। मुक्तावल्यां 'शृङ्गारहारावलीति'

**हारि(री)** स्त्री० हृ—णिच्—इन् वा ङीप्। द्यूतादिभङ्गे तत्पराजये,
पथिकसमूहे च। [त्वात् तथात्वम्। हरिद्वारक्ते त्रि०।

**हारिद्र** पु० हरिद्रया रक्तः अण्। कदम्बवृक्षे तत्पुष्पस्य पीत प्राय-

**हारिन्** त्रि० हारोऽस्त्यस्य इनि हृ—णिनि वा। हारके, हार
विशिष्टे, मनोहारिणि च। 'हारीण्यबलानां हारीण्यबलाना'
मिति भट्टिः। [कितवे च।

**हारीत** पु० हृ—णिच्—ईतच्। स्मृतिकर्त्तरि मुनिभेदे। पक्षिभेदे,

**हार्द** न० हृदयस्य कर्म युवा० अण् हृदादेशः। स्नेहे, प्रेमणि, हृदि
भवः विदितो या अण्। हृदयस्थे, हृदयवेद्ये च त्रि०।

**हार्य्य** पु० ह्रियतेऽसौ हृ—ण्यत्। विभीतकवृक्षे। हरणीये त्रि०।

**हाल** पु० हलोऽस्त्यस्य अण् हल एव वा अण्। बलरामे, हले च।

**हाला** स्त्री० हल—घञ्। मद्ये, तालरसजे मद्ये च।

**हालाहल** पु० न० हालेव हलति हल—अच्। विषभेदे, कीटभेदे च
मद्ये स्त्री० तत्र ङीष्।

**हालिक** त्रि० हलेन खनति हलः प्रहरणमस्य तस्येदं वा ठक् ठञ्
वा। हलकर्षके, हलेन योद्धरि, हलसंबन्धिनि च।

**हाव** पु० ह्वे-घञ् नि०। आह्वाने स्त्रीणां शृङ्गारभावजे चेष्टाभेदे च

**हास्तिक** न० हस्तिनां समूहः ठक्। हस्तिसमूहे।

**हास्तिन** न० हस्तिना नृपेण निर्वृत्तम् नगरम् अण् संयोगादित्वा-
दिनो न टिलोपः। हस्तिनापुरे।

**हास्य** न० हस-ण्यत्। हासे, हसने, अलङ्कारोक्ते, रसभेदे च।

**हाहाकार** पु० हाहाइत्यस्य कारः कृ-घञ्। युद्धशब्दे, शोकध्वनौ च

**हि** वर्द्धने गतौ च स्वा० पर सक० अनिट्। हिनोति अहैषीत्।

**हि** अव्य० हा-हि-वा डि। हेतौ, अवधारणे, विशेषे, प्रश्ने, सम्भ्रमे,
हेतुपदेशे, शोके, असूयायां, श्लोकपूरणे च।

हिंसक पु० हिन्स-ण्वुल् । व्याघ्रादौ हिंस्रे पशौ, शत्रौ च हिंसाकारके त्रि० ।

हिंसा स्त्री० हिन्स-अ । वधे, घातने, चौर्यादिकर्मणि च ।

हिंस्र त्रि० हिन्स-र । हिंसाशीले, घोरे, भये, मांस्यां, काकादन्यां, जटामांस्यां, गवेधुकायां, शिरायाञ्च स्त्री० ।

हिक्क कूजने भ्वा० उ० अ० सेट् । हिक्कति ते अहिक्कीत् अहिक्किष्ट ।

हिक्क हिंसायां चु० आ० सक० सेट् । हिक्कयते अजिहिक्कत ।

हिक्का स्त्री० हिक्क-अ । रोगभेदे (हेचकी) ।

हिङ्गु न० हिमं गच्छति गम-डु नि० । (हिङ्) रामठदेशोद्भवे वृक्षे यस्य निर्यासो हिङ्गुद्रव्यम् । [हिङ्गौ ।

हिङ्गुनाडिका स्त्री० हिङ्गुनो नाडीव इवार्थे कन् ह्रस्वः । नाडी-

हिङ्गुनिर्यास पु० हिङ्गुन इव निर्यासोऽस्य । निम्बवृक्षे, इन० हिङ्गुवृक्षनिर्यासे (हिङ्) ।

हिङ्गुपत्र पु० हिङ्गुन इव पत्रमस्य । इङ्गुदीवृक्षे । (हिङ्पत्र) वृक्षभेदे स्त्री० ङीप् ।

हिङ्गुपर्णी स्त्री० हिङ्गुन इव पर्णमस्याः ङीष् । वंशपत्र्याम् ।

हिङ्गुल पु० न० हिङ्गु तद्वर्णं लाति ला-क । रक्तवर्णे वर्णकद्रव्यभेदे, वार्ताक्यां, इङ्गत्याञ्च स्त्री० ङीप् ।

हिङ्गुलु पु० न० हिङ्गु तद्वर्णं लाति ला-डु । (हिङ्गुल) वर्णकद्रव्ये

हिङ्गुशिराटिका स्त्री० हिङ्गुन इव शिरा पत्रशिरामटति अट-ण्वुल् अत इत्वम् । वंशपत्र्याम् ।

हिञ्जल न० हिञ्जल+ष्ट० । मधुरमूले । (आलु) ।

हिज्ज पु० हिनोति हि-क्विप् तया सन् जायते जन-ड कर्म० । हिज्जलवृक्षे । [(हिजल) ।

हिज्जल पु० हि-क्विप् हित् हितकारि जलं यस्य । वृक्षभेदे

हिड गतौ भ्रमणे भ्वा० आ० सक० सेट् इदित् । हिण्डते अहिण्डिष्ट ।

हिडिम्ब पु० राक्षसभेदे स हि भीमेन हतः तद्भगिन्यां स्त्री० ।

**हिडिम्बजित्** हिडिम्बं राक्षसभेदं जितवान् जि-क्विप् । भीमसेने हिडिम्बघातुप्रभृतयोऽप्यत्र ।

**हिडिम्बापति** पु० ६त० । भीमसेने ।

**हिण्डन** न० हिडि–ल्युट् । भ्रमणे, रमणे, लेखने च ।

**हिण्डि(ण्डी)र** पु० हिडि–इरन् ईरन् वा । समुद्रफेने, वार्त्ताकौ, पुरुषे, रुचके च ।

**हित** त्रि० धा–क्त हि–क्त वा । गते, पथ्ये, इष्टसाधने, मङ्गले च ।

**हितकारिन्** त्रि० हितं करोति कृ–णिनि । शुभकारके ।

**हितैषिन्** त्रि० हितमिच्छति इष–णिनि । हितेच्छाकारिणि ।

**हितोपदेश** पु० हितस्य इष्टसाधनस्य उपदेशः । हितार्थे उपदेशे, विष्णुशर्म्मकृते नीतिग्रन्थभेदे च ।

**हिन्ताल** पु० हीनस्तालो यस्मात् ब० । (हेताल) वृक्षे ।

**हिन्दोल** पु० हिन्दोल+अच् पु० । दोलने, श्रावणशुक्लपञ्चम्यां हितदोलनयन्त्रे च भगवतो दोलनरूपे उत्सवभेदे रागभेदे च ।

**हिम** न० हि–मक् । आकाशच्युतजलकणे, शीतलस्पर्शे, तद्वति त्रि० । सल्लकीलतायां, रेणुकायां, भद्रमुस्तायाम्, नागरमुस्तायां, एलायाञ्च स्त्री० । अग्रहायणपौषमासात्मके ऋतुभेदे, चन्दनवृक्षे, चन्द्रे, कर्पूरे, च पु० ।

**हिमक** पु० हिममिव कायति कै–क । विकङ्कतवृक्षे ।

**हिमकर** पु० हिमः करः किरणो यस्य हिमं करोति निषेकात् कृ–अच् । चन्द्रे, कर्पूरे च हिमकिरणादयोऽप्यत्र ।

**हिमगिरि** पु० हिममयो गिरिः हिमप्रधानो वा गिरिः । हिमालयपर्व्वते हिमपर्व्वतादयोऽप्यत्र ।

**हिमतैल** पु० हिमवीर्य्यं तैलम् । कर्पूरजाते तैले ।

**हिमदुग्धा** स्त्री० हिमवीर्य्यकरं दुग्धमस्याः । क्षीरिण्याम् ।

**हिमदुर्द्दिन** न० हिमहेतुकं दुर्द्दिनम् । हिमपातेन दुःखकरे दिने कुज्झटिकायुक्तदिने ।

**हिमद्रुम** पु० हिमप्रधाने जायमानः द्रुमः । निम्बवृक्षे ।

**हिमप्रस्थ** पु० हिमः शीतलः प्रस्थो यस्य । हिमालयपर्व्वते ।
**हिमवत्** पु० हिमानि प्राचुर्य्येण सन्त्यत्र मतुप् मस्य वः । हिमालय-
पर्व्वते ।
**हिमवालुक** पु० हिममयो बालुकेव अंशो यस्य । कर्पूरे ।
**हिमसंहति** स्त्री० ६त० । हिमसमूहे हिमेन जातवज्जाते (वरफ)
पदार्थे च ।
**हिमहासक** पु० हिमं ह्रसति शीतवीर्य्यत्वात् ण्वुल् । हिन्तालवृक्षे ।
**हिमांशु** पु० हिमाः अंशवोऽस्य । चन्द्रे, कर्पूरे च ।
**हिमांश्वभिख्य** न० हिमांशोरिवाभिख्या शोभा यस्य । रौप्ये तस्य
अतिशुभ्रत्वात्तथात्वम् ।
**हिमागम** पु० हिमस्यागमो यत्र । हेमन्ते अग्रहायणपौषमासात्मके
ऋतौ । [गङ्गायाञ्च ।
**हिमाद्रिजा** स्त्री० हिमाद्रौ जायते जन–ड । गौरिपार्वत्यां, पार्व्वत्यां,
**हिमाद्रितनया** स्त्री० ६त० । दुर्गायां हिमाद्रिसुतादयोऽप्यत्र ।
**हिमानी** स्त्री० हिमानां संहतिः हिम+ङीप् आनुक् च । हिम-
समूहे 'आगता वत अरेव हिमानीत्युद्भटः ।
**हिमाराति** पु० ६त० । सूर्य्ये, अर्कवृक्षे, वह्नौ चित्रकवृक्षे च ।
**हिमालय** पु० हिमानामालयः । हिमवत्पर्व्वते हिमप्रधाने आलयो
यस्य । शुक्लखदिरे, भूम्यामलक्याञ्च ।
**हिमाब्ज** न० हिमकाले जायते जन–ड । उत्पले ।
**हिमावती** स्त्री० हिमं सेवने हिमवीर्य्यं विद्यतेऽस्य मतुप् मस्य वः
संज्ञायां दीर्घः । स्वर्णक्षीर्य्याम् ।
**हिमाश्रया** स्त्री० हिमं हिमवीर्य्यमाश्रयति आ+श्रि–अच् । स्वर्ण-
जीवन्त्याम् । [द्राक्षायाम् ।
**हिमोत्तरा** स्त्री० हिममुत्तरं यस्याः सेवने शीतवीर्य्यकरत्वात् कपिल-
**हिमोद्भवा** स्त्री० हिमप्रधानस्थाने उद्भवति उद्–भू–अच् । शट्याम् ।
**हिरण्य** न० हृ–क्युट् नि० । रेतसि, स्वर्णे, वराटके च ।

**हिरण्मय** त्रि॰ हिरण्यात्मकम् मयट् नि॰। हिरण्यात्मके स्त्रियां ङीप्। 'हिरण्मयी शाललतेवेति' भट्टिः। नववर्षमध्ये वर्षभेदे न॰ आदित्यमण्डलस्थे परमब्रह्मणि 'य एष हिरण्मयः पुरुषो दृश्यते हिरण्याश्वः' इति छान्दोग्यम्।

**हिरण्य** न॰ हिरण्मेव स्वार्थे यत्। सुवर्णे, धुस्तूरे, रेतसि, द्रव्ये, वराटके, अक्षये, मानभेदे, अकुप्ये, रजते, धने च।

**हिरण्यकशिपु** पु॰ दैत्यविशेषे। स तु कश्यपात् दित्यां जातः।

**हिरण्यकशिपुहन्** पु॰ हन-क्विप् ६त॰। विष्णौ।

**हिरण्यकामधेनु** स्त्री॰ विधानेन हिरण्यरचिता कामधेनुः। तुलादिषोडशमहादानमध्ये दानार्थं हिरण्येन कल्पितायाम् धेनौ, उपचारात् तद्दाने च।

**हिरण्यगर्भ** पु॰ हिरण्यं स्वर्णमयाण्डं गर्भ उत्पत्तिस्थानमस्य। चतुर्मुखे ब्रह्मणि तस्य हेमाण्डप्रभवत्वात्तथात्वम् 'तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिन् यज्ञे स्वयं ब्रह्मा सर्व्वलोकपितामह इति' मनुः। तुलादिषोडशमहादानमध्ये दानार्थं स्वर्णादिना कल्पिते हिरण्यगर्भे, उपचारात्तद्दाने, शालग्राममूर्त्तिभेदे च।

**हिरण्यबाहु(ह्ल)** हिरण्यं वाहयति प्रापयति भक्तान् हिरण्यवर्णो वाहुरिव तरङ्गो वा यस्य। महादेवे, शोणे नदभेदे च।

**हिरण्यरेतस्** पु॰ हिरण्यं रेतो यस्य। वह्नौ, चित्रकवृक्षे च स्वर्णस्य वह्निरेतोभवत्वं भारतादावुक्तम्।

**हिरण्याक्ष** पु॰ कश्यपस्य पुत्रे दैत्यभेदे।

**हिरण्याश्व** पु॰ हिरण्यनिर्म्मितोऽश्वः। तुलादिषोडशमहादानमध्ये दानार्थं स्वर्णादिकल्पितेऽश्वे, तद्दाने च।

**हिरण्याश्वरथ** पु॰ हिरण्येन निर्म्मितः अश्वः तद्युक्तरथश्च। तुलादिषोडशमहादानमध्ये दानार्थस्वर्णादिना कल्पिते सुवर्णमयाश्वयुक्तरथे, तद्दाने च।

**हिरुक्** अव्य॰ हि-उकिक् रुट् च। वर्ज्जने त्यागे।

**हिल** भावकरणे तु॰ प॰ अक॰ सेट्। हिलति अहेलीत्।

हिलमोचि(ची) स्त्री० हिल—क मुच—इनि कर्म० वा ङीप् । (हेले-
    ञ्चा) शाके स्वार्थे कन् तत्रैव । [हिल्लोलत् त ।
हिल्लोल दोलने अद० चु० उभ० सक० सेट् । हिल्लोलयति ते अजि-
हिल्लोल पु० हिल्लोल—अच् । तरङ्गे । घञ् । दोलने ।
हिव प्रीणने भ्वा० प० सक० सेट् इदित् । हिन्वति अहिन्वीत् ।
हिवुक न० हिवि—उकक् नि० । ज्योतिषोक्ते लग्नाच्चतुर्थे स्थाने ।
हिस वधे वा चु० उ० पचे रुधा० प० सक० सेट् इदित् । हिनस्ति
    हिंसयति ते अहिंसीत् अजिहिंसत् त ।
ही अव्य० हि—डी । विस्मये, दुःखे, विषादे, शोके च । वीप्सायां
    द्वित्वम् । विषादाद्यतिशये । [व्यवहारे प्रतिवादिभेद पु० ।
हीन त्रि० प० हा—क्त तस्य नः ईत्वम् । ऊने, निन्द्ये, अधमे च ।
हीनवादिन् पु० कर्म० । 'पूर्ववादं परित्यज्य योऽन्यमालम्बते
    पुनः । वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नर' इति स्मृत्युक्ते
    व्यवहारे वादिभेदे ।
हीनाङ्ग त्रि० हीनमङ्गं यस्य । स्वभावतो न्यूनाङ्गवति 'हीनाङ्ग
    विकलाङ्ग'चेति स्मृतिः । स्त्रियां वा ङीप् ङीवन्तः । चुद्रपि-
    पील्याञ्च ।
हीन्ताल पु० हीनस्तालो यस्मात् ५० । हिन्तालवृक्षे (हेताल)
हीर न० हृ—क नि० । वज्रे, हीरके च । शिवे, सर्पे, हारे, सिंहे
    च पु० । लक्ष्म्यां पिपीलिकायां काश्मीर्याञ्च स्त्री० । स्वार्थे कन्
    (हीरा) मणिभेदे ।
हीराङ्ग पु० हीरमिव दृढमङ्गमस्य । इन्द्रस्य वज्रे ।
हीलु न० ही विस्मयं लाति ला—क । रेतसि ।
हु होमे, अदने च जु० प० सक० अनिट् । जुहोति अहौषीत् ।
हुङ्कार पु० हुमित्यव्यक्तस्य कारः स वञ् उप० । हुमित्यव्यक्तस्य प्रति-
    षेधसूचकशब्दस्योच्चारणे । 'मौनव्रतं महाकष्टं हुङ्कारेणापि
    नश्यतीति' पुराणम् । [हुडति अहुडीत् जुहोड ।
हुड राशीकरणे सक० मज्जने संघाते च अक० तु० कु० प० सेट् ।

**हुड** राशीकरणे भ्वा० आ० सक० सेट् इदित् । हुण्डते अहुण्डिष्ट ।

**हुड** गतौ भ्वा० आ० सक० सेट् चङि न ह्रस्वः । होडते अहोडिष्ट ।

**हुड** पु० हुड-क । मेषे, चौरनिवारणार्थं भूमौ निखाते लौहकीलके च ।

**हुत** त्रि० हु-क्त । देवोद्देशेन मन्त्रद्वाराऽग्नौ प्रक्षिप्ते घृतादौ भावे क्त । होमे न० । [ अग्नौ, चित्रकवृक्षे च ।

**हुतभुज्** पु० हुतं मन्त्रेण प्रक्षिप्तं घृतादि भुङ्क्ते भुज-क्विप् ।

**हुतवह** पु० हुतं घृतादिकं वहति प्रापयति देवान् प्रीत्यर्थम् । वह-अच् । अग्नौ, चित्रकवृक्षे च ।

**हुताश** पु० हुतमश्नाति अश-अण् । वह्नौ, चित्रकवृक्षे च । ल्यु हुताशनोऽप्यत्र । स च कर्म्मविशेषविहितवह्नौ च ।

**हुति** स्त्री० हु-क्तिन् । होमे । [ हुङ्कृत्य तङ्कृत्येति' स्मृतिः ।

**हुम्** अव्य० हु-डुमि । स्मरणे, प्रश्ने, अनुज्ञायां च निवारणे, 'गुरु'

**हुर्च्छ** कौटिल्ये भ्वा० प० सक० सेट् । हूर्च्छति अहूर्च्छीत् । हुल्पाठक्रमात् हुर्च्छतीत्येवेत्यन्ये । [लीत् ।

**हुल** हृतौ संवरणे च भ्वा० प० सक० सेट् ज्वला० । होलति अहो-

**हुलहुली** स्त्री० हुल-क आभीक्ष्ण्ये द्वित्वम् ङीप् । स्त्रीणां मङ्गलध्वनिभेदे (उलुउलु) ।

**हुहु(हू)** ह्वे-डु नि० । गन्धर्वभेदे पु० हुहूरित्यप्यत्र ।

**हूङ्कार** पु० हूम्+कृ-घञ् । अवज्ञाहेतुके शब्दभेदे 'हूङ्कारेणैव तं भस्म सा चकारात्मिका तत' इति चण्डी ।

**हूड** गतौ भ्वा० आ० सक० सेट् चङि न ह्रस्वः । हूडते अहूडिष्ट ।

**हूत** त्रि० ह्वे-क्त संप्रसारणम् । आहूते कृताह्वाने ।

**हूति** स्त्री० ह्वे-क्तिन् संप्रसारणम् । आह्वाने ।

**हून** पु० ह्वे-नक् संप्रसारणम् च । म्लेच्छजातिभेदे, तद्वासस्थानदेशभेदे च 'हूनवङ्गकलिङ्गेषु नान्यदेशे कदाचने'ति ज्योतिषम् । तत्र प्रचलिते स्वर्णमुद्राभेदे इत्यन्ये । [अवज्ञायाम् ।

**हूम्** अव्य० हु-डूम् । प्रश्ने, वितर्के, सम्मतौ, क्रोधे, भये, निन्दायाम्

**हूर्च्छन** न० हुर्च्छ-ल्युट् । कौटिल्ये ।

हृ हरणे भ्वा० उभ० द्विक० अनिट् । हरति ते अहार्षीत् अहृत ।
हृ बलात्कारहरणे जु० पर० सक० अनिट् वैदिकः । जहर्त्ति अहार्षीत् ।
हृच्छय पु० हृदि शेते शी—अच् । कामदेवे । हृदयशायिनि त्रि० ।
हृच्छूल न० ६त० । शूलरोगभेदे । [वीरवतीति' भट्टिः ।
हृणी कण्ड्वा० आत्म० अक० सेट् । हृणीयते अहृणीयत 'हृणीयते
हृणीया स्त्री० हृणीय—अ । निन्दायाम् ।
हृत्कम्प पु० ६त० भयादिहेतुके हृदयकम्पे ।
हृत त्रि० हृ—क्त । अपहृते, स्थानान्तरं गमिते च ।
हृत् त्रि० हृ—क्विप् तुक् च । हारिणि । पु० तस्य दः, हृदयस्य हृदा-
देशो वा । हृदये मानसे च न० ।
हृदय न० हृ कयन् दुक् च । 'मनसि, वक्षसि च । हृत् एति इण—
अच् । परब्रह्मणि 'हृदय' तस्मात् दयमिति' श्रुतिः ।
हृदयग्रन्थि पु० हृदयस्य ग्रन्थिः । अविद्यासम्बन्धरूपे संसारबन्धे
'भिद्यते हृदयग्रन्थिरि'ति भागवतम् ।
हृदयङ्गम न० हृदयं गच्छति गम—खच् मुम् च । युक्तियुक्ते वाक्ये ।
मनोहरे त्रि० 'हृदयङ्गममूर्त्तिं ग्लमि'ति भट्टिः । [वक्षःस्थले ।
हृदयस्थान न० हृदयस्य मनसः स्थानम् हृदयरूपं वा स्थानम् ।
हृदयिक त्रि० हृदयं प्रशस्तमनोऽस्त्यस्य ठन् । प्रशस्तचित्ते । इति
तत्रैव ।
हृदयेश पु० ६त० । भर्त्तरि । [रोमसंघे ।
हृदावर्त्त पु० हृदिस्थ आवर्त्तः । अश्वस्य हृदयस्थे आवर्त्ताकारे
हृदिका स्त्री० द्रोणश्यालकस्य कृपाचार्य्यस्य मातरि ।
हृदिकासुत पु० ६त० । द्रोणश्यालके कृपाचार्य्ये ।
हृदिस्पृश् त्रि० हृदि हृदये स्पृश्यतेऽसौ कर्मणि क्विन् अलुक् स० ।
हृद्ये मनोज्ञे । कर्त्तरि क्विन् । मर्मस्पृशि, दुःखदे च ।
हृद्गोल पु० पर्व्वतभेदे ।
हृद्य न० हृदि स्पृश्यते मनोज्ञत्वात् हृद्+यत् । गुडत्वचि (दारचिनि
मनोज्ञे त्रि० ऋद्धिनामौषधौ स्त्री० ।

**हृद्यगन्ध** न० हृद्यो गन्धोऽस्य । क्षुद्रजीरके, बिल्ववृक्षे पु० । आत्मा स्त्री० । तत् समा० । हृद्यगन्धोऽप्यपि क्षुद्रजीरके न० ।
**हृद्रोग** पु० ६त० हृदयस्य रोगभेदे, कामे च ।
**हृद्रोगवैरिन्** पु० ६त० । अर्जुनवृक्षे ।
**हृद्दण्टक** पु० ६त० । हृदयस्य विभाजके, जठरे ।
**हृल्लास** पु० हृदयस्य लासो यत्र हृदादेशः । हिक्कारोगे तेन हि हृदयस्य स्फूर्त्तिरिव भवति ।
**हृल्लेख** पु० हृदयं लिखति स्पृशति लिख–अ हृदादेशः । ध्याने, तर्के, तन्त्रोक्ते–मन्त्रभेदे च । औत्सुक्ये स्त्री० ।
**हृष** चित्तोत्साहे भ्वा० पर० अक० सेट् । हर्षति अहर्षीत् ।
**हृष** हर्षे चित्तोत्साहे, दि० प० अ० सेट् । हृष्यति अहृषत् अहर्षीत्
**हृष** मिथ्याकरणे भ्वा० पर० सक० सेट् क्त्वावेट् । हर्षति अहर्षीत् ।
**हृषित** त्रि० हृष–क्त । प्रीते, विस्मिते, प्रहते, प्रणते, वर्मिते, जातरोमाञ्चे च ।
**हृषीक** न० हृष–ईकन् । विषयग्राहके–चक्षुरादौ–इन्द्रिये ।
**हृषीकेश** पु० ६त० । विष्णौ 'अन्तर्यामिब्राह्मणे तस्य सर्वनियन्तृत्वोक्तेः सर्वेन्द्रियप्रवर्त्तकत्वादीशत्वम् । [च ।
**हृष्ट** त्रि० हृष–क्त । प्रीते, जातहर्षे, जातरोमाञ्चे, विस्मिते, प्रतिहते [किते ।
**हृष्टमानस** त्रि० हृष्टं प्रीतं मानसमस्य । हृष्टचित्ते ।
**हृष्टरोमन्** त्रि० हृष्टमिव जाताङ्कुरं रोम यस्य । जातरोमाञ्चे, पुल-
**हृष्टि** स्त्री० हृष–क्तिन् । आनन्दे, हर्षे, ध्याने च ।
**हे** अव्य० हा–डे । सम्बोधने, आह्वाने, असूयादौ च ।
**हेठ** विबाधे भ्वा० प० सक० सेट् । हेठति अहेठीत् । [अहेठीत् ।
**हेठ** भूतौ उत्पत्तौ च अक० पवित्रीकरणे सक० तु० प० सेट् । हेठति
**हेठ** बाधने भ्वा० आ० सक० सेट् चङि न ह्रस्वः । हेठते अहेठिष्ट ।
**हेठ** पु० हेठ–घञ् । बाधायाम्, विघाते च ।
**हेड** अनादरे भ्वा० आ० सक० सेट् चङि न ह्रस्वः । हेडते अहेडिष्ट ।
**हेड** वेष्टने भ्वा० प० सक० सेट् घटा० । हेडति अहेडीत् ।

**हेति** स्त्री० हन—करणे क्तिन् नि०। अस्त्रे, अग्निशिखायां, सूर्य्य-किरणे, तेजोमात्रे, साधने च।

**हेतु** पु० हि—तुन्। कारणे, अनुमितिसाधने—व्याप्ये, फले च।

**हेतुता** स्त्री० हेतोर्भावः तल्। हेतुत्वे, कार्य्याव्यवहितपूर्व्वक्षणे नियतकार्य्याधिकरणवृत्तित्वरूपे कारणत्वे, कर्त्तृविशेषे च 'हेतु-तावच्छेदकत्वे'ति' प्राहुः।

**हेतुमत्** त्रि० हेतुरस्त्यस्य मतुप्। कार्य्ये। स्त्रियां ङीप्।

**हेत्वाभास** पु० हेतुरिव आभासते आ+भास—अच् हेतोर्वा आभासः आ+भास—घञ्। दुष्टे हेतौ, हेतुदोषे च। स च दोषः पञ्चविधः व्यभिचारः, विरुद्धता, असिद्धिः, सत्प्रतिपक्षता, बाधश्च। तादृश-दोषेषु सत्सु अनुमितिर्नेति एतल्लक्षणोदाहरणादिकं वाचस्पत्ये।

**हेम** न० हि—मन्। स्वर्णे, धुस्तूरे, माषकपरिमाणे च। कृष्णवर्णाश्वे, बुधे च पु०।

**हेमकन्दल** पु० हेमवर्णं कन्दं लाति ला-क। प्रवाले।

**हेमकान्ति** स्त्री० हेम्न इव कान्तिरस्याः। दारुहरिद्रायाम् स्वर्णतुल्य-द्युतियुक्ते त्रि० द्रत०। स्वर्णस्य दीप्तौ स्त्री०।

**हेमकार** पु० हेम तन्मयं भूषणं करोति कृ—अण्। स्वर्णकारे। वर्ण-सङ्करभेदे। (स्याकरा)

**हेमकिञ्जल्क** न० हेमेव पीतं किञ्जल्कं यस्य। नागकेशरे।

**हेमकूट** पु० हेममयः कूटो यस्य। किंपुरुषवर्षस्थे पर्व्वतभेदे।

**हेमकेतकी** स्त्री० हेमवर्णा केतकी। स्वर्णकेतक्याम्।

**हेमक्षीरी** स्त्री० हेम इव पीतं क्षीरं यस्याः। स्वर्णक्षीर्य्याम्।

**हेमगन्धिनी** स्त्री० हेम्नः नागकेशरस्येव गन्धोऽस्त्यस्याः इनि ङीप्। रेणुकाख्ये गन्धद्रव्ये।

**हेमगौर** पु० हेमेव गौरः पीतः। अशोकवृक्षे, स्वर्णतुल्यपीते त्रि०।

**हेमतार** न० हेम तारयति उत्कृष्टं करोति तॄ—णिच्—अण्। तुत्थे

**हेमदुग्धक** पु० हेमवर्णं दुग्धं निर्य्यासोऽस्य कप्। उडुम्बरे। स्वर्ण-क्षीर्य्यां स्त्री० वा ङीपि अत इत्वम्।

**हेमदुग्धिन्** पु० हेमवर्णं दुग्धं निर्यासोऽस्यास्य इनि । उडुम्बरे ।
**हेमन्** न० हि—मनिन् । स्वर्णे—धातौ, धुस्तूरे, नागकेशरे, हिमे च ।
**हेमन्त** पु० न० । हि—झ सुट् च । अग्रहायणपौषमासात्मके ऋतौ ।
**हेमन्तनाथ** पु० हेमन्ते नाथ्यते याच्यते नाथ-कर्म्मणि घञ् । कपित्थे ।
**हेमपुष्प** न० हेमवर्णं पुष्पमस्य । अशोकवृक्षे । चम्पकवृक्षे पु० स्वार्थे कन् । तत्र, लोध्रे च ।
**हेमपुष्पी** स्त्री० हेमवर्णं पुष्पमस्याः ङीप् । मञ्जिष्ठायाम्, स्वर्णजीवन्त्याम्, इन्द्रवारुण्याम्, सुवल्याम्, वाण्टकार्य्याञ्च । संज्ञायां० कन् ह्रस्वः । स्वर्णयूथिकायाम् स्त्री० ।
**हेमफला** स्त्री० हेमवर्णं फलमस्याः । स्वर्णकदल्याम् (चांपाकला)
**हेममालिन्** पु० हेमेव किरणानां मालाऽस्त्यस्य इनि । सूर्य्ये ।
**हेमयूथिका** स्त्री० हेमवर्णा यूथिका । स्वर्णयूथिकायाम् ।
**हेमरागिणी** स्त्री० हेम्न इव रागोऽस्त्यस्या इनि ङीप् । हरिद्रायाम् ।
**हेमलता** स्त्री० हेमवर्णा लता । स्वर्णजीवन्त्याम् ।
**हेमशिखा** स्त्री० हेमवर्णा शिखा यस्याः । स्वर्णक्षीर्य्याम् ।
**हेमसार** न० हेम सारयति निर्म्मलीकरोति सृ—अण् । तुत्थे ।
**हेमहस्तिरथ** पु० हेमनिर्म्मितहस्तियुक्तो रथः । तुलापुरुषादिषोडशमहादानमध्ये दानार्थं कल्पिते स्वर्णमयहस्तियुक्ते रथे, तद्दाने च ।
**हेमाङ्ग** पु० हेमेव पीतमङ्गं यस्य । गरुडे, सिंहे, सुमेरौ, ब्रह्मणि, चम्पकवृक्षे, विष्णौ च । स्वर्णवर्णाङ्गयुक्ते त्रि० हेमतुल्येऽङ्गे न० ।
**हेमाद्रि** पु० हेममयोऽद्रिः । सुमेरौ पर्व्वते । [मर्द्दनयोग्ये त्रि० ।
**हेमाद्रिजरण** पु० हेमाद्रौ जीर्य्यति जॄ—ल्यु । स्वर्णक्षीर्य्याम् । हेल-
**हेय** त्रि० हा—यत् । त्याज्ये ।
**हेर** न० हि—रन् । हरिद्रायाम्, मुकुटभेदे च ।
**हेरम्ब** पु० हे शिवे रम्बति रबि—अच् अलुक् समा० । गणेशे ।
**हेरम्बजननी** स्त्री० ६त० । दुर्गायाम् । [चिकायाम् ।
**हेलञ्चा** स्त्री० हिल—घञ् हेलं चिनोति चि—ड टाप् पृ० । हिलमो-
**हेलन** न० हिल—ल्युट् । अवज्ञायाम् ।

**हेला** स्त्री॰ हेड—अनादरे भावे अ डस्य लः । स्त्रीणां शृङ्गारभावजे 'प्रौढेच्छा याऽतिरूढानां नारीणां सुरतोत्सवे । शृङ्गारशास्त्रतत्त्वज्ञैः हेला सा परिकीर्त्तिते'त्युक्तचेष्टाविशेषे ।

**हेलि** पु॰ हिल—इन् । सूर्य्ये, अर्कवृक्षे च । घिणि । हेलीत्यप्यत्र ।

**हेष** अव्यक्ते भ्वा॰ आ॰ अ॰ सेट् चङि न ह्रस्वः । हेषते अजिहेषत ।

**हेषा** स्त्री॰ हेष—अ । घोटकानां शब्दे ।

**हेहे** अव्य॰ हेच हेच द्व॰ । सम्बोधने ।

**है** अव्य॰ ह्वा-कै । सम्बोधने, आह्वाने च ।

**हैतुक** त्रि॰ हेतौ प्रसृतः ठञ् । हेतुवादरते, अयुक्तिकवाक्यवादिनि 'त्रैविद्यो हैतुकस्तर्की निरुक्तो धर्म्मपाठक' इति स्मृ॰ ।

**हैम** त्रि॰ हिमे भवम् अण् । हिमजातमात्रे भूनिम्बे पु॰ हेम्नो विकारः अण् टिलोपः । सुवर्णविकारे सुवर्णमयपदार्थे ।

**हैमन** पु॰ हेमन्त एव हेमन्ते भवो वा अण् तलोपः । हेमन्ते काले । तत्र जाते त्रि॰ ।

**हैमवत** न॰ हिमवतोऽदूरभवो देशः तस्येदं वा अण् । भारतवर्षभेदे हिमालयसम्बन्धिनि त्रि॰ विषभेदे पु॰ तस्यापत्यं तत्र भवो वा अण् । पार्व्वत्यां, हरीतक्यां, सुवर्णक्षीर्य्यां श्वेतवचायाञ्च स्त्री॰ ङीप् ।

**हैमा(मी)** स्त्री॰ हेम तद्वर्णोऽस्त्यस्य अण् वा ङीप् । स्वर्णयूथिकायाम्

**हैयङ्गवीन** ह्योगोदोहाद्भवम् ह्यस्+गो+ख नि॰ । नवनीते, पूर्व्वदिनदुग्धोद्भवे सद्योजाते घृते च ।

**हैहय** पु॰ देशविशेषे । तेषां राजा अण् । हैहयेश्वरे कार्त्तवीर्य्ये ।

**हो** अव्य॰ ह्वे—डो नि॰ । सम्बोधने । [अहोडिष्ट ।

**होड** गतौ अनादरे च भ्वा॰ आ॰ सक॰ सेट् चङि न ह्रस्वः । होडते

**होड** पु॰ होड—अच् । हुड—अच् वा । समुद्रगामिनौकाभेदे (डुंगि) चौरचिह्ने च ।

**होतृ** पु॰ हु—तृच् । ऋग्वेदाभिज्ञे । होमकर्त्तरि त्रि॰ स्त्रियां ङीप् 'या हविर्या च होत्री'ति शकुन्तला ।

**होत्र** न॰ हु—ष्ट्रन् । होमे, हविषि, घृतादौ च । स्तुतौ स्त्री॰ टाप् ।

होमिन् पु० होम: होमोऽस्त्यस्य इनि। होमकर्त्तरि।

होत्रीय न० होत्राय हितम् होतुरिदं वा छ। हविर्गृहे। होतृधर्म्मत्वमि त्रि०।

होम पु० हु—मन्। देवतोद्देशेन वह्नौ घृतादित्यागरूपे हवने नित्यं गृहस्थकर्त्तव्येषु पञ्चसु यज्ञेषु मध्ये देवयज्ञे, आत्मीयविप्रपार्श्वे आत्मीयायभागस्य मन्त्रेण दाने च।

होमकुण्ड न० होमार्थं कुण्डम्। होमार्थे कुण्डे।

होमधान्य न० होमोपयुक्तं धान्यम्। तिले, यवे च।

होमधूम पु० होमजः धूमः। होमार्थाग्निजाते धूमे।

होमभस्मन् न० होमजं भस्म। हुतद्रव्यजाते भस्मनि।

होमिन् पु० होमोऽस्त्यस्य इनि। होमकर्त्तरि।

होम्य त्रि० होमाय हितम् यत्। होमोपयुक्ते घृतादौ।

होरा स्त्री० हु—रन्। ज्योतिषोक्ते लग्ने, राश्यर्द्धभागे, होराख्यपकशास्त्रभेदे, रेखायाञ्च।

होलका स्त्री० हु—विच् लकति लक—अच् कर्म्म०। 'अर्द्धपक्वं शमीधान्यैस्तृणभृष्टैश्च होलका' इत्युक्ते तृणादिना अर्द्धपक्वे शमीधान्ये। [श्येति, कल्पद्रुमतिरिति दायभागः।

होलाका स्त्री० हु-विच् लक-वञ्। वसन्तोत्सवभेदे, 'होलाका कर्त्त-

हो अव्य० हु डो नि०। सम्बोधने, आह्वाने च। [अह्नौहित।

होड अनादरे गतौ च भ्वा० भ्वा० सक० सेट् चङि न ह्रस्वः। होडते

ह्नु चौर्य्ये अद० आत्म० सक० अनिट्। ह्नुते अह्नोष्ट।

ह्मल चलने भ्वा० प० अक० सेट् घटा०। ह्मलति अह्मालीत्। प्रह्मलयति अनुपसर्गस्य वा ह्रस्वः।

ह्यस् अव्य० गतेऽह्नि नि०। गतदिवसे।

ह्यस्तन त्रि० ह्यस्+भवार्थे ट्युल् तुट् च। गतदिवसभवे त्यप्। ह्यस्त्योऽप्यत्र त्रि०। [अह्नगीत्।

ह्रग संवरणे भ्वा० पर० सक० सेट् घटा० मित् न इदित्। ह्रगति

ह्रद पु० ह्राद-अच् नि०। अगाधजलाशये।

ह्रदिनी स्त्री॰ ह्रदोऽस्त्यस्याम् इनि । नद्याम् ।

ह्रप भाषणे चु॰ उ॰ सक॰ सेट् । ह्रापयति ते अजिह्रपत् त ।

ह्रस रवे भ्वा॰ प॰ सक॰ सेट् । ह्रसति अह्रसीत् अह्रासीत् ।

ह्रसिष्ठ त्रि॰ अतिशयेन ह्रस्वः इष्ठन् ह्रसादेशः । अतिह्रस्वे ।

ह्रसिमन् पु॰ ह्रस्वस्य भावः इमनिच् ह्रसादेशः । ह्रस्वतायाम् ।

ह्रसीयस् त्रि॰ अतिशयेन ह्रस्वः ईयसुन् ह्रसादेशः । अतिह्रस्वे । स्त्रियां ङीप् ।

ह्रस्व न॰ ह्रस-वन् । परिमाणभेदे महति । खर्व्वे च त्रि॰ एकमात्राकालोच्चार्य्ये लघुवर्णे पु॰ ।

ह्रस्वकुश पु॰ कर्म॰ । श्वेतकुशे ह्रस्वदर्भोऽप्यत्र ।

ह्रस्वगर्भ पु॰ ह्रस्वो गर्भो यस्य । कुशे ।

ह्रस्वगवेधुका स्त्री॰ कर्म॰ । नागबलायाम् ।

ह्रस्वजम्बु स्त्री॰ कर्म्म॰ । क्षुद्रजम्बूवृक्षे ।

ह्रस्वदा स्त्री॰ ह्रस्वैरपि दीयते छिद्यते दो-क । शल्लक्याम् ।

ह्रस्वपत्रक पु॰ ह्रस्वं पत्रमस्य कप् । नगजमधूके (मौल) अश्वत्थ्याम् स्त्री॰ टाप् अत इत्त्वम् ।

ह्रस्वफला स्त्री॰ ह्रस्वं फलमस्याः । भूमिजम्बूवृक्षे ।

ह्रस्वमूल पु॰ ह्रस्वं मूलमस्य । रक्तेक्षौ ।

ह्रस्वाग्नि पु॰ ह्रस्वः अग्निरस्मात् ५ ब॰ । अर्कवृक्षे ।

ह्रस्वाङ्ग पु॰ ह्रस्वमङ्गमस्मात् ५ ब॰ । जीवकौषधे ६ ब॰ । वामने, खर्वे त्रि॰ । कर्म॰ । ह्रस्वे अङ्गे न॰ ।

ह्राद स्वने भ्वा॰ आ॰ अक॰ सेट् । ह्रादते अह्रादिष्ट ।

ह्राद पु॰ ह्राद-घञ् । शब्दे । अच् । हिरण्यकशिपुपुत्रभेदे पु॰ । शब्दकारके त्रि॰ ।

[स्याञ्च । ह्रादविशिष्टे त्रि॰ ।

ह्रादिनी स्त्री॰ ह्राद णिनि ङीप् । विद्युति, वज्रे, नद्याम्, शल्ल-

ह्रास पु॰ ह्रस घञ् । शब्दे, अपचये च ।

ह्रिणी लज्जायाम् कण्ड्वा॰ आ॰ अ॰ सेट् । ह्रिणीयते अह्रिणीयिष्ट ।

ह्रिणीया स्त्री० हृणी-यक्-अ । लज्जायाम् ।

ह्री लज्जायाम् जु० प० अक० अनिट् । जिह्रेति अह्रैषीत् ।

ह्री स्त्री० ह्री-क्विप् । लज्जायाम् ।

ह्रीच्छ लज्जायाम् भ्वा० प० अक० सेट् । ह्रीच्छति अह्रीच्छीत् ।

ह्रीजित त्रि० ३त० । लज्जायीते ।

ह्री(त)ण त्रि० ह्री-क्त वा तस्य नः । लज्जिते । [(वाला) सुगन्धद्रव्यभेदे

ह्रीवेर(ल) न० ह्रिये लज्जायै वेरमङ्गमस्य कुत्सितत्वात् पृ० वा रस्य लः

ह्रुड गतौ भ्वा० आ० सक० सेट् चङि न ह्रस्वः । ह्रोडते अह्रोडिष्ट ।

ह्रूड गतौ भ्वा० आ० सक० सेट् चङि न ह्रस्वः । ह्रूडति अह्रूडिष्ट ।

ह्रेप गतौ भ्वा० आ० स० सेट् चङि न ह्रस्वः । ह्रेपते अह्रेपिष्ट ।

ह्रेष सर्पणे भ्वा० आ० सक० सेट् चङि न ह्रस्वः । ह्रेषते अह्रेषिष्ट ।

ह्रेषा स्त्री० ह्रेष-अ । अश्वशब्दभेदे ।

ह्रौड गतौ भ्वा० आ० स० सेट् चङि न ह्रस्वः । ह्रौडते अह्रौडिष्ट ।

ह्लग संवरणे भ्वा० प० सक० सेट् घटा० सिचि न वृद्धिः । ह्लगति अह्लगीत् ।

ह्लप भाषणे चु० उ० द्विक० सेट् । ह्लापयति ते अजिह्लपत् त ।

ह्लस रवे भ्वा० प० अ० सेट् । ह्लसति अह्लसीत् अह्लासीत् ।

ह्लाद शब्दे भ्वा० आत्म० अक० मोदने सक० सेट् निष्ठायामनिट् । ह्लादते अह्लादिष्ट ।

ह्लाद पु० ह्लद घञ् । आह्लादे, आनन्दे, सन्तोषे ।

ह्लादिनी स्त्री० ह्लाद-णिनि ङीप् । विद्युति, वज्रे, ईश्वरशक्तिभेदे च । ह्लादविशिष्टे त्रि० ।

ह्लल चलने भ्वा० प० अक० सेट् घटा० । ह्ललति अह्लालीत् । प्रह्ललयति अनुपसर्गस्य वा ह्रस्वः ह्ललयति ह्लालयति ।

ह्लान न० ह्ले-ल्युट् । आह्वाने ।

ह्वृ कुटिलीकरणे भ्वा० प० सक० अनिट् । ह्वरति अह्वार्षीत् ।

ह्वे स्पर्द्धायां शब्दे च अक० आह्वानार्थे सक० भ्वा० उभ० यजा० अनिट् । ह्वयति अह्वत्-अह्वत । जुहाव ।

ये शब्दाम्बुधिपारमापुरमलप्रज्ञातरी वैभवात्।
तानुद्दिश्य नमस्क्रियैव सततं तेभ्यो न चेमा क्रिया।
ये शास्त्रेऽकृतबुद्धयो निजधिया व्युत्पित्सवो मानया
नानाकोषनिरीक्षणे श्रमभयस्तेभ्यो ममैषा क्रिया॥

शब्दरत्नमयः कोषो मोषद्वेषमयोज्झितः।
नानार्थोऽव्ययरूपाद्यो बहुधातुर्जयत्ययम्॥
पदानुशासने रतं सुनिश्चयं सुदानतम्।
अमुष्य भूमिमण्डले करोतु सुप्रचारणम्॥

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसङ्कलितः शब्दस्तोममहानिधिः समाप्तः।

ओं तत्सत्।